**त एते कार्यस्वभावानुपलब्धिलक्षणा हेतवस्त्रयः। यथा धूमादग्निरत्र, शिंशपात्वाद् वृक्षोयम्।**

---

त एत इति। पक्षधर्मत्वेन यथोक्तया च व्याप्त्या युक्ताः **कार्यस्वभावानुपलब्धयो लक्षणं** स्वभावो येषान्ते तथोक्ताः। **धूमादिति** कार्यहेतोराख्यानं। **अग्निरत्रेति** साध्यफलस्य। न त्वयम्पक्षप्रयोगः[7] (।)

8b ननु यः प्रदेशोग्निसम्बन्धी सोप्रत्यक्षः। यश्च प्रत्यक्षो नभोभागरूप आलोकाद्यात्मा धूमवत्तया दृश्यमानो न सोग्निमानतः कथं प्रदेशे धूमस्य प्रत्यक्षतः सिद्धिस्तस्माद् धूम एव धर्मी युक्तः।

"साग्निरयं धूमो धूमत्वादित्येवं साध्यसाधनभाव" इत्यु द्यो त क र[1]:। तस्यापि साग्नेर्धूमावयवस्याप्रत्यक्षत्वात्। परिदृश्यमानस्य चोर्द्ध्वभागवर्तिनोग्निना सहावृत्तेः कथं धूमसामान्यस्य साध्यध[1]र्मिणि प्रत्यक्षतो निश्चयः। धूमावयवी प्रत्यक्ष इति चेत्। न (।) अवयवव्यतिरेकेण तस्याभावात। लोकाध्यवसायः तस्यैकत्वे वा प्रदेशस्यापि तावतः कल्पितमेकात्मकत्वं न वार्यते। प्रदेश एव च लोकोग्निं प्रतिपद्यते न धूमे धर्मिणि। तेन यद्यग्नेरनुमानमिष्यते प्रदेश एव धर्मिण्यनुमानमस्त्वित्येवम्परमेतत्।

न त्वत्र पूर्वोक्तो दोषपरिहार इत्येके। यद्वा दृश्यमा[2]नः प्रदेशो धर्मी अधस्तादग्निमानित्येतावत् साध्यधर्मो नाग्निमात्रं। ईदृग्विधेन च साध्यधर्मेण पूर्वमेव व्याप्तिः प्रतिपन्ना। धूमश्चात्र प्रत्यक्षसिद्ध इति कथं नानुमानं। यत्तु देशाद्यपेक्षया कार्यहेतोर्गमकत्वमत्रोच्यते। तदसङ्गतमेव देशादेर्विशेषणस्यासिद्धत्वात्। धूममात्रदर्शनादेवास्य साध्यस्य सिद्धत्वाच्च। यद्वा प्रदेशेऽग्निं दृष्ट्वा किंशुकादिरूपेण स[3]न्देहं यदा धूमदर्शनान्निवर्त्तयति। तदैतदुदाहरणं द्रष्टव्यं। तदा हि प्रत्यक्षेण धर्मी साधनधर्मश्च सिद्धो भवति।

यत्तूच्यते (।) प्रत्यक्षाप्रत्यक्षरूप एव धर्मिण्यनुमानमिति। तदयुक्तं। प्रत्यक्षाङ्शे यद्यपि हेतुः सिद्धस्तथापि न तत्र साध्यधर्मानुमानं प्रत्यक्षबाधितत्वात्। परोक्षाङ्शे तु स्यादनुमानं केवलन्तत्र हेतुरसिद्धः। न च प्रत्यक्षं प्रत्यक्षरूपस्य धर्मि[4]णो धर्मः प्रत्यक्षसिद्धोऽप्रत्यक्षेङ्शे प्रत्यक्षाव्यापारात्। यदा वा श्रवणग्राह्ये शब्देऽनित्यत्वानुमानन्तदा कथं धर्मिणः प्रत्यक्षाप्रत्यक्षरूपतेति यत्किञ्चिदेतत्।

**शिङशपात्वादिति** स्वभावहेतोरुदाहरणं।

---

[1] Cf. Nyāyavārtika (1:1:5).

**प्रदेशविशेषे क्वचिन्न घट उपलब्धिलक्षणप्राप्तस्य अनुपलब्धेः।**

---

उ म्वे क स्त्वत्राह। "स्वभावहेतोर्गमकत्वं दूरोत्सारि(तमेव। भेदाधिष्ठान)[१]त्वाद् गम्यगमकभावस्य। न ह्यभिन्ने प्रतिबन्धो नाम। न शिङ्शपा वृक्षात्मिका।[5] ततो व्यावर्त्तमानत्वात्। यो हि यस्माद् व्यावर्त्तते न स तदात्मा। घटादिव पटः। व्यावर्त्तते च खदिरादिभ्यः शिशंपेत्यतदात्मिका। तदात्मत्वे च लिङ्गग्रहणवेलायामेवाव्यतिरेकात् साध्यस्वरूपवल्लिङ्गाग्रहणवत्वं साध्यस्य गृहीतत्वादनुमे(यत्वहानिः। तादात्म्येन च शिं)[१]शपात्वस्य गमकत्वे तादात्म्याविशेषाद् वृक्षत्वस्य शिंशपां प्रति गम[6]कत्वप्रसङ्गः। अथास्यानियतत्वादगमकत्वं नियततैव तर्हि गमकत्वे निमित्तं न तु तादात्म्यं व्यभिचारिण्यपि वृक्षत्वे तादात्म्यस्य दर्शनात्। अथ तदात्मनैव वृक्षे नास्ति शिंशपा........ ..........तदात्मिका। सर्वथा ययोरेव......तया गम्यगमक(भावो नानात्म्ये तु तादात्म्याभावः।)[१]एवमशिंशपाऽवृक्षापोहयोरपोहबुद्ध्योर्वा गम्यगमकभावो निराक[7]र्त्तव्य"इति। 9a

तदयुक्तं। शिंशपा हि वृक्षविशेषस्वभावा। वृक्षविशेषोपि शिंशपास्वभाव एवेत्युभयगतन्तादात्म्यं। तादात्म्येपि च कश्चिदवृक्षव्यावृत्ते स्वभावे कथंचिन्मूढो नाशिंशपाव्यावृत्ते (।) तेन शिंशपादेर्लिङ्गस्य ग्रहणान्नानु(मेयत्वहानिः। यतश्च न वृक्षमात्र)[१]स्वभावा शिंशपा (।) तेन न वृक्षत्वस्य शिंशपां प्रति गमकत्वं। साध्यसाधनाद्य[1]भावदोषन्तु स्वयमेव शास्त्रकारो निराकरिष्यतीति यत्किञ्चिदेतत्।

**प्रदेश** इत्यनुपलब्धेः कथनं। **प्रदेशविशेष** इत्युद्दिष्टे देशे। **क्वचि**दिति वादिप्रतिवादिप्रसिद्धे। **न घट** इति घटाभावव्यवहारः साध्यः। **उपलब्धी**त्यादिना हेतुनिर्देशः। उपलब्धे(र्लक्षणा**नि** करणानि चक्षुरादीन्य)[१]प्रतिबद्धसामर्थ्याद्यु**पलब्धिलक्षणा**नि। तानि **प्राप्तः** स्वाभासज्ञानजननयो[4]ग्यः स्वभावविशेषः। स्वज्ञानजननसामग्र्यन्तर्भूतोर्थ इत्यर्थः। **तस्यानुपलब्धे**स्तथाभूतस्यासद्व्यवहारसिद्धिः।

कथं पुनर्यो यत्र नास्ति स तत्रोपलब्धिलक्षणप्राप्तो भवति। उपलब्धिलक्षणप्राप्तत्वं हि ज्ञानविषयत्वन्तस्मिंश्च सति कुतो नास्तित्वं।

उच्यते। यावत्यां (सामग्र्यां सत्यां पूर्वं प्रति)[१]पन्नो भावस्तावत्यामेव

---

[1] In the margin.

**यदि स्यादुपलम्भयोग्यभाववदेव स्यात्[2] नान्यथा। तेनोपलब्धिलक्षणप्राप्तसत्त्वं ततस्येत्युक्तम्। तत्र द्वौ वस्तुसाधनौ एकः प्रतिषेधहेतुः।**

---

सामग्र्यां सत्यां **यदि स्यात्** पूर्वकालवदुपलभ्येतेत्येव[3]मुपलब्धिलक्षणप्राप्तत्वं बुद्ध्या परामृश्य भावस्याप्रतिभासनान्नास्तीति निषेधः क्रियते। न त्वदृश्यस्य। प्रतिभासपरामर्शोपायाभावात्। सर्वदाऽप्रतिपन्नत्वात्।

ननु दृश्यस्याभावे सति सैव सामग्री कथं प्रतिपन्नेति चेत्। न। एकज्ञान-विषययोर्भावयोरेको(पलम्भादिति)[1] ब्रूमः। स्वत एव च निषिध्यमानस्यो-पलब्धिलक्षणप्राप्तत्वन्निश्चीयते। एतदेवैक[4]ज्ञानजननयोग्यतयोपलब्धिलक्षण-प्राप्तत्वन्दर्शयितुमाह।

**यदि स्याद्** घटादिरुपलभ्यं सत्त्वं यस्य स तथाभूत एव स्यात्। **नान्यथे**ति न कदाचिदग्राह्यस्तथाभूतोऽवश्यं ज्ञानन्न व्यभिचरतीति यावत्। यत एवन्**तेन** कारणेन। **उपलब्धिलक्षणप्राप्त**स्येति यद्विशेषणमुक्तन्तदर्थादु**पलब्धिलक्षणप्राप्तसत्त्वस्ये**त्युक्त-म्भवति। अत्र त्वयं बाह्यार्थः। लक्ष्यतेऽ[5]नेनेति लक्षणं। उपलब्धिरेव लक्षणन्तत्प्राप्तमुपलब्धिलक्षणप्राप्तं ज्ञानेनाव्यभिचरितसम्बन्धमित्यर्थः। एवंभूतं सत्त्वं यस्य तत्तथोक्तं। तथाभूतं हि सत्त्वं ज्ञानं निवृत्त्यावश्यं निवर्त्तत इति भावः। विधिप्रतिषेधाभ्यां सर्वं साधनं व्याप्तं। विधीयमानश्च साध्यः प्रतिबन्धद्वयेन भिद्यत इति विधिप्रतिषेधौ हेतुत्रयायत्ताविति दर्शयन्नाह। **तत्रे**त्यादि।

**त**[6]**त्र** त्रिषु हेतुषु द्वौ कार्यस्वभावहेतू **वस्तुसाधनौ** विधिसाधनौ। **द्वावे**वेति चावधारणं न तु वस्तुसाधनावेवेति। आभ्यां सामर्थ्याद् व्यवच्छेदस्यापि सिद्धेः। **एकः प्रतिषेधहेतु**रिति। उपलब्धिलक्षणोऽनुपलम्भः प्रतिषेधहेतुरेव। न त्वेक एवेत्यवधार्यते पूर्व्वाभ्यामपि व्यवच्छेदगतेः।

9b कश्चिदाह। "व्यवच्छेदः शब्दलिङ्गाभ्यां प्रसाध्यते यावांश्चिद् व्यवच्छेदः[7] स सर्वोनुपलम्भादेवेत्यनुपलम्भ एवैको हेतुरि"ति।

तदयुक्तं। यतो न तावत् प्रमाणव्यापारापेक्षयैतदुच्यते। वस्तुन्येव प्रमाणव्यापारात्। तदाहात **एव वस्तु**विषयं प्रामाण्यं द्वयोरिति। नाप्यध्यव-सायवशादेतदुच्यते वस्तुन एवाध्यवसायात्। व्यवच्छेदेन सह लिंगस्य **सम्बन्धाभावाच्च।**

---

[1] In the margin.

**स्वभावप्रतिबद्धत्वेऽर्थोऽर्थं न व्यभिचरति**[3]**। स च तदात्मत्वात्। तदात्मत्वे साध्यसाधनयोर्भेदाभाव इति चेत्। न। धर्मभेदानां परिकल्पनात् इत्युच्यते।**

---

यो पि मन्यतेऽनुपलम्भेऽसद्व्यवहारयोग्यता साध्यते न प्रतिषेधः।[1] योग्यता च स्वभावभूतैव। तथाग्निमति प्रदेशे साध्ये अग्निमत्ता प्रदेशस्य स्वभाव एव साध्यो धूमवत्त्वादिति च हेतुः। प्रदेशाभिन्न इति सर्वो हेतुः स्वभावहेतुरेवेति (।) तदयुक्तम्(।)एवं हि गमकत्त्वे गर्दभत्वादेरपि गमकत्वं स्यात्(।) न भवत्यग्नि-कार्यत्वाभावाद् गर्दभस्येति चेत्। यद्येवं धूमस्याग्निकार्यत्वमेव गमकत्वे निबन्धनमिति कथं न कार्यहेतुः।

अन्य[2]स्तु मन्यते"ऽनुपलम्भस्तु प्रदेशकार्य इत्यसद्व्यवहारे साध्ये कार्यहेतुरेव। कृतकविकल्पश्चानित्यशब्दकार्य इति सर्व एव हेतुः कार्यहेतुरि"ति।

तदप्ययुक्तं (।) कृतकविकल्पो हि कृतककारणत्वात् तस्यैवानुमापकः स्यान्नानित्यस्य। कृतकस्यानित्यस्वभावत्वादनित्यत्वं साधयतीति चेत्। यद्येवं कृतकत्वादेवानित्यत्वप्रतीतिः स्यान्न कृतकविकल्पात्। कृ[3]तकस्वभावतयैवा-नित्यत्वे गमकत्वात्। यद्वा कृतकविकल्पश्च स्यान्न वानित्य इत्यनैकान्तः। कृतकविकल्पजननसामर्थ्यं कृतकाव्यतिरिक्तन्तच्च न पूर्वन्न पश्चात्तेनासावनित्यो-ऽव्यतिरिक्तर्न्तहि सामर्थ्यमनित्यत्वं साधयतीति कथं न स्वभावो हेतुरिति यत्किञ्चिदेतत्।

किं पुनर्द्वाविव वस्तुसाधनावित्याह। **स्वभावेन प्रतिबन्धः** "साधनं कृते"ति स[4]मासः। **स्वभावेन प्रतिबद्धत्वं**। प्रतिबद्धस्वभावमिति यावत्। **तस्मिन् सत्यर्थो** लिंगमर्थमिति लिङ्गिनं **न व्यभिचरति**।

**स च** स्वभावप्रतिबन्धः कुत इत्याह। **तदात्मत्वादिति** साध्यस्व-भावत्वात्। **तदात्मत्वे** साध्यस्वभावात्मत्वे साधनस्य। यदेव साध्यन्तदेव साध-(नमिति **साध्यसाधनयो**)[1]**र्भेदाभावस्तेन** प्रतिज्ञार्थैकदेशो हेतुरिति परमाशङ्‌क्याह। **नेत्यादि**। सा[5]ध्यसाधनभूतानां **धर्मभेदानां** व्यावृत्तिभेदेन **परिकल्पनादा**-रोपाद् (।)

एतदुक्तम्भवति। धर्मभेदः समारोप्यते तेन साध्यसाधनभेदः। यतो निश्चितो गमको निश्चेतव्यश्च गम्य उच्यते। निश्चयविषयश्चारोपित एवेति निश्चयभेदा-रोपितो धर्म(भेदः। एतच्च वक्ष्यामोऽन्यापोहप्र)[1]स्तावे।[2]

---

[1] In the margin. [2] Pramāṇavārtika 3:163-73.

**तथा चानुमानानु[4]मेयव्यवहारोऽयं सर्वो हि बुद्धिपरिकल्पितो बुद्ध्यारूढेन धर्मधर्मिभेदेनेति उक्तम्। धर्मधर्मितया भेदो बुद्ध्याकारकृतो नार्थोऽपि। बुद्धि-(विकल्प)भेदानां स्वेच्छामात्रानुरोधित्वां[1] अनर्थाश्रयात्[5]। तत्कल्पितविषया-वर्थप्रतीतावनर्थप्रतिलम्भ एव स्यात्। कार्यस्यापि स्वभावप्रतिबन्धः। तत्स्व-भावस्य तदुत्पत्तेः। एतावनुमेयप्रत्ययौ अतत्प्रतिभासित्वेऽपि साक्षादनुत्पत्तेः[6]।**

---

आचार्य दि ग्ना गे नाप्येतदुक्तमित्याह। **तथा चे**त्यादि। **सर्व एवे**ति[6] यत्रापि साध्यसाधनयोरग्निधूमयोर्वास्तवो भेदस्तत्रापि स्वलक्षणेन व्यवहारा-योगादनुमीयतेनेनेत्य**नुमान**लिङ्गम**नुमेयः** साध्यधर्मी साध्यधर्मश्च तेषां **व्यवहारो** नानात्वप्रतिरूपः। **बुद्ध्यारूढेन धर्मधर्मिणो**(**र्भेदस्तेन** बुद्धिप्रतिभासगतेन)[3] भिन्नेन रूपेण भेदव्यवहार इति यावत्। यदि तर्हि **बुद्धिपरिकल्पित**तो ध[7]र्मधर्मि-

102a व्यवहार एवन्तर्हि कल्पिताद्धेतोः साध्यसिद्धिः प्राप्ता। ततश्च हेतुदोषो यावानुच्यते स सर्वः स्यात्। तदाह भट्टः॥[2]

> "यदि वा विद्यमानोपि भेदो बुद्धिप्रकल्पितः (।)
> साध्यसाधनधर्मादेर्व्यवहाराय कल्प्यते॥
> ततो भवत्प्रयुक्तेस्मिन् साधनं या(वदुच्यते।
> सर्वत्रोत्पद्यते बुद्धिरिति)[3] दूषणता भवेदि"ति।

अत्राह। **भेद** इत्यादि। एतदाहार्थ एव वार्थं गमयति केवलं **धर्म-धर्मितया**ऽयं धर्मोऽयं धर्मीति यो भेदो नानात्वमयमेव **बुद्ध्याकारकृतो** बुद्ध्या परि-कल्पितो **नार्थो**पि न लिङ्गमपि बुद्ध्याकारकृतम्(।)विकल्पनिर्मितादेव लिङ्गात् कस्माद् अर्थप्रतिपत्तिर्न भवतीत्याह। **विकल्पे**त्यादि। **विकल्पभेदानां** विकल्प-विशे(षाणा**मिच्छामात्रानुरोधित्वेन** स्वत)[3]न्त्राणाम**नर्थाश्रया**दर्थाप्रतिबद्धत्वे (साक्षादनुत्पत्ते)[3]नर्थालम्बनत्वादित्यर्थः। **तै**रर्थी नाश्रयै[8]र्विकल्पः कल्पित-श्चासौ विषयश्चेति **तत्कल्पितविषय**स्तस्मादेवंभूताद्धेतो**रर्थप्रतीताव**भ्युपगम्य-मानायाम**नर्थप्रतिलम्भ एव स्या**दर्थप्रतिलम्भ एव न स्यात्।

द्वितीयं प्रतिबन्धलक्षणमाह। **कार्यस्यापी**त्यादि। **तत्स्वभावस्ये**ति कार्य-**स्वभावस्य तदुत्पत्तेः** का(रणादुत्पत्तेर् योऽनुमा)नस्य प्रामाण्यं नेच्छति तं प्रत्याह। **एतावनुमेयप्रत्ययौ** प्रमाणमिति सम्ब[3]न्धः। एताविति स्वभावकार्यलिङ्गौ। अनुपलब्धेः स्वभावहेतावन्तर्भावाद् द्वावित्याह। यद्वा प्रक्रान्तापेक्षया द्वावित्याह।

---

[1] Raṅ-dgaḥ-va-rnams. [2] Ślokavārtika, Nirālamba 171-72.
[3] In the margin.

**तदुत्पत्तेः तदव्यभिचारिणौ । इति प्रमाणं प्रत्यक्षवत् ।**

**प्रत्यक्षस्यापि (प्रामाण्यं) अर्थाव्यभिचार एवेति। तदभाव भाविनः तद्वि-प्रलम्भ[7]ात्। अव्यभिचारश्चान्यस्य कोन्यस्तदुत्पत्तेः। अनायत्तरूपाणां सहभाव-नियमाभावात्।** 422a

---

स्वभावकारणयोरनुमेययोः प्रत्ययावित्यनुमेयप्रत्ययौ **अतत्प्रतिभासित्वेपीत्य-**नुमेयस्वलक्षणाप्रतिभासित्वेपि। अतत्प्रतिभासित्वन्ततः **साक्षादनुत्पत्तेः**। कथन्तर्ह्यर्थ-व्यभिचार इत्याह। **तदुत्पत्ते**रित्यनुमेयाभ्यां स्वभावकारणाभ्यां पा[4]रम्पर्येणोत्पत्तेः। **तदव्यभिचारिणा**वित्यनुमेयाव्यभिचारिणौ। **इति** हेतोः **प्रमाणं प्रत्यक्षवत्**।

तेन यदुच्यते ऽ वि द्ध क र्णे ना"नधिगतार्थपरिच्छित्तिः प्रमाणमतो नानुमान-म्प्रमाणमर्थपरिच्छेदकत्वाभावादि"ति तदपास्तं। यतः सर्व एव प्रेक्षावान् प्रवृत्ति-कामः प्रमाणमन्वेषते प्रवृत्तिविषयार्थोपदर्शकत्वेन प्रवृत्तिविषयश्चार्थोऽर्थक्रिया-समर्थ ए[5]व। न चानागतं प्रवृत्तिसाध्यार्थक्रिया सामर्थ्यम्वस्तुनः प्रत्यक्षम्परिच्छि-नत्तीत्युक्तमतः कथमस्यार्थपरिच्छेदमात्रात्प्रामाण्यं। तस्मात् स्वविषये तदुत्पत्त्या प्रत्यक्षं यन्मया पूर्वप्रतिपन्नं प्रबन्धेनार्थक्रियाकारि तदेवेदमिति निश्चयं कुर्वत् प्रवर्त्तकत्वात् प्रमाणन्तथानुमानमपि।

**प्रत्यक्षस्यापी**त्यादिना व्याप्तिमाह। **अर्थाव्यभिचार एवेति**। पूर्वमभि-मतार्थ[6]कारित्वेन निश्चितस्यार्थस्य सम्भवे सति भाव एव प्रत्यक्षस्य प्रामाण्यमन्यथा **तदभावे** अर्थाभावे **भाविनः** प्रत्यक्षस्य **तद्विप्रलम्भा**न्निश्चितार्थासम्वादात्। एतदु-क्तम्भवति। यदार्थक्रियासमर्थम्वस्तु प्रत्यक्षं न परिच्छिनत्ति। यदि च तथाभूत-मपि वस्तु व्यभिचरेत्प्रमाणमपि न स्यात्। **अव्यभिचारश्चान्यस्य कोन्यस्तदुत्पत्ते-**रित्यन्यस्यार्थान्तरभूतस्य[7] योन्येन सहाव्यभिचारः स तदुत्पत्तेः कोन्यो नैवान्यः। 10b तदुत्पत्तिरेवाव्यभिचार इत्यर्थः।

कस्माद्(।)**अनायत्तरूपाणा**मप्रतिबद्धस्वभावानां **सहभावनियमाभावा**दव्यभि-चारनियमाभावात्। तस्मादर्थक्रियाकारित्वेन निश्चितादर्थादुत्पत्तिरेव प्रत्यक्ष-स्याव्यभिचार इति प्रामाण्यन्तच्चानुमानेप्यस्तीति समं द्वयमिति भावः।

एतेनैतदपि निरस्तं "प्रमाणस्यागौ[1]णत्वादनुमानादर्थनिश्चयो दुर्लभ" इति। यद्यगौणत्वमनुपचरितत्वमुच्यते तदानुमानमप्यनुपचरितमेवास्खलद्बुद्धिरूपत्वात्।

अथ धर्मधर्मिसमुदायस्य साध्यत्वे हेतोः पक्षधर्मत्वमन्वयो वा न सम्भवति तेन **पक्षधर्मत्वप्रसिद्ध्यर्थं** धर्मिणः साध्यत्वमुपचरितव्यमन्वयसिद्ध्यर्थञ्च **धर्मस्येत्येवमुपचरितविषयत्वादनुमानमुपचरितं**।

**यदि तदुत्पत्तेः कार्यं गमकं सर्वथा गम्यगमकभावः प्राप्तः।**

---

तदयुक्तं[2] यतो लोके धूममात्रमग्निमात्रव्याप्तं यत्र धर्मिणि दृश्यते तत्रैवाग्नि-प्रतीतिर्भवतीति कस्यात्रोपचार एवं च समुदायस्यापि साध्यत्वं सिध्यति। यदाह्। "केवल एव धर्मो धर्मिणि साध्यस्तथेष्टसमुदायस्य सिद्धिः कृता भवती"ति (।) न चानुमानविषये साध्यशब्दोपचारे सत्यनुमानमुपचरितन्नाम।

अथ प्रमाणस्यागौणत्वादभ्रान्तत्वादनुमानस्य तु भ्रान्तत्वादप्रा[3]माण्यमित्यु-च्यते।

तदयुक्तं (।) भ्रान्तस्याप्यग्न्यनुमानस्य तदुत्पत्त्या बाह्याग्न्यध्यवसायेन लोके प्रामाण्यदर्शनात् प्रत्यक्षवत्। अथ प्रत्यक्षमपि प्रमाणन्नेष्यते तदा लोकप्रतीति-बाधा। प्रत्यक्षानुमानयोः प्रमाणयोर्लोकप्रतीतत्वात्।

अथ नैव प्रत्यक्षानुमानयोः प्रमाणत्वं प्रतिषिध्यते। किन्तु लिङ्गन्त्रिलक्षणं चतुर्लक्षणं वा न केनचित् प्रमाणेन सिद्धमिति पर्य[4]नुयोगे यद्यनुमानमुच्यते साधकं। पुनस्तत्रापि स एव पर्यनुयोग इत्येवं सर्वत्र पर्यनुयोगपराण्येव सूत्राणि। तथा च सूत्रं (।)

**"विशेषेनुगमाभावः सामान्ये सिद्धसाधनमि"ति[1] (।)**

तदप्ययुक्तं। पूर्वमेव त्रैरूप्यग्राहकस्य प्रमाणस्य व्याप्तिवचनेनाक्षिप्तत्वात्। (न चाप्रमाणकेन परः)[*] पर्यनुयुज्यते वादिप्रतिवादिनोरसिद्धत्वात्।

अथ वचनात्मकमनुमा[5]नं न वक्तुः प्रमाणमथ (व)चनेन परं प्रतिपादयति तथाऽप्रमाणकेन पर्यनुयोगः क्रियत इति।

तदप्ययुक्तं। द्वयोरपि हि वचनादर्थप्रतीतिः प्रमाणभूतैवोत्पद्यतेऽर्थपरिच्छेद-कत्वात् केवलम्वक्तुरधिगमस्य निष्पन्नत्वात् प्रमाणं नो वा तेन पुनरप्रमा(णं भवत्यप्रामाण्ये वा द्वयोरप्यप्रमा)[*]णमिति कथन्ततोर्थप्रतीतिः।

यदप्युच्यते (।) "परसिद्धेनानुमानेनानुमा[6]नन्निषिध्यत"इति तदप्येतेन निरस्तमिति। संयोगवशाद् गमकत्वे।

> "न च केनचिदङ्गेन न संयोगी हुताशनः।
> धूमो वा सर्वथा तेन प्राप्तं धूमात् प्रकाशनमि"ति।

यः सर्वथा गम्यगमकभावप्रसंग आचार्य दिग्नागेनाक्षिप्तं परं प्रति तदिहापि कार्य(हेतौ आशङ्कते **यदीत्यादिना**)[*] साध्यादुत्पत्तेः कारणात् **कार्य-**

---

[1] Pramāṇa-Samuccaya. [2] In the margin.

**सर्वथा जन्यजनकभावादिति चेत्। न। तदभावे भवतस्तदुत्पत्तिनियमाभावात्। एवं हि (।)**

**कार्यं स्वभावैर्यावद्भिरविनाभावि कारणे।**
**हेतुः स्वभावः;**

**" हेतुः, तत्कार्यत्वनियमात्। तैरेव ये तैर्विना न भवन्ति।**

---

**ङ्गमकङ्**कारणस्येत्यध्याहारः **सर्वथा गम्य[7]गमकभावः प्राप्तः**। अग्नेः सामान्य- 11a धर्मवद्विशेषधर्मा अपि तार्णपार्णादयो गम्याः स्युः। धूमस्यापि विशेषधर्मवद् द्रव्यत्वपार्थिवत्वादयोपि सामान्यधर्मा गमका भवेयुः। कुतः। **सर्वथा जन्यजनकभावात्** (।) तथा हि यथाग्निरग्नित्वद्रव्यत्वसत्त्वादिभिः (सामान्यधर्म्मैर्जनकः तथा तार्ण्णपार्ण्णादिभि)[1]विशेषैरपि। यथा च धूमो धूमत्वपाण्डुत्वादिभिः स्वनियतैर्विशेषधर्मै[1]र्युक्तो जन्यस्तथा सामान्यधर्मैरपि सत्त्वद्रव्यत्वादिभिस्ततश्च यथानयोः कार्यकारणभावस्तथैव गम्यगमकभावः स्यादित्यत आह।

**ने**त्यादि। न सर्वथा जन्यजनकभावस्ततश्च कुतस्तथा गम्यगमकभावः स्यात्। कस्मादिति चेत्। तदभावे तेषान्तार्ण्ण(पार्ण्णत्वादीनां विशेषधर्म्माणामभावे)[1] भवतो धूममात्रस्य तेभ्य एव विशेषधर्मेभ्यो भवतीत्येवमात्मनस्त[2]दुत्पत्तिनियमस्याभावात्। तथा **तदभावे**ऽन्यभावे **भवतो** द्रव्यत्वादेः सामान्यधर्मस्याग्नेरेवायं भवतीत्येवं रूपस्य **तदुत्पत्तिनियमस्याभावात्**। कुतः सर्वथा जन्यजनकभावो यतः सर्वथा गम्यगमकभावः स्यात्॥

यत एवन्तस्मात् **कार्यं** धूमादिकं **स्वभावैर्या**(**वद्भि**र्धूमत्वादिभिः स्वगतै)[1]-रित्थंभूतलक्षणा तृतीया। **अविनाभावि**। विना न भवति। क्वाविनाभावि (।) **कार[3]णे**। कारणविषये। यद्वा कारणे इत्याधारसप्तमी। कारणस्थैः स्वभावैर्यावद्भिरग्नित्वद्रव्यत्वादिभिरविनाभावि। **तेषां** कारणगतानां सामान्यधर्माणां **हेतुः** कार्यं गमकमित्यर्थः। किङ्कारणं (।) **तत्कार्यत्वनियमात्**। तेषामेव कारणगतानां सामान्यधर्माणान्तत्कार्यमित्ये(वं रूपस्य निय)[1]मस्य सद्भावात्। न हि तत्सामान्यधर्मात् कदाचिदपि कार्यं व्यभिचरति। एवन्ताव[4]त् कारणगताः सामान्यधर्मा गम्या इत्याख्यातं।

कार्यगतास्तु विशेषधर्मा गमका इति दर्शयन्नाह। **तैरेवे**त्यादि। कार्यमपि **तैरेव धर्मैः** स्वगतैः कारणगतानां धर्माणां गमकाः। येर्थान्तरासम्भविनो धूमत्वपा-

---

[1] In the margin.

**अंशेन जन्यजनकभावप्रसंग इति चेत्। न। तज्जन्यलिङ्गविशेषोपाधीनां ग्रहणेऽभिमतत्वात्। यदा द्रव्यत्वादीनि अविशिष्टानि विवक्षितानि तदा तेषां**

---

ण्डुत्वादयो विशेषरूपास्तैः कारणगतैः सामान्यधर्मै**र्विना न भवन्ति**। अत्रापि तत्कार्यत्वनियमादित्यपेक्ष्यते। तेषामेव कार्यगतानां विशेष[5]धर्माणां कारणगत सामान्यधर्मापेक्षया कार्यत्वनियमात्।

**यदि** सामान्यधर्माणां कारणगतानां कार्यगतैर्विशेषधर्मैरेवाविनाभावाद् गम्यगमकभावस्तदा**ंशेन जन्यजनकभावः** स्यात्। अग्नेः सामान्यधर्मा एव जनकाः (।) धूमस्य च विशेषधर्मा एव जन्याः स्युः। सर्वथा च जन्यजनकभावोभिमत इत्यभ्युपगमविरोधः। एतत्परिहरति (।) नांशेन[6] जन्यजनकभावप्रसङ्गः। निरंशत्वेन वस्तुनः सर्वथा जन्यजनकत्वाभ्युपगमात्। गम्यगमकभावस्यापि सर्वथाभिमतत्वात्। तदाह। **तज्जन्ये**त्यादि। यदि हि कार्यस्य तैः कारणगतैर्विशेषधर्मैर्जन्यो यो विशेषः स ग्रहीतुं शक्यते ज्ञापकहेत्वधिकारात्। तदा **तज्जन्यविशेषग्रहणे**ऽभिमतत्वात् कारणगतविशेषधर्माणां 11b गम्यत्वस्य। तथा ह्यगुरु[7]धूमग्रहणे भवत्येव तदग्नेरनुमानं। तथा लिङ्गविशेषो लिङ्गमेव विशेषो धूमलक्षणः स उपाधिर्विशेषणं येषां द्रव्यत्वादीनान्तेषां **ग्रहणेऽभिमतत्वाद्** गमकत्वस्य। न हि धूमेन विशेषिता द्रव्यत्वादयोऽग्निं व्यभिचरन्ति।

ननु धूम एव तत्र गमको न तु तद्विशिष्टा द्रव्यत्वादयः। यथा कृतकत्वे सति प्रमेयत्वादित्यत्र कृतकत्वमेव गमकं न प्रमेयत्वं।

सत्यमेतद्। अव्यभि[1]चारमात्रप्रदर्शनार्थन्त्वेवमभिधानमित्येके। अन्यस्त्वाह। न धूमस्य व्यभिचारादिह सामान्योपादानं किन्तर्हि सर्वेषां प्रतिपत्तॄणां दृष्टे वस्तुनि सामान्याकारे प्रतिपत्तिर्भवति पश्चाद् विशेषावसायः (।) तत्र च यदुपात्तं सामान्यन्तदपरित्यक्तमेव। तस्मात् प्रतिपत्तुरध्यवसायवशाद् विशेषोपहितं सामान्यङ्गमकम्भवति न विशेषस्य व्यभिचारादिति।

यु[2]क्तमेतत्। केवलं यद्येष नियमः सामान्यप्रतिपत्तिपुरस्सरैव विशेषप्रतिपत्तिः (।) कथन्तर्हि धूममात्रस्य द्रव्यत्वादिरहितस्य प्रतीतिः। पूर्वोक्तं च चोद्यन्तदवस्थमेव। तस्मादिदमत्र साधु (।) लिङ्गविशेषस्य सामान्यविशेषणत्वेनैवोपादाना (द्) अहेतुत्वं हेतुत्वोपादाने हि हेतुत्वं स्यान्नान्यथा।

कदा तर्हि लिङ्गगतानां सामान्यधर्माणामगमकत्वमित्याह[3]। **अविशिष्टे**त्यादि। **यदा द्रव्यत्वादीन्यविशिष्टानि विवक्षितानि तदा तेषां व्यभिचाराद्**

**व्यभिचाराद् गमकत्वं नेष्यते ।**

**भावोपि भावमात्रानुरोधिनि ॥४॥**

**हेतुरिति वर्त्तते । हेतोः तादात्म्यं तन्मात्रानुरोधिन्येव । नान्यायत्ते । तद्भाव-भाविनः पश्चाद्भावनियमाभावात् । कारणानां कार्यव्यभिचारात् ।**

## २—अनुपलब्धिचिन्ता

### *(१) दृश्यानुपलब्धिफलम्*

**अप्रवृत्तिः प्रमाणानामप्रवृत्तिफलाऽसति ।**
**असज्ज्ञानफला कचिद्धेतुभेदव्यपेक्षया ॥५॥**

**अप्रवृत्तिः प्रमाणानामनुपलब्धिः । अभावेऽप्रवृत्तिः कार्यवत् । सत्ताज्ञानशब्दव्यव**

---

**गमकत्वन्नेष्यते ।**

स्वभावहेतुमधिकृत्याह ।

**स्वभाव** इत्यादि । **हेतुरिति वर्त्तत** इति तेषां हेतुरित्यतः । स्वभावे साध्ये किम्भूते **भावमात्रानुरोधिनि** हेतुसद्भावमात्रानुरोधिनि (**भावो** हेतुः)[1] स्वभावो हेतुः । मात्रग्रहणमर्थान्तरानपेक्षासन्दर्शनार्थं । कस्मात्तन्मात्रा[4]नुरोधिन्येव स्वभावो हेतुरित्याह । **तादात्म्यं** ह्यर्थस्य **तन्मात्रानुरोधिन्येवे**ति । योसावर्थस्य साधनस्यात्मा तद्भाविन्येव । **नान्यायत्ते** । न कारणान्तरप्रतिबद्धे पश्चाद्भाविनि तादात्म्यं । कस्मादिति चेदाह । **तद्भाव** इत्यादि । तस्य हेतो**र्भावि(नि)** भूतस्य कार(णान्त-रायत्तस्य धर्मस्य **पश्चाद्** यो भा)[1]वस्तस्य **नियमाभावात्** । न हि कारणान्तर-प्रतिबद्धेन पश्चाद्भाविनाऽव[5]श्यं भवितव्यं । किङ्कारणं (।) **कारणानां कार्य-व्यभिचारात्** । सम्भवत्प्रतिबन्धत्वात् कारणानां कुतस्तेभ्योऽवश्यम्भावः कार्यस्य ॥

ननु च साध्यस्वभावता साधनस्य न केनचिदिष्टं तत्कथमुच्यते **तद्भावमात्रा-नुरोधिन्येव तादात्म्य**मिति । एवम्मन्यते व्यति(रिक्तावपि कृतकत्वानित्यत्वा-ख्यौ)[1] धर्मावप्युपगच्छद्भिरवश्यमभूत्वा भवनं भूत्वा चाभवनमभ्युपगन्तव्य[6]-मन्यथात्मादेरिव कृतकत्वानित्यत्वे पटादेर्न स्यातां । तस्माद् यदेवाभूत्वा भवन-म्भावस्य तदेव कृतकत्वं यदेव च भूत्वाऽभवनमनवस्थायित्वन्तदेवानित्यत्वमस्तु किमन्येन सामान्येन कल्पितेनेति । अनुपल. . . .इत्याह ।

---

[1] In the margin.

हारप्रतिषेधस्य कार्यवत्। तेषां[6] हि उपलब्धिस्सत्वात्। पुर अयं हि भावाभाव-प्रतिषेधसाधनहेतूनां सदृशो भावः। एवं उपलब्धिरेव न भावः। वस्तुयोग्यस्य
422b लक्षणं वा। अथवा[7] तदाश्रयज्ञानप्रवृत्तिः। ततः सत्ताज्ञानशब्दव्यवहारप्रवृत्तेः। अनुपलब्धिर्हि भावानामभावः। हेतुभेदापेक्षया। क्वचिद् अभावज्ञानकार्यत्वात् हेतुर्हि अनुपलब्धिः तस्य भेदो हि विशेषणमिति। नोपलब्धिलक्षणप्राप्त-सत्तावान्। अत्र अनुपलब्धिलिङ्गेनाभावः साध्यश्चेत्। अनुपलब्धिरपि उपलब्ध्यन्तरस्य साध्ये(ति) अनवस्थाप्रसंगात् न स्यात् प्रतिपत्तिः।

अथोपलब्ध्यभावेऽप्यनुपलब्ध्यभावः स्यात्। तथा सत्ताभावोऽपि सिद्धः स्यात्। अपार्थिकाऽनुपलब्धिः। अथान्योपलब्ध्याऽनुपलब्धिः प्रत्यक्षसिद्धाऽनुपलब्धिः।

---

**अप्रवृ**(त्तिरित्यादि। केपामप्रवृत्तिः **प्रमा**)[1] **णानाम्**(।) वहुवचनं व्यक्तिभेदेन प्रमाणानाम्बहुत्वात्। आगमापेक्ष[7]......... [2]

13a सिध्यतीत्युच्यत इति।

एवम्मन्यते। ज्ञानज्ञेययोर्बाधा बोधरूपत्वेन विशेषाद् बोधरूपं प्रत्यक्षादिकं प्रमाणं स्वत एव सिध्यति (।) ज्ञेयन्तु घटादिकं जडरूपत्वात् प्रमाणमपेक्षते। ज्ञानज्ञेयाभावयोस्तु नीरूपत्वेन विशेषाभावात् कथं ज्ञा(नाभावस्य स्वतःसिद्धि र्ज्ञेयाभावस्य च)[1] ज्ञानाभावात् सिद्धिरुच्यते। अथ ज्ञानाभावो नान्येन सिध्यति। तथा हि[1] ज्ञानानां स्वसम्विदितरूपत्वेनैकज्ञानसंसर्गित्वाभावात्। केवलं यदि स्वसन्ताने ज्ञानं स्याद् उपलभ्येतानुपलम्भादसदेव तदिति स्वत एव ज्ञानाभावः सिद्ध इष्यते।

**तथा सत्ताऽभावोपि सिद्धः स्यात्**। तत्रापि हि यदि सत्ता स्यादुपलभ्येतानुप-(लम्भान्नास्तीति निश्चीयते ततश्चा)[1]**पार्थिकानुपलब्धि**रभावसिद्धौ। विज्ञानं वान्यवस्तुनीति पक्षं दूषयितुमा[2]ह। **अथे**त्यादि। **अन्यस्य** घटादिविविक्तस्य भूतलस्यो**पलब्ध्या** घटा**नुपलब्धि**सिद्धि रिति **प्रत्यक्षसिद्धानुपलब्धिः**।

एतदुक्तम्भवति। घटग्राहकत्वस्य भूतलग्राहकस्य चैकज्ञानसंसर्गित्वाद् यदा भूतलग्राहकमेव तज्ज्ञानम्भवति। तदा घटाग्राहकत्वाभावं (निश्चाययतीति प्रतीतिप्र)त्यक्षसिद्धैव घटानुपलब्धिः।

---

[1] In the margin. [2] 12th leaf is missing.

**तथाऽन्यसत्तयाऽसत्ता किन्न सिध्यति ।**

---

**तथान्यसत्तयाऽसत्ता किन्न सिध्यति।** तथेत्य[3]नुपलब्धिवत्। द्वयोरपि घटप्रदेशयोरेकज्ञानसंसर्गित्वादित्यभिप्रायः। अन्यस्य घटविविक्तस्य भूतलादेः सत्तया सिद्धया निषेध्यस्यार्थस्य सत्ता किन्न सिध्यति।

ननु भावनिवृत्तिरूपोऽभावः स कथं प्रत्यक्षसिद्ध इत्युच्यते।

एवम्मन्यते। अभावो नाम नास्त्येव केवलं मूढस्य भावविषयमेव प्रत्यक्षमन्याभावं व्यवहारयति। तेन यदुक्त[4]**मर्थापत्त्या**ऽभावः प्रतीयत इति तदयुक्तं। यतो न तावद् घटादीनामन्योन्याभावोऽभिन्नः घटविनाशे पटाद्युत्पत्तिप्रसङ्गात्। पटाद्यभावस्य विनष्टत्वात्। अथ भिन्नोऽभावस्तदा घटादीनां परस्परं भेदो न स्यात्। यदा हि घटाभावरूपः पटो न भवति तदा पटो घट एव स्यात्। यथा वा घटस्य पटाभावाद् भिन्नत्वाद् घटरूपता तथा पटा[5]देरपि स्यात्। घटाभावाद् भिन्नत्वादेव।

नाप्येषां परस्पराभिन्नानामभावे न भेदः शक्यते कर्त्तुं। तस्य भिन्नाभिन्नभेदकरणेऽकिंचित्करत्वात्। न चाभिन्नानामन्योन्याभावः सम्भवति। नापि परस्परभिन्नानामभावेन भेदः क्रियते स्वहेतुभ्य एव भिन्नानामुत्पत्तेः। नापि भेदव्यवहारः क्रियते। यतो भावानामात्मीयात्मीय (?) रूपेणोत्पत्तिरेव स्वतो भे[6]दः (।) स च प्रत्यक्षप्रतिभासनादेव भेदव्यवहारहेतुः।

तेन यदुच्यते "वस्त्वसंकरसिद्धिश्चाभावप्रमाणाश्रिते"ति तदपास्तं। किञ्च (।) भावाभावयोर्भेदो नाभावनिबन्धनोऽनवस्थाप्रसंगात्। अथ स्वरूपेण भेदस्तथाभावानामपि स स्यादिति किमभावेन कल्पितेन (।) नापि प्रागभावाभावे कार्यस्यानादित्वं प्रसज्यते। हेत्वभावेनानुत्पत्तेः।

ननु[7] **प्रागभावे** सति हेतोः सकाशादुत्पत्तिः स्यान्नासति प्रागभावे विद्यमानत्वात्। 13b

यद्येवन्न कदाचनापि कार्योत्पत्तिः स्याद् विरोधिनः प्रागभावस्य सन्निहितत्वात्। न च तद्विनाशात् कार्योत्पत्तिः प्रागभावमन्तरेण कार्योत्पत्त्यभ्युपगमप्रसङ्गात्। नापि कार्योत्पत्तिरेव प्रागभावविनाशस्तदुत्पत्तेरेव विरोधिसन्निधानेनासम्भवात्। कारणसत्ताकाले प्रागभावस्याविनाशात्।[1] कार्योत्पत्तिकाले च तद्विनाशात् कारणविनाशवत्। तस्मादुत्पत्तेः पूर्वं कार्यस्य न भावो नाप्यभावो धर्मोसत्त्वात्। निरंशत्वाच्च वस्तुनः। किन्तु यदोत्पद्यते तदा सत्त्वमस्यान्यदा नास्तीति **व्यवह्रियते।** तेनासदुत्पद्यत इत्युच्यते।

**प्रध्वंसाभावस्य चासत्त्वं स्वयमेवाचार्यो**भिधास्यते। **यच्च यस्मादुत्पद्यते**

तत्तस्य कार्यं कारणं चोच्यते। तेषां चैकक्षणस्थायि[2]त्वेनोत्पत्तेर्नाशित्वं स्वस्वरूपेणैवोत्पत्तेः परस्परभिन्नता च सिध्यति। तेन प्रागभावाद्यभावेपि कारणादिविभागतो व्यवहारो भवत्येव। न च प्रागभावादीनाम्परस्परम्भेदः प्रतिभासते। यस्माद् घटादेः पूर्वम्पश्चादन्यत्र च निवृत्तिमात्रमभिन्नं प्रतिभासते। यदि नाम कालभेदः प्रतीयते। न हि गोत्वमनेककालादिसम्बन्धित्वेन प्रतीयमानम[3]नेकम्भवति। निवृत्तेर्नीरूपत्वाच्च कथमभावस्य नानात्वं भावनिवृत्तिरूपत्वाच्चाभावस्य। केवलं यो मूढ उत्पत्तेः पूर्वं पश्चादन्यत्र च कार्यस्य भावमिच्छति तं प्रतीदमुच्यते (।) कार्यस्य पूर्वम्पश्चादन्यत्र चाभाव इति भावारोपनिषेधमात्रं क्रियते।

तेन। **न चावस्तुन** एते स्युराकारा इत्यादि यदुक्तन्तन्निरस्तं।

इतश्चैतन्निरस्तं द्रष्टव्यं यतो न प्राक्प्रध्वंसा[4]भावाभ्याम्भावस्य कश्चित् तदुत्पत्तिलक्षणो विरोधलक्षणो वा सम्बन्धोऽसहभावित्वेनाद्विष्ठत्वात्। अत एव न विशेषणविशेष्यभावः सम्बन्धः। नापि विशेषणविशेष्यभावोऽसहभावित्वादेव। विशेषणविशेष्यरूपतायाश्च वस्तुनोऽभावात्। केवल(मन्यसम्बन्धद्वारेणा)[1]यं कल्प्यते। दण्डदण्डिनोरिव। यदि च विशेषणविशेष्यभावसम्बन्धबले[5]न भावस्य प्रागभाव इति प्रतीतिस्तथा प्रागभावादेर्भाव इत्यपि प्रतीतिः स्यात् सम्बन्धस्याविशेषात्। तस्मात् प्रागभावादेरसम्बन्धिनो भावसम्बन्धित्वेन प्रतीतिर्भ्रान्तिरेव।

न **चान्योन्याभावो** भावानामस्ति। न हि घटस्य निवृत्तिः पटस्य निवृत्तिर्भव(त्यप्रतीतेः न च पटेऽवस्थानात्सा)[1] तत्सम्बन्धिनी युक्ता। एवं हि प्रागभावाद्यप्यन्योन्याभावः स्यात् कारणादाव[6]वस्थानात्। तस्मादन्याभाव एवास्ति नान्योन्याभावस्तेनान्याभावात् प्रागभावादीनां न भेद इति कथं चतुर्विधोऽभाव उच्यते।

प्रत्यक्षाभावनिराश(?)सश्च **नैरात्म्यसिद्धा**वभिहित इति नेहोच्यते।

न त्वभावस्यासत्त्वेनानुभूतत्वात् (कथं प्रत्यक्षेण निश्चयः। नैष दोषो य)[1]-

142a स्मादेकज्ञानसंसर्गिणोः प्रत्यक्षेणैकस्य ग्रहणमेवान्यस्याग्रहण[7]न्तदग्रहणमेव च तस्याभावग्रहणम्भावे हि तस्याग्रहणायोगाद् (।) यदाहान्यहेतुसाकल्ये तदव्यभिचाराच्चोपलम्भः सत्ता। तदभावोनुपलब्धिरसत्तान्योपलब्धिश्चानुपलब्धिरिति।

तेनायमर्थः(।) प्रत्यक्षमभावन्निश्चाययतीति तावन्न निश्चाय(यतीत्यर्थः। स च दृश्यस्य भावानिश्च)[1]योऽभावनिश्चय एव। एवं प्रत्यक्षपृष्ठभाविनो विकल्पस्य प्रत्यक्षवि[1]षयानुसारित्वं समर्थितम्भवति। तदेवमुपलब्ध्यभावव्यवहारवद् अर्थाभावव्यवहारस्यापि प्रत्यक्षसिद्धत्वान्न लिङ्गेनासौ साध्यते। एवन्तावदमूढं

[1] In the margin.

**यदा पुनः एवंविधेऽनुपलब्धिरेवासतां, तदा सिद्धेऽपि विषये मोहाद् विषयिणो ज्ञानशब्द[4]व्यवहारान्** अप्रतिपद्यमानः[1] **विषयप्रदर्शनेन समये प्रवर्त्तते। यथा सास्नादिसमुदायात्मकत्वादयं हि गौरिति। तथा च दृष्टान्ताऽसिद्धिचोदनाऽपि प्रतिव्यूढा। विषयप्रतिपत्तावप्यप्रतिपन्नविषयिणां दर्शनात्। एवमनयोरनुप-**

---

प्रति दृश्यानुपलम्भो नाभावं व्यभिचरतीत्यभावव्यवहारः प्रत्यक्षसिद्धः।

न चाप्यभावोनुपलब्धानामपि (सत्त्वान्नित्यं शक्यमानानुप)[1] लंभव्यभिचार इवि कृत्वा व्यवहर्त्तुमशक्य इति वक्तुं युक्तं। एवं ह्यभाव[2]स्य निश्चायकमपि प्रत्यक्षन्न स्यात्। सन्देहान्न चान्यन्निश्चायकमन्यद् व्यवहाराङ्गं युक्तं। तस्मात् प्रत्यक्षनिश्चायकत्वाद् भाववद् दृश्यस्याभावमपि व्यवहारयति।

कथन्तर्ह्यसद्व्यवहारस्य साध्यत्वमित्याह। **यदा पुनरित्यादि। एवं विधे** ह्युपलम्भयोग्यानु(**पलब्धिरेवासतां** पदा)[2]र्थानामसत्ता नान्या। **तदा सिद्धेपि** प्रत्यक्षेणाभावव्यवहारस्य **विषये**[3]। **मोहाद् विषयिणो** [ऽसतो(ऽ)विद्यमानस्य][2] **ज्ञानं**। नास्तीत्येवमाकारं। नास्तीत्येवम्भूतश्च **शब्दः** निःशङ्कावगमनागमनलक्षणा पुरुषस्य प्रवृत्ति**र्व्यवहारः**। तान**प्रतिपद्यमानः** पुमान्। **विषयप्रदर्शने**नासद्व्यवहारविषयस्य घटविविक्तप्रदेशस्योपलम्भमानस्य प्रदर्शनेन। **समये**ऽभावव्यवहारे **प्रवर्त्यते**। दृष्टान्तमाह। **यथे**त्यादि। **सास्नादिसमुदायात्म[4]क** एव **गौः**। ततो न तत्र गोत्वं साध्यते किन्तु गोव्यवहारः। यदायं मूढमतिः शावलेये प्रवर्त्तितगोव्यवहारो बाहुलेये शावलेयरूपशून्यत्वाद् गोव्यवहारं न प्रवर्त्तयति स निमित्तप्रदर्शनेन गोव्यवहारे प्रवर्त्यते। सास्नादिसमुदायनिमित्तको हि गोव्यवहारो न शावलेयरूपनिमित्तिकः। बाहुलेयेऽपि तन्निमित्तमस्तीति कथमसौ न[5] प्रवर्त्यते। तद्वद् घटविविक्तेपि प्रदेशेनुपलम्भनिमित्तप्रदर्शनेनासद्व्यवहारे प्रवर्त्यते।

**तथा चे**ति येनैवं व्यवहारः साध्यते तेन **दृष्टान्तासिद्धिचोदनापि प्रतिव्यूढा** प्रतिक्षिप्ता। अनुपलब्धेर्लिङ्गादभावे साध्ये येनैव लिङ्गो न साध्यधर्मिण्यभावः-साध्यस्तेनैव दृष्टान्तधर्मिण्यपि तत्राप्यपरो दृष्टान्त इत्यनवस्था स्यात् (।) व्यवहारे तु साध्ये ना[6]नवस्था। प्रवर्त्तितव्यवहारस्यैव पुनः समये प्रवर्त्तनात्।

ननु यो हि विषयं प्रतिपद्यते स विषयिणमपि प्रतिपद्यत इति कथं व्यवहारस्यापि साध्यत्वमित्याह। **विषये**त्यादि। दृश्यन्ते हि लोके तथाविधा ये **विषयप्रतिपत्तावप्यप्रतिपन्नविषयिणः**। यथा **सांख्यः** सत्त्वे रजो नास्तीति प्रवर्त्तितास

---

[1] Roṅ-du-med-pa.  [2] In the margin.

**लब्ध्योर्हि स्वविपर्ययहेत्वभावभावाभ्यां सद्व्यवहारप्रतिषेधफलत्वमुक्तम्। एकत्र संशया**[6]**त् अन्यत्र तु विपर्ययात्। तत्राद्या प्रमाणमुक्ता सद्व्यवहारनिषेधे उपयोगात्। न तु व्यतिरेकदर्शनाद्यौ संशयादुपयोगः। मुक्ता द्वितीया त्वत्र प्रमाणं**

423a **निश्चय**[7]**फलत्वात्॥**

---

14b द्व्यवहारोपि निमित्तनिश्चया[7]भावान्मृत्पिण्डे न प्रवर्त्तयत्यनुपलम्भनिमित्तप्रदर्शने घटाभावव्यवहारे प्रवर्त्त्यते।

**एव**मित्यादिनोपसंहारः। **एव**मुक्तेन प्रकारेणा**नयोरनुपलब्ध्यो**र्दृश्यादृश्ययोः **सद्व्यवहारप्रतिषेधफलत्व**न्तुल्यं।

कथं स्वविपर्ययहेत्वभावभावाभ्यां स्वशब्देन सद्व्यवहारस्य स्वरूपं गृह्यते विपर्ययशब्देन सद्व्यवहारविरुद्धोसद्व्यवहारो गृह्यते। तयोर्हे[1]तू। स्वविपर्ययहेतू। तत्र **स्व**हेतुरुपलब्धि**र्विपर्ययहेतु**र्दृश्यानुपलब्धिः। तयोर**भावभावौ**। स्वविपर्ययहेत्वभावभावौ। **ताभ्यां**।

एतदुक्तम्भवति (।) अदृश्यानुपलब्धौ सद्व्यवहारनिमित्ताया उपलब्धेः प्रत्यक्षानुमाननिवृत्तावभावात् सद्व्यवहारनिवृत्तिः। दृश्यानुपलम्भे तु सद्व्यवहार-विरुद्धस्यासद्व्यवहारस्य निमित्तसद्भावात् प्रवृत्तिस्तेन सद्व्यवहारस्य निवृत्ति-[2]रिति सद्व्यवहारप्रतिषेधफलत्वन्तुल्यं।

ननूपलम्भनिवृत्तावप्यर्थस्य सन्देहात् कथं सद्व्यवहारो निवर्त्तत इत्याह। **एकत्रे**त्यदृश्यविषयायामनुपलब्धौ सत्त्वस्य **संशयात्** ततो निश्चयात्मकः सत्त्वव्यवहारो निवर्त्तत एव। सन्दिग्धस्तु सत्त्वव्यवहारो न निवर्त्तते। **अन्यत्र तु** दृश्यानुपलब्धौ **विपर्यया**दिति संशयविपर्ययो निश्चयस्तस्मात्। असत्त्वस्य निश्चया[3]दित्यर्थः।

यद्यदृश्यानुपलब्धौ संशयः कथं सा प्रमाणमित्याह। **तत्राद्ये**त्यादि। तत्र द्वयोरनुपलब्ध्योर्मध्ये **आद्या** दृश्यानुपलब्धिः **प्रमाणमुक्ता सद्व्यवहारनिषेधे उपयोगाद्** व्यापारात्।

क्व तर्हि तस्या अप्रामाण्यमित्याह। **न** त्वित्यादि। **व्यतिरेक**स्याभावस्य **दर्श**नन्निश्चयः। **आदि**ग्रहणाच्छब्दो व्यवहारश्च गृह्यते। **संशयाद्** यतो नाभावनिश्चय उत्पद्यते।[4] तस्मान्न प्रमाणं। **द्वितीया** त्विति। दृश्यविषयानुपलब्धिः। **अत्रे**ति व्यतिरेकदर्शनादौ **निश्चयफलत्वा**न्निश्चय एव फलमस्या इति कृत्वा। **सा च** दृश्यविषयानुपलब्धिः **प्रयोगभेदाच्च**तुर्विधेति सम्बन्धः। **विरुद्धश्च विरुद्धकार्यं** **चे**ति विरूपैकशेषः। **सिद्धिरु**(पलब्धिर्दृश्यात्मनो)[१]रित्यत्रापि सम्बन्धनीयं।

---

[1] In the margin.

## ( २ ) अनुपलब्धिश्चतुर्विधा

**सा च प्रयोगभेदात् ।**

**( विरुद्धकार्ययोः सिद्धिः; सिद्धिर्हेतुभावयोः । )**
**दृश्यात्मनोर्; अभावाच्चानुपलब्धिश्चतुर्विधा ॥६॥**

**यावान् कश्चित् प्रतिषेधव्यवहारः सर्वोह्यनुपलब्ध्या। तथा हि स द्विधा क्रियेत। कस्यचिद् विधिना निषेधेन वा। विधावपि विरुद्धो वा विधीयेताविरुद्धो वा। अविरुद्धस्य विधौ सहभावविरोधाभावाद् अप्रतिषेधः। विरुद्धस्याप्यनुपलब्ध्यभावेन प्रतिषेधगतिः।[1] तथा हि अपर्यन्तकारणस्य भवतोऽन्यभावेऽभावाद् विरोधगतिः। साऽपि अनुपलब्धितः।**

---

एतेन स्वभावविरुद्धोपलब्धिर्विरुद्धकार्योपलब्धि[5]श्च द्वे निर्दिष्टे।

"असिद्धिर्हेतुभावयोः दृश्यात्मनोः"

इत्युपलब्धिलक्षणप्राप्तयोः कारणस्वभावयोरनुपलब्धिरित्यर्थः।

एतेनापि कारणानुपलब्धिः स्वभावानुपलब्धिश्च द्वे निर्दिष्टे इति **चतुर्धा** भवति। **अभावार्थे**त्यभावोऽभावव्यवहारश्चार्थः प्रयोजनं (यस्याः सा तथा।)[2]

ननु **विरुद्धकार्ययोः सिद्धि**रित्यत्रानुपलब्धिरिति न श्रूयते (।) तत्कथमनयोर[6]-नुपलब्धित्वमित्यत आह। **यावान् कश्चिद**दित्यादि। यावान् कश्चिदिति व्याप्ता (?) चैतत् कथ्येत। न कश्चित् **प्रतिषेधव्यवहारो** लिङ्गजोस्ति योनुपलब्धिमन्तरेण शक्यते कर्तुं। न तु प्रत्यक्षसाध्यत्वमभावव्यवहारस्य निराकृतमेतच्च-प्रागेवोक्तन्तामेव (व्याप्तिं दर्शयितुमाह। **तथा हीति**)[2]। **स** इति प्रतिषेधः। **द्विधा क्रियेत** व्यवह्रियेत **कस्यचिद**र्थस्य **विधिना**[7] **निषेधेन वा** (।) कस्यचिद्द्विधा- 15a **वपि** क्रियमाणे। **विरुद्धो वा विधीयेताविरुद्धो वाऽविरुद्धस्य विधौ** निषिध्यमानविधीयमानयोः **सहभावविरोधाभावादप्रतिषे**धो निषेध्याभिमतस्य। **विरुद्धस्यापी**-**त्या**दि। एवं ह्यसौ विरुद्धः स्याद् यदि तत्र स्वविरुद्धस्या**नुपल**(**धेः**। **तथा हीत्या**-दिनैतदेवा)[2]ह। **अपर्यन्तकारण**स्येत्यक्षीणकारणस्य[1] **भवतः** सन्तानेनोत्पद्यमानस्य शीतस्पर्शादिरग्न्यादिसन्निधानात् पूर्वमिति द्रष्टव्यं। **अन्यभावे**ऽन्यादिभावेऽभा-**वादनुत्पादाद् विरोधगतिः**। न त्वभावादहेतुकत्वाद् विनाशस्य।

एतदुक्तम्भवति। पूर्वपूर्वस्य शीतस्पर्शस्य स्वरसनिरोधे सत्युत्तरोत्तरस्य

---

[1] Dag-gam ? Dgag-pa. [2] In the margin.

**अन्योन्यो[3]पलब्धिपरिहारेण स्थितिलक्षणता वा विरोधः नित्यानित्यवद् ।**

---

त्वा(ग्नितारतम्येन शीतस्पर्श)[1]स्यापचयतारतम्ययोगिनः क्रमेणोत्पद्यमानस्य यावत्सर्वसर्वेणानु[2]त्पत्तिरुष्णस्पर्शलक्षणो भवति। तेन निर्हेतुकेपि विनाशेऽग्निसन्निधानात् पूर्वं प्रबन्धप्रवृत्तस्य शीतस्पर्शस्य स्वरसनिरोधेऽन्यस्य च प्रबन्धेनोत्पित्सोरग्निसन्निधाने सत्यनुत्पत्तेरग्निशीतयोर्विरोधावगतिर्लोके न तु परमार्थतो विरोधः। अत एव विरोधगतिरि(त्याह।

(यत्पुनरुच्य)[1] ते(।)न कारणनिवर्त्तनमन्तरेण कस्यचिदग्न्यादिर्निवर्त्तको नामेति।

तदयुक्तं।[3] निर्हेतुकत्वाद् विनाशस्य कथं कारणस्य निवर्त्तकः। अथ सहेतुकविनाशमभ्युपगम्यैवमुच्यते तदा यथासौ कारणं निवर्त्तयति कार्यं किन्न निवर्त्तयति। यदि च कारणनिवर्त्तनमन्तरेण न कार्यं निवर्त्तयितुं शक्यते तदा तत्कारणस्यापि कथन्निवर्त्तकं यावत्तत्कारणं न निवर्त्तयति तत्कारणस्याप्येवमित्यनवस्थया न कश्चित् कस्यचिन्निवर्त्तकः स्यात् (।) न च सन्ताना[4]पेक्षयैतद्वक्तुं युज्यते सहेतुके विनाशे सन्तानस्यैवाभावादिति यत्किञ्चिदेतत्। स चेत्यन्यभावे सत्यभावोनुत्पत्तिलक्षणो विरोधहेतुरनुपलब्धेः सकाशाद् व्यवह्रियते।

अनेन सहानवस्थालक्षणो विरोधो व्याख्यातः।

द्वितीयं विरोधन्दर्शयन्नाह। **अन्योन्योपलब्धीत्यादि**। **अन्योन्योपलब्धिः** परस्परप्रतिपत्तिस्तस्याः **परिहारो** विवेकस्तेन[5] **स्थितं लक्षणं** स्वरूपं ययोस्तौ तथोक्तौ। तयोर्भावोन्योन्योपलब्धिपरिहार**स्थितलक्षणता**। सा वा विरोधः (।) वा शब्दः समुच्चये। **नित्यानित्यत्ववदिति** दृष्टान्तः।

ननु प्रथमविरोधेप्यस्त्येव परस्परपरिहारः। द्वितीयेपि सहानवस्थानं। तथा हि ययोरेव धर्मयोरेकत्रानवस्थानन्तयोरेव द्वितीयो विरोधः। तथा हि रूपरसयोरयं नेष्यते।[6] तत्कस्माद् विरोधद्वयमुक्तमिति चेत् (।)

सत्यं विषयविभागार्थन्तूक्तं। पूर्वो विरोधो दृश्यवस्तुविषय एव। द्वितीयस्त्ववस्तुविषयोप्यदृश्यविषयश्चेत्येके। यद्वा पूर्वकोन्यतोन्यस्याभावप्रतिपत्त्यान्येन सह विरोधः। द्वितीयस्त्वन्येन सहैकत्वाभावेन स्वरूपविषय इत्यनयोर्विरोध-
15b योर्महान् भेदः। तथा हि नित्यत्वानिवृत्तिरूपमनित्यत्वम[7]नित्यत्वानिवृत्तिरूपञ्चानित्यत्वमित्येवमन्योन्यपरिहार एव विरोधः स्वरूपनिष्ठः। न च नील-

---

[1] In the margin.

**तत्राप्येकोपलब्ध्याऽन्यानुपलब्धिरेवोच्यते । अन्यथाऽनिषिद्धोपलब्धिकस्या**[4]-

---

निवृत्तिरूपम्पीतम्पीतनिवृत्तिरूपं च नीलमनयोर्भावरूपत्वान्नीलाभावे पीतस्य भावप्रसंगाच्च (।) तस्मान्नानयोरयं विरोधः। नाप्यनयोरन्योन्याभावाव्यभिचारेणायं विरोधोऽप्रतीतेः। अत एवाविरुद्धस्य विधानमुच्यते। नीलस्यापि नीलनिवृत्तिरूपेणानीलेना[1]यं विरोधो न नीलाभावनियतेनानीलेन तथाभूतस्यानीलवस्तुनः पीतादिव्यतिरिक्तस्याभावात्। कथन्तर्हि नीलादौ दृश्यमाने पीतादेस्तादात्म्यनिषेधः।

नैष दोषो यस्मात्। नीलस्यैकस्योपलम्भेन्यस्यादृश्यस्याप्युपलम्भमानस्वभावत्वे सति तथैवोपलम्भः स्यादित्येवमुपलब्धिलक्षणप्राप्तत्वम्परामृश्य तादात्म्यं स्वभावानुपलम्भान्निषिध्यते। अ[2]त्रापि च विरोधे स चानुपलब्धेरित्यपेक्षणीयन्तेनायमर्थः (।) स चान्योन्यपरिहारो विरोधोनुपलब्धेरेव निश्चेतव्यः। तथा हि (।) विरोधिनाम्विरोध एकप्रतिभासे सत्यन्याप्रतिभासनमेवोच्यते (।) भावस्य च रूपे प्रतिभासमाने तदभावो न प्रतिभासते (।) तस्माद् भावाभावयोस्तादात्म्येनाप्रतिभासनाद् विरोधो निश्चीयते। एवं नित्यानित्यादावयन्निश्चेतव्यः।

अप्रति[3]भासनं चैकप्रतिभासनमेवोच्यते। तदाह। **तत्रापी**त्यादि। तत्राप्यनन्तरोक्ते विरोधे। **एकोपलब्ध्या**। एकस्य विरोधिन उपलब्ध्या**न्यानुपलब्धिरेव** निषेध्यानुपलब्धिरे**वोच्यते**। **अन्यथे**ति यद्येकोपलब्ध्यान्यानुपलब्धिर्नोच्यते। तदा**ऽनिषिद्धा उपलब्धि**र्यस्य निषेध्यस्य तस्यैकोपलब्धावप्य**भावासिद्धेः**। ततश्चोपलभ्यमानस्य विरोधित्वमेव न स्यात्।[4] तस्माद् विरोधद्वयस्याप्यनुपलब्धिकृतत्वाद् विरुद्धोपलब्ध्यादयो विधिमुखेन प्रयुक्ता अप्यनुपलब्धिस्वभावा भवन्ति।

ननु विरोधिनोर्विरोधलक्षणसम्बन्धग्राहिकानुपलब्धिर्दृष्टान्ते। न च सम्बन्धग्राहकस्य प्रमाणस्य रूपं सम्बन्धिनोर्भवति। न ह्यग्निधूमयोः (सम्बन्धग्राह)[1]कस्य प्रत्यक्षस्य रूपं धूमस्य भवति नाग्नेः। तत्कथम्विरुद्धोपलब्धिरनुपलब्धिर्भवत्युपलब्धि[5]रूपतया प्रतिभासनात्। तस्माद् दृष्टान्ते गृहीतविरोधमग्न्यादिकमन्यत्र प्रदेशे दृष्ट्वा शीताद्यभावोनुमीयत इति।

**अत्रोच्यते। यदि विरोधसम्बन्धद्वारेण** गम्यगमकभावो विरोधिनान्ततश्चा-

---

[1] In the margin.

**भावासिद्धेः । एकस्य निषेधात् अन्याभावासिद्धौ हि अनुपलब्धिसिद्धिरेव । निषेधस्य हि अनुपलब्धिरूपत्वात् । अथान्यनिषेधः तत्रापि कार्यकारणयोः अनुभयस्य वा ।**[5] **तत्रानुभयस्य प्रतिबन्धाभावात् । तदभावेऽन्येन न भवितव्यमिति कुत एतत् । कार्यानुपलब्धावपि तदभावः, यतो नाकारणानि तद्वन्ति वैकल्य(प्रतिबंधसंभव)प्रसंगात् तदभावः कुतः स्यात् । तस्मात्**[6] **कारणानुपलब्धिरेवाभावं गमयति । स्वभावानुपलब्धिस्तु स्वयमसत्तैव (।) नात्रार्था-**

---

ग्निदर्शनाच्छीतस्य प्रतीतिः स्यात्तयोरेव विरोधसम्बन्धेन (समुत्थि[त]त्वात् । नं शीता)[1]भावस्यासम्बन्धित्वात् । यदा चाग्निना शीतो निवर्त्यते तदा कथं विरोधः सम्बन्धो[6] द्विष्ठत्वाभावात् । न च शीताभावेन सहाग्नेर्विरोधः सहावस्थानात् । नाप्यग्नेः शीताभावाव्यभिचारित्वात्ततः शीताभावाद्यनुमानं । अग्निभावेपि शीतभावदर्शनात् । तस्माद् यथा यथाग्निसद्भावे शीतस्यानुपलम्भस्तथा तथा दृष्टान्ते तदभावस्य प्र(तिपन्नत्वात् । अन्यत्राप्यग्नेः)[1] शीताभावस्तथैवानु-

16a मीयते । तेनायमर्थो[7] भवति (।) साध्यधर्मिण्यप्यग्निसद्भावे यदा शीतस्यानुपलम्भस्तदैवाग्नेर्विरोधित्वं नान्यदा । विरोधित्वेन च गमकत्वमित्यन्यानुपलम्भेन गमकत्वमित्युक्तम्भवति (।) अतो विरुद्धोपलब्धिरनुपलब्धिनियतत्वादनुपलब्धिरूपत्वं । केवलभूतलोपलब्धेर्घटानुप(लब्धिरूपत्ववत् । ए)[1]वं परस्परपरिहारेपि विरुद्धोपलब्धिरनुपलब्धिरेव । यथार्हतां स्याद् (।) अनित्यो[1]घटः स्यान्नित्य इत्यत्र ह्यनित्योपलब्धिरेव नित्यानुपलब्धिरतो न नित्यानित्यरूपम्वस्तु ।

एवमर्थान्तरविधावपि निषेध्यस्यानुपलब्धिङ्गमिकां प्रतिपाद्यार्थान्तरनिषेधेपि प्रतिपादयितुमाह । **एकस्ये**त्यादि । कस्मात् (।) **निषेधस्ये**त्यादि । न चार्थान्तराभावाद(र्थान्तरनिषेधेति)[1]प्रसङ्गः (।) यत**स्तत्रापी**त्यन्यनिषेधे साध्ये **कार्यकाहणयो**र्निषेधो हेतुः स्यात् ।[2] **अनुभयस्या**कार्यस्याकारणस्य **वा** निषेधो हेतुः स्यात् । **तत्र** तेषु । **अनुभयस्या**कार्यकारणात्मकस्य निषेध्येन सह **प्रतिबन्धाभावात् तदभावे**ऽप्रतिबद्धस्याभावे । **अन्येने**ति प्रतिषेध्याभिमतेन । न **भवितव्यमिति कुत एतत्** । **कार्यानुपलब्धावपि** कुतस्तदभाव इति सम्बन्धः । **तदभाव** इति कारणाभावः । **यतो नानाकारणानि तद्व**न्ति कार्यवन्ति **वैकल्य**[3]प्रतिबन्धसम्भवात् । एतच्च कारणमात्रे गृहीत्वोक्तमप्रतिबद्धासामर्थ्यस्य कारणस्याभावः कार्याभावाद् गम्यत एव (।) यतोनुभयस्य कार्यस्य चानुपलब्धिर्गमिका । **तस्मात् कारणानुपल-**

---

[1] In the margin.

**न्तरस्याभावः साध्यते। केवलं तत्र विषयी साध्यते। अस्यामपि यदा व्यापक-धर्मानुपलब्ध्या व्याप्याभाव[7]माह तदाऽभावोऽपि। इयं हि विरुद्धविषयिणोऽनुप-** 423b **लब्धिः योगविभागेन चतुर्विधा। विरुद्धसिद्ध्या। यथा नात्र शीतस्पर्श(:) वह्नेः।**

**एतेन व्यापकविरुद्धसिद्धिरुक्ता वेदितव्या। यथा नात्र तुषारस्पर्शः वह्नेः।**

**विरुद्धकार्यसिद्ध्या हि। यथा न शीतस्पर्शोऽत्र धूमाद्।**

---

**ब्धिरेवाभावं गमयति।** कार्यस्येति सम्बन्धाद् गम्यते।

स्वभावानुपलब्धेरप्यभावहेतुत्वादवधारणमयुक्तमिति चेदाह। **स्वभावानुपलब्धिस्तु स्वयन्नसत्तैव[4] (।) नात्रार्थान्तरस्याभावः साध्यते।** स्वभावान्तरस्य च निषेधे साध्ये कारणानुपलब्धिरेवेत्यवधारणमतो न व्याघातः।

किन्तर्हि तत्र साध्यत इत्याह। **केवल**मित्यादि। **तत्रे**ति स्वभावानुपलब्धौ **विषयी** असज्ज्ञानादिः। **अस्याम**पीति स्वभावानुपलब्धौ **यदा व्यापको यो धर्म**स्तस्यानुपलब्ध्या **व्याप्याभावमाह**। यथा नात्र शिंशपा वृक्षाभावादिति। **तदा** ऽभे[5 1]-दोपि व्याप्यस्य साध्यते। अपिशब्दाद् व्यवहारोपि। यदा हि समुन्नतयोः पर्वत-प्रदेशयोरेकस्मिन् प्रदेशे तरुवनं दृश्यमानमतिगहनत्वादनवधारितवृक्षविशेषम्भवति। तत्रापरस्मिन् पर्व्वतोद्देशे शिंशपाभावो न निश्चेतुम्पार्यते शिंशपाया अदृश्यत्वाद् वृक्षस्तूपलब्धिलक्षणप्राप्त इति शक्यतेऽभावनिश्चयः कर्त्तुन्तस्य। तदा व्यापकाभावा[6]द् व्याप्यस्याभावः साध्यते।

**इयमि**त्यादिनाऽ**भावार्थे**त्यादिकारिकाभागं व्याचष्टे। **विरुद्धसिद्ध्ये**ति। स्वभावविरुद्धोपलब्ध्या। **यथे**त्यादि। यत्र धर्मिणि शीतस्पर्शः परोक्षः। वह्निश्च दृश्यते (।) दूरात्तस्मिन् विषयेऽयं प्रयोगः। **एतेने**ति स्वभावविरुद्धोपलब्ध्युदाहरणेन **व्यापकविरुद्धसिद्धिरुक्ता वेदितव्या। यथे**त्याद्युदाहरणं। शीत[7]स्पर्श- 16b विशेष एव। हिमानुगतस्तुषारस्तस्य व्यापकः शीतस्तस्य विरुद्धोग्निः। तत्राग्निर्विरुद्धं शीतं निवर्त्तयन् तद्व्याप्यन्तुषारस्पर्शमपि निवर्त्तयतीत्यर्थतः स्वभावविरुद्धोपलब्धावियमन्तर्भवति। यत्र च वह्निः प्रत्यक्षः शीतस्पर्शस्तुषारस्पर्शश्चाप्रत्यक्षस्तत्रायमपि प्रयोगो द्रष्टव्यः। **विरुद्धस्य यत्कार्यन्तस्यासिद्ध्या। यथे**त्यादि। **न शीतस्पर्शोत्र धूमादिति** शी[1]तविरुद्धोग्निस्तस्य कार्यं धूमः सोग्निं सन्निधापयति स च शीतमपनयति। यत्र च शीतस्पर्शः परोक्षो वह्निरपि धूमश्च प्रत्यक्षस्तत्रायं प्रयोगो द्रष्टव्यः। एवन्ताव**द्विरुद्धकार्ययोः सिद्धि**रित्येतद् व्याख्यातं।

अधुना (।)

---

[1]Cf. **तदाऽभावोऽपि**

**हेत्वसिद्धया। यथा नात्र धूमो वह्न्यभावात्।**

**स्वभावासिद्धया। यथा नात्र धूमो वह्नेरनुपलम्भात्।**

**एतेन व्यापकस्वभावासिद्धिरुक्ता। यथा नात्र[3] शिंशपा वृक्षाभावात्।**

**सर्वत्रापि अभावसिद्ध्यनुपलब्धेः दृश्यात्मनां तेषां च विरुद्धसिद्ध्यसिद्धी वेदितव्ये। अन्येषामभावा[4]सिद्धेः।**

**यदि विरुद्धकार्योपलब्ध्याऽप्यभावसिद्धिः तत्कारणोपलब्ध्या किन्न सिध्यति।**

**तद्विरुद्धनिमित्तस्य योपलब्धिः प्रयुज्यते।**
**निमित्तयोर्विरुद्धत्वा(भावे सा व्यभिचारिणी)॥७॥**

---

"असिद्धिर्हेतुभावयोः"।

इत्येतदुदाहरणाख्यानेनाचष्टे (।) **हेत्वसिद्धये**ति कारणानुपलब्ध्या। **यथे**त्यादि। यदा महाह्रदस्योपरि[2] वाष्पादौ धूमादिरूपतया सन्देहो भवति तदाऽयं प्रयोगो द्रष्टव्यः। तत्र हि निष्कम्पे महाह्रदे यद्यग्निः स्यात् प्रभास्वरतया प्रत्यक्ष एव स्याद् (।) अप्रत्यक्षत्वादेव वह्नेरभावात् कार्याभावः साध्यते। **स्वभावासिद्धये**ति स्वभावानुपलब्ध्या न तत्र धूमोऽनुपलब्धेरिति। उपलब्धिलक्षणप्राप्तस्येति द्रष्टव्यं। **एतेने**ति स्वभावानुपलम्भप्रयोगेण। **व्यापक**श्चा[3]सौ **स्वभाव**श्च तस्या**सिद्धि**रनुपलब्धि**रुक्ता**। **यथा नात्र शिंशपा वृक्षाभावात्**। स्वभाव एव वृक्षत्वं शिंशपात्वस्यातो वृक्षत्वेन शिंशपा व्याप्ता॥

ननु च स्वभावानुपलब्धावेव दृश्यनिषेधो न तु विरुद्धोपलब्ध्यादौ (।) तथा ह्यदृश्यस्यैव शीतस्पर्शस्य कार्यस्य चादृश्यस्यैव निषेधः साध्यते (।) दृश्यत्वे हि स्वभावानुपलब्धिरेव स्यात्। तेन यथाऽदृश्यस्य शीतस्प[4]र्शादेर्निषेधस्तथा पिशाचादेरपि स्यादित्यत आह। **सर्वत्रे**त्यादि।

एतदुक्तम्भवति। यथा स्वभावानुपलब्धावन्यत्रोपलब्धस्य घटादेः प्रदेशविशेषेऽभावः साध्यते तथान्यत्र प्रतिपन्नविरोधस्य शीतस्पर्शस्य प्रतिपन्नकार्यत्वस्य च कार्यस्य विरुद्धोपलब्ध्यादिना साध्यधर्मिण्यभावः साध्यते न तु सर्वदाऽदृश्यस्येति। **सर्वत्रे**ति विधिमुखेन[5] प्रतिषेधमुखेन च प्रयुक्तायामभावसाधन्यामित्यभावश्चाभावव्यवहारश्चाभावशब्देनोक्तः।

**तेषामपि** येषामभावेनाभावः साध्यते तेषां कारणादीनां **दृश्यात्मनामेवासिद्धि**रनुपलब्धिः। **तद्विरुद्धानां** च प्रतिषेध्यार्थविरुद्धानाञ्च स्वभावविरु(द्धादीनां

**यथा नात्र शीतस्पर्शः काष्ठात्। निमित्तयोर्विरोधे गमिके च। यथा नास्य (पुंसो) रोमहर्षादिविशेषाः सन्निहितद[6]हनविशेषत्वात्।**

**एतेन तत्कार्यादपि तद्विरुद्धकार्याभावगतिरुक्ता। यथा न रोमहर्षादिविशेषयुक्तपुरुषवानयं प्रदेशः धूमात्।**[7]

---

**सिद्धिरुपल)**[१]ब्धिलिङ्गत्वेन **वेदितव्या**। अत्र च **दृश्यात्मनां सिद्धिरिति** न सम्बध्यते उपल[6]ब्धिवचनादेव दृश्यात्मताया लब्धत्वात्। किन्त्वेवं सम्बन्धः कर्त्तव्यः। **दृश्यात्मना**न्निषेध्याभिमतानां ये विरुद्धास्तेषां सिद्धिरिति। किङ्कारणम् (।). **अन्येषामदृश्यात्मनां कारणादीनामभावासिद्धेः**। अदृश्यानां निषेध्याभिमतानां स्वभावविरुद्धादिति विरो(धाद्यसिद्धिः ॥

**यदी)**[१]त्यादि परः। शीत**विरुद्धस्याग्नेः कार्यं** धूमस्यो**पलब्ध्याप्यभावसिद्धिः**[7] शीतस्य। तत्कारणोपलब्ध्या। **तस्य** शीतविरुद्धस्याग्नेर्यत् **कारणं** 17a काष्ठादिस्तस्यो**पलब्ध्या किन्न सिध्यति** शीताभावः।

**तद्विरुद्धस्येत्याद्याचार्यः**। तेन शीतस्पर्शेन विरुद्धस्य वह्ने**र्निमित्तं** काष्ठादिस्**तस्य योपलब्धिः प्रयुज्यते सा व्यभिचारिणी**। कदा (।) **निमित्तयोर्वि**रुद्धत्वा-(**भावे** सति। अ)[१]ग्निशीतनिमित्तयोर्विरोधाभावे सति। उदाहरणमाह। **यथे**त्यादि। अत्र हि काष्ठमा[1]त्रस्य दहनहेतोः शीतनिमित्तेन तुषारादिना विरोधाभावात्। यत्पुनरप्रतिबद्धसामर्थ्यमग्निजनकं काष्ठन्तस्य यद्यपि शीतनिमित्तेन विरोधस्तथापि तथाभूतस्य काष्ठस्य कार्यदर्शनादेव निश्चयात् कार्यविरोध एव स्यात्। **निमित्तयोः** पुन**र्विरोधे गमिके** च कारणानुपलब्धिः। **यथा नास्य पुं**सः **रोमहर्षादिविशेषाः**। आदिशब्दाद् दन्तवीणाक[2]म्पादयः। विशेषग्रहणं शीतकार्याणां परिहारार्थं। पिशाचादिविकारकृता अपि हि ते सम्भवन्ति। **सन्निहितो दहनविशेषो** यस्य पुरुषस्य स तथा तद्भावस्तस्मात्(।)अत्रापि विशेषग्रहणं यथाभूतो दहनो रोमहर्षाद्यपनयनसमर्थस्तथाभूतस्य परिग्रहार्थं। अत्र हि परितापनिमित्तस्य दहनस्य रोमहर्षादिनिमित्तेन शीतेन विरोधो[3]स्ति। तस्माद् दहनः स्वविरुद्धं शीतमपनयंस्तत्कार्यमपि रोमहर्षादिकमपनयतीति। शीतस्पर्शस्य तत्कार्यस्य च रोमहर्षादेः परोक्षत्वे सति वह्निदर्शनाच्छीतकारणनिवृत्त्या यदा रोमहर्षादेर्निवृत्तिः साध्याभिप्रेता तदाऽयं प्रयोगो द्रष्टव्यः।

**एतेन** कारणविरुद्धोदाहरणेन **तत्कार्याद**पीति विरुद्धस्य यत्कार्यन्तस्मादपि।

---

[1] In the margin.

**इष्टं विरुद्धकार्येऽपि देशकालाद्यपेक्षणम् ।**
4242 **अन्यथा व्यभिचारि स्याद् भस्मेवाशीतसाधने ॥८॥**

---

**तद्विरुद्धकार्याभा**[4]**वगतिरुक्तेति**। यस्य विरुद्धस्य कार्यमुपलभ्यते तेन विरुद्धो यो द्वितीयः प्रतियोगी स तद्विरुद्धस्तस्य यत् कार्यन्तस्याभावगतिरुक्ता। **यथे**त्युदाहरणं। **रोमहर्षादिविशेषो** यः शीतकृतस्तेन **युक्तो** यः **पुरुषः** स यस्मिन् **प्रदेशे**- विद्यते स तथा। प्रदेशोपादानं धूमादित्यस्य पक्षधर्मत्वप्रतिपादनार्थं। पुरुषे हि धर्मिणि न पक्षधर्मो हे[5]तुः स्याद् धूमस्य प्रदेशधर्मत्वात्। अयं च प्रयोगः (।) यत्र वह्निः शीतस्पर्शो रोमहर्षादिविशेषश्च परोक्षस्तत्राभावसाधने द्रष्टव्यः। तत्र हि शीतविरुद्धाग्निकार्यस्य धूमस्योपलब्ध्या अग्निविरुद्धशीतकार्यस्य रोमहर्षादेरभावः साधयितुमिष्टस्तेन तथाभूत एव साध्यः। धूमो हि दहनं सन्निधापयति स शीतन्निवर्तयति (।) स निवर्त्तमानः[6] स्वकार्यं रोमहर्षादिकन्निवर्त्तयतीत्यर्थात् कारणविरुद्धोपलब्धिरियं।

17b **इयन्तद्विरुद्धोपलब्धि**(१।३२)रिति सम्बन्धः। कारणविरुद्धोपलब्धिरित्यर्थः। **हेत्वसिद्ध्**यैव कारणानुपलब्ध्यैव **प्रागेव निर्दिष्टा**। यस्मादनयोरपि प्रयोगयोः कारणानुपब्धेरेव कार्याभावगतिस्तस्मादियं कारणानुपलब्ध्यैवोक्ता।[7]

**इतीय**मित्यादि। मौलेन प्रभेदेन चतुर्विधापि सती अवान्तरप्र**योगभेदाद् अष्टविधा** भवति। तथा हि स्वभावविरुद्धोपलब्धेर्व्यापकविरुद्धोपलब्धिः प्रभेद उक्तः। स्वभावानुपलब्धेर्व्यापकानुपलब्धिः। कारणानुपलब्धेः कारणविरुद्धोपलब्धिः कारणविरुद्धकार्योपलब्धिश्च। विरुद्धकार्योपलब्धिस्त्वेकप्रकारेत्यष्टवि[1]धा भवति ॥

ननु चिरविनष्टेप्यग्नौ वासगृहादौ धूमस्य सद्भावात् कथम्विरुद्धकार्योपलब्धेर्न व्यभिचार इत्यत आह।

**तत्रे**त्यादि। **तत्र विरुद्धकार्येपीष्टं देशकालाद्यपेक्षणं**। नात्र शीतः कस्मिंश्चित् काले यदाऽग्निर्वर्तमानीभूत इति कालापेक्षणं व्योम्नि धूमात् कुत्रचिद्देशे नास्ति शीतो यत्र सन्निहितो वह्निर्यतोयं धूम उत्थित इति देशापेक्षणं।[2] आदिशब्दाद् अवस्थाविशेषापेक्षणं (।) योवस्थाविशेषो धूमस्य सन्निहिताग्नेर्दृष्टस्तमपेक्ष्य वर्त्तमानेपि काले शीताभावोनुमीयते। अग्निरत्र धूमादिति कार्यहेतावपि देशकालाद्यपेक्षणमिष्टं। अस्यैवार्थस्य समुच्चयार्थोऽपिशब्दः।

ननु देशकालाद्यपेक्षितत्वस्य कार्यहेतुविशेषणत्वेऽसिद्धो हेतुः स्याद् धर्मिणोऽभावादिति चेत् (।) न। प्रदेश ए[3]व धर्मिणि देशकालाद्यपेक्षितत्वेन गमकत्वादित्युक्तत्वात्।

**यस्तर्हि (समगुणेन) कारणकलापेन कार्योत्पादोऽनुमीयते स कथं त्रिविधे[2] हेतावन्तर्भवति ॥**

**हेतुना यः समग्रेण कार्योत्पादोऽनुमीयते ।**
**(अर्थान्तरा)नपेक्षत्वात् स स्वभावोऽनुवर्णितः ॥९॥**

**असावपि यथासन्निहितात् नान्यमर्थमपेक्षत इति तादृग्मात्रानुबन्धी स्वभावः। तत्र कारणकलापात् कार्योत्पत्तिसम्भवोऽनुमीयते केवलम्। समग्राणां कार्यो-**

---

**अन्यथेति** यदि न देशाद्यपेक्षणन्तदा **व्यभिचारि** विरुद्धकार्यं **स्यात्**। यथा **भस्मा-**नपेक्षितदेशकालं **अशीतसाधने** शीताभावे साध्ये व्यभिचारि। तद्वत् एवन्तावद् विरुद्धाद्युपलब्धिरनुपलब्धिरिति प्रतिपादितं।

**यस्तर्हीत्यादि** परः। **समगुणेति** सन्निहितानुपहितेन यथा क्षितिवीजो[4]-दकादि**कारणकलापं** दृष्ट्वांकुरः कार्योनुमीयते। **स कथं** कारणाख्यो हेतु-**स्त्रिविधे** स्वभावकार्यानुपलम्भाख्ये **हेतावन्तर्भवति**। न तावदनुपलब्धौ विधि-साधनत्वात्। कारणस्वभावत्वान्न कार्यहेतौ। अर्थान्तरेणार्थान्तरस्यानुमानान्न स्वभावहेतौ ॥

अन्तर्भावमाह।

**हेतुनेत्यादि**। **समग्रेणेति** यावतः कारणकलापात् कार्यमुत्पद्यमानं दृष्टन्तावता[5] नान्त्यावस्थाप्राप्तेन तत्र लिङ्गिग्रहणात् प्रागेव कार्यस्य प्रत्यक्षत्वात्। अप्रत्यक्षत्वे वाऽन्त्यावस्थानिश्चयायोगादनुमानं। न च यस्तान् निश्चेतुं शक्ष्यति तस्यानुमान-मन्त्यक्षणानामर्वाग्दर्शनेनानिश्चयात्। **यः कार्योत्पादोनुमीयते** स हेतोः **स्वभावो वर्णितः**। कुतो**र्थान्तरानपेक्षत्वात्**। तेनायमर्थः कार्योत्पादनयोग्यता**मात्रानु**बन्धि[6]**त्वात् स्वभावभूता** ॥

ननु यदाऽन्त्यावस्थापेक्षः कार्योत्पादस्तदा कथमन्यानपेक्ष इत्याह। **असावपीति** कार्योत्पादः। यथासन्निहितो यादृशः सन्निहितः। कारणकलापः। तादृशात् सन्निहिता**न्नान्यमर्थमपेक्षत इति तादृग्मात्रानुबन्धी स्वभावः**। (कस्य भावः)। समग्रस्य कारणकलापस्य(।)सन्तानापेक्षयैतद् उच्यते न क्षणापेक्षया। जनकः[7] कारणकलापसन्तानोनपेक्ष इत्यर्थः। 18a

यद्यप्यनपेक्षः कार्योत्पादस्तथाप्यर्थान्तरत्वात् कथं स्वभाव इत्याह। **तत्रे**त्यादि। यस्मात्तत्र समग्रेषु कारणेषु समग्रात् कारणाल्लिङ्गात् **कार्योत्पत्ति(सम्भव)-स्तथानुमीयते**। सम्भवत्यस्मादिति सम्भवः। कार्योत्पादनयोग्यतानुमीयत इत्यर्थः। एतदेव व्यनक्ति। **समग्राणां कार्योत्पादनयोग्यतानुमानादिति**। **योग्यता[1] च**

**त्पादनयोग्यतानुमानात्। योग्यता च सामग्रीमात्रानुबन्धित्वात् स्वभावभूतै-वा[4]नुमिता।**

**किं पुनः सामग्र्याः कार्यमेव नानुमीयत इति।**

**सामग्रीफलशक्तीनां परिणामानुबन्धिनि।**
**अनैकान्तिकता (कार्ये) प्रतिबन्धस्य सम्भवात् ॥१०॥**

**न हि समग्राणीत्येव कारणद्रव्याणि स्वकार्यं जनयन्ति। सामग्रीजन्यशक्तीनां परिणामापेक्षत्वाद्धि कार्योत्पादस्य। अत्रान्तरे प्रतिबन्धसम्भवात् न कार्यानुमानम्।[6]**

**योग्यताया द्रव्यान्तरानपेक्षत्वात् न विरुध्यतेऽनुमानम्। उत्तरोत्तरशक्ति-परिणामेन नाना कार्योत्पादनसमर्था, शक्तिपरिणामप्रत्ययस्यान्यस्यापेक्षणीयस्या-**
424b **भावात्।[7] पूर्वसजातिमात्रहेतुकशक्तिप्रसूतित्वात्। सामग्रीयोग्यता ह्यनन्यापेक्षि-**

---

**सामग्रीमात्रानुबन्धिनी** कारणान्तरानपेक्षत्वात्।

यदि तर्हि कार्योत्पादनशक्तिस्तन्मात्रानुबन्धिनी नियतस्तर्हि कार्योत्पाद इति स एव **कस्मान्नानुमीयत** इति परः पृच्छति। **किं पुनः सामग्र्याः** सकाशात् **कार्यमेवानुमीयत** इत्यत्राह। **सामग्री**त्यादि। सामग्र्याः फलञ्च ताः शक्तयश्चेति सामग्रीफलशक्तयः। तथा हि पूर्वस्मात् समग्रादुत्तरस्य समर्थस्य क्षण[2]स्योत्पत्तिस्तस्य चात्मातिशयः शक्तिरिति **सामग्री फलं शक्तिस्**तासां परिणामः। उत्तरोत्तरप्रबन्धे-नोत्पत्तिस्तद**नुबन्धिनि** तदपेक्षिणि कार्ये। |कारणेनानुमातव्येऽ**नैकान्तिकता**। किङ्कारणं (।) **प्रतिबनध(स्य)सम्भवात्**।

तद्व्याचष्टे। **न ही**त्यादि। **समग्राणीत्येव** सन्निहितानीत्येव **कारणद्रव्याणि स्वकार्यं जनयन्ति**। किङ्कारणं। **सामग्री**त्यादि। **सामग्र्याः** सकाशा[3]ज्**जन्म** यासां **शक्तीना**न्तासामुत्तरोत्तर**परिणामः**। पूर्व्वपूर्व्वक्षणादुत्तरोत्तरविशिष्टक्षणो-त्पादो यस्त**दपेक्षत्वात् कार्योत्पादस्य**। **अत्रान्तरे** चेति सन्तानपरिणामकाले। **प्रतिबन्धसम्भवात्।**

ननु योग्यताप्युत्तरोत्तरक्षणपरिणामप्रतिबद्धा तत्रापि च प्रतिबन्धसम्भ-वात् कथन्तदनुमानमपीत्याह। **योग्यतायास्त्वि**त्यादि। **द्रव्यान्तरानपेक्षत्वात्** सन्निहि[4]तकारणकलापव्यतिरेकेण कारणान्तरानपेक्षत्वान्न **विरुध्यतेऽनुमानं**।

तदेवानुमानमाह। **उत्तरोत्तरे**त्यादि। पूर्वपूर्वक्षणमुपादायोत्तरसमर्थक्षणोत्पाद **उत्तरोत्तरशक्तिपरिणामः**। तेन हेतुभूतेन **कार्योत्पादनसमर्थे**ति साध्यनिर्देशः। **इयं** कारणसामग्रीति धर्मी। **शक्तिपरिणामप्रत्ययस्यान्यस्यापेक्षणीयस्याभावा-दिति** हेतुः[5] शक्तेः परिणामस्य योऽपरः सहकारिप्रत्ययस्तस्यापेक्षणीयस्याभावात्।

**णीत्युच्यते ॥**

**या तर्हीयं अकार्यकारणभूतेनान्येन रसादिना रूपादिगतिः, एवं चेत् (सापि)—**

> **एकसामग्र्यधीनस्य रूपादेरसतो गतिः ।**
> **हेतु(धर्मा)नुमानेन धूमेन्धनविकार(वत्) ॥११॥**

---

कुतस्तर्हि शक्तेः प्रसव इत्याह । **पूर्वे**त्यादि । **पूर्वसजातिः** सदृशः पूर्वः कारणकलापस्तावन्**मात्रं हेतु**र्यस्याः **शक्तिप्रसूतेः** सा तथा । तद्भावस्तस्मात् । अतः कारणात् सा योग्यतानन्यापेक्षिणीत्युच्यते ॥

ननु कार्यं प्रति कारणस्य योग्यता यदि शक्तिरुच्यते तदा का[6]र्यव्यभिचारे योग्यताया अपि व्यभिचार इति कथमेतदनुमानं। अथ योग्यतासम्भव उच्यते तदायमर्थः स्यात् कार्यं स्याद्वा न वेति। तथापि कथमस्यानुमानं सन्देहादिति।

अत्रोच्यते। परेण हि कथमेतदनुमानन्त्रिविधहेतुजन्यमिति चोद्यते। यद्येतदनुमानम्परेण समर्थ्यते तदा त्रिविधलिङ्गजमेवेत्या चा र्ये ण प्रतिपाद्यते। न त्वेतत्परमा[7]र्थतानुमानमित्येवम्परमेतदित्येके। अथवा यद्येकान्तेन कार्योत्पादनयोग्यतानुमीयते। तदा व्यभिचारादनुमानं न स्यात्। यदा तु कदाचित् कार्यं स्यादित्येवंरूपः सम्भवोनुमीयते तदा कथमस्य व्यभिचारः। तेनायमर्थ उत्तरोत्तरपरिणामे यदि प्रबन्धाभावस्तदा कार्यं स्यादन्यदा तु नास्तीति। परोक्ते त्वेकान्तेनकार्यानुमाने व्यभिचार एव।

अन्ये तु परि[1]णामवत्यां सामग्र्यां प्रतिबन्धकाभावे सत्येकान्तेन कार्योत्पादनयोग्यता भवतीति सैवानुमीयते। कार्योत्पादनयोग्यताप्रतीतिश्च कार्यमपि विशेषणत्वेनाक्षिपतीति न पृथक् कार्यानुमानं क्रियत इति मन्यन्ते। केवलं सामग्रीमात्रात् कार्यानुमाने व्यभिचार उच्यते प्रतिबन्धकाभावः कथम्प्रतिपन्न इति चेत् (।) सत्यं। यो हि तं ज्ञातुं शक्नोति तस्यैतदनु[2]मानं यो हि धूमस्याग्निजन्यत्वं ज्ञातुं शक्नोति तस्य धूमादग्न्यनुमानं नान्यस्य तद्वत्।

**या तर्ही**त्यादिना पुनरपि त्रिधैव स इत्यस्य व्याघातमाह। **अकार्यकारणभूतेन** । अनुमेयादर्था**दन्येना**स्वभावेन **रसादिना**। आदिशब्दाद् गन्धादि**ना रूपादिगतिः**। अत्राप्यादिशब्दात् स्पर्शादिग्रहणं। अन्धकारे हि मातुलुङ्गादिरसमास्वाद्य। चम्पकगन्धमाघ्राय। व[3]ह्नेश्च स्पर्शमनुभूय। तेषां रूपसामान्यमनुमीयते **तथा** वह्निरूपं दृष्ट्वा तत्स्पर्शः। सा कथन्त्रिविधे हेतावन्तर्भवतीति प्रकृते।

न चाप्रमाणमियन्ततो लिङ्गान्तरप्रसंग इत्याह। **सापीत्यादि**। सापि गतिरिति सम्बन्धः। **रूपादेः** किम्विशिष्ट**स्यैकसामग्र्यधीनस्य**। रसस्य जनिका या सामग्री तस्यामेव सामग्र्यामायत्तस्य **रसतो** लिङ्गाद्या **गतिः** (।) सा हे[4]तुधर्मानुमानेन। रसस्य यो **हेतुः** पूर्वमपादानन्तस्य यो **धर्मो** रूपजनकत्वन्तस्या**नुमानेन।** तेनायमर्थो रसात् सकशात् तद्धेतोररससमानकालभावि रूपजनकत्वन्निश्चीयते। एवं हि तस्य रससमानकालभावि रूपजनकत्वं निश्चीयते। यदि समानकालभाविनो रूपस्यापि निश्चयः स्यात्तेनातीतैककालानामेकैव गतिः कार्यलिङ्गजा[5]।

नन्वनभिहिताद् रसहेतोः सकाशात् पश्चात्समानकालस्य रुपस्यानुमानं हेतोः कार्यानुमाने व्यभिचारात्। कार्योत्पादनयोग्यतानुमाने च न रससमानकालस्य रूपस्यानुमानं स्यात्। अनुमितानुमानप्रतीतेरभावाच्च। तेन यदुच्यते (।) यदातीतानां गतिस्तदा कार्यश्च तल्लिङ्गश्च (।) तस्माज्जातेति कार्यलिङ्गजा(।) यदा तु समान**कालानाङ्ग**तिस्तदा का[6]र्यं लिङ्गं यस्य हेतुधर्मानुमानस्य तत्कार्यंलिङ्गन्तस्माज्जाता कार्यलिङ्गजेति तदपास्तं। [तत्र परे मा. . .] चावयविद्रव्ये रूपादयो गुणा व्यवस्थितास्तेन तत्र रूपादेरसतो गतिर्युक्ता। न **बौद्धानां** रूपादिव्यतिरेकेणावयविनोऽनभ्युपगमात् न धर्मिणोऽभावात्। धर्मिणमन्तरेण चानुमाने 19a रसतो रूपादेः सर्वत्रानुमानप्रसङ्गात्।[7] असमुदायश्च साध्यः स्यात्। अपक्षधर्मश्च हेतुः स्यात्। नापि हेतुधर्मानुमानं युज्यते रूपादिकार्यत्वेन रसादेरप्रतिपन्नत्वात्। न च क्षणिकपक्षमनिश्चित्यैवमुच्यते। क्षणिकत्वे हि रूपादेः समानजातीयकार्यत्वं स्यान्न रसादिकार्यत्वं प्रतिबन्धग्राहकाभावात्। न क्षणानामनुमानानुमेयव्यवहारः सम्बन्धानिश्चयात्। सन्तानाश्रयेण त्वनुमानादिव्यवहारे रूपादिसन्ता[1]नानां न परस्परं कार्यकारणभावः प्रतिपन्न इति कथमनुमानानुमेयव्यवहार इति।

एवम्मन्यते (।) न सर्वत्ररसादे रूपाद्यनुमानमपि त्वाम्रादौ धर्मिणि। तत्र च रूपादीनां परस्पराविनिर्भागभाग (?)नियमः प्रतीयत एव (।) स च प्रतिबन्धहेतुकोऽन्यथा घटपटादीनामपि परस्पराविनिर्भागनियमः स्यात्। प्रतिबन्धश्च तेषां न तादात्म्यं[2] भेदेन प्रतीतेर्(।)नापि तदुत्पत्तिः समानकालत्वात्। न चैकार्थसमवायस्तेषां यतो न तावदसमवेतानां समवायबलादेकार्थसमवायः समवायस्यैवाभावात्। अतिप्रसङ्गाच्च। समवेतानामपि किं समवायेन स्वहेतुभ्य एव तथा निष्पत्तेः। तथा निष्पत्त्यैव वाच्याभिधानाद् गमकत्वम्(।)तस्मादेकसामग्र्यधीनत्वं प्रतिबन्धः। निश्चितप्रतिबन्धस्य चान्य[3]स्मिन् कालेनुमानं। यद्यपि चात्रावयवी न विद्यते तथाप्याम्रादिप्रत्ययविषयस्य धर्मित्वन्तेन तत्र रसतो रूपादिगतिः।

**ननु तथापि कथमेषामेकसामग्र्यधीनत्वं। यतो यै(?येनै)व स्वभावेन रूपं**

रूपं जनयति न तेनैव रसादिकं जनयति तेषां परस्पराभेदप्रसंगात्। नाप्यन्येनान्यं जनयति तस्य स्वभावभेदप्रसंगात्।

नैष दोषो यस्मात्। न तत्र रूपस्य पूर्व्वमेक[4]कार्यजनकत्वं येनायन्दोषः स्यात्। किन्त्वेककालमनेककार्यजनकत्वमेव। ततस्तस्यैवोत्पत्तिदर्शनात्। न च कारणस्य कार्यभाव एव कारणत्वं येनानेकमेकस्मादुत्पद्यमानमेकं प्रसज्येत किन्तु कार्योत्पत्तौ प्राग्भाव एव तस्य कारणत्वं लोके। यथा चैककार्योत्पत्तौ तस्य प्राग्भावकारणत्वन्तथा कलापोत्पत्तावपि[5] दृष्टत्वात्। यद्वा येनैव स्वभावेन रूपं रूपं जनयति तेनैव रसादिकमपि स्वरूपभेदस्त्वेषामुपादानभेदकृतो न सहकारिकृतः। तथा हि वायौ स्पर्शसद्भावेपि रूपाद्यभावाद् रूपाद्यनुत्पत्तिः। अग्नौ च रूपादिसद्भावेपि रसाभावाद् रसानुत्पत्तिः। अप्सु रसादिभावेपि गन्धाभावाद् गन्धानुत्पत्तिस्तेन रसादेर्नियतं का[6]रणं रसादिरेवावसीयते। नियतं च कारणमुपादानकारणं समानजातीयमभिन्नसन्तानवर्त्ति वा। तस्मादुपादानकारणभेदाद् रूपादीनां स्वभावभेदः।

यत्पुनरुच्यते। तत्रानेकशक्तीनां समुच्चयः। तेन रूपमेकया शक्त्या रूपं जनयत्यन्यान्यया रसादिकमिति।

तदयुक्तम् (।) अनेकशक्तिद्वारेणाप्ये[7]कस्यानेककार्यकारणाभ्युपगमेऽनेकत्वप्रसङ्गोऽनिवारित एव भावस्यानेकशक्तीनामेवानेकस्वभावत्वात्। अभिन्नत्वाच्च शक्तीनां शक्तिभेदे रूपस्य भेदप्रसङ्गः। भेदे वा शक्तीनां रूपस्याकारकत्वप्रसङ्गात्। न च शक्तियोगात् कारकत्वमशक्तस्य शक्तियोगाभावात्। शक्तस्यापि किं शक्तियोगेन स्वरूपेणै[1]व कारकत्वाच्छक्तेश्च कारकत्वं न स्याच्छक्तियोगाभावात्। अथ शक्तित्वान्न सा शक्तिमपेक्षते (।) भावोपि तर्हि श(f)क्तत्वात् किमिति शक्तिमपेक्षते। 19b

योपि मीमांसको मन्यते। भावस्य स्वरूपातिशय एव **शक्तिः** सा च भिन्नाभिन्ना। यतो भावे गृह्यमाणे शक्तिर्न गृह्यतेऽतो भावाद् भिन्ना। कार्यान्यथानुपपत्त्या तु सा भावस्याभिन्नाऽन्यथा भाव[2]स्य कारकत्वन्न स्यात्। तदुक्तं (।)

"शक्तयः सर्वभावानां कार्यार्थापत्तिकल्पिता" इति (।)

सोपि निरस्तः। एकस्याः शक्तेर्भिन्नाभिन्नरूपत्वविरोधात्। किं चार्थापत्त्या कार्यात् प्राग्भाविन एव भावस्याभिन्ना शक्तिः कल्प्यतां इति प्राग्भाव एव शक्तिः (।) स च प्रत्यक्षसिद्ध इति कथं न शक्तिः प्रत्यक्षा। केवलं सा कार्यदर्शनान्निश्चीयते। तस्मात् कार्याद् रसादेः कारण[3]धर्मानुमानाद् अस्य कार्यहेतावन्तर्भावः। **धूमेन्धनविकारवदिति**। यथा धूमादग्न्यादिसामग्र्यनुमितौ भस्मा-

**तत्र हेतुरेव तथाभूतोऽनुमीयते। तस्य हेतुः। तथा हि**

**शक्तिप्रवृत्त्या न विना रसः सैवान्यकारणम्।**
**इत्यती(तैककालानां गतिस्तत्) कार्यलिङ्गजा ॥१२॥**

**प्रवृत्तशक्तिरूपोपादान[2]कारणस्य सहकारिप्रत्ययो रसं जनयति। इन्धनविकारविशेषोपादानहेतुसहकारिप्रत्ययः सन् धूमजननतुल्यवत्। तथा हि शक्तिप्रवृत्तम्। स्वकारणस्य फलो[3]त्पादनाभिमुख्येन विना न रस(उत्पद्यते)। सैवान्यकारणम्। रूपोपादानहेतूनां प्रवृत्तिकारणम्। रसोपादानकारणप्रवृत्तिरपि रसोपादानकारणप्रवृत्तेः सहकारिणी[4]। तस्मात् यथाभूताद्धेतोरुत्पन्नस्तथाभूतमनुमापयन् रूपमनुमापयति।**

---

ङ्गारादीन्धनविकारानुमितिः तद्वत् ॥

ननु च रसकार्येणानुमितात् कारणात् सकाशात् समानकालिनः कार्यस्यानुमानमिदं न तु हेतुधर्मानुमानमित्यत आह। **तत्रेति** (।) रसाद् रूपे प्रतिपत्तौ **हेतुरेव तथाभूत** इति रूपजननसम्बन्धो**नुमी[4]यते** (।) यस्मिन्ननुमीयमाने कार्यान्तरमपि तद्विशेषणन्निश्चितम्भवति। न त्वनुमितात् कारणात् पश्चात् कार्यान्तरमनुमेयं। कुत इत्याह। **हि** यस्मात्। प्रवृत्ता न प्रतिबद्धा शक्तिर्यस्य तत् **प्रवृत्तशक्ति**। तथाभूतं च **तद्रूपोपादानकारणं** चेति तथोक्तं। तस्य **सहकारिप्रत्ययः** सन्। रसहेतू **रसं जनयति**। तथाभूते च हेतावनुमितेर्थाद् रूपानुमानं रू[5]परसयोरेकसामग्र्यधीनत्वात्। **इन्धनविकारविशेषो** भस्माङ्गारादिः। तस्योपा**दानं** काष्ठं तस्य **सहकारिप्रत्ययो**ग्निः। तस्य यथा **धूमजनन**न्तेन **तुल्य**त्त**द्वद्** रूपरसयोरेकसामग्र्यधीनत्वं।

**तथा ही**त्यादिना समर्थयते **शक्तिप्रवृत्ते**ति सूत्रं।[1] अस्य व्याख्यानं **स्वकारणस्ये**त्यादि। **स्वकारणस्येति** रसस्य यत् स्वकारणन्तस्य **फलोत्पादनं** प्रतीतिर[6]सोत्पादनं प्रत्याभि**मुख्येना**नुगुण्येन **विना न रस उत्पद्यते**। **सैवेति** शक्तिप्रवृत्तः। **अन्यकारण**मित्यस्य व्याख्यानं **रूपोपादाने**त्यादि। **रूपस्य य उपादानहेतवः** पूर्वलक्षणसङ्गृहीता रूपपरमाणवस्ते**षां** रूपजननम्प्रत्याभिमुख्यं **प्रवृत्तिस्तस्याः कारणं**।

20b रसहेतुनैव सहकारिणा रूपोपादानस्य स्वकार्यं प्रत्याभिमुख्यात्। सापि **र[7]सोपादानकारणप्रवृत्ती रूपोपादानकारणस्य** रूपजननम्प्रति या **प्रवृत्तिस्तया** सह कर्त्तुं शीलं यस्या **रसोपादानकारणप्रवृत्तेः** सा तथोक्ता। यत एव**न्तस्माद् यथाभूताद्धेतो**रिति प्रवृत्तशक्तिरूपोपादानकारणसहितात् पूर्वक्षणसंगृहीताद् रसा-

---

[1] Pramāṇa-Samuccaya.

**इति तत्रापि अतीतानामेककालानांच गतिः नानागतानां, व्यभिचा[5]रात् । तस्मादियमपि कार्यलिङ्गजा । तेन नान्यो हेतुर्गमकः । अप्रतिबद्धस्वभावस्याविनाभावनियमाभावात् ।**

---

लिङ्गत्वेनाभिमतो रस उत्पन्नस्तथाभूतमेव हेतुम**नुमापयन्** गमयन् समानका[1]लं रूपं गमयति। तेनायमर्थो हेतुनिश्चय एवेदृशो नान्यः।

न पुनरनुमितात् कारणात् पश्चात् कार्यानुमानं। यतश्च कार्यजनकत्वेनैव हेतुधर्मनिश्चयो नान्यथा तेनैवाह। **इति तत्रापी**त्यादि। इति अनेन द्वारेण। तत्रापि रसादे रूपाद्यनुमानेऽ**तीतानामेककालानां च गतिः**। रसोपादानसमानकालभाविनोऽतीताः। लिङ्गभूतरससहभा[2]विन एककालास्तेषाङ्गतिः। **नाऽनागतानाम्**वर्त्तमानेन लिंगेनानुमानं **व्यभिचारात्**। अनागतं हि कारणान्तरप्रतिबद्धन्तत्र प्रतिबन्धवैकल्यसम्भवान्न भवेदपि। यच्चाद्योदयात् श्वः सूर्योदयाद्यनुमानन्न तदनुमानं नियामकलिङ्गाभावात्। अद्य गर्दभदर्शनात् श्वः सूर्योदयानुमानवत्। **तस्मादियमपि** रसादे रूपादिगतिः **कार्य**[3]**लिङ्गजे**त्यनुमानं। यतश्च साध्यायत्तत्वेन **हेतुर्गमकस्तेन** कारणेन त्रिविधाद्धेतो**र्नान्यो हेतुः** संयोग्यादिर्ग**म**कोऽस्ति। कस्मात्तादात्म्यतदुत्पत्तिभ्यां लिङ्गिन्य**प्रतिबद्धस्वभावस्याविनाभावनियमाभावात्**।

एतदुक्तम्भवति। न तावदश्लिष्टानां संयोगोस्ति। श्लिष्टानामपि किं **संयोगेन स्वहेतुभ्यः** एव श्लिष्टानामुत्पत्तेः। तस्मान्न संयोगवशाद् ग[4]मकत्वम**प्रतिबद्ध**त्वात्। घटघटयोरिव। तथा पृथक्सिद्धानान्न समवायः। अपृथक्सिद्धानामपि किं समवायेन स्वहेतुभ्य एवोपर्युपरिभावेन निष्पत्तेस्तेन न समवायेनापि **गमकत्वं** (।) साध्यायत्तत्वाभावान्न च समवायोस्तीति वक्ष्यति। अत **एवैकार्थसमवायि**नोरभाव इति पूर्वमेवोक्तं रसाद्यनुमाने। विरोधी चानुपलब्धावन्तर्भावि[5]तः।

यच्च नै या यि कोक्तं "**पूर्ववच्छेषवत्सामान्यतो दृष्टं चानुमानं**" [न्यायसूत्रं १।१।५]। तत्र पूर्ववत् कारणात् कार्यानुमानं। तच्च व्यभिचारीति प्रतिपादितं। शेषवदनुमानं च कार्यात् कारणानुमानं तदिष्टमेव शास्त्रकृता। सामान्यतो दृष्टन्त्वनुमानं यदन्यत्र धर्मिणि साध्यसाधनयोर्व्याप्तिन्दृष्ट्वान्यत्रानुमानं। यथा देवदत्तस्य देशान्तरप्राप्तिं गतिपूर्विकां दृष्ट्वा[6]ऽदित्यस्यापि देशान्तरप्राप्त्या गत्यनुमानं। **एतदपि कार्यलिङ्गजमेव**। देशान्तरप्राप्तेर्गतिकार्यत्वात्। सर्वमेवानुमानं सामान्यतो दृष्टमेवेति स्वयमेवा चा र्यस्तृतीये परिच्छेदे वक्ष्यति।

यदप्यु द्यो त क रे ण[1] सामान्यतो दृष्टमुदाहृतं (।) यथा बलाकातस्तो-

---

[1] Nyāyavārtika 1 : 5.

**एतेन पिपीलिकोत्सरणमत्स्योद्वर्त्तनादिना[6] वर्षाद्यनुमानमप्युक्तम् । तत्रापि वर्षहेतुरेव भूतपरिणामः पिपीलकादिव्यभिचारादेहेंतुः ।।**

**हेतुना (त्व)समग्रेण यत् कार्यमनुमीयते ।**
**तच्छेषवदसामर्थ्याद् देहाद् रागानुमानवत् ।।१३।।**

---

यानुमानन्तदपि कार्यलिङ्गजमेवेति [प्र मा ण] वि नि श्च ये ऽभिहितं ।

20b **तस्माद्धेतुत्रयव्यतिरेके[7]ण नान्यो हेतुर्गमकोस्तीति** स्थितं ।

**एतेने**ति रसादे रूपाद्यनुमानस्य कार्यलिङ्गजत्वकथनेन । **पिपीलिकोत्सरण**न्तासां गृहीताण्डानामन्यत्र सञ्चरणं । **मत्स्याना**मुद्वर्त्तनम्मत्स्यविकारः । **आदि**शब्दाद् विद्युद्विकासमण्डूकरुतादिपरिग्रहः । **वर्षाद्यनुमानमित्यत्रापि** आदिशब्दाद् वाताद्यनुमान**मुक्तं**। यथा तदपि कार्यलिङ्गजहेतुधर्मानुमानात् ।

एतदेवाह ।[1] **तत्रापी**त्यादि । तत्रापि पिपीलिकोत्सरणादौ । भूतपरिणाम एव वर्षहेतुरिति । एवकारो भिन्नक्रमः । **वर्षहेतुरेव भूतपरिणामः** । पिपीलिकासंक्षोभादेरुत्सरणादिलक्षणस्य हेतुः । तस्माद् यथाभूताद् भूतपरिणामाद् वर्षहेतुः **पिपीलिकादी**नाम्विकारो जातः । तथाभूतस्य हेतोरनुमानात् समानकालवर्षाद्यनुमान । अन्यत्र तु योग्यतानुमी[4]यते न तु वर्ष एव प्रतिबन्धसम्भवेन **व्यभिचा**रात् । तस्मात् समग्रादपि कारणकलापान्नास्ति कार्यानुमानं केवलं योग्यतानुमानमेव ।।

ये तु मी मां स का दयोऽसमग्रादपि कारणात् कार्यमनुमिमते । तेऽत्यन्तन्यायबहिष्कृता इत्येतद् दर्शयन्नाह (।)

**हेतुना त्वसमग्रेणेत्यादि** । असमग्रेणेति विकलेन । **शेषवदनु**मानमनैकान्तिकमित्यर्थः । कुतो[3]सामर्थ्यात् । अस्य व्याख्यानं **समग्राण्येव** हीत्यादि । कार्यस्य तावत् सर्वथा नानुमानं । **योग्यतामप्यनुमापयन्ति** समग्राण्येवानुमापयन्तीत्येतदपिशब्देनाह। **असमग्रस्यैकान्तेनासामर्थ्यादि**त्यु(त्त)रोत्तरपरिणामेनाप्यसामर्थ्यान्न पाक्षिकमपि कार्यानुमानं । **देहाद् रागानुमानवद्** इत्यस्योदाहरणस्य व्याख्यानं । **यथे**त्यादि । **देहश्चेन्द्रियाणि च बुद्धय[4]श्चे**ति द्वन्द्वः । रागादिमानयं पुरुषो देहवत्त्वादिन्द्रियवत्त्वात् बुद्धि**मत्त्वात्** । एवन्देहादिभ्यो **रागाद्यनुमानं** । आदिशब्दाद् द्वेषमोहादिपरिग्रहः । **सूत्रे** तु देहरागग्रहणमुपलक्षणं । न हीन्द्रियाद्येव कारणं रागादेः । यस्मा**दात्मात्मीयाभिनिवेशपूर्वका रागादयः** । आत्मन्यात्मीये चाहम्ममेति योभिनिवेशः स पूर्वः कारणं येषां रागा[5]दीनान्तेन तथोक्ताः । **अयोनिश** इत्याद्यस्यैव **समर्थनं** । योनिः पदार्थानामनित्यदुःखानात्मादि । सम्यग्दर्शनप्रसूतिहेतुत्वात् । तं शंसत्यालम्बत इति

**समग्राण्येव हि हेतवो योग्यतामनुमापयन्ति, असमग्रस्यैकान्त्येनासामर्थ्याद्।** 425a
**यथा देहेन्द्रियबुद्धिमत्त्वाद् रागाद्यनु**[1]**मानम्। आत्मात्मीयाभिनिवेशपूर्वका रागादयः, अयोनिशोमनस्कारपूर्वकत्वात् सर्वदोषोत्पत्तेः।**

**देहादीनां हेतुत्वेऽपि असामर्थ्यात् केवलानां विपक्षे वृत्त्यदृष्टावपि शेषवदनुमानात् संशयो भवति। तथा—**

**विपक्षेऽदृष्टिमात्रेण कार्यसामान्यदर्शनात्।**
**हेतुज्ञानं प्रमाणाभं वचनाद् रागितादिवत् ॥१४॥**

**न हि चलनवचनाद्येव रागादिकार्यं, वक्तुकामताहेतुकत्वात्। सैव राग इति चेत्।**[1] **इष्टत्वान्न किञ्चिद् बाधितम्। रागं हि नित्यसुखात्मात्मीयदर्शना-**

---

योनिशः। योनिं योनिं मनस्करोतीति "संख्यैकवचनाच्च वीप्सायां"[1] मिति शस् प्रत्ययो वा। तथाभूतश्चासौ मनस्कारश्चेति योनिशोमनस्कारो नैरात्म्यज्ञानं। तद्विरुद्धमात्मादिज्ञानम**योनि**[6]**शोमनस्कार**स्तत्**पूर्वकत्वात् सर्व**रागादि**दोषोत्पत्तेः**॥

ननु देहेन्द्रियबुद्धयोपि रागादिना हेतवस्तद्रहितेषु रागाद्यदर्शनादित्याह। **देहादीनां हेतुत्वेपीति केवलाना**मित्ययोनिशोमनस्काररहितानां। रागादौ साध्ये। रागादिरहिता उपलखण्डादयो **विपक्ष**स्तत्र हेतुर्देहादिमत्त्वस्य या **वृत्ति**स्तस्या[7] **अदृष्टावपि**। विपर्यये बाधकप्रमाणाभावाच्**छेषवदनुमान**मस्माच्च **संशयो भवति** 21a न निश्चयः। यथा चैतदनन्तरोक्तं न प्रमाणन्**तथा विपक्षे** हेतोर्**दृष्टिमात्रेण कार्यसामान्यस्य** कार्यमात्रस्य **दर्शनात्। हेतुज्ञान**म्विशिष्टकारणानुमानं **प्रमाणाभं** प्रमाणाभासमनैकान्तिकमिति यावत्। किमिव (।) **वचनाद्रागितादिवत्।**

ननु सर्वमेव वचनं[1] **रागादिकार्य**मिति कथन्तत्कार्यसामान्यमित्यत आह। **न ही**त्यादि। ओष्ठयोश्**चलनं** स्पन्दो **वचन**काले च तस्यावश्यंभावात्। **आदि**-शब्दाद् अन्यस्यापि वचनकालभाविनो मुखविकारादेर्ग्रहणं। अविशिष्टविवक्षामात्रं वक्तुकामता सामान्यन्तदेव **हेतुर्**येषां स्पन्दादीनान्ते तथोक्तास्तद्भावस्तस्मात्। **सैव** वक्तुकामता **राग इति चेत्**। आसक्तिरूपत्वाद् रागस्येति म[2]न्यते। आ चा र्य आह। **इष्टत्वान्न किंचिद् बाधितं**। वक्तुकामता कार्यस्य वचनस्येष्टत्वान्न किञ्चिद् अनिष्टं। न च वक्तुकामता रागः(,अ)पि तु **नित्यसुखात्मात्मीयाकारं यद्दर्शन-**

---

[1] Pāṇini 5:4:43.

**भिनेवेशाक्षिप्तं सास्रवधर्मविषयमाहुः।**

**नैवं करुणादयः। अन्यथाऽपि सम्भवात् इति निवेदयिष्यामः। यथा रक्तो ब्रवीति तथा विरक्तोऽपि। एवं न वचनमात्रात् नापि विशेषाद् प्रतिपत्तिः। अभिप्रायस्य दुर्बोधत्वात्। व्यवहारसंकरेण सर्वेषां व्यभिचारात्। प्रयोजनाभावेऽवचनमिति चेत्। न। परार्थत्वात्।**

425b **न युक्तो वीतरागत्वादिति चेत्। न। करुणयाऽपि प्रवृत्तेः।[7] सैव करुणा राग इति चेत्। इष्टम्। अविपर्यासोद्भवत्वात् अदोषः। करुणा असत्यप्यात्म-**

---

**माभिनिवेशस्तेनाक्षिप्तं** जनितं। **सास्रवधर्मविषयमिति** पञ्चोपादानस्कन्धालम्बनं चेतसोभिष्वङ्गं **रागमाहु**र्विद्वांसः।

स्यान्मतं (।) वीतरागाभिमतानां मैत्रीकरुणादय इष्यन्ते। ते च सत्वा[3]-लम्बनत्वाद् आत्मादिदर्शनप्रवृत्ताः सत्त्वानुनयप्रवृत्त्या चाभिष्वङ्गस्वभावास्ततो वीतरागा अपि रागिणः प्रसक्ता इत्यत आह। **नैवं करुणादय** इति (।) न सत्त्वालम्बना वीतरागाणां करुणादयः। **अन्यथापि सम्भवात्।** (धर्मालम्बनानामपि सम्भवात्)[1] एतच्चानन्तरमेव **निवेदयिष्यामः।** अत्र वचनाद् रागानुमाने क्रियमाणे वचनमात्रादप्रतिपत्तिरित्यनेन सम्बन्धः। यस्माद् **यथा र[1]क्तो ब्रवीति तथा विरक्तोपी**ति प्रक्षीणरागोपि। **न वचनमात्राद्** रागानुमानं किन्तर्हि वचनविशेषात्। यो रागेणैव जन्यत इत्याह। **नापि विशेषा**दिति। किङ्कारणम् (।) **अभिप्रायस्य दुर्बोधत्वात्।** विरक्तो हि रक्तवच्चेष्टते। रक्तोपि विरक्तवदित्यभिप्रायो दुर्बोधः। ततश्च **व्यवहारसं[1]करेण सर्वेषा**मिति वचनानां। वचनमात्रस्य वचनविशेषस्य च रा[5]गादेर्लिङ्गत्वेनोपनीतस्य **व्यभिचारात्।** न विशेषादपि रागाद्यनुमानं। यदुक्तन्तथा विरक्तो ब्रवीतीति तत्रोत्तरमाशंकते। **प्रयोजने**त्यादि। वचनोच्चारणं व्यवहारः। न हि वीतरागस्य वचनोच्चारणे फलमस्ति तथा चाव्यभिचारो रागवचनयोरिति भावः। नेत्या चा र्यः। **न** प्रयोजनाभावः **परार्थत्वाद्** व्याहारस्य।

**न युक्त** इत्यादिपरः।[6] वीतरागो हि परेष्टव्यासक्तो न च सक्तिमन्तरेण परार्थप्रवृत्तिरस्तीति भावः। नैतदेवं। **करुणयापि प्रवृत्तेः। सैव करुणा राग इति चेत्।** तदेत**दिष्टं** करुणा राग इति नामकरणं। सत्त्वदर्शन**विपर्यासायातत्वात्** करुणापि रागात्मको **दोष** इति चेदाह। **अविपर्यासे**त्यादि। **अविपर्यासोद्भवत्व-**

21b मेवाह। **असत्यप्यात्म**ग्रहण इत्यादि। **दुःख[7]विशेषदर्शनमात्रेणे**ति संस्कारदुःखता-

---

[1] In the margin.

**ग्रहणे दुःखविशेषदर्शनमात्रेण अभ्यासबलोत्पादिता। तथा हि मैत्र्यादयः**[1] **सत्त्वधर्मालम्बना इष्यन्ते। एताश्च सजातीयाभ्यासवृत्तयो न रागापेक्षिण्यः। नैवं रागादयः। विपर्यासाभावेऽभावात्।**[2] **कारुणिकस्य निष्फल आरम्भोऽविपर्यासादिति चेत्। न। परार्थस्यैव फलत्वेनेष्टत्वात्। इच्छया हि फललक्षणत्वम्।**

**सर्वथाऽभूतासमारोपाद्**[3] **निर्दोषः। तदन्येन वीतरागस्य दोषवत्त्वसाधने न किञ्चिदनिष्टम्।**

---

निरूपणमात्रेण। **अभ्यासबलोत्पादितेति** पूर्वपूर्वसजातीयक्षणोत्पन्ना भवत्येव करुणा। आगमेनापि संस्यन्दयन्नाह। **तथा ही**त्यादि। आदिशब्दाद् अनालम्बना गृह्यन्ते। **सत्त्वालम्बना** पृथग्जनानां। **धर्मालम्बना** आर्याणां। अनालम्बना ग्राह्यग्राहकाभिनिवेशविगतानां बुद्धबोधिसत्त्वानां। **मैत्र्यादयो** मैत्रीकरुणामुदितो[1]पेक्षा **इष्यन्ते** सिद्धान्ते।

ननु च सत्त्वालम्बना एव पृथग्जनेनाभ्यस्तास्तास्तत्कथं धर्माद्यालम्बना उच्यन्त इत्यत आह।

**एताश्च** मैत्रीकरुणामुदितोपेक्षाः। **सजातीयाभ्यासवृत्तयः** पूर्वपूर्वसदृशक्षणबलेनोत्पत्तेः। एतावांस्तु विशेषो यावत् सत्त्वम्पश्यति तावत्सत्त्वालम्बनाः। यावद्धर्मन्तावद् धर्मालम्बनाः। **न रागापेक्षिण्य** इति नानुशयेन सत्त्वेषु प्रवर्त्तन्त[2] इत्यर्थः।

ननु दुःखविशेषदर्शनमात्रेणाभ्यासबलोत्पादिनीत्यनन्तरमेवायमर्थ उक्तः।

सत्यं। करुणामेवाश्रित्याधुना सर्वाण्येवेति विशेषः। आत्मदर्शननिवृत्तावपि तर्हि करुणावदभ्यासाद् रागादयः प्रवर्त्तन्त इत्याह। **नैवं रागादय**स्सजातीयाभ्यासवृत्तयो येनात्मदृष्टिनिवृत्तावपि प्रवर्त्तेरन्। आत्मादि**विपर्यासाभावेऽभावात्।**

**कारुणिकस्य निष्फ**[3]**लः** परार्थ **आरम्भोऽविपर्यासा**दात्माद्यभिनिवेशाभावेन स्वार्थस्यैवाभावात्। नायन्दोषः **परार्थस्यैव फलत्वेनेष्टत्वात्।** इष्टो नाम परार्थस्तथापि कथं फलत्वमिति चेत्। आह। **इच्छे**त्यादि। **इच्छया** लक्ष्यत इतीच्छालक्षणमिच्छाविषयत्वादित्यर्थः। यदिष्टन्तत्फलमिति यावत्।

नन्वहमिति बुद्धिरहितस्य कथं परार्थापि प्रवृत्तिरिति चेत् (।) न (।) अक्लिष्टा[4] ज्ञानसद्भावात् प्रवृत्तिरित्येके। योगबलेन शुद्धलौकिकचित्तसम्मुखीकरणादित्यपरे। विनेयानां तथा प्रतिभासनादित्यन्ये।

सर्वथेत्युपसंहारः। यदि वचनाद् वीतरागस्य वक्तुकामता साध्यते अथ करुणा तेन सराग इत्युच्यते। **सर्वथाऽभूतासमारोपाद्** वीतरागादि**र्निर्दोषः।** दोषस्वभावस्य रागादेरवश्यभावात्। **तदन्येन** रागादिभ्योन्येन वक्तु[5]कामतादिना **वीतरागस्य**

**वक्तर्यात्मनि रागादिदर्शनाद् अन्यत्र तदनुमाने हि अतिप्रसङ्गः। व्यभिचारात् अनन्यानुमाने**[4] **इहाव्यभिचार इति को निश्चयः? करणगुणवक्तुकामते वचनमनुमापयेत्। रागोत्पादनयोग्यतारहिते वचनादर्शनात्। तदनु**[5]**मानेऽप्यतिप्रसङ्ग इत्युक्तम्। रागस्यानुपयोगे हि कथं तच्छक्तिरुपयुज्यते। शक्त्युपयोगे हि स एवोपयुक्तः स्यादिति तन्नास्तीत्युक्तम्।**[6]

---

**दोषवत्त्वसाधने न किंचिद् अनिष्टं।**

स्यान्मतिः (।) वक्तर्यात्मनि रागादिर्दृष्टस्ततः सपक्षे सत्त्वदर्शनमात्रेण वीतरागाभिमतेष्वप्यनुमानम्भविष्यतीत्याह। **वक्तर्यात्मनी**त्यादि। **अन्यत्र तदनुमान** इति वीतरागाभिमते रागाद्यनुमाने**ऽतिप्रसंगः**। वक्तर्यात्मनि यावान् कश्चिद् विशेषो दृष्टस्तस्य सर्वस्यान्यत्रानुमानप्रसङ्गः।[6] आत्मनि दृष्टस्य श्यामगौरतादिलक्षणस्य विशेषस्य **व्यभिचारात्**। **अनन्यानुमान** इति रागादन्यस्यात्मगतस्य विशेषस्यानुमाने। **इहे**ति साध्याभिमते रागादावप्य**व्यभिचार इति को निश्चयः**। नैव कश्चित्। प्रतिबन्धाभावाद् रागवचनयोः। यस्मादात्मनिदर्शनान्नानुमानन्तस्मात् **करणगुणवक्तुकामते वचनमनुमापयेत्**।[7] करणगुणस्तात्वादीनाम्पाटवादिः स च वक्तुकामता चेति द्वन्द्वः। द्वितीयाद्विवचनमेवैतत्। **रागोत्पादनयोग्यतारहिते** पाषाणादौ **वचनादर्शनात्**। सैव वचनादवसीयत इत्याह। **रागे**त्यादि। **तदनुमान** इति योग्यतानुमाने**ऽतिप्रसंगः**। तथा हि यथा पाषाणादौ रागोत्पादनयोग्यताविरहस्तथा सर्वपुरुषधर्मैरपि ततस्तथाभूते वचनादर्श[1]नाद् यदि रागोत्पादनयोग्यतानुमानमेवं सर्वपुरुषधर्मस्य।

22a

**अथ** मतं (।) रागोत्पादनयोग्यता हि रागवचनयोरेकङ्कारणन्तदनुमाने च रागोप्यर्थतोनुमितो भवति तेन योग्यता एवानुमानं न सर्वेषां पुरुषधर्माणामित्यत्राह (।) **रागस्ये**त्यादि। **रागस्यानुपयोगे** वचनं प्रति ताल्वादिव्यापारादेव शब्दनिष्पतेः। **कथन्तच्छक्तिः** रागशक्ति(र्) वचनं[2]प्रत्यु**पयुज्यते**। अथ ताल्वादिव्यापारकाले रागशक्तेरपि वचनम्प्रत्युपयोग इष्यते (।) ततश्चाद्यवर्णनिष्पत्तिकाले रागस्यापि निष्पत्तिरेकसामग्र्यधीनत्वात् (।) तस्य च रागस्य सन्तानवाहित्वन्तथा च द्वितीयादिवर्णनिष्पतौ राग एवोपयुक्तस्स्यात्। तदाह (।) **शक्त्युपयोगे हि स एवोपयुक्तः स्यादि**ति। **न च** रागस्योपयोगोस्ती**त्युक्तं** प्राक्।

**अथ**वात्मात्मीयाभिनिवे[3]शरहितानां रागस्यानुपयोगे वचनंप्रति। **कथं तच्छक्ती** रागशक्तिर्वासनाख्यात्मात्मीयाभिनिवेशलक्षणा **वचनम्प्रत्युपयुज्यते**। वीत-

**तस्मादविनाभाव्येव कार्यं कारणमनुमापयति। तत्रायत्तत्वात्। नान्यद् विपक्षेऽदर्शनेऽपि। सर्वदर्शिनस्तु दर्शननिवृत्याऽभाव[7]निश्चयः। क्वचित् तथा दृष्टानां** 426a **पुनर् (देश)कालसंस्कारभेदेन अन्यथादर्शनात्। यथाऽऽमलक्यः क्षीरावसेके मधुरफला न चैवम्बहुलं दृश्यन्ते।[1] तेन एतद् युक्तं वक्तुं मादृशो वक्ता रागादि-**

---

रागाणामात्माद्यभिनिवेशस्याभावात्। शक्त्युपयोगे हि वचनं प्रति। स एव राग उपयुक्तः स्यादात्माद्यभिनिवेशवतां सर्वेषामेव रागित्वात्। तच्च रागस्य वचनंप्रत्युपयोगित्वन्नास्तीत्युक्तं। वक्तुकामता सामान्यहेतु[4]त्वादित्यत्रान्तरे।

**तस्मा**दित्यादि निगमनं नान्तरीयकमेवेति कारणे**नाविनाभाव्येव**। तत्प्रतिबन्धात्। **तत्र** कारणे **आयत्तत्वात्**। **नान्य**दप्रतिबद्धं **विपक्षे** हेतो**रदर्शनेपि**। अर्वाग्दर्शनस्यादर्शनमात्रेणानिश्चयात्। **सर्वदर्शिनस्तु दर्शननिवृत्त्या** स्या**न्निश्चयस्**तस्य हि सर्वज्ञेयव्यापि ज्ञानं। एतदेवाह। **सर्वदर्शन** इत्यादि। किम्पुनरदर्शनमात्रा[5]न्नाभावनिश्चय इत्याह। **क्वचित्तथे**त्यादि। तेन प्रकारेण **दृष्टानां** प्राक्। **पुनर्देशकालसंस्कारभेदेने**ति भेदशब्दस्य प्रत्येकं सम्बन्धः। संस्कारः क्षीरावसेकादिः। पूर्वदृष्टप्रकारादन्**यथा** स्यात्। किमिवेत्याह। **यथामलक्य** इति। संस्कारभेदस्यैतदुदाहरणन्न **चैवम्बहुल**मिति न मधुरफला बहुलन्**दृश्यन्ते**। कषायफलानां बाहुल्येन दर्शनात्। न चेदा[6]नीं बहुलं मधुरफलानामदर्शनात्। क्वचित्सम्भविनो मधुरफलस्य प्रतिक्षेपः। तथा देशभेदेन पिण्डखर्ज्जूरस्य सम्भवः। कालभेदेन पुष्पादेः। आमलकीदृष्टान्तेन चैतदाह। यथामलक्यः क्षीरादिसंस्कारादन्यथा भवन्ति। तथा रागादियोग्यश्चित्तसन्तानस्तत्त्वाभ्यासाभिसंस्काराद् योग्यो भवति। अभ्यासाच्च नैरात्म्यालम्बनमेव विज्ञानं स्प[7]ष्टाभम्वैरा- 22b राग्यमुच्यते। नैरात्म्यदर्शनादात्माद्यभिनिवेशविगमेन रागाद्यनुत्पत्तेः। सर्वधर्मक्षणिकत्वाद्यालम्बनं च ज्ञानं स्पष्टाभं **सर्वज्ञत्वं** चोच्यते। सर्वाज्ञानविगमात्। तस्मात् तत्त्वाभ्यासनिमित्ता स्फुटाभत्वबुद्धिरेव तत्त्वसाक्षात्करणेन प्रत्यक्षत्वकारिणी रागादियोग्यस्वभावतां ज्ञानस्य बाधते। ततश्चान्यथादृष्टमपि हेतुबलादन्यथा भवेदपि(।)तेन यदि नाम[1] रागारहिते क्वचिद् वचनं न दृष्टन्तावता सर्वत्र वीतरागे वचनेन न भाव्यमिति नास्ति निश्चयः। ततश्चानिश्चितव्यतिरेकाद् वचनमात्रान्न रागाद्यनुमानं। यत एवन्तेन कारणे**नैतद्युक्तम्वक्तुं मादृशो वक्ता**। योहमिवायोनिशोमनस्कारान्। तदेवाह। **रागोत्पत्ती**त्यादि। कः पुनरसावित्याह। **आत्मे**त्यादि। **आत्मदर्शनं** सत्कायदृष्टिः। नित्यसुखादिविपर्या[2]सोऽयोनिशोमनस्कारः। द्वन्द्वसमासश्चायं। आत्मदर्शनमेवायोनिशोमनस्कार इति विशेषण-

**मान् रागोत्पत्तिप्रत्ययविशेषेण युक्त आत्मदर्शनायोनिशोमनस्कारवत्त्वात्। तदा वक्ते (ति) अपार्थको वचनोदाहारः[2]। तस्माद् विपक्षेऽदृष्टिरहेतुः॥**

**न चादर्शनमात्रेण विपक्षेऽव्यभिचारिता।**
**संभाव्यव्यभिचा(र)त्वात्, स्थालीतंडुलपाकवत्॥१५॥**

**न हि बाहुल्येन[3] पक्वानां दर्शनेऽपि स्थाल्यन्तर्गतत्वेन केवलेन पाकः सिध्यति। व्यभिचारदर्शनात्। एवं एवंस्वभावसमानपाकहेतुकाः पक्वा इति युक्तम्। अन्यथा तु तदनु[4]मानं शेषवद्व्यभिचारि॥**

(क) शेषवदनुमाननिरासः

**किं पुनः शेषवदिति।**

**यस्यादर्शनमात्रेण व्यतिरेकः प्रदर्श्यते।**
**(तस्य) संशयहेतुत्वाच्छेषवत् तदुदाहृतम्॥१६॥**

---

समागो वा। **तदेति** मादृशो व**क्तेति** विशेषणेप्य**पार्थको वचनोदाहारः**। वचनादित्यस्य हेतोरुदाहरणमनर्थकमित्यर्थः। तदा हि यो मादृशो रागोत्पत्तिप्रत्ययविशेषेण युक्तः स रागी। यथाहमित्ययमेव हेतुः स्यात्। यत एवमदर्शनमात्रा[3]न्नास्ति निश्चयस्त**स्माद् विपक्षेऽदृष्टि**र्विपक्षे हेतोरदर्शनम**हेतु**र्लिङ्गस्य व्यतिरेकनिश्चयं प्रति॥

स्यान्मतिः(।)विपक्षदृष्टया हेतोर्व्यभिचारो न च वीतरागे वचनं दृष्टन्त-स्मादादर्शनात् साध्याभावे व्यतिरेकः सिद्ध इत्यत आह।

**न चादर्शनमात्रेणेति विपक्षे** हेतोर**व्यभिचारिता**। कस्मात् (।) **सम्भाव्य-व्यभिचारत्वात्**। सम्भाव्यो व्यभिचारो यस्य स तथा तद्भावस्तस्मात्[4]। यद्यपि न दृष्टो विपक्षे तथापि तत्र सम्भवो न विरुद्ध इति संम्भाव्यते व्यभिचारः। **स्थाल्यन्तर्गतास्तण्डुलाः स्थालीतण्डुलास्तेषां पाकवत्**।

एतमेव दृष्टान्तं समर्थयितुमाह। **न ही**त्यादि। **बाहुल्येन** स्थाल्यन्तर्गतानां **पक्वानान्दर्शनेपि न स्थाल्यन्तर्गतत्वेन केवलेन पाकः सिध्यति**। मात्रग्रहणन्तु विशेष-निरासार्थं। यद् वक्ष्यत्येवन्तु स्यादिति। कुतोऽ[5]सिद्धि**र्व्यभिचारस्य दर्शनात्। एवं-**स्वभावा इति ये पक्वा दृष्टास्तैस्तुल्यस्वभावाः। एतैरेव **पक्वैः समानः** पाकहेतुर्येषान्ते पक्वा इति। **अन्यथा** त्वित्यसत्यं तस्मिन् विशेषणे। **शेषो**स्तीति **शेषवद**निर्णीतो विषयोस्तीति यावत्। तच्च **व्यभिचारि**॥

किन्नैयायिकोक्तं कार्यात् कारणानुमानरूपं शेषवदनुमानमिहाभिप्रेतमुता-

**तस्य स व्यतिरेकोऽनिश्चित इति विपक्षेऽपि वृत्तिराशङ्क्येत। व्यतिरेकसिद्धचदर्शनमात्रस्य हि संशयहेतुत्वात्। न सर्वाऽनुपलब्धिरेव गमिका। तस्मादेकनिवृत्याऽन्यनिवृत्तिमिच्छता तयोः स्वभावप्रतिबन्धोऽपि कश्चिदेष्टव्यः। अन्यथाऽगमको हेतुः स्यात्॥**

(ख) त्रिरूपहेतुनिश्चयः

**हेतोस्त्रिष्वपि रूपे(षु) निश्चयस्तेन वर्णितः।**
**असिद्धविपरीतार्थव्यभिचारिविपक्षतः ॥१७॥**

426b

## ३—व्याप्तिचिन्ता

क. दिग्नागेष्टः प्रतिबंधः

**न ह्यसति प्रतिबन्धेऽन्वयव्यतिरेकनिश्चयोऽस्ति। तेन तमेव दर्शयन् निश्चय-**

---

न्यदेवेति पृच्छति। **किं**[6]**पुनरित्यादि**। शेषवत्स्वरूपमाह। **यस्येत्यादि**। **यस्य** हेतोर**दर्शनमात्रेण**ाप्रमाणकेन विपक्ष**व्यतिरेकः प्रसाध्यते**। **तस्य** हेतोः **संशयहेतुत्वात्** संशयकारित्वाच्छेषवत्तदनुमानमुदाहृतं। किङ्कारणन्तस्य हेतोः **स व्यतिरेकोऽनिश्चित इति विपक्षेपि वृत्तिराशंक्येत**। किंपुनर्न निश्चित इत्याह। **व्यतिरेकेत्यादि**। अनुपलम्भेपि कथं संश[7]य इत्याह। **न सर्वेत्यादि**। दृश्यानु**पलब्धिरेव न गमिका**। 23a यत एवन्नादर्शनमात्राद् व्यतिरेकस्त**स्मादेक**निवृत्त्या साध्यनिवृत्त्या**न्यनिवृ**त्तिसाधन**निवृत्तिमिच्छता तयोः** साध्यसाधनयोः **कश्चित्** स्वभावेन **प्रतिबन्ध**स्तादात्म्यतदुत्पत्तिलक्षणो**प्येष्टव्यः**। न केवलमदृष्टिमात्रं। **अन्यथा** प्रतिबन्धानिष्टाव**गमको हेतुः स्यात्**। व्याप्तेरनिश्चितत्वात्॥

यत एवन्**तेन** कारणेन **हे**[1]**तोस्त्रिष्वपि रूपेषु** पक्षधर्मान्वयव्यतिरेकेषु **निश्चयो वर्ण्णितः**। आचार्य दि ग्ना गे न प्र मा ण स मु च्च या दिषु। **असिद्धस्तु** द्वयोरपि साधनमित्यादिना। कस्य निरासेनेत्याह। **असिद्धेत्यादि**। **आद्यादित्वात्** तृतीयार्थे **तसि** विपक्षेणेत्यर्थः।

तत्रासिद्धविपक्षेण पक्षधर्मत्वनिश्चयो वर्ण्णितः। **विपरीतार्थो**विरुद्धस्तस्य विपक्षेणान्वयनिश्चयः। **व्यभिचार्यनै**[2]कान्तिकस्तस्य विपक्षेण व्यतिरेकनिश्चयः॥

अन्वयव्यतिरेकनिश्चयं च वर्ण्णयता प्रतिबन्धोप्यर्थतो दर्शित एव। यस्मा**न्न ह्यसति प्रतिबन्धेऽन्वयव्यतिरेकनिश्चयोस्ति** (।) **तेन** कारणेन **तमेव** तादात्म्यतदुत्पत्तिलक्षणं प्रतिबन्ध**न्दर्शयन्**नाक्षिपन्**निश्चयमाह**। यस्य दोषस्य निराशे (?से)

**माह्। तत्रान्वयनिश्चयेन विरुद्धतत्पक्ष्याणां[1] निरासः। व्यतिरेकस्यानिश्चयेन तत्पक्षशेषवदादेः ।।**

**(प्रसिद्धस्तु) द्वयोरिति हि एकत्र सिद्धस्य प्रतिषेधः। प्रसिद्धवचनेन शेषवदसाधारणयोः सपक्षविपक्षयो[2]रपि असन्देहः।**

**अन्यथाऽसति प्रतिबन्धे विपक्षेऽदर्शनमात्रेण व्यतिरेके हि।**

**व्यभिचारिविपक्षेण वैधर्म्यवचनञ्च यत्।**

**यदुभयं विरुद्धानैकान्तिकप्रति[3]पक्षेण वक्तव्यमिति तच्च वैधर्म्यवचनं ऐ (? अनै) कान्तिकप्रतिपक्षेण ।।**

**यद्यदृष्टिफलन्तच्च**

यदि तेन (वैधर्म्यवचनेन विपक्षे) ऽदर्शनं ख्याप्यते

---

न यो निश्चय उक्तस्तं व्याचष्टे। **तत्रे**त्यादि। **विरुद्धतत्पक्ष्याणा**मिति विरु[3]द्धानां विरुद्धपक्ष्याणां च विरुद्धपक्ष्या येषां सत्त्वं विपक्षे निश्चितं सपक्षसत्त्वं सन्दिग्धं। सन्दिग्धानैकान्तिका एवैते परप्रसिद्ध्या त्वेवमभिधानं। **व्यतिरेकस्यानिश्चये**नेति प्रकृतेन सम्बन्धः। अनैकान्तिकस्य निरास इति सम्बन्धः। तेनायमर्थः साधारणानैकान्तिकस्येति। **तत्पक्षस्य च**। अनैकान्तिकपक्षस्य च। **शेषवदादेः**। आदिशब्दात् सपक्षवि[4]पक्षयोस्सन्दिग्धस्य निरासः। यस्य सपक्षसत्त्वं विपक्षे चादर्शनमात्राद् व्यतिरेकस्तच्छेषवत्।

**प्रसिद्धस्तु द्वयो**रित्याचार्य ग्रन्थमिदानीं व्याचष्टे। **द्वयो**रित्यादि। द्वयोरित्यनेनैकस्य वादिनः प्रतिवादिनो वा यः **सिद्धस्तस्यप्रतिषेध**: (।) **प्रसिद्धवचनेन** सन्दिग्धयोः **शेषवदसाधारणयोः** प्रतिषेध इति सम्बन्धः (।) क्व सन्दिग्धयोरित्याह। **सपक्षवि[5]पक्षयोरपी**ति **शेषवतो**ऽसपक्षसन्देहः। असाधारणस्य तु सपक्षविपक्षयोः। तस्मान्निश्चयवचनादाचार्येणापि प्रतिबन्ध इष्ट एव ।।

**अन्यथाऽसति प्रतिबन्धे** साध्यसाधनयोः। **विपक्षेऽदर्शनमात्रेण व्यतिरेके** आचार्येणेष्यमाणे। **व्यभिचारिविपक्षेणा**नैकान्तिकप्रतिपक्षेण **वैधर्म्यवचनं च यत्** प्रतिज्ञातन्तदपार्थकमित्याकूतं।

क्व पुनराचा[6]र्येण प्रतिज्ञातमित्याह। **यदे**त्यादि। न्यायमुखे चैतदुक्तं। **यदुभयं वक्तव्य**मिति साधर्म्यं वैधर्म्यं च। कस्य प्रतिपक्षेण किमुक्तमित्याह। **विरुद्धे**त्यादि। साधनस्य वचनं **विरुद्धप्रतिपक्षेण** वैधर्म्यवचन**मनैकान्तिकप्रतिपक्षेण**। **यद्यदृष्टिफलन्तच्च**। अदर्शनमात्रफलन्तच्चेति **वैधर्म्यवचनं**।

**तदनुक्तेपि गम्यते ॥१८॥**

**न हि तस्य प्राक् दर्शनभ्रान्तिर्या वचनेन निवर्त्त्यते। स्मृतिः वाचाऽदर्शने क्रियत इति चेत्। दर्शनमप्रतीयमानं नाङ्गमिति युक्तं तत्र स्मरणाधानम्। अदर्शनन्तु दर्शना[5]भावः। स दर्शनेन बाध्यते। तदभावे सिद्ध एव इत्यपार्थकं तत्सिद्धये वचनं।**

---

एतदेव व्याचष्टे। **यदीत्यादि। तेनेति वैधर्म्यवचने[7]न विपक्षे** हेतोर**दर्शनं** 23b **ख्याप्यते। तदित्यदर्शनमनुक्तेपि** वैधर्म्ये **गम्यते**। दर्शनाभावलक्षणस्यादर्शनस्य **वैधर्म्य**वचनात् प्रागपि सिद्धत्वात्। तस्मादपार्थकम्वैधर्म्यबचनं।

हेतोर्दर्शनभ्रान्तिर्विपक्षेस्ति तन्निवृत्यर्थम्वैधर्म्यवचनमिति चेदाह। **न ही**-त्यादि। **तस्येति** प्रतिपाद्यस्य वैधर्म्यवचनात् **प्राक्**। हेतोर्विपक्षे **दर्शनभ्रान्ति**-रस्ति **या** वैधर्म्य**वचनेन निवर्त्त्यते**। तस्मादेतद् यथा[1] सपक्षे हेतोर्दर्शने न भ्रान्तिः किन्तु तद्विस्मृतमिति साधर्म्यवचनेन स्मर्यते। तथा **स्मृतिर्वाचा** वैधर्म्य**वचने**-**नादर्शने क्रियत इति चेत्**। दृष्टान्तमेव विघटयितुमाह। **दर्शनमित्यादि। दर्शनमप्रतीयमान**मस्मर्यमाणं **न** साध्यप्रतिपत्त्य**ङ्गमिति युक्त**न्त**त्रे**ति दर्शने **वाचा स्मरणाधानं** स्मृतिजननं। अदर्शनार्थन्तु न युक्तं। यस्माद**दर्शनन्तु दर्शनाभावो** हेतो[2]र्विपक्षे। **स दर्शनेन बाध्यते। तदभावे** विपक्षदर्शनाभावे **सिद्ध एव** दर्शना-भाव **इत्यपार्थकन्तत्सिद्धये** दर्शनाभावसिद्धये वैधर्म्य**वचनं**। अयमभिप्रायो दर्श-नम्परोक्षत्वाद् विस्मर्यतेति तत्स्मरणार्थम्वचनं युक्तं। दर्शनाभावस्तु दर्शननिवृ-त्तिरूपः स च दर्शनानुभवाभावादेव प्रतिभासते (।) प्रतिभासमानस्य च किं स्मर-णेन। **तत्सिद्धये**ऽपार्थकम्वचनं ॥[3]

**न वै** अनुपलभमानस्य पुंसस्तावतेत्यदर्शनमात्रेण विपक्षे हेतुर्नास्तीत्येवं निश्चयो भवति देशादिविप्रकृष्टानामनुपलम्भेपि सत्त्वात्। तदर्थन्नास्तीति निश्चयोत्पादनार्थम्वैधर्म्यवचनमिति चेत्तन्न। यस्मान्न च नास्तीति वचनाद-प्रमाणकात् तत्प्रतिक्षिप्यमाणं नास्त्येव। कथन्तर्हि नास्तीति गम्यत इत्याह। **यथे**त्यादि।

एत**दुक्तम्भ**वति। हेतोः स्वसाध्ये प्रतिबन्धग्राह[4]कमेव प्रमाणं साध्यायत्तता-ग्राहकन्तच्चेह दर्शनमभिप्रेतं यच्च साध्य एव हेतोर्दर्शनमिदमेव सर्वत्र विपक्षेऽदर्शनं। **तेन यस्य** साध्यसाधनयोः प्रतिबन्धग्राहकं दर्शनं प्रवृत्तम्विस्मृतं च तस्यैव पुंसः **दर्शनादर्शनयोः** प्रतीतयोः साधर्म्यवैधर्म्यवचनाभ्यां स्मरणं क्रियते नान्यस्येत्यर्थः। **यदाह** (।) **प्रमाणं दृष्टान्ताभ्यामुपदर्श्यत** इति। यथा यदि नास्ति स [5]ख्याप्यत

**यद्यनुपलभमानो तन्मात्रान्नास्तीति असत्तां तेन ख्यापयतीति।**

**न च नास्तीति वचनात् तन्नास्त्येव यथा यदि।**
**नास्ति, (स) ख्याप्यते न्यायस्तदा नास्तीति गम्यते ॥१९॥**

**यद्यनुपलम्भादभाव इति चेत् अप्रतीतौ वचनेनापि अप्रतीतिरेव स्यात्। सापि अनुपलब्धिरेव वचनम्**[7]**।**

427a **न चैकानुपलम्भोऽन्याभावं साधयति, अतिप्रसङ्गात्। न च तेन नास्तीति वचनात् तथा भवति, अतिप्रसङ्गात्।**[1] **तत् कथं वैधर्म्यवचनेनानैकान्तिकपरिहारः। तस्माद् व्यावृत्तिमिच्छता तत्र न्यायो वक्तव्यो यतोऽत्र व्यावृत्तमिति निश्चयो भवति॥**

**ननु तदभावेऽनुपलम्भात् असिद्धा व्यावृत्तिरिति**[2]**।**

---

इति। यथा येन प्रकारेण स्वसाध्यप्रतिबन्धेन विपक्षे हेतुर्नास्ति यदि स न्याय इति प्रतिबन्धग्राहकं प्रमाणं ख्याप्यते स्मर्यते तदा नास्तीति गम्यते। न तु प्रतिबन्धमन्तरेण (।)

**यदी**त्यादि प्रथमं कारिकाभागमाह। **यद्यनुपलभमानोनुपलम्भमात्रान्नास्तीति** न प्रत्येति तदा वैधर्म्यवचनादप्यप्रमाणकान्न प्रत्येष्यति। यस्मात्तदपि वैधर्म्यवचनं। त्व[6]ना (?) **तेनानुपलम्भमेव ख्यापयति** नाधिकम्विशेषं।

स्यान्मतं। साध्याभावकृतो हेत्वभावो वैधर्म्यवचनेन ख्याप्यते ततोस्ति विशेष इत्यत आह। **न चैके**त्यादि। **एकानुपलम्भ** इति साध्यानुपलम्भः। **अन्याभावं** साधनाभावं। असति प्रतिबन्ध इति भावः। **अतिप्रसंगादि**ति प्रतिबन्धमन्तरेण निवृत्तौ गोनिवृत्याप्यश्वस्य नियमेन निवृत्तिः स्यात्।

24a अथ मतम् (।) आचार्यदि[7] ग्ना गे न "विपक्षे हेतुर्न्नास्ती"त्युक्तमत एव निश्चय इत्यत आह। **न चे**त्यादि। **तेना** चा र्ये ण **नास्तीति** यद् **वैधर्म्यवचनं** कृतं **तस्मात्तथा भवति** वस्तुनो नास्तित्वमेव भवत्य**तिप्रसङ्गात्**। तद्वचनस्य हि प्रामाण्ये प्रतिज्ञामात्रादपि साध्यसिद्धिः स्यात्। **तदि**ति तस्मात् **कथम्वैधर्म्यवचनेनानैका**न्तिक**परिहारः** (।) नैव। **तस्माद्** विपक्षाद्धेतो**र्व्यावृत्तिमिच्छता तत्र** व्यावृत्तौ **न्यायो वक्तव्यः**। सा[1]ध्यसाधनयोः प्रतिबन्धग्राहकं प्रमाणं **यत** इति न्यायात्। **अस्ये**ति प्रतिपाद्यस्य। **साधनं व्यावृत्तिमिति निश्चयो भवति**॥

**नन्वि**त्यादि परः। **तदभावे** साध्याभावेऽनुपलम्भात् (अ) **सिद्धा व्यावृत्ति**र्हेतोरयमेव न्याय इति मन्यते। **यद्यदृष्टया** हेतोर्विपक्षान्निवृत्तिः **स्यात्तदा शेषवदनुमानं व्यभिचारि किं। नैव व्यभिचारि स्यात्** (।) कीदृशं पुनस्तदित्याह। **यथे**त्यादि।

**यदृच्छया निवृत्तिः स्याच्छेषवद् व्यभिचारि किम् ।**

यथा एतानि फलानि पक्वानि (एवं) रसानि च मधुराणि। रूपाविशेषाद् एकशाखाप्रभवत्वाद् वा उपयुक्तवद् ।[3] अत्रापि विवक्षितस्याशेषस्य पक्षीकरणे साध्याभावे हेतोरनुपलम्भोस्तीति कथं व्यभिचारः? प्रत्यक्षबाधाशंका एव व्यभिचार इत्येके। न।[4] पक्षीकृतविषयेऽभावात्। अथ चेत् स्यात्। तथाऽति-प्रसङ्गः। अन्यत्राप्यभावनियमाभावात्, वृत्तं प्रमाणं बाधकम्। अवृत्तबाधने[5] सर्वत्रानाश्वासः।

---

**एतानि फला**[2]नीत्युपयुक्तादन्यानि। अयं च धर्मिनिर्देशः। **पक्वान्येवं रसानि चेति** साध्यधर्मः। एवं रसानि मधुराण्यम्लानि वा। **रूपाविशेषादि**ति हेतुः। उप-युक्तस्य फलस्य यद्रूपं रक्ततादि। तेन तुल्यत्वात्। **एकशाखाप्रभवाद्वे**ति हेतुः। **उपयुक्तववि**ति दृष्टान्तः। कस्माददर्शनमात्राद् व्यतिरेक इष्यमाणे शेषवतो-व्यभिचारित्वं स्यादित्याह। **अत्रापी**त्यादि। अत्र शेषवद[3]नुमाने **विवक्षितं** रूपविशेषादियुक्तमुपभुक्तादन्यत्फलन्तस्या**शेषस्य पक्षीकरणे**। **हेतो** रूपादिशेषा-दिकस्य **साध्याभावेनुपलंभोस्तीति** विपक्षाव्यावृत्तिरतश्चा**व्यभिचारिता** स्यात्। तथा हि यत् पक्षीकृतं फलं यच्चोपयुक्तं सपक्षत्वेनोपात्तन्तद्व्यतिरेकेण विपक्षभूते तृतीये राशौ नास्ति यथोक्तस्य हेतोर्वृत्तिः।

**प्रत्यक्षबाधे**त्यादि। कदाचिदेकशाखाप्रभवस्यापि फ[4]लस्यापक्वस्यातद्र-सस्य वा प्रत्यक्षेणानुभवसम्भवात् **प्रत्यक्षबाधाशङ्का एव** शेषवतो **व्यभि-चार इत्येके** ईश्वरसेन प्रभृतयः। तदयमर्थो न केवलाभ्यामन्वयव्यतिरेकाभ्यां हेतुर्गमकः(, अ)पि त्वबाधितविषयत्वे सतीति। **ने**त्यादिना परिहरति। **पक्षीकृतो** यो**विषयः** परोक्षस्तत्र प्रत्यक्षबाधाया **अभावात्**। न प्रवृत्तेन प्रत्यक्षेण बाधाशङ्का किन्तु कदाचिद् ग[5]न्धप्रत्यक्षबाधापक्ष इति चेदाह। **तथे**त्यादि। **तथा** कदाचित् प्रत्यक्षबाधा भवेदित्याशङ्कायामतिप्रसंगः। यस्माद**न्यत्रा**भिमते हेतौ प्रत्यक्ष-बाधाया **अभावनियमाभावात्**। न हि सम्बन्धाभ्युपगमे परस्य बाधाशङ्का निवर्त्तत इति भावः। तस्मात् प्रतिबन्धानभ्युपगमवादिना **वृत्तं प्रमाणं बाधकमे**ष्टव्यं। **अवृत्तबाधने**ऽप्रवृत्तेनैव प्रमाणेन बाधने **सर्वत्रानाश्वा**[6]**सः** सर्वत्र हेतौ न स्यादाश्वासो गमकत्वनिश्चयः। बाधकस्य शंक्यमानत्वात्। नैवं प्रतिबन्धवादिनः सर्वत्र हेता(व)-नाश्वासः साध्यप्रतिबद्धे हेतौ बाधाशंकाया अप्यभावात्। हेतुप्रयोगात्तु पूर्वं स्याद् बाधाशंका (।) अत एव सन्दिग्धे हेतुवचनमुच्यते (।) न च वृत्तं प्रमाणं शेषवतो बाधकमस्ति। तस्मात् स्थितमेतद् अदर्शनमात्राद् व्यतिरेके शेषवतो[7]ऽप्यव्यभि- 24b

**व्यतिरेकः सिद्ध एव साधनं इति तथाभावनिश्चयमपेक्षते । अनुपलम्भात्तु क्वचित् अभावसिद्धावप्यप्रतिबद्धस्य तदभावे सर्वत्र[6] अभावासिद्धेः । संशयादव्यतिरेक एव शेषवद्व्यभिचारः ॥१९॥**

**किञ्च ।**

व्यतिरेक्यपि हेतुः स्यात् ;

427b **नेदं निरात्मकं जीवच्छरीरं अप्राणादिमत्त्वप्र[7]सङ्गात् । निरात्मकेषु घटादिषु दृष्टादृष्टेषु प्राणाद्यदर्शनात् । तन्निवृत्त्या आत्मगतेः । अदृश्यानुपलम्भात् अभावासिद्धौ घटादे[1]र्नैरात्म्यासिद्धेः प्राणादेरनिवृत्तिः ।**

---

चारित्वं स्यादिति ।

ननु प्रतिबन्धबलात् साध्याभावे हेतोर्व्यतिरेके सति सत्तामात्रेण व्यतिरेको गमकः स्यादित्यत आह । **व्यतिरेकस्त्वित्यादि** । हेतोर्यो विपक्षाद् **व्यतिरेकः** स **सिद्ध एव** निश्चित एव **साधनं** । **इति** हेतोस्**तथाभावनिश्चयं** साध्याभावे यो हेत्वभावस्तन्निश्चय**मपेक्षते** । एतदाह (।) नास्माकम्भवतामिव दर्शनाभावमात्राद् व्यतिरेकः । किन्तु साध्यसा[1]धनयोः सति प्रतिबन्धे साध्याभावे हेतोर्विपक्षाद्व्यावृत्तत्वं स्वगतो धर्मः । हेतोश्च यद्रूपन्तदवश्यं स्वनिश्चयमपेक्षते ज्ञापकत्वादिति । कथं त्वन्मतेन शेषवतो व्यभिचारित्वमिति चेदाह । **अनुपलम्भात्त्वित्यादि** । **क्वचि**द्विपक्षैकदेशे हेतोर**भावसिद्धावप्यप्रतिबद्धस्य** हेतोः साध्ये । **तदभावे** साध्याभावे **सर्वत्र** विपक्षेऽ**भावासिद्धेः** कारणात् **संशय**स्ततो वि[2]पक्षा**दव्यतिरेको** यः **स एव व्यभिचारः शेषवतः** (।)

**किंचे**ति दोषान्तरसमुच्चयः । यद्यदर्शनाद व्यतिरेकस्तदा **व्यतिरेक्यपि हेतुः स्यात्** । कीदृशं **नेदं निरात्मक**मित्यादि । प्रसङ्गमुखेन चेदमुक्तम**प्राणादिमत्त्वप्रसङ्गात्** । प्राणादिमत्त्वाच्च सात्मकं । अयं च हेतुः सात्मके क्वचिन्न दृष्टो- निरात्मकेभ्यश्च व्यावृत्त इति साध्यनिवृत्तौ निवृत्तिधर्माव्यतिरे[3]की कथ्यते । तथा हि **निरात्मके**ष्वात्मरहितेषु **घटादिषु दृष्टादृष्टेषु प्राणाद्यदर्शनात्** प्राणापानोन्मेषनिमेषादर्शनात् । दृष्टेषु स्वभावानुपलम्भेनैवादर्शनं प्राणादीनामुपलब्धिलक्षण प्राप्तत्वात् । अदृष्टेष्वपि तज्जातीयतया । तेन नैरात्म्यं प्राणाद्यभावेन व्याप्तं । जीवच्छरीरे तु **तन्निवृत्त्या** प्राणादिमत्त्वाभावनिवृत्त्या नैरात्म्यस्य निवृत्ते**रात्मगतिः** स्या[4]त् । तव तर्हि कथं संशयहेतुरिति चेदाह । **अदृश्ये**त्यादि । **अदृश्य**स्यात्मनो**नुपलम्भाद्** घटादिस्व(?ष्व)**भावाप्रसिद्धौ घटादौ**(ना)**न्नैरात्म्यासिद्धेः** कारणान्निरात्मकात **प्राणादेरनिवृत्तिः** । प्राणाद्यभावेन सन्दिग्धस्य नैरात्म्यस्याप्य-

**अभ्युपगमात् सिद्धमिति चेत्। कथमिदानीमात्मसिद्धिः। अन्यस्याअप्रमाणिका कथं नैरात्म्य सिद्धिः। अभ्युपगमेन हि सात्मका[2]नात्मकौ विभज्यतत्र भावेन गमकत्वं कथयताऽपि आगमिकत्वमात्मनि प्रतिपन्नं नानुमेयत्वम्। तस्माददर्शने[3]-नापि आत्मनो निवृत्त्यसिद्धे (र्नास्ति) कुतश्चित् तन्निवृत्तिः। निवृत्तावपि प्राणादीनां सम्बन्धाभावात् सर्वत्र निवृत्त्यसिद्धेः न गमकत्वम्॥**

**याऽप्यसिद्धियोजना "तथा सपक्षे[4] सन्नसन्नित्ये" वमादिष्वपि यथायोग-मुदाहार्यमित्येवमादि। साऽपि—**

**न वाच्याऽसिद्धियोजना॥२०॥**

---

सिद्धिरिति यावत्।

**बौद्धेन** नैरात्म्यमभ्युगतमतोभ्युप**गमान्नि**रात्मकत्वं घटादेः **सिद्धमिति चेत्।** यदि बौद्धाभ्युपग[5]मः प्रमाणं **कथमिदानीमात्मसिद्धि**र्जीवच्छरीरे। तदपि बौद्धेन निरात्मकमिष्टं। जीवच्छरीरे नैरात्म्याभ्युपगमोऽप्रमाणकस्ततोस्यात्मा साध्यत इति। यद्येवं परस्यापि जीवच्छरीराद**न्यस्या**पि घटादे**रप्रमाणिका कथं नैरात्म्य-सिद्धिः।** न हि **बौद्धस्याभ्यु**पगमः क्वचित्प्रमाणं क्वचिन्नेति। किं चाभ्यु**पगमेन** केवलेन **सात्मकानात्मकौ विभज्य**[6] घटादयः परेणास्माभिश्चानात्मका अभ्यु-पगताः। तेनानात्मकाः। जीवच्छरीरं सात्मकमस्माभिरभ्युपगतन्त्वया तु निरा-त्मकमेवम्विभज्य **तत्र** निरात्मकेषु प्राणादीनामभावे नात्मविषये **गमकत्वं कथयता** परेणा**गमिकत्वमात्मनि प्रतिपन्नं नानुमेयत्वं। तस्मा**दात्मनो घटादाव**दर्शने**प्य-दृश्यस्वभावस्या**त्मनो निवृत्त्यसिद्धेर्नास्ति कुतश्चि**न्नि[7]रात्मकात् प्राणादेर्न्निवृ- 25a त्तिरित्यगमकत्वं। एतत्तावन्नैवात्मनः कुतश्चिन्निवृत्तिः सिद्धा। अभ्युपगम्य तूच्यते। तन्निवृत्तावप्यात्मनिवृत्तावपि क्वचिदिति दृष्टे घटादौ **निवृत्तावपि प्राणा-दीना**मप्रतिबन्धादात्मना सह **सम्बन्धाभावात्। सर्वत्रा**दृष्टेष्वपि घटादिष्वात्म-**निवृत्त्या** प्राणादीनां **निवृत्त्यसिद्धेः** सन्दिग्धव्यतिरेकित्वाद् (न) **गमकत्वं**।[1]

अदर्शनमात्राद् व्यतिरेकाभ्युपगमे सत्ययमपरो दोष इत्याह। **यापीत्यादि।** का पुनः सेत्याह। **तथा सपक्षे सन्नित्यादि।** आ चा र्य स्य चायङ्ग्रन्थः। तत्र सन्दिह्युक्तम्पक्षधर्मो वादिप्रतिवादिनिश्चितो गृह्यते। तेनोभयोरन्यतरस्य चासिद्धस्य न्धस्याश्रयासिद्धस्य च व्युदासः। यथा च पक्षधर्मनिश्चयेन चतुर्विधस्यासिद्धस्य **व्युदासस्तथा सपक्षे सन्न**[2]**सन्नित्येवमादि**ष्वप्यन्वयव्यतिरेकनिश्चयेन निरस्त-मसिद्धजातमन्यतरासिद्धादीनां सपक्षादिष्वसम्भवात्। **यथायोगमुदाहार्यमित्याह। सापि न वाच्या** असिद्धियोजना।

**अनुपलम्भ एव सति संशयात्** उपलम्भेऽभावात्। **अनु[5]पलम्भाद् व्यतिरेक इति संशयितोऽनिवार्यः। यथायोग(मुदाहार्यमिति यथायोग)वचनात् अनिवारित एवेति चेत्। न। य एव तूभयनिश्चयवाचीत्यादि[6]भूतात्[1] तेनाऽनुपलम्भेऽपि संशयात् अनिवृत्तिं मन्यमानः तत्प्रतिषेधमाह ॥**

**किञ्च।**

**विशेषस्य व्यवच्छेदहेतुता स्याददर्शनात्।**

428a **श्रावणत्वस्यापि नित्यनित्ययोरदर्शनात् व्यावृत्त्या तद्व्यवच्छेदहेतुता स्यात्।**

---

**तद्व्याचष्टेऽनुपलम्भ एवेत्यादि।** अप्रमाणकेन**नुपलम्भ एव सति** हेतोर्विपक्षे **संशयात्** (।) कथमुपलम्भे तदसम्भवात्। विपक्षे हेतो**रुपलम्भे सति** तस्य संशयस्याभावात्। तस्मा[3]द**नुपलम्भाद्धेतोः** विपक्षाद् **व्यतिरेक** इत्यर्थात् सन्दिग्धव्यतिरेको हेतुरिष्ट एव। तस्मात् **संशयितोऽनिवार्यः**। संशयेन विषयीकृतः संशयितो व्यतिरेको न वार्यः स्यात्।

**यथायोगमुदाहार्यमित्यतो यथायोगवचनात्** संशयितोऽनिवारित **एवेति चेत्।** नैतदेवं। तदनन्तरमेव "**य एव तूभयनिश्चयवाची**"त्यादि वचनात्। य एव शब्द उ[4]भयनिश्चितस्य त्रैरूप्यस्यासिद्धत्वादेर्वाचकः स एव साधनं दूषणं "न चान्यतरप्रसिद्धसन्दिग्धवाची पुनः साधनापेक्षणादि"त्ययं ग्रन्थ इहोदाहरणं। अन्यतरस्य वादिनः प्रतिवादिनो वा(।)योसिद्धं सन्दिग्धम्वा वक्ति न स साधनं दूषणं वा (।) सन्दिग्धव्यतिरेकनिश्चयहेतुरुभयोरपि विपक्षे सन्दिग्धस्तस्मात्तदभिधानमसाधनम्। यस्मादुभयनि[5]श्चित एव हेतुरुक्तस्ते**नानुपलम्भे**पि सति निवृत्ति**संशयाद्** विपक्षाद्धेतोर**निवृत्तिं मन्यमान**स्तस्य सन्दिग्धव्यतिरेकस्य हेतुत्व**प्रतिषेधमाह** असिद्धियोजनया ॥

**किञ्च।** यद्यदृष्ट्या निवृत्तिरिष्यते तदा **विशेष**स्यासाधारणस्य श्रावणत्वादे**र्व्यवच्छेदहेतुता स्यात्।** किं कारणं (।) नित्यानित्ययोरदर्शनात्। तद् व्याचष्टे (।)**श्रावणत्वस्यापी**त्यादि। तथा ह्यदर्श[6]नमात्राद् व्यावृत्तिरिष्टा(।अ)स्ति **च नित्यानित्ययोरदर्शनं श्रावणत्वस्य तद्व्यवच्छेदहेतुता स्यात्।** नित्यानित्यप्रतिषेधहेतुत्वम्भवेत्। यदि नामादर्शनात् ततो व्यावर्त्तेत श्रावणत्वन्तद्व्यवच्छेदहेतुत्वन्तु कुत इत्याह। **न हीति। न तद्व्यावृत्तेरन्यद् व्यवच्छेदनन्नित्या**नित्यव्यवच्छेदनम् (।)तथापि कथं श्रावणत्वन्न व्यवच्छेदहेतुरिति चेदाह। **अव्यवच्छे-**

---

[1] Ḥbyuṅ-baḥi-phyir-ro.

**न हि तद्व्यावृत्तेरन्यद् व्यवच्छेदनम्। अव्यवच्छेदस्तु कुतश्चिद् व्यावृत्तेरेवानिश्चयाद्। क्वचिद् यत्र नास्तीति निश्चितः स भवन् कथं तदभावं न गमयेत्?**

**प्रमाणान्तरबाधा चेन्नेदानीं नास्तिताऽदृशः ॥२१॥**

**अथाऽपि उभयव्यवच्छेदे प्रमाणान्तरं बाधकमस्ति। अन्योन्यव्य[2]वच्छेदरूपाणां हि एकस्य व्यवच्छेदेन द्वितीयस्य विधानात् अप्रतिषेधः। विधिप्रतिषेधयो (र्युगपद्) विरोधादिति।**

**नेदानीं अदृशो नास्तिता। एवं सति अदर्शनं न प्रमाणं, बाधासम्भ[3]वात्।**

ख. आचार्यीयमतनिरासः

**तथान्यत्रापि संभाव्यं प्रमाणान्तरबाधनं।**

---

**दस्त्विव**[7]त्यादि। कुतश्चिन्नित्यादनित्याच्चादर्शनमात्रेण **व्यावृत्तेरेवानिश्चयात्**। 25b अनिश्चयश्चान्यतरत्र प्रतिबन्धानिश्चयात्। अवश्यं चैतदेवमन्यथा यो हि धर्मो **यत्र नास्तीति निश्चितः स भवन् क्वचिद्** धर्मिणि **कथन्तदभावं यत्र नास्तीति** निश्चितस्तस्याभावं कथं न **गमयेत्**।

नित्यानित्याद् व्यावृत्तस्यापि श्रावणत्वस्योभयव्यवच्छेदे साध्ये **प्रमाणान्तरबाधा चे**च्छंक्येत। **अ**[1]**थापी**त्याद्यस्यैव व्याख्यानं। श्रावणत्वे**नोभयव्यवच्छेदे** नित्यानित्यव्यवच्छेदे साध्ये **प्रमाणान्तरं बाधकमस्ति**। तदाह। **अन्योन्ये**त्यादि। अन्योन्य**व्यवच्छेदो** रूपं येषान्ते तथा। तथा हि नित्यव्यवच्छेद एवानित्यत्वन्तद्व्यवच्छेद एव च नित्यत्वन्तथा भावव्यवच्छेद एवाभावोऽभावव्यवच्छेद एव च भावः। तेषा**मेकस्य व्यवच्छेदे**नान्य**विधानात्**। द्वितीयस्य विरुद्धस्य[2]विधाना**दप्रतिषेधः**।

एतदुक्तम्भवति। यदा हि श्रावणत्वं नित्याद् व्यावृत्तमिति तद् व्यवच्छिद्यात्। तदेवानित्यत्वम्विदध्यात्। तदेव च तदनित्याद् व्यावृत्तमित्यनित्यं व्यवच्छिद्यात्। नित्यं च विधत्त इत्येकस्यैकदैव विधिप्रतिषेधौ स्यातां तच्चायुक्तमिति **विधिप्रतिषेधयोर्युगपद्विरोधान्न** कस्यचिदपि प्रतिषेधः। प्रतिषेधविनिवृत्तिलक्षणो हि विधिः। विधिनिवृत्ति[3]रेव च प्रतिषेधस्तौ च परस्परविरुद्धौ युगपदेकस्य कथं स्याताम् (।) अतो न कुतश्चिदपि व्यावृत्तिनिश्चयः श्रावणत्वात्।

**नेदानी**मिति सिद्धान्तवादी। इदानीमिति बाधासम्भवे सति। **अदृशो**ऽदर्शनाद् विपक्षे हेतो**र्नास्तिता**। तस्मा**देवं** स**त्यदर्शनन्न प्रमाणम्बाधासम्भवात्**।

श्रावणत्व एवाप्रमाणं भवतु नान्यत्र बाधाऽभावादिति चेदाह। **तथे**त्यादि। अन्य[4]**त्रा**पि हेतोर्व्यतिरेकसाधनस्यादर्शनस्य **सम्भाव्यं प्रमाणान्तरबाधनं**। कुतः। **लक्षणे**त्यादि। हेतोर्विपक्षादर्शनव्यावृत्तिनिबन्धनमिति यल्लक्षणन्तेन युक्तं श्राव-

**तल्लक्षणयुक्ते बाधासम्भवे तल्लक्षणमेव दूषितं स्यादिति सर्वत्राऽनाश्वासः।**

**यद्ये(वम)नुमानविषये[4]ऽपि प्रत्यक्षानुमानविरोधदर्शनात् अनाश्वासप्रसङ्ग इति चेत्।**

**नैतदेवम्। यथोक्तेऽसम्भवात्। सम्भविनश्चातल्लक्षणत्वात्। यदि विरु[5]द्धाव्यभिचार्युक्तमिति। अनुमानविषयेऽवचनादिष्टम्। विषयोऽस्य निर्देष्टव्यः[1] ॥२१॥**

**किंच।**

**दृष्टाऽयुक्तिरदृष्टेश्च स्यात् स्पर्शस्याविरोधिनी ॥२२॥**

---

णत्वस्य यददर्शनन्तस्मिन्**बाधासम्भवे** सति **तल्लक्षणमेव** तस्य व्यतिरेकसाधनस्यादर्शनस्य सर्वविषयमेव लक्षणं स्वरूपं **दूषितं स्यादिति सर्वत्रा**दर्शने व्यतिरेकसाधने[5]**नाश्वासः**। न गमकत्वनिश्चयः ॥

**यद्येवमनुमानविषयेपि** क्वचित् प्रत्यक्षानुमानविरोधदर्शनात् (।) तथा हि नित्यः शब्दः श्रावणत्वाच्छब्दत्ववदिति कृते नित्यत्वमनुमानेन बाध्यते। एवमश्रावणः शब्दः सत्त्वाद् घटवदिति प्रत्यक्षेण। ततश्च सर्वत्र तदवशिष्टलक्षणेनानुमानेप्यनाश्वासप्रसंग **इति चेत्**।

**नैतदेवं। यथोक्त** इति कार्यस्वभा[6]वानुपलम्भजेङ्गजेनुमाने प्रत्यक्षानुमानविरोधस्याभावात्। प्रत्यक्षादिविरोध**सम्भविनश्चातल्लक्षणत्वात्** तदनुमानालक्षणत्वात्। **यदि** यथोक्तलक्षणेऽनुमाने नास्ति बाधा तदा हेतुलक्षणयुक्तं परस्परविरुद्धार्थसाधकं हेतुद्वयमेकस्मिन् धर्मिण्यवतीर्णम्**विरुद्धाव्यभिचार्युक्त**मा चा र्ये

26a ण तस्यावच[7]नमिति चेत्। अनेनाभ्युपेतहानिमाह। **अनुमानविषये** विरुद्धव्यभिचार्य**वचनादिष्टमे**वेति कुतोभ्युपेतहानं। क्व तर्ह्याचार्येणोक्त इत्याह। **विषयं** चेत्यादि। अस्य विरुद्धाव्यभिचारिणः। **किंचे**त्यादि। इह **वै शे षि के** ण वायोः सत्त्वसाधनार्थं "**स्पर्शश्च** न च दृष्टानामि"ति सूत्र[2]मुक्तं। अस्यायमर्थः (।) यो गुणः स द्रव्याश्रयी तद्यथा रूपादिः। अपाक[1]जानुष्णाशीतस्पर्शश्च गुणस्तस्मात्तस्याश्रयभूतेन द्रव्येण भवितव्यं। न चायं दृष्टानां पृथिव्यादीनां गुणस्तेषां पाकजानुष्णाशीतस्पर्शादिगुणत्वात्। ततो यस्यायं गुणः स वायुर्भविष्यतीत्युक्ते वैशेषिकेण। तत्राचार्य दि ङ् ना गे नोक्तं (।) यद्यदर्शनमात्रेण दृष्टेभ्यः प्रतिषेधः क्रियते न च सोपि युक्त इति (।) यदेतदुक्तन्तद् विरुध्यत इति वा र्त्ति[2] क का रो दर्शयन्नाह। **दृष्टे**त्यादि। यद्यदृष्ट्या निवृत्तिः **स्यात्** तथाऽ**दृष्टे**रदर्शनात् कारणाद्

---

[1] Bstan-par-bya. [2] Vaiśesikasūtra 2 : 9.

**यदि**[6] **अनुपलम्भाद् निवृत्तिसिद्धिः स्याद् । यदि अदर्शनमात्रेण दृष्टेभ्यः प्रतिषेधः क्रियते न च सोऽपि युक्त इति य उक्तः (स) कथमयुक्तः । अनुपलम्भावभावसिद्धेः ।**[7]

**ननु स्पर्शवचनलक्षणस्य युक्त एव प्रतिषेधः ।** 428b.

**न युक्तः । दृश्यतत्स्वभावविषयमात्रेऽप्रतिषेधात् ।**[1] **यावता पृथिव्यादि (सामान्येन) गृहीत्वा प्रतिषेधमाह । तत्र तूलोपलपल्लवादिषु तद्भावेऽपि स्पर्शभेददर्शनात् । अस्यापि क्वचिद् विशेषे सम्भवाशंकया भवितव्यमिति सर्वत्र अदर्शनमात्रेण अयुक्तः**

---

अपाकजस्यानुष्णाशीत**स्पर्शस्य दृष्टाऽयुक्तिः** । दृष्टेपु पृथिव्यादिष्वसङ्गतिर्या वर्णिता वैशेषिकैर्यस्या आचार्येणायुक्तत्वमुक्तं सा स्याद् **अविरोधिनी** युक्तैव स्यादित्यर्थः ।

तद्व्याचष्टे । **यदीत्यादि** । यदाहाचार्यः । वायुप्रकरणे **यद्यदर्शनमात्रेण दृष्टेभ्यः** पृ[3]थिव्यादिभ्यः स्पर्शस्य **प्रतिषेधः क्रियते** वै शे षि के ण **न च सोपि युक्त** इति । यद्याचार्यस्याप्यदर्शनमात्रेण व्यतिरेकोभिमतस्तदा **कथमयुक्तः** स्पर्शस्य प्रतिषेधो युक्त एव स्यात् । किं कारणम् (।) अत्रापि हेतो**रनुपलम्भादभावसिद्धे**रभ्युपगमात् ।

**नन्वित्यादि** परः । उपलब्धिलक्षणप्राप्तेः कारणाद् अपाकजस्यानुष्णाशीत**स्पर्शस्या**नुपल[4]भ्यमानस्य पृथिव्यादिपु **युक्त एव प्रतिषेधः** ।

**न युक्त** इति सिद्धान्तवादी । किं कारणं (।) यः पृथिव्यादिरनुष्णाशीतादन्येन स्पर्शेन युक्तः प्रत्यक्षः स दृश्यः । अन्यत्र च देशादावप्रत्यक्षोपि तथाभूतस्पर्शयुक्त एव पृथिव्यादिस्तत्स्वभावः । **दृश्यश्च तत्स्वभाव**श्चेति द्वन्द्वः । तदेव **विषयः** स एव तन्मात्रं "सुप्सुपेति" समासः । तस्मिन्न**प्रतिषेधात्** स्पर्श[5]स्य । तत्र हि प्रतिषेधे स्यादेव **निश्चयः यावता** पृथिव्यादिर्धर्मिभूतं **सामान्ये**नाविशेषेणैव **गृहीत्वा**ऽयम्वै-शे षि कः स्पर्शस्य **प्रतिषेधमाह** । यत्किंचित् पृथिव्यादि तत्सर्वमनुष्णाशीतस्पर्शरहितमिति । न च पृथिव्यादिमात्रे स्पर्शस्योपलब्धिलक्षणप्राप्तिरस्ति । न चैकस्पर्शनियमः पृथिव्यादीनां यतस्**तत्र** पृथिव्यादिसामान्ये **तूलोपलपल्लवा**[6]दिषु भेदेषु **तद्भावेपि** पृथिव्यादिभावेपि **स्पर्शभेददर्शनात्** । तथा हि तूलस्यान्यः स्पर्शः श्लक्ष्णत्वलक्षणोन्यश्चोपलादेः कर्कशत्वादिलक्षणः । **अस्यापी**त्यनुष्णाशीतस्पर्शस्य **क्वचित्** पार्थिवद्रव्य**विशेषे सम्भवाशंकया भवितव्यमि**ति कृत्वा **सर्वत्र** पृथिव्या-

---

[1] Tsam-la-sogs-pa ? → Tsam-la-hgogs-pa.

**प्रतिषेधः।**

**एवमाचार्यीयः कश्चित् अनुपलम्भाद्**[2] **अभावं ब्रुवाण उपालब्धः।**

**अपि च।**

**देशादिभेदाद् दृश्यन्ते भिन्ना द्रव्येषु शक्तयः।**
**तत्रैकदृष्ट्या नान्यत्र युक्तस्तद्भावनिश्चयः ॥२३॥**

---

**दावदर्शनमात्रेणानुष्णाशीतस्पर्शस्यायुक्तः प्रतिषेधः।**

26b यत्तूच्यते (।) सर्वत्र पृथिव्यादेस्तुल्य[7]त्वात्तुल्य एवानुष्णाशीतस्पर्शो यस्तु पृथिव्यादिभावेपि श्लक्षणत्वादिभेदः स पृथिव्यादिपरमाणुसंयोगस्य निविडानिविड-कृतत्वादिति।

तदयुक्तम् (।) अनिविडानां हि नैरन्तर्याभावात् संयोगाभावः। तेन यथो-पलपरमाणूनां संयोगस्य निविडत्वन्तथा तूलपरमाणूनामिति कथं श्लक्षणत्वादिभेदः स्यात्। तस्माद् सद्यपि संयोगे स्वरूपेणान्यादृ[1]शा एवोपलपरमाणवोन्यादृशाश्च तूलपरमाणवस्तत्कृत एव च श्लक्षणत्वादिभेदः। न संयोगनिविडानिविडकृतः। तथा च यथा पृथिव्यादिभेदात् स्पर्शस्य श्लक्षणत्वादिभेदस्तथानुष्णाशीतभेदोपि सम्भाव्येत।

ननु माभूद् अदृष्टविषये वाय्वनुमानं दृष्टविषये त्वनुष्णाशीतस्पर्शस्य दृश्यस्य पथिव्यादिसम्बन्धित्वेनानुपलभ्यमानत्वा[2]त् ततो वाय्वनुमानं स्यात्।

एवम्मन्यते। यदि स्पर्शादिर्गुणरूपता सिद्धा स्यात् ततो वायुद्रव्यानुमानं स्यात् सैव त्वसिद्धा। स्वातन्त्र्येण प्रतीतेः स्पर्शविशेष एव चास्माकम्वायुरुच्यते। आचार्य दिग्नागे न तु स्पर्शव्यतिरिक्तं वायुमभ्युपगम्य तत्र परकीयमनुमानमयुक्त-मुक्तमित्यदोषः।

तस्मात् स्थितमेतद् (।) अन्वयव्यतिरेकयोर्निश्चयमदर्श[3]नमात्राच्च प्रति-षेधाभावं ब्रुवताचार्येणेष्टः प्रतिबन्ध इति ॥

कस्तर्ह्येवमुपालब्ध इति चेदाह। **एवमित्यादि**। एवमित्यनन्तरोक्ताभिरुप-पत्तिभिः। आचार्यस्य शिष्य आचार्यीयः कश्चिदाचार्यग्रन्थानभिज्ञः **अनुपलम्भाद् अभावं ब्रुवाण उपालब्धः।**

**अपि** **चे**त्यदर्शनमात्रेणाभावाभ्युपगमे प्रत्यक्षबाधां दर्शयितुमाह। **देशादि**[4]-**भेदात्**। आदिशब्दात् कालसंस्कारभेदात्। **भिन्ना** नानारूपा **दृश्यन्ते द्रव्ये**ष्वेक-जातीयेष्वपि **शक्तयो** रसवीर्यविपाकादिलक्षणाः। तत्रेत्यनेकशक्तिषु द्रव्येष्वेक**दृष्ट्या** एकस्वभावस्य **द्रव्यस्य क्वचिद्** दर्शनान्नान्यत्रापि देशादौ **युक्तस्तद्भावनिश्चयः।**

**यदि (एवं) विपक्षे[3]ऽदर्शनमात्रेणाऽप्रतिबद्धस्याऽपि तदव्यभिचारः। क्वचिद् देशे कानिचिद् द्रव्याणि कथंचिद् दृष्टानि अन्यत्र अन्यथाऽपि दृश्यन्ते। यथा ओषधयः काश्चन क्षेत्रविशेषाद् विशिष्टरसवीर्यविपाका[4] भवन्ति नान्यत्र। तथा कालसंस्कारभेदाद् अपि। न च तद्देशैः तथा दृष्टा इति सर्वाः तत्त्वेन तथा-भूताः सिध्यन्ति। गुणान्तराणां कारणान्तरापेक्षत्वात्। विशेषहेत्वभावे तु स्याद् अनुमानम्। अदृष्टकर्तृकमपि पुरुषसंस्कारपूर्वकम्। वाक्येषु विशेषाभावात्।[6] सर्वप्रकाराणां पुरुषैः कारणदर्शनात्। सर्वेषु गुणेषु विशेषस्य दर्शनात्। नैव सम्भ-**

---

यथापरिदृष्टद्रव्यस्वभावनिश्चयः।

**यदी**त्यादिनैतदेव व्याचष्टे। **यदि विपक्षे** हेतोरद[5]**र्शनमात्रेणाप्रतिबद्धस्य** स्वसाध्ये **तदव्यभिचारः** साध्याव्यभिचार इष्यते। तदैकत्र दृष्टस्य द्रव्यस्य यद् रूपमुपलब्धन्तत्तस्यान्यत्रापि द्रव्यसामान्यादनुमेयं स्यात्। अस्ति हि तत्रापि तत्कालं हेतोर्विपक्षेऽदर्शनमात्रं।

न चेदं युक्तं। यस्मात् **क्वचिद् देशे कानिचिद् द्रव्याणि कथंचिद् दृष्टानि** प्रतिनियतरसादित्वेन। पुनर**न्यथे**[6]ति यथादृष्टाकारवैपरीत्येनान्य**त्र** देशे **दृश्यन्ते**। **यथे**त्यादिना विषयमाह। वीर्यन्दोषापनयनशक्तिः(।)परिणामो विपाकः। **विशिष्टा रसवीर्यविपाका** यासामिति विग्रहः। **नान्यत्रे**ति क्षेत्रविशेषादन्यत्र। **यथा** देश-**विशेषात् तथा कालसंस्कारभेदाद् विशिष्टरसवीर्यविपा**का भवन्ति। संस्कारः क्षीराद्यवसेकः। **न च तद्दे**[7]**शैरि**ति प्रदेशो येषां पुरुषाणान्तैस्**तथा**विशिष्टरसा-दियुक्ता **दृष्टा इति** कृत्वा **सर्वा** अतद्देशा अपि **तत्त्वेन** तुल्यरूपादित्वेन **तथाभूता** यथागृहीतस्वभावतुल्याः **सिध्यन्ति**। किं कारणं (।) **गुणान्तराणां** रसादिविशेषाणां **कारणान्तरापेक्षत्वात्**। **विशेषहेत्वभावे तु स्या**देकस्वभावता**नुमानं**। **अदृष्टः कर्त्ता** यस्य वैदिक**स्य** तत्तथा। तद**पि पुरुषसंस्कारपूर्वकं** पुरुषप्रयत्न[1]हेतुकं। एतच्च साध्यफलं। **वाक्येषु** पौरुषेयापौरुषेयत्वेनाभिमतेषु **विशेषाभावा**दनेन हेतुः कथितः। प्रयोगा पुनर्यद्वस्तु यदभिन्नस्वभावन्त(त्त)त्समानहेतुकं (।) यथैको धूमो धूमान्तर-समानजातीयः। पौरुषेयवाक्याभिन्नस्वभावानि चापौरुषेयाभिमतानि वाक्या-नीति स्वभावहेतुः। न चासिद्धो हेतुः। तथा हि यैः प्रकारैर्विषाद्यपनयनादिति वैदिकानां विशेष[2] इष्यते। तेषां **सर्वप्रकाराणां पुरुषैः कारणदर्शनात्**। तथा हि श ब रा दिमन्त्राणामपि विषाद्यपनयनादयो दृश्यन्ते।

27a

यदि शब्दस्वभावसाम्याददृष्टकर्तृकस्यापि पौरुषेयत्वमनुमीयते। एवन्तर्हि स्वचित्तसन्ततिदर्शनात् सर्वे चित्तधर्मा ज्ञाताः (।) तेन यावद् बोधरूपन्तावत्

429a **वद्विशेषहेतवः पुरुषा येन वचनादेः किंचिन्मात्रसाधर्म्यात्**[7] **सर्वाकारेण साम्यमनुमीयेत। संस्कारविशेषेण विशेषप्रतीतेः। तद्वत् अन्यस्यापि सम्भवात्। असम्भवे त्वनुमातव्ये हेत्वभावात्। वैराग्यस्यादृष्टत्वात्। अदृ**[1]**ष्टेन च बाध्यबाधक-**

---

पञ्चेन्द्रियाश्रितं सविकल्पकं च सर्वं च रागादिजननवासनागर्भं यथेदानीन्तथानागताव[3]स्थायामपि यथा च मम तथा परेषामपि(।) तेन चित्तत्वेनेन्द्रियाश्रितत्वेन वचनादिहेतुत्वेन च सर्वस्य पुंसश्चित्तं सर्वदा रागादियुक्तन्नियतवस्तुग्राहित्वादसर्वविषयं किन्नानुमीयत इत्याशंक्याह। **नैव**मित्यादि। यथा वाक्यान्यसम्भवद्विशेषहेतूनि **नैवं सम्भवद्विशेषहेतवः पुरुषाः** येन विशेषहेत्वसम्भवेन। वचनादेरादिग्रहणेनेन्द्रियाश्रितत्वचित्तत्वादि[4]ग्रहणं। **वचनादे**रेव **किंचिन्मात्रे**णैकदेशेन **साधर्म्या**त्तस्माल्लिङ्गात् पुंसां रागादिमत्वेन नियतविषयत्वेनान्येन वा **सर्वाकारेण साम्यमनुमीयेत।**

विशेषहेतुसम्भव एव कुत इत्याह। **सर्वेष्वेव चेतोगुणेषु विशेषस्य दर्शनात्।** रागप्रज्ञादयो हि स्वविषयग्रहणंप्रति मन्दमन्दवृत्तयोपि कालान्तरेण पटुतरा भवन्ति। स्वविषयश्चैषां स्पष्टतरो भवतीति वि[5]शेषो दृश्यते। स पुनः कुतो भवतीत्याह। **संस्कारो**भ्यासस्तस्य **विशेषेण** प्रज्ञादीनां **विशेषप्रतीतेः**। भवतु प्रज्ञादीनां मनोगुणानामभ्यासात् प्रकर्षो दृष्टत्वात् सर्वज्ञादयस्तु न दृष्टा इति कथन्तेषाम्भावइत्यत आह। **तद्वदि**त्यादि। **अन्यस्यापि** सर्वज्ञत्वादेर्विशेषस्य **सम्भवात्**। अभ्यासवशाच्च नैरात्म्याकारस्य सर्वपदार्थग्राहिणश्च सामान्यविकल्पस्य यत्स्फुटाभ[6]त्वन्तदेव वैराग्यं सार्वज्ञं च पदं। तेन त्रिभिः प्रकारैर्वैराग्यसर्वज्ञत्वविशेषासम्भवानुमानं स्यात्। यदि नैरात्म्यविषयस्य सर्वविषयस्य वा विकल्पस्यासम्भवः। सम्भवे वा यदि मनोगुणानां न विशेषः स्यात्। सति वा विशेषे विशेषहेतुर्यदि न ज्ञातः स्यात्। यावता नैरात्म्यादिविषयस्य विकल्पस्य सम्भवोस्ति विशेषहेतुश्चाभ्यासो
27b विज्ञातः। तस्माद् यथाऽस[7]ति प्रतिबन्धवैकल्ये समर्थेयं बीजकारणसामग्री अङ्कुरोत्पादायेति सामर्थ्यानुमानं। तद्वदसति प्रतिबन्धवैकल्ये चिरकालान्नैरन्तर्यवतश्चाभ्यासविशेषाच्च नैरात्म्यविषयस्य सर्वपदार्थविषयस्य च ज्ञानस्य स्फुटाभत्वं सम्भवतीति वैराग्यसर्वज्ञत्वयोः सम्भवानुमानं। एवन्तावत् सम्भवानुमानमस्माकं।

**असम्भवे त्वनुमातव्ये** भवतां न तस्य[1]धर्मस्य बाधकः कश्चिद्धेतुर्विद्यते। तद**भावान्**नासंभवद्विशेषहेतवः पुमांस इति सम्बन्धः। कथं पुनर्बाधकस्याभाव इत्याह। **वैराग्यस्यादृष्टत्वाद्** (।) उपलक्षणं चैतत्सर्वज्ञस्याप्यदृष्टत्वात्। **अदृष्टेन च** वैरा-

---

[1] Ma-mthoṅ-ba-yaṅ-ma-gnod-par-bya-ba.

**भावासिद्धेः। न हि रागादीनां व्यभिचारकार्यमस्ति**[2]**। सम्भवेऽपि विशेषाणां द्रष्टुमशक्यत्वात्।**

**नैवं प्रतिक्षेपार्हाणि वाक्यानि यथा पुरुषाः। दृश्यविशेषत्वात्। अदृश्यत्वेऽपि अदृष्टविशेषाणां**[3] **विजातीयत्वोपगमविरोधात्। तद्विशेषाणामन्यत्र कर्तुं शक्यत्वात्। प्रत्यक्षाणां (वाक्यानां)मप्रत्यक्षस्वभावविरोधात्। भ्रान्ति-**

---

ग्येण सह हेतो**र्बाध्यबाधकभावासिद्धेः**।

स्यान्मतं (।) न वचनादेर्वैराग्यादीनां साक्षाद् असम्भवोनुमीयते येन बाधको हेतुर्मृग्यते। किन्तु वीतरा[4]गाभिमतेषु रागादयोनुमीयन्ते (।) तेष्वनुमितेष्वर्थतो वीतरागादिप्रतिषिद्धमदृष्टेनापि वैराग्येन् (?ण) रागित्वस्य विरोधादित्यत आह। **रागे**त्यादि। **न हि रागादीनामव्यभिचारि कार्य**मस्ति। आदिग्रहणाद् असर्वज्ञपरिग्रहः। तथा हि व्यवहारव्युत्पत्तिमारभ्य यथा यथार्थपरिज्ञानन्तथा तथा तद्विषयम्वक्तृत्वम्भवतीति तेन यदि सर्वविषयं क[3]स्यचिद् विज्ञानं स्यात् तद्विषयमपि वक्तृत्वं केन वार्यते।

स्यादेतद् (।) यदि वैराग्यादिलक्षणन्तस्य विशेषोस्ति कथमस्माभिर्नोपलभ्यत इत्याह। **सम्भवेपि** तेषां वैराग्यादिलक्षणानां **विशेषाणां** परसन्ताने **द्रष्टुमशक्यत्वात्**। न च तथाभूतानामनुपलम्भात् प्रतिक्षेप इत्याह। तादृशो च विप्रकर्षिणामप्रतिक्षेपार्हत्वात्।

स्यादेतद् (।) यथा पुरुषा अप्रतिक्षेपार्हा[4]स्तद्वद् वाक्यानीत्याह। **नैव**मित्यादि। किं कारणं। **दृश्यविशेषत्वात्**। तथा हि वैदिकानां वाक्यानाम्विशेषो दृश्य एवेष्यते। अथ नेष्यते। एवम**दृश्यत्वेपि** विशेषस्याभ्युपगम्यमाने। तेनानुपलब्धेन विशेषेणा**दृष्टविशेषाणां** वैदिकवाक्यानां लौकिकवाक्येभ्यो **विजातीयत्वोपगमविरोधात्**।

स्यान्मतं (।) दृश्या एव विशेषा वैदिकानां दुःश्रवणत्व[5]दुर्भणत्वादयस्तैः पौरुषेयेभ्यो भिन्नानि भविष्यन्तीत्यत आह। **तद्विशेषाणा**मित्यादि। **अन्यत्रे**ति पौरुषेयेषु। न केवलमदृष्टविशेषाणां विजातीयत्वोपगमविरोधाददृश्यत्वं विशेषाणामयुक्तमितश्च **प्रत्यक्षाणामप्रत्यक्षस्वभावविरोधात्**। न ह्येकस्य स्वभावद्वयं विरुद्धं घटते। विशेषाः प्रत्यक्षा एव केवलं भ्रान्तिनिमित्तसद्भावात्। वि[6]षादिशक्तिवन्नावधार्यन्त इति चेदाह। **भ्रान्तिनिमित्ताभावा**दिति। रूपसाधर्म्यदर्शनं हि भ्रान्तिनिमित्तं विषादिषु। नैवं वैदिकेषु। कथङ्गम्यत इति चेदाह। **बाधका**भावात् **भ्रान्त्यसिद्धे**रिति। यदि वैदिकानां विशेषे भ्रान्त्यानपलक्ष्यमाणे पुनर्विशेषावलम्बि

**निमित्ताभावात् ।**[4] **बाधकाभावात् भ्रान्त्यसिद्धेः । पुरुषेषु विशेषदर्शनस्य बाधकत्वाद् असमानम् । (न) वाक्यानां विशेषः परभावभूतस्य अतद्विशेषत्वात् । तदभिन्नस्वभावानां सर्वेषां पुरुषक्रिया न वा कस्यचित् ॥**

**ग. वैशेषिकमतनिरासः**

**किञ्च ।**

**आत्ममृच्चेतनादीनां यो(ऽ)भावस्याप्रसाधकः ।**
**स एवानुपलम्भः किं हेत्वभावस्य साधकः ॥२४॥**

**अनुपलम्भमस्य प्रमाणयत आत्मवादो निरालम्बः स्यात्, आत्मनोऽप्रत्यक्ष-**

---

प्रमाणमुत्पद्येत भ्रान्तेर्बाधकन्तदा भ्रान्तेस्तन्निमित्तस्य च भवति निश्चयस्तच्च 28a नास्ति ।[7] तस्माल्लौकिकैः शब्दैः वैदिकानामविशेषे साध्ये नास्ति साधकं प्रमाणं ।

पुरुषेषु तर्हि किं बाधकं येन सर्वाकारगुणसाम्यसाधने दोष इत्याह । **पुरुषे-ष्वित्यादि ।** प्रज्ञादिविषयस्यातिशयस्याभ्यासपूर्वकस्य यद् दर्शनन्तदेव बाधकं । यद्यसम्भवद्वैराग्यं पुरुषस्य चित्तम्भवेत् । नाभ्यासाधेयविशेषम्भवेद् (।) भवति च (।) ततो **विशेषदर्शनस्य बाधकत्वाद् अ**[1]**समानं** । वेदवाक्यानुमाने यदुक्तं प्रत्यक्षाणां शब्दानामप्रत्यक्षस्वभावाभावादिति (।) स्यादयन्दोषो यदि विशेषः स्वभा-वभूतः स्यात् । किन्तु परभावभूत इत्याह । **परभावभूतस्येति** । परभावङ्गतः परभाव-भूतः । अन्यस्वभाव इत्यर्थः । **अतद्विशेषत्वा**दित्यवाक्यविशेषत्वात् । **यतो नास्ति विशेषो वाक्यानान्ततस्मादभिन्नस्वभावानां सर्वेषां** पौ[2]रुषेयापौरुषेयाभिमतानां **पुरुषक्रिया** । पुरुषैः करणं । **न वा कस्यचित्** । लौकिस्यापि न पुरुषक्रियेत्यर्थः ॥

एवमाचार्यीयस्यादर्शनमात्रेण विपक्षाद्धेतोर्व्यतिरेकमिच्छतः ग्रन्थविरोधं प्रमाणविरोधं चोक्त्वा ती र्थि का नां परस्परव्याघातमाह । **किंचे**त्यादि । मृद-श्चेतना । एतच्च लो का य त दर्शनं । **आत्मा च मृच्चेतना** चेति द्वन्द्वः । **आदि-**श[3]ब्दात् क्षीरादिषु द्रव्यादि । तेषा**मभावस्य** साधनायानुपलम्भः परेणोक्तोपि **यस्तस्याभावस्याप्रसाधक** इष्ट आत्मादिवादिभिरनुपलम्भमात्रस्याप्रमाणत्वादिति । **स एवानुपलम्भ** आत्मादिनिषेधे प्रमाणत्वेनानिष्टः **किं हेत्वभावस्य** हेतोर्विपक्षाद् व्यतिरेकस्य **साधकः** । हेत्वभावे **चानुपलम्भं** **चास्य** वै शे षि का देः **प्रमाणयतः आत्मवादो निरालम्बो** निरा[4]श्रयः **स्यात्** । तत्रानुपलम्भस्याभावसाधनस्य सम्भवात् । तथा हि न **प्रत्यक्षेणात्मन उपलम्भो** नित्यपरोक्षत्वाभ्युपगमात् । अथ स्यादात्मनोनुमानमेवोपलम्भोस्त्येवेत्यत आह । **तत्कार्येत्यादि** । **अप्रत्यक्षत्वा-देवात्मनस्तत्कार्य**स्वभावरूपस्य लिङ्गस्यानिश्चयान्नानुमानमुपलम्भः ।

**त्वात्, (तत्) कार्यस्यासिद्धत्वात्। इन्द्रियादीनां विज्ञानमेव कार्यं, तस्य कादाचित्कत्वात्[7]। सापेक्ष्यसिद्ध्या प्रसिद्धिरुच्यते।** 429b

**किमप्यस्य कारणमस्तीति। न त्वेवम्भूतमिति एवं सुखादिकार्यं प्रसाधितं कञ्चिदर्थं न पुष्णाति। येन केनचित् कारणवत्त्वाभ्युपगमात्। तथा च सत्यनुपलम्भ एवात्मनः स्यात्। तस्मात् तमनुपलम्भेन प्रत्याचक्षाणः किमिति प्रतिव्यूढः कथं व्यतिरेकं साधयेत्।**

**कश्चिच्च मृदश्चैतन्यमनुपलभ्यमानमिच्छन् अदर्शनाद् वचनादेर्व्यावृत्ति-**

---

यथा नित्यपरोक्षाणामपीन्द्रियादीनामनुमानन्तथात्मनो भविष्यतीति चे[5]दाह। **इन्द्रियाणामित्यादि**। आदिशब्दात् स्मृतिर्बीजादीनां। **विज्ञानमेव कार्यं**न्तस्य **कादाचित्कत्वात्**। तथा हि सत्स्वपि रूपालोकमनस्कारेषु निमीलितलोचनाद्यवस्थासु विज्ञानस्याभावात्। पुनश्चोन्मीलितलोचनावस्थासु भावात्। विज्ञानकार्यं कारणान्तरसापेक्षं सिध्यति ततोऽस्य **सापेक्ष्यसिद्ध्या** इन्द्रियादीनाम्**प्रसिद्धिरुच्यते**।

एतदुक्तम्भवति। यत्सापेक्ष[6]मिदङ्कादाचित्कं। विज्ञानन्त**त्किमप्यस्य** विज्ञानस्य **कारणमस्ती**त्यनुमीयते तदेव चेन्द्रियमिति व्यवह्रियते। **न त्वेवंभूतमिति** न रूपविशेषेण मूर्त्तत्वादिना युक्तमिन्द्रियमनुमीयत इत्यर्थः। **एवमिति** यथा कादाचित्कविज्ञानकार्यान्यथानुपपत्त्येन्द्रियानुमानं। तथा सुखादिकार्यं यस्य **सुखादिकार्य**न्तत्किमप्यस्तीत्यनुमानेन तच्चात्मस्वरूपमिति **प्रसाधितं[7] कञ्चिदर्थ**मात्मवादिनो **न पुष्णाति**। **येन केनचि**दनिर्दिष्टविशेषेण कारणेन **कारणवत्त्वाभ्युपगमात्** सुखादीनां। न चैवंभूत आत्मा नित्यकर्त्तृभोक्तृत्वादिलक्षणत्वेनाभ्युपगमात्। यतश्च यथाभ्युपगतस्यात्मनो नास्ति कार्यलिङ्गं। **तथा च सत्यनुपलम्भ एवात्मनः स्यात्**। **तस्मात् तमा**त्मानन्तेना**नुपलम्भेन** प्रत्यक्षानुमाननिवृत्तिलक्षणेन **प्रत्याचक्षाणः किमिति प्रतिव्यूढः** प्रतिक्षिप्त आ[1]त्मवादिना। अनुपलम्भमात्रान्नास्त्यसत्त्वमात्मन इति। **कथ**मसाधनं सद् विपक्षाद्धेतोः प्राणादिमत्वादे**र्व्यतिरेकं साधयेत्**। भूतानामेव शक्तिश्चैतन्यमिष्यते चा र्वा कैः (।) भूतस्वभावा च मृदित्येवं **मृदः** खल्वपि **चैतन्यमनुपलभ्यमानमपीच्छन्** लो का - य ति कः। यदाह (।) "**तेभ्यो भूते**भ्यश्चैतन्यम्मदशक्तिवद्विज्ञानमि"ति। पुनस्तत एवाप्रमाणकादनुपलम्भात्। **अद[2]र्शनाद् वचनादे**रसर्वज्ञत्वादिसाधनाय लिङ्गत्वेनोपनीतस्य विपक्षाद् **व्यावृत्तिमा**ह। **दध्यादिकं क्षीरादि**ष्वनुपलभ्यमानमपीच्छन्। 28b

माह। अन्यो हि दध्यादिकं क्षीरादिषु। अपरः निरर्थकेषु (? अपरार्थेषु) संघातत्व-स्यादर्शनाद् व्यतिरेकमाह। को ह्यत्र नियमः संघातैरवश्यं परार्थैर्भवितव्यमिति। उपलम्भो दध्यादीनां क्षीरादिषु अनुमानमेव। अशक्तादनुत्पत्तेः।

अथ किं स एव भावः शक्तिरुतान्यदेव किञ्चिद्। तदेवेति चेत् तथैवोपलभ्येत, विशेषाभावात् (।) अन्यच्चेत्, कथमन्याभावे तद् अस्ति। उपचारमात्रं स्यात्॥ अयं परस्परव्याघात एषाम्॥

**तस्मात् तन्मात्रसम्बन्धः स्वभावो भावमेव वा।**
**निवर्त्तयेत्;**

---

**अपर** इति सांख्यः पुनः स एव। परार्थाश्चक्षुरादयः सङ्घातत्वादित्यभिधायापरार्थेषु शशविषाणादिषु **सङ्घातत्वस्यादर्शनाद् व्यतिरेकमाह**। एवन्तावदस्य परस्परव्याघातः। न चादर्शनमात्रेणास्य हेतोर्व्याप्तिः सिध्यति।[3] **को ह्यत्र नियमः सङ्घातैरवश्यं परार्थैर्भवितव्यं** यतः संघातत्वाच्चक्षुरादीनां पारार्थ्यसिद्ध्या-त्मार्थत्वं सांख्यस्य सिध्येत्। यदुक्तं दध्यादिकं क्षीरादिष्वप्यनुपलभ्यमानमपीति (।) तन्न। यस्मादस्त्येवो**पलम्भो दध्यादीनां क्षीरादिषु** (।) कोसावित्याहा**नुमानमिति**। अनुमानं चाहा**शक्तादनुत्पत्ते**रिति। यदि हि क्षीरादौ दध्यादिशक्तिर्न स्यात्ततो शक्तात् क्षीरादेर्दध्या[4]दि नोत्पद्येत। प्रयोगस्तु यद्यज्जनने न शक्तं न तस्य तत उत्पत्तिर्यथा शालिबीजाद् यवाङ्कुरस्य (।) उत्पद्यते च दध्यादिः क्षीरादिभ्यस्तस्मादस्ति दध्यादिशक्तिः क्षीरादाविति कार्यहेतुप्रतिरूपको वैधर्म्य-प्रयोगः। शक्तेरेव च दध्यादिः कार्यकारणयोरभेदादिति मन्यते।

**अथेत्यादि** सिद्धान्तवादी। योसौ दध्यादिको भावः पश्चादुपलभ्यते **किं स एव भा**[5]**वः शक्तिरुतान्यदेव किञ्चिद्** दध्यादेरर्थान्तरं। **तथैवेति** निष्पन्नरूपदध्यादिवत् क्षीरावस्थाया**मुपलभ्येत विशेषाभावात्**। **अन्यच्चे**दिति। दध्यादिभ्योर्थान्तरं चेच्छक्तिः। तदा **कथमन्यभावे**न्यस्य शक्त्याख्यस्य भावे। **तद्**दध्यादिकम**स्ति**। नैवेत्यभिप्रायः। दध्यादिजननसामर्थ्यात् क्षीरादौ दध्यादीत्यु**पचारमात्रं स्यात्**। अनुपलम्भमप्रमाणीकृत्य पुनस्तस्यैव[6] प्रमाणीकरण**मयम्परस्परव्याघात एषा**मात्मा-दिवादिनामित्युपसंहारः॥

यतश्चादर्शनमात्रान्नास्ति व्यतिरेकस्**तस्मात्तन्मात्रसम्बन्धः**। हेतुसत्तामात्र-सम्बद्ध**स्वभावः** साध्यत्वेनाभिमतः स्वयन्निवर्त्तमानो **भावमेवं** स्वभावभूतमेव हेतुत्वेनोपनीतं **निवर्त्तयेत्**। **वा** शब्दो वक्ष्यमाणविकल्पापेक्षी। **यथा वृक्षो** निवर्त्तमानः
29a **शिंशपान्नि**[7]वर्त्तयति। कस्मा**च्छाखादिमद्विशेषस्यैव तथा** शिंशपेति **प्रसिद्धेः स**

**यथा वृक्षः शिंशपां, शाखादिमद्विशेषस्यैव**[6] **तथा तच्छब्दप्रसिद्धेः स हि तस्य स्वभावः। स्वञ्च स्वभावं परित्यज्य कथं भावो भवेत्। स्वभावस्यैव रूपत्वादिति तस्य प्रतिबन्धादेव अव्यभिचारः॥**

**कारणं वा कार्यमव्यभिचारतः ॥२५॥**

**कारणं निवर्त्तमानं कार्यं निवर्त्तयति ॥** 430a

**अन्यथा तद्धि तस्य कार्यमेव न स्यात्। सिद्धस्तु कार्यकारणभावः स्वभावं नियमयति। उभयथा स्वभावप्रतिबन्धादेव**[1] **निवृत्तिः॥**

**अन्यथैकनिवृत्त्यान्यविनिवृत्तिः कथं भवेत्।**
**(नाश्ववानिति मर्त्त्येन न भाव्यं गोमतापि किम्) ॥२६॥**
**सन्निधानात् तथैकस्य कथमन्यस्य सन्निधिः।**
**गोमानित्येव मर्त्त्येन भाव्यमश्ववतापि किम् ॥२७॥**

---

वृक्ष**स्तस्य** शिंशपाख्यस्य **स्वभावः। स्वञ्च स्वभावं** वृक्षं **परित्यज्य कथं** शिंशपाख्यो **भावो भवेत्।** किङ्कारणं(।) **स्वभावस्यैव** वृक्षस्वात्मन एव भावत्वाच्छिंशपा**रूप**त्वात्। **इति** हेतो**स्तस्या**त्मभूतस्य साधनस्य शिंशपादेः स्वभाव**प्रतिबन्धादेव** स्वभावे साध्याभिमते वृक्षादौ यथोक्तेन प्रकारेण प्रति[1]बन्धादेवा**व्यभिचारः। कारणं वा** निवर्त्तमानमित्यध्याहारः। **कार्यन्निवर्त्तये**दिति प्रकृतं। कस्माद् (।) **अव्यभिचारतः** कार्यस्य कारणाव्यभिचारादित्यर्थः। **कारणमित्या**दिना व्याचष्टे।

**अन्यथे**ति। यदि कारणे निवर्त्तमाने कार्यं न निवर्त्तेत। तदा तत्कार्याभिमतं **तस्य** कारणस्य **कार्यमेव न स्यात्।** तस्मात् **कारणं निवर्त्तमानं कार्यम**वश्यं **निवर्त्तयति।** यद्यपि वासगृहादावग्निकारण[2]निवृत्तावपि न धूमस्य निवृत्तिस्तथापि दृष्टकारणव्यतिरेकेण नान्यस्मादस्योत्पत्तिरभिप्रेतेत्यर्थः। अत एवाह। **सिद्धस्त्वि**त्यादि। **सिद्धस्तु कार्यकारणभावः** कार्यस्य **स्वभावं** कारणे **नियमयति** (।) सति तस्मिन्भवत्यसति न भवतीत्येवन्तदव्यभिचारिणं करोति। **उभयथे**ति तादात्म्येन तदुत्पत्त्या वा यः **स्वभावप्रतिबन्ध**स्तस्मा**देव**। साध्यनिवृत्त्या हेतो**र्निवृत्तिः**।

**अन्यथे**ति यदि[3] प्रतिबन्धो नेष्यते। **एक**स्याप्रतिबन्धकस्य साध्यस्य **निवृत्त्यान्यनिवृत्तिः**। अप्रतिबद्धस्य साधनधर्मस्य **निवृतिः कथम्भवेत्** (।) नैव। यस्मा**न्नाश्ववानि**त्यश्वरहित इति कृत्वा **मर्त्त्येन** मनुष्येण **न भाव्यं गोमतापि किं। सन्निधानात्तथैकस्ये**ति स्वभावेनासम्बद्धस्य हेतोः सन्निधानात् **कथमन्यस्य** साध्यस्य **सन्निधि**र्नैव सन्निधानं। यस्माद्(।)

"**गोमानित्येव मर्त्त्येन** भाव्यमश्ववता[4]पि किं।"

**तस्मात् स्वभावप्रतिबन्धादेव हेतुः साध्यं गमयति। स च तद्भावलक्षणस्तदुत्पत्तिलक्षणो वा अविनाभावाख्यः ताभ्यां प्रदर्श्यते ॥२७॥**

**तस्माद् वैधर्म्यदृष्टान्ते नेष्टोवश्यामिहाश्रयः।**
**तदभावे (च तन्नेति वचनादपि तद्गतेः ॥२८॥**

**यतः।**

**तद्भा(व) हेतुभावौ हि दृष्टान्ते तदवेदिनः।**
**ख्याप्येते;**

**दृष्टान्ते हि साध्यधर्मस्य तद्भावः तन्मात्रानुबन्धेन[4] तत्स्वभावत्वेन ख्याप्यते।**

---

यत एवन्तस्मात् **स्वभावप्रतिबन्धादेव** साध्याभिमते वस्तुनि प्रतिबद्धत्वादेव **हेतुः** स्वसाध्यङ्गमयति। न तु सम्बन्धात्। कार्यकारणयोरसहभावेन व्याप्यव्यापकयोश्चैकत्वेन द्विष्ठसम्बन्धाभावात्। **स चेति** स्वभावप्रतिबन्धः। **तद्भावलक्षण** इति साध्यस्वभावलक्षणस्**तदुत्पत्तिलक्षणो वा**। स एव स्वभावप्रतिबन्धोऽ**विनाभावाख्यः** साधर्म्यवैधर्म्यदृष्टान्ता**भ्यां**[5] **प्रदर्श्यते** ॥

एतदुक्तम्भवति। साध्यसाधनयोः प्रतिबन्धग्राहकमेव प्रमाणं व्याप्तिग्राहकन्तेनैव साधनस्य साध्यायत्ततग्रहणात् साध्याभावेऽभावो गृहीत एव केवलन्तदविनाभावग्राहकं प्रमाणं विस्मृतत्वाद् दृष्टान्ताभ्यामुपदर्श्यते (।) यतश्च प्रमाणख्यापनादेवाविनाभावस्मृत्या साध्याभावे साधनाभावो निश्चितो भवति (।)

**तस्माद् वैधर्म्यदृष्टान्ते**। तद्विपर्ययेऽवश्यं निय[6]मेन इह हेतौ कार्यस्वभावलक्षण **आश्रयो** वस्तुभूतो धर्मी **नेष्टः** स्वभावानुपलम्भे त्विष्ट एव।

तत्र हि विपर्ययेणोपलम्भः ख्यापनीयः। किङ्कारणम् (।) **आश्रयो नेष्ट** इत्याह। **तदभावे चे**त्यादि। **तदभावे** व्यापककारणयोरभावे तद्व्याप्यकार्याख्यं लिङ्गं **नेति** न भवतीत्येवं वैधर्म्य**वचनाद्** अप्याश्रयरहितात्**तद्गते**र्व्यतिरेकगतेः (॥२८॥)

29b किङ्कारणं। **यत** इत्यादि। स्वभावहेतौ सा[7]ध्यस्य **तद्भावः** साधनव्यापकत्वं। कार्यहेतौ साध्यस्य **हेतुभावः** कारणत्वं **ख्याप्यते**। **तदवेदिन** इति तद्भावहेतुभावावेदिनः पुंसः।

तद्व्याचष्टे। **दृष्टान्ते ही**त्यादि। **साध्यधर्मस्य तद्भावः** साधनस्**वभावत्वं ख्याप्यते तन्मात्रानुबन्धेन**। साधनमात्रानुबन्धेन। **कृतक(त्व) निष्पत्तावेव** निष्पन्नस्**यानित्यत्वस्य** कृतकमात्रानुबन्धेन या **तत्स्वभावता** साधनस्वभावता तया। एवंभू[1]तया तद्भावः **ख्याप्यते**। न तु निमित्तान्तरात् पश्चाद् उत्पद्य-

**यः कृतकं स्वभावे जनयति सोऽनित्यरूपमेव सन्तं जनयतीति प्रमाणं दृष्टान्तेन ख्याप्यते। अन्यथा एकधर्मसद्भावात् तदन्येनाऽपि भवितव्य[5]मिति नियमाभावात् व्यभिचाराशंका स्यात्। तेन च प्रमाणेन साध्यधर्मस्य तन्मात्रानुबन्धः ख्याप्यते स्वकारणादेव तथा जातो नश्वरः क्षणस्थितिधर्मा[6]। अन्यतः तद्भावनिषेधात्। हेतुभावो वा सत्येव भावादिति प्रदर्श्यतेऽर्थान्तरस्य।[1]**

**तथा तद्भावहेतुभावे प्रसिद्धे सति अनित्य[7]त्वाभावे कृतकत्वाभावः।** 430b **दहनाभावेऽपि धूमः। एवं स्वभावो हेतुश्च चेत् कथं स्वं स्वभावं हेतुं चान्तरेण**

---

मानेनानित्यत्वेन। **यथैके** विप्रतिपन्ना इति। तन्मात्रवत्वमेव दर्शयन्नाह। **य** इत्यादि। **यो** हेतुः **कृतकं स्वभावे जनयति सोऽनित्यरूपमेव सन्तं जनयतीत्यर्थः।** इति अनेन द्वारेणाविनाभावविषयं **प्रमाणं दृष्टान्तेन ख्याप्यते**। न तु दर्शनादर्शनमात्रं। **अन्यथेति** यद्येवं प्रमाणं नोप[2]दर्श्यते। **तदैकधर्मसद्भावात्** साधनधर्मसद्भावात्। **तदन्येनापि** साध्यधर्मेणापि **भवितव्यमिति नियमाभावात्** साधनस्य साध्य**व्यभिचाराशंका स्यात्**।

यदि नाम दृष्टान्तेन प्रमाणमुपदर्शनीयन्तथापि किं सिद्धमित्याह। **तेन च प्रमाणेन** तन्**मात्रानुबन्ध** इति साधनमात्रानुबन्धः। कथं ख्याप्यत इत्याह। **कृतक**स्य यत्**कारण**न्तस्मा**देव** कृतकस्**तथा जातो**[3] जातो यो **नश्वरः** क्षणस्थितिधर्मा। क्षणिकत्वेनैव नश्वरो न तु कालान्तरं स्थित्वेत्यर्थः।

कथं पुनः स्वहेतोरेव तथोत्पन्न इत्याह। **अन्यत** इति स्वहेतोरन्यस्माद्विनाशहेतोः। तस्य कृतकस्य **तद्भावनिषेधाद्** अनित्यतास्वभावनिषेधाद् वक्ष्यमाणकात्। **हेतुभावो** वा। तेन च प्रमाणेन ख्याप्यत इति सम्बन्धः। साध्यधर्मस्य साधनंप्रति **हेतुभावो वा** कारण[4]त्वम्वा ख्याप्यते तस्मिन् **सत्येव** साधनस्य **भावा**दित्यनेन प्रकारेण प्रमाणं दृष्टान्तेन **प्रदर्श्यते**। कस्य पुनः साध्यस्य हेतुभावः प्रदर्श्यत इत्याह (।) **अर्थान्तरस्य** साधनाद् व्यतिरिक्तस्य। **तथा** दृष्टान्तोपदर्शितेन प्रमाणेन प्रसिद्धे **तद्भावहेतुभावे**। स्वभावस्य साध्यस्य तद्भावे। साधनस्वभावत्वे। कारणस्य हेतुभावे **प्रसिद्धे सति**। **दहनाभावे धूमो** न भवती[5]ति प्रकृतेन सम्बन्धः। **स** इत्यनित्यस्वभावो वह्निश्च। तस्येति कृतकत्वस्य धूमस्य च यथाक्रमं **स्वभावो हेतुर्वा** (।) वा शब्दः समुच्चये। यत एवं **कथम**सौ कृतको धूमो वा **स्वं स्वभाव**मनित्यं **हेतुं चाग्निमन्तरेण** भवेत् (।) नैव **भवे**दित्येवमनुद्दिष्टरूपे विषये व्यतिरेके

---

[1] T Bam-po gñis-pa = **द्वितीयमाह्निकं,** bam-po = 300 Ślokas.

**भवेत्। एवं आश्रयमन्तरेणाऽपि वैधर्म्यदृष्टान्ते व्यतिरेकः प्रसिध्यति ।।**

**येषां तद्भावहेतुभावौ[1] प्रसिद्धौ, तेषां—**

**विदुषां वाच्यो हेतुरेव हि केवलः ।।२९।।**

**यदर्थं दृष्टान्तवचनं, सोऽर्थः सिद्ध एवेति तदा किं तद्वचनेन। तत्प्रदर्शनेऽपि किं वैधर्म्यदृष्टान्ताश्रयेणेति मन्यमान [2]आचार्य आश्रयं प्रतिक्षिपति ।।**

**तेनैव ज्ञातसम्बन्धे द्वयोरन्यतरोक्तितः ।**
**अर्थापत्त्या द्वितीयेपि स्मृतिः समुपजायते ।।३०।।**

**यदाह 'अर्थापत्त्याऽन्यतरेण वा उभयप्रदर्शनात्' इति[3]। तत्राऽपि दृष्टान्तेन**

---

कथ्यमाने **आश्रयमन्तरेणापि वैधर्म्यदृष्टान्ते प्रसिध्यति व्यतिरेकः।**

तेन यदुच्यते[6] भ ट्टो द्यो त क रा भ्यां।

"व्यतिरेकोपि लिंगस्य विपक्षान्नैव लभ्यते।

अभावे स न गम्येत कृतयत्नैरबोधनादि"ति (।)

तन्निरस्तं।

एवन्तावत् (।) तद्भावहेतुभावख्यापनाय तदवेदिनः दृष्टान्तो वक्तव्यः। **येषां** पुनः पूर्वं **प्रसिद्धावेव तद्भावहेतुभावौ** यथा स्वं प्रमाणेन पक्षधर्ममात्रत्वं निश्चितन्**तेषा**न्तद्भावहेतुभावंप्रति **विदुषां हेतुरेव। यदर्थं**[7]मित्यन्वयव्यतिरेकनिश्चयार्थं। प्रतिपाद्यस्य स्वयमेव **सोऽर्थः सिद्ध इति** किन्तद्वचनेन। **तदेति** निश्चितान्वयव्यतिरेककाले। 30a

**यदपि** मूढं प्रति दृष्टान्तप्रदर्शनं क्रियते तदा **तत्प्रदर्शनेपि** दृष्टान्तप्रदर्शनेपि वैधर्म्यं। विनाप्याश्रयेण यथोक्तविधिना सिध्यत्येव व्यतिरेकः। ततः **किम्वैधर्म्यदृष्टान्ताश्रयेणेति मन्यमान** आ चा र्य **आश्रयं[1] प्रतिक्षिपति** न्या य मु खा दौ। तथा हि तत्रैवं चोदितं "यदा तर्ह्याकाशादिकं नित्यन्ता (वद) भ्युपैति प्रतिवादी (।) तदा कथन्नित्यात् कृतकत्वस्य व्यतिरेक" इति (।) तत्रा **चा र्य** आश्रयं प्रतिक्षिपन्नाह। **तदा सन्देह** एव नास्ति तदभावात्तत्रावृत्तेरिति।

एतदुक्तम्भवति। गृहीतप्रतिबन्धस्य तत्राकाशादौ व्यापकाभावाद् व्याप्याभावसिद्धेः। अनित्याभावश्च नित्यस्यास[2]त्वात् सिद्ध इति यावत्। यस्माद दृष्टान्ताभ्यां प्रतिबन्धः कथ्यते। **तेन** कारणेन **ज्ञातसम्बन्धे** हेतौ सति **द्वयोः** साधर्म्यवैधर्म्यदृष्टान्तयो**रन्यतरोक्तितः। द्वितीयेपि** ताभ्यामेवान्यतरस्मिन्ननुक्तेपि **स्मृतिः समुपजायतेऽर्थापत्त्या।**

**तद्भावहेतुभावप्रदर्शनं मन्यमानोऽर्थापत्त्या एकस्य वचनेन द्वितीयस्य[1] सिद्धिमाह। तथा हि। यत् कृतकं तदनित्यमेवेत्युक्ते अनर्थान्तरे व्यक्तमयमस्य[4] स्वभावः तन्मात्रानुबन्धी प्रमाणदृष्ट इति निश्चितः तद्भावनियमात्।**

---

एतदप्याचार्यवचनेन संस्यन्दयन्नाह। **यदाहेत्यादि** (।) न्या य मु खे चायं ग्रन्थः। वाशब्दस्तत्रैव पूर्वविकल्पापेक्षी।[3] **अन्यतरेणेति** साधर्म्यदृष्टान्तेन **वैधर्म्य-**दृष्टान्तेन वा। **उभयप्रदर्शनाद्** अन्वयव्यतिरेकप्रदर्शनात्। **तत्रापि** ग्रन्थे। **दृष्टान्तेन** स्वभावहेतौ कार्यहेतौ च यथा क्रमन्त**द्भावहेतुभावप्रदर्शनं** क्रियत इति **मन्यमान** आचा**र्योऽर्थापत्त्या** **एक**स्यान्वयस्य व्यतिरेकस्य वा **वचनेन** द्वितीयस्य यथाक्रमं व्यतिरेकस्यान्वयस्य वा **सिद्धिमाह**। एतदेवा[4]ह। **तथा ही**ति। यत्किञ्चित् **कृतक-न्तदनित्यमेवेत्युक्ते व्यक्तमवश्यमय**मनित्यत्वाख्यो धर्मो**ऽस्य** कृतकस्य **स्वभावस्त-न्मात्रानुबन्धी** कृतकमात्रानुबन्धी **प्रमाणदृष्ट इति** प्रमाणेन **निश्चितः**।

ननु कार्येऽपि कारणमवश्यम्भवति। न च तत्तस्य स्वभाव इत्यत आह। **अनर्थान्तर इति**। कथन्तन्मात्रानुबन्धीत्याह। **तद्भावनियमा**दिति। कृतकभावे[5]-ऽवश्यमनित्यताभावादित्यर्थः।

ननु न कृतकमात्रानुबन्धी स्वभावो नित्यत्वस्य प्रत्यक्षनिश्चितः क्षणिकोऽय-मित्यनिश्चयात्तत्कथमुच्यते प्रमाणदृष्ट इति। अथ कृतको विनाशं प्रत्यनपेक्षत्वा-त्तद्भावनियत इत्यनुमानदृष्टः (।)

तदयुक्तं (।) यतो निर्हेतुकेऽपि विनाशे यदैव घटादेर्नाशः प्रतीयेत तदैवाहेतुकः स्यान्नान्यदा। तत्कथं[6] क्षणिकत्वं। अथैकक्षणस्थायित्वेन घटस्योत्पत्तेः पूर्वमपि नाशः (।)

ननु यथैकक्षणस्थायित्वेनोत्पत्तिः स्वहेतुभ्यस्तथानेकक्षणस्थायित्वेनाप्युत्पत्तिः स्यात्। विचित्रशक्तयो हि सामग्र्यो दृश्यन्ते। न च यदि विनाशः क्वचित् कदाचिद् भवेत् (।) तत्कालद्रव्यापेक्षत्वाद् अस्यानपेक्षत्वहानिः। विनाशकहेत्वनपेक्षत्वाद् अन्य[7]था द्वितीयेऽपि क्षणे विनाशो न स्यात् तत्कालाद्यपेक्षत्वात्। अथ क्रमयौगपद्याभ्यां 30b सामर्थ्यलक्षणं सत्त्वं व्याप्तं नित्येषु च क्रमाक्रमनिवृत्तौ सत्त्वं निवर्त्तमानं क्षणिकेष्वेवावतिष्ठत इति सत्त्वयुक्तस्य कृतकस्य गमकत्वं।

तदप्ययुक्तं। क्षणिकत्वे सति क्रमाप्रतिपत्तेर्येन हि ज्ञानक्षणेन पूर्वकम्वस्तु प्रतिपन्नं न तेनोत्तरं येनोत्तरं न तेन पूर्वकमिति कथं क्रमप्रतीतिः।[1] यो हि पूर्व-

---

[1] Cig-Śog.

वस्तुप्रतिपत्यनन्तरमपरस्य ग्राहकः स क्रमग्राही स्यात् तथा वा क्षणिकत्वमस्य स्यात्। यस्य च बौद्धस्य काल एव नास्ति तस्य कथं क्रमग्रहः। भिन्नकालवस्त्वग्रहात्। कालाभावे चानेकवस्तुरूप एव क्रमः। तथा च नित्यस्यापि क्रमकर्त्तृत्वं न विरुध्यते। यथा च नित्यस्य क्रमकर्तृत्वादनेकरूपत्वन्तथा क्षणस्यापि स्यात्। अथ क्षणवद् द्वितीये क्ष[2]णे नित्यस्याप्यभावः स्यात्। कार्याभावात्।

तदयुक्तं कालाभावात्। भवतु वा क्रमग्रहस्तथापि कथं क्रमाक्रमाभ्यां सत्त्वस्य व्याप्तिः। क्रमयौगपद्यव्यतिरेकेणान्येन प्रकारेणार्थक्रियासम्भवात्। न च प्रकारान्तरस्य दृश्यानुपलम्भादभावनिश्चयः। एवं हि विशिष्टदेशादावेवाभावनिश्चयः स्यान्न सर्वदा। नाप्यदृश्यानुपलम्भाद् अभावनिश्चयः सन्देहात्[3]। तस्मान्नित्येषु क्रमाक्रमायोगेपि सत्त्वानिवृत्तेः कथं सत्त्वस्य क्षणिकस्वभावत्वमिति शंकरप्रभृतयः।

भवतु वा प्रकारान्तराभावात् क्रमयौगपद्याभ्यां सत्त्वस्य व्याप्तिस्तथापि नित्येषु न प्रत्यक्षादिना क्रमाक्रमायोगः सिद्धो नित्त्यानामतीन्द्रियत्वात् (।) तदसिद्धौ च न तेषु सत्त्वनिवृत्तिसिद्धिस्तदसिद्धौ च न सत्वस्य क्षणिकस्वभावत्वसिद्धिः।

किञ्च[1] (।) सत्त्वात् क्रमयौगपद्यानुमानं स्यात् तेनैव व्याप्तत्वान्न तु क्षणिकत्वानुमानन्तत्र क्रमकर्त्तृत्वासम्भवादिति।

अत्रोच्यते। क्रमयौगपद्ये प्रत्यक्षसिद्धे एव। सहभावो हि भावानां यौगपद्यं क्रमस्तु पूर्वापरभावः स च क्रमिणामभिन्नस्तत्प्रतिभासश्चैकप्रतिभासः। स त्वेकप्रतिभासानन्तरमपरस्य प्रतिभासः। क्रमप्रतिभासो न त्वेकस्यैवातिप्रसङ्गात्।

सत्यं [5] (।) तत्रापि यदैकस्य प्रतिभासो न तदापरस्य तद्भावे हि यौगपद्यप्रतिभासः स्यात्। तस्मात् क्रमिणोः पूर्वोत्तराभ्यां ज्ञानाभ्यां ग्रहे क्रमो गृहीत एव ततोऽभेदात्। केवलं पूर्वानुभूतवस्त्वाहितसंस्कारप्रबोधेनेदमस्मादनन्तरमित्यानुपूर्वीविकल्पोत्पत्त्या क्रमग्रहो व्यवस्थाप्यते। क्रमिणां ग्रहेपि कथंचिदानुपूर्वी विकल्पानुत्पत्तौ क्रमाग्रहव्यवस्थापनाद[6]त एव क्रमिणामेकग्रहेपि न क्रमग्रह उच्यते।

किं च कालाभ्युपगमवादिनोपि कथं क्रमग्रहः। एककालत्वात् सर्वकार्याणां। अथ भिन्नकालकारणोपाधिक्रमात् कार्यक्रमस्तदयुक्तं कालस्यैकत्वात। अत एव न नित्यस्य भावः।

अथ पूर्वापररूपत्वात् क्रमवान् कालः।

ननु तस्यापि क्रमो यद्यपरकालापेक्षस्तदानवस्था स्यात्। अथ तस्य स्वरूपेणा[7] 31a क्रमस्तथा सहायरहितानाम्बहूनां कार्याणामपि क्रमः स्यात्। अस्माकन्तु पूर्वादिप्रत्ययविषयो महाभूतविशेषः कालो लोकप्रतीतोस्त्येव। तस्य च भेदात् क्रमादिप्रतीतिर्युज्यत एव। नापि प्रकारान्तरेण नित्यस्य कर्तृत्वं सम्भवति। यतः

प्रकारान्तरेणैकदैककार्यकरणेऽनेककरणे वान्यदाऽवस्तुत्वं स्यात् कार्याभावात्। पुनः पुनः का[1]र्यकरणे च क्रम एव न प्रकारान्तरसम्भवः। अथ प्रकारान्तरेण नैकदा कार्यं करोति पुनः पुनश्च न करोति तदास्यावस्तुत्वं स्यात्। सर्वदाऽकर्तृत्वात्।

तस्मात् क्रमाक्रमाभ्यां घटादिरर्थक्रियाकारी प्रत्यक्षसिद्धः स एवायमिति ज्ञानादक्षणिकश्च प्रतीयत एव। तस्य च यदैककार्यकरणंप्रति सामर्थ्यन्तत्तदैव न पूर्वं न पश्चात्तत्कार्या[2]भावात्। सामर्थ्यं च तदव्यतिरिक्तमेवमुत्तरोत्तरकार्योत्पत्तावपि द्रष्टव्यं। सामर्थ्यभेदेन च पदार्थभेदात् क्षणिक एव क्रमाक्रमयोर्नियमः। तेन यत्र सत्त्वन्तत्र क्रमाक्रमप्रतीतावपि क्षणिकत्वप्रतीतिरेव। य एव क्षणिके क्रमाक्रमयोर्नियमोऽयमेव नित्येषु तयोरयोगः। तस्माद् यदेतद् घटादौ नित्यत्वं प्रतीतं तत् सत्त्वविरुद्धमिति[3] नित्यस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधः सिद्ध उच्यते। यथा च दृष्टे घटादौ सत्त्वं क्षणिकत्वव्याप्तं तथाऽदृष्टेष्वप्यविशेषादिति व्याप्तिं सर्वोपसंहारेण प्रतिपद्य यथा यथा तेषु सत्त्वं निश्चीयते तथा तथा क्षणिकत्वानुमानं। सत्त्वानिश्चये तु शशविषाणवत्तेऽवसत्ताशंकया क्षणिकत्वाप्रतीतिः स्यात्(।) न च तत्रापि बाधकप्रमाणेनैव क्षणि[4]कत्वस्य सिद्धत्वादनुमानस्य वैयर्थ्यं। गृहीतव्याप्तिकस्य पुंसः सत्त्वनिश्चयमात्रेणैव साध्यार्थविगतेर्बाधकोत्थानवैयर्थ्यात्। विस्तरतस्त्वयं व्याप्तिग्रहणप्रकारो **नैरात्म्यसिद्धा**वभिहित इति तत्रैवावधार्यः।

ये तु सत्त्वस्य विपक्षाद् अभावेन सर्वत्र क्षणिकत्वव्याप्तं प्रतिपद्य सत्त्वात्तत्रैव क्षणिकत्वमनुमापयन्ति। तेषामनुमानोत्थानमे[5]व न स्यात्। व्याप्तिग्रहणादेव प्रमाणात् सर्वत्र क्षणिकत्वस्य सिद्धत्वात्। न च धर्मी सिद्धः सर्वस्य त्रैलोक्यस्य प्रत्यक्षत्वाद्धेतुश्चासिद्धः। पक्षीकृते च सर्वस्मिन् धर्मिणि बाधकवशाद् यदि विपक्षाभावः सिद्धस्तदा साध्यस्यापि सिद्धत्वान्नानुमानस्योत्थानं स्यात्।

नान्यश्च धर्मी सिद्ध इति कथं बाधकस्य प्रवृत्तिरिति यत्किञ्चिदेतत् (।) तस्मात् स्थितमेतद[6]स्य सत्त्वविशिष्टस्य कृतकत्वस्य क्षणिकत्वाख्यो धर्मः स्वभावस्तन्मात्रानुबन्धी अस्य वा क्षणिकत्वस्य स्वभावस्तन्मात्रानुबन्धी कृतकमात्रानुबन्धी प्रमाणदृष्ट इति।

यद्वा सत्त्वविशेषणरहितस्यापि कृतकत्वादेः क्षणिकत्वे साध्ये नानैकान्तिकत्वं। यतस्तस्य प्रथमे क्षणे य एव स्वभावः स एव चेत् द्वितीये क्षणे तदाऽभूत्वा भवनमेव स्यात् प्रथम[7]क्षणवत्। ततश्च क्षणिकत्वं। अथ प्रथमक्षणे कृतकस्य 41b जन्मैव न स्थितिर्द्वितीये तु क्षणे स्थितिरेव न जन्म। एवमपि क्षणिकत्वं स्यात्। जन्मजन्मिनोरभेदात्। स्थितिस्थितिमतोश्च। न च द्वितीये क्षणे जन्म विना स्थिति-

**एवं ज्ञाततद्भावस्य ह्यर्थापत्त्याऽनित्यत्वाभावे कृतकत्वाभाव इति भवति। न हि स्वस्याभावे भावो[5] भवति। अभेदात्। अन्यथा तद्भावे भवतीत्येव न स्यात्। तथा हि तदभावेऽभाव इत्युक्तम्। एवं तद्भावतावेदनेऽयमस्य स्वभाव इति तदभावे न भवति। अन्यथा[6]ऽयोगादिति तत्स्वभावताप्रतिपत्त्याऽन्वयस्मृतिर्भवति।**

---

र्युक्ता। जन्म चेन्न तदा स्थितिस्तस्याद्वितीयादिक्षणभावित्वात्। तत्राप्येवमिति सर्वत्रोत्पत्तिरेव न स्थितिरिति क्षणिकत्वमेव। उत्पत्तिश्च हेतुकृतेति तत्रै[1]व कृतकत्वं। न स्थितौ। तस्मात् कृतकत्वस्याक्षणिकत्वविरुद्धत्वान्नानैकान्तिकत्वं। विस्तरेण चास्य कृतकत्वस्य क्षणिकत्वव्याप्तिर्नै **रा त्म्य सि द्धा** व[1]भिहितेति तत्रैवावगन्तव्या।

तस्मात् सत्त्वागन्तर्भूतस्यापि कृतकत्वस्य व्याप्तिः प्रमाणदृष्टा। तदाहास्य स्वभावस्तन्मात्रानुबन्धी प्रमाणदृष्टस्तद्भावनियमात्। कृतकभावेऽवश्यमनित्यताभावनियमादिति।

**एवं ज्ञातत[2]द्भावस्या**नित्यस्वभावं कृतकं ज्ञातवतः पुंसो**र्थापत्त्या** साध्यस्यानित्य**त्वस्याभावे कृतकन्न भवती**त्येवंनिश्चयो **भवती**ति। यस्मान्न**हि** स्वस्यात्मभूतस्यानित्यत्वस्या**भावे भावो भव**ति। तदात्मभूतं कृतकत्वम्भवति। किं कारणम्(।) **अभेदात्** साध्यसाधनयोः। **अन्यथे**ति यद्यनित्यत्वाभावे कृतकत्वम्भवेत्। तदा **तद्भावे** कृतकत्वाभावेऽवश्यमनित्यत्वम्**भवती[3]त्येव न स्यात्**। **तथे**ति यथा साधर्म्यप्रयोगे वैधर्म्यगतिस्तथा वैधर्म्यप्रयोगेऽन्वयस्मृतिर्भवतीति वक्ष्यमाणेन सम्बन्धः। तदभाव इति नित्यत्वाभावे कृतकत्वन्न भवत्यवश्यमित्युक्ते। तत एव वैधर्म्यप्रयोगात् **तद्भावतावेदिनः**। साधनस्य साध्यस्वभावतावेदिनः पुंसः। कथन्तद्भावतां वेत्तीति चेदाह। **तथा ही**त्यादि। **अय**मनित्यत्वाख्यो **धर्मोस्य** कृ[1]तकत्वस्य **स्वभावो** येन **तदभावे** कृतकत्वन्न **भवति**। **अन्यथे**ति (।) अनित्यत्वं यदि कृतकस्य स्वभावो न भवेत्। तदा तदभावे कृतकत्वन्न भवेदित्यस्या**योगात्**। **इति** हेतोस्**तत्स्वभावताप्रतिपत्त्या** कृतकस्यानित्यस्वभावतोप्रतिपत्त्या**न्वयस्मृतिर्भवति।**

एतदुक्तम्भवति। य एव हेतोः साध्य एव भावः स एव विपक्षेऽभाव इत्यन्वयव्यतिरेकयोस्ता[5]दात्म्यमन्योन्यव्याप्तिश्चातो हेतावन्वयप्रतीत्या व्यतिरेकप्रतीतिर्व्यतिरेकप्रतीत्या चान्वयप्रतीतिरनुमानमेव।

तेन यदुच्यते।

---

[1] Pramāṇavārtika 1 : 224.

**तथा यत्र धूमः तत्राग्निरित्युक्ते कार्यं धूमो दहनस्य। तेन धूमे सति अवश्य-मग्निर्भवति। अन्यथाऽर्थान्तरस्य तदनु[7]बन्धनियमाभावात् स्वातन्त्र्यं भावस्य** 43 1a **स्यात्। अतः तदभावेऽपि स्वभावस्य वैकल्यात् नाभावः स्यात्। सति कार्येऽवश्यं कारणं भवति। इदमेव कारण(स्य) कारणता अर्थान्तर[1]भावे स्वभावोपधानम्। कार्यस्याऽपि तद्भाव एव भावः। तच्चाऽस्ति धूमे। तस्मात् कार्यं धूम इत्येवम-न्वयेन विदिततत्कार्यत्वस्य दहनाभावे धूमो न भवतीति अर्थापत्या भवति व्यति-रेकप्रतिपत्तिः।**

**तथा असत्यग्नौ धूमो न भवतीत्युक्तेर्धूमेऽवश्य मग्निर्भवतीति अर्थाद् अन्वयप्रतिपत्तिर्भवति। अन्यथा तदभावे किन्न भवेद्।**

**ननु च नित्यानित्यार्थकार्य[3]त्वाभावेऽपि तयदभावे श्रवणज्ञानं न**

---

"सामर्थ्यमिच्छतः की र्त्ते र्न प्टं द्वित्वावधारणमि"ति (न्यायमंजरी ?) तदपास्तं।

यद्वा **नैवैतत्** प्रमाणं केवलं संकेतवशाद् अन्वयमुखेन व्यतिरेकमुखेण (?न) वा प्रयुक्तमेकं वाक्यमुभयं गमयतीत्यदोषः।

स्वभावहेतावन्यतरप्र[6]योगादुभयगतिमुक्त्वा कार्यहेतावाह। **तथे**त्यादि। **यत्रे**ति सर्वनाम्ना सर्वोपसंहारस्**तत्राग्नि**रवश्य**मित्युक्ते**ऽस्मादेवान्वयवचनात् **कार्यन्धूमो दहनस्ये**त्येवन्निश्चयो भवति। किङ्कारणं(।) येन **धूमेऽवश्यमग्निर्भवति**। **अन्यथा** यदि न कारणमग्निर्धूमस्य तदा**र्थान्तर**स्याग्नेस्**तदनुबन्धनियमाभावात्**। धूमे योनुबन्धो व्यापनं[7]तन्नियमस्याभावात्। ततश्च **स्वातन्त्र्यम्भावस्य** धूमस्व- 32a भावस्य **स्यात्**। **अत** इति स्वातन्त्र्यात् **तदभावे**प्यग्न्यभावेपि धूमस्**वभावस्य वैक-ल्यान्नाभावः स्या**न्न चैवन्तस्मात् कार्यो धूम एष्टव्यः। यतः **कार्ये** तु धूमेभ्यु-पगतेऽवश्यन्तत्र **कारण**मग्निर्**भवति**। **इद**मित्यस्यैव समर्थनं। **अर्थान्तरभाव** इति कार्याभिमतस्य भावे **स्वभावोपधानं** स्वरूपप्रत्युपस्थानं। **कार्यस्या**[1]पि **तद्भाव एव** कारणभाव एव **भावः** कार्यत्वं। **तच्च** कारणभाव एव भावित्वमस्ति **धूमे**। **तस्मात् कार्यं धूम इत्येवमन्वयेन विदिततत्कार्यत्वस्य** पुंसो **दहनाभावे धूमो न भव**-तीत्यर्थाद् भवति।

अधुना वैधर्म्येणान्वयगतिमाह। **तथे**त्यादि। **असत्यग्नौ धूमो न भवतीत्युक्ते**-ऽस्माद् व्यतिरेकवचनाद् विदिततत्कार्यत्वस्य **धूमेऽवश्यमग्निर्भवतीत्येवमर्था**[2]**द् अन्वयप्रतिपत्तिर्भवति**। **अन्यथा** यदि वैधर्म्यवचनेनाग्नेः कार्य धूम इत्येतन्न कथ्यते **तदभावे**ऽग्न्यभावे **किन्न भवेद्** धूमो भवेदेवेति व्यतिरेकनिश्चय एव न स्यात्। तस्मात् स्थितमेतत् (।) सत्यर्थान्तरत्वे यदभावे यदवश्यन्न भवति तत्तस्य कार्यमतश्च **व्यतिरेककथनादन्वयो गम्यत इति**।

**भवति। न वै न भवति। तयोरेव ततः संशयात्। अन्यथाऽभावेन निश्चितात् कथं तद्भावपरामर्शेन संशयः स्यात्? केवलं भावनि[1]श्चयाभावात् नास्तीत्युच्यते।**

---

अत्र परो व्यभिचारमाह। **ननु** चेत्यादि। **नित्यानित्यार्थयोः[3] कार्यन्नित्या**-नित्यार्थकार्यन्तद्भावस्तत्त्वं। तस्या**भावे**पि। तथा हि **श्रवणज्ञानं** शब्दस्यैव **धर्म**-त्वादसाधारणन्तत्र न ज्ञायते किन्नित्यस्य सतः शब्दस्य कार्य श्रवणज्ञानमुतानित्य-स्येति। ततश्च न नित्यार्थकार्यत्वं श्रवणज्ञानस्य नाप्यनित्यार्थकार्यत्वन्तथापि **श्रवणज्ञानन्न भव**ति तदभावेपि नित्यानित्यार्थाभावे। तद्व्यतिरेके व्यतिरिच्यत इति यावत्। नि[1]त्यार्थाभावे तावन्न भवत्यनित्येषु घटादिष्वभावात्। अनित्याभावेपि न भवति नित्येष्वाकाशादिष्वभावात्। **न वै न भव**तीति सि द्धा **न्तवादी**। न वै तच्छ्रावणत्वन्नित्यानित्याभावे न भवतीत्येवं शक्यम्विज्ञातुं। यदि तु तदभावेन भवतीत्येवन्निश्चयः स्यात् तदा तत्कार्यत्वंन्नियमेन स्यात् किन्तु तदभावे न भवतीत्येव नास्ति। किङ्कारण[5]न्**तयोरेव** नित्यानित्यन्वयो**स्ततः** श्रावणत्वात् **संशयात्**। **अन्यथा** नित्यानित्ये वस्तु**न्यभावे**न **निश्चिता**च्छ्रावणत्वात्**कथन्तद्भावपरामर्शेन** शब्दे **संशयः स्यात्**। तस्मान्नित्यानित्याभ्यां व्यावृत्तिरेव नास्ति श्रावणत्वस्य।

कथन्तर्ह्यसाधारणत्वाच्छ्रावणत्वं नित्यानित्ययोर्नास्तीत्युच्यत इत्याह। **केवल**-न्त्वित्यादि।[6] नित्यानित्येषु श्रावणत्वस्य **भावनिश्चयाभावात्**। श्रावणत्वं नित्या-नत्ययो**र्नास्तीत्युच्यते**।

नन्वनित्यादिके साध्ये यदि श्रावणत्वं सपक्षविपक्षयोर्दृष्टं स्यात्। स्या-च्छब्दे श्रावणत्वात् सन्देहः। प्रमेयत्वादिव। न चैतत् सपक्षाविपक्षयोर्दृष्टमतो

३२b ऽप्रतिपत्तिरिति भ ट्टो द्यो त क रौ। अथ शब्दवस्तु कदाचिन्नित्यमनित्यम्वा व[7]स्तु धर्मश्च श्रावणत्वन्तेनातः सन्देह उच्यते।

तदयुक्तं। एवं हि वस्तुधर्मत्वस्यैव सन्देहहेतुत्वं स्यान्न श्रावणत्वस्येति। अत्रोच्यते। यदि हि यत्र यत्र श्रावणत्वन्तत्र तत्र नित्यानित्ययोरभाव इति प्रतिपन्नं स्यात् ततो नित्यानित्ययोरप्रतिपत्तिः स्यात्। न चानित्यादियुक्ते घटादौ श्रावण-त्वस्याभाव इति शब्देप्यभावस्तेन श्रावणत्वात् तत्र सन्देह एव।

ननु श्रावणत्वं श्रवणज्ञानंप्र[1]ति सामर्थ्यन्न च नित्यस्य सामर्थ्यमस्त्यर्थक्रिया-विरोधात् (।) तत्कथमतः सन्देहः (।) अनित्यत्वस्यैव निश्चयादिति।

एवम्मन्यते। यदि सामर्थ्यमात्रं हेतुस्तदा सत्त्वमेव तदिति न काचित् क्षतिः (।) (।) तस्य सपक्षसाधारणत्वादेवं प्रमेयत्वादिष्वपि द्रष्टव्यं। अथ श्रवणज्ञानंप्रति यत्सामर्थ्यन्तद्धेतुस्तच्च न क्वचिदनित्यत्वव्याप्तं सिद्धमिति कथमतोऽनित्यत्व-सिद्धिरसाधारणत्वादयंशब्द एव[2] तदनित्यत्वव्याप्तं सिद्धं। तेनैव हि बाधकेन

**यदा पुनः दृष्टान्तेन अग्निधूमयोः हेतु फल भावो न दर्शितः, तदा यत्र धूमः तत्राग्निरित्येव न स्यात् प्रतिबन्धाभावात्। अग्न्यभावे धूमो[5] नास्तीति अर्थाद् व्यतिरेकसिद्धिः। तथा वैधर्म्येण अभावासिद्धेः अन्वयस्मृतिः व्यतिरेकः स्यात्। एकसद्भावेऽन्यप्रसिद्ध्यर्थं तदभावेऽसम्भवात् दृष्टान्तेन यथोक्त[6]स्वभावप्रतिबन्धोऽयमेव प्रदर्शितः॥**

हेतुस्वभावाभा(वो)तः प्रतिषेधे च कस्यचित्।

हेतुः;

**तावेव हि निवर्त्तमानौ स्वप्रतिबद्धं निवर्त्तयत इति कस्यचिदर्थस्य प्रतिषेधमपि साधयितु[7]कामेन हेतोः व्यापकस्य स्वभावस्य च निवृत्तिर्हेतुत्वेनाऽख्येया** 431b
**अप्रतिबन्धे हि कथं एकनिवृत्याऽन्यनिवृत्तिसाधनम्।**

युक्तोपलम्भस्य तस्य चानुपलम्भनम ॥३१॥

---

प्रमाणेनानित्यत्वस्य तत्र सिद्धत्वाच्छ्रावणत्वस्य वैयर्थ्यं स्यात्। एवं स चासाधारणहेतूनामगमकत्वं बोद्धव्यं।

तस्मात् स्थितमेतत् (।) कार्यलिङ्गौ दृष्टान्ताभ्यां साध्यसाधनयो**र्हेतुफलभावः** कथनीयो न तु दर्शनादर्शनमात्रं। एवं ह्यर्थापत्त्याऽन्यतरेण द्वितीयप्रतीतिर्भवेत्। अन्यथा न स्यादित्याह। **यदा पुन**रित्यादि। **तदा यत्र धूमस्तत्राग्निरित्येव न स्या**दित्यन्वय एव न स्यात् **प्रतिबन्धाभावात्**। यदा चान्वय एव न सिद्धस्तदा कुतो**ऽग्न्यभावे धूमो नास्ती**त्यर्थाद् **व्यतिरेकसिद्धिः। तथा वैधर्म्ये**णादर्शनमात्रस्य व्यापनात् साध्याभावे हेत्व**भावासिद्धेः** कुतस्तद्द्वारेणा**न्वयस्मृ**तिः। **यथोक्त** इति तादात्म्यतदुत्पत्तिलक्षणः। **एकसद्भावे** कार्यस्वभावलिङ्गस्य सद्भावे**ऽन्यप्र**[4]**सिद्ध्यर्थं** कारणस्य स्वभावस्य च लिङ्गिनः प्रसिद्ध्यर्थं। **तदभावे यथोक्तप्रतिबन्धा**भावे सत्येकसद्भावेऽन्यप्रसि**द्धेरसम्भवात्**॥

**हेतुस्वभावाभाव** इति हेत्वभावो व्यापकस्वभावाभावश्च। अत इत्यनन्तरोक्तात् कारणात् **कस्यचित्** कार्यस्य व्याप्यस्य **च प्रतिषे**धे। चकारात् प्रतिषेधव्यवहारे च साध्ये। **हेतु**र्लिङ्गं। किङ्कारणं (।) यस्मात् **तावेव हि** कारणव्यापकौ[5]**निवर्त्तमानौ स्वप्रतिबद्धं** कार्यं व्याप्यं च स्वभावं **निवर्त्तयत इति कस्यचिदर्थस्य** कार्यस्य व्याप्यस्य वा **प्रतिषेधमपि साधयितुकामेन**। अपिशब्दाद् व्यवहारमपि (।) **हेतोः** कारणस्य **व्यापकस्य** च **स्वभावस्य निवृत्तिर्हेतुत्वेनाख्येया**। किङ्कारणं। **अप्रतिबन्धे** **ही**त्यादि। न च ताभ्यामन्यः प्रतिबन्धोऽस्तीति भावः। **युक्तो** न्याय्य **उपलम्भो** यस्य स तथा[6]दृश्यस्येत्यर्थः। **तस्य**

**प्रतिषेधहेतुः। प्रतिषेध[1]विषयव्यवहारस्य हेतुरिति तद्धेतुरित्युक्तः। तथाभूतानुपलम्भस्य स्वयं प्रतिषेधरूपत्वात् कारणव्यापकानुपलब्धी इत्युभयं हेतुः॥**

**इतीयं त्रिवि(धाप्युक्ता)नुपलब्धिरनेकधा।**
**(तत्तद्विरुद्धाद्यगतिगति)भेदप्रयोगतः॥३२॥**

**त्रिविध एव प्रतिषेधहेतुः। कारणस्य व्यापकस्य स्वात्मनश्च उपलभ्यसत्त्वस्यानुपलब्धिः। सोऽयं प्रयोगवशेन तद्विरुद्धाद्यगतिगतिभेदेन त्रिविधः प्रोक्तः। तदगतिः तद्विरुद्धगतिः विरुद्धकार्यगतिश्च एतदेव तद्गतितद्विरुद्धगत्या-**

---

**चे**ति स्वभावस्य**ानुपलम्भनं प्रतिषेधहेतुः**। न चायं प्रतिषेधस्यैव हेतुः किन्तु **प्रतिषेधविषयो व्यवहारस्तस्य हेतुरिति** कृत्वा तद्धेतुः प्रतिषेधहेतु**रित्युक्तः**। किं कारणं (।) न प्रतिषेधहेतुस्**तथाभूतानुपलम्भस्य** दृश्यानुपलम्भस्य **स्वयं प्रतिषेध-**
33a **रूपत्वात्**। हेतुव्यापकानुपलब्धिरिति **कारणा**नुपलब्धि**र्व्यापका**[7]**नुपलब्धिश्च**। **उभयस्यापी**ति प्रतिषेधस्य प्रतिषेधव्यवहारस्य च॥

**इति** एव**मियम**नुपलब्धिः। संक्षिप्य **त्रिधाप्युक्ता** सती पुन**रनेकधो**क्ता। यथात्रैवाऽष्टधा प्राग् विभक्ता। केन प्रकारेणेत्याह। **तत्तद्विरुद्धे**त्यादि। तच्छब्देन प्रक्रान्तं स्वभावकारणव्यापकत्रयं गृह्यते। तेन स्वभावदित्रयेण विरुद्धन्त द्विरुद्धन्त्रि[1]विधमेव भवति। स्वभावविरुद्धकारणविरुद्धव्यापकविरुद्धभेदाः। तद्विरुद्धमादिर्यस्य **तत्तद्विरुद्धादि**। आदिशब्देन विरुद्धकार्यस्य कारणविरुद्धकार्यस्य च परिग्रहः। तच्च तद्विरुद्धादी। तयो**रगतिगती**। तदगतिस्तद्विरुद्धादिगतिश्चेत्यर्थः। तयोर्भेदस्तेन **प्रयोगस्तस्मात्** प्रयोगभेदतोनेकधोक्ता। तत्र तदगत्या तिस्रोनुप[2]लब्धयः संगृहीताः स्वभावानुपलब्धिः कारणानुपलब्धिः व्यापकानुपलब्धिश्च। तद्विरुद्धगत्या तिस्र एव। स्वभावविरुद्धोपलब्धिः कारणविरुद्धोपलब्धिः व्यापकविरुद्धोपलब्धिश्च। आदिशब्दात् विरुद्धकार्योपलब्धिः कारणविरुद्धकार्योपलब्धिश्चेति। एवमष्टविधस्य प्रागुक्तस्यानुपलम्भस्य संग्रहो भवति।

**त्रिविध एव** हीत्यादिना कारि[3]कार्थमाह। **उपलभ्यसत्त्वस्ये**त्युपलम्भयोग्यस्य हेतो**रनुपलब्धिरि**ति सम्बन्धः। **व्यापकस्य स्वात्मनश्चोपलभ्यसत्त्वस्ये**ति वर्त्तते। **सोय**न्त्रिविधप्रतिषेधहेतुः **प्रयोगवशेना**नेकप्रकार उक्त इति सम्बन्धः। कथं प्रयोग वशेनेत्याह। **तत्तद्विरुद्धाद्यगतिगतिभेदप्रयोगत** इति। **एतदेव तस्यागत्ये**त्यादिना विभज्यते।[4] **तस्यागत्ये**ति स्वभावकारणव्यापकानुपलब्ध्या। **तद्विरुद्धगत्ये**ति स्वभावकारणव्यापकविरुद्धोपलब्ध्या। **विरुद्धकार्यगत्ये**ति विरुद्धकार्योपलब्ध्या।

**दिभेदप्रयोगैः। यथोक्तं प्राक् ॥**

घ. अविनाभावनियमः

**कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।**

---

**इत्यादिभेदप्रयोगै**रिति कारणविरुद्धकार्योपलब्ध्यादिभेदप्रयोगैः। **यथोक्तं प्राग**नुपल ब्धि प्र भे द चि न्ता यां (११६) ॥

यत एवं प्रतिबन्धवशाद् गमकत्वात्तस्मात्। कार्य**कारणभावाद्वा**[5] **नियामकात्** साध्यसाधनयोर्व्यभिचारसाधकात् **स्वभावाद्वा** तादात्म्यलक्षणा**न्नियामकात्**। कार्यस्य स्वभावस्य च लिङ्गस्या**विनाभावः** साध्यधर्मं विना न भाव इत्यर्थः। न चासाधारणस्य साध्याविनाभावोऽस्ति सन्देहहेतुत्वात्। अविनाभावे तु तन्निश्चायकेनैव प्रमाणेन तत्र धर्मिणि साध्यस्य सिद्धत्वात् कथमस्य गमकत्वं।

तेन भट्टेन य[6]दुच्यते ॥

"अविनाभावशब्दोप्य....सकलार्थभाक्।
नानुमा योग्यसम्बन्धप्रतिपत्तिं करोति नः॥
यदि तावद् विनाभावो न स पश्चाद् विशिष्यते।
ततोऽसाधारणेप्यस्ति स इति स्यादकारणं॥
यो ह्यसाधारणो धर्मः स तेनैवात्मसात्कृतः।
विना न भवतीत्येव ज्ञातो हेतुः प्रसज्यत' इति (।)

तदपास्तं।[7] अविनाभाव एव हि नियमः। साध्यं विना न भवतीति कृत्वा। 33b

यद्येवं किमर्थं पुर्नानियमग्रहणं(।)सत्यं(।) परमतनिरासार्थं। स ह्यविनाभावव्यतिरेकेणान्यं नियममिच्छति। यदाह भट्टः॥

"एवमन्योक्तसम्बन्धप्रत्याख्याने कृते सति।
नियमो नाम सम्बन्धः स्वमतेनोच्यतेऽधुना॥
कार्यकारणभावादिसम्बन्धानां द्वयी गतिः।[1]
नियमानियमाभ्यां स्यान्नियमस्यानुमाङ्गता॥
सर्वेप्यनियमा ह्येते नानुमोत्पत्तिकारणं।
नियमात् केवलादेवन्न किञ्चिन्नानुमीयते॥
तस्मान्नियम एवैकः सम्बन्धोऽत्रावधार्यते।
गमकस्यैव गम्येन स चेष्टः प्राङ्ग निरूपितः॥
नियमस्मरतः सम्यग् नियम्यैकाङ्गदर्शनात्।
नियामकाङ्गविज्ञानमनुमानन्तदङ्गिष्वि"ति (।)[1] तदपा[2]स्तं॥

**अविनाभावनियमोऽ(दर्श)नान्न न दर्शनात् ॥३३॥**
**अवश्यंभावनियम(: कः परस्यान्यथा परैः) ।**
**अर्थान्तरनिमित्ते वा धर्मे वाससि रागवत् ॥३४॥**

कार्यकारणभावादिसम्बन्धाभावे नियम एव न स्यात्। अप्रतिबद्धानां सहभावनियमाभावात्। पाण्डुत्वादिमात्रस्य चाग्न्यकार्यत्वात्। देशकालाद्यपेक्षया च लिङ्गस्य गमकत्वान्नियम एवेति कथं कार्यकारणभावादिसम्बन्धेपि द्वयी गतिरुच्यते। अथ स्यात् (।) कार्यकारणभावादिसम्बन्धमभ्युपगच्छतापि यावत् साधनस्य साध्ये[3]नियमो न निश्चितस्तावन्न साध्यप्रतिपत्त्यङ्गत्वन्तेन कार्यकारणभावे सत्यपि नियम एव सम्बन्धोभ्युपगम्यते। तस्यैव प्रतिपत्त्यङ्गत्वात्तद्वक्तुं स एवैकोनुमानाङ्गं शेषास्तद्व्यवितहेतव इति। तदयुक्तं (।) नियमो हि तदायत्तैव (।) सा च तादात्म्यतदुत्पत्तिस्वभावैव (।) तेन तादात्म्यतदुत्पत्तिनिश्चय एव नियमनिश्चयो न पुनर्दर्शनाद[4]र्शनाभ्यान्नियमनिश्चयो व्यभिचारात्।

ननु यथा दर्शनादर्शनयोर्नियमनिश्चयंप्रति व्यभिचारस्तथा कार्यकारणभावनिश्चयेपि स्यादिति।

तदयुक्तं। विशिष्टाभ्यामेव दर्शनादर्शनाभ्यां कार्यकारणभावनिश्चयाभ्युपगमात्। एतच्चात्रैव वक्ष्यति।

यदप्युम्वेकेनोच्यते। "शतशो य[5]दग्नौ धूमदर्शनन्तदन्यथानुपपत्त्या नियतोयं धूमोग्नाविति यन्नियमज्ञानमुत्पद्यते। तस्यानग्नौ धूमदर्शनम्बाधकं (।) न च तदस्तीति धूमस्याग्नौ नियम" इति।

तदयुक्तं। अग्निकार्यत्वाभावे ह्यनग्नौ धूमादर्शनस्यानुपलब्धिमात्रत्वेनाप्रमाणस्याबाधकत्वादनग्नौ धूमस्य शंक्यमानत्वेन कथमग्नौ नियमः (।) स्तस्मात् स्थितमेतत् (।)

"कार्यका[6]रणभावाद्वा स्वभावाद्वा नियामकाद् (।)
अविनाभावनियमः" (।) कार्यकारणभावादिनिश्चयाच्चाविनाभावनियमनिश्चयो "ऽदर्शनान्न न दर्शनात्" (।) साध्याभावे हेतोरदर्शनमात्रान्नाविनाभावनियमनिश्चयः। न दर्शनात्। नापि साध्यसाधनयोः सहभावदर्शनात्।

34a तस्मात्तदुत्पत्त्यैवार्थान्तरस्यार्था[7]न्तरेणाविनाभावः।

**अन्यथे**त्यासत्यान्तदुत्पत्तौ **परैः** साध्याभिमतैः परस्यानात्मभूतस्य लिंगस्य **कोऽवश्यम्भावनियमः**। **अनर्थान्तरे** तु लिङ्गे तन्मात्रानुबन्धित्वं साध्यधर्मस्येष्टव्यमन्यथा कृतकत्वस्य य**न्निमित्तन्**तस्मा**दर्थान्तर**मदरागादि**निमित्तं** यस्या नित्य-

**अपि च।**

**अर्थान्तरनिमित्तो हि धर्मः स्यादन्य एव सः।**

**न हि तस्मिन् निष्पन्नेऽप्यनिष्पन्नो भिन्नहेतुको वा तत्स्वभावो युक्तः।**[6] **अय-मेव भेदो भावानां कारणभेदो विरुद्धधर्माध्यासकारणभेदौ वा।**

**तौ चेद् न भेदकौ तदा न कस्यचित् कुतश्चिदपि भेद इति एकं द्रव्यं विश्वं**[7] **स्यात्। ततश्च सहोत्पत्तिविनाशौ सर्वस्य च सर्वत्रोपयोगः स्यात्। अन्यथा एक-मित्येव न स्यात्। नामान्तरं**[1] **वा अर्थमभ्युपगम्य तथाभिधाना**[1]**त्।** 43²a

---

त्वस्येष्यते। तस्मिन् वा **धर्मे**ऽवश्यम्भावनियमः कः। किमिव **वाससि रागवत्**। निष्पन्ने वाससि कुसुम्भादि[1]निमित्तो यो रागः पश्चाद्भावी॥

तत्र यथा नावश्यम्भावनियमस्तद्वदनित्यत्वस्यार्थान्तरहेतुत्व इष्यमाणे न केवलमयन्दोषोऽयमपरो दोष इत्याह। **अपि** चेत्यादि। **अर्थान्तरनिमित्तो** नित्य-त्वाख्यो **धर्मः स्यादन्य एव** (।) तस्मात् स्वभावभूतात् कृतकादेस्तथाहि साध्य-धर्मस्यार्थान्तरनिमित्तत्वाभ्युपगमे द्वयमिष्टं साधननिष्पत्तावनिष्पत्तिभि[2]न्नहेतु-कत्वं च। एतच्च नान्तरेण स्वभावभेदं घटते। यस्मा**न्न हि तस्मिन्** साधनस्वभावे **निष्पन्नेप्यनिष्पन्नो भिन्नहेतुको वा** साध्यधर्मस्त**तस्वभावो युक्तः**। पूर्वनिष्पन्नस्य भिन्नहेतुकस्य च लिङ्गस्य स्वभावो युक्तो यस्माद**यमेव** खलु लोकप्रतीतो **भेदो भावानां** यो विरुद्धधर्माध्यासो विरुद्धधर्मयोगः। निष्पत्त्यनिष्पत्ती चात्र विरुद्धौ धर्मौ। तथायमेव[3] भेदहेतुर्भेदस्य जनको यः कारणभेदः सामग्रीभेदश्चात्र **कारण-भेदो** द्रष्टव्यः। एतेन भेदस्वरूपभेदकारणञ्चोक्तं॥

भेदप्रतिभासस्तु भेदग्राहकः। **तौ चेद् बिरुद्धधर्माध्यासकारणभेदौ** न भेदका-विश्ये(?ष्ये)ते। **तदा न कस्यचि**द्वस्तुनः कु**तश्चिद**र्थाद् **भेद इत्येकन्द्रव्यम्विश्वं** समस्तञ्जगत् **स्यात्**। त्रैगुण्यस्याविशेषादैक्यं सर्वस्येष्टमेवेति चेदाह। **ततश्चे**[4]त्ये-कत्वात् **सहोत्पत्तिविनाशौ**। एकस्योत्पादे सर्वस्योत्पादो विनाशे च विनाशः स्यादित्यर्थः। **सर्वस्य च सर्वत्र** कार्ये **उपयोगः** कारणत्वं **स्याद्**। सहोत्पत्याद्यन-भ्युपगमे। सर्वम्वस्त्व**ेकमित्येव न स्यात्**। अथोपयोगादिभेदेन परस्परभिन्नात्म-तेष्यते भेदा(नां) **नामान्तरम्वा** स्यात्। बहूनामेकमिति संज्ञा कृता स्यात्। किङ्कारणम (।) **अर्थं** परस्परभिन्न[5]**मभ्युपगम्य तथाभिधानात्**। एकमित्यभि-धानात्।

---

[1] Miṅ-tha-dad-par-Sad-do.

**ननु अनर्थान्तरहेतुत्वेऽपि भावकालेऽनित्यतानिष्पत्तेः तुल्याऽतत्स्वभावता।**

**(न।) अपूर्वस्वभावलाभो निष्पत्तिरुच्यतेऽनित्यता। स एव हि भावः[2] क्षणस्थितिधर्मा सैवाऽनित्यता। धर्मधर्मितया वचनभेदे निमित्तमुत्तरत्र वक्ष्यामः।**

---

अथ स्यात् प्राक्प्रध्वंसाभावान्तर्वर्तिसत्तासम्बन्धोऽनित्यता। सा च कृतक-निष्पत्तिकाले निष्पन्नैव केवलं प्रध्वंसेनोत्तरकालमभिव्यज्यत इति (।)

तदप्ययुक्तं। यतो यावत् प्रध्वंसो नोत्पद्यते तावत् कथमन्तरालवर्त्त्यनित्यता। प्रध्वंसोत्पत्तावपि कथमन्तरालवर्त्तित्वमस्याः (।) कृतकस्वभावत्वम्वा भाव[6]-स्यैवाभावात्।

नन्वित्यादि परः। **अनर्थान्तरहेतुत्वेपि** विनाशकारणानपेक्षत्वेपि त्वन्मतेनानि-त्यतायाः। **भावकालेऽनित्यतानिष्पत्तेः**। भावस्य सत्ताकाले तस्या अनित्यताया अनिष्पत्ते र्भावादुत्तरकालमनित्यता भवतीति मन्यते। तुल्याऽतत्स्वभावा। यथार्थान्तरहेतुत्वेपि निष्पत्तिः स्यात् (।) तयोर्नानात्वन्तथाऽनर्थान्तरहेतुत्वेपीति[7] 34b **तुल्याऽतत्स्वभावता।**

**नेत्या**दिना प्रतिविधत्ते। **अपूर्वस्वभावलाभो निष्पत्तिरुच्यतेऽनित्यता** न भावनिवृत्तिरूपा ततो निष्पत्तेरेवाभावात् कथं विरुद्धधर्मसंर्गः। यदि तर्हि नानि-त्यता वस्तु सती कथं साध्यसाधनयोस्तादात्म्यलक्षणः सम्बन्ध इत्याह। **स एव हि भाव** इति। क्षणे **स्थिति**र्या **सैव धर्मो** यस्येति। निवृत्तिधर्मा स्वभाव एवा-**नित्यतो**च्यते स एव साध्यः।[1] तेन तादात्म्यं हेतुसाध्ययोर्व्यतिरिक्तार्थत्वनित्यता नीरूपा(।)तेन भावस्यानित्यता भवतीतीत्येवमादिभिर्वाक्यैर्भावस्य न किंचिद्रूपं विधीयतेऽपि तु दृष्टं रूपं नास्तीत्ययमर्थोभिधीयते धर्मान्तराभिधाने भावनिवृत्त्य-प्रतिपादनप्रसङ्गात्।

यदि भाव एवानित्यता कथन्तर्हि शब्दस्य धर्मिणो नित्यता धर्म इति वचनभेद इत्यत आह। **वचनभेदे**पीत्यादि। **धर्मधर्मि[2]तया** यो **वचनभेदो** वाचकान्यत्व-न्तत्रापि **निमित्तमुत्तरत्र वक्ष्यामः**।

एतेन यदप्युच्यते ऽध्ययनाविद्धकर्णोद्योतकरादिभिः। यदि तुलान्तयोर्नामोन्नामवत्कार्योत्पत्तिकाल एव कारणविनाशः। यदि (? तदा) कार्यका-रणभावो न स्याद् यतः कारणस्य विनाशः कारणोत्पाद(:।)एवं भाव एव नाश इति वचनादेवञ्च कारणेन सह कार्यमुत्पन्नमिति प्राप्तं। यदि च भा[3]व एव नाशः प्रथमेपि क्षणे भावस्य न सत्ता स्यात्। विनाशाद् भावनिवृत्तिश्च विनाशो लोक-

**स्वहेतोरेव तथोत्पत्तेः तां क्षणस्थितिधर्मतां तत्स्वभावं पश्यन्नपि मन्दबुद्धिः सत्तोपलम्भेन सर्वदा तथाभावस्य शङ्कया सदृशापरोत्पत्तिविप्रलब्धो वा न व्यवस्यति।**

---

प्रतीतो न भाव एव। सर्वकालं च नाशसद्भावाद् भावस्य सत्वं स्यात्। अथ कारणोत्पादात् कारणविनाशो भिन्नस्तदा कृतकस्वभावत्वमनित्यत्वस्य न स्यात्। व्यतिरिक्ते च नाशे जाते तस्य क्षणस्य न निवृत्तिरिति कथं क्षणिकत्वमिति (।)

तदपास्तं (।) द्विविधो हि विनाश इष्यते भा[4]वनिवृत्तिरूपो भावश्च (।) तेनोत्पन्नो भावः कार्यङ्करोति कार्यकाले च कारणनिवृत्तिरुपो विनाशो लोकप्रतीत एव(।) नायम्भावस्वभाव इष्यते (।) नापि कारणोत्पादाद् अभिन्नो भिन्नो वा नीरूपत्वात् केवलमस्य भेदाभेदप्रतिषेध एव क्रियते। तथा च वक्ष्यति (।)

"भावे ह्येष विकल्पः स्याद् विधेर्वस्त्वनुरोधत" (१।२८१) इति।

तेन व्यतिरिक्ते नाशे जाते क्षणस्य न निवृत्ति[5]रित्यपास्तं। यतश्च द्वितीयक्षणोत्पत्तिकाल एव प्रथमक्षणे निवृत्तिस्तेनैकक्षणस्थायी भावो विनाशशब्देनोच्यतेऽयं च विनाशो भावरूपत्वात्साधनस्वभाव एव। कार्योत्पत्तिकाले च निवर्त्तेत इति कार्यभिन्नकालभावी न चास्य सर्वकालम्भावो भावस्यासत्वात्।

यद्वा विनश्वरोऽयं विनाशोऽस्येति द्वाभ्यां धर्मधर्मिवाचकाभ्यामविनाशिव्यावृ[6]त्तस्यैवैकस्य भावस्य भेदान्तरप्रतिक्षेपाप्रतिक्षेपाभ्यामभिधानाद् भाव एव नाश उच्यते इति सर्वं सुस्थं।

यदि तर्हि भाव एवानित्यता तदा भावप्रत्यक्षीकरणे सापि प्रत्यक्षैवेति कस्मान्न तथैव निश्चीयत इत्यत आह। **तामि**त्यादि। **क्षणस्थितिधर्मतां स्वभाव**मनित्यताख्यं **पश्यन्न**पि प्रत्यक्षीकुर्वाणोपि **न व्यवस्य**ति। न निश्चिनोतीति सम्ब[7]न्धः। 35a

कस्मात् क्षणस्थितिधर्मतास्वभाव इत्याह। **स्वहेतोरेव** सकाशा**त्तथा क्षणस्थित**धर्मतयो**त्पत्तेः**। किं पुनः पश्यन्नपि न व्यवस्यतीत्याह। **मन्दबुद्धि**रिति। अनादिसंसाराभ्यस्तया नित्यादिरूपाविद्यावासनया मन्दा बुद्धिर्यस्य स तथाऽन्यथा दृष्टे वस्तुनि सर्वात्मनां किमिति न निश्चयः स्याद् (।) अनेन तु योगिनां सत्यपि सदृशदर्शने मन्दबुद्धित्वाभावात् क्षणिकत्वनि[1]श्चयो भवतीत्युक्तम्भवति।

यदि तर्ह्यविद्यया नानित्यत्वाध्यवसायो विनश्यत्यपि भावे माभूदनित्यताध्यवसाय इत्याशंक्य बाह्यमपि भ्रान्तिबीजमाह। **सत्तोपलम्भे**नेत्यादि। यः सत्ताया एवोपलम्भो नाभावस्य तेन सत्तोपलम्भेन।

एतदुक्तम्भवति (।) उत्तरक्षणोत्पादकाल एव पूर्वक्षणविनाशात् पूर्वोत्तरयोः क्षणयोरभावेनाव्यवधानान्नैरन्तर्येणा[2]न्यत्वाग्रहात् **सर्वदा** द्वितीयादिक्षणेष्वपि

सत्ताया एवोपलम्भेन **तथाभावः** पूर्वदृष्टस्य भावः सद्भावस्तस्य या **शङ्का** कदाचित्स एवायमित्येवंरूपा भूता भ्रान्तस्यापि स एवायमिति दर्शनाच्छंकेत्याह। तया **विप्रलब्धो** वंचितो **न व्यवस्यति**।

अग्निधूमयोरपि तर्हि कार्यकारणभावनिश्चयो न स्यादभावाव्यवधानेनान्यत्वाग्रहादित्याह। **सदृशापरोत्पत्तेरि**[3]त्यादि। दृष्टं च सदृशापरदर्शनं शुक्तिकादौ सत्यपि भेदभ्रान्तिनिमित्तं। एतच्च **नैरात्म्यसिद्धौ**[1] विभक्तमिति तत्रैवावधार्यं।

तेन सर्वात्मना पूर्वक्षणसदृशस्यापरस्योत्पत्तिस्तया विप्रलब्धो न पूर्वक्षणादुत्तरक्षणमन्यत्वेनाध्यवस्यत्यपि तु स एवायमित्यत एव न पूर्वक्षणस्य विनाशप्रतीतिरुत्तरस्य चोत्पत्तिप्रतीतिः। अग्निधूमयोस्त्वेकान्तेन विसं[4]दृशत्वान्नैरन्तर्ये सत्यप्यन्यत्वग्रहाद् भवति कार्यकारणभावनिश्चयः। वा शब्दस्त्वनवक्लृप्तिसूचनार्थः।

तेनायमर्थो यदि सत्तोपलम्भे व्यभिचारः सदृशापरोत्पत्त्या वा विप्रलम्भः सर्वदास्त्येव विप्रलम्भ इत्येवं परः।

अथवा किं पुनः पश्यन्नपि न व्यवस्यतीत्याह। सत्तोपलम्भेन। पूर्वं यः सत्तोपलम्भेन प्रतीयमाने तद्भावशङ्का पूर्वदृष्ट[5]भावारोपस्तेन विप्रलब्धः न व्यवस्यति। एवन्तर्ह्यादिक्षणदर्शन एवाध्यवसायः स्यात्। पूर्वं सत्तोपलम्भाभावादित्याशंक्याह। **सदृशापरोत्पत्तिविप्रलब्धो** वेति। वा शब्दश्चार्थे। प्रथमक्षणसदृशस्य द्वितीयक्षणस्योत्पत्त्या च विप्रलब्धो न व्यवस्यति। योगिनामपि तर्हि निश्चयो न स्यादित्याह। **मन्दबुद्धिरिति**। तेन बाह्याध्यात्मिकविप्रलम्भनिमित्तसद्भा-[6]वात् पृथग्जनानां निश्चयः। योगिनान्तु सत्यपि सदृशदर्शने पटुबुद्धित्वान्निश्चयो भवत्येव।

तस्मात् स्थितमेतत् (।) क्षणस्थितिधर्मतां पश्यन्नपि सदृशापरोत्पत्त्या विप्रलब्धो न व्यवस्यतीति।

ननु भावस्य क्षणिकत्वे सति पूर्वोत्तरक्षणानां विभागेन प्रतिभासः स्यात्। अप्रतिभासनाच्च कथम्पश्यन्नपि न व्यवस्यतीत्युच्यते। अथ नीलाद्यव्यतिरिक्त-
35b त्वात् क्ष[7]णिकत्वस्य नीलग्रहे ग्रहः।

युक्तमेतत्। किन्त्विदमत्र निरूप्यते (।) किमिदं नीलमक्षणिकमुत क्षणरूपमथ सन्तानः। तत्र यद्यक्षणिकन्तदा नीलप्रतिभासे कथं क्षणिकत्वप्रतिभासः। अथ क्षणरूपं। नन्विदमेवासिद्धमिति कथं नीलप्रतिभासे क्षणप्रतिभास उच्यते।

---

[1] Pramāṇavārtika 1 : 225.

क्षणाप्रतिभासनाच्च न सन्तानरूपस्य नीलस्य प्रतिभासः। अथ नीलमात्रप्रतिभासे सति क्ष[1]णिकत्वप्रतिभासः। तदयुक्तं। प्रतिभासाप्रतिभासाभ्यां हि प्रत्यक्षस्य ग्रहणाग्रहणे। नान्यथा। तदाह। तद् यदपि गृह्णाति तत्प्रतिभासेनेति। न च क्षणानां प्रतिभास इत्युक्तं।

यदि च नीलाद्यव्यतिरिक्तं क्षणिकत्वन्तदा नीलनिश्चये क्षणिकत्वस्य निश्चितत्वादनुमानस्य वैयर्थ्यं स्यात्। यस्त्वाह। एकज्ञानविषयत्वमेव क्षणिकत्वं पूर्वोत्तरज्ञानविषय[2]त्वव्यावृत्तस्यैव चेदानीन्तनज्ञानविषयत्वस्य प्रतिभासनात्(।) पूर्वापरक्षणविलक्षण एव क्षणः प्रत्यक्षेणानुभूतनिश्चितोनुमानेन तु प्रत्यक्षवृत्तमेव परामृश्यत इति नानुमानस्य वैयर्थ्यमिति।

तदयुक्तं। यतो यद्येकज्ञानस्याक्षणिकत्वन्तदार्थस्याप्यक्षणिकत्वं स्यात्। अथ तस्य क्षणिकत्वन्तत्कुतोऽवगतं। तस्याप्येकज्ञानविषयत्वादिति चे[3]दनवस्थयैव प्रतिपत्तिः क्षणिकत्वस्य। अथ ज्ञानक्षणस्य प्रतिभासोऽभ्युपगम्यतेसावर्थक्षणस्य किन्नाभ्युपगम्यते। अन्यथैकस्यापि क्षणस्यानेकज्ञानविषत्वादनेकत्वं स्यात्।

भ ट्ट वा सु दे व स्त्वा ह। "पूर्वोत्तरक्षणानां विनाशेनाप्रतिभासनमेवाक्षणिकत्वप्रतिभासनमतोक्षणिकत्वग्राहकमेव सर्वम्प्रत्यक्षं केवलं क्षणिकत्वा[4]नुमानेन भ्रान्तं साध्यत" इति (।)

एतदप्ययुक्तं। प्रतिज्ञायाः प्रत्यक्षबाधितत्वेनानुमानस्योत्थानाभावात्। निर्विकल्पकस्यापि प्रत्यक्षस्य भ्रान्तत्वे सम्बन्धग्रहणाच्च। पश्यन्नपीति ग्रन्थविरोधश्च (।) तस्मादयुक्तमुक्तं। पश्यन्नपि न व्यवस्यतीति।

अत्रोच्यते। यथा ह्यर्थक्षणानां पौर्वापर्यन्तथा ज्ञानक्षणानामपि तेन पूर्वकेण ज्ञानक्षणेन पूर्वक एवार्थक्षणो गृह्यते[5] नोत्तरः। उत्तरेणाप्युत्तर एव न पूर्व इति (।) एकस्मिन् ज्ञाने तयोरप्रतिभासनात् कथम्पूर्वस्मादयमन्य इति विभागेन प्रतिभासः स्यादिति चोद्यते। स्वरूपप्रतिभास एव च भावस्यान्यस्माद् विवेकप्रतिभासः सुमेरुभिन्नप्रतिभासवत्। स च क्षणस्याप्यस्त्ये वेति कथं न विवेकप्रतिभासः। दृष्टो दृश्यत इति प्रतीतेश्च। अन्यो हि दृष्टः स्वभा[6]वोन्यश्च दृश्यमानः। तथा हि प्रथमदर्शी दृश्यमानमेव स्वभावम्भावस्य पश्यति न तु दृष्टमित्यनयोर्भेद एव। केवलमेकान्तसदृशयोः पूर्वापरक्षणयोरभावेनाव्यवधानाद् घटपटादिवद् विभागप्रतिपत्तिर्न भवति। नापि विभागेनाप्रतिभासादभेदोपि (।) न हि शुक्तिकायान्तदेवेदमस्मदीयं रजतमिति प्रवर्त्तमानस्य शुक्तिकारजतयो[7]र्विवेकप्रतिभासाभावादभेदोपि। तस्माद् यथात्र निर्विकल्पके ज्ञाने शुक्तिकायाः स्वरूपप्रतिभास एवान्यस्माद विवेकप्रतिभासः। तथैकस्यापि क्षणस्य स्यात (।) केवलं पूर्वः क्षणः 36a

कस्मान्न विभागेन स्मर्यत इति यदि परं चोद्यं स्यात्तत्र चोक्तमेव सदृशापरोत्पत्तिविप्रलब्धैर्न स्मर्यत इति।

ननु तथापि क्षणो न प्रतिभासते। एकाणवत्ययकालत्वेनैव भावस्याप्र[1]तीतेः। न तु यद्येकस्मिन् क्षणेस्याप्रतिभासः कथमक्षणिकस्य प्रतिभासः प्रतिक्षणमप्रतिभासनात्। उत्पद्यमानस्य च भावस्य पूर्वापररूपविविक्तस्य प्रत्यक्षेण ग्रहणात् कथं क्षणिकत्वग्रहः। नाप्यक्षणिकः प्रतीयते पूर्वापरकालयोरप्रतिभासादेव तत्सम्बन्धितयेदानीं प्रत्यक्षेऽप्रतिभासनात् पूर्वकालसम्बन्धिस्वभावस्येदानीमप्रतिभास ए[2]व विनाशोऽन्यस्वभावस्य प्रतिभास एवोत्पाद इति कथमुच्यते पूर्वोत्तरक्षणानां विनाशोत्पादाप्रतिभासनाद् अक्षणिक इति। नाप्यनेकक्षणरूप इदानीन्तनः कालोनेकक्षणसम्भवे गृहीतादिरूपताऽस्य स्यात् न व्यर्थता।

न हि प्रत्यक्षभाविना निश्चयेनेदानीमेवेदमस्तीति निश्चीयते (।) किन्तर्हीदानीमस्तीति। अनुमानेन त्विदानीमेवा[4]स्तीति साध्यते ।

तस्मात् स्थितमेतत् (।) पश्यन्नपि न व्यवस्यतीत्यादि।

ननु यदि नित्यं सदृश इति प्रत्यक्षेण निश्चयः स्यात्स एवायमिति बुद्धिर्भ्रान्तिर्यावता सर्वदा स एवायमिति प्रतीतिर्दृढरूपोत्पद्यत इति कथं भ्रान्तिस्तदाह भट्टः[1] ।।

"नित्यं सदृश एवेति यत्र रूढा मतिर्भवेत्।
स इति प्रत्यभिज्ञानं भ्रान्तिस्तत्रावकल्पते ।।
इह नित्यं स एवेति विज्ञा[5]नं जायते दृढं ।
तदस्तित्वातिरेकाच्च प्रामाण्यन्तस्य युज्यते ।।
देशकालादिभेदेन तत्रास्त्यवसरो मितः।
इदानीन्तनमस्तित्वं न हि पूर्वधियो गतं ।।"

न च सर्वदानुमानेन सदृशनिश्चयः। प्रत्यक्षप्रत्यभिज्ञाबाधितत्वात् प्रत्यभिज्ञाया अनुमानोत्थानाभावात्। न च प्रत्यभिज्ञाया अप्रामाण्यमितरेतराश्रयदोषात्। यतो न यावदप्रामाण्यमस्यास्ता[6]वन्नानुमानस्योत्थानं यावच्च नानुमानोत्थानन्तावन्नास्या अप्रामाण्यमन्योन्याश्रयदोष इति।

अत्रोच्यते। स इत्यनेन पूर्वकालसम्बन्धी स्वभावो विषयीक्रियते। अयमित्यनेन च वर्त्तमानकालसम्बन्धी। अनयोश्च भेदो न च कथंचिदभेदो वर्त्तमान-

---

[1] Ślokavārtika: **शब्दनित्यताऽधिकरणे ३७३, ३७४ (तदाऽस्तित्वाऽधिकत्वाच्च साधितं ।)**

**अन्त्यक्षणदर्शिनां निश्चयात्। पश्चात् तदनुपलम्भेन अनवस्थितिप्रतीतिः तदा नि[4]श्चयकालतयाऽनित्यता व्यवस्थिता। कार्योत्पत्तिसामर्थ्यकारणस्वभा-**

---

कालभाविरूपैकस्वभावत्वाद् वस्तुनः। तस्माद् भेद एव प्रत्यभिज्ञाने सति भासत इति कथ[7]मनेन क्षणिकत्वानुमानबाधा। 26b

यद्वा वस्तुनः पूर्वकालसम्बन्धित्वमिदानीमसदेव। पूर्वकालाभावात्। सत्त्वे वास्य वर्त्तमानकालसम्बन्धित्वमेव स्यान्न पूर्वकालसम्बन्धित्वं विरोधादित्युक्तं। तस्मात् पूर्वकालसम्बन्धित्वस्यासतो ग्राहकः स इति ज्ञानांशो भ्रान्तोऽन्यथा वस्तुनः स्पष्टबालाद्यवस्था ग्राहकः स्यान्न च भवति। तस्माद् भ्रान्तात् पूर्वदृष्टरूपा[1]-रोपेण स एवायमिति ज्ञानात् कथमनुमानबाधा। यत्र चाक्षव्यापारस्तद्ग्राहकं प्रत्यक्षमुत्पद्यते। न च पूर्वकालास्तित्वेऽधुना क्व व्यापारोऽसन्निहितत्वात्। नापि तदभेदेन तत्कथं पूर्वोत्तरकालास्तित्वयोरैक्यग्राहकं ज्ञानं प्रत्यक्षं स्यात्। यदा न बालाद्यवस्थायां दृष्टः वृद्धावस्थायां प्रत्यभिज्ञायते। न तत्र वा प्रत्यभिज्ञाने नित्यत्वं प्रतिभासते। केव[2]लं स एवायमिति तत्त्वमध्यवसीयते। न च तत्त्वम्बा-लवृद्धावस्थयोर्भेदात्। नापि तत्त्वग्रहणान्यथानुपपत्त्या नित्यत्वादिकल्पना। सदृशापरोत्पत्तिभ्रान्तिनिमित्तादप्युत्पत्तिसम्भवात्। लूनपुनर्जातेष्विव केशेषु। न चात्र केशत्वसामान्याद् भिन्नात् प्रत्यभिज्ञानं। तदिहेति बुद्ध्युत्पादप्रसङ्गात्। नाप्यभिन्नादन्यत्रानुगमे वाऽनुगतव्या[3]वृत्तरूपयोः। परम्परासंश्लेषेणैकान्त-भिन्नत्वात्। ततश्च त एवामी केशा इति प्रत्यभिज्ञा सदृशापरोत्पत्तिनिमित्तैवात एव भ्रान्तिः। तथा घटादिष्वस्याभ्रान्तत्वाशंकयानुमानस्योत्थानं युज्यत एव। नापीतरेतराश्रयत्वं यतो नानुमानेन प्रत्यभिज्ञाया अप्रामाण्यं क्रियतेऽपि तु ज्ञायते स्वहेतुत एवाप्रमाणरूपाया निष्पत्तेः। दृष्टो दृश्यत[4] इति ग्रहात्। दृष्टत्वं हि न पूर्वम्भावस्यास्ति। तदा दृश्यमानैकरूपत्वात्। नाप्यधुनाऽत एव। नापि पूर्वकालसम्बन्धित्वं दृश्यमानस्येदानीं पूर्वमभावात्। तस्माद् दृष्टत्व-मारोप्य ग्राहिका प्रत्यभिज्ञा भ्रान्तत्वादप्रमाणैवोत्पद्यते। नाप्यस्या अप्रामाण्यनि-मित्तमनुमानस्योत्थानमपि तु साध्यप्रतिबन्धनिमित्तमतः प्रत्यभिज्ञाया बाधकं। विस्तरस्त्व[5]यं प्रत्यभिज्ञाभङ्गविचारो नै रा त्म्य सि द्धौ कृत इति तत्रैवावधार्यः।

तस्मात् स्थितमेतत् (।) तां पुनः क्षणस्थितिधर्मतां स्वभावम्पश्यन्नपि सदृशापरोत्पत्तिविप्रलब्धः पूर्वक्षणविनाशाविनिश्चयान्न व्यवस्यतीति।

कथं पुनर्गम्यते सदृशापरोत्पत्त्या विप्रलब्धो न व्यवस्यतीत्यत आह। **अन्त्ये-**त्यादि। सदृशक्षणान्तराप्रतिसन्धायी क्षणो**ऽन्त्यक्षणस्त[6]द्दर्शिनां** नष्ट इति **निश्च-**

**वत्वमपि। कार्यादर्शने कारणदर्शनेऽपि अनित्येन तत्स्वभावेन कार्यदर्शनात् तथा प्रतीतिः। अन्यथाऽन्यनि[5]मित्तत्वे वाऽनिमित्ततैव युक्ता। अनित्यताऽर्थान्तरमेव स्यात्। तथा च भावयोगो न स्यात् तत्रानपेक्षाणां। अथापेक्षते, तर्हि सैव तस्य स्वात्मभूतस्य अनित्यतास्तीति किमपरेण। स्वभावतो निश्चलस्य हि अर्थान्तरेण सहापि तत्स्वभावस्य अनौचित्यात्॥**

432b **अनित्यता धर्मान्तरं वा, तदप्यर्थान्तरसम्भूतं चेत् कारणं वा भवेत् कार्यं वा। कार्यकारणभिन्नस्य प्रतिबन्धाभावात्। तस्याः सत्ताऽनुमानाऽसंभवात्। तत्र।**

**पश्चाद् भावान्न हेतुत्वं फलेप्येकान्तता कुतः॥३५॥**

**तद्वस्तुसिद्धेः पश्चादर्थान्तरादुत्पादे कथनं तस्य कारणम्। कार्यस्य च कारणेऽवश्यं भावात् तद् गमकं निमित्तं अनिश्चितमेवास्ति। तस्मात् तदन्यनिमित्तस्य धर्मस्य हि वस्तुनि नाऽवश्यंभावात् नानुमानम्। अथ चेत् दर्शनाऽदर्शने अन्वयव्यतिरेकप्रतीतेः नाश्रयः, कथं तर्हि धूमाद् अग्नेर्व्यभिचारः इति प्रतीतिज्ञानम्॥**

**एवम्।**

**कार्यं धूमो हुतभुजः कार्यध(र्म्मानुवृत्तितः)।**

**तल्लक्षणभूतानुपलम्भात् यदुपलम्भ[3]। तेन एकाभावे च यस्या-**

---

**यात्**। अवगम्यते प्रागप्ययमप्रतिक्षणमेव नश्यनि केवलं यथोक्तादेव विप्रलम्भहेतोर्न निश्चीयते।

नन्वन्त्यक्षणदर्शिनोपि कथन्नश्वरत्वनिश्चयो यावता तदापि सत्तोपलम्भोऽस्ति। न हि सत्तायामेवोपलभमानस्तदभावमवैतीत्याह। **पश्चा**दित्यादि। न ब्रूमोन्त्यक्षणदर्शनमात्रान्निश्चयो भवतीनि किन्त्वन्त्यं क्षणं दृष्ट्वा पश्चाद् वि[7]

38a [1]भवति (।) तदा नोपलभ्यते **तत्तस्य कार्यं**। न चाग्निकाष्टादिसन्निधाने भवतो धूमस्यापनीतेऽश्वादौ अनुपलम्भोस्ति। अग्न्यादौ त्वनीते भवत्यनुपलम्भः। एवम्परस्परसहितौ प्रत्यक्षानुपलम्भावभिमतेष्वेव कारणेष्वसन्दिग्धं कारणत्वं साध्यत इति। **तच्चे**ति यथोक्तं कार्यलक्षणं **धूमे**स्ति तस्मादग्नेरेव धूमो भवति। सर्वकालं चाग्निसन्निधाने भ[1]वतो धूमस्यानग्निजन्यत्वं कदाचित्सदसतोरजन्यत्वा-

---

37th leaf is missing.

**ऽनुपलम्भः। तत् तस्य कार्यम्। तच्च धूमेऽस्ति॥**

---

दहेतुत्वाददृश्यहेतुत्वाद्वोच्यते। तत्र न तावत् प्रथमः पक्ष इति तृतीये परिच्छेदे "अशक्तं सर्वमिति चेदि"त्यत्रान्तरे (प्र० वा० ३।४) वक्ष्यामः। नाप्यहेतुत्वमिति तत्रैव वक्ष्यति। नाप्यदृश्यहेतुत्वं धूमस्य। अग्न्यादिसामग्र्यन्वयव्यतिरेकानुविधानात्।

अथ स्याद् (।) अदृश्यस्यायं स्वभावो यदग्न्यादिसन्निधा[2]न एव धूमं कर्पूरादिदाहकाले सुगन्धादियुक्तं च करोति नान्यदेति। तत्किमग्निमन्तरेण कदा चिद् धूमोत्पत्तिर्दृष्टा येनैवमुच्यते। नेति चेत्। तत्कथन्नाग्निकार्यो धूमस्तद्भावे भावात्। धूमोत्पत्तिकाले चाग्निः सर्वदा प्रतीयमानोऽपि काकतालीयन्यायेनावस्थित इत्यलौकिकोयं व्यपदेशः।

अथवा स एवादृश्यस्य स्वभावो यद्यग्निना नोप[3]क्रियते तत्किमग्न्यादिसन्निधान एव धूमं करोति न पूर्वन्न पश्चात्। तस्मादग्न्यादिसन्निधान एवास्वभावो धूमजनको भवति नान्यदेति तत्रापि पारम्पर्येण धूमस्याग्निजन्यत्वमेव स्यात्।

किञ्च। यथा देशकालादिकमन्तरेण धूमस्यानुत्पत्तेस्तदपेक्षा प्रतीयते तथा सर्वदाग्निमन्तरेणानुत्पत्तिदर्शनादग्न्यपेक्षाऽस्य केन वा[4]र्येत। तदपेक्षा च तत्कार्यतैव। यथा चादृश्यभाव एव धूमस्य भावात्तज्जन्यत्वमिष्यते तथा सर्वकालमग्निभावे भावदर्शनादग्निजन्यत्वं किन्नेष्यते। यावतां च सन्निधान एवोत्पद्यमानो भावो दृश्यते तावतामेव हेतुत्वं सर्वेषां प्राग्भावस्य तुल्यत्वात्। तथा चाग्न्यदृश्यादिसामग्रीजन्यत्वं धूमस्येति कुतोऽग्निव्यभिचारः।

अन्यस्त्वाह। भ[5]वत्वग्निधूमयोः कार्यकारणभावतस्तथापि न तयोरेकेन ज्ञानेन ग्रहणम्भिन्नकालत्वात्। नाप्यनेन पूर्वकेण हि निर्विकल्पकेन पूर्वकम्वस्तु मात्रं गृहीतं न तु कारणरूपं कार्यस्य भावित्वेनाप्रत्यक्षत्वात्। उत्तरेणाप्युत्तरम्वस्तुमात्रं गृह्यते न तु कार्यरूपं कारणस्यातीतत्वेनाग्रहात्। नापि सविकल्पकेन तत्राप्यस्य चोद्यस्य तुल्य[6]त्वात्। तेनेदमस्मादुत्पन्नमिति न केनचिद् गृहीतमत एव न स्मरणेनापि गृह्यतेऽनुभवाभावादिति।

अत्रोच्यते। कार्यस्य तावदनुत्पन्नावस्थायामसत्त्वादेव न कारणसम्बन्धित्वं निष्पन्नावस्थायामप्येवं। निरपेक्षत्वात् (।) तथा कारणमपि कार्यनिष्पत्त्यनिष्पत्त्यवस्थायां कार्यासम्बन्ध्येव। नाप्यनयोः कार्यकारणभावः सम्बन्धो भिन्न[7]कालत्वात्। केवलमस्येदं कार्यं कारणं चेति कल्पितोयं व्यपदेशः। तेन हेतोः सकाशात् स्वरूपलाभ एव कार्यत्वं। कारणस्यापि कार्यं प्रति प्राग्भाव एव कारणत्वं स चात्मलाभः प्राग्भावश्च भावस्याभिन्नत्वात् प्रत्यक्षगृहीत एव चेति कथं न प्रत्यक्ष- 38b

ग्राह्यः कार्यकारणभावः केवलं कार्यदर्शने सतीदमस्य कार्यकारणं चेति व्यवह्रियते। यतो नाकार्यकारणयोः का[1]र्यकारण भावः सम्भवति। नापि कार्यकारणभावयो-गात्तयोः कार्यकारणताऽभिन्ना कर्त्तुं शक्यते विरोधात्। नापि भिन्ना तयोः स्वरूपेणाकार्यकारणता प्रसङ्गात्। स्वरूपेण कार्यकारणयोरपि किं कार्यं कारण-भावेनार्थान्तरेण कल्पितेन स्वरूपेणैव कार्यकारणरूपत्वात् (।) तस्मात् पूर्वोत्तरभाव एव तयोः कार्यकारणभावः। तेन पूर्वके वस्तुनि गृह्य[2]माणे कार्यप्रत्यानन्तर्यकार-णात्मकं गृहीतमेव। उत्तरेण च ज्ञानेनोत्तरम्वस्तु कारणानन्तरं गृह्यमाणं कार्या-त्मकमेव गृह्यते (।) तदानन्तर्यस्य तदभिन्नस्वभावत्वात्। अत एवास्मादनन्तर-मिदम्भवतीति स्मरणमपि भवत्यानन्तर्यस्यानुभूतत्वादिति।

अ वि द्ध क र्ण स्त्वाह। "अविनाभावित्वं एकं दृष्ट्वा द्वितीयादिदर्शने सति सिध्यति (।) न च क्षणिकवादिनो द्रष्टुर[3]र (?) वस्थानमस्ति। न चान्येनानुभूते-र्थेन्यस्याविनाभावित्वस्मरणमस्त्यतिप्रसङ्गादि"ति (।)

तदयुक्तं। प्रथमादेरर्थक्षणस्य प्रथमादिज्ञानक्षणेन ग्रहणादेकसन्ततिपतितानां कार्यकारणभावेन स्मरणसम्भवाच्च। यथा च क्षणिकपक्षे कार्यकारणभाव-स्तथोक्त[1]मेव वक्ष्यतिच।

नन्वेवमपि क्षणानामनिश्चयेन कथं कार्यकारणभावनिश्चयो न च सन्तानेन त[4]न्निश्चयस्तस्य सन्तानिभ्यो भिन्नस्याभावात् केवलं सन्तानिन एव पूर्वापरकाल-भाविनः (।) तत्र च यदैकः क्षणो न तदान्य इति एकक्षणावभास एवेति कथं सन्तानावभासः (।) तदभावात् कथं कार्यकारणभाव इति (।)

तदयुक्तम् (।) एकपरमाण्वात्मकस्य वस्तुनो भावात् स्थूलात्मनां सन्तानिनां नैरन्तर्यप्रतिभास एव सन्तानप्रतिभासस्तत्र च क्षणविवेकानवधारणेन सादृ[5]श्येन चैकत्वाध्यवसायादेकसन्ततिवर्तिनां क्षणानां न कार्यकारणभावनिश्चयः। भिन्न-सन्तानवर्तिनां तु सन्तानप्रवृत्त्या विजातीयत्वाद् भवति तन्निश्चयस्तेनाग्निसन्तान-पूर्वकस्य धूमसन्तानस्य प्रतीतेरग्निधूमसन्तानयोः कार्यकारणभावनिश्चय उच्यत इति यत्किञ्चिदेतत्।

अ ध्य य न स्त्वाह। "स्वलक्षणयोः कार्यकारणभावग्रहणे सति कथं सा[6]मा-न्ययोर्गम्यगमकभावो भिन्नत्वादि"ति।

तदप्ययुक्तम् (।) अनेकस्वलक्षणात्मकस्य सामान्यस्याभ्युपगमात्। तदुक्तम् (।)

[1] Pramāṇavārtika 1 : 33.

**स भ(वंस्तद)भावे(पि) हतुमत्तां विलंघयेत् ॥३६॥**

**सकृदपि तथा दर्शनात् कार्यं सिध्यति। [4]अकारणात् सकृदपि अभावात्।**

---

"अतद्रूपपरावृत्तवस्तुमात्रप्रसाधनात् ।
सामान्यविषयं प्रोक्तं लिङ्गं भेदाप्रतिष्ठितेरि"ति॥ (प्र. स.)

तेन स्वलक्षणानां सम्बन्धग्रह एव सामान्यानां सम्बन्धग्रहो न त्वन्यः।

नन्वनुमानवादिना बौद्धे न यावन्ति स्वलक्षणानि त्रैलोक्ये। तानि सर्वा[7]ण्यग्नि- 39a
व्याप्तानि गृहीतव्यान्येकस्याप्यग्रहीते नैवानैकान्तिको हेतुः स्यात् (।) न चैवं प्रत्यक्षं कर्त्तुं शक्नोति सन्निहितविषयत्वात्। न चान्येषां स्वलक्षणानामनुमानतः साध्यधर्मेण व्याप्तिग्रहणमनवस्थाप्रसङ्गादिति।

तदयुक्तं यतः (।) प्रत्यक्षमग्निभेदसन्निधान एव धूमभेदात् प्रतिपत्। एष्वधूमव्यावृत्तं रूपं धूममनग्निव्यावृत्ताग्निमात्रकार्यमेवेत्यवधारयति (।) यथात्र तथान्यत्रापि देशा[1] दावेतद् रूपमग्निजन्यमेवेति चावधारयत्यन्यथात्राग्नि-सम्बन्धितया न प्रत्यक्षेण गृह्यते। एवमग्न्यनग्निकार्यत्वेस्योभयसम्बन्धितया प्रतीतिः स्यान्नाग्निसम्बन्धितयैव। प्रतीयते च(।)तस्मादन्यत्राप्येतद्रूपमग्नेरेव भवतीति निश्चयात् कुतो धूमस्याग्निव्यभिचारः। यश्च तद्रूपम्बाष्पादिविलक्षण-मवधारयितुं शक्नोति तस्यैवैतदनुमानं नान्यस्य। सामान्यव्याप्ति[2]ग्रहणवादि-नापि गोपालघटिकादावग्निमन्तरेण धूमसामान्यदर्शनाव्यभिचारशंकयाग्नि-नियतधूमसामान्यावधारणेनैव तदनुमानम् (।) अग्निनियतधूमसामान्यावधारण-ञ्चाग्निसंम्बद्धधूमाव्यक्त्यवधारणपुरस्सरमेव। न च सर्वत्र देशादावाग्निसम्ब-द्धधूमव्यक्तिविशिष्टस्य धूमसामान्यस्य ग्रहणङ्केनचित् प्रमाणेन सम्भवति। नापि महानसादाव[3]ग्निसम्बद्धधूमव्यक्तिविशिष्टं धूमसामान्यं प्रतिपन्नमन्यत्रा-नुयायिव्यक्तेरनन्वयात्। यच्च धूमसामान्यमनुयायि तन्नाग्न्यव्यभिचारि। तस्मात् सामान्यव्याप्तिग्रहणवादिनोपि कथं विशिष्टं धूमसामान्यं सर्वत्राग्निना व्याप्तं प्रतिपन्नमिति तुल्यं चोद्यं।

अथ धूमस्यान्यत्राग्निजन्यत्वे न किंचिद् बाधकमस्ति तदेवेदमिति च प्रतीतेस्त-त्सामान्यम्प्र[4]तिपन्नमिष्यतेऽस्माकमपि तदेवेदमिति प्रत्ययस्योत्पत्तेस्तत्प्रतिपन्नमिष्यत इत्यावयोः को भेद इति (।)

यत्किञ्चिदेतत्। एतमेवार्थन्दर्शयन्नाह। **स** धूमो **भवँस्तदभावे**ऽग्न्यभावे **हेतुमत्ताम्बिलंघयेद**हेतुकः स्यात्। यद्वा स धूमोग्निसम्बन्धितया प्रतीतस्त**दभावे**-ग्न्यभावे **भवन् हेतुमत्ता**मग्निसम्बन्धितया न प्रत्यक्षण प्रतीयेत। प्रतीयते च।[5] तस्मात् **सकृदपि** न केवलं भूय**स्तथादर्शनादि**त्यनन्तरोक्तात् प्रत्यक्षानुपलम्भात्।

**कार्यस्य हि स्वकारणाभावे अकारणमेव स्यात्। न हि यद् यदभावे भवति तत् तस्य कारणम्। तद् अग्निमन्तरेणाऽपि धूमस्य भावात् तद्धेतुर्न [5]स्यात्।**

**अन्यहेतुकत्वात् नाहेतुकत्वमिति चेत्। नैतदेवम्। तत्राऽपि तुल्यत्वात्। तदभावेऽपि अग्नौ भवतीति तदप्यन्यत् स्यात्। अतज्जननस्वभावत्वात् एवं भवन् (एव) भवेत्। अतत्स्वभावस्याजननात् तस्याहेतुता स्यात्।**

---

किङ्कारणम्(।)**अकारणा**दग्नेः स**कृ**दपि न केवलं भूयो**ऽभावात्**। न हि बालुकाभ्यः सकृदपि तैलम्भवति। **कार्यस्ये**त्यादिना कारिकार्थमाह। **न ही**त्याद्यस्यैव समर्थनं।

एतेन व्याप्तिः कथिता भवति च धूमोग्निमन्तरेण व्यभिचारवादिनः। अनेन च पक्षधर्मः कथितः। **त[6]दि**ति तस्माद**ग्निमन्तरेण भावा**न्न **तद्धेतु**र्नाग्निहेतुस्तथा चाहेतुः **स्या**दिति भावः।

**अन्यहेतुकत्वादि** वह्नेर्यदन्यच्छक्रमूर्द्धादि। तद्धेतुकत्वाद् धूमस्य **नाहेतुकत्वं इति चेत्**।

**नैतदेवन्तत्राप्य**र्थान्तरे हेतौ कल्प्यमाने **तुल्यत्वात्**। तथा हि (।) **तदभावे**प्य-न्यकारणाभावेपि पुन**रग्नौ भवती**ति **तदप्यन्य**त्कारणं न हेतुः **स्यात्**। अपि च योसौ

39b वह्निर्यच्च ततो[7]न्यत्कारणन्तत्किं धूमजननस्वभावमाहोस्विन्न। यद्यजनन-स्वभावन्तदा कथन्ततोग्नेरन्यतो वा **शक्रमूर्द्धादेरतज्जननस्वभावत्वात्** अधूमजन-नस्वभावाद्धूमो भवन्नैव **भवेत्**। किं कारणम्(।)**अतत्स्वभावस्य** स्वयमधूमजनन-**स्वभावस्याजननात्तस्य** धूमस्याहेतुता **स्यात्**।

अथ धूमजननस्वभावोन्यस्तदा द्वयोरपि वह्नित्वं धूमजननस्वभावलक्षण-त्वाद् **वह्नेः**। एत[1]च्चोत्तरत्राभिधास्यते।

**न वै स एवे**त्यादि व्यभिचारवादी। अथवाग्निजनितो धूमः स एवान्यतो भवतीत्येवं नोच्यते। यदि स एवान्यतः स्याद् भवेदहेतुत्वन्**तादृशस्य** वह्निजनित-धर्मस्वभावतुल्यस्यान्यतो **भावात्**।

**अन्यादृशा**दित्यादि सि द्धा न्त वा दी। तत्किं कार्यसदृशं कारणमिष्यते येनैवमुच्यतेन्यादृशाद् **भवन् कथन्तादृश इति**। नान्यार्थत्वात्। यो हि धूम[2]-जनको वह्निर्दृष्टस्ततो विसदृशाद् भवन् धूमः कथन्तादृशो भवति वह्निजनित-धर्मतुल्यस्वभावो भवति।

एतदुक्तम्भवति। यथा धूमभेदानान्तार्ण्णपर्ण्णादीनां परस्परापेक्षया तादृशत्व-न्तथाग्निभेदानामपि तार्ण्णपार्ण्णादीनां धमजनकानान्तादृशत्वं परस्परापेक्षयैव।

**न वै स एव तादृशस्य भावात् इति चेत्। अन्यादृशाद् भवन् कथं तादृश इति। [7]तादृशाद्धि भवन् तादृशः स्यात्। अन्यादृशादपि यदि तादृशो भवेत्, तच्छक्तिनियमाभावात् न हेतुभेदो भेदक इति अकारणं विश्वस्य[1] वैश्वरूप्यं स्यात्।[1] सर्वं वा सर्वस्माज्जायेत। तस्मात् कारणस्य भेदाभेदाभ्यां कार्यस्य भेदाभेदौ न स्याताम्। तद् धूमदृष्टाकार विजातीयादर्थादुत्पद्यमाने[2] अहेतुकत्वप्रसङ्गात्॥** 433a

**नैतदेवम्।**

**नित्यं सत्त्वमसत्त्वं वा (हेतो)रन्यानपेक्षणात्।**

---

तेन यादृशो धूमभेद एकस्मादग्निभेदादुत्पद्यमानो दृष्टस्तादृशस्य धूमभेदस्य ता[3]दृशादेवाग्निभेदादुत्पत्तिः। यस्त्वनग्नेरुत्पन्नः सोन्यादृश एव। वाष्पादिवत्।

नन्वग्निजन्येन धूमक्षणेन तादृशो धूमक्षणजन्यो धूमक्षणस्तेनान्यादृशादपि तादृशो भवतीति चेत्(।)न। अग्निजन्यस्य हि धूमक्षणस्याग्निजन्य एवान्यो धूमक्षणस्तादृशो भवति नान्यः। न हि वाष्पादीनान्तादृशत्वाध्यवसायेपि तादृशत्वम्भवति। धूमक्षणजन्यस्यापि धू[4]मक्षणस्यान्यो धूमक्षणजन्य एव धूमक्षणस्तादृशो भवति नान्यः। तस्मात्तादृशादेव तादृशोत्पत्तिरिति कुतो व्यभिचारः। तेन।

"क्षणिकत्वे कथम्भावाः क्वचिदायत्तवृत्तयः।
प्रसिद्धकारणाभावे येषाम्भावस्ततोन्यतः॥
ततश्चानग्नितो धूमाद् यथा धूमस्य सम्भवः।
शक्रमूर्ध्नस्तथा तस्य केन वार्येत सम्भव" इति (॥)

निरस्तं। प्रथमस्य ह्यग्निजन्यस्य धू[5]मक्षणस्यापरोग्निजन्य एव धूमक्षणस्तादृशो धूमक्षणजन्यस्य धूमक्षणस्य द्वितीयस्यान्यो धूमक्षणजन्य एव द्वितीयो धूमक्षणस्तादृशो भवति (।) तथा तृतीयादिक्षणेष्वपीति क्षणापेक्षयाप्यव्यभिचारस्तादृशस्य। एतमेवाह। **तादृशाद्धि भवँस्तादृशः स्यात्।** **अन्यादृशा**दप्यवह्निसदृशादपि **यदि तादृशो भवेद्** वह्निजनितधूमतुल्यस्वभावो भवेत्।[6] **तच्छक्तिनियमाभावात्।** सदशासदृशयोः कारणयोर्या शक्तिस्तस्या यो नियमः सदृशी सदृशमेव जनयत्यसदृशी विलक्षणमिति तस्याभावात् कारणान्न **हेतुभेदः** कार्यस्य **भेदक इति** कृत्वाऽ**कारणम्विश्वस्य वैश्वरूप्यं** स्यात्। यतः कुतश्चित्कारणादुत्पत्तेर्नाहेतुकत्वमिति चेदाह। **सर्वं वा सर्वस्मा**दित्यादि। अशक्तादपि चेदुत्पत्तिः **सर्वं सर्वस्मा[7]ज्जायेत**(।) 40a न चैवं। **तस्मा**दित्यादि। तन्न धूम इति। **तदि**ति तस्माद् यत उत्पद्यमानो **धूमो दृष्टः स दृष्टाकारो** वह्निः। तद्वि**जातीया**दवह्नेरित्यर्थः॥

---

[1] Tham-ḥdag-gi.

**अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः ॥३७॥**

**स हि धूमः कारणमन्तरेण भवेत् चेत्**[3]**, तर्हि अपेक्षाविरहात् न कदाचिन्न भवेत्। तद्भावे वैकल्याभावात्। इष्टकालवत्। तदापि च न भवेत्। अभावकालाविशेषात्। अपेक्षया हि भावाः कादाचित्का**[4] **भवन्ति। भावाभावकालयोः तद्भावयोग्यतायोग्यताभ्यां योगात्। देशकालयोः तुल्ययोग्यताऽयोग्यत्योर्हि तद्वत्तेतरयोर्नियमायोगात्।**

**सा च योग्यता**[5] **हेतुभावतोऽन्या चेत्। तस्माद् देशकालयोः क्वचित् परि-**

---

**तथा चे**त्यहेतुकत्वे सति **नित्यं सत्त्वमसत्त्वम्वा** धूमस्य स्यात्। किङ्कारणम्(।) अहेतोर्भावस्य स्वनिष्पत्ताव**न्यानपेक्षणा**(त्)। कारणान्तरानपेक्षणात्। कारणान्तरानपेक्षत्वेपि कादाचित्कं स्वभावतो भविष्यतीति चेदाह। **अपेक्षातो**[1] हीति।

एतदुक्तम्भवति(।)अनिष्पन्नस्यासत्त्वादेव कथं स्वभावतः **कादाचित्कत्वं** निष्पन्नस्य त्वस्ति स्वभावः केवलं सैव निष्पत्तिः कथं क्वचिद् भवतीति चोद्यते। **स** **ही**त्यादिनैतदेव व्याचष्टे। **न कदाचिन्न भवे**त् सर्वकालम्भवेत्। किङ्कारणन्**तद्भावे** धूमस्वभावस्य भावे। कारणानपेक्षत्वेन **वैकल्याभावात्**। **इष्टकाल**वत्। **तदापि चे**ति दृष्टकालेपि धूमो न भवेत्। धूमाभा[2]**वकालाविशेषात्**।

पश्चादर्द्धम्विभजन्नाह। **अपेक्षया ही**ति। योग्यदेशकालापेक्षया। यस्मात् कार्यस्य यौ **भावाभावकालौ तयो**र्यथाक्रमन्**तद्**भावस्य कार्योत्पादस्य ये **योग्यतायोग्यते** ताभ्यां **योगात्**। कालग्रहणमुपलक्षणपरमेवं देशद्रव्ययोरपि वाच्यं। अथैवं नेष्यते। तदा तुल्ये योग्यतायोग्यते ययोः कार्यभावाभाववतो**र्देशकालयो**स्तयो[3]**स्तद्वत्तेतरयोर्नियमायोगात्**। कार्यकालस्यैव तद्वत्ता। कार्यवत्ता। तदन्यस्येतरा। अकार्यवत्तेत्यस्य नियमस्यायोगात्। द्वावपि तौ कार्यभावाभावकालौ कार्यवन्तौ स्यातां योग्यतासादृश्यात्। न वा। तुल्यत्वादयोग्यतायाः। तस्मात् तद्भावकालस्यैव योग्यता। तां वापे**क्षमाण(ा) भावाः कादाचित्का भवन्ति**।

भवतु नामेष्टस्य देशकालादेर्योग्यता। न ताव[4]ता हेतुभाव इत्यत आह। **सा चे**त्यादि। यत एवमहेतुत्वे नित्यं सत्त्वासत्त्वं स्यान्न च भवति।

**तस्मादि**त्यादि। **यत्परिहारेण** प्रवर्त्तते तदनपेक्षः। यत्र च वर्त्तते तत्सापेक्षः। यदि नाम क्वचिद् देशादौ वृत्तस्तथापि कथ**न्तत्सापेक्ष इति** चेदाह। **तथा** हीति। **तथा वृत्ति**रित्येकपरिहारेणान्यत्र वृत्तिः। देशादिकम**पेक्षत एव** भावः(।)तेन तु देशादिना[5] न तस्योपकारः क्रियत इति चेदाह। **तत्कृतोपकारे**त्यादि। तन्निय-

**हारेण अन्यत्र देशकालयोः सद्भावेन तत्सापेक्ष इति भवति। तथा हि तथा वृत्तिर-पेक्षत एव। तत्कृतो[6]पकारानपेक्षस्य हि तन्नियमायोगात्। तद् देशकालनियमात्। यत्र धूमो दृष्टः सकृद् वैकल्ये च न दृष्टः तस्य हि तज्जन्यः स्वभावः। अन्यथा कदाचिद[1]प्यभावात् स तत्प्रतिनियतोऽन्यत्र कथं भवेत्। भवन् वा न धूमः स्यात्।** 433b
**तज्जनितः स्वभावविशेषो धूमः। तथा हेतुरपि तथाभूतकार्यजननस्वभावः। यदि तस्याऽन्यतो[2]ऽपि भावः, तदा न स स्वभाव इति सकृदपि न धूमं जनयेत्। न च स धूमः, अधूमजननस्वभावाद् भावाद्। तत्स्वभावत्वे च स एव नेति[3] अव्यभि-चारः॥**

**अग्निस्वभावः शक्रस्य मूर्द्धा यद्यग्निरेव सः।**
**अथानग्निस्वभावोसौ धूमस्तत्र कथं भवेत्॥३८॥**

---

**यमायोगादिति**। तस्मिन्नैव देशादौ तेन न भाव्यमिति नियमायोगात् (।) **तदिति** तस्माद् देशकालग्रहणमुपलक्षणं द्रव्यस्यापि परिग्रहः। **यत्रे**ति देशादौ **दृष्टः सकृदि-**ति। यथोक्तेन प्रत्यक्षेण येषां **सन्निधाने** दृष्टस्तेषामेवान्यतर**वैकल्ये च** पुनर्न **दृष्टः**। **अन्यथे**ति यदि तज्जन्योस्य स्व[6]भावो न स्यात् **स** इति धूमस्**तत्प्रतिनियत**ोग्न्या-दिकसामग्री हि यतः। अग्नेरन्**यत्र कथम्भवेन्नै**व भवेत्। **भवन् वा न धूमः स्यात्**। यस्मात् **तज्जनितो** ह्यग्निजनितो हि **स्वभावविशेषो धूम** इति। **तथा हेतुरपि** वह्निस्**तथाभूतकार्यजननस्वभावो** धूमजननयोग्यतास्वभावो धूमरहितावस्थाया-मप्यस्त्येव योग्यता कारणभूतेति। तेन नाऽव्यापि लक्षणं।[7] एवमग्निधूमयोः 40b परस्परापेक्षया नियतस्वभावत्वे प्रत्यक्षव्यवस्थापिते।

**यदि तस्य** धूमस्याग्ने**रन्यतोपि भाव** इष्यते **तदा न स** धूमजननः **स्वभावस्तस्या-**वह्नेः। तथा ह्यनग्नेर्यदा धूमस्योत्पत्तिस्तदानग्नेरेव धूमजननः स्वभावो जातः। यश्चानग्नेः स्वभावः स कथमग्नेः स्यात्। ततश्चाधूमजननस्वभावत्वादग्नेः **सकृदपि न धूमं जनयेत्**। धूमस्यापि[1] धूमस्वभावता न स्यादित्याह। **न चे**त्यादि। अग्नेरन्यतो भवन्न वा स **धूमः** (।) किं कारणम् (।) **अधूमजननस्व-भावाद**नग्नेर्**भावा**दुत्पत्तेः। **तत्स्वभावत्वे चा**नग्नेरपि धूमजननस्वभावत्वे चाभ्यु-पगम्यमाने। **स एवा**ग्निर्धूमजनकरूपत्वादस्य इत्यनेन द्वारेणा**व्यभिचारो** धूमस्य॥

सुखग्रहणार्थं **अग्निस्वभाव** इत्यादि श्लोकद्वयमाह।

---

[1] Lan-ḥgaḥ.

**धूमहेतुस्वभावो हि वह्निस्तच्छक्तिभेदवान्।**
**अधूमहेतोर्धूमस्य भावे स स्यादहेतुकः ॥३९॥**

**इति संग्रहश्लोकौ।**

**कथमिदानीं भिन्नात् सहकारिणः कार्यस्योत्पत्तिः। यथा चक्षुषो रूपादेर्विज्ञानम्।**

**न वै किञ्चित् तत्स्व(भावं) एकैकं जनकम्। किन्तु सा[1]मग्री जनिका तत्स्व-**

---

**अग्निस्वभाव** इति धूमजननस्वभा[2]वो **यदी**त्यर्थः। **अग्निरेव स शक्रमूर्द्धा** धूमजननस्वभावत्वात्। **अथानग्निस्वभावोसौ** शक्रमूर्द्धा। **तत्रे**ति शक्रमूर्द्धनि। कस्मान्न भवेदित्याह। **धूमे**त्यादि। **हि** यस्मात्। **धूमहेतुस्वभावो** यस्येति विग्रहः। कुत एतत् **तच्छक्तिभेदवान्**। तया धूमजनिकया शक्त्या करणभूतया वस्त्वन्तरात् खद्योतादेर्भेदवान् विसदृशः। **अधूमहेतो**रित्यवह्निस्वभावाद् **धू[3]मस्य भावे** उत्पादेऽभ्युपगम्यमाने **स** धूमः **स्यादहेतुकः**। यथोक्तं प्राक्।

**कथ**मित्यादि परः। **इदानी**मित्येकस्य धूमादेर्विजातीयादुत्पत्त्यनभ्युपगमे। **कथम्भिन्नात्** परस्परविजातीयात्। **सहकारिणः** सकाशादेकस्य **कार्यस्योत्पत्तिः**। कथमित्याह। **यथे**त्यादि। आदिशब्दाद् आलोकमनस्कारादयः। एवञ्च सति चक्षुःस्वभावादप्युत्पद्यते **विज्ञानम[4]**चक्षुःस्वभावादपि रूपमनस्कारादेर्न चेदमहेतुकं। एवं धूमोप्यग्नेरुत्पद्यतामनग्नेश्च शक्रमूर्ध्नः। न चाहेतुको भविष्यतीति चोदको मन्यते।

**न वै किंचि**दित्यादिना प्रतिविधत्ते। चक्षुरादिषु **तत्स्वभावं** जनकस्वभावं **सदेकैकं** परस्परानपेक्षं न वै **जनकं**(।) यदि हि स्यात् तदा प्रत्येकं कारणव्यभिचारादहेतुकं स्यात्। **किन्तु सामग्री जनिका। तत्स्वभावा** जन[5]कस्वभावा। सामग्री जनिकेत्येतावतैव तत्स्वभावत्वं लब्धमतत्स्वभावस्याजनकत्वात् तत्किं स्वभावेति पृथगुच्यते। सत्यं किन्त्ववधारणार्थमुक्तं। सामग्र्यवस्थायामेव तत्स्वभावता। न पूर्वन्न पश्चान्न पृथगिति। स्वहेतुसामर्थ्यनियतसन्निधीत्येकस्मिन् कार्ये समस्तावन्ये कारणानि हेतुरिति **समुदायार्थः**।

केचित्तु वा शब्दं पठन्ति (।) सामग्री जनिका तत्स्वभावा[6] वेति। अत्र तु वाशब्दस्य न किंचित् प्रयोजनमित्य(प)पाठ एवायं। यदि सामग्रीत्युक्त्वा सामग्र्यन्तरादपि चक्षुर्विज्ञानं स्यात्तदा भिन्नादुत्पादेरहेतुकत्वम्भवेत्। **सैव सामग्र्यनुमीयते**। कार्येण न प्रत्येकं कारणादन्यतो नास्ति व्यभिचार इति भावः।

स्यादेतद अग्न्यादिसामग्रया आद्य एव धूमक्षणो जनितो न च तस्य लिङ्ग-

**भावा। सैवाऽनुमीयते। सैव च सामग्री स्वभावस्थित्याकार्यस्य आश्रयः। अत एव सहकारिणामपर्यायेण जननम्।**

---

त्वन्तस्यानिश्चयात्। यश्च धूमप्रतिबन्धो गृह्य[7]ते स पूर्वधूमहेतुरेव (।) कथन्ततोऽग्न्यादिसामग्र्या अनुमानमित्यत आह। **सैव चे**त्यादि **कार्य**प्रबन्धस्य **स्वभावस्थितेः। आश्रय** आद्यं कारणं। सामग्रीमन्तरेण धूमसन्तानस्यैवाभावात्। ततो धूमसन्तानमग्निकार्यत्वेनैकीकृत्य दहनादिसन्ततेः कारणभूताया अनुमानं। न हि क्षणविभागेनार्वाग्दर्शनस्य व्यवहारः सम्भवतीति। 41a

स्यादेतद् (।) अतीव एव व[1]ह्निरनुमीयते। न च तेनार्थक्रियार्थिनः किंचित् प्रयोजनमित्येतदपि चोद्यमानेनैव परिहृतं। तदा चायमर्थः (।) सैव च सामग्री प्रबन्धेन प्रवर्त्तमाना कार्यस्वभावस्थितेः कार्यप्रबन्धवृत्तेर्हेतुः पूर्वपूर्वमग्न्यादिक्षणं प्रतीत्योत्तरोत्तरस्य धूमक्षणस्योत्पत्तेः। न ह्ययं नियमो यदेक एव धूमक्षणोऽग्निना जन्यो नापर इति। यावदिन्धनस्य न सर्वथा भस्मीभवनन्ता[2]वद् धूमक्षणानामुत्पत्तिर्गविरुद्धा। तस्मादुत्तरोत्तरदहनक्षणजननमर्थेनप्रबन्धप्रवृत्तेनाग्निना यथाभूतो धूमप्रबन्धो जनितः प्रत्यक्षावधारितस्तथाभूतमन्यत्रावधार्यार्थक्रियासमर्थदहनसन्तानस्यानुमानन्तदर्थिनो न विरुद्धम् (।) अन्य एव च स्वभावो विच्छिन्नदहनसन्तानस्य धूमस्यान्य एव विच्छिन्नदहनसन्ततेर्वासगृहादिस्थस्य। स्फुटश्च तयो[3]र्भेदमवधारयति लोक इति कुतो व्यभिचारः।

अथवाऽन्यथा व्याख्यायते।

ननु सामग्री समग्रेभ्योऽन्या। तस्याश्चैकत्वाद् एकमेव कार्यमुत्पद्यतेऽन्यथा समग्राणां प्रत्येकं सामर्थ्यात् कार्यबहुत्वम्पर्यायेण चैककार्यजनकत्वं स्यान्न च भवति। तस्मात् कथमेकजनकत्वमित्याशंक्याह।

**सैव चे**त्यादि। सैव च **सामग्री**ति समग्रा एव सामग्री शब्देनोच्यन्ते।[4] किं कारणं। **स्वभावस्थित्या** स्वरूपसन्निधानेन **कार्यस्याश्रयो** भवति यतः।

एवम्मन्यते। यदि सामग्र्या एव कार्योत्पत्तिस्तदा समग्राणामकारकत्वं स्यात्। तथा च प्रतीतिबाधा। समग्राणामपि कारकत्वे सुतरां कार्यबहुत्वं स्यात्। पर्यायेण चैककार्यजनकत्वं स्यात्। न च सामग्रीबलात्तेषामेकरूपता। सामग्र्या एवाभावप्रसङ्गात्। तस्मात् ते स[5]मग्राः स्वहेतुभ्य एवैककार्यकरणे नियता उत्पन्नाः सामग्रीशब्देनोच्यन्ते। न च बहूनामेककार्यकरणे बाधकमस्ति। न चास्माकङ्कारणमेव कार्यो भवतीति मतं येनानेकस्यैककार्यत्वम्विरुध्येत। यथा चैककार्यत्येप्रकस्य प्रागभाव एव कारणत्वन्दृष्टत्वात् तथानेकस्यापि (।) यथा वा त एव समग्राः संयोगलक्षणामेकां सामग्रीञ्जनयन्ति। तथै[6]कमपि कार्यं किन्न कुर्वन्तीति (।)

**यदपि गोमया[5]देर्विजातीयात् शालूकादेरुत्पत्तिर्दृष्टा। तत्रापि तथाऽभिधानेऽपि स्वबीजप्रभवात् अस्त्येव स्वभावभेदः। हेतुस्वभावभेदात्। यथा कदल्या[6] बीजकन्दोद्भवायाः। स्फुटं एवैवं लोके भिन्नाकारद्वारेण विभागः। इत्थं सुविवेचिताकारं कार्यं हि कारणाव्यभिचारि।**

**अन्वयव्यतिरेकाद् यो यस्य दृष्टोनुवर्तकः।**
**स्वभावस्तस्य तद्धेतुरतो भिन्नान्न सम्भवः॥४०॥**

434a **इति संग्रहश्लोकः।**

**तस्मात् सकृदपि दर्शनादर्शनाभ्यां कार्यकारणभावसिद्धेः। ततः तत्प्रतिपत्तिर्नान्यथा अन्वयव्यतिरेकयोर्निःशेषदर्शनादर्शनायत्तत्वात्। निःशेषं क्वचित्**

---

यत्किञ्चिदेतत्। यतश्च सामग्रीजनिकाऽत **एव सहकारिणामपर्यायेण जननं**। परिपाट्या जननं नास्तीत्यर्थः।

**यदपी**त्यादिना **विजातीया**दुत्पत्तिमाशंक्य परिहरति। नान्यादृशात्ताद् (श) न्तस्यो**त्पत्ति**रिति यदुक्तन्तदेवात्र दर्शयतीत्यर्थः। आदिशब्दाद् गोशृङ्गाच्छरो

41b गोमयाद् वृश्चिकः(।) **तत्रापी**[7]ति विजातीयात् कार्योत्पत्तावपि। **तथाभिधानेपी**ति विजातीयोत्पन्नस्य शालूकादेः शालूकादिरित्यभिधानेपि **स्वबीजा**च्छालूकादिलक्षणात् **प्रभव** उत्पत्तिर्यस्य तस्मात् स्वबीजप्रभवाच्छालूकादेः सकशाद**स्त्येव स्वभावभेदः**। किङ्कारणं (।) **हेतुस्वभावभेदात्**। हेतोः सामग्रीद्वयलक्षणस्य स्वभावभेदात्। **बीजात् कन्दाच्चोद्भवो** य[1]स्याः कदल्याः सा तथा। सा च हेतुत्वभेदात् परस्परभिन्ना।

न चायम्भेदः साधनीय इत्याह। **स्फुट**मित्यादि। विवेचयति भेदे वा भावस्येति। **सुविवेचिताकारं** भ्रान्तिर्हेतुभ्यः सदृशाकारेभ्यो विभागेन निश्चिताकारं॥

" तद्भाव एव भावोऽन्वयः। तदभावे चाभाव एव व्यतिरेकः। अन्वयो व्यतिरेकश्चा**न्वयव्यतिरेकन्तस्मात्**। यः कार्यस्वभावो **यस्या**नु[2]वर्त्तनीयस्य कारणस्या**नुवर्त्तको दृष्टस्तस्या**नुवर्त्तकस्य **स्वभावस्तद्धेतुः** सोनुवर्त्तनीयः कारणात् सा हेतुर्यस्येति विग्रहः। यदा तु कारणापेक्षयोच्यते तदा स्वभावस्तस्यानुवर्त्तनीयस्याग्न्यादेस्तद्धेतुस्तस्य कार्याभिमतस्य धूमादेर्हेतुः। यतश्चैवं परम्परापेक्षया कार्यकारणयो (:) स्वभावनियमः। **अतः** कारणाद् **भिन्नाद्** विजातीयान्न **सम्भ**[3]**वः**।

**तस्मात् सकृदपि दर्शनादर्शनाभ्या**मिति यथोक्ताभ्यां। प्रत्यक्षानुपलम्भाभ्यां **कार्यकारणभावसिद्धेः** कारणाद् भवति (।) **ततः** कार्यकारणभावसिद्धितः **तत्प्रतिपत्ति**रन्वयं व्यतिरेकप्रतिपत्ति**र्नान्यथेति** कार्यकारणभावनिश्चयन्त्यक्त्वा केवलाभ्यान्द-

**नित्यत्वस्य दर्शनेऽपि अन्यत्र अन्य[2]था दृष्टेः, क्वचित् नित्यत्वाभावेप्यदृष्टस्य दृष्टेः।**

## ४—सामान्यचिन्ता

**कार्यस्य हि तस्मादुत्पत्तेः हेत्वविनाभावो भवतु नाम[1] स्वभावे कथमविनाभावः ?**

**स्वभावेप्यविनाभावो भावमात्रानुरोधिनि ।**
**तदभावे स्वयम्भावस्याभावः स्यादभेदतः ॥४१॥**

---

र्शनादर्शनाभ्यां नान्वयव्यतिरेकयोः प्रतिपत्तिः। किङ्कारणं (।) **निःशेषदर्शनादर्श-ना[4]यत्तत्वाद्** दर्शनमात्रप्रतिबद्धाया अन्वयव्यतिरेकप्रतिपत्तेः। एवं हि दर्शनमन्वयं साधयति यदि निःशेषे सपक्षे हेतोर्दर्शनं स्यात्। एवमदर्शनमपि व्यतिरेकं साधयेत्। यदि **निःशेषे** साध्यव्यतिरेके हेतोरदर्शनं स्यात्। यथैकत्र धूमव्यक्तौ सकृदपि कार्यत्वसिद्ध्या सर्वत्र तथाभावः (।) एवं क्वचित् सपक्षासपक्षयोर्दर्शनादर्श[5]नात् सर्वत्रान्वयव्यतिरेकनिश्चयो भविष्यतीत्यपि मिथ्या (।) यस्मात् **क्वचिद्** अमूर्तत्वे आकाशादिगते **नित्यत्वस्य दर्शने**। परप्रसिद्ध्या चैतदुच्यते। **अन्यत्र** सुखादौ। **अन्यथेत्य**नित्यत्वे हेतोरमूर्त्तत्वस्य **दृष्टेः** कारणादेकत्र दर्शनं न सर्वत्र तथाभाव-साधनमतो दर्शनमन्वये व्यभिचारि। तथा **क्वचिद्** घटादौ **नित्यत्वाभावेप्यदृष्ट-**स्यामू[6]र्त्तत्वस्य पुनर्नित्यत्वाभाव एव सुखादौ **दृष्टे**रतो विपक्षैकदेशादर्शनमसाधनं व्यतिरेकनिश्चये तस्माद्धेतुफलभावनिश्चयादेवान्वयव्यतिरेकयोर्निश्चयः।

**स्वभाव** इत्यादि परः। इदानीमिति कार्यहेतावविनाभावे साधिते संप्रति **स्वभाव**हेतौ **कथं** साध्येना**विनाभावः**।

ननु **स्वभावे** भावोपि **भावमात्रानुरोधिनि** हेतुरि[7]त्यादिना प्रागेव स्वभाव-हेतावविनाभावः साधितः। 42a

सत्यं। एवन्तु मन्यते (।) **यथाभूते स्वभावे** तन्मात्रभाविन्यविनाभावो वर्णितस्तत्र प्रतिज्ञार्थैकदेशता प्राप्नोतीति। सिद्धान्तवाद्यप्यनन्तरेणान्यापोह-प्रसाधनेन प्रतिज्ञार्थैकदेशतापरिहारम्मन्यमानः तन्मात्रानुरोधिन्येवाविनाभावं पूर्वोक्तमनुवदति। **स्वभावेप्यविनाभा[1]व** इत्यादि। स्वभावेपि स्वभावहेताव-प्यविनाभावः (।) कस्मिन् साध्ये (।) भावमात्रानुरोधिनि। **यो ही**त्याद्यस्यैव व्याख्यानं। **अविनाभावो भावस्ये**ति कृतकत्वादेः। यस्मात् **तदभावे भावमात्रा-नुरोधि**साध्यधर्म**भावे भावस्य** हेतुत्वेनोपात्तस्या**भावः स्यात्**ः। किं कारणं (।)

---

[1] Yin-la-rag-na.

**योहि भावमात्रानुरोधिस्वभावेऽपि अविनाभावं भावस्य वाञ्छति। तदभावे हि स्वभावस्य अभावः स्यात् अभेदतः। य एव भावः भावमात्रानुरोधी स्वभाव इत्युच्यते। स एव स्वयं वस्तुतोः भावः। स च आत्मानं परित्यज्य कथं भवेत्॥**

**य एव तर्हि भेदाभावात् कृतकः स एवाऽनित्य इति प्रतिज्ञार्थैकदेशः हेतुः[5] स्यात्।**

**नैष दोषः।**

**स(र्वे) भावाः स्वभावेन स्वस्वभावव्यवस्थितेः।**
**स्वभावपरभावाभ्यां यस्माद् व्यावृत्तिभागिनः॥४२॥**

---

साध्यसाधनयोर**भेदतः**। अभेदमेव य एवेत्यादिना व्याचष्टे। **य एवा**नित्यादिको **भावः** कृतक**भावमात्रानु**[2]**रोधी** स्वभाव **इत्युच्यते स एव स्वय**मन्यनिमित्तानपेक्षतया **वस्तुतः** परमार्थतो भावः कृतकत्वं **स च** भाव **आत्मानं** स्वभावभूतमनित्यत्वम्**परित्यज्य कथम्भवेत्**।

**य एव तर्ही**ति परः। "पक्षनिर्देशः प्रतिज्ञा"[1]। तस्या **अर्थो** धर्मधर्मिसमुदायस्तस्य**ैकदेशः** साध्यधर्मात्मको हेतुः **स्यात्**। तथा हि यावदुक्तमनित्यः शब्दोऽनित्यत्वादिति तावद् अनित्यः कृतकत्वादिति त[थ]था चासिद्धो हेतुरिति भावः।

नैष दोष इति सि द्धा न्त वा दी। **यस्मात् सर्वे भावा** इत्यादि। अत्र प्रथमया कारिकया धर्मकल्पनाबीजं। द्वितीयया धर्मकल्पना। तृतीयया प्रतिज्ञार्थैकदेशतापरिहारश्च कथ्यते इति समुदायार्थः। **सर्वे भावाः स्वभावपरभावाभ्यां व्यावृत्ति**म्भजन्त इति घिनुण्। सर्वभावाः **स्वभावेन** स्वरूपेण न पररूपेण सजाती[4]याद् विजातीयाच्च व्यावृत्ताः। **स्वस्वभावव्यवस्थितेः**। स्वस्मिन् स्वभावेऽवस्थानात्।

नन्वश्वादिभ्यो गौर्जात्या भिन्नः। विषाणी गौर्द्रव्येण गोव्यक्त्यन्तराद् भिन्नः। शुक्लो गौर्गुणेन विषाणिनो गोव्यक्त्यन्तराद् भिन्न इति। एवमादिपरमाण्वन्तो भेदो जात्यादिविशेषणकृतः सर्वभावानां न स्वभा[5]वेनेति।

अत्रोच्यते (।) न जात्यादिना तावद् भावानामभिन्नानाम्भेदः क्रियते। भिन्नाभिन्नभेदकरणे तत्र तस्याकिञ्चित्करत्वात्। नापि भिन्नानाम्वैयर्थ्यात्। नाप्येषाम्भेदव्यवहारः क्रियते स्वरूपभिन्नानाम्प्रत्यक्षेऽवभासादेव भेदव्यवहारसिद्धेः।

किञ्च। जात्यादीनामन्योन्यन्तद्वतश्च सकाशाद् भेदो नान्यतो जात्यादे-

---

[1] Nyāyasūtra. 1 : 1 : 33.

रनवस्थाप्रसङ्गात्। स्वरूपेण च भे[6]दे भावानामेवासौ किन्नाभ्युपगम्यते किं जात्यादिकल्पनया।

योऽपि दिगम्बरो मन्यते (।) "सर्वात्मकमेकं स्यादन्यापोहव्यतिक्रमे"। तस्माद् भेद एवान्यथा न स्याद् अन्योन्याभावो भावानां यदि न भवेदिति।

सोप्यनेन निरस्तः। अभावेन भावभेदस्य कर्त्तुमशक्यत्वात्। नाप्यभिन्नानां हेतुतो निष्पन्नानामन्योन्याभावः सम्भवति। भिन्नाश्चेत् निष्पन्नाः कथमन्योन्या-[7]भावः सम्भवति। भिन्नाश्चेन् निष्पन्नाः कथमन्योन्याभावकल्पनेत्युक्तं। 42b

ननु सर्वे भावा भिन्ना इति यद्येतदनुमानवृत्तन्तदाश्रयासिद्धो हेतुः सर्वभावानां प्रत्यक्षाविषयत्वाद् (।) अत एव नैतत् प्रत्यक्षवृत्तं परामृश्यते।

अन्यस्त्वाह। यद्यपि भावाः स्वभावेन भिन्नास्तेषान्तु जात्यादयो धर्मास्सन्त्येव प्रतीयमानत्वात्। तथापि निर्विकल्पकन्तु विज्ञानङ्गवादिषु सत्तामात्रं[1] गृह्णाति न भेदं। अन्यस्माद् विशेषग्रहणमेव हि भेदग्रहणम्विशेषश्च नाविकल्प्य गृह्यत इति सविकल्पकस्य विषयो न निर्विकल्पस्य। तदुक्तं॥

"विशेषास्तु प्रतीयन्ते सविकल्पकबुद्धिभिः।
ते च केचित् प्रतिद्रव्यं केचिद् वहुषु संस्थिताः॥
तानकल्पयदुत्पन्नं व्यावृत्तानुगमात्मना।
गवाश्वे चोपजातन्तु प्रत्यक्षन्न विशिष्यत" इति।

तस्मान्न निर्विकल्पके प्रत्य[2]क्षभेदावभास इति।

योप्याह (।) सविकल्पकेनापि भेदो न गृह्यतेऽन्योन्याभावग्रहणनिमित्तको हि भावानां भेदग्रहोन्योन्याभावश्च भेदो न चाभावः। प्रत्यक्षग्राह्यो। न हि गव्यश्वोस्तीति प्रत्यक्षं परिच्छिनत्त्यतः सत्तामात्रस्यैव ग्राहकं प्रत्यक्षमिति।

तदुक्तं मण्डनेन॥

"आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः।
नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यत" इ[3]ति।

तदेतदुभयमप्ययुक्तं। सत्तामात्रस्याप्रतिभासनात्। गवाश्वादीनां स्वस्वरूपेणैव प्रतिभासनात्। तदुक्तं॥

"तत्त्वयुक्तम्प्रतिद्रव्यं भिन्नरूपोपलम्भनात्।
न ह्याख्यातुमशक्यत्वाद् भेदो नास्तीति गम्यत" इति।

योप्याह (।) भावानाम्भेद एव नास्ति। तथा हि गोरश्वानुत्पादे यादृशं स्वरूपमश्वोत्पादेपि तादृशमेव नापरमधिकं किञ्चिज्जातमिति कथमतो[4] भेदः।

भवतु वा भेदो नासौ प्रत्यक्षग्राह्योऽस्मादयम्भिन्न इति। एवंरूपस्य व्यापारस्य प्रत्यक्षेऽभावात्। यदाह। न हीदमियतो व्यापारान् कर्त्तुं समर्थमिति (।)

सोपि निरस्तः। गवाश्वादीनां स्वस्वरूपेणोत्पत्तिरेव भेदः। ते च स्वस्वरूपेण प्रत्यक्षेवभासन्ते। तथावभासश्च लोके भेदावभास इति यत्किञ्चिदेतत्। तस्मात् पुरोवस्थितेषु स्वस्वभावव्यवस्थि[5]तेरित्यस्य हेतोः (।) प्रत्यक्षेण भेदं प्रतिपद्यमानः सर्वोपसंहारेण प्रतिपद्यतेऽतः सर्वभावा व्यावृत्तिभागिन इति व्याप्तिग्रहणप्रमाणफलमिति। यतश्च जात्यादयोर्थान्तरभूता न सन्तीति प्रतिपादयिष्यते (।) अतः पारमार्थिको धर्मधर्मिभावो नास्तीत्युक्तम्भवति।

ननु सामान्ययोगात् सजातीया उच्यन्ते। यदि च सामान्यन्नास्ति कथं सजातीयाद् व्यावृत्तिरित्यु[6]च्यते।

नैतदस्ति। न समानानामुत्पन्नानाम्भावानां सामान्ययोगात् समानरूपता स्वहेतुभ्य एव तथानिष्पन्नत्वात्।

तेन यदु द्यो त क रे णो च्यते। "न गवि गोत्वं येन गोत्वयोगात् प्राग् गौरेवासाविति व्यर्थं गोत्वं स्याद् (।) अपि तु यदैव वस्तु तदैव गोत्वेनाभिसम्बध्यते। गोत्वयोगात्तु प्राग् वस्तु न विद्यते। न चाविद्यमानङ्गौरिति वाऽगौरिति वा शक्यं व्य[7]पदेष्टुमि"ति (।) 43a

तन्निरस्तं। यदैव वस्तु तदैव तस्य गोरूपतया निष्पन्नत्वात् किं गोत्वयोगेन। नाप्यसमानानां सामान्ययोगात् समानरूपता। तेषां सामान्यस्यैवाभावात्। समानानां च भावः सामान्यमित्यभ्युपगम्यते। सामान्याच्च समानरूपत्वे भावानामभ्युपगम्यमाने यावन्न सामान्ययोगस्तावन्न समाना भावाः। यावच्च न समानास्तावन्न सामान्य[1]योग इत्यन्योन्याश्रयत्वं स्यात्। तस्मात् स्वहेतुभ्य एव समाना उत्पन्नाः (।) तेन।

"शावलेयाच्च भिन्नत्वं बाहुलेयाश्वयोस्समं।
सामान्यं नान्यदिष्टं चेत् क्वागोपोहः प्रकल्प्यतामि"ति (।)

निरस्तं। सामान्येष्वेवागोपोहप्रकल्पनात्। असमानानां चापोह्यात्मतया प्रकल्पनात्।

यदप्युच्चते (।) समाना इति प्रतिभासादेव निर्विकल्पके ज्ञाने सामान्यप्रतिभासोन्य[2]था बाहुलेयाश्ववत्। शावलेयबाहुलेययोरपि वैलक्षण्यप्रतीतिः स्यात् सर्वात्मना भेदाद् (।) भवति च समाना इति प्रतीतिस्तस्मादस्यैव सामान्यमिति।

तदुक्तं (।) निर्विकल्पकबोधेन द्व्यात्मकस्य वस्तुनो ग्रहणमिति। यद्वा सविकल्पके न चेत् सामान्यं गृह्यते। निर्विकल्पकेनापि गृहीतमेव। सविकल्पा-

भिन्नप्रतिभासत्वात्। तथा हि (।) य एव शावलेयादयो[3] गौरिति ज्ञानेन गृह्यन्ते। त एव निर्विकल्पके ज्ञाने प्रतिभासन्ते केवलमेकन्तानविकल्प्य गृह्णात्यन्यद् विकल्प्येति तयोः स्वरूपभेदो न प्रतिभासभेदः। तस्मान्निर्विकल्पकेऽपि ज्ञाने सामान्यं प्रतिभासत इति (।)

तदपि निरस्तं। स्वहेतुभ्य एव केषाञ्चित् समानानां प्रतिभासनात्। सामान्यस्य च व्यक्तिपरतन्त्रं स्वरूपं न च निर्विकल्पकं ज्ञानं पारतन्त्र्य[4]म्वस्तुनो गृह्णाति। स्वातन्त्र्येण वस्तुग्राहित्वात् तत्कथं सामान्यग्राहकमुच्यते। अनुगतस्य च रूपस्य प्रत्येकवद् युगपद् बहुष्वप्रतिभासनात्। अत एव विकल्पः समानेष्वेकान्त-भिन्नेषु निर्विकल्पकप्रत्यक्षबाधितमनुगताकारं गृह्णन् भ्रान्तो भवति। निर्विकल्पकगृहीतसामान्यग्राही वाऽप्रमाणं स्याद् गृहीतग्राहित्वात्। अथ विकल्प्य ग्राहित्वाद् अगृ[5]हीतग्राहित्वं स्मृत्यादेरपि (तर्हि) स्मर्यमाणविषयता गृहीतग्राहित्वन्न स्यात्। अथ जात्यादिविशिष्टवस्तुग्राहितया विकल्पस्यागृहीतग्राहित्वमेवमपि यदि जात्यादिविशिष्टत्वम्वस्तुनः पारमार्थिको धर्मस्तदा निर्विकल्पकेनापि गृहीतमेवेति कथमगृहीतग्राहित्वम् (।) अथ कल्पिकस्तदा तद्ग्राहकस्य कथं प्रामाण्य-मारोपितार्थत्वात्। तस्मान्ना[6]स्त्येव जात्यादिरिति स्थितं।

कथन्तर्हि भावा व्यावृत्तिभागिन इत्युच्यन्ते (।) कल्पितधर्मद्वारेणायं व्यपदेश इत्यदोषः। अतः (।)

"अगोनिवृत्तिः सामान्यं वाच्यं यैः परिकल्प्यते।
गोत्ववस्त्वेव तैरुक्तमगोपोहगिरा स्फुटमिति" (।)[1]

निरस्तं। पारमार्थिकस्य गोत्वस्य निषेधः क्रियते न तु कल्पितस्येति वक्ष्यति।

यदि परमार्थिको धर्मधर्मिभावो नास्ति कथन्त[7]र्हि कृतकः शब्दो नित्य इति 43b बुद्धीनाम्भेदः शब्दैकस्वरूपविषयत्वात्।

"अथ निर्विषया एता वासनाबीजमात्रतः।
प्रतिपत्तिः प्रवृत्तिश्च बाह्येर्थेषु कथम्भवेत्"।

अथ बाह्याध्यवसायात् प्रवृत्तिरेवमपि कृतकत्वस्य योवसायः स एवानित्यस्याभेदादिति कथम्बुद्धिभेदः। कृतकानित्ययोरभेदादेव तदनुभवाहितवासनाभेदस्याभावान्न तत्त्वतो बुद्धिभेद इत्यत्राह।

यस्मादित्या[1]दि। यस्मात् सर्वस्मात् सर्वभावा व्यावृत्तास्त**स्माद् यतो यतो** नित्याकृतकादेः शब्दादीना**मर्थानां व्यावृत्तिस्तन्निबन्धना**ः। व्यावृत्त्यावधिव्या-

[1] Ślokavārtika. Apohavāda.

**तस्माद् (यतो यतोऽर्थानां व्यावृत्तिस्तन्निबन्धनाः)।**
**जातिभेदाः प्रकल्प्यन्ते तद्विशेषावगाहिनः ॥४३॥**

---

वृत्तिनिबन्धना **धर्मभेदा** अनित्यकृतकादयः **कल्प्यन्ते** विकल्पैरारोप्यन्ते। किम्विशिष्टास्**तद्विशेषावगाहिनः**। **तस्य** स्वलक्षणस्य ये **विशेषा** अकृतकादिव्यावृत्तिरूपलक्षणास्तदवगाहिनः। तदवगाहनशीला[2]स्तदभेदावभासनशीला इत्यर्थः।

एतदुक्तम्भवति (।) अकृतको न भवतीत्यनेन द्वारेण प्रबोधिताया एव कृतकविकल्पवासनाया एषा प्रकृतिर्यतस्ततो विकल्प उत्पद्यमानः कृतक इति स्वाकाराभिन्नः स कृतकव्यावृत्तमेव शब्दस्वलक्षणं प्रतिपद्यते न त्वनित्य इति (।) तथा नित्यो न भवतीत्यनेनापि द्वारेण प्रबोधिताया एवानित्यवासनायाः साम[3]र्थ्यं यत्ततो विकल्प उत्पद्यमानोऽनित्य इति स्वाकाराभिन्नं नित्यव्यावृत्तमेव शब्दस्वलक्षणं प्रतिपद्यते न तु कृतक इति (।) तेन बुद्धिभेदो भवति। यतश्च बाध्यमानत्वाद् विकल्पप्रतिभास्यर्थो बाह्यो न भवत्यतो वासनावशादेव बाह्यावभासो विकल्पस्तेन विकल्पस्य बाह्यरूप एव प्रतिभासमानोर्थः स्वाकार उच्यते। न तु स्वाकारे बाह्यारोपः[4] सादृश्यात्। यदाह। नामनिमित्तप्रकरणे[1] (।)

"सारूप्याद् भ्रान्तितो वृत्तिरर्थे चेत् स्यान्न सर्वदा।
देशभ्रान्तिश्च न ज्ञाने तुल्यमुत्पत्तितो धियः।

तथाविधाया बाह्यार्थप्रतिभासाया इति।

एतेन यदुच्यते (।) "यद्वाह्यात्यन्तविसदृशस्य स्वाकारस्य ताद्रूप्यग्रहणन्तदन्यनिवृत्तिकृतसादृश्यपरं। यथा घटविसदृशोपि पटो वृक्षाभावविशिष्टोऽवधार्यमाणो य[5]मप्यवृक्ष इति घटसदृशोवधार्यते। वृक्षव्यावृत्तेर्घटपटयोस्तुल्यत्वात्। तथा विकल्पविषयोऽत्यन्तं वामे विसदृशोपि वामेऽवधार्यतेऽन्यनिवृत्तिकृतसारूप्य ग्रहणादि"ति (।)

तदपास्तं। स्वहेतुत एव बाह्याभासाया विकल्पबुद्धेरुत्पत्तेः। न चासदृशानामन्यनिवृत्त्या सादृश्यं क्रियते (।) तत्र तस्या भेदाभेदसादृश्यकरणेऽकिञ्चित्करत्वात्। न चा[6]न्यनिवृत्तिः सदृशी विद्यते। सदृशानामपि कथमन्यनिवृत्त्या सादृश्यं क्रियते स्वरूपेणैव सादृश्यात्। नापि पूर्वं स्वाकारप्रतिभासः पश्चात् तत्रान्यनिवृत्तिकृतसादृश्यग्रहणपरो बाह्यारोपः प्रतिभासते। न हि मरीचिकायां पूर्वं स्वरूपाप्रतिभासे

---

[1] Pramāṇavārtika 3 : 12.

सति सादृश्यग्रहणहेतुको जलारोपः सम्भवति (।) बाह्यारोपाच्च पूर्वं न स्वाका[7]रो 44a ग्राह्यारोपोस्ति। विकल्पस्यैवाभावात्। भावे बोधैकरूप एवासाविति न बाह्यसदृशः। ततश्चान्यनिवृत्तिकृतसादृश्याभावात् कथम्बाह्यरूपः प्रतीयते। अनुमानस्य तु नान्यनिवृत्तिग्रहणपूर्विका प्रवृत्तिर्लिङ्गस्य तया सह सम्बन्धात् सिद्धेः। यदा च तद्विशेषावगाहित्वम्विकल्पानां प्रतीयते तदा विधिरूपेणैव प्रवृत्तिर्वस्तुस्वरूपस्य विधीयमानत्वेनाध्यव[1]सायादर्थादन्यनिवृत्तिः प्रतीयते। तेन विधिरेव शब्दार्थोस्माकमपि। बाह्यतयाऽरोपितस्य च विधिप्रतिषेधाभ्यां सम्बन्धः।

ननु नियतरूपग्राही विकल्पः प्रतिभासते। तेनेतररूपशून्यमेव विकल्पयन्नियतमर्थं विकल्पयति। तस्माद्यन्नियतरूपावधारणन्तदन्यनिवृत्तिविषयन्तत्कथमुच्यते विधिरेव शब्दार्थ इति।

तदयुक्तं। अन्यनिवृत्तिमहं विकल्प[2]यामीत्यप्रतीतेः। न च स विकल्पविषयो यो न विकल्प्य प्रतिभासते। यदि चेतररूपनिवृत्तिमेव विकल्पयन्नियतमर्थम्विकल्पयति तदेतरेतराश्रयदोषः स्यात्। इतररूपस्यापि नियतरूपत्वेनान्यनिवृत्तिद्वारेण प्रतिपत्तिप्रसङ्गात्। अथ विधिरूपेणेतररूपं विकल्पयति न तर्हि तदन्यनिवृत्त्यवधारणपूर्वकन्नियतरूपावधारणं।

न च य[3]था सामान्यवन्तमर्थम्पश्यामीति नास्ति जातितद्वतोर्विशेष्यविशेषणभावे प्रतिभासः (।) अथ च विशिष्टप्रत्ययानुरोधात् सामान्यविशिष्टव्यक्तिदर्शनन्नैयायिकादयः कल्पितवन्तस्तथाऽन्ये (?न्यैर्) निवृत्तिमहम्विकल्पयामीत्यप्रतीतावपि बाह्यसदृशारोपान्यथानुपपत्त्यान्यनिवृत्तिपरं विकल्पाकारे बाह्यरूपमारोप्यत इति युक्तं। सादृश्यमन्तरेण[4] वासनाबलादेवाध्यवसितबाह्यरूपस्य विकल्पस्योत्पत्तेः। यदाह। तदनुभवाहितवासनाप्रभवप्रकृतेरध्यवसिततद्भावस्वरूपं। तथा विकल्पवासनायाश्च तादृशी प्रकृतिर्यदेवमेषा प्रतिभातीति।

नापि बाह्यरूपारोपकस्य ज्ञानस्यान्यवित्तिकृतसारूप्यनिमित्तत्वेप्यन्यनिवृत्तिविषयत्वं। न हि मरीचिकायां जलज्ञानस्य सादृश्यविषयत्वमारोपि[5]तजलविषयत्वात्। न च नियतं रूपं भावानामन्यनिवृत्त्या क्रियते। तस्या अवस्तुत्वेनाकारकत्वात्। स्वहेतुभ्य एव च ततो (?तत उ)त्पत्तेः।

नापि नियतरूपावधारणन्तदन्यनिवृत्तिविषयं नियतरूपविषयत्वादस्य (।) अत एव न तदन्यनिवृत्तिपुरस्सरमेव धार्यते प्रत्यक्षेणैव।

न च तदन्यनिवृत्तिरर्थान्तरभूता युज्यत[6] इति वक्ष्यति। नापि स(ा) तत्त्वान्यत्वाभ्यामवाच्या युज्यते(।) एवं ह्यभाव एवास्याः स्याच्छशविषाणवत्। न च स्यात् प्रत्यक्षगम्या नीरूपत्वात्। नाप्यनुमानगम्या। सम्बन्धाभावेन लिङ्गस्यासिद्धेः।

**तस्माद् विशेषो यो येन धर्म्मेण संप्रतीयते।**
**न स शक्यस्ततोन्येन, तेन भिन्ना व्यवस्थितिः ॥४४॥**

---

नापि नियतरूपान्यथानुपपत्त्या तत्कल्पना। अनियतरूपाणामन्यनिवृत्तेरभावात्। 44b नियतरूपाणां च कथमन्यनिवृत्त्या नियतरूपत्वं स्वहेतुभ्य एव नियतरू[7]पाणामुत्पत्तेः। तस्मान्नियतरूपावधारणपुरस्सरैवान्यनिवृत्तिः प्रतीयते। तथा हि घट इत्युक्तेऽघटो न भवतीति सामर्थ्यात् प्रतीयतेऽतो विकल्पकल्पितैवेषा न परमार्थतोस्ति।

तस्मात् स्थितमेतच्छब्दलिङ्गाभ्याम्विधिरूपेण वस्तु प्रतिपाद्यतेर्थादन्यनिषेधः। तथा च वक्ष्यति "तद्गतावेव शब्देभ्यो गम्यतेऽन्यनिवर्त्तनमि"त्यादि (१।१२८)।

तेन यदुच्यते कुमारिलेन ॥

"न त्वन्यापो[1]हकृच्छब्दो युष्मत्पक्षेनुवर्णितः।
निषेधमात्रन्नैवेह प्रतिभासेव गम्यते ॥
किन्तु गौर्गवयो हस्ती वृक्ष इत्यादि शब्दतः।
विधिरूपावसायेन मतिः शाब्दी प्रवर्त्तते ॥
तस्माद्येष्वेव शब्देषु नञ्योगस्तेषु केवलं।
भवेदन्यनिवृत्त्यङ्गः स्वात्मेवान्यत्र गम्यत"[1] इति (।)

एतत्सिद्धं साध्यते। विधिरूपस्यापि शब्दार्थस्येष्टत्वात् (।) कथन्तर्हि परमताद् बौद्धमतस्य भेदः (।) कथं वा शब्दलिंगयो[2]रपोहो विषय उच्यते ॥

नन्वस्त्येव महान् भेदः परैः पारमार्थिकार्थविषयत्वेनेष्टस्य विकल्पस्य बौद्धैः कल्पितविषयत्वेनेष्टत्वात्। कल्पितश्चाकारोऽपोहाश्रितत्वादपोह उच्यते। अपोह्यतेऽनेनेति वा। अन्यनिवृत्तिमात्रं त्वर्थादाक्षिप्तमपोहनमपोह इत्युच्यते (।) स्वलक्षणं त्वपोह्यतेस्मिन्नित्यपोह उच्यते।

तस्मादन्यान्यव्यावर्त्यवस्तुव्यपेक्षया धर्माः कल्पितभे[3]दा विकल्पैर्विषयीक्रियन्ते (।) अतो भिन्नविषया विकल्पास्तत्समानविषयाश्च शब्दा अप्यपर्याया इति दर्शयितुमाह। **तस्मा**दित्यादि। यतश्चैवं धर्मभेदाः कल्प्यन्ते **तस्माद्यः** स्वलक्षणवि**शेषो** व्यावर्त्तनीयनित्यव्यपेक्षया व्यवस्थापितोऽनित्यलक्षणः। **येन धर्मेण** येन शब्देन। यथाऽनित्यशब्देन। शब्दोपि धर्मवाचकत्वाद् धर्म उच्यते। न **स शक्यस्ततोन्येन**। अनि[4]त्यशब्दादन्येन कृतकादिशब्देन। व्यावर्त्तनीयान्तरवस्त्वधिकेन प्रत्येतुं। **तेन भिन्ना व्यवस्थितिः**। तेन कारणेन विकल्पानां नैक-

---

[1] Ślokavārtika.

**सर्व एव हि भावाः स्वरूप[7]स्थितयो नात्मानं परेण मिश्रयन्ति, तस्यापरत्वप्रस- ङ्गात्। तेषामभिन्नं स्वात्मभूतं यद् रूपं न तत् तेषाम्। तदानीं तेषामभावात्। तदेव हि स्यात्[1], अभिन्नस्य भावात्। तस्मादप्रतिपन्नस्य भिन्नस्याभावात्। तस्यैव च पुनर्भेदविरोधात्। तच्च स्वात्मनि व्यवस्थितममिश्रमेव।** 434b

---

विषयत्वं। शब्दानां च न पर्यायत्वं।

नेन यदुच्यते (।) ययोस्तादात्म्यन्न तयोर्गम्यगमकभावो ययोश्च विकल्पित- रूपयोर्गम्यगमकभावो न तयोः सम्बन्ध इति (।)

तदपास्तं। अकृतकव्यावृत्तस्यैव स्वलक्षणस्य ज्ञापकहेत्वधिकारात्। कृतक[5] इति ज्ञातस्य गमकत्वात् तस्य च नित्यव्यावृत्तवस्तुरूपत्वात् तादात्म्यं।

**सर्व एव** ह्रीत्यादिनाऽद्वै त वा दं निराकुर्वन् कारिकार्थमाह। स्वरूपे स्वात्मनि स्थितिर्येषान्ते तथा। **सर्व एव हि भावाः स्वरूपस्थितयो नात्मानं परेण मिश्रयन्ति।** एकीकुर्वन्ति। किङ्कारणं (।) **तस्य** मिश्रीक्रियमाणस्य परस्या**परत्वप्रसङ्गात्।** आत्मतापत्तेः।

स्यान्मतं (।)

> "सर्ववस्तुषु बुद्धिश्च व्यावृत्तानुगमा[6]त्मिका।
> जायते द्व्यात्मकत्वेन विना सा च न युज्यते" (।।)

अतः सामान्यात्मका विशेषा विशेषात्मकञ्च सामान्यमित्युभयरूपम्वस्त्वि- त्यत्राप्येकस्य वा रूपस्य भिन्नेभ्योऽभेदो भिन्नस्य चैकस्मादभेदः(।)तत्र प्रथमं पक्षं निराकर्त्तुमाह। **तेषामिति** भावाना**मभिन्न**मित्ये**कात्मभू**तमित्यव्यतिरिक्तं **यद्रूपं** स्वभावो **न तत्तेषा**म्भावानामिति शक्यम्वक्तुं। कस्मात्त**दानीन्त**स्येत्यपे[7]क्ष्यते। 45a तस्याभिन्नस्य रूपस्य **तेषामभावा**दभेदादेव।

अथ पुनरेकस्माद् भिन्नस्याभेदस्तत्राप्याह। **तदेव हि स्यादभिन्नस्य भावात्।** एकं चेद्रूपं प्रतिपन्नाभावस्तदेवाभिन्नं रूपन्तेषां स्यान्न भिन्नं। कुत एतत्। तस्यै- वाभिन्नस्य रूपस्य भावात्।

अथ स्यात् (।) तेषाम्भेदोपीष्यत एवेत्यत्राह। तस्मादभिन्नात्मनोर्थान्तरस्य **भिन्नस्य** नानारूपस्या**भावात्।**

अथ स्याद् (।) विशेषस्य यो भेद[1]स्स एव सामान्यस्याभेदाद्। यदाह (।) सामान्यस्य तु यो भेदं ब्रूते तस्य विशेषतो दर्शयित्वाभ्युपेतव्य इत्यत्राप्याह। **तस्यैव च पुनर्भेदविरोधात्।** तस्यैवैकस्यानेकत्वायोगात्।

अथ स्याद् (।) विशेषद्वारेण सामान्यस्य भेदो न स्वरूपस्तदानुगतव्यावृत्त-

**अर्थान्तरमपि तद् अनेकसमवेतत्वात् न तेषां सामान्यम्, अतद्रूपत्वात्। द्वित्वादिकार्यद्रव्येष्वपि प्रसङ्गात्। सम्बन्धिनाऽन्येनाऽन्येऽसमानाः तद्वन्त एव**

---

रूपयोः परस्परासंश्लेषादेकान्तेन भेदः स्यात्। तदाह (।) तच्चैकरूपं **स्वात्मनि** स्वस्वभावे **व्यवस्थितममिश्रमेव**[2] व्यक्तिरूपेण। अमिश्रे च मिश्ररूपतयाप्रतीते-र्मिथ्यात्वमेव।

अथ कथंचित् सामान्यस्य व्यक्त्यभिन्नत्वान्नैतन्मिथ्यात्वं। तदाह।

"नैतदश्वादिबुद्धीनामध्यारोपाद्यसम्भवात्।
स्थितं नैव हि जात्यादेर्भिन्नत्वं व्यक्तितो हि न" इति।.

तदयुक्तम् (।) एकत्वेन येनैव रूपेण भिन्नन्तेनैवास्याभेदो विरोधान्न चैक-स्मिन् प्रमाणे भेदाभेदं प्रतिभासते। एकेन च भेदग्रहणे सति यद्य[3]न्येनाभेदो गृह्यते कथन्तद्ग्राहकं प्रमाणं भ्रान्तं न स्याद् (।) अन्यथा ग्रहणात्तस्य चैकरूपत्वात्।

यद्वाऽमिश्रणादेवैकस्य रूपस्य सामान्यरूपता न स्यादर्थान्तरत्वाद् घटवत्।

उ द्यो त क (र)स्त्वाह। "गवादिष्वनुवृत्तिप्रत्ययः पिण्डादिव्यतिरिक्तनि-मित्तभावी। विशेषत्त्वान्नीलादिप्रत्ययवत्। तच्च निमित्तं समानव्यक्तिकरणात सामान्यमित्युच्यते"[1] (।)

अत्रापि न तावत्समानाना[4]मर्थान्तरेण समानरूपता क्रियते तथैव निष्पन्नत्वा-(द)प्यसमानानामिति दर्शयन्नाह। **अर्थान्तरमिति सत्ता** गोत्वादिकं **न तेषां** व्यक्तिभेदानां **सामान्यमतद्रूपत्वात्**। तेषां भेदानामसमानरूपत्वात्। समानानां च भावः सामान्यमिष्यते।

अथवाऽतद्रूपत्वाद् व्यक्तिभ्योर्थान्तरत्वादेकत्ववत्। अथार्थान्तरमपि बहुषु समवेतमिति यदि तत्तेषां सामा[5]न्यं। तदा **द्वित्वादिकार्यद्रव्येष्वपि प्रसंगो** द्वित्व-मपि ह्यनेकद्रव्यसमवेतम् (।) आदिग्रहणाद् बहुत्वादिः। तथा संयोगोनेकद्रव्यसमवेतः। कार्यद्रव्यं चावयविसंज्ञितमारम्भकद्रव्येषु समवेतमतो द्वित्वादिषु सामान्यरूपता-प्रसंगः। यस्मिन् नार्थान्तरे सति समाना भेदा भवन्ति तदेव सामान्यं न सर्वमित्यत्राह। **न हि**। यस्मात् **सम्बन्धिनान्येना**र्थान्त[6]रेणैकत्वलक्षणेना**न्येऽ-समाना** भिन्ना न समाना नैकीक्रियन्ते भिन्नाभिन्नसमानभावकरणे तदनु-पयोगात्। भिन्नदेशादीनां प्रतिभासनाच्च कथं समाना एव भवन्ति। केवलं **तद्वन्त** एक धर्मवन्तः **स्युर्भेदाः**। **भूतानि** ग्रहनक्षत्राणि तेषां **कण्ठे** दीर्घा **गुणो-**

---

[1] Cf. Nyāyavārtika 2 : 2 : 65.

**स्युः[1]।[3] भूतानां कण्ठगुणवत्। नाभिन्नप्रत्ययविषयाः। भूतवत्। तदात्मानमेव संसृजन्ती बुद्धिः सामान्यविषया प्रतिभासते। नैकसम्बन्धिनाविति भूतवत्।**

---

च्चेनार्थं निबध्यते। तेनैकेन कण्ठे गुणेन यथा भूतानि तद्वन्ति न त्वेकीभवन्ति तद्वद्व्यक्तयोपि।

ननु गु[7]णस्य मूर्त्तत्वाद् तद्वत्ता प्रतीतिर्युक्ता। न व्यक्तिषु सामान्यस्यामूर्त्तत्वादिति चेत् (।) न। तत्समवेतत्वस्येष्टत्वादर्थान्तरभावस्य च। यतश्चैकसम्बन्धेपि न समाना व्यक्तयस्तत एव **नाभिन्नप्रत्ययविषयाः** एकाकारज्ञानस्याभ्रान्तस्य न विषयाः। **भूतवत्**। यथा भूतान्यगुणस्वभावानि नैकगुणाकारप्रत्ययविषयः। तद्वत्। एवन्तावदनेकसम्बन्धेप्यर्थान्तरं न तेषां सामान्यं[1]द्वित्वादिष प्रसङ्गदिति स्थितं (।) प्रतीयन्ते च समाना इति (।) तस्मात् **तदात्मानमेव** हि तयोर्भेदयोरात्मानमेव। **एकरूपमिदं द्वय**मित्येकांशेन स्वगतेन **संसृजन्ती बुद्धिः सामान्यविषया प्रतिभास**ते। **नैकसम्बन्धिनावित्ये**केन सामान्येन सम्बन्धिनावेताविति नैवम्बुद्धिः प्रतिभासते येन सामान्यमर्थान्तरम्प्रमाणसिद्धं स्यात्। **भूत**वदिति वैधर्म्यदृष्टान्तः।[2] यथा बुद्धिर्भूतान्येकेन गु[3]णेन सम्बद्धानि गृह्णाति नैवमित्यर्थः। 45b

यद्वा यथा भूतान्येकसम्बन्धीनि तथा भिन्नावेकसम्बन्धिनाविति सामान्यविषया बुद्धिः प्रतिभासत इति नैवं।

अथ स्यात् (।) सामान्यं हि व्यक्तीनाम्विशेषणं। विशेषणं च विशेषे स्वानुरक्तां बुद्धिं जनयत्यतो नास्य व्यक्तिभ्योर्थान्तरभावेन प्रतिभासः।

ननु विशेषणत्वेपि तस्य न विशेष्येण स[3]हैक्यं दण्डस्येव दण्डिना तत्कथमभेदप्रतिभासः। अभेदांशेनाप्येकत्वान्न विशेषणविशेष्यभावः। तस्मात् सामान्यस्य व्यक्त्यभेदप्रतीतिर्भ्रान्तिरेव।

अथ सर्वदैवं प्रतीतेरभ्रान्तिः। तदाह।

> "यो ह्यन्यरूपसंवेद्यः सम्वेद्येतान्यथा पुनः।
> स मिथ्या न तु तेनैव यो नित्यमवगम्यत" इति (।)

तदयुक्तं। तस्य व्यक्त्यभिन्नत्वमेव स्यात्। गोर्गोत्वमिति प्रतीतिभे[4]दाभ्युपगमाच्च। न च लाक्षास्फटिकयोरिव जातितद्वतोः संसर्गावगतिरभ्रान्तिः। अलाक्षारूपस्य स्फटिकस्य लाक्षारूपेण गतेर्भ्रान्तत्वात्। एवं जातितद्वतोरेकत्व-

---

[1]De-dan-ldan-pa-dag-tu-ni-ḥgyur-te.

**तद्दर्शिन्याः सा[4] भ्रान्तिरिति चेत्। तद्दर्शिनीति कुतः। निर्बीजभ्रान्ते-रयोगादिति चेत्। त एव तदेककार्या बीजं भ्रान्तेः। संख्यासंयोगकार्यद्रव्यादि-वस्तुभूतादिष्वप्यभावात्। तत् तथा सामान्ये निवेशाभावात् न सामान्यमन्यत्। सति वा तस्यापि स्वात्मनि अवस्थानाद् अमिश्रमणमन्येन। तस्माद् इमे भावाः सजाती-**

---

ग्रहो भ्रान्तिः। सामान्यं केवलं पश्यत्येव बुद्धिः। तस्यास्तु **तद्दर्शिन्याः** समवायस्य सूक्ष्मत्वात् **सा भ्रान्तिर्य**देतद् व्यक्तीनां सामान्याभेदेन ग्रहणमिति चेत्। **तद्दर्शिनीति कुतः** (।) पारमार्थिक[5]सामान्यदर्शिनी सा बुद्धिरिति कुतो निश्चयः सर्वदास्या व्यक्त्यभेदविषयत्वात्। **नास्या बीजमस्तीति निर्बीजा** तथा चासौ **भ्रान्ति**श्च तस्या **अयोगात्**। न हि भ्रान्तिरुत्पद्यमाना निर्निमित्ता घटते। जलादिभ्रान्ति-वत्। भ्रान्तिश्चेयमसंसृष्टानपि भावान् संसृजन्ती बुद्धिरतोस्या निमित्तेन भवितव्यं (।) यत्तन्निमित्तन्तत् सामान्यमित्यत्राह। **त एव** भेदास्तत्सामान्यज्ञा[6]नाद्येकङ्कार्यं येषान्ते **तदेककार्या बीजं भ्रान्तेः**। एतच्च प्रतिपादयिष्यते।

न च सामान्यं दृष्टातदारोपेण व्यक्तिष्वेकाकारा भ्रान्तिर्युज्यते। तथा हि (।) सादृश्यं भ्रान्तिकारणमत्यन्तविलक्षणं च सामान्यं व्यक्तिभ्यस्तस्यावर्णसंस्था-नाकारत्वाद् व्यक्तीनां च वर्णसंस्थानाकारत्वात्।

अथ स्यात् (।) न सामान्यस्य सादृश्यनिमित्तो भेदेष्वारोपोपि त्वेकान्तेन 46a भिन्नेषु स एवायमित्ये[7]कत्वावसायविभ्रमो नैकरूपमन्तरेणेति ब्रूमः। यद्येवमेकेन सम्बन्धिन इत्येव कृत्वा विनापि भ्रान्तिनिमित्तेन यद्येकाकारभ्रान्तिविषया भवन्ति। तदा **संख्या च संयोगश्च कार्यद्रव्यं** चादिशब्दाद् विभागादि **चैकम्वस्तु** विद्यते येषान्ते तद्वन्तस्तेषु **भूतेषु** चैकगुणेन युक्तेषु स्यादेकाकारा भ्रान्तिः (।) न च भवति (।) अतो व्यक्तीनामपि नैकत्वनिमित्ता भ्रान्तिरिति। **त**दिति त[1]स्माद् यथा व्यक्तिभ्यो भेदेनेष्टं सामान्यं **तथा सामा**न्यबुद्धौ **निवेशाभावा**त् प्रतिभासाभा-वान्न **सामान्यमन्य**त्। **सति वा** सामान्ये **तस्यापि** सामान्यस्य **स्वात्मनि** स्वस्मिन् स्वभावेऽ**वस्थानादमिश्रणमन्ये**न व्यक्तिरूपेण। व्यक्तिष्वनवस्थानान्न धर्मरूपत्वन्तस्येत्यर्थः। **तस्मादि**ति स्वस्वभावव्यवस्थानाद् **इमे भावा** घटादयः **सजातीयाभिमता**त् तुल्याकारत्वेना[2]भिमताद् **अन्यस्माच्चे**ति विजातीयादि-**व्यतिरिक्ता**ः पृथग्भूताः **स्वभावेन** प्रकृत्यै**करूपत्वात्**। **स्वस्वभावव्यवस्थि**तेरिति यावत्॥

द्वितीयकारिकार्थमाह। **यतो यतो भिन्ना**स्ते भावास्तस्माद् भेदस्तद्भेदः। तस्माद् भिन्नाः स्वभावास्तस्य **प्रत्यायना**य प्रतिभिन्नस्वभावं **कृतसन्निवेशैः शब्दैः**

**याभिमतात् अन्यस्माच्च व्यतिरिक्ताः स्वभावेनैकरूपत्वात् ॥**

**यतो यतो भिन्नाः तद्भेदप्रत्यायनाय कृतसन्निवेशैः[1] शब्दैः[2] ततस्ततो भेदमुपादाय अनेकधर्माणः अभेदे[7]ऽप्यर्थाः प्रतीयन्ते। तेऽपि शब्दाः सर्वभेदानाक्षेपेऽपि एकभेदचोदनात् स्वलक्षणनिष्ठा एव भवन्ति। तदेकस्मादपि तस्य भेदो ऽस्तीति ॥** 435a

**तस्मात्[1] एकस्य भावस्य यावन्ति पररूपाणि तावत्यः (व्यावृत्तयः) तदपेक्षया। तदसम्भविकार्यकारणस्तस्य तद्भेदात्। यावत्यश्च व्यावृत्तयस्तावत्यःश्रुतयोऽतत्कार्य-**

---

कृतसंकेतैः शब्दैः करणभूतैरनेकधर्माणः कृतकत्वादिधर्म्मैव[3]न्तः **प्रतीयन्ते** स्वभावाभेदेपि। न ह्येकस्य स्वलक्षणस्य स्वभावनानात्वमस्ति। कथन्तर्ह्यनेकधर्मत्वमित्याह। **ततस्ततो भेदमुपादाये**ति (।) यतो यतो व्यावृत्तास्ततस्ततो भेदमुपादायाश्रित्य तेपि शब्दा ये तस्य तस्य भेदस्य भिन्नस्वभावस्य ख्यापनाय **कृतसंकेता**स्तेष्वस्मिन् भिन्ने स्वभावे वाचकत्वेन नियताः (।) ततो नैकः शब्दः सर्वान् भिन्नस्व[4]भावानाक्षिपत्यतस्तेपि **शब्दाः** प्रत्येकन्तैः **सर्वभेदानाक्षेपेपि । एकभेदचोदना**देकैकस्य भिन्नस्य स्वभावस्य चोदनात्त**त्स्वलक्षणनिष्ठा एव भवन्ति**। यस्य स्वलक्षणस्य स स्वभावोन्यस्माद् भिन्नो यः शब्देनाध्यवसीयते। तच्च तत्स्वलक्षणं च। तन्निष्ठा एव तद्विषया एव भवन्ति।

ननु बाह्यतयाध्यवसितोर्थः शब्दप्रतिभासी साधा[5]रणोन्य एवान्यच्च साधारणं स्वलक्षणन्तत्कथन्तन्निष्ठा इत्यत्राह। **तदेकस्मादपि** यतो यतो व्यावृत्तोर्थः शब्दैर्विषयीक्रियते तस्मात्तस्मादतत्कारणादतत्कार्याच्चैकस्मादपि **तस्य** स्वलक्षणस्यानकव्यावृत्तस्य **भेदोस्तीति** कृत्वा तद्विषया उच्यन्ते न तु तद्विषया एव। यद्वा तस्य व्यावृत्त्याश्रयस्य धर्मस्य यत् स्वलक्षणन्तन्निष्ठा एव त[6]त्प्राप्तिपर्यवसाना एव भवन्ति। किं कारणं (।) तदेकस्मादपि तस्य भेदोस्तीति व्याख्यातमेव।

उपसंहरन्नाह। **तस्मा**दिति। यस्मात् सजातीयविजातीयाद् व्यावृत्तिस्त**स्मादेकस्य भावस्य यावन्ति पररूपाणि तावत्यस्तदपेक्षया**। पररूपापेक्षया। पररूपेभ्यो व्यावृत्तयः क[7]ल्पिता धर्मभेदाः। व्यावर्त्तते विजातीयमेभिरिति कृत्वा (।) किं कारणं (।) तस्मिन् व्यावर्त्येऽवधिभूते धर्मिण्यसम्भवि कार्यं कारणं च यस्य विवक्षितस्य धर्मिणः स **तदसम्भविकार्यकारणस्तस्य तद्भेदात्**। तस्मादतत्कार्यादतत्कारणाच्च भेदाद् व्यावृत्तत्वात्। **यावत्यश्च व्यावृत्तयस्तावत्यः** श्रुतयो निवे- 46b

---

[1] Tha-sñad-du-byas-pa-    [2] Thaḥi-dan-kyis.

**कारणपरिहारेण व्यवहारार्थाः। यथा शब्दः प्रयत्नानन्तरीयकः श्रावणोऽतत्कार्यकारणपरिहार्थः।**

**तस्मात् स्वभावाऽभेदेऽपि[1] यो विशेषो भेदो धर्मिणा नाम्ना[3] प्रतीयते न स शक्यस्ततोऽन्येनेति न सर्वे शब्दा एकार्थाः। तस्मान्न प्रतिज्ञार्थैकदेशो हेतुरेवम्।**

**कथं स एव व्यवच्छेदः शब्दालिङ्गाभ्यां विधिना प्रतिपाद्यते न वस्तुनो रूपमिति**

---

शिता **अतत्कार्यकारणपरिहारेण व्यवहारार्थाः**। तद्विवक्षितं कार्यं कारणं[1] च यस्य स तत्कार्यकारणः। **यथा** श्रोत्रविज्ञानकार्यः **शब्दः** प्रयत्नकारणश्च स तथा यो न भवति सोऽतत्कार्यकारणस्तस्य परिहारेण व्यवहारार्थाः प्रवृत्तिनिवृत्तिलक्षणो व्यवहारोर्थः फलं यासामिति विग्रहः।

विषयमाह। प्रयत्नः कारणं यस्य स प्रयत्नानन्तरीयक उच्यते। तेनाऽतत्कारणस्याऽप्रयत्नकारणस्य विद्युदादेः परिहारार्थः **प्र[2]यत्नानन्तरीयक**ध्वनिः। श्रोत्रज्ञानं कार्यं यस्य **तच्छ्रावण**न्तेन **श्रावण**ध्वनि**रतत्कार्यपरिहारार्थः**। सर्वव्यवहाराणां चार्थक्रियानिमित्तत्वात्। हेतुफलभावलक्षणत्वाच्चार्थक्रियाया घटादिशब्देष्वपि तदतत्कार्यकारणपरिहार्थत्वं योज्यं॥

**तस्मादि**त्यादिना तृतीयश्लोकं व्याचष्टे। यस्माद् भिन्ना व्यावृत्तिभेदाः श्रुतयश्च यथास्वम्भेदे नियतास्तस्मा[3]देकस्य **धर्मिणः स्वभावाऽभेदेपि। धर्मिणे**त्यस्य विवरणं **नाम्ने**ति शब्देनेत्यर्थः। **यो विशेष** इत्यस्यार्थो **भेदः** कृतकादिलक्षणो धर्मः कल्पितः **प्रतीयते। न स शक्यस्ततोन्येन**। तस्माद् विवक्षितात् कृतकादिशब्दादन्येनानित्यादिशब्देन प्रत्याययितुन्त**स्मान्न प्रतिज्ञार्थैकदेशो** हेतुरनित्यकृतक**शब्दयोर्भिन्नार्थ**त्वात्॥

**कथमि**त्यादि परः।[4] **शब्दश्च लिङ्गश्च ताभ्यां**। यद्यपीह लिङ्गं प्रकृतन्तथापि शब्दस्योपादानं लिङ्गवत् निर्विषयत्वख्यापनार्थन्तेन वे द स्य प्रामाण्यं निराकृतम्भवति।

ननु विधिरूपेण शब्दलिंगे अर्थः प्रतिपाद्यत इत्युक्तन्तत्कथमिदमाशंकितं व्यवच्छेदः प्रतिपाद्यत इति कथं गम्यत इति।

नैतदस्ति। व्यवच्छिद्यतेनेनेति व्यवच्छेदो बाह्यरूपतयारोपित ए[5]वाकार उच्यते। तेन स एव शब्दलिङ्गाभ्यां विधिना प्रतिपाद्यते न वस्तुरूपमिति कुतो गम्यते। यद्वा व्यवच्छिद्यतेस्मिन्निति व्यवच्छेदः। स्वलक्षणमुच्यते। **स एव**

---

[1] Thaḥi-daṅ-kyis.

**गम्यते। प्रमाणान्तरस्य प्रवृत्तेः। तथा हि—**

**एकस्यार्थस्वभावस्य प्रत्यक्षस्य सतः स्वयम्।**
**कोऽन्यो न दृष्टो भागः स्याद् (यः) प्रमाणैः परीक्ष्यते ॥४५॥**

**एको ह्यर्थात्मा स तावत् प्रत्यक्षः। असिद्धे धर्मिणि साधनासम्भवात्। यथाऽनित्ये साध्ये शब्दः। तस्य प्रत्यक्षेणैव सिद्धेः सर्वाकारसिद्धिः। तदन्यस्या[6]ऽसिद्धस्याभावात्। भावे वाऽतत्स्वभावत्वम्।**

**न हि यो येन एकयोगक्षेमी भवति स तत्स्वभावो न युक्तः। तन्मात्रनिबन्ध-**

---

**शब्दलिंगाभ्यां विधिना** विधिरूपेण **प्रतिपाद्य**तेऽध्यवसीयते **न पुनर्वस्तुनो रूपं** पारमार्थिकधर्मधर्मिभावलक्षणं प्रतिपाद्यत **इति** कुतो **गम्यते**।

**प्रमाणान्तरस्ये**त्यादि प्र[6]तिवचनं। तेनायमर्थो यदि तावत् पारमार्थिको **धर्मधर्मिभावः** सर्वात्मनाऽभिन्नस्तदैकेन प्रमाणेन शब्देन वाधिगतेर्थे सर्वात्मना परिच्छेदादन्यस्य **प्रमाणान्तरस्य** शब्दान्तरस्य वा प्रवृत्तिः स्याद् गृहीतग्राहित्वेनाप्रामाण्यात्। भवति च शब्दान्तरादेः **प्रवृत्तिरतः** कल्पित एव धर्मधर्मिभावः।

यद्यपि पूर्वसामान्यनिराकरणा[7]देव कल्पितो धर्मधर्मिभावः प्रसाधितस्तथापि प्रकारान्तरेणानेनापि प्रसाध्यत इत्यदोषः। एतमेव प्रतिपादयन्नाह। **तथा ही**त्यादि। **एकस्ये**ति। धर्मधर्मिविभागरहिततत्वान्निरंशस्या**र्थस्वभावस्या**र्थात्मनः **स्वयं** स्वरूपेण **प्रत्यक्षस्य सतः कोन्यो न दृष्टो भागः स्यात्** प्रत्यक्षदृष्टात् स्वभावात् कोन्यः स्वभावो न दृष्टः स्याद् **यः प्रमाणैर**नुमानसं[1]ज्ञकैः **परीक्ष्यते** (।) व्यक्तिभेदाद् बहुवचनं। सर्व एव दृष्टो निरंशत्वाद् भावस्य तस्मान्न प्रमाणान्तरपरीक्ष्यः स्यादिति। **एक** इत्यादि विवरणं। **एको ह्यर्थात्मा** निरंशः **स तावत् प्रत्यक्षो**भ्युपगन्तव्यः यत्रानुमानं प्रवर्त्तते। किं कारणं(।)**प्रमाणे**न प्राग**सिद्धे धर्मिणि साधनासम्भवात्**। आश्रयासिद्धत्वेन लिंगस्यासम्भवात् तस्मात् प्रसिद्धेन धर्मिणा भा[2]व्यं ॥

एतदुक्तम्भवति। लिङ्गस्यैव प्रवृत्तिर्न स्यात् किं पुनर्लिंगिनिश्चिता प्रमाणान्तरस्य प्रवृत्तिर्भविष्यति। **यथाऽनित्ये साध्ये शब्दः** प्रत्यक्षसिद्धस्**तस्य प्रत्यक्षेणैव** प्रमाणेन स्वरूप**सिद्धेः** कारणात् **सर्वाकारसिद्धिः**। कस्मात् **तदन्यस्यासिद्धस्य** शब्दस्वभावादन्यस्य स्वभावस्यासिद्धस्या**भावात्। भावे** वाऽसिद्धस्य स्वभावस्य **अतत्स्वभावत्वम**शब्दस्वभावत्वं।[3] सिद्धासिद्धयोरेकस्वभावत्वविरोधात्।

तदेवाह। **न ही**त्यादि। अलब्धधर्मानुवृत्तिर्योगः। लब्धधर्मानुवृत्तिः क्षेमः। एको योगः क्षेमश्च यस्य स तथा। तुल्यधर्मेति यावत्। **यः** स्वभावो **येन** सदैक**योगक्षेमी न भवति स** भिन्नयोगक्षेमः। तत्स्वभावो यतो भिन्नयोगक्षेमस्**तस्य**

47a

43 5b **नत्वाद् भेदव्यवहारस्य । अन्यथाऽभावप्रसङ्गादित्युक्तम् । तस्मात् प्रत्यक्षे धर्मिणि तत्स्वभावसाकल्यपरिच्छेदात् अनवकाशा प्रमाणान्तरस्य वृत्तिः ॥**

**नो चेद् भ्रान्तिनिमित्तेन संयोज्येत गुणान्तरम् ।**
**शुक्तौ वा रजताकारो रूपसाधर्म्यदर्शनात् ॥४६॥**

---

**स्वभावो न युक्तः। तन्मात्रनिबन्धनत्वाद् भेदव्यवहारस्य** नानात्वं व्यवस्थायाः।

**अन्यथेति** यद्येतद् भेदकारणं नेष्यते तदाभेदव्यवहारस्या**भावप्रसङ्गादित्युक्तं ।** एष हि भेदाभेदहेतुर्वेत्यत्र प्रस्तावे। यत एवन्त**स्मात् प्रत्यक्षे धर्मिणि** शब्दादौ। **तत्स्वभावसाकल्यपरिच्छेदात्**। धर्मिस्वभावस्य साकल्येनावगमात् **तत्र** धर्मिणि। **अनवकाशा** निर्विषयी **प्रमाणान्तरस्या**नुमानस्य **वृत्तिः** ॥

तवापि तुल्यो दोष इति चेदाह[5] (।) नो **चेत्यादि। भ्रान्तिनिमित्तेन** सदृशापरोत्पत्त्यादिना कारणभूतेन विकल्पबुद्ध्या **संयोज्येत** समारोप्येत **गुणान्तरं**। **स्थिरत्वादि**। वा शब्द इवार्थे। **शुक्ताविव रजताकारः** संयोज्येत। कथं। रजतरूपेण शुक्तिका**रूपस्य** यत्**साधर्म्यं** चैकचिक्यादि। तस्य **दर्शनात्**। अनवधारितविशेषं शुक्तिकारूपमेव सदृशप्रत्ययनिबन्धनत्वाद् रूपसाधर्म्यमुक्तं[6] न तु साधर्म्यं नाम द्वयोः साधारणमस्ति।

एतदुक्तम्भवति। **यदि भ्रान्तिनिमित्तेन गुणान्तरन्न संयोज्येत** भवेत् ममापि दोषः किन्तु समारोप्येत। ततः समारोपव्यवच्छेदार्थम्प्रमाणान्तरं प्रवर्त्तते। तेनायमर्थानुभूतनिश्चिते प्रमाणान्तरस्य गृहीतग्राहित्वेनाप्रवृत्तिः स्यात्। समारोपेण
47b त्वनुभूतानिश्चिते तत्समारोपव्यवच्छेदा[7]र्थं प्रमाणान्तरमनुमानं प्रवर्त्तेत इत्येके।

तदयुक्तं। लिङ्गस्य व्यवच्छेदेन सह सम्बन्धासिद्धेः। नापि यावद्धेतुना पूर्वं पक्षव्यवच्छेदो न क्रियते तावत् सन्दिग्धा साध्यप्रतीतिः स्याद्धेतोः साध्येन सम्बन्धात्। यत्र च न साध्यं न तत्र तद्विपक्षो विरोधात्। तस्माल्लिङ्गं स्वव्यापकं विधिरूपेण निश्चिन्वदर्थादन्यसमारोपं निषेधति ॥

नन्वेवमपि कथन्तन्निषेधः क्षणिकत्वानुमाने[1]पि प्रवृत्तेऽक्षणिकारोपात्।

सत्यं (।) केवलमनुमानेनाक्षणिकार्थनिषेधे कृते नायमक्षणिकाकारः प्रत्ययस्तज्जन्योपि तु सदृशापरोत्पत्तिजन्यत्वेनारोपित इति प्रतिपाद्यते। तस्मात् तस्यैवानुभूतानिश्चितस्य क्षणिकत्वादेर्निश्चयानुमानं प्रवर्त्तते। यत्रापि विपरीत समारोपो नास्त्यभ्यासादेरभावाच्च नानुभवो निश्चयजननसमर्थो न तत्रापि निश्चया[2]र्था प्रमाणान्तरवृत्तिरेकांशनिश्चयेन सर्वात्मना निश्चितत्वात्। न च तद्वस्तु प्रतिभासते यस्य न कश्चिदपि स्वभावो निश्चितः। तस्मात् तत्राप्ये-

**यदि दृष्टसर्वतत्त्वस्वरूपे शुक्तावपि शुक्तौ रजताकार इव निश्चयप्रतिरोधिना[1] भ्रान्तिनि[2]मित्तेन गुण(न्तरं) न संयोज्येत। न हि शुक्तौ समानं विशिष्टं च द्वे रूपे सम्भवतः। तथा सर्वदा प्रसङ्गात्। अप्रतिपत्तौ वा विवेकेन द्वित्वकल्पनायोगात् अतिप्र[3]सङ्गाच्च।**

**पश्यन् शुक्तिरूपं विशिष्टमेव पश्यति। निश्चयप्रत्ययसामान्यात् अनिश्चि-**

---

कप्रमाणप्रवृत्तावपरस्याप्रवृत्तिः स्यादेवेति।

**यदी**त्यादिना विवरणं। **दृष्टं सर्वन्तत्त्वं** स्वरूपं यस्येति विग्रहः। तथा **निश्चयप्रतिरोधिना** यथादृष्टनिश्चयविबन्धकेन **भ्रान्तिनिमित्तेन** सदृशापरोत्पत्तिलक्षणेन। **गुणा[3]न्तर**स्थिरत्वादि। **न संयोज्येत**। नारोप्येत। यथा शुक्तौ विशिष्टरूपेण गृहीतायामपि शुक्लसाधर्म्याद् रजताकारः संयोज्येत। तदा स्यादनवकाशा प्रमाणान्तरवृत्तिः (।)

स्यान्मतं (।) न शुक्तौ विशिष्टरूपग्रहे रजतसमारोपः किन्तु यद्रजतरूपसामान्यन्तद्दृष्टेरेवमध्यवसाय इत्यत्राह। **न ही**ति। न हि **शुक्तौ द्वे रूपे सम्भवतः।** एकं रजतेन **समानं** रूपं अप[4]रम्वि**शिष्ट**मवधारणं **च**। किं कारणं। **तथा** सामान्यविशेषरूपेण शवलाभासायाः प्रतिपत्तेः **सर्वदा प्रसङ्गात्**। **अप्रतिपत्तौ वा विवेकेने**ति। इदं सामान्यमयं विशेष इत्येवम्विवेकेन विभागेनाप्रतिपत्तौ **द्वित्वविकल्पायोगात्**। शुक्तौ द्वे रूपे इति कल्पनाया अयोगात्। प्रतिभासभेदमन्तरेण द्वित्वकल्पनाया**मतिप्रसङ्गात्**। अन्यत्राप्येक[5]त्वाभिमते द्वित्वकल्पना स्यात्। नेदं रजतमिति बाधकस्यानुत्पादप्रसंगाच्च। तस्माच्छुक्तौ रूपद्वयायोगात।

**पश्यन् शुक्तिरूपं** पुरुषो **विशिष्टमेव** स्वलक्षणमेव **पश्यति** न सामान्यं। अभ्यासादयो **निश्चयप्रत्यया**स्तेषाम्वैफल्यात् त्वनिश्चिन्वन् द्विविशिष्टं शुक्तिकारूप**न्तत्सामान्यं** रजतरूपसामान्य**म्पश्यामीति मन्यते**। तत इति रजतरूपसामान्यग्रहणाभिमाना[6]दस्य द्रष्टुः शुक्तौ रजतसमारोपः। यद्वा शुक्तिकारजतयोर्यत्सामान्यं तुल्यं रूपन्तत्पश्यामीति मन्यते (।) **ततो** रूपदर्शनादस्य द्रष्टू **रजतसमारोपः**। तथा हि यादृशमेव मया रजतस्य रूपं प्रतिपन्नन्तादृशमेवास्यापि रूपन्तस्मात्तदेवेदं रजतमिति प्रतीतिः। यथा शुक्तौ रजतसमारोपस्तथा दृष्टे शब्दादौ धर्मिणि **सदृशापरापरोत्पत्त्या** स[7]दृशस्य द्वितीयस्य क्षणस्योत्पत्त्या भ्रान्तिनिमित्तेन पूर्वोत्तरक्षणयोर**लक्षितनानात्व**स्य पुंसस्**तद्भावसमारोपात्** सत्तासमारो- 48a

---

[1] Nes-paḥi-gnas-su-gyur-pa. [2] Gtan-la-ma-phebs-pas.

**न्वन् तत्सामान्यं पश्यामीति मन्यते।[1] ततोऽस्य रजतसमारोपः सदृशापरोत्पत्त्या[4] अलक्षितनानात्वस्य तद्भावसमारोपात् स्थितिभ्रान्तिः। यावन्तोऽस्य परभावाः तावन्त एव यथा स्वनिमित्तभाविनः समारोपा इति तद्व्यवच्छेदकानि भवन्ति प्रमाणानि[5] सफलानि स्युः। तेषान्तु व्यवच्छेदफलानां नाप्रतीतस्य वस्त्वंशस्य प्रत्यायने प्रवृत्तिः। अनंशस्य एकदेशेन दर्शनायोगात्। तस्य दृष्टत्वात्॥[6]**

**तस्माद् दृष्टस्य भावस्य दृष्ट एवाखिलो गुणः।**
**(भ्रान्तेर्निश्चीयते नेति) साधनं संप्रवर्त्तते ॥४७॥**

**इति संग्रहश्लोकः।**

436a **तस्मान्न दृष्टग्रहणार्था दृष्टे प्रमाणान्तर[7]स्य प्रवृत्तिः॥**

**वस्तुग्रहेनुमानाच्च धर्मस्यैकस्य निश्चये।**
**सर्व(धर्म)ग्रहोऽपोहे नायं दोषः प्रसज्यते ॥४८॥**

---

पात् **स्थितिभ्रान्तिः**। तस्माद् **यावन्तोस्य** शब्दादेः क्षणिकानात्मादिस्वभावस्य **परभावा** नित्यादयस्**तावन्त एव यथास्वनिमित्तभाविनः** यस्य यदनुरूपं निमित्तन्तद्भाविनः **समारोपा[1] इति**। **तद्व्यवच्छेदकानि** तस्य समारोपस्यार्थाद् व्यवच्छेदकानि **भवन्ती**त्युत्पद्यमानानि **प्रमाणा**न्यनुमानसंज्ञितानि। व्यक्तिभेदाद् बहुवचनं। **सफलानि स्युः** सार्थकानि स्युः। **तेषान्तु व्यवच्छेदफलानां** समारोपप्रतिषेधफलानां प्रमाणानां। **नाप्रतीतस्य वस्त्वङ्शस्य** वस्तुभागस्य **प्रत्यायने** प्रकाशने **प्रवृत्तिः**। तस्य वस्त्वंशस्य **निरंशे** धर्मिणि दृश्य[2]माने दृष्टत्वात्। किं कारणम् (।) **अनंशस्यैकदेशेन दर्शनायोगात्**॥

यत एवन्त**स्मात्** प्रत्यक्षेण **दृष्टस्य भावस्य दृष्ट एवाखिलो गुणः** समस्तः स्वभावस्तथापि **भ्रान्तेः** सद्भावा**न्निश्चीयते नेति** कृत्वा तन्निश्चयार्थं **साधन**मनुमानं विधिरूपेणैव **प्रवर्त्तत** इति स्पष्टमेवोक्तं।

**तस्मान्नादृष्टग्रहणार्था दृष्टे** प्रत्यक्षेण **प्रमाणान्तरस्य** (।) किन्तर्हि दृष्टनिश्चया[3] चैव **प्रवृत्ति**रित्यनेनापि विध्यर्थः। स्पष्ट एवोक्तोन्यनिषेधस्त्वर्थात्॥

**वस्तुग्रह** इत्यादि। चकारः प्रत्यक्षापेक्षया समुच्चयार्थः। अनुमानेन च **वस्तुग्रहे**ङ्गीक्रियमाणे। शब्दादिधर्मिणो **धर्मस्यैकस्य** कृतकत्वादिलक्षणस्य **निश्चयेन** निरंशत्वाद् धर्मिणः **सर्वधर्म**निश्चयस्तदा नित्यत्वाद्यनुमानान्तरवैफल्यमित्याकूतं।

---

[1] Sñam-du-rlog-par-byed-do.

**न केवलं प्रत्यक्षदृष्टे प्रमाणान्तरावृत्तिः। यदानुमानमपि वस्तु विधिना प्रत्यायक इष्यते न व्यवच्छेदकृत्। तदा एकधर्मनिश्चये तदव्यतिरेकात् सर्वधर्मनिश्चय इति प्रमाणन्तरावृत्तिः।**

**न हि तस्मिन् निश्चिते निश्चितो तदात्मेति युक्तः।**

**• यदा पुनरनुमानेन समारोपव्यवच्छदः क्रियते। तदैकेन समारोपस्य व्यवच्छेदात् अन्यस्य व्यवच्छेदः कृतो न भवतीति तदर्थमन्यत् प्रवर्त्तते।**

**ननु विपर्यासपूर्वक एवाप्रतीतस्य निश्चयो भवतीति नायं नियमः। यथा-**

---

अपोहो बाह्यतया आरोपित आकारो[4]पोह्यतेऽनेनेति कृत्वा। तस्मिन्ननुमानेन प्रतिपाद्येऽङ्गीक्रियमाणे यद्वापोह्यतेस्मिन्नित्यपोहः स्वलक्षणं (।) तस्मिन् स्वाकाराभिन्नतयाऽनुमानग्राह्येऽभ्युपगम्यमाने **नायम**नन्तरोक्तो **दोषः प्रसज्यते**।

**न केवलमि**त्यादि विवरणं। **क्वचित्** प्रत्यक्षदृष्टे धर्मिणीति सम्बन्धः। कस्मिँश्चित् **प्रत्यक्षदृष्टे** धर्मिणीत्यर्थः। न सर्वो धर्मी प्रत्यक्षो भवतीति क्वचिद् ग्र[5]हणं। अनन्तरोक्तेन न्यायेन **प्रमाणान्तरावृत्तिः**।

**तदानुमानमपि वस्तु** शब्दादिकं **विधिना प्रत्यायतीष्यते** वस्त्वध्यवसायेनार्थान्न समारोप**व्यवच्छेदकृत्**। **तदे**ति विधिरूपेण वस्तुस्वरूपग्रहणे। **एकधर्मनिश्चये** सति **तदव्यतिरेका**न्निश्चितधर्माव्यतिरेकात् **सर्वधर्मनिश्चय इति प्रमाणान्तरावृत्ति**रनुमानान्तराप्रवृत्तिः। सत्यप्यव्यतिरेके। न सर्व[6]धर्मनिश्चय इति चेदाह। **न ही**त्यादि। **तस्मि**न्निति प्रथमानुमान**निश्चिते** धर्मे। **तदात्मे**ति। निश्चितधर्मात्मा सन्**निश्चितो** न हि युक्तः।

अपोहे नायन्दोषः प्रसज्यत इत्येतद्विवृण्वन्नाह। **यदा पुन**रित्यादि। यदा पुन**रनुमानेन** वस्त्वध्यवसायं कुर्वताऽर्थात् **समारोपव्यवच्छेदः क्रियते** न तु साक्षाज्ज्ञापकत्वादस्य। तेनैतन्निरस्तं समारोपव्यवच्छेद[7] एव व्यवहारादन्यार्थप्रवृत्तिर्न स्यादनुमानेनानिश्चितत्वादिति। **तदैकेन** कृतकानुमानेनैकस्याकृतक**समारोपस्य व्यवच्छेदादन्यस्य** नित्यसमारोपस्य **व्यवच्छेदः कृतो न भवती**ति कृत्वा। **तदर्थ**मन्यसमारोपव्यवच्छेदार्थ**मन्य**दित्यनित्यत्वाद्यनुमानं **प्रवर्त्तते**। तस्मान्न विकल्पानां स्वरूपेण बाह्यो ग्राह्योऽपि तु स्वाकारेण सहैकीकृत एव बाह्यो विषयः (।) स चास[1]त्योऽपोह्यतेऽन्यदनेनेति अपोह उच्यते ॥ 48b

स्थिते चैवम्परोनवगताभिप्रायः प्राह। **नन्वि**त्यादि। **पूर्वन्त**द्विपरीताकारसमारोपी विपर्यासः प्रवर्त्तते। ततस्त**द्विपर्यासपूर्वकोप्रतीतस्या**र्थस्य लिङ्गान्नि**श्चयो भवतीति नायन्नियमो** विपर्यासरहितेप्यनुमानसम्भवात्। तदाह। **यथे-**

**ऽकस्मादग्निप्रतिपत्तिः। न हि तत्रानग्निसमारोपः सम्भाव्यते। तत् न सर्वत्र व्यवच्छेदः क्रियत इति चेत्।**

**अत्र धर्मिप्रतिपत्तौ अभेदात् सर्वप्रतिपत्तेः। ततो भेदेऽसम्बद्धस्याप्रतिपत्तिरित्युक्तम्। तस्मात् तत्राऽपि तद्दर्शिनः[5] तत्स्वभावानिश्चयो हि कुत इति। विपर्यासादेव।**

**स च तद्विविक्तेन तं प्रदेशं अग्निसत्ताभावनाविमुक्तया बुद्ध्या तद्विविक्तेन**

---

त्यादि। **अकस्मा**दित्यतर्क्कितोपस्थितात्। सहसैव क्वचित्प्रदेशे धूमा[2]द**ग्निप्रतिपत्तिः। न हि तत्रे**त्यकस्मादग्निप्रतिपत्ताव**नग्निसमारोपः सम्भाव्यते। तदिति** तस्मान्न **सर्वत्र व्यवच्छेदः क्रियते**ऽर्था**दित्य**नुमानेन।

**उक्त**मित्या चा र्यः। **अत्र** हि वस्तुस्वरूपग्राहकत्वेनानुमानस्य प्रवृत्तावुक्तमुत्तरं। प्रत्यक्षेण **धर्मिप्रतिपत्तौ** तद्धर्माणां धर्मिणः सकाशाद**भेदात् सर्वप्रपितत्तेर**नुमानवैफल्यमिति। धर्मिणः सकाशाद् ध[3]र्मस्य भेदे वाभ्युपगम्यमाने धर्मिणा सह न तादात्म्यलक्षणः सम्बन्धो भेदाभ्युपगमात्। न चानित्यत्वादीनां धर्मिस्वरूपादुत्पत्तिर्न चानित्यत्वादिभ्यो धर्मिण उत्पत्तिः। **ततश्चासम्बद्धस्य** धर्मस्य तत्र र्मिण्य**प्रतिपत्तिरि**त्येत**दप्युक्तं**। अहेतुफलभूतस्य तत्रानुमानासम्भवादित्यत्रान्तरे। यत एव**न्तस्मात् तत्रा**प्यकस्माद् धूमदर्शनादग्निप्रतिपत्तौ। **तद्द[4]र्शिनः** प्रदेशदर्शिनः पंस**स्तत्स्वभावानिश्चयो**ग्निमत्त्वस्वभावानिश्चयोस्त्येव। स चानियतः **कुतो विपर्यासादेवा**नग्निमता प्रदेशेन तुल्यत्वग्रहणादेव।

एतदेवाह (।) **स चे**त्यादि।

यद्वा तत्स्वभावानिश्चयः कुतः (।) किन्तु निश्चय एव स्यादविपर्यासात्। भवति चानिश्चयः (।) तस्मान्न धर्मिप्रतिपत्तिर्वस्तुस्वरूपग्राहिणीत्यपोहविषया।

किञ्च। **स चे**त्यादि। **स चे[5]**ति पुरुष**स्तद्विविक्ते**नेति वह्निविवेकेन **तं प्रदेश**मग्निमन्तमपि **तद्विविक्तेन रूपेण निश्चिन्वन् बुद्ध्या।** किम्भूतया। **अग्निसत्ताभावनाविमुक्तया।** अग्निसत्तासम्भावनारहितया (।) **कथमविपर्यस्तो** नामविपर्यस्त एवातस्मिँस्तद्ग्रहात् (।) तथा हि (।) यावत्तत्र प्रदेशे धूमन्न पश्यति तावदन्येनाग्निरहितेन प्रदेशेन सदृशन्तमप्यध्यवस्यति। यदि नाम क्वचिदनु[6]भव योगे सति यदीह निश्चयस्तथापि तत्र संशयेन भाव्यं संशयश्चोभयांशावलम्बी। स च पक्षे तद्विपरीतं संस्पृशत्येवातः संशयव्युदासेप्यन्यव्यवच्छेदः कुतो भवत्येव लिङ्गेन। अवश्यं च लिङ्गादेवानुमेयं प्रतिपद्यमानस्तत्रानुमेये विपर्याससंशयाभ्यां युक्तो भवति। यस्मात् **तदाकारसमारोपसंशयरहितश्च।** अनग्न्याकारसमारोपे[7]ण

**रूपेण निश्चिन्वन् कथमविपर्यस्तो नाम। तदाकारसमारोपसंशयरहितश्च तत्प्रतिपत्तौ न लिङ्गमनुसरेत्। न तस्यान्वयव्यतिरेकयोराद्रियेत् ॥**

**तस्मादपोहविषय(मिति) लिङ्गं प्रकीर्तितम्।**
**अन्यथा धर्मिणः सिद्धा(वसिद्धं किमतः) परम् ॥४९॥**

**इति संग्रहश्लोकः।**

---

संशयेन च रहितश्च पुरुष**स्तत्प्रतिपत्तौ** अग्निप्रतिपत्तौ **न लिङ्गमनुसरेत्**। न पक्षधर्मं समाश्रयेत्। तथा **न तस्य** लिङ्गस्या**न्वयव्यतिरेकयोराद्रियेत**। । यावतानुसरेदाद्रियते च। तस्मात्तदाकारसमारोपसंशयवान् प्रतिपत्ता लिङ्गबलेन समारोपमपनयति क्वचित्संशयमतः सर्वत्र स्वव्यापकप्रतिपत्तिद्वारेण समारोपव्यवच्छेदः क्रियते। 49a

**तस्मा**[1]**दपोहविषय**मन्यव्यवच्छेदविषयं। इत्युक्तेन प्रकारेण न तु साक्षात्। **अन्यथे**ति यदि समारोपमन्तरेणानुमानस्य प्रतिपत्तिरिष्यते। तदा केनचित् प्रमाणेन **धर्मिणः सिद्धौ किमसिद्धन्त**स्य धर्मिणो रूप**मतः** सिद्धात् स्वभावात् **परम**न्यदस्ति यस्य प्रत्यायनाय लिङ्गं प्रवर्त्तेत ॥

ननु संशयविपर्ययोत्पादे सति भागः स्यात्। यदाह (।) न चेमाः कल्प[1]ना अप्रतिसम्विदिता एवोदयन्ते व्ययन्ते चेति। नापि तत्प्रतिपत्तौ लिङ्गानुसरणेन तदाकारसमारोपसंशयः शक्यते कल्पयितुन्निश्चयानुत्पत्तिपक्षेपि (।) साध्यनिश्चयार्थं लिङ्गानुसरणस्य सम्भवात्।

"अन्यथा धर्मिणः सिद्धावसिद्धं किमतः परम्" (।)

इत्यनेनापि धर्मिविषयस्य ज्ञानस्य कल्पितविषयत्वं स्यात्। न तु धर्मिणि समारोपः सिध्यतीति कथ[3]न्तदनुमानस्यार्थात् समारोपव्यवच्छेद इति।

सत्त्यं (।) किन्त्वयमभिप्रायः (।) न यावत् पक्षधर्मत्वनिश्चयो न तावदनुमानस्योत्थानमस्ति हेतोरसिद्धत्वात्। अग्निमति च प्रदेशे प्रदेशमात्रसम्बन्धितया यो धूमस्य निश्चयोऽयमेव विपर्यासोऽन्यथावधारणात्। न ह्यत्राग्निर्नास्तीत्येवं रूप एव विपर्यासः साग्नेः प्रदेशादयमन्य इत्येवं रूपस्यापि[4]षि(?)प्रत्ययस्य विपर्यासात्तेनात्राप्यनुमाने साग्निरयं प्रदेशो न प्रदेशमात्रमिति समारोपनिषेधोस्त्येव।

भवतु तावत् समारोपे तद्व्यवच्छेदाय स्वविषये प्रवर्त्तमानं लिङ्गमन्यापोहकृत्। यत्पुनरिदं प्रत्यक्षपृष्ठभावि विकल्पविज्ञानन्तदसति समारोपे भवत् कथमन्यापोहकृत्। अवश्यं च तदन्यापोहविषयमेष्टव्यं सामान्यविषयत्वादन्यापो[5]हलक्षणत्वाच्च सामान्यस्य भवतान्दर्शनेनेति (।)

**(क्वचित् दृष्टेपि यज्ज्ञानं सामान्यार्थविकल्पकम् ।**
436b **असमारोपितान्यांशे तन्मात्रापोहगोचरम्) ॥५०॥**

---

अत्र आह। **क्वचिदित्यादि**। कस्मिँश्चिद्रूपादौ **दृष्टेपि** प्रत्यक्षेण। तत्पृष्ठभावि यज्ज्ञानं **सामान्यार्थं सामान्यविषयमत** एव विकल्पकं। **असमारोपितः** अन्याङ्शः प्रतियोग्याकारो यस्मिन् विषये स तथा तत्र प्रवर्त्तमानन्तदपि **तन्मात्रापोहगोचरं**। तेनायमर्थो भवति (।) समारोपरहितं स्वलक्ष[6]णं स्वाकारभेदेन गृह्णन् विकल्पकं ज्ञानम्भ्रान्तत्वात् तत्समारोपरहितबाह्याध्यवासायकमेव न तु बाह्यस्वरूपग्राहकम् (।) अतस्तन्मात्रमेव नियतबाह्यावसाय एवान्यस्य समारोपस्यापोहगोचरम्विकल्पकं ज्ञानं।

यद्वा असमारोपितश्चासावन्यांशश्च तस्मिन् सति विकल्पकं ज्ञानं प्रवर्त्तमान-
49b न्तन्मात्रापोहगोचरं। योसावसमारोपितोन्याङ्शस्तन्मात्रव्यव[7]च्छेदविषयम्भवति।

एतदुक्तम्भवति। यत्रापि समारोपः प्रवृत्तो न तत्रापि समारोपनिषेधः शब्दलिङ्गाभ्यां प्रतिपाद्यते सम्बन्धाभावादत एवायं न क्रियतेऽहेतुत्वाच्च नाशस्य। केवलं पूर्वकस्य समारोपस्य स्वरसनिरोधात्। शब्दलिङ्गाभ्यामनित्यादिनिश्चये सत्यन्यस्य समारोपस्यानुत्पादे सति समारोपनिषेधः कृतो भवति। तथा प्रत्यक्षदृष्टेप्यन्यविक[1]ल्पस्य समारोपव्यवच्छेदः केन वार्यते। तेन न पूर्वत्रान्यादृश एव समारोपव्यवच्छेद उक्तोऽधुनान्यादृश एवोच्यत इति भिन्नवाक्यता।

तेनेदं च निरस्तं (।)

> "प्रागगौरिति विज्ञानं गोशब्दश्राविणो भवेद् (।)
> येनागोव्यवच्छेदाय प्रवृत्तो गौरिति ध्वनिरि"[1] ति।

यदा शब्दलिंगयोः स्वविषये निश्चयजननेनान्यनिषेधे व्यापारः कल्प्यते। तदा विधिरूपेणैव प्रवृत्ति[2]रिति सिद्धं। तेन (।)

> "यदि गौरित्ययं शब्दः समर्थोन्यनिवर्त्तने।
> जनको गवि गोबुद्धेर्मृग्यतामपरो ध्वनिरि"ति (॥)

निरस्तं।

तथा यदप्युच्यते।

> "यद्यप्पोह विनिर्मुक्ते न वृत्तिः शब्दलिंगयोः।
> युक्ता तथापि बोधस्तु ज्ञातुर्वस्त्ववलम्बत" [1] इति (॥)

---

[1] Ślokavārtika, Apohavāda 92.

**यद् अलिङ्गरूपादिकमेतत् दृष्टिप्रवृत्तौ[1]¹ निश्चयज्ञानं जायते। तत् कथं व्यवच्छेदविषयं भवतीति चेत्। समारोपविषयेऽभावात्। यत्रास्य समारोपो न तत्र भेदे स्थिरः[2] सात्मक इति वा निश्चयो भवति ॥**

---

. तदिष्टमेवास्माकं। शब्दलिंगप्रतिपादितस्य चार्थस्यान्यनिषेधे व्यापारो **न** शब्दलिङ्गयोः।

तेन यदुच्यते कु मा [3] रि ले न (।) निषेधस्य निरूपत्वाद् भेदाभावाच्च **न** लिङ्गलिङ्गिभावः नापि शब्दवाच्यत्वं।

> "न गम्यगमकत्वं स्यादवस्तुत्वादपोहयोः।
> भवत्पक्षे यथा लोके खपुष्पशशशृङ्गयोः।
> निषेधमात्ररूपं च शब्दार्थो यदि कल्प्यते।
> अभावशब्दवाच्या स्याच्छून्यतान्यप्रकारिका। (३६)
> भिन्नसामान्यवचना विशेषवचनाश्रये।
> सर्वे भवेयुः पर्याया यद्यपोह[4]स्य वाच्यता ॥ (४२)"²

तथा यदि चापोह्यभेदेनापोहस्य भेदस्तदौपचारिकः स्यात्। यस्य चापोहस्य नीरूपत्वे धर्मिभेदेन न भेदः। कथन्तस्य बहिर्भूतैरपोह्यैर्भेदः क्रियते। तदाह²।

> "ननु चापोह्यभेदेन भेदोपोहस्य सेत्स्यति।
> न विशेषः स्वतस्तस्य परतश्चौपचारिकः॥ (४७)
> संसर्गिणोपि चाधारा यन्न भिन्दन्ति भावतः।
> अपोह्यैः स वहिः[5]संस्थैर्भिद्येतेत्यतिकल्पनेति" (॥५२॥)
> निरस्तं। व्यवच्छेदमात्रस्य शब्दाद्यविषयत्वात्।

**यदि**त्यादिना श्लोकं व्याचष्टे। आदिशब्दाच्छब्दादिपरिग्रहः। नास्य लिंगमस्तीत्यि**लिङ्गरूपादिकमेतदिति निश्चयज्ञानं। असति समारोपे** भवति। **न हि** प्रत्यक्ष**दृष्टे रूपादौ** तदानीम्विपरीताकारसमारोपोस्ति। **तत्कथं व्यवच्छेदविषयम्भवति**।

इयता श्लोक[6]स्य पूर्वार्द्धो व्याख्यातः। उत्तरार्द्धं व्याख्यातुमाह। **समारोपविषये तस्य** निश्चयज्ञानस्या**भावात्**। तद्व्यवच्छेदविषयम्भवतीति प्रकृतेन सम्बन्धः। एतदेवाह। **यत्र भेदेस्य** पुंसः **समारोपो न तत्र** भेदे समारोपविषये **निश्चयो भवत्य**स्थिरो निरात्मक इति वा ॥

---

¹ Mthoṅ-baḥi-mjug-thogs-su. ² Slokavārtika. Apohavāda

**निश्चयारोपमनसोर्बाध्यबाधकभावतः ।**

**न हि सर्वतो भिन्नो दृष्टोऽपि भावस्तथैवेति प्रत्यभिज्ञायते। क्वचित् भेदे**[3] **व्यवधानसम्भवात्। यथा शुक्तेः शुक्लत्वम्। यत्र भ्रान्तिनिमित्तं तत्रैवास्य प्रतिपत्तुः स्मार्तो निश्चयो भवति तद्दर्शनाविशेषेऽपि। भ्रान्तिनिश्चययोर्बा**[4] **(ध्य-बा)धकभावात् ।**

**समारोपविवेकेऽस्य प्रवृत्तिरिति गम्यते ॥५१॥**

**तद्विवेक एवान्यापोहः। तस्मात् तदपि तन्मात्रापोहगाचरं न वस्तुस्वभाव-निश्चायकं**[5] **स्वरूपेण। तथा हि निश्चयेऽपि अप्रतिपत्तिदर्शनात्। तस्य स्वभाव-**

---

५०a　किं कारणं (।) **निश्चयारोपमनसोर्बाध्यबाधकभावः**। निश्चयज्ञा[7]नस्य तद्विपरीतसमारोपज्ञानस्य च बाध्यबाधक**भावतः**। बाध्यबाधकभावमेव साधयन्नाह। **न हीति सर्वतः** सजातीयाद्विजातीयाच्च **भिन्नो दृष्टोपि भावस्तथैवे**ति यथादृष्टेन सर्वेणाकारेण **प्रत्यभिज्ञायते**। निश्चीयते न हीति· सम्बन्धः। किं कारणं (।) **क्वचिद् भेदे** क्षणिकत्वादिके **व्यवधानसम्भवात्**। भ्रान्तिनिमित्तगतः **यथा शुक्तेः** सर्वतो व्यावृत्ताया दर्शनेपि शु[1]क्तिकादित्वे रजतसाधर्म्यस्य भ्रान्तिनिमित्तस्य सम्भवान्न निश्चयः। **यत्र** त्वाकारे **भ्रान्तिनिमित्तं** नास्ति **तत्रैवास्य प्रतिपत्तु**रनुभवो त्तरकालभावी **स्मार्त्तो निश्चयो भवति**। **तद्दर्शनाविशेषे**पि सर्वस्वाकारेषु प्रत्यक्ष-स्याविशेषेपि स्मार्त्त इति स्मृतिरूपः।

ननु तदित्युल्लेखेनानुत्पत्तेः कथं स्मृतिरूपः (।)

सत्यं (।) निर्विकल्पकविषयस्य स्वाका[2]रेणैकीकृत्य विषयीकरणात् स्मृति-रूप उच्यते। यतश्च प्रत्यक्षाविशेषेपि समारोपरहित एव विषये निश्चयो भवति-तस्मात् समारोपनिश्चययोर्बाध्यबाधकभावो गम्यते। ततो **बाध्यबाधकभावात्** कारणात् **समारोपविवेके** समारोपविरहनिश्चयस्यास्य **प्रवृत्तिरिति गम्यते**।

भवतु नाम समारोपविवेके प्रवृत्तिस्तथापि नान्या[3]पोहविषयत्वम्विधिरूपेण प्रवृत्तेरित्याह। **तद्विवेक एवान्यापोहः** समारोपविवेक एव चान्यापोहः। **तस्मात्** समारोपरहिते वृत्तिवशात् **तदपी**ति न केवलमनित्यः शब्द इति निश्चयज्ञानं पूर्वोक्तेन न्यायेन **तन्मात्रापोहगोचरस्तदपि** प्रत्यक्षपृष्ठभाविनिश्चियज्ञानमपि **तन्मात्रापोहगोचरं न वस्तुस्वभावनिश्चायकं स्वरूपे**[4]**ण** (।) किङ्कारणं (।) **तथा हि** कस्यचिदाकारस्य रूपत्वादेर्नि**श्चये**प्यन्यस्य क्षणिकत्वाद्याकारस्या**प्रतिपत्ति-दर्शनात्**।

**निश्चये च अयोगात् ॥**

**(यावन्तोंऽशसमारोपास्तन्निरासे विनिश्चयाः ।**
**तावन्त एव शब्दाश्च तेन ते भिन्नगोचराः) ॥५२॥**

**(अन्यथैकेन शब्देन व्याप्त एकत्र वस्तुनि ।**
**बुद्ध्या वा नान्यविषय इति पर्यायता भवेत्) ॥५३॥**

**इत्यन्तरश्लोकः ।**

---

यदि तु प्रत्यक्षपृष्ठभाविना निष्चयेन वस्तुस्वभावस्य निश्चयः क्रियते तदा **तत्स्वभावनिश्चये च** निरंशत्वाद् वस्तुनस्त**स्यायो**गादन्यस्याकारान्तरस्यानिश्च**या-योगात् ॥**

यतश्च वस्त्वध्यवसायेनैव निश्चयस्य प्रवृत्तिः शब्द[5]स्य वा न वस्तु-स्वरूपग्राहकत्वेन। तस्माद् **यावन्त** एक**स्यांशसमारोपा** रूपान्तरसमारोपाः प्रवृत्ता अप्रवृत्ताश्च **तन्निरासे** समारोपनिरासार्थ**न्तावन्त एव निश्चयाः शब्दाश्च** ताव-न्त एव स्वविषये प्रवर्त्तन्ते । **तेन** कारणेन **ते** निश्चयाः शब्दाश्च **भिन्नगोचरा** भिन्नविषयाः। स्वस्वहेतुतोध्यवसितस्वस्वाकाराभिन्नबाह्यविषयत्वात्तेनैतद् (।)

"बुद्ध्यारोपितबुद्धिस्थो ना[6]र्थबुद्ध्यन्तरानुगः ।
नाभिप्रेतार्थकारी च सोपि वाच्यो न तत्त्वतः।
प्रतिभापि च शब्दार्थो बाह्यार्थविषया यदि।
एकात्मनियते बाह्ये विचित्राः प्रतिभाः कथं।
अथ निर्विषया एता वासनामात्रभावतः।
प्रतिपत्तिः प्रवृत्तिश्च बाह्यार्थेषु कथम्भवेत्।
स्वांशे बाह्याधिमोक्षेण प्रवृत्तिश्चेत्सदा मता।
शब्दार्थोऽतात्त्विकः प्राप्तस्तथा भ्रान्त्या प्रवर्त्तनादिति"[7] (।)[1] 50b

निरस्तं। कल्पितविषयत्वेनेष्टत्वाद् विकल्पस्य ॥

**अन्यथेति** बुद्धिशब्दाभ्याम्वस्तुस्वरूपग्रहणे। **एकेन शब्देन व्याप्ते** सर्वा-कारेण **विषयीकृते। एकत्रैक**स्मिन् **बुद्ध्या** वा निश्चयात्मिकया व्याप्तेनान्य-विषयः। **अन्यश्चासावाकारो विषयश्चे**त्यन्य**विषयः**। तस्य वस्तुनो नापर आकारो विषयभूतो विद्यते प्रत्याय्यः। अथवा तद्वस्तुप्रत्यायकस्यान्यस्य शब्दस्य ज्ञानस्य

---

[1] Slokavārtika.

**यस्यापि नानोपाधेर्द्धीर्ग्राहिकार्थस्य भेदिनः।**
**नानोपाध्युपकाराङ्गशक्त्यभिन्नात्मनो ग्रहे ॥५४॥**
**सर्वात्मनोपकार्यस्य को भेदः स्यादनिश्चितः।**

437a **योऽ[7]पि मन्यते।[1] उपाधयः परस्परं आश्रयाच्च भिन्ना एव तन्निबन्धनाः श्रुतयोऽपि तदाधारे तत्रैव वर्त्तन्ते। तद् अयमप्रसङ्गः इति। तस्यापि नानोपाधीनामुप[1]काराङ्गशक्तिभ्योऽभिन्नात्मनः सर्वात्मना ग्रहे कृते उपकार्यस्य को भेदः स्यादनिश्चितः॥**

---

वा न विषयः।[1] **इति** हेतोः शब्दानां प्रतीते विषये पश्चात् प्रवर्त्तमानानां **पर्यायता स्यात्**। वृक्षपादपादिशब्दवत्।। मधुरो रसः स्निग्धो गुरुः शीत इत्येवमादि-भिन्नविषयानुपातिन्याश्च बुद्धेः प्रवृत्तिर्न स्यादित्येकविषयत्वप्रसंगः॥

भिन्नं धर्मधर्मिभावं पारमार्थिकन्दूषयितुमुपन्यस्यन्नाह। **यस्यापी**त्यादि। यस्यापि वैं शे षि क स्य **परस्परमाश्रयाच्च** भिन्नत्वान्**नाना उपाधयो** विशे[2]षणानि द्रव्यत्वादयो यस्यार्थस्य घटादेः स नानोपाधिस्**तस्य** तत एवोपाधिभेदाद् **भेदिनोर्थस्य** विधिनैव बुद्धि**ग्राहिका** निश्चयात्मिका **धीः** सा च प्रत्युपाधि भिन्ना॥ धियश्च विषयभेदन्दर्शयता शब्दानामप्यर्थतो दर्शित एव।

तद्व्याचष्टे **योपी**त्यादिना (।) **उपाधयो** द्रव्यत्वादयः **परस्पर**मन्योन्य**म्भिन्ना आश्रयाच्चे**त्युपाधिमतो भिन्नाः। **तन्निबन्धना** भिन्नोपाधिनिबन्धनाः[3] श्रुति-ग्रहणमुपलक्षणमेवं बुद्धयोपि। **तदाधारे** स्थित्युपाधीनामाधारेषु। **तत्रैव** चेत्युपा-धिष्वेव। **वर्त्तन्ते** वाचकतया प्रवर्त्तन्ते। **तद**दिति तस्माद्। **अय**मिति शब्दज्ञाना-न्तराणां पर्यायतालक्षणोऽ**प्रसंगः**।

उत्तरमाह। **तस्यापी**त्यादि। नानाप्रकाराणा**मुपाधीनामुपकारस्याङ्गं** कारणं याः **शक्तयः**। ताभ्योऽ**भिन्नात्मन** उपाधिमत **एकेन** निश्चयज्ञानेन **ग्रहे** निश्चये[4] **सर्वात्मना** कृते सति। **उपकार्य**स्योपाधिकलापस्य **को भेदः** क उपाधिविशेषः **स्यादनिश्चि**तः (।) सर्व एव निश्चितः स्यात्।

नन्वग्निधूमयोः सत्यपि सम्बन्धे नाग्निनिश्चये धूमस्य निश्चयो दृश्यते तथा **धर्मिनिश्चये धर्मानिश्चयो भविष्यति।**

**नन्विदमेवादर्शनन्न स्यात्।** निश्चयप्रत्ययेन सर्वात्मनाऽग्निस्वरूपग्रहे सति

---

[1] Sñams-sems-pa.

**यद्यपि भिन्ना एवोपाधयः शब्दज्ञानान्तराणामर्थनिमित्तम्। तथाऽपि स तु तद्वान् एव तैरुपलीयते। तस्य नानोपाध्युपकाराश्रयशक्तिस्वभावस्य स्वात्मनि भेदाभावात् सर्वात्मना ग्रहे क एवोपाधिभेदोऽनिश्चितः स्यात् सर्वो-**

---

धूमादिकारणत्वेनैव निश्चयात्। धूमा[5]दीनामपि निश्चितत्वात्। तस्मान्न निश्चयेन तत्स्वरूपग्रहणं। निर्विकल्पकेनापि तर्हि सर्वात्मना ग्रहो न स्याद् धूमाप्रतिभासादेव तत्कार्यत्वाग्रहात्।

नैतदस्ति (।) अग्नेर्हि धूमजननंप्रति कारणत्वं पूर्वभाव एवोच्यते। स च प्रत्यक्षे प्रतिभासत इति कथं नाग्नेस्तत्कार्यत्वग्रहः। तेनायमर्थः (।) नाग्निधूमयोः परमार्थतः परस्परापेक्षिता विद्यते। निष्पन्ना[6]निष्पन्नावस्थायां सम्बन्धाभावात् (।) केवलमग्नौ सत्येव धूमो भवतीति तौ कार्यकारणे उच्येते। धर्मधर्मिणोस्तु परस्परापेक्षित्वाद्धर्मिणः सर्वात्मना निश्चये सर्वधर्माणां साक्षान्निश्चयः स्यान्नार्थादाक्षेपः। यदा तु बाह्याध्यवसायको विकल्पो भवति न तु ग्राहकस्तदाध्यवसितस्यार्थस्यान्यव्यावृत्तिसम्भवेनार्थादन्यधर्माक्षेपो युज्यते (।) परस्परापेक्षत्वे च[7] यावन्न धर्मनिश्चयो न तावद्धर्मिनिश्चयो (।) यावच्च न धर्मिनिश्चयस्तावन्न धर्मनिश्चय इत्यन्योन्याश्रयत्वञ्च स्यात्। 51a

ननु चोपाध्युपाधिमद्भाव आश्रयाश्रयिभाव एवोच्यते। स च समानकालभाविनोरेव (।) न च तयोरुपकार्योपकारकभावो भिन्नकालत्वादस्य (।) तत्कथमुच्यते। एकोपाधिविशिष्टग्रहे सर्वग्रह इति।

सत्यं (।) किन्तु परैरन्य एव जन्यजनकभावोन्यश्चोपका[1]र्योपकारकभाव इष्यते। तथा हि (।) बदरद्रव्यं स्वहेतुजन्यमपि कुण्डेनोपक्रियतेऽत एवं समानकालभाविनोरयमुपकार्योपकारकभाव इष्यत इति तदभिप्रायादिदमुक्तं। यद्वा धर्मो निश्चीयमानः धर्म्याश्रितत्वादेवाश्रयस्य प्रतीतिमाक्षिपति स चाश्रितानां धर्माणामिति सर्वनिश्चयः। तस्माच्छब्दप्रमाणान्तरवृत्तेः कल्पित एव धर्मधर्मिभावः[2] (।) न चास्मिन् पक्षे धर्मभेदाभेदकल्पनायां प्रमाणान्तरवैयर्थ्यमवस्तुत्वेन तेषां भेदाभेदस्य परमार्थतोऽभावात्। प्रमाणान्तरैरेव च धर्मान्तराणां कल्पनीयत्वात् तदभावे कथं धर्मभेदाभेदकल्पनेति यत्किञ्चिदेतत्॥

**यद्यपी**त्यादिना कारिकार्थं व्याचष्टे। **शब्दान्तराणां** ज्ञानान्तराणा**मर्थ** उपाधिमति प्रतिपत्तौ प्रति**निमित्तं भिन्ना एवोपाधयो** यद्यप्यभ्यु[3]पगम्यन्ते (।) **स तु तद्वा**नुपाधिमानर्थः **शब्दज्ञानैरुपलीयते** विषयीक्रियते। **तस्य** तद्वतो **नानोपाधी**नामु**पकाराश्रया याः शक्तयस्तत्स्वभावस्य स्वात्मनि** स्वरूपे **भेदो नास्ति**। ततश्चैकोपा-

**पाध्युपकारकत्वेन**[3] **ग्रहणात्। न हि तस्य स्वेन रूपेण गृह्यमाणस्य उपकारकत्व-मन्यदेवागृहीतम्। अतोऽस्य यदेव स्वभावेन ग्रहणं तदेवोपकारकत्वेनाऽपि॥**

**तयोरात्मनि सम्बन्धादेकज्ञाने द्वयग्रहः ॥५५॥**

**आत्मभूतस्य उपाधितद्वतोरुपकार्योपकारकभावस्य ग्रहणादेकज्ञाने द्वयोरपि उपाधिमतोर्ग्रहणमिति एकोपाधिविशिष्टेऽपि गृह्यमाणे सर्वोपाधीनां ग्रहणं**[5] **तद्ग्रहणनान्तरीयकत्वात्। अन्यथा तथापि न गृह्येत। न ह्यन्य**

---

धिद्वारेणापि **ग्रहे सर्वात्मना** ग्रहणन्तस्मिन्सति **क एवोपाधिभेद**स्तस्यानिश्चितः किन्तु सर्व एव निश्चितः स्यात्। किं कारणं (।) **सर्वोपाध्युपकारकत्वे**[4]**न ग्रहणात्।**

एकोपाधिद्वारेणोपाधिमतः स्वरूपमेव ग्रहीतं न तूपाध्युपकारकत्वमिति चेदाह। **न ही**त्यादि। न ह्युपाध्युपकारकत्वमन्यदेवागृहीतमित्यनेन सम्बन्धः। **तस्ये**त्युपाधिमतः **स्वेन रूपेण गृह्यमाणस्य** स्वरूपा**दुपकारकत्वस्याभेदात्**। यत एवमतः कारणाद**स्ये**त्युपाधिमतः। **यदेव स्वभावेन** स्वरूपेण **ग्रह**[5]**णन्तदेवोपकारकत्वेनापि** ग्रहणमिति।

भवत्वेकोपाधिद्वारेणोपाधिमतः सर्वोपाध्युपकारकत्वस्य स्वभावभूतस्य ग्रहः। उपाधीनान्तु तस्माद् व्यतिरिक्तानां कथं ग्रहणमित्यत आह। **तयोरि**त्यादि। उपाधिकलापस्योपाधिमतश्च उपकार्योपकारकभूतयो**रात्मनि** स्वभावेन्योन्य**सम्बन्धो** सम्बन्धादुपकार्योपकारकसम्बन्धस्यात्म[6]भूतत्वादिति यावत्। ततश्चोपकारकस्वभावस्**यैकस्य ज्ञाने सति** सम्बन्धाद् **द्वयग्रहः**। उपाध्युपाधिमतोर्ग्रहः।

स्तद्व्याचष्टे। **आत्मभूतस्ये**त्यादि। तथा ह्युपाधिमति गृहीते तस्यात्मभूत उपकारकभावस्तावद् गृहीतस्तस्मिन् गृहीते उपाधीनामप्युप**कार्य**भाव आत्मभूतो गृहीतस्तद्ग्रहणनान्तरीयकत्वा**दुपकारकभाव**ग्रहणस्य [7](।)**अतः** कारणा**देकज्ञाने द्वयो**रप्युपाध्युपाधिमतो**र्ग्रहण**मिति कृत्वा **एकोपाधिविशिष्टेपि** तस्मिन्नुपाधिमति **गृह्यमाणे सर्वोपाधीनां ग्रहणं**। **तद्ग्रहणनान्तरीय**कत्वादित्युपाधिग्रहणनान्तरीयकत्वात्। **अन्यथे**त्युपाधीनामग्रहे **तथापि न गृह्येत**। उपाधीनामुपकारक उपाधिमानित्येवमपि न गृह्येत।

51b

य एव तदानीं ज्ञानशब्दप्रवृत्तिनिमित्त[1]मुपाधिस्तं प्रत्येवोपकारकत्वमुपाधिमतो गृहीतं न तूपाध्यन्तरोपकारकत्वमिति चेदाह। **न ह्यन्य** एवेत्यादि। **अन्योपकारक** इत्यन्यस्योपाधेरुपकारकः स्वभावो **यो न गृहीतः** किन्तु सर्व एव गृहीतो निरंशत्वाद **वस्तुनः**।

**एवान्योपकारकः कश्चिद् गृहीतः। न चाऽपि तथा उपकारके गृहीते[1] उपकारकार्यस्याऽग्रहणम्।[6] तस्याप्यग्रहणप्रसङ्गात्। स्वस्वामित्ववदिति। तस्मादर्थान्तरोपाधिवादेऽपि समानः प्रसंगः॥**

**अथाऽपि मन्यते। याभिः उपाधीनुपकरोति ताः शक्तयो भिन्ना एव। ततो[7] नायं प्रसङ्गः।** 437b

> **धर्मोपकारशक्तीनां भेदे तास्तस्य किं यदि।**
> **नोपकारस्ततः तासां तथा स्यादनवस्थितिः ॥५६॥**

---

स्यान्मतम् (।) उपाधिमतोनपेक्षितसम्बन्धिन उपकारक इत्येव ग्रहणं न त्वस्योपकारक इति ततो नोपाधीनां ग्रहणमित्यत आ[2]ह। **न चापी**त्यादि। **तथा गृहीत** इत्युपकारक इत्येवं गृहीते **उपकारकार्यस्यो**पाधेर**ग्रहणं**। किं कारणं (।) **तस्याप्यु**कारकस्य उपकारक इत्ये**वमग्रहणप्रसंगात्**। एतत् कथयति (।) सम्बन्धित्वादुपकारकस्यान्तरेण द्वितीयसम्बन्धिग्रहणमुपकारक इत्यपि ग्रहणं नास्तीति। तथाभूतञ्च दृष्टान्तमाह। **स्वस्वामित्ववदिति**। न हि स्वग्रहणमन्तरेणा[3]स्ति स्वामित्वस्य ग्रहणं। यत एवमेकोपाधिद्वारेण प्रवृत्तेप्येकस्मिन् ज्ञाने शब्दे च सर्वोपाधीनां ग्रहणमुपाधिमतश्च सर्वात्मना। **तस्मादर्थान्तरोपाधिवादेपि** अर्थान्तरभूता उपाधय इत्येवंवादेपि **समानः प्रसङ्गः**। शब्दज्ञानान्तराणां पर्यायता प्राप्नोतीति।

**अथापी**त्यादिना परमाशङ्कते। **याभिः** शक्तिभिः शक्तिमा**नुपाधीनुपकरोति ताः**[4] **शक्तयः** शक्तिमतः सकाशाद् **भिन्नाः**। **तत** इति भेदात्। **नायं प्रसंग** इति। एकोपाध्युपकारकशक्त्यभेदग्रहे सर्वशक्तीनां ग्रहणं। तद्ग्रहणाच्च सर्वोपाधीनामित्ययं प्रसङ्गो नास्ति।

उत्तरमाह। **धर्मोपकारे**त्यादि। धर्मा उपाधयस्तेषामुपकारस्य याः **शक्तयस्तासां** शक्तिमतः सकाशाद् **भेदे**ऽभ्युपगम्यमाने **ताः** शक्तय**स्तस्य** शक्तिमतः **किम्भव**[5]न्ति। न किंचिद् भवन्ति न तत्सम्बन्धिन्य इत्यर्थः। यदा **यदि नोपकारस्ततः**। शक्तिम**तस्तासां** शक्तीनां। अथ सम्बन्धसिद्ध्यर्थमुपकार इष्यते। तदा शक्त्युपकारिण्यो परा व्यतिरिक्ताः शक्तयोङ्गीकर्त्तव्याः। याभिः शक्तीरुपकरोति (।) तासां च सम्बन्धत्वसिद्ध्यर्थमुपकारः कल्पनीयः। तत्रापरा शक्तिकल्पनेति **तथा स्यादनवस्थितिः**।

---

[1] Gsu-gs? = gsuṅ-ba.

**यदि प्रत्युपाधि उपकारकत्वानि तस्य नैव स्वात्मभूतानि[1] नाऽपि तत उपकारमनुभवन्ति। किं तस्य ता इति[1]। अथ यदि स्वात्मभूताभिः शक्तिभिरयमेकः शक्तीरुपकुर्वन् एकोपाधिग्रहणे च सर्वा[2]त्मनैव ग्रहणम्। तथा हि उपाधिग्रहणे तदुपकारिण्यः शक्तेर्ग्रहणम्। तद्ग्रहणे तदुपकारी स्वात्मभूतसकलशक्तत्युपकारो भावो गृहीतः सर्वा शक्ती[3]र्ग्राहयति। ताश्चोपाधीन् ग्राहयन्तीति तदवस्थः प्रसंगः।**

**अथ ता अपि शक्त्युपकारिण्यः शक्तयो भिन्ना एव भावाद्। तदा च उपाधीनां तच्छक्तीनां चापरापरास्वेव शक्तिषु[4] अपर्यवसानेनोद्घटनात्[1] स एकः ताभिः**

---

तद्व्याचष्टे (।) **यदी**[6]त्यादि। उपाधिमुपाधिम्प्रति **प्रत्युपाधि**। **उपकारकत्वानि** शक्तय**स्तस्यो**पाधिमतः **न स्वात्मभूतानि**। न स्वभावभूतानि। किन्तु व्यतिरिक्तानि। **नापि तत** उपाधिमतः **उपकारमनुभवन्ति**। आतमसात्कुर्वन्ति। **किन्तस्य ता उच्यन्ते**। उपाधिमतः शक्तय इति कस्मादुच्यन्ते। सम्बन्धाभावात्। सम्बन्धसिद्ध्यर्थमुपाधिमतः सकाशात् तासामुपाध्युपकारिणी[7]नां शक्तीनामुपकारेवाङ्गीक्रियमाणे याभिः शक्तिभिरुपाध्युपकारिणीः शक्तीरुपकरोत्ययमुपाधिमान्। **यदि** तास्तस्यात्मभूता इष्यन्ते तदा **स्वात्मभूताभिः शक्तिभिरयमु**पाधिमान् **एक** इत्यनंशः। उपाध्युपकारिणीः श**क्तीरुपकुर्वन्**।

5 2a

**तथा** ह्रीत्यादिना **सर्वात्मना ग्रहणं** साधयति। एको**पाधिग्रहणे तदुपकारिण्यो** उपाध्युपकारिण्यो व्यतिरिक्तायाः **शक्तेर्ग्रहणं**। **तद्ग्रहण** इति।[1] उपाध्युपकारिशक्तिग्रहे। **तदुपकारी** उपाध्युपकारिशक्त्युपकारी। किंभूतः **स्वात्मभूतसकलशक्त्यपकारः** स्वात्मभूताः सकला उपाध्युपकारिणीनां शक्तीनामुपकाराः शक्तयो यस्य स तथाभूतो **भावो गृहीतः सर्वा** उपाध्युपकारिकाः श**क्तीर्ग्राहयति**। **ताश्चे**माः शक्तयो गृहीताः स्वोपकार्या**नुपाधीन् ग्राहयन्तीति तदवस्थः प्रसंगः** को भेदः स्यादनिश्चित इति य उक्तः॥

**अथ** माभूदेष दोष इति **ता अपि शक्त्युपकारिण्यः शक्तयो भिन्ना एवो**पाधिमतो **भावा**दिष्यन्ते। तदा तदुपकारिण्योपि शक्तयो व्यतिरिक्ताः कल्पनीयास्**तथा** तदुपकारिण्य इत्येवमनवस्थानात्। **उपाधीनां** त**च्छक्तीनां** च। **उपाध्युपकारशक्तीनां चापरापरास्वेव शक्तिष्वपर्यवसानेनानिष्ठया** यद् घटनन्तस्यो**द्घटनात्** सम्बन्धनात्। तथा ह्युपाधयो व्यतिरिक्तासु शक्तिषु सम्बद्धास्ता अपि व्यति[3]रिक्तास्वेव। एवमुत्तरोत्तरा शक्तिः पूर्वपूर्वासु शक्तिषु व्यतिरिक्तास्वेवानवस्थानेन सम्बद्धा। न तूपाधिमति। ततश्च **स एक** उपाधिमान्। **ताभि**रुपाध्युपकारि-

---

[1] Śes-par-byas-pas-mchon-paḥi-phyir.

**कदाचिदप्यगृहीतस्तदुपकारात्मा तद्वत्त्वेन तदग्रहाद् ।**

**यदि पुनः केवलान्[1] उपाधीन् शब्दज्ञानान्युपलीये[5]रन् ।**

**तदाऽपि असम्बन्धात् तत्प्रतिपादनद्वारेण सर्वप्रतिपत्तिर्न स्यादिति चेत् । तदाऽपि शब्दैरनाक्षेपात् । तत्र शब्दाप्रवृत्तिशब्दयोगो व्यर्थः स्यात् । अर्थक्रियाश्रयः सर्वो व्यवहारो[6] विधिप्रतिषेधाभ्याम् । उपाधयश्च तत्राऽसमर्थाः, समर्थश्च नैवोच्यत इति किं शब्दप्रयोगैः । ततश्च उपाधय उपाधयोऽपि न स्युः । क्वचित्**

---

काभिः शक्तिभिस्सह **कदाचिदप्यगृहीतस्तदुपकारात्मा** । शक्त्युपकारात्मा । उपाध्युपकारिकाणां शक्तीनां याः शक्तयस्तदात्मेति यावत् । शक्तीनान्ततो व्यतिरेकात् । **तद्वत्त्वेन** उपाध्युपकारशक्तिमत्त्वेन । **तदग्र[4]हा**दुपाधिमत्त्वेनाप्यतो व्यर्थैवोपाधिकल्पनेति भावः ।

एवन्तावद् यदोपाधिमति ज्ञानशब्दयोर्वृत्तिस्तदोक्तो दोषः । यदोपाधिष्वेव तदान्यो दोषो वक्तव्यः । तदभिधानायोपाधिपक्षमुपन्यस्यति । **यदि पुन**रित्यादि । **केवला**नित्याश्रयरहितान् **उपाधीन्** विशेषणभेदान् **शब्दज्ञानान्युपलीयेरन्** । प्रत्यायकत्वेन समाश्रयेयुः । तस्योपाधिमतः शब्दज्ञानैरस[5]मावेशादविषयीकरणात् । **तत्प्रति**पत्तिमुखेनोपाधिमत्प्रतिपत्तिमुखेन । एकेनापि शब्दज्ञानेन सर्वस्योपाधेः प्रतिपत्तिः (।)

अत्रापि दोषमाह । **तदापी**त्यादि । तस्योपाधिमतः । **अनाक्षेपा**दित्यप्रतिपादनात् । **तत्रे**त्युपाधिमति (।) कथं व्यर्थ इत्याह । **अर्थक्रिये**त्यादि । अर्थक्रियां पुरोधाय प्रवृत्तेरर्थक्रिया **आश्रय** आलम्बनं यस्य व्यवहारस्य स तथा । **सर्वो** यावान् कश्चित् प्रेक्षा[6]पूर्वकारिणां **व्यवहारो** हिताहितविषयः । स च द्वाभ्यां प्रकाराभ्यां **विधिप्रतिषेधाभ्यां** तृतीयप्रकाराभावात् । इत्थंभूतलक्षणा (पाणिनिः) चेयं तृतीया । **उपाध्यो**(? धय)श्च गोत्वादय**स्तत्रा**र्थक्रियाया**मसमर्थाः** । **समर्थश्च** व्यक्तिभेदः शब्दैर्**नैवोच्यत इति किम**फलैः **शब्दप्रयोगैः** । यतश्चैवमर्थक्रियासमर्थो व्यक्तिभेदो न चोच्यते शब्दैः । **ततश्**चाभिमता **उपाधयो** गोत्वादय **उपाधयो** न[7] स्युर्न विशेषणानि स्युः । यस्मात् **क्वचि**दुपाधिमत्युपाधिद्वारेण शब्दस्य ज्ञानस्य वा **प्रवृत्तौ** सत्यां । **कस्य**चिदुपाधिमतः । **प्रधानस्ये**ति विशेष्यस्या**ङ्गभावाद्** विशेषणभावात् **तदपेक्षया** प्रधानापेक्षया । **तथोच्य**न्ते । उपाधय इत्युच्यन्ते । इयं न्यायोपाधिव्यवस्था । यदा तूपाधय एव शब्देनोच्यन्ते । तदा तस्योपाधिमतः 32b

---

[1] Ñi-che-la.

438a **प्रवृत्तौ कस्यचित् प्रधानस्य अङ्गा[7]भावात् तदपेक्षया तथोच्यन्ते। शब्देनानाक्षेपान्न ते कस्यचित् अङ्गभूता इति कथमुपाधयः।**

**यदि लक्षितज्ञानलक्षणात्[1] अदोष इति चेत् समानः प्रसङ्गः। स तावत् नान्तरीयकतया तैरुपाधिभिरुपलक्ष्यमाण एकेनाऽप्युपाधिना सर्वात्मनोपलक्षित इति तदवस्थः[2] प्रसंगः।**

**को ह्यत्र विशेषः। शब्दा[1] एव एनमुपलक्षयेयुः तल्लक्षिता वा उपाधयो उप-(लक्षा)येयुः। स तावत् तदानीं सर्वोपकारक इति न किञ्चित्[2] ॥५६॥**

**तस्मात्।**

**एकोपकारके ग्राह्ये (नोपकारास्ततोऽपरे।**
**दृष्टे तस्मिन्नदृष्टा ये तद्ग्रहे सकलग्रहः) ॥५७॥**

**—इति संग्रहश्लोकः।**

---

**शब्देनाऽनाक्षेपाद**प्रतिपादनान्न **ते** उपाधयः **कस्यचित्** प्रधा[1]नस्या**ङ्गभूता इति किमुपाधयो** नैवेति यावत्। **यद्युपा**धिमात्रं चोद्यते तथापि शब्दै**र्लक्षिता** ये उपाधयस्तैरुपाधिमतो **लक्षणात्** परिच्छेदा**ददोषः**। शब्दप्रयोगवैयर्थ्यदोषो नेति **चेत्**। **स समानः** सर्वोपाधिग्रहण**प्रसङ्गः**। तमेवाह। **स ताव**दित्यादि। स इत्युपाधिमान्। **नान्तरीयकतये**[illegible]भिचारेण **उपलक्ष्यमाण एकेनाप्युपाधि[2]**ना निरङ्कुशत्वात् **सर्वात्मनोपलक्षित इति तदवस्थः** सर्वोपाधिग्रह**प्रसंगः**।

स्यान्मतं (।) यत्र शब्देन साक्षादुपाधिमतश्चोदनन्तत्रायं प्रसंगः। न तु यत्रार्थवशादित्यत आह। **को ह्यत्र विशेष** इति। **शब्दा** वा **एनमु**पाधिमन्तं साक्षात् प्रतिपादयेयुः। **तल्लक्षि**ता वा शब्दलक्षिता **वोपाधय** उपाधिमन्तं **लक्षये**युरिति को विशेषो न कश्चित् (।) तथा हि (।) **स तावदुपाधि[3]मान्** **तदानीमुपाधिबलेन** लक्षणकाले निश्चीयते। **सर्वोपकारकः** सर्वेषामुपाधीनामुपकारक **इति**। तथा **च** पूर्ववत् सर्वोपाधिग्रहणप्रसंगोऽतो लक्षितलक्षणादिति यदुक्तमेतन्न **किञ्चित्** पूर्वोक्तदोषदुष्टत्वात्। यस्मादुपाध्युपकारिकाणां शक्तीनाम्व्यतिरेकेऽनवस्था स्यादतो न व्यतिरिक्ताः शक्तयः॥

**तस्मादेकस्यो**पाधेरु**पकारके** तस्मिन्नुपाधिम[4]ति **ग्राह्येऽ**भ्युपगम्यमाने उपाध्यन्तराणा**मुपकारकाः** शक्तिभेदाः। **तत** एकोपाध्युपकारकस्वभावा**दपरे**ऽन्ये **न** भवन्ति

---

[1] Hdi-dag-legs-goms-pa.

[2] Skabs-Śes-bya-ba.

## क. *न्यायमीमांसामतनिरासः*

(क) व्यावृत्तस्वभावा भावाः

**यदि भ्रान्तिनि(वृत्यर्थ)[1] गृहीतेप्यन्यदिष्यते ।**

**स्यादेतत्[4] । निर्भागस्य वस्तुनो ग्रहणे कोऽन्यस्तदा[2] न ग्रहीतः । स तु भ्रान्त्या नावधार्यत इति प्रमाणान्तरं प्रवर्त्तते । यद्येवम् ।**

**तद्व्यवच्छेदविषयं सिद्धं (तद्वत्ततोऽपरम् ।।५८।।**
**असमारोपविषये प्रवृत्तेरपि;**

**असमारोपविषये किं च वृत्तेः । भ्रान्तिनिवृत्यर्थं प्रवृत्तस्य प्रमाणम् । तत्**

---

**ये** दृष्टे **तस्मिन्**नुपाधिमत्य**दृष्टा** भवन्ति । किन्त्वनन्ये । अतः कारणात्तद्ग्राह्यं । तस्योपाधिमतो ग्रहे **सक**लोपाध्युपकारक स्वभावस्य **ग्रहः** ।

योपि भट्टो मन्यते (।) भिन्ना भिन्ना एव धर्मास्तेनैकधर्मेण धर्मिण्यवधार्यमाणेन स[5]र्वधर्मावधारणं भेदात् । तदाह ।

"आविर्भावतिरोभावधर्मकेष्वनुयायि यत् ।
तद्धर्मि यत्र वा ज्ञानं प्राग्धर्मग्रहणाद् भवेत् ।। (१५२)
अनन्तधर्मके धर्मिण्येकधर्मावधारणे ।
शब्दोभ्युपायमात्रं स्यान्न तु सर्वावधारण" (१७८) इति ।[3]

सोप्युभयपक्षभाविदोषप्रसंगादेव निरस्तः ।।

**यदी**त्यादिना पराभिप्रायमाशंकते । एकेन निश्चयज्ञानेन सर्वात्मना **गृहीतेपि**[6] वस्तुनि **भ्रान्तिनिवृत्यर्थं** । **अन्यदि**ति प्रमाणान्तरं ।

**स्यादेत**दित्यादिनैतदेव व्याचष्टे । **निर्भागस्य** निरंशस्य वस्तुनो **ग्रहणे** सति **कोन्यो** भागः **तदा** निर्भागवस्तुग्रहणकाले । **न गृही**तो नाम सर्व एव गृहीतः (।) **स तु** गृहीतोपि **भ्रान्त्या नावधार्यत इति प्रमाणान्तरं प्र**वर्त्तते ।

**यद्येव**मित्यादिना सिद्धान्तवादी । यत्तद् **भ्रान्ति**निवृत्यर्थमुत्तरम्प्रमाण[7]**मिष्यते** 53a **तद्व्यवच्छेदविषय**मन्यापोहविषयं **सिद्धं** पूर्वोक्तेन न्यायेन । **तद्वत्**तरप्रमाणवत् । **तत** उत्तरकालभावि प्रमाणादपरमपि पूर्वकालभाविनिश्चयज्ञानन्तदपि व्यवच्छेदविषयं । किं कारणम् (।) **असमारोपविषये वृत्तेः** ।

[1] Hdog-pa. [2] De-ni-gyi-naḥo.
[3] Ślokavārtika **प्रत्यक्षपरि०**

**तर्हि अन्यसमारोपव्यवच्छेदफलमिति अन्यापोहविषये सिद्धं, तद्वदन्यदपि अविद्यमानसमारोप[6]विषयवृत्तेः। यत्रास्य समारोपः तत्र निश्चयाभाव इति समारोपाभावे वर्त्तमानोऽन्यापोहविषयः सिद्धः॥**

**अपि च।**

**निश्चयैः।**

438b **यत्र निश्चीयते रूपन्तत्तेषां विषयः कथम्) ॥५९॥**

**इयमेव निश्चयानां स्वार्थप्रतिपत्तिः(।) तच्चेदाकारान्तरवदनिश्चितम्। कथं इदानीं अनिश्चीयमानं प्रत्यक्षेणाऽपि गृहीतमिति चेत्।**

**न (।) प्रत्यक्षं[1] हि यस्या[1]ऽपि निश्चायकं, तद् यमपि गह्लाति तत् च न निश्चयेन। किन्तर्हि। प्रतिभासेन। तत् न निश्चयानिश्चयवशाद् प्रत्यक्षस्य ग्रहणाग्रहणे।**

---

**तत्तर्हीत्**यादिना श्लोकं व्याचष्टे। अन्यस्याकारस्य यः **समारोपस्तद्व्यवच्छेदफलमिति** कृत्वा **सिद्धमन्यापोहविषय**मुदितस्तस[1]मारोपनिषेधद्वारेण। **तद्वदन्यदपि** पूर्वमपि निश्चयज्ञानमन्यापोहविषयं (।) किं कारणम् (।) **अविद्यमानसमारोपे विषये वृत्तेः**। एतदेवाह। **यत्राकारेस्य प्रतिपत्तेः**। **इति** हेतोः **समारोपाभावे वर्त्तमानः** पौरस्त्यो निश्चयो**न्यापोहविषयः सिद्धः**॥

किञ्च (।) निश्चयगृहीतेप्यर्थे भ्रान्तिनिवृत्त्यर्थं प्रमाणान्तरमिच्छता निश्चयविषयश्च न च निश्चित इ[2]त्यभ्युपगतं स्याद् (।) अन्यथा भ्रान्तेरयोगात् (।) तच्चायुक्तमित्याह। **अपि चे**त्यादि। **यद्रूपं निश्चयैर्न निश्चीयते** **तद्रूपन्तेषां** निश्चयानां **विषयः कथन्नैव** (।) किं कारणं। यस्मा**दियमेव निश्चयानां स्वार्थप्रतिपत्तिर्य**त्तस्यार्थस्य निश्चयनं। **तच्चे**न्निश्चयविषयाभिमतमा**कारान्तरवदनिश्चितं**। यन्निश्चयविषयत्वेनानभिमतन्तद्वत्तैर्निश्चये गृहीतं॥

**कथमित्या**[3]दि परः (।) प्रत्यक्षगृहीते समारोपव्यवच्छेदार्थं प्रमाणान्तरमिच्छताऽन्यापोहवादिनाप्यनिश्चीयमान आकारः प्रत्यक्षगृहीतत्वेनेष्टो यदि वा निश्चयवशादेव ग्रहणं। **कथमिदानीमनिश्चीयमानं** रूपं **प्रत्यक्षेणापि गृहीत**मिति तुल्यः प्रसंगः।

**ने**त्यादिना परिहरति। कल्पनाविविक्तत्वादित्यभिप्रायः। **तदि**ति प्रत्यक्षं (।) **यमपि** नीला[4]द्याकारङ्गृ**ह्णाती**त्युच्यते (।) **तद्** ग्रहणं **न निश्चयेन** (।) **किन्तर्हि** (।) **प्रतिभासेन**। निरङ्शस्य वस्तुनः सर्वथा प्रतिभासनमिति सर्वथा

---

[1] Mṅon-sum-ni gaṅ-gi ṅes-par-byed-pa-ma-yin. te.

**नैवं निश्चयानाम्**[2]**। किञ्चिद् निश्चिन्वतोऽप्यन्यत्रानिश्चयेन प्रवृत्तिभेदाद् ग्रहणाग्रहणे। तस्माद् यो निश्चयः स एव तद्ग्रहणम्। अन्यथा एकाकारेऽपि तन्न स्यात्॥**

**किं पुनः सर्वतो**[3] **भिन्नवस्तुस्वभावेऽनुभवोत्पादेऽपि तथैव न स्मार्तो निश्चयो भवतीति। सहकारिवैकल्यात्। ततश्च—**

**प्रत्यक्षेण गृहीतेऽपि विशेषेंऽशविवर्जिते।**
**यद्विशेषावसायेऽस्ति प्रत्ययः स प्रतीयते॥६०॥**

---

ग्रहणं(।) तदिति तस्मान्न **निश्चयानिश्चयवशाद्** यथाक्रमं **प्रत्यक्षस्य ग्रहणाग्रहणे** किंतु प्रतिभासनाप्रतिभासनवशात्। तस्मादनिश्चये सति प्रतिभासनमात्रेण प्रत्यक्षगृहीतव्यवस्थापनन्न विरुध्यते। **नैवं निश्चया**[5]**नां** प्रत्यक्षवदनिश्चितस्याप्याकारस्य प्रतिभासनमात्रेण ग्रहणमप्रतिभासमात्रेणाग्रहणमिति सम्बन्धः। कस्मादिति चेदाह। **किञ्चिद**दित्यादि। यथा पुरुषं दृष्ट्वा पुरुषत्व**न्निश्चिन्वतोप्यन्यत्र** तस्करादाव**निश्चयेन प्रवृत्तिभेदाद्** व्यवहारभेदात्। तथा हि पुरुषत्वनिश्चयेन पुरुषोनुरूपो विश्वासादिव्यवहारो दृश्यते। चौरत्वानि[6]श्चयाच्च तदनुरूपो भयादिव्यवहारो न दृश्यते। ततश्च यन्निश्चयानुरूपः प्रवृत्तिभेदस्तस्य निश्चयेन ग्रहणं। यदनिश्चयानुरूपश्चाप्रवृत्तिभेदस्तस्याग्रहणमिति। **यत एवन्तस्मा**दित्यादि। **अस्ये**त्याकारस्य (।) **अन्यथे**ति यदि निश्चयवशात्तस्य ग्रहणं न व्यवस्थाप्यते। **तदेका**कारेपि। निश्चितत्वेनाभिमतेप्याकारे। **तदि**ति निश्चयेन ग्रहणं[7] **न स्यात्**। 53b

**किं पुनः कारण**मिति परः। **सर्वतो भिन्न** इति सजातीयविजातीयाद्व्यावृत्तः। **तथैवे**ति यथानुभवं सर्वेष्वेव भेदेषु **न स्मार्त्तो निश्चयो भवति**। यतो भेदान्तरेन्याकारव्यवच्छेदार्थमन्यापोहवादिना प्रमाणान्तरवृत्तिरिष्यते।

**सहकारिवैकल्या**दिति सिद्धान्तवादी। न ह्यनुभवमात्रनिश्चयहेतुः किन्त्वभ्यासादयोपि सहकारिणः (।) ते यत्रैव सन्ति तत्रैवाकारे[1] निश्चयो नान्यत्र।

ननु क्षणिकाकारेपि सर्वदा दर्शनादभ्यासोस्त्येवेति निश्चयः स्यात्। नानुभूतनिश्चितविषयोत्राभ्यासोभिप्रेतो न च क्षणिकं भ्रान्तिनिमित्तसम्भवादनुभूतनिश्चितमिति कथन्तत्राभ्यासः। तस्मात् स्थितमेतत् यत्रैवाकारेऽभ्यासस्तत्रैव निश्चय इति॥

तदेवाह। **ततश्चे**त्यादि। **विशेषे** सर्वतो व्यावृत्ते नीलादिलक्षणे। **अङ्शविवर्जिते** निर्विभा[2]गे सर्वात्मना **प्रत्यक्षेण गृहीतेपि** सति **यस्य विशेषस्यावसाये निश्चयेस्ति सहकारिप्रत्ययः स प्रतीयते** निश्चीयते।

**यद्यपि सर्वतो भिन्नांशरहितभावे हि[4] अनुभवः। अथाऽपि तावता सर्वभेदेषु निश्चयो न स्यात्। कारणान्तरापेक्षत्वात्। अनुभवो हि[5] यथाविकल्पाभ्यासं निश्चयज्ञानं जनयति। यथा रूपदर्शनाऽविशेषेऽपि कुणपकामिनीभक्ष्यविकल्पाः। तत्राऽपि बुद्धेः पाटवं तद्रागाभ्यासकषाये त्यादयोऽपि अनुभ[6]वाद् भेवनिश्च-**
439a **योत्पत्तौ सहकारिणः। तेषामेव च प्रत्यासत्त्यादिभेदात् पौर्वापर्यम्। यथा[7] जनकत्वाध्यापकत्वाविशेषेऽपि पितरमायान्तं दृष्ट्वा पिता मे आगच्छतीति निश्चिनोति नोपाध्याय इति। सोऽपि निश्चयोऽसति भ्रान्तिकारणे भवति। तस्मात्[1] नानुभूते सर्वाकारनिश्चयः॥**

---

**यद्यपीत्या**दिना व्याचष्टे। **सर्वभेदेषु** क्षणिकत्वादिषु **तावतेत्यनुभावमात्रेण**। निश्चयोत्पादनंप्रत्यनुभवज्ञानस्य **कारणन्तरापेक्षत्वात्**। तदेवाह **अनुभवो ही**त्यादि। **यथाविकल्पाभ्यासमि**ति यस्य यादृशो विकल्पाभ्या[3]सस्तेन सहकारिणा **जनयती**त्यर्थः। उदाहरणमाह। **यथेत्या**दि। मृतस्त्री**रूपदर्शनाविशेषेपि** परिव्राट्कामुकशुनां यथाक्रमं **कुणपकामिनीभक्ष्यविकल्पा** यथाविकल्पाभ्यासञ्जायन्ते। न च विकल्पाभ्यास एव सहकारी। किन्त्वन्योप्यस्तीत्याह। **तत्रे**त्यादि। तत्रापि रूपदर्शनाविशेषेपि। **बुद्धेः पाट**वन्तीक्ष्णता। यथा योगिनां बुद्धिपाट[4]वाद् दर्शनमात्रेण क्षणिकत्वादिनिश्चयः। आदिशब्दादर्थित्वसामर्थ्यादिपरिग्रहः। **इत्यादय** इत्येवमादयः। **अनुभवात्** प्रत्यक्षादुपादानकारणात्सकाशाद् **भेवनिश्चयस्योत्पत्तौ सहकारिणः**। यदा तर्हि बहुषु निश्चयेषु यथोक्तानि कारणानि न भवन्ति तदा तेषां निश्चयानां कथं क्रमभाव इत्याह। **तेषामेव** चेत्यादि (।) तेषामिति निश्चयकारणानां[6] **प्रत्यास**त्तितारतम्यभेदात्। यस्य निश्चयस्य प्रत्यासन्नतमन्निश्चयकारणन्तत्तावदादावुत्पद्यते। **आदि**शब्दादधिमात्रतारतम्यस्य भेदान्निश्चयानां **पौर्वापर्यं**। **यथे**त्यादिनोदाहरणमाह। पितैव यदोपाध्यायो भवति। तदैकस्य पुरुषस्य ज**नकत्वाध्यापकत्वाविशेषे**पि। **पितरमायान्तं दृष्ट्वा पिता मे आगच्छ-**
54a **तीति निश्चिनोति[7] नोपाध्याय इ**ति। पितृत्वनिश्चये कारणस्य प्रत्यासन्नतमत्वात्॥

ननु सत्यपि क्षणिकत्वनैरात्म्यविकल्पाभ्यासे सहकारिणी तत्त्वादर्शिनां न प्रत्यक्षात् क्षणिकत्वादिनिश्चयो भवतीत्यत आह। **सोपी**त्यादि। **असति** भ्रान्ति**कारणे भवति** न तु निश्चयप्रत्ययमात्रात्। यत एवमसति भ्रान्तिकारणे सहकारिप्रत्यसाकल्ये च सति प्रत्यक्षान्निश्चय उत्पद्य[1]ते न केवलात्। **तस्मान्नानुभूत** इत्यादि।

---

[1] Thams-cad-las tha-dad-pa cha-śas-daṅ-bral.bahi-ṅo.bo-ñid. ñams-su-myon.

**(तत्रापि चान्यव्यावृत्तिरन्यव्यावृत्त इत्यपि ।**
**शब्दाश्च निश्चयाश्चैव संकेतमनुरुन्धते) ॥६१॥**

**तत्रान्यापोहे सत्ताव्यावृत्तिरपि (अन्या) अन्य [2]एव व्यावृत्तो धर्मीति नास्ति। तद्व्यावृत्तेर्निवर्त्तमानस्य तद्भावप्रसङ्गात्। तथा च व्यावृत्तेरप्यभावः।**

---

ततश्च स्थितमेतद् (।) अन्यव्यवच्छेदः शब्दलिङ्गाभ्यां प्रतिपाद्यत इति।

ननु व्यवच्छेदोपि यदि पदार्थादभिन्नस्तदैकेन प्रमाणेन शब्देन वास्य विषयीकरणेन्यस्य वैयर्थ्यं स्यात् सर्वात्मना निश्चितत्वात्। अथ भिन्नस्तदापि तस्याश्रितत्वादेकव्यवच्छेदोपाधिके पदार्थे प्रमाणेनैकेन निश्चीयमाने पूर्वोक्तेन न्या[2]येन सर्वेषां व्यवच्छेदानां निश्चितत्वादन्येषां प्रमाणादीनामप्रवृत्तिः स्याद् (।) अतः समानः प्रसंग इति।

तन्न। यतो न भावानामन्योन्यव्यवच्छेदोऽभिन्नो भिन्नो वाऽस्ति। केवलं स्वहेतुभ्य एव भिन्नाः समुत्पन्ना इत्युक्तम्वक्ष्यति च॥

कथन्तर्ह्यन्यव्यावृत्तिरित्यादि व्यपदेशो बुद्धिश्च प्रवर्त्तत इत्यत्राह। **तत्रा-पीत्यादि**। **तत्रापि** चन्यापोहे शब्दार्थे।[3] **अन्य**स्माद् **व्यावृत्तिरन्य**स्माद् **व्यावृत्तो-यमित्यपि**(।) ये **शब्दा** धर्मधर्मिवचनाः **निश्चया**श्चोभयविषयास्ते **संकेतमनुरुन्धते**। संकेतानुविधानेनैषां धर्मधर्मिविषयविभागः कल्पितः परमार्थतस्तु व्यावृत्तिरेव नास्तीत्यर्थः।

तद्व्याचष्टे। **तत्रान्यापोह** इत्यादिना गोरश्वाद् **व्यावृत्तिरन्या** धर्मभूता **अन्य** एवाश्वाद् **व्यावृत्तो धर्मी**। व्यावृत्त्या[4] विशिष्टो गौरित्येत**न्नास्ति**। किन्तु यैव व्यावृत्तिः स एव व्यावृत्त इति वक्ष्यति।

यदि चाश्वाद् व्यावृत्तिरनश्वता गोद्रव्यस्यान्या स्यात् तदाश्वव्यावृत्तेरपि गोद्रव्येण निर्वर्त्तितव्यम्भेदात्। ततश्च **तद्व्यावृत्तेरन**श्वतायाः सकाशा**न्निवर्त्तमान**स्य गोस्तद्**भावप्रसङ्गात्**। अश्वभावप्रसङ्गादश्ववत्। एवं ह्यश्वव्यावृत्तेरनश्वत्व-लक्षणाया[5] गौर्व्यावृत्तो भवति यद्यस्याश्वत्वं स्यात्। **तथा** च गोरश्वभावापत्तेः। अश्वाद् गो**र्व्यावृत्ति**स्तस्या **अभाव**ः। गवाश्वयोरेकत्वात्।

तेन यदुक्तञ्जैनजैमिनीयैः (।)

"सर्वात्मकमेकं स्यादन्यापोहव्यतिक्रम" इति।[1]

तान्प्रतीदमुक्तं। यद्यन्यव्यावृत्तिरर्थान्तरं स्याद् गवाश्वादीनामेकत्वं स्यादिति।

---

[1] **श्लो० वा०**

**तस्माद् यैव व्यावृत्तिः स एव व्यावृत्तः।**

---

नापि गोरभिन्नाश्वव्यावृत्तिरश्वव्यावृत्तौ गौरि[6]त्यप्रतीतिप्रसंगात्। गोविनाशे चाश्वस्योत्पत्तिप्रसङ्गादश्वनिवृत्तेर्विनष्टत्वात्। तस्मान्नास्त्येव व्यावृत्तिः।

तेन यदुच्यते भट्टोद्योतकराभ्यां। "योयमगोपोहः स किं गवि भिन्नेऽर्थो भिन्नः। यदि भिन्नः किमाश्रितोऽथानाश्रितः (।) यद्याश्रितस्तदाश्रितत्वाद् गुण इति गोशब्देन तदा गुण्यभिधीयते न गोद्रव्यमिति। गौस्ति[7]ष्ठतीति सामानाधिकरण्यं स्यात्। अथानाश्रितः केनार्थेन षष्ठ्यर्थः। गोरपोह इति। अथाभिन्नो गौरेव स्यादिति न किञ्चिदनिष्ठं। अयं चापोहः प्रतिवस्तु यद्येकोनेकसम्बन्धी च तदेव गोत्वमि"ति (।)

54b

तन्निरस्तं। अन्यव्यावृत्तेरेवाभावात् केवलं स्वहेतुतः स्वकीयेन रूपेणोत्पन्नो भावोन्यस्माद् व्यावृत्तस्तस्य चान्यस्माद् व्यावृत्तिः कल्प्यते। यतश्च न परमा[1]र्थतो व्यावृत्तिरस्ति। **तस्माद् यैव व्यावृत्तिः स एव व्यावृत्तः**। द्वाभ्यामेकस्यैव विषयीकरणात्। तस्यैव चान्यव्यावृत्तस्य लिङ्गत्वं लिङ्गित्वं सम्बन्धो विकल्पविषयत्वञ्च (।) विकल्पो ह्यन्यव्यावृत्तं स्वाकाराभिन्नमध्यस्य पुरुषन्तत्र प्रवर्त्तयतीत्यत्यर्थकारित्वाद् (।) अतः स एव ग्राह्यः शब्दार्थोन्यव्यावृत्तः।

यदप्युच्यते कुमारिलेन (।) कदाचिदेकस्मादेव भावस्यापो[2]हः स्यात्। सर्वस्माद्वा। यद्येकस्मादेव तदा यथाश्वापोहद्वारेण गोद्रव्यस्य गौरित्यभिधानन्तथा सिंहादेरपि स्याद् अश्वापोहस्य गोशब्दप्रवृत्तिनिमित्तस्य भावात्। तदाह।

"ततोश्वापोहरूपत्वात् सिंहादिः सर्व एव ते।
तन्निमित्तमगोपोहं बिभ्रदुच्येत गौरिती"ति।[1]

अथ सर्वस्मादपोहो गोद्रव्यस्य। तत्रापि यदि प्रत्येकमपोह्यं अश्वादयस्तदा[3]पोह्यानामानन्त्यादपोह एव न सिध्येत्। अपोह्यानां च भिन्नत्वादपोहभेदः प्रसज्यते। तथा चैकस्मिन्नपि पिण्डे जातिबहुत्वाज्जात्यन्तरबुद्धिः स्यात्। जात्यन्तरेष्विवाश्वादिषु।

"ततो गौरिति सामान्यं वाच्यमेकं न सिध्यति।"[2]

नापि ते समुदायरूपेण सर्वेऽपोह्याः सम्भवन्ति। समुदायो ह्येकदेशत्वेन वा स्यान्न चापोह्यानामेकदेशादित्वं स[4]म्भवति। नापि तेषां समुदायो व्यतिरिक्तोऽस्त्यव्यतिरेके चानन्त्यं तदवस्थं। न चापि सामान्यरूपेण तेऽपोह्याः सामान्य-

---

[1] Ślokavārtika. 57
[2] Ibid, 60

**शब्दप्रतिपत्तिभेदो हि सङ्केतभेदात्**[3]**। न वाच्यभेदोऽस्ति॥**

**ननु च संकेतभेदो न युक्तः। द्वयोरेकस्याभिधानात्। तथा च व्यतिरेकिण्या**

---

स्यावस्तुत्वात्। अपोह्यत्वे च वस्तुत्वं स्यादिति।

• तदयुक्तं यतः (।) सर्वभावानां स्वेनैव स्वेनैव रूपेणोत्पद्यमानानां सर्वस्मादपोहः स्वहेतुभ्यः सिद्ध एव।

अथ कथमसौ ज्ञायत इति चोद्यते। तत्किङ्गौरतीतानाग[5]तवर्त्तमानाऽश्वादिस्वभावः प्रत्यक्षे प्रतिभासते। नेति चेत्। कथं न तत्र सर्वापोहः प्रत्यक्षसिद्धः। न हि प्रमाणं हस्ताभ्याङ्गृहीत्वान्यदपोहत्यपि तु नियतरूपार्थप्रकाशनमेवास्यान्यापोहं। तस्मान्नियतरूपार्थप्रतिभास एव प्रत्यक्षस्य सर्वस्मादपोहग्रहः। तच्च स्वविषयन्निश्चाययद् यदेवं न भवति तत्सर्वमन्यत्वेन नि[6]श्चाययत्यतो युगपत्सर्वस्यान्यस्य सामान्येनाविशेषेण निषेधः क्रियते। सामान्यस्यानिर्द्धारितविशेषरूपत्वात्। तदुक्तम् (।)

"अतद्रूपपरावृत्तवस्तुमात्रप्रसाधनात् (।),
सामान्यविषयं प्रोक्तं लिङ्गभेदाप्रतिष्ठितेरि"ति (।प्र०स०)

तेनापोह्यस्य कस्यचिद् वस्तुत्वमिष्यत एव।

न चापोह्यत्वाद् वस्तुत्वमित्यत्र किञ्चिद् प्रमाणमस्त्यभावस्याप्यपोह्यत्वान्न चास्य[7] वस्तुत्वमित्युक्तं। तस्माद् युगपत् सर्वापोहलक्षणेनागोपोहेनैकस्मिन्नपि पिण्डे गोत्वं। प्रत्येकाश्वाद्यपोहेनानश्वत्वासिहत्वामहिषत्वादयो जातिभेदाः कल्पितास्तद्द्वारेण च तदभिधायकाः प्रवर्त्तन्त इति यत्किञ्चिदेतत्। 55a

यदि व्यवृत्तिव्यावृत्ताऽभिधेयार्थस्य न भेदः। कथं व्यावृत्तिव्यावृत्त इति शब्दज्ञानभेदः। तथा हि व्यावृत्तिरित्यन्यः शब्दो व्यावृत्त इत्यन्य एव श[1]ब्दः। तथा ज्ञानभेदोपि (।) व्यावृत्तिरित्युक्ते धर्ममात्रम्प्रतीयते। व्यावृत्त इति धर्मीति। तत आह (।) **शब्दे**त्यादि। शब्दाद् धर्मधर्मिवाचिनो या प्रतीतिः सा शब्दप्रतिपत्तिः। शब्दश्च **शब्दप्रतिपत्ति**श्चेति विरूपैकशेषः। **शब्दभेदः** शब्दाच्च या प्रतिपत्तिस्तस्या भेद इत्यर्थः संज्ञासंज्ञिसम्बन्धिकरणं **संके**तस्तस्य **भेदात्**। संकेतभेदं चानन्तरमेव (१।६३) **भेदान्तरप्रतिक्षे**[2]पेत्यादिना प्रतिपादयिष्यते। **न वाच्यभेदोस्ति** धर्मधर्मिशब्दयोर्वस्तुत इत्यध्याहारः॥

**ननु चेत्यादि** परः। किं पुनर्वाच्याविशेषे **संकेतभेदो न युक्त** इति चेदाह। **द्वयो**रित्यादि। कर्त्तरि चेयं षष्ठी। कर्त्तृकर्मणोः कृतीति उभयप्राप्तौ कर्मणीति

**विभक्तेरप्ययोगः स्यात्। तस्या हि भेदा[4]श्रयत्वादिति चेत्।**

**(द्वयोरेकाभिधानेऽपि) विभक्तिर्व्यतिरेकिणी।**
**भिन्नमर्थमिवान्वेति वाच्ये लेशविशेषतः ॥६२॥**

**न वै शब्दानां प्रवृत्तिः क्वाऽपि विषयस्वभावायत्ता[5]। इच्छातो वृत्त्यभावप्रसङ्गात्। ते भेदाभेदयोर्यथा नियोगेच्छा तथा नियुक्तास्तं अर्थं अप्रतिबंधेन प्रकाशयन्ति। तस्मात् गौः गोत्वं[6] चेति (आभ्यां) एकार्थाभिधानेऽपि कस्यचिद् विशेषस्य प्रत्यायनार्थं कृते संकेते भेदे अनर्थान्तरेऽपि व्यतिरिक्तार्था विभक्तिरर्थान्तरमिवादर्शयन्ती प्रतिभाति। तथा प्रयोगदर्शना[7]भ्यासात्।** 439b

---

नियमस्य शेषे विभाषेति[1] विकल्पनात्। द्वाभ्यां धर्मधर्मिशब्दाभ्या**मेक**स्यार्थस्या**भिधाना**दित्यर्थः। एकं चेद् द्वाभ्यामभिधेयन्त[3]तो व्यर्थः संकेतः। **तथा चे**ति धर्मधर्मिणोरभेदे **व्यतिरेकिण्या** इति व्यतिरेकाभिधायिन्या गोर्गोत्वमिति षष्ठ्याः। **तस्या** इति व्यतिरेकविभक्ते**र्भेदाश्रयत्वाद् वस्तुभेदमाश्रि**त्य प्रवृत्तेः। यथा देवदत्तस्य कमण्डलुरिति। एवं संकेताभावे व्यतिरेकविभक्त्यभावे च चोदिते।

विभक्त्यभावदोषन्तावत्परिहरन्नाह। **द्वयो**रित्यादि। धर्मधर्मिवाचिनोः शब्द[4]योर**केस्यार्थस्याभिधानेपि विभक्तिर्व्यतिरेकिणी**। व्यतिरेकस्य वाचिका षष्ठी। इव शब्दो भिन्नक्रमः। **भिन्नमिवार्थमन्वेति** दर्शयति। **वाच्ये** संकेतभेदकृतेन **लेशे**न मात्रया यो **विशेषस्त**तः कारणान्न तु परमार्थतो वस्तुभेदात्।

यद्व्याचष्टे। **न वै शब्दानामि**त्यादिना। **विषयस्वभावायत्ते**ति बाह्यस्वलक्षणायत्ता (।) किं कारणम् (।) **इच्छातः** पुरुषे[5]च्छावशाद**भावेष्वपि** वृत्त्यभाव**प्रसङ्गात्**। **त** इति। इच्छाप्रतिबद्धवृत्तयः शब्दा **यथा** येन प्रकारेण भेदप्रतिपादनेन व्यतिरिक्ते यथा राज्ञः पुरुष इति। अव्यतिरिक्ते यथात्मैव ह्यात्मनो द्रष्टेति। **तथा नियुक्ता** इत्यभिन्नेप्यर्थे भेदमिवोपादाय प्रयुक्तास्त**मर्थम**प्रतिबन्धेन **भिन्नमिव प्रकाशयन्ति**। वस्तुतः स्वलक्षणस्याभेदेपि यत एवन्तेन कारणेन। **गौ[6]रिति** धर्मिवाचिनमाह। **गोत्व**मिति धर्मवाचिनं। आभ्याम**ेकाभिधाने**प्यगोव्यावृत्तस्य गोरभिधानेपि **कस्यचिद्** विषयस्य **प्रत्यायनार्थ**मिति। अगोव्यावृत्तिनिमित्तस्य गोत्वस्य प्रकाशनार्थं। अगोव्यावृत्तिमात्रं गोत्वशब्देन प्रतिपाद्यमित्येवंकृते **संकेते** भेदे। व्यतिरिक्तार्था न विभक्तिरस्य गोत्वमिति भवति षष्ठी। व्यतिरिक्तोऽर्थोस्या इति विग्रहः। धर्मिणस्स[7]काशाद् धर्मम**र्थान्तरमिवादर्शयन्ती प्रतिभाति**। **अन-** 55b

---

[1] Paṇini. 2: 3: 65.

**तावता सर्वत्र न भेदः। अन्यत्राऽपि पुरुषेच्छावशात् प्रवृत्तस्य प्रतिबन्धाभावात्। यथा एकं क्वचिद् एकवचनेन ख्याप्यते तद् अविशेषेऽपि आदरा[1]द्यभिधाना बहुवचनेन ख्याप्यते ॥**

**प्रयोजनाभावात् तु न संकेतभेदः स्यादिति चेत्। तदप्यस्त्येव। एवम्—**

**भेदान्तरप्रतिक्षेपाप्रतिक्षेपौ तयोर्द्वयोः।**
**(सङ्केतभेदस्य पदं) ज्ञातृवाञ्छानुरोधिनः ॥६३॥**

---

**र्थान्तरे**पीत्यव्यतिरिक्तेपि धर्मे (।) किं कारणं (।) **तथा प्रयोगदर्शनाभ्यासात्।** वस्तुभेदे सति षष्ठ्याः प्रयोगदर्शनाभ्यासाद् देवदत्तस्य कमण्डलुरित्यादौ।

एतदुक्तम्भवति। वस्तुभिन्नम्भवतु मा वा भूत् सर्वथा व्यतिरेकविभक्ति-रिच्छामात्रानुरोधिनी केवलं प्रयोगदर्शनाभ्यासाच्छब्दार्थम्भिन्नमिव दर्शयतीति। **तावते**ति विभक्तिप्रयो[1]गमात्रात्। **सर्वत्रे**त्यर्थाभेदेपि। गौर्गोत्वमित्यादौ **न** धर्म-धर्मिणोः परमार्थतो **भेदः**। तस्मा**दन्यत्रा**प्यर्थाभेदेपि **पुरुषेच्छावशात् प्रवृत्तस्य** व्यतिरेकाभिधायिनः शब्दस्य **प्रतिबन्धाभावात्**। दृष्टा च पुरुषेच्छावशाच्छ-ब्दानां प्रवृत्तिरसत्यपि तथाभूते वाह्ये वाच्य इत्याह। **यथे**त्यादि। **एक**म्वस्तु **क्वचित्** प्रकरणे **एकवचनेन ख्याप्यते**। यथा त्वमिति। **तदविशेषे[2]**पि एकत्वा-विशेषेपि तदेव वस्तु **बहुवचनेन** यूयमिति। अतश्चैकस्मिन्नपि बहुवचनदर्शनान्न यथावस्तु शब्दानाम्प्रवृत्तिरिति गम्यते। युष्मदि गुरावेकेषा[1]मित्यतिदेशवाक्याद् एकस्मिन्नपि बहुवचनमिति चेत्। चिन्त्यमेतत्। किमतिदेशवाक्येनैकस्य बहुत्वं क्रियते किम्वा बहुवचनमात्रमप्राप्तं विधीयत इति (।) न तावदाद्यः पक्षो वचन-मात्रेण[3] वस्तूनाम्विधानासम्भवात्। द्वितीयेपि पक्षे सिद्धैवेच्छामात्रेण शब्दानां प्रवृत्तिरिति। एवन्तावद्विभक्त्यभावदोषः परिहृतः (।)

संकेताभावदोषन्तु परिहर्त्तुन्तमेवोपन्यस्यति (।) **प्रयोजनाभावात्** त्वित्यादि। धर्मिधर्मशब्दाभ्यामेकस्याभिधानात् प्रयोजनाभावः। **तदपि** प्रयोजनमस्त्ये**व**। गोत्वापेक्षया **भेदान्तराणि** द्रव्यत्वपार्थिवत्वादीनि। **तेषां** प्रति[4]क्षेपोऽस्वीकारः। तौ **प्रतिक्षेपाप्रतिक्षेपौ** यथाक्रमन्तयो**र्द्वयो**र्द्धर्मधर्मिवाचिनोः शब्दयोर्यः **संकेतभेद**-स्तस्य (।) किम्विशिष्टस्य **ज्ञातृवाञ्छानुरोधिनः** प्रतिपत्तिरिच्छानुविधायिनः पदं प्रयोजनं ॥

एतदुक्तम्भवति। यदान्यव्यावर्त्तरूपनिराकाङ्क्षः प्रतिपत्ताश्वादेवैकस्माद्

---

[1] Pāṇini 1: 2: 58.

**यदाऽयं प्रतिपत्ता तदन्यव्यवच्छेदभावानपेक्ष पिण्डविशेषेऽश्वव्यवच्छेदमात्रं जिज्ञासते तथाभूतज्ञापनार्थम्। तथाकृतसंकेतेन शब्देन प्रबोध्यतेऽत्र[3] नैवाश्व- इति। यदा व्यवच्छेदान्तरानिराकांक्षः तं जिज्ञासते, तदा तथा प्रकाशनाय अप्रति-**

---

व्यावृत्तं गोपिण्डं जिज्ञासते तदा यावदश्वाद् व्या[5]वृत्तिमर्थान्तरभूतामारोप्य तथैव संकेतपूर्वकं लौकिकेन धर्मवाचकेन शब्देन न कथयति (।) तावन्न परस्य जिज्ञा-सितोर्थः प्रतिपादयितुं शक्यते (।) अतस्तं प्रत्यनश्वत्वमस्येत्युच्यते। एवं हि धर्मि-णोऽप्राधान्यादन्यव्यावृत्तरूपानाक्षेपः कृतो भवत्यश्वादेवैकस्माद् व्यावृत्तिश्च। न तदैवमुच्यतेऽनश्व इत्यनेन ह्यन्यव्यावृत्तस्यापि रूपस्याक्षेपः[6] कृतः स्यात् (।) न चैवम्परेण जिज्ञासितमजिज्ञासितं च कथयन् कथन्नोन्मत्तः स्यात्।

यदा पुनरन्यव्यावृत्तरूपसाकांक्षेऽश्वाद् व्यावृत्तं गोपिण्डं जिज्ञासते। तदापि यावदश्वव्यावृत्तिविशिष्टं पिण्डं धर्मिस्वभावतयाऽरोप्य तथैव संकेतपूर्वकं लौकि-केन धर्मिवाचकेन न कथयति तावन्न परस्य जिज्ञासितोर्थः प्रतिपादयितुं शक्यतेऽ-

56a तस्तं प्रत्यनश्वो[7]यमित्युच्यते। एवं हि धर्मिणः प्राधान्यादन्यव्यावृत्तरूपाक्षेपः कृतो भवत्यश्वव्यावृत्तश्च गोपिण्डः कथितो भवति। न तदैवं ख्याप्यतेऽनश्वत्व-मस्येति परजिज्ञासितान्यव्यावृत्तरूपानाक्षेपप्रसङ्गात्। अजिज्ञासितं चार्थं कथ-यन् कथन्नोन्मत्तः। सर्वश्च शाब्दो व्यवहारः संकेतपूर्वकः संकेतश्च विकल्पकल्पि-तार्थपूर्वक एवेति विकल्पैर[1]प्यनेनैव द्वारेण धर्मधर्मिभावप्रतीतिर्युक्ता।

तेन यदुच्यते (।) भवतु धर्मधर्मिवाचकानां भेदान्तरप्रतिक्षेपाप्रतिक्षेपार्थे-प्रवृत्तिः। धर्मिधर्मविकल्पानान्तु कथं प्रतिपत्तिरित्यपास्तं।

एतदेव वृत्त्या स्पष्टयन्नाह। **यदाय**मित्यादि। **प्रतिपत्ते**ति श्रोता। **तस्माद्** अश्वाद्यो**ऽन्यो** महिषादिस्तस्माद् **व्यवच्छे**दो महिषादिव्यावृत्तः स्वभावस्तस्य **भावा-नपेक्षः** स[2]त्तानपेक्षः। **पिण्डविशे**षे गवि। **अश्वव्यवच्छेदमात्रं जिज्ञासते**। किम-स्याश्वाद् व्यावृत्तं रूपमस्तीति। **तथाभूतज्ञापनार्थ**मिति यथा प्रतिपत्त्रा ज्ञातुमिष्ट-न्तदनुरोधेन तथाभूतस्याश्वाद् भेदमात्रस्य ज्ञापनार्थन्त**थाकृतसंके**तेनेत्यश्वव्यवच्छे-दमात्रे प्रतिक्षिप्तभेदान्तरे कृतसंकेतेनानश्वत्वं **शब्देन प्रबोध्यते** प्रकाश्यतेऽनश्वत्व-मस्य पिण्डस्यास्तीति। अश्वा[3]द्यो व्यवच्छेदस्तदपेक्षया महिषादिभ्यो व्यावृ-त्तयो(र्) **व्यवच्छेदान्त**राणि। तेष्व**निराकांक्षः** प्रतिपत्ता। **तमि**ति पिण्डं। अप्रतिक्षिप्तभेदान्तरेणाश्वव्यवच्छेदेन युक्तङ् गोद्रव्यं ज्ञातुमिच्छतीति यावत्। अपरित्यक्तानि महिषादिव्यवच्छेदान्तराणि येन। तस्मिन्न**परित्यक्तभेदान्तरे**। **तत्रैव** वाश्वव्यवच्छेदे। धर्मिवाचिनं शब्दं **प्रयुञ्जते** वक्तारो**ऽनश्वोयमि[4]ति**। कथं प्रयुञ्जत इत्याह। **तथा प्रकाशनाये**ति। अप्रतिक्षिप्तभेदान्तरस्याश्वव्यव-

**क्षिप्तभेदान्तस्यानश्वोय[4]मिति प्रयुंजते। अत एव पूर्वत्र प्रतिक्षिप्तभेदान्तरेण शब्दवृत्तेः सामानाधिकरण्यं[1], न विशेष्यविशेषणभावः। गोत्वमस्य शुक्ल-मितिवत्। तन्मात्रविशेषेण बुद्धेस्तदा[5]श्रयभूताया एकत्वेनाऽप्रतिभासनात्**

---

वच्छेदस्य प्रकाशनाय। **अप्रतिक्षिप्तभेदान्त**रमेवाश्वव्यवच्छेदन्तथा प्रकाशनाये-त्यन्ये पठन्ति। तदाप्ययमर्थः। अप्रतिक्षिप्तभेदान्तरन्तमेवाश्वव्यवच्छेदमश्व-व्यावृत्तिरूपं प्रयुञ्जते अभिदधत्यनश्वोयमित्यनेन धर्मिवचनेन शब्देन। किम-र्थम् (।) तथाप्रकाश[5]नायाप्रतिक्षिप्तभेदान्तरस्य प्रकाशनायेति। येनैव धर्मवाची शब्दः प्रतिक्षिप्तभेदान्तरः। **अत एव पूर्व**त्रेति धर्मवाचिनि शब्दे **प्रतिक्षिप्तम्भे-दान्तरं** येनेति। सामान्येनान्यपदार्थं कृत्वा भावप्रत्ययः कर्त्तव्यः। पश्चा**च्छब्द-वृत्तेरि**त्यनेन सम्बन्धः। अन्यथा प्रतिक्षिप्तं भेदान्तरत्वादिनि स्यात्। एवमन्य-त्राप्येवंजातीयेषु शब्देषु व्युत्पत्तिर्द्र[6]ष्टव्या।

भिन्ननिमित्तयोः शब्दयोरेकस्मिन्नधिकरणे वृत्तिः **सामानाधिकरण्यं**। **विशेष्य-विशेषणभावो** व्यवच्छेद्यव्यवच्छेदकभावः। उदाहरणङ् **गोत्वमस्य शुक्लमिति**। गुणशब्दस्याभिधेयवल्लिङ्गवत्त्वेन नपुंसकत्वं (।) शुक्ल इत्यन्ये पठन्ति। एवं चाचक्षते (।) गुणशब्दो हि प्रतिक्षिप्तभेदान्तरेण गुणमात्रे वर्त्तमान उपात्तो गु[7]णमात्रवृत्तीनां शुक्लादिशब्दानां पुल्लिङ्गत्वं। तद्वति तु वर्त्तमानानामभिधेय- 56b वल्लिङ्गता। एवं चानयोर्द्धर्ममात्रवृत्त्योर्न सामानाधिकरण्यं नापि विशेषण-विशेष्यभाव इति।

कस्मान्न सामानाधिकरण्यमित्याह। **तन्मात्रे**त्यादि। एतत्कथयति बुद्धि-प्रतिभासिन्येवार्थसामानाधिकरण्यादि। न बाह्ये स्वलक्षणे तस्यावाच्यत्वात् (।) केवलमध्यवसा[1]याद् बाह्येप्युच्यते। यदि च धर्मद्वययुक्तैकधर्मिप्रतिभा-सिनी शब्दद्वयजनिता बुद्धिरेकार्थोत्पद्येत भवेत्सामानाधिकरण्यं। इह तु **तन्मात्र-विशेषेण** प्रतिक्षिप्तभेदान्तरेण गोत्वमात्रविशेषणोपरक्ताया **बुद्धेस्तदाश्रयभूताया** इति विशेषणविशेष्यभावः सामानाधिकरण्याश्रयभूताया **एकत्वे**न धर्म्यभेदेनाप्रति-**भासनात्**। गो[2]त्वशुक्लत्वाभ्यां युक्तमेकन्धर्मिणं गृहीत्वा बुद्धेरप्रतिभासनादि-त्यर्थः।

यद्वा तदाश्रयभूताया इति तदेव गोत्वमाश्रयभूतं यस्यास्तस्या बुद्धेस्तन्मात्र-विशेषेण प्रतिक्षिप्तधर्मान्तरेण गोत्वमात्रेण विषे(?शे)षेण सह गोपिण्डस्यैकत्वे-नाप्रतिभासनात्। तथा ह्यस्य गोत्वमिति प्रयोगे निष्कृष्टरूपं धर्मं प्रतियती

---

[1] Gzi-mthun-pa-ñid-dam.

**निराकांक्षत्वाच्च।**

**द्वितीये तु भवति। तथा संकेतानुसारेण संहृतसकलव्यवच्छेदधर्मैः विभागवत एकस्येव संदर्शनेन प्रतिभासनात्[6] व्यवच्छेदान्तरापेक्षत्वाच्च।**

**भेदोयऽमेव सर्व्वत्र द्रव्यभावाभिधायिनोः।**
**शब्दयोर्न तयोर्वाच्ये विशेषस्तेन कश्चन ॥६४॥**

440a **तस्मात् सर्वत्र धर्मिधर्माभिधायि[7]शब्दे वाच्येऽर्थे निश्चयप्रत्ययविषयत्वेन न**

---

बुद्धिरुत्पद्यते। ततो न सामा[3]नाधिकरण्यमिति। धर्मान्तरप्रतिक्षेपादेव तदन्येषु भेदेषु **निराकांक्षत्वा**च्च बुद्धेर्न विशेषणविशेष्यभावः।

**द्वितीये तु** धर्मिवाचिशब्दपक्षे **भवति** सामानाधिकरण्यम्विशेषणविशेष्यभावो वा शुक्लो गौरिति। सामानाधिकरण्ये कारणमाह। **तथे**त्यादि। **तथा संकेतानुसारेणे**त्यप्रतिक्षिप्तभेदान्तरे वस्तुनि धर्मिशब्दस्य संके[4]तानुसारेण हेतुना। एकस्मिन् धर्मिणि योजनं संहारः। व्यवच्छेदहेतुका धर्मा व्यवच्छेदधर्माः संहृताश्च ते **सकलव्यवच्छेदधर्माश्चे**ति कर्मधारयः। **तै**र्धर्मैः करणभूतै**र्विभागवतः**। विभक्तानेकधर्मवतो धर्मि**ण एकस्येव** शब्द**सन्दर्शनेन** प्रदर्शनेन बुद्धेः **प्रतिभासनात्**। अनेकधर्मवन्तन्धर्मिणमेकमिव सन्दर्शयन्ती बुद्धिः[5] प्रतिभासत इति यावत्। न तु बुद्धिप्रतिभाससन्दर्शितो धर्मी वस्तुत एकः (।) विकल्पनिर्मितस्य धर्मधर्मिविभागस्यालीकत्वात्। **एकस्यैवे**त्यपि पठन्ति। तत्रापि प्रतिपत्त्रध्यवसायवशादेव युक्तमिति बोद्धव्यं। ततः सिद्धं सामानाधिकरण्यं (।) यतश्च भेदान्तराप्रतिक्षेपेण धर्म्मिशब्दः प्रवृत्तस्तत एव तज्जनिताया बुद्धेरप्रतिक्षिप्त[6]भेदा**न्तरापेक्षत्वाद्** भवति विशेषणविशेष्यभावो यद् गौः शुक्लो नीलो वेति। चशब्दश्च पूर्ववदतीतहेत्वपेक्षः॥

इदमेव व्यापकं सर्वव्यवहारस्य नापरस्परपरिकल्पितं सामान्यगुणादिकान्तस्य प्रमाणबाधितत्वादित्याह। **भेदोयमेवे**त्यादि। **द्रव्यभावाभिधायिनोः शब्दयोरयमेव भेदो** धर्मान्तरप्र[7]तिक्षेपाप्रतिक्षेपलक्षणः। **सर्वत्रे**ति। सामान्यसामान्यवति। गुणगुणवति। क्रियाक्रियावति। सर्वस्मिन् विषये धर्मिवचनो द्रव्याभिधायी। धर्मवचनो भावाभिधायी। यत एवन्**तेन** कारणेन न **तयो**र्द्रव्यभाव**शब्दयोर्वाच्ये विशेषः** परमार्थतः **कश्चना**स्ति।

57a

तद्व्याचष्टे। **तस्मा**दित्यादि। **निश्चयप्रत्ययविषयत्वेन** करणेन। **न कश्चिद्विशेषः**। तथा हि[1] यथा गोत्वमित्युक्ते तत्रैवागोव्यवच्छेदे निश्चयस्तथा गौरित्युक्ते यद्यप्यप्रतिक्षिप्तभेदान्तरस्यागोव्यवच्छिन्नस्याभिधानन्तथाप्यगोव्यवच्छे-

**कश्चिद् विशेषः। एकस्तमेव ज्ञापयति[1] प्रतिक्षिप्तभेदान्तरः, अन्योऽप्रतिक्षेपेण गमय[1]तीति अयमेव भेदः॥**

**जिज्ञापयिषुरर्थन्तं तद्धितेन कृतापि वा।**
**अन्येन वा यदि ब्रूयाद्भेदो नास्ति ततोऽपरः॥६५॥**

**एतावन्तं दर्शयेत् तथाभूतज्ञाप[1]नाय। पाक इति[2] तद्धितेनापि दर्शयितुं योग्यं पचेदप[2] इति कृद्वता ऽपि, स्वकृतसमयान्तरेणा[3]ऽपि। तथाभिधा नमात्रेण**

---

दमात्रे निश्चयोऽन्येपान्तु भेदानामप्रतिक्षेपमात्रं। स एव च शब्दार्थो यत्र शाब्दो निश्चयो भवतीति नास्ति भावद्रव्याभिधायिनोः शब्दयोर्वाच्ये विशेषो भेदान्तरप्रतिक्षेपाप्रतिक्षेपमात्रन्तु भिद्यते। तदेवा[2]ह। **एकस्तमे**वेत्यादि। एक इति धर्मशब्दस्तमित्यगोव्यवच्छिन्नं। **प्रतिक्षिप्तं भेदान्तरं** येन धर्मशब्देन स तथोक्तः। **अन्य** इति धर्मिशब्दोऽ**प्रतिक्षेपेण** तमेव पिण्डं सामानाधिकरण्येन **गमयतीति** नास्ति द्रव्यनिश्चयम्प्रति **भेदः** प्रतिक्षेपाप्रतिक्षेपमात्रन्तु भिद्यते। एवं गमनन्देवदत्तस्य गच्छति देवदत्त इति न कश्चन भेद इत्यन्यत्राप्येवं[3] योज्यं॥

यापि जातिगुणक्रियासम्बन्धभेदेन चतुष्ठयी शब्दानां वृत्तिः साप्यनेनैव वस्तुगतधर्मभेदेन संगृहीतेत्याह। **जिज्ञापयिषु**रित्यादि। ज्ञापयितुमिच्छुर**र्थन्तम्**भेदान्तरप्रतिक्षेपाप्रतिक्षेपलक्षणं। **तद्धितेन** तद्धितप्रत्ययान्तेन। **कृतापि वा**। कृत्संज्ञकप्रत्ययान्तेन वा। **अन्येन वा** कृत्तद्धितव्यतिरिक्तेन तिङन्तेनाऽव्युत्प[4]न्नेन वा शब्देन शुक्लादिना **यदि ब्रूयात्**। **ततो** भेदान्तरप्रतिक्षेपाप्रतिक्षेपलक्षणाद् विशेषा**दपरो भेदो नास्ति**।

तद्व्याचष्टे। **एतावन्तमि**त्यादिना। एतावन्तमिति प्रतिक्षिप्तभेदान्तरलक्षणं। कृतापि वा। **दर्शये**दिति सम्बन्धः।

यदा वाधिश्रयणादिक्रियायां कर्त्तृस्थायाम्पचिर्वर्त्तते। तत्रैव च घञ् प्रत्ययस्तदा पाचकत्वशब्देन क्रियाकारकयोः स[5]म्बन्धः समवायोभिधीयत इति पाचकत्वशब्देन समानार्थः पाकशब्दः। द्वावप्येतौ प्रतिक्षिप्तभेदान्तरमपाचकव्यवच्छिन्नमर्थं प्रतिपादयतः। यदा तु कर्मस्थैव क्रिया विक्लृत्तिः पचेरर्थस्तदा पाचकत्वशब्दस्य कथं सम्बन्धाभिधायित्वं। पाचकत्वपाकयोर्भिन्नार्थत्वात्। अन्येन वा कृत्तद्धितव्यतिरिक्तेन तिङादिना। **तथाभूतज्ञापनाय**। प्रतिक्षिप्त-

---

[1] Śes-pa-byod-pa-la.
[2] Bcod-pa-ñid-ces.
[3] Raṅ-gis-byas-paḥi-gśuṅ-legs-gzan-gyi.

**अर्थान्तरमेव स्यात्। तथाभूतज्ञापनाय[3] शब्दस्य कृतसंकेतत्वात्।**

**ननु च पाचकस्य पाकक्रियाया न संबंधः। यथोक्तम्।[1] न वै पाकेनान्य एव पाचकः कश्चिद् अभिधीयते। यत् पुनरस्याभिधेयं[4] तदेवाभिधेयम्[2]। तदेव पाचक(त्वे)नाप्यभिधीयते अप्रतिष्ठितैर्मिथ्याविकल्पा ध[1]र्माः॥**

---

भेदान्तरज्ञापनाय स्व[6]यं कृतेन समयेन दर्शयेदिति सम्बन्धः। यथा देवदत्तेन शय्यते पटस्य शुक्लत्वमिति। अत्रापि शायकशब्दस्य य एवार्थः स एव प्रतिक्षिप्तभेदान्तरः। शय्यत इत्यस्यापि। तथा शुक्लः पट इति य एवाशुक्लव्यवच्छिन्नो प्रतिक्षिप्तभे-दान्तरोर्थः स एव प्रतिक्षिप्तभेदान्तरः पटस्य शुक्ल इत्यस्यापि। **तथाभिधान-**
57b **मात्रेणे**ति प्रतिक्षिप्ताप्र[7]तिक्षिप्तभेदान्तरस्यैकधर्मिगतस्य व्यवच्छेदस्याभिधान-मात्रेण तदेव वस्त्व**र्थान्तरमेव** परमार्थतो धर्मधर्मिरूपेण विभक्तमेव। न पुन-र्भवतीति सम्बन्धः। किङ्कारणं (।) तथाभूतस्यैव प्रतिक्षिप्ताप्रतिक्षिप्तभेदान्तर-स्यैवैकस्य ज्ञापनाय धर्मधर्मिशब्दस्य कृतसंकेतत्वात्।

यद्वा **तथाभिधानमात्रेणे**ति। अर्थान्तरभूतधर्माभिधानमात्रेण तद्धर्मस्व[1]-रूपम्परमार्थतो**र्थान्तरमेव भव**ति। **तथाभूतस्यै**व भेदान्तरनिरपेक्षस्यैव तस्यैक-व्यावृत्तस्य **ज्ञापनाय** धर्म**शब्दस्य कृतसंकेतत्वात्**॥

**ननु चे**त्यादि परः। **सम्बन्ध** उच्यत इति पाकक्रियायाः पाचकस्य च कर्त्तुः सम्बन्धः समवायलक्षणः। तथा हि कृदन्ताद् भावप्रत्ययः सम्बन्धस्याभिधायको दृष्टो यथाह। समासकृत्तद्धितेषु सम्बन्धाभिधानमि[2]ति। कृदन्तश्च पाचक-शब्दः (।) न पाक एव क्रियात्मकः पाचकत्वशब्देनोच्यते।

एतदुक्तम्भवति (।) अन्यैव कर्त्तृव्यतिरिक्ता क्रियान्यश्च तयोश्च सम्बन्धो-न्य एव। ततश्च कर्त्तृस्थक्रियाभिधाने सत्यपि पचतेर्न पाकपाचकत्वशब्दयो-स्तुल्योर्थ इति। **न वै पाकेने**त्यादिना परिहरति। **पाकेन** कर्त्तृस्थे न वस्तुभूतेन व्यापारेण युक्तो**न्य एव** पाकक्रिया व्यतिरिक्तः **पा[3]च**को नाम कर्त्ता**भिधीयते** पाचकशब्देन (।) यादृशो वर्ण्यते वैशेषिकादिभिः क्रिया व्यतिरिक्तः स्वतन्त्रः कर्ता यत्र क्रियाकारकसम्बन्धो वस्तुभूतः स्यात्। तस्य स्वतन्त्रस्य कर्त्तुः क्रिया-व्यतिरिक्तस्य निषेत्स्यमानत्वात्। न चेद् व्यतिरिक्ता क्रिया कर्त्ता वा कुतस्स-म्बन्धः यस्य भावप्रत्ययेनाभिधानमिति भावः। **यत्पुनरस्ये**ति पाचकशब्दस्या[4]-स्या**भिधे**यमपाचके व्यवच्छिन्नमप्रतिक्षिप्तभेदान्तरं वस्तुमात्र**न्तदेव** पाचक-

---

[1] Ji-skad-du-brdod-pa-sta-bu.

[2] Bstan-zin.

**यथा ज्ञायते क्रिया व्यतिरिक्ता न तत्समवायो वेति।**

**तेनाऽन्यापोहविषये तद्वत्पक्षोपवर्णनम् ।**
**प्रत्याख्यातं पृथक्त्वे हि स्याद्दोषो जातितद्वतोः ।।६६।।**

**तद्विशिष्टस्यार्थस्य** शब्दैरभिधानादन्यापोहेऽपि **तद्वत्पक्षोदितः सर्वः प्रसंगः**[6]**तुल्यः** स्यात् **इति** यदुक्तं, **तदपि अनेन प्रतिव्यूढम्**। **तत्र हि**

---

शब्दाभिधेयं **पाचकत्वेनाप्यभि**धीयत इत्यध्याहार्यः। तस्यैव प्रतिक्षिप्तभेदान्तरस्याभिधानात्। न तु सम्बन्धोभिधीयते। तस्यासत्त्वात्। तदेव यथोक्तं पाचकशब्दाभिधेयं पाकशब्देनापीत्यपिशब्दात्।

अपरं व्याख्यानं। **न वै पाकेने**ति पाकशब्देनान्यापोहवादिप[5]क्षे **अन्य एव** व्यतिरिक्तः क्रियाश्रयभूतः **पाचको**भिधीयते। यादृशो वर्ण्यते परेण(।)यः क्रियाकारकसम्बन्धस्याश्रयः स्यात्। तस्यासिद्धत्वात्(।)किन्त्वपाचकव्यावृत्तिर्भेदान्तरप्रतिक्षेपेणाभिधीयते। तदेवाह। **यत्पुन**रित्यादि। यदित्यपाचकव्यावृत्तिलक्षणं प्रतिक्षिप्तभेदान्तरमभिधेयं। **अस्ये**ति पाकशब्दस्यानन्तरमेव दर्शितं तदेव पाक[6]-शब्दाभिधेयम्पा**चक**त्वशब्देनाप्य**भिधीयते** (।) न सम्बन्धः। तस्यासिद्धत्वात्। **अप्रतिष्ठि**तैरवस्तुबलायातैरत एव **मिथ्याविकल्पाः**।।

कथम्पुनर्गम्यते क्रिया व्यतिरिक्ता नास्ति तत्समवायो वेत्यत आह। **यथे**त्यादि। **तत्समवायो** वेति क्रियाकारकसमवायः। यतश्च व्यावृत्तिव्यावृत्तिमतोरभेदस्**तेन** कारणेनान्**यापोहविषयो** जातिमान् शब्दै[7]रभिधीयत इति (।) **तद्व**त्पक्षस्तत्र यो दोषः सोन्यापोहेपि स्यादिति **तद्वत्पक्षोपवर्ण्णनं प्रत्याख्या**तं। यस्मात् **पृथक्त्वे हि जातितद्वतो**रभ्युपगम्यमाने **स्यात्** तद्वत्पक्षोदितो **दोषः**। 58a

**तद्विशिष्ट**स्येत्यन्यापोहविशिष्ट**स्यार्थस्य शब्दैर**भिधानात् **तद्वत्पक्षोदित** इति तद्वत्पक्षे य उक्तः। यथा किल सामान्यमभिधाय तद्वति वर्त्तमानः शब्दोऽस्वतन्त्रः स्यात्[1]तश्च शब्दप्रवृत्तिनिमित्तभूतेन सामान्येन वशीकृतस्य शब्दस्य व्यक्तिगतपरस्परभेदानाक्षेपात्तैः सामानाधिकरण्यं न स्यात्। उपचरिता च तद्वति शब्दप्रवृत्तिरित्यादिको दोष इत्येवं व्यावृत्तिमभिधाय तद्वति वर्त्तमानोस्वतन्त्रो ध्वनिरिति **सर्वः प्रसंगः स्यात्। तदपि** तद्वत्पक्षोपवर्ण्णनं। **अनेने**ति व्यावृत्तिव्यावृत्तिमतोरनन्यत्वेन[2] **प्रतिव्यूढं** प्रत्याख्यातं। यस्मात् **तत्र हि** तद्वत्पक्षे। **अर्थान्तरमु-पादाये**ति वस्तुभूतं सामान्यमुपादायान्यत्रार्थान्तरे तद्वति। साक्षात् सामान्यवतोऽनभिधानादस्वातन्त्र्यं। आदिशब्दादसमानाधिकरण्योपचारदोषपरिग्रहः।

अन्यापोहपक्षे तु व्यावृत्तिव्यावृत्तिमतोरैक्यान्नार्थान्तरमुपादायार्थान्तरे शब्दप्र-

**अर्थान्तरमुपादाय प्रवृत्तस्य शब्दस्य स्वातंत्र्याभावादिदोषेण बाधा स्यात्**
440b **अन्यस्माद् व्यावृत्तिर्हि व्यावृत्तात् नान्या[7] द्वयोरेकाभिधानादित्युक्तम्।**

**कथमिदानीं एकस्य व्यावृत्तस्य अन्याननुगमात् अन्यव्यावृत्तिः सामान्यम्। तद्बुद्धौ तथा प्रतिभासनात्। न वै किञ्चित् सामान्यम्। शब्दाश्रया बुद्धिरनादिवासनासामर्थ्यात् धर्मानसंसृष्टानपि संसृजन्ती जायते। असदर्थाकारप्रतिभासवशेन सामान्यं सामानाधिकरणं[1] च व्यवस्थाप्यते। अर्थानां एकस्य भेदाभावात्।**

---

वृत्तिस्ततो नास्त्यस्वातन्त्रा (?न्त्र्या) दिदोष इत्याह।[3] **न चे**त्यादि। **अन्यस्माद्** वस्तुनोर्या व्या**वृत्तिः** सा **व्यावृत्तान्नान्या**। **द्वयो**र्धर्मधर्मिवाचिनोः शब्दयो**रेकस्य** व्यावृत्तिभेदस्या**भिधानादित्युक्त**मनन्तरमेव।

**कथ**मित्यादि परः। **इदानी**मिति व्यावृत्तितद्वतोरैक्ये। **एकस्य व्यावृत्तस्य** स्वलक्षणस्या**ननुगमात्**। अर्थान्तरासंसर्गात्। कथन्तस्य स्वलक्षणस्यात्मभूता **व्यावृत्तिः** स्वलक्षणवदनन्वयिनी **सामान्यं** स्यात्।[4] नैव। दृष्टा च सामान्यं।

**तद्बुद्धा**वित्यादिना सिद्धान्तवादी। सामान्यबुद्धौ विकल्पिकायां **तथै**काकारेण **प्रतिभासनादे**काकार एव व्यावर्त्यतेनेनेति व्यावृत्तिः। सामान्यमुच्यते। एतदाह (।) न व्यावृत्तेषु स्वलक्षणेष्वात्मभूता व्यावृत्तिरेका सामान्यं केवलं व्यावृत्तस्वलक्षणानुभवोत्तरकालभावी विकल्पः प्रकृत्या। एककार्येषु भावेष्वेकमाकारमादर्शयन्निवो[5]त्पद्यते। तद्विकल्पवशात् सामान्यमास्थीयते (।) निःसामान्येष्वप्यनेन च साक्षाच्छब्दादिविषयो दर्शितः।

एतदेव स्फुटयन्नाह। **न वै किञ्चि**दित्यादि। वस्तुभूतमित्यभिप्रायः। कथन्तर्हि सामान्यसामानाधिकरण्यादिव्यवहार इत्याह। **शब्दे**त्यादि। **शब्द आश्रयः** सहकारिकारणत्वेन यस्याः सा विकल्पिका **बुद्धिरनादिवासनासामर्थ्यात्**। **धर्मानसंसृ[6]ष्टानपि संसृजन्ती** एकाकारानिव कुर्वाणा **जायते**। तस्या बुद्धेरेका**कारप्रतिभासवशेन सामान्यं**। धर्मद्वययुक्तैकधर्मिप्रतिभासवशेन **सामानाधिकरण्यं च व्यवस्थाप्यते**। अयं च सामान्यादिव्यवहारोऽसद्व्यापि व्यवस्थाप्यते। कथमसदर्थ-
58b इत्याह। **अर्थानामित्यादि**। स्वलक्षणांनां संसर्गाभावात् सामान्यव्यवहारोऽसदर्थः।[7] **एकस्य च** स्वलक्षणस्य **भेदाभावात्** सामानाधिकरण्यव्यवहारोसदर्थः।

ननु विरूपतयाऽयं सर्वव्यवहारः प्रवृत्त इति कथमन्यापोहविषय इत्यत आह। **तस्य सर्वस्य** सामान्यादिव्यवहारस्यार्थाः **समाश्रय** इत्यनेन सम्बन्धः। **तत्कार्यन्तच्च-**

---

[1] Czi-mthun-pa-ñid.

**तस्य**[2] **सर्वस्य च समाश्रयः। तत्कार्यकारणतयाऽन्येभ्यो भिद्यमाना अर्था भवन्ति समाश्रयः। शब्दोऽपि अनिष्टाद् व्यावृत्ते प्रवर्त्तयत्यतोऽन्यापोहविषय उक्तः।**

**तत्र अनपेक्षितबाह्यार्थतत्त्वो बुद्धिप्रतिभास**[3]**वशाद् एकोऽनेकव्यावृत्तः। शब्दतदनुभवाहितवासनाप्रबोधजन्मिभिर्विकल्पैः अध्यवसिततद्भावार्थैः विषयी-**

---

**कारण**मनुरूपं येषान्तेषाम्भाव**स्तया**। करणभूतया। **अन्येभ्य** इत्यतत्कार्यकारणेभ्यो **भिद्यमाना अर्थाः** सर्वस्य सामान्या[1]दिव्यवहारस्या**श्रयो भवन्त्य**तः कारणाद् अन्यापोहविषय उक्तः (।) न त्वन्यापोहस्तत्र प्रतिभासते बाह्यस्यैवैकाकारस्य विधिरूपतया प्रतिभासनात्। यस्माच्च निश्चयप्रयुक्तः पुरुषमनिष्टपरिहारेणा**निष्टाद् व्यावृत्ते** स्वलक्षणे **प्रवर्त्तयत्यतोपि** कारणाद् **अन्यापोहविषय उक्तो** न तु प्रतिभासापेक्षो विधेः प्रतिभासनात्।

तेन यदुच्यते भ ट्टो द्यो त का राभ्यां (।)[1] गोशब्दस्यार्थः[2] किम्भावोथाभावः। यदि भावो किं गौरथागौः। यदि गौर्नास्ति विवादः। अथागौर्गोशब्दस्यागौरर्थ इति अतिशब्दकौशलं। अथाभावस्तदयुक्तं। न हि गोशब्दश्रवणादभावे प्रेष्यसंप्रतिपत्तिः। शब्दार्थश्च प्रतिपत्त्या प्रतीयते न च गोशब्दादभावं कश्चित्प्रतिपद्यते तथाऽगौर्न भवतीत्ययमपोहः किं गोविषयोथाऽगोविषयः। यदि गोविषयः कथं[3] गोर्गव्येवाभावः। अथागोविषयः (।) कथमन्यविषयाद् अपोहाद् अन्यत्र प्रतिपत्तिः। न हि खदिरेच्छिद्यमाने पलाशेच्छिदा भवति। अथा गौर्गवि प्रतिषेधोऽगौर्न भवतीति। केन गोरगोत्वं प्रसक्तं यत्प्रतिषिध्यत इति (।)

अपास्तं (।) गोविषयत्वाद् गोशब्दस्य केवलं कल्पितविषयत्वाद् विवादः। यथा वा गोप्रतिषेधोऽसत्यपि समारोपे तथोक्तं प्रागिति यत्किञ्चिदेतत्।[4]

तस्मात् स्थितमेतद्विधिरेव शब्दार्थ इति ॥

एतदेव दर्शयन्नाह। **तत्रे**त्यादि। **अनपेक्षितं** स्वरूपेण **बाह्यतत्त्वं** येन विकल्पबुद्धिप्रतिभासिना धर्मिणा स तथोक्तः। **बुद्धिप्रतिभासवशादेकोनेकव्यावृत्त** इति। अनेकस्माद् व्यावृत्तस्यैकस्य धर्मिणः सन्दर्शनेन बुद्धेः प्रतिभासनात्। तद्वशेनैको धर्मी अनेकव्यावृत्तो व्यवस्थाप्यते। यश्चानेकस्माद् व्यावृत्तस्तस्मात् तत्र व्यावृ[5]त्तयो धर्मभेदाः कल्प्यन्त इति भावः। स एव भूतो धर्मी शब्दैर्विषयीक्रियते। तथाभूतविकल्पप्रतिभासजननाय वक्तृभिः शब्दस्योच्चारणात्। यतश्चान्यव्यावृत्तो विकल्पप्रतिभासः शब्दैर्विषयीक्रियते। ततो विधिविषयत्वं सिद्धमिति भावः।

---

[1] Cf. Ślokavārtika. Apoha Nyāyavārtika 2: 2: 71.

**क्रियते। तत्रैव च धर्मधर्मिणावेव व्यवहारः परस्परं तत्त्वान्यत्त्वा[4]भ्यामवाच्यत्वा-विति प्रतन्यते।**

**न हि धर्मिणो धर्मोऽन्यः। अनर्थान्तराभिधानात्। नापि स एव। तद्वा-चिनामिव धर्मवाचिनामपि व्यवच्छेदान्तराक्षेप[5]प्रसंगात्। तथा चेष्टाऽप्रत्या-यनात् संकेतभेदाकरणम्। अवाच्यत्वं धर्मधर्मिणोः शब्दार्थे। वस्तुनि स्वलक्षणे सामान्य[6]लक्षणं अवाच्यं, अविद्यमानत्वात्।**

---

न केवलं शब्दैर्विकल्पैरपि विषयीक्रियत इत्याह। **तदनुभवे**त्यादि। तस्य तस्य स्वलक्षणस्यानुभवस्तद[6]**नुभवस्तेनाहिता वासना** शक्तिस्तस्याः **प्रबोधः** कार्योत्पादानुगण्यन्ततो जन्म येषां विकल्पानान्तै**र्विषयीक्रिय**त इति सम्बन्धः। किं विशिष्टै**रध्यवसिततद्भावार्थैः**। अध्यवसितस्तद्भावो बाह्यभावो यस्मिन् विकल्पप्रतिभासे सोध्यसविततद्भाव एवं भूतोर्थो विषयो येषाम्विकल्पानान्ते तथा। दृश्यैविकल्पावेकीकृत्य प्रवृत्तेरिति यावत्।

59a अध्यवसित[7]तद्भावार्थ इति पाठान्तरन्तदाध्यवसिततद्भावश्चासावर्थ-श्चेति कर्मधारयः। एकोप्यनेकव्यावृत्तोध्यवसिततद्भावार्थ इति सम्बन्धः। तस्माद् बुद्धिप्रतिभासवशात्। सामान्यादिव्यवहारः। **तत्रैव च** बुद्धिप्रतिभासे-ऽयमिति भेदान्तरप्रतिक्षेपाप्रतिक्षेपलक्षणे। व्यवह्रियत इति व्यवहारः कर्म-साधनः। **धर्मधर्मिणावेव व्यवहारः**।

एतदुक्तम्भवति (।) बुद्धिप्र[1]तिभासे यौ धर्मधर्मिणो व्यवस्थाप्येते। तौ **परस्परन्तत्त्वान्यत्वाभ्यामवाच्यादिति प्रतन्यते** (।) परमार्थतस्तेन पारमार्थिक-धर्मधर्मितत्त्वान्यत्वपक्षे यो दोषः प्रमाणान्तरादिवैयर्थ्य स्वातन्त्र्यादिलक्षण उक्तः स इह न भवतीत्युक्तम्भवति।

तत्त्वान्यत्वपक्षयोर्दोषान्तरमप्याह। **न ही**त्यादि। **धर्मिणः** सकाशान्नान्यो-**धर्मः**। किङ्कारणम् (।) **अनर्थान्तराभिधा[2]नात्**। धर्मधर्मिशब्दाभ्यामेकस्मादेव व्यवच्छिन्नस्याभिधानात्। **नापि** य एव धर्मी **स एव** धर्मः। कस्मात्। **तद्वाचिना-मिव**। धर्मिवाचिनामिव शब्दानां। **धर्मवाचिनामपि व्यवच्छेदान्तराक्षेपप्रसं-गात्। तथा चेष्टाप्रत्यायनात्**। धर्मशब्देनेष्टस्य प्रतिक्षिप्तभेदान्तरस्य भेदस्या-प्रत्यायनात्। **संकेतभेदाकरणं**। प्रतिक्षिप्तभेदान्तरं व्यवच्छेदं प्रत्याय[3]यति धर्मशब्द इत्यस्य संकेतभेदस्याकरणं। एतदनन्तरोक्तन्तत्त्वान्यत्त्वाभ्या**मवाच्यत्वं धर्मधर्मिणोः शब्दार्थे** बुद्धिप्रतिभासिन्यर्थे उक्तं। **वस्तुनी**ति बाह्यस्वलक्षणे। **अविद्यमानत्वादेव** तत्त्वान्यत्त्वाभ्या**मवाच्यं** 'यथाप्रतिभासन्तु शब्दादिविषयो व्यव-स्थाप्यते।

**ननु च धर्मधर्मिणोरभेदे भेदे च षष्ठ्यादिर्विभक्तिर्दृष्टा तत्र बहुषु धर्मेषु दृष्टो वचनभेद एकस्मिन् धर्मिणि[7] न युक्तः।** 441a

**उक्तमत्र। न वै शब्दानां स्वभावायत्ततेति।**

**अपि च।**

**येषां वस्तुवशा वाचो न विवक्षापराश्रयाः।**
**षष्ठीवचनभेदादि चोद्यं तान् प्रति युक्तिमत् ॥६७॥**

**यदि एते क्वचिद् प्रणिनीषिता वस्तुप्रतिबन्धात् धूमादिवत् न हि पुरुषैर्नियोक्तुं पार्यंते। तदा कथं षष्ठ्यादय इत्युपालम्भः स्यात् ॥**

**यदा पुनः।**[2]

**यद्यथा वाचकत्वेन वक्तृभिर्विनियम्यते।**
**अनपेक्षितबाह्यार्थस्तत्तथा वाचकं वचः ॥६८॥**

---

**ननु चे**त्यादि परः। दृष्टा प्रयोगेषूपलब्धा। गोर्गोत्वमिति **षष्ठी। आदि**शब्दाद् गवि व्यवस्थि[4]तं गोत्वं। गोत्वेन निमित्तेन गवि गोशब्दो वर्त्तत इत्यादि विभक्तिपरिग्रहः। गोत्वद्रव्यत्वादीनां च धर्माणां बहुत्वात्। **तत्र बहुषु धर्मेषु।** गोत्वद्रव्यत्वपार्थिवत्वानीति **दृष्टो** यो **वचनभेदः** स न स्याद् (।) **धर्मधर्मिणोरभेदे** पारमार्थिकभेदाभावे धर्माणां च परस्परम्(।)

**उक्तम**त्रेति सिद्धान्तवादी। **न वै शब्दानां** काचिद् विषयस्वभावायत्ता वृत्तिरित्यादिनोक्तत्वात्[5] ॥

भूयश्चाधिकार्थविधानेन प्रतिपादयितुमाह। **अपि चे**त्यादि। **येषां** वादिनां **वस्तुवशा वाचो** वस्त्वायत्ताः। **न विवक्षापराश्रयाः**। विवक्षैव परः प्रधानमाश्रयो यासां वाचान्ता विवक्षापराश्रयाः षष्ठी न स्याद् वचनभेदादयश्च न स्युरित्येवं षष्ठीवचनभेदादिषु चोद्यं **षष्ठीवचनभेदादि चोद्यं**। आदिशब्दात्। गोर्भावो गोत्वमित्यादि। त[6]द्धितप्रत्ययाभावचोद्यं। **तान्** वस्तुवादिनः **प्रति। युक्तिमत्। एते** शब्दाः षष्ठ्यादयः **क्वचि**दिति वस्त्वभेदेपि **प्रणिनीषिताः** प्रणेतुमिष्टाः। **वस्तुप्रतिबन्धात्**। वस्त्वायत्तत्वात्। **धूमादिवत्। न** ह्यग्निप्रतिबद्धो धूमो वह्निप्रत्यायनसमर्थस्तद्वैपरीत्येन जलप्रत्यायने **नियोक्तुं पार्यते। तदा** वस्तुप्रतिबद्धत्वे शब्दाना**मयमुपालम्भः स्या**दसति[7]व्यतिरेके **कथं षष्ठ्यादय इति** ॥ 59b

एतदेव नास्तीत्याह। **यदा पुन**रित्यादि। **यद्** वचो **यथा** येन प्रकारेण भेदस्याभेदस्य वा प्रतिपादनाय। किं विशिष्ट**मनपेक्षितबाह्यार्थं वाचकत्वेन** रूपेण **वक्तृ**-

**न हि 'व्यतिरेके षष्ठी' 'बाहुल्ये कर्त्रा दि' रित्येवमादि। एतदपि पुरुषाभिप्राय-निरपेक्षं[3] वस्तुसन्निधिमात्रेण न स्वयं प्रवृत्तम्। ते तु तत्र तथा प्रयुञ्जत इति ततः तथा प्रतीतिर्भवति। एवमन्यत्रामपि तैः कथंचिद् प्रयुक्तास्तथैव प्रतीतिहेतवो भवन्ति। [4]तत्र पुरुषायत्तवृत्तीनां अवस्तुसंदर्शिनां विकल्पप्रबोधहेतूभूतानां शब्दानां यथाभ्यासं वाच्येषु प्रवृत्तिचिन्ता। तद्वशाद् वस्तुव्यवस्थानं[5] जाड्यख्यापनमेव केवलम्।**

**धर्मधर्म्यादिषु व्यावृत्तिदेन तथाकृतव्यवस्याः शब्दा न पुनर्वास्तवादेवति**

---

**भिर्विनियम्यते। तत्तथेति** तद्वचनं यथायोगं **वाचकं**।

तद्व्याचष्टे। (।) **न हीत्यादि**। **व्यतिरेके** वस्तुभेदे सति **षष्ठी**विभक्ति**र्बाहुल्ये** जसादयो बहुवचनप्रत्य[1]या भवन्तीति वैयाकरणानां व्यवस्थान**मेतदपि पुरुषाभिप्रायनिरपेक्षम्वस्तुसन्निधिमात्रेण न स्वयं प्रवृत्तं**। संकेतबलेनैव प्रवृत्तमिति यावत्। एतदेवाह। **ते तु तत्रे**त्यादि। ते तु वैयाकरणादयस्तत्र व्यतिरेके बाहुल्ये च **तथे**ति। षष्ठी बहुवचनं च यथासंकेतं **प्रयुञ्जत इति** कृत्वा **ततः** षष्ठ्यादेस्**तथा प्रतीति**र्भवति। व्यतिरेकादिप्रतीतिर[2]न्येषामपि भवति। तथाभूतव्यवहारोपलम्भात्। न तु तावता वस्तुबलेन व्यतिरेकबाहुल्ये च षष्ठ्यादीनां नियमः। **एवमन्यत्रापीति**। धर्मधर्मिणोरव्यतिरेकेपि एकत्वे च वस्तुनः कृत कत्वानित्यत्वादीनां **कथंचि**दिति भेदान्तरप्रतिक्षेपाप्रतिक्षेपलक्षणं धर्मधर्मिणोर्भेदमुपादाय। कृतकत्वादिषु व्यावृत्ति-भेदोपलक्षितनानात्वमुपा[3]दाय। यथाक्रमं षष्ठी बहुवचनादयस्ते प्रयोक्तृभिः **प्रयुक्तास्तथैव** यथायोगं **प्रतीतिहेतवो भवन्ति**। **तत्रै**वमिच्छामात्रनिबन्धनत्वे शब्दानां स्थिते सति। **पुरुषायत्तवृत्तीना**न्तदिच्छावशेन प्रवृत्तेर**वस्तुसन्दर्शिनां शब्देभ्यः** स्वलक्षणस्याप्रतिभासनात्। **यथाभ्यासं** यस्य यथा संकेताभ्यासस्तथा **विकल्प-प्रबोधो** विकल्पोदयस्त[4]स्य **हेतूनां**। संकेतानुरूपस्य श्रोतृसन्ताने विकल्पस्य कारणा-नामित्यर्थः। एवं **भूतानां शब्दानां वाच्ये**ष्वर्थेषु येय**म्प्रवृत्तिचिन्ता** व्यतिरेके षष्ठ्यादय इत्यादिका। नैयायिकादीनान्**तद्वशा**दिति शब्दवशाद् **वस्तुव्यवस्थानं**। व्यति-रिक्तस्य वस्तुनोङ्गीकरणं। गोर्गोत्वमिति यस्मात् षष्ठी तस्मात् सामान्यं व्यति-रिक्तमित्यादि। **जाड्यख्यापनं**[5] शब्दार्थव्यवस्थाऽनभिज्ञत्वख्यापनमेव **केवलं**।

**तथे**त्यादि परः। **तथाकृतव्यवस्था धर्मधर्म्यादिष्वि**ति धर्मे धर्मिणि च भेदा-न्तरप्रतिक्षेपाप्रतिक्षेपाभ्यां धर्मधर्मिशब्दाः कृतव्यवस्थाः। आदिशब्दाद् द्रव्यत्व-पार्थिवत्वानीत्यादिबहुवचनशब्दा **व्यावृत्तिभेदेन** कृतव्यवस्थाः। **न पुनर्वास्तवा-देव** धर्मधर्मिणोर्व्यतिरेकात् षष्ठीवस्तुभेदा[6]द् द्रव्यत्वादीनां धर्माणां परमार्थत एव भेदाद्बहुवचनमिति। **कुत एतत्** (।) **तथे**त्यादि प्रतिवचनं। **तथा व्यवहारा-**

**कुत एतत्। तथा व्यवहारायोगात्॥**

**न हि धर्मधर्मिणोः भेदे तद् रूपत्वे च शब्दानां यथावस्तु प्रवृत्तौ सामान्यतत्सम्बन्धसामानाधिकरण्य[1] विशेषविशेष्यभावा युज्यन्त इति वक्ष्यामः।[7] यस्य शब्दप्रवृत्तिभेदः सर्वत्र वस्तुकृत एवेष्टः। तस्य—** 441b

**दाराः षण्णगरीत्यादौ भेदाभेदव्यवस्थितेः।**
**खस्य स्वभावः खत्वं चेत्यत्र वा किं निबन्धनं॥६९॥**

**यदा[1] एकस्या अपि स्त्रिय दारा एकस्या अपि बालुकायाः सिकता इति व्यव-**

---

**योगादिति।** व्यवहारविषययोर्धर्मधर्मिणोर्वास्तवे व्यतिरेके। धर्माणां च परस्परं परपरमार्थतो भेदे सामान्यादिव्यवहारायोगात्।

एतदेवग्रहणकवाक्यं **न हीत्यादिना** व्याचष्टे। व्यवहारविषययोर्ध**र्मधर्मिणो**-र्वस्तुत्वे परस्परं[7] तत्त्वमन्यत्वं वाभ्युपगन्तव्यं वस्तुनः प्रकारान्तराभावादिति 60a द्वयमुपन्यस्तं। **भेदे तत्त्वरूपत्वे चे**ति पक्षद्वयेपि दोषोद्भावनार्थमन्यथा परेण व्यतिरेकवस्तुभेदादिति भेदपक्षेऽवलम्बिते तत्त्वपक्षोपन्यासो न प्रकरणानुरूपः स्यात्। तत्सम्बद्ध इति सामान्यतद्वतोः सम्बन्धः। **शब्दानाम्वा यथावस्तु प्रवृत्ता**वभ्युपगम्यमानायां **सामान्यादयो यु[1]ज्यन्ते। एतच्चान्तरमेव वक्ष्यामः। वस्तुकृत**मिति वस्तूनामेकानेकत्वादिकं **शब्दप्रवृत्तिभेद**मेकवचनबहुवचनादीनां प्रवृत्तिभेदं। दाराः शब्दो नित्यबहुवचनान्तः पुल्लिङ्गश्चेष्यते। यत्र यदैकस्त्रीविषयो **दारा** इति शब्दस्तदा भेदव्यवस्थितेः। **षण्णगरीति** बहूनान्नगराणामेकवचनेनाभिधानाद**भेदव्यवस्थितेः** किन्निबन्धनं (।) बाह्यं[2] नैव किंचित्। **आदिशब्दा**त्सिकता प्रासादमालेत्यादौ भेदाभेदव्यवस्थितेः। **खस्य स्वभावः खत्वं चेति** खस्य स्वभाव **इत्यत्र** व्यतिरेकषष्ठ्याः **किन्निबन्धनं।** अथ तत्त्वमित्यनेनोक्तेन किं यदि खस्य स्वभाव इत्यस्य वाक्यस्य खत्वमितीयन्तद्धितवृत्तिर्भवतीत्येतत्कथ्यते तन्नास्ति। न हि स्वभाव इत्यस्मिन्नर्थे भावप्रत्ययः किन्तर्हि भावार्थ[3]। न च तद्धितवृत्तिप्रदर्शनेन किञ्चित् प्रयोजनमस्त्यन्यतरेण व्यतिरेकप्रदर्शनात्।

अत्रैके वृत्तिवाक्याभ्यां सर्वो व्यवहारो व्याप्त इति तद्व्याप्तिप्रदर्शनार्थं द्वयमुक्तमिति।

अन्येऽन्यथा व्याचक्षते। खस्य स्वभाव इति व्यतिरेके किन्निबन्धनं। तथा खत्वमिति व्यतिरेकाभिधायिनो भावप्रत्ययस्य किन्निबन्धनमिति।

[1] Gzi-mthun-pa-ñid.

**हारनिबन्धनं[1] येन एवंभूतस्य बहुत्वं कथं भवति, शक्तिभेदादिति चेत्। सर्वत्र एकवचनविलोपः[2] नानाशक्तित्वात्। (एवं) यत्नश्च व्यर्थः स्यात्। वस्त्वभेदाद् अन्यत्र एकवचनमिति चेत्। इ[2]हापि स्यात्। तस्माद् अयं नियमो निर्वस्तुकः क्रियमाणः शब्दप्रयोगे[3] इच्छास्वातंत्र्यं ख्यापयति। षण्णगरीति कथं[3] बहुषु एकवचनं स्यात्। न हि नगराण्येव किंचित्। कुतस्तेषां समाहार एव। प्रासादपुरुषा-दीनां विजातीया[4]नां अनारम्भात्। तेषां समस्तानां विश्लिष्टानां द्रव्यं[4] असंयोगाच्च।**

---

**यदेत्यादिना** व्याचष्टे[4]। यदा यस्मिन् काले। यच्छब्दमन्ये पठन्ति यस्मा-दित्यर्थः। **येनैवम्भवतीति** दारा इत्यादि बहुवचनम्भवति। एकत्वादेकवचन-मेव प्राप्नोतीति भावः। **एकस्या अपि स्त्रियः सिकतानां च** बह्व्यः शक्तयस्ततः **शक्तिभेदो** बहुवचनकारणमिति। **सर्वत्रेति** यत्राप्येकवचनमिष्टम्वृक्ष इत्यादौ। एकशक्तेरर्थस्याभावात्। सर्वस्य ना[5]**ना शक्तित्वात्। एवं** सत्ये**कस्मिन्नेकवचन**[5]-मित्ययं **यत्नश्च व्यर्थः स्यात्**। सत्यपि शक्तिभेदे **वस्त्वभेदात्**। शक्त्या-श्रयस्याभेदात्। अन्यत्रैकवचनविषयेर्थे वृक्षः पट इत्यादावे**कवचनमिति चेत्। इहापि** दारादावेकवचनमेकस्याः स्त्रिया वस्त्वभेदात्। यत एवं न वस्त्वशक्त्या-श्रयो वा शब्दप्रवृत्तिभेदः। **तस्मादयं** श[6]ब्दप्रवृत्ति**नियमो निर्वस्तुको** बाह्यवस्त्व-नाश्रयः **क्रियमाणः** पुरुषे**च्छायाः स्वातन्त्र्यं शब्दप्रयोगे ख्यापयति**।

षण्णां नगराणां समाहारः क्रियात्मको गुणात्मको वा। एकोस्ति तत एक-वचनमिति चेदाह। **न हि नगराण्येव किंचिदिति** नगरावयविद्रव्यस्यानभ्युपगमात् 60b **कुतस्ते**षान्नगराणां **समाहारः** क्रियात्मको गुणात्मको वा[7] यत एवमभिधीयेत क्रिया-गुणयोर्द्रव्याश्रितत्वात्। किं पुनर्द्रव्यमित्याह। **प्रासादेत्यादि**। गृहादिसमुदायो नगरं। **विजातीयानां** च प्रासादीदानां द्रव्या**रम्भा**नभ्युपगमात् कुतस्तत्समुदायः प्रासादादिसमुदायो नगरं द्रव्यं स्यात्। यावता प्रासादतोरणपुरुषादीनां समुदायो नगरमिष्यते। **तेषां** प्रासादादीनां समस्ताना**मसंयोगाच्च** कारणान्न[1]गरन्**द्रव्यं**। संयोगसहायानां द्रव्याणां द्रव्यारम्भकत्वमिष्यते। **न** प्रासादपुरुषकुड्यादीनां विश्लिष्टानां **संयोगोस्ति**। येन प्रासादादिजन्यं नगरन्द्रव्यं स्यात्।

स्यान्मतं (।) यद्यपि साकल्येन प्रासादादीनां नास्ति संयोगस्तथापि येषां तावत् प्रासादपुरुषादीनां परस्परं संयोगस्तत्संयोगात्मकं नगरम्भविष्यत्येवमपि

---

[1] Ḥdogs-par. 2. Ñams-pa-yin-te. [3] Ji-ltar.
[4] Spyi-lta-zig-rjas. pa. la. yin. te.
[5] Pāṇini 1: 4: 22.

**न संयोगः। प्रासादः स्वयमेव संयोगस्वभावः परेणासंयोगाच्च। तत एव संख्या-[5]भावः, तत्संयोगेन पुरुषैश्च विशिष्टा सत्ता हि नगरमिति चेत्, किमस्या निरतिशयाया[1] विशेषणम्। सत्तायाश्चैकत्वात्। नगरबहुत्वेऽपि नगराणीति बहुवचनं[6] न स्यात्। द्वयस्य परस्परसहिततेति चेत्। अनुपकार्योपकारयोः[2]क**

---

वस्तुत्वं नगरस्यासिद्धं संयो[2]गस्य गुणपदार्थत्वादित्यत आह। **न संयोग** इत्यादि। न संयोगस्वभावन्नगरं। तथा काष्ठेष्टकादीनाम्विजातीयानां कार्यद्रव्यानारम्भात् प्रासादोपि न द्रव्यात्मकः किन्तु **संयोगस्वभाव** इष्यते (।) संयोगश्च गुणो निर्गुणाश्च गुणा इति कुतः प्रासादस्य संयोगो येन तत्संयोगात्मकं नगरं स्यात्।

एतदेवाह। **प्रासादस्ये**त्यादि। **परेणे**[3]त्यर्थान्तरेणा**संयोगाच्च** न संयोगो नगरं। **च**कारेणानन्तरनिर्दिष्टात् प्रासादादीनां विश्लिष्टानामसंयोगाच्च न संयोगो नगरमित्येतत् समुच्चीयते। तदेवं प्रासादादीनामुभयथा संयोगाभावेन। नगरस्य संयोगस्वभावता निरस्ता।

प्रासादादीनां या संख्या तदात्मकं नगरम्भविष्यतीति चेदाह। **तत एव संख्याभाव** इति। यस्मात् सं[4]योगात्मकप्रासादस्तत एव कारणात् प्रासादस्य संख्याया अभावो निर्गुणत्वाद् गुणानां। संख्यापि हि गुणस्वभावा। स चासौ संयोगश्च तत्संयोगः। प्रासादात्मकः संयोग इत्यर्थः। **तत्संयोगेन पुरुषैश्च** विशिष्टा या **सत्ता** सा **नगरमिति चेत्**। **किमस्याः सत्ताया एकत्वा**न्नित्यत्वाच्च **निरतिशयाया विशेषणं**। न हि प्रासादपुरुषादय[5]स्सत्तां विशिषन्ति। अनाधेयातिशयत्वात्। तस्मात् सत्ता निर्विशेषणा। तस्या नगरत्वे सर्वत्र नगरत्वं स्यादित्यभिप्रायः। **सत्तायाश्चैकत्वा**दिति। द्रव्यगुणकर्मस्वेकैव सत्ता व्यापिनी। **नगरबहुत्वेपि** नगरव्यवस्थाश्रयाणां प्रासादादिसमुदायानां बहुत्वेपीत्यर्थः। अन्यथा सत्तात्मके नगरे प्रकृते नगरबहुत्वं कथं स्यात्। **द्वय**[6]स्येति प्रासादपुरुषादेः सत्तायाश्च या **परस्परसहितता** सा **नगरमिति चेत्**। एवं हि सति न सर्वत्र नगरबुद्धिः। प्रासादादीनां सर्वत्राभावात्। प्रासादादिबहुत्वाद् बहुवचनं च सिद्धमिति परो मन्यते।

उत्तरमाह। **अनुपकार्ये**त्यादि। **अनुपकार्योपकारकयोः** सत्ताप्रासादयोः **कस्सहायोभावः**(।) तथा हि द्विविधः स[7]हकारार्थः परस्परातिशयाधानेन सन्ताने 61a विशिष्टक्षणोत्पादनलक्षणः। पूर्वस्वहेतोरेव समर्थानामुत्पन्नानामेककार्यक्रिया-

---

[1] Bogs-dbyaṅ-du-med-pa. [2] Phan-par-bya-ba-dan-phan-par-byed-pa-po ma-yin-pa.dag-la.=**उपकार्यानुपकारकयोः**

442a **सहायीभावः। पुरुषसंयोगसत्तानां बहुत्वात् कथं नगरमिति[7] एकवचनं स्यात्। तथाभूतानां क्वचिदर्थे ऽभिन्ना शक्तिः सा निमित्तमिति चेत्। न। शक्तेर्वस्तुस्वरूपाव्यतिरेकात्[1]।**

**अथ[1] व्यतिरिक्ताया अपि अनुपकारोऽपारतंत्र्यात्। शक्तेरुपकारे वा शक्त्युपकारिण्याः शक्तेरपि व्यतिरेकेऽनवस्थानात् अप्रतिपत्तिः[2]। तदव्यतिरेके वा आद्यायां प्रसंग इति यत्किञ्चिदेतत्[3]। खस्य स्वभावः खत्वमिति व्यतिरेकाश्रया**

---

लक्षणश्च। न तावत्पूर्वः सत्ताया अनाधेयातिशयत्वात्। नापि द्वितीयो यस्माद् यथा सत्ता केवला नगरबुद्धिजननं प्रत्यसमर्था तथा प्रासादादिसहितापि सामर्थ्ये वा केवलापि जनयेत्। यदि च द्वयस्य परस्पर[1]सहितता नगरं। तदैकमपि नगरमनेकात्मकं प्रासादाद्यात्मकत्वात्। ततः **पुरुषसंयोगसत्तानाम्बहुत्वात्। नगरमित्येकवचनं स्यात्**। संयोगशब्देन प्रासादात्मकः संयोग उक्तः। **तथाभूताना**मिति परस्परसहितानां पुरुषसंयोगसत्तानां **क्वचिदर्थ** इति नगरमिति विज्ञाने। शब्दे च निष्पाद्ये। **अभिन्नै**का **शक्तिरस्ति**।[2] सेत्यभिन्ना शक्ति**र्निमित्त**मेकवचनस्ये**ति चेत्**। **न**। किं कारणं (।) **शक्तेर्वस्तु स्वरूपाव्यतिरेकात्**। पुरुषादिभ्यो वस्तुरूपेभ्योऽव्यतिरेकात्। तद्वदेवानेकत्वमिति कुतस्तदाश्रयमेकवचनं। वस्तुस्वरूपाद् व्यतिरेके वा शक्तेरभ्युपम्यमगाने पुरुषसंयोगसत्ताभिरनुपकार्यस्य शक्तिरूपस्य पुरुषादिपारतन्त्र्यन्न स्यात्। ततश्च पुरुषादी[3]नां शक्तिरिति सम्बन्धो न स्यादिति भावः।

**अथ व्यतिरिक्ताया अपि** शक्तेः पुरुषादिपारतन्त्र्यसिद्ध्यर्थं पुरुषादिकृत **उपकार** इष्यते। **तदा शक्तेरुपकारे** वा पुरुषादिकृते इष्यमाणे। यया शक्त्या पुरुषादयः प्रथमं शक्तिमुपकुर्वते। तस्याः प्रथमश**क्त्युपकारिण्या** अपि शक्ते **शक्तेर्व्यतिरेके-नवस्था** स्याद**व्यतिरेके वा**। **आद्याया**म[4]**प्ये**कवचननिबन्धनत्वेनेष्टायां शक्ताव व्यतिरेक**प्रसंगः**। अव्यतिरेके च वस्तुवदेव बाहुल्यमिति **तदवस्थो बहुषु बहुवचन**[8] प्रसंग इति **यत्किञ्चिदे**तत्(।)शक्तिपरिकल्पने **खस्य स्वभाव** इति **व्यतिरेकाश्रया षष्ठी** न स्यात्। षष्ठीकारणत्वाद् भावप्रत्यययोप्युपचारात् षष्ठीशब्देनोक्तः। तेनायमपरोर्थः **खत्व**मिति व्यतिरेका[5]श्रया तद्धितोत्पत्ति**र्न स्यादिति** खस्य स्वभावः खत्वमित्यनया व्युत्पत्त्या भावप्रत्ययस्योत्पत्तेर्व्यतिरेकाश्रयत्वं।

अथवा यथायोगं सम्बन्धो ग्रन्थच्छेदश्च कार्यः (।) **खत्वमिति व्यतिरेकाश्रया**

---

[1] Bam-po-gsum-pa.=**तृतीयमाह्निकम्**
[2] Rtogs-pa-med.
[3] De-ni-gyi-ro.
[4] Pāṇini 1: 4: 21.

**षष्ठी च न स्यात्, न तत्र सामान्यम्। नापि विभुत्वादयो गुणाः तथोच्यते। अर्थान्तरस्य तत्स्वभाव[3]त्वायोगात्। तेषां च निःस्वभावत्व-प्रसंगात्। तस्यापि अर्थान्तरस्वभावत्वमिति चेत् अतिप्रसंगः स्यात्। तथाऽपि अप्रतिपत्तिः।**

**एवं षण्णां पदार्थानां षट्पदार्थवर्गादिष्व[4]पि वाच्याः। न हि तत्र सामान्यं**

---

**न स्यात्** तद्धितोत्पत्तिरित्यध्याहारः। खस्य स्वभाव इति षष्ठी न स्यादिति। न हि खशब्दवाच्याद् अर्थादन्यः स्वभावोस्ति भावो वा। यो यथाक्र[6]मं व्यतिरेक-षष्ठ्यास्तद्धितस्य वा निबन्धनं स्यात्। खत्वं नाम सामान्यमस्ति तद्व्यतिरेक-निबन्धनमिति चेदाह। **न तत्रे**त्यादि। एकात्मकत्वात् खस्य नास्मिन् खत्व**सामान्यं** (।) यद्यपि सत्त्वं द्रव्यत्वं चाकाशेस्ति। तथापि न तत् खस्य स्वभावः। घटादि-साधारणत्वात्। नापि सत्त्वद्रव्यत्वे खत्वमित्यत्र भावप्रत्ययस्य निबन्धनं। तयोः श (?) शब्द[7]प्रत्ययाकारणत्वात्। स्वानुरूपज्ञानाभिधाननिबन्धनस्वभावप्रत्ययस्य कारणमिष्टं। **नापि विभुत्वादयो गुणा** इति। आदिशब्दादेकत्वपरत्वादिपरिग्रहः। तथोच्यत इति खस्य स्वभाव इति। द्रव्या**दर्थान्तरस्य** विभुत्वादेर्गुणस्य **तत्स्वभाव-त्वायोगाद्** आकाशस्वभावत्वायोगात्। न ह्यर्थान्तरमर्थान्तरस्य स्वभावो युक्तः। यदि च विभुत्वादय आकाश[1]स्वभावाः। तदा **तेषां च** विभुत्वादीनामाकाशस्वभावत्वे **निःस्वभावत्वप्रसंगात्**। तथा हि यस्तेषां गुणस्वभावः सत्याकाशमेव जातं न चापरस्वभावोस्तीति निःस्वभावता स्यात्। तेषां च निःस्वभावत्वे आकाशस्य व्यतिरिक्तः स्वभावो न स्यादिति भावः। विभुत्वादे**रप्यर्थान्तरस्वभावत्वमिति** चेदाह। **तस्यापी**त्यादि। **तस्ये**ति विभुत्वादे**रर्थान्तरं स्वभा**[2]वोऽस्येति विग्रहः। **अतिप्रसंग** इति यत्तदर्थान्तरं विभत्वादेः स्वभावत्वेनेष्टन्तस्याप्यर्थान्तरस्व-भावत्वेन भाव्यं। अन्यथा तस्यापि विभुत्वाव्यतिरेकात् तद्वदेव निःस्वभावता स्यात्। **तथा** चापरापरस्वभावपरिमार्गणेनानवस्थानादेकस्यापि प्रतिष्ठितस्व-भावस्याभावात्। आद्यस्याकाशस्वभावस्या**प्रतिपत्ति**स्ततश्च स एव व्यतिरेकाभा[3]व इत्यभिप्रायः। 61b

**एवं** "द्रव्यगुणकर्मसामान्यविशेषसमवायानां"[1]**षण्णां पदार्थानां वर्गः। आदि-**शब्दात् प्रासादमालेत्यादयो **वाच्याः**।

कथमसति व्यतिरेके षष्ठीति। **न हि तत्र** षट्पदार्थेषु **सामान्यं सम्भवति**।

---

[1] Vaiśeṣikasūtra 1: 4.

**संख्या संयोगो वा सम्भवति।**

**कथमिदानीं भेदाभावे खस्य स्वभाव इति न पुनः खमित्येव। खस्य अर्थान्तर-साधारणरूपापरामर्शेन खमिति[5] शब्दप्रवृत्तिनिबन्धनं रूपं, तथा जिज्ञासाया एव-मुच्यते। न तु सर्वव्यावृत्तरूपानाभिधानात्।**

**न तदेव रूपं बुद्धौ समर्प्यते। अतीन्द्रियत्वप्रसंगात्। केवलं अयमेवमभिप्रायः शब्देन श्रोतरि विकल्पप्रतिबिम्बाध्यस्तं असंसृष्टतत्स्वभावं अर्पयति।**

---

यद्वर्गशब्देनोच्यते। द्रव्यगुणकर्मस्वेव सामान्याभ्युपगमात्। तथा **संख्या संयोगो वा न सम्भवति** तयोर्गुणपदार्थत्वेन द्र[4]व्य एव भावात्।

**कथमि**त्यादि परः। **इदानी**मित्यर्थान्तरस्वभावानभ्युपगमे खशब्दवाच्यस्य भावशब्दवाच्यस्य चार्थस्यासत्यनिश्चये कथं **स्वभाव इति** भेदेन निर्देशः। **न पुनः खमित्येव**। भेदनिबन्धाभावादभेदेनैव निर्देशो न्याय्य इत्यर्थः।

**खस्ये**त्यादिना परिहरति। खस्येति खशब्दवाच्यस्यार्थस्या**र्थान्तर**स्येति पृथि-[5]व्यादेर्यत्**साधारणं रूपम**नुपात्तविशेषान्तरस्या**परामर्शेन**। त्यागेन। **खशब्द-प्रवृत्तिनिबन्धनं रूप**मन्यद्रव्यासाधारणं **तथा जिज्ञासाया** अत्रार्थान्तरासंसर्गि. . . . . . . . **मेवमुच्यते** खस्य स्वभाव इति। तथा खत्वमिति। यथा गम्येत खस्यायं स्वभावो नान्यस्येति।

अनेन भेदान्तरप्रतिक्षेपेणैक**व्यावृत्तरूपानभिधाना**दन्यदेव व्यतिरेकाभिधाननि-मित्त[6]मुक्तं। तेन घटस्याभाव इत्यादिव्यपदेशः सिद्धो भवति।

अन्ये पुनराहुः। खस्य स्वभावं प्रतिपादयन् स्वभावशब्दो स्वभावव्यावृत्ति-मात्रेण प्रतिपादयति न तु स्वभावान्तराप्रतिक्षेपेण। खशब्दस्तु तमेव रूपान्तरा-प्रतिक्षेपेण। ततः स्वभावान्तरप्रतिक्षेपाप्रतिक्षेपलक्षणेन भेदलेशेन खस्यायं स्वभावः

62a ख(त्व)मि[7]ति भेदेन निर्दिश्यत इति तदेतन्नातिश्लिष्टं भेदान्तरप्रतिक्षेपाप्रतिपत्तेः।

**अर्थान्तरसाधारणरूपापरामर्शेन** खश**ब्दप्रवृत्तिनिबन्धनं** रूपमे**वमुच्यत** इति ब्रुवता स्वलक्षणमेव वाच्यमुक्तमिति मत्वा परो ब्रूते इत्यादि। **न तु सर्वं** इत्यादि।

**ने**त्यादि सिद्धान्तवादी। यत् **सर्व**स्माद् **व्यावृत्तं** स्वलक्षणात्मकन्**तदेव रूपं** शब्दोत्थायां **बुद्धौ** शब्दैः **समर्प्यते**। **नेति** सम्बन्धः। कस्मा[1]त् तस्य स्वलक्षणस्येन्द्रिय-बुद्धाविव। शाब्दे विज्ञाने प्रत्यवभासने सत्य**मतीन्द्रियत्वप्रसङ्गा**त्। प्रत्यक्षत्वप्रस-ङ्गात्। किन्तर्हि शब्देन क्रियत इति चेदाह। **केवल**मित्यादि। **अयमि**ति प्रतिपादकः। दृश्यविकल्पयोरेकत्वाध्यवसायविप्रलब्धस्तथाभूतमसाधारणमर्थं प्रत्याययिष्यामीत्ये-**वमभिप्रायः शब्देन** करणभूतेन **श्रोतरि** यो **विकल्प**स्तस्य **प्रतिबिम्बबाह्य**[2]तयाऽ**ध्य-**

**यदाह (।) "अदृष्टार्थे हि[7] अर्थविकल्पमात्रं" इति।** 442b

**नैवं प्रतिपाद्यप्रतिपादकाभ्यां स्वलक्षणं प्रतिपन्नं प्रतिपादितं वा भवति। स्वर्गादिश्रवणेऽपि तदनुभविनामिव[1] प्रतिभासाभेदः। तस्मादयं अप्रतिपद्यमानोऽपि भावस्वभावस्तथाभूत एव विकल्पप्रतिबिम्बे तदध्यवसायी सन्तुष्यति। तथाभूतत्वादेव शब्दार्थप्रतीतेः,[2] तेनैतदेवमुच्यते (शब्दः।) स्वरूपमाहेति। न पुनः स्वरूपप्रतिभासस्यैव विज्ञानस्य जननात्।**

**कथमिदानीं एकान्तव्यावृत्तानां भावानां सामान्यमिति; तेषां असंसर्गाद् अन्यस्य चाभावाद् इति चेत्।**

**उक्तं कथं सामान्यमिति। असंसृष्टानां एकेनासंसर्गः। स एव तद्व्यतिरेकिणां**

---

**स्तमाकारमर्पयति** (।) किं भूत**मसंसृष्टतत्स्वभावं**। अगृहीतवस्तुरूपं। आचार्यदि ङ् ना ग स्याप्येतदभिमतमित्याह। **यदाहे**त्यादि। अदृष्टार्थे स्वर्गादिशब्दे उच्चरिते**र्थविकल्पमात्रं** श्रोतुर्भवत्यध्यवसितबाह्यार्थस्वभावो विकल्पो भवति न तु बाह्यस्वरूपग्राहकं।

अनेन चा चा र्ये णा पि विध्यर्थः शब्दार्थोऽभिप्रेत इति दर्शयति। **नैवं** विकल्पप्रति[3]बिम्बे शब्देन श्रोतरि जनिते **प्रतिपाद्यप्रतिपादकाभ्यां** यथासंख्यं **स्वलक्षणं प्रतिपन्नं प्रतिपादितं वा भवति**।

यदि हि शब्देन स्वलक्षणं प्रतिपाद्यते। तदा **स्वर्गादिश**ब्द**श्रवणेपि**। **तदनुभविनामिव**। स्वर्गादिप्रत्यक्षवेदिनामिव **प्रतिभासाभेदः** स्यात्। श्रोतुरपि स्वर्गादिस्वलक्षणाकारप्रतिपत्तिः स्यात्। यतश्च न शब्दात् स्वलक्षणप्रतिपत्ति**स्त**[4]**स्मादयं** श्रोता शब्दा**दप्रतिपद्यमानोपि भावस्वभावस्तथाभूत** एवासंसृष्टवस्तुस्वभाव एव **विकल्पप्रतिबिम्बे तदध्यवसायी** स्वलक्षणाध्यवसायी स्वलक्षणमेव मया प्रतिपन्नमिति **सन्तुष्यति** (।) किं कारणं (।) **तथा भूतत्वादेव**। स्वलक्षणस्याग्रहेप्यध्यवसितस्वलक्षणरूपत्वादेव शब्दार्थप्रतिपत्तेः। यतश्च स्वलक्षणाध्यवसायेन **शब्दार्थस्य प्रतीतिस्ते**[5]**नैतदेवमुच्यते** शब्दः **स्वरूपमाहे**ति। अर्थान्तरसाधारणरूपापरामर्शेन खशब्दप्रवृत्तिनिबन्धमसाधारणं रूपमुच्यत इति वचनात्। **न पुनः स्वरूपप्रतिभासस्यैव विज्ञानस्य जननात्**।

तस्मात् स्थितमेतद् विध्यर्थः शब्दार्थोलीकत्वात् परमताद् भेद इति।

**कथमि**त्यादि परः। **एकान्तव्यावृत्तं** रूपं येषामिति विग्रहः। **तेषाम्भावानामसंसर्गाद**[6]**न्यस्य चे**ति भावेभ्यो व्यतिरिक्तस्य सामान्यस्य।

**उक्त**मिति सिद्धान्तवादी। कीदृशमुक्तमित्याह। **असंसृष्टानां** परस्परव्यावृत्ता-

**समानतेत्युक्तम्** ।।

**अपि च।**

**(पररूपं स्वरूपेण यया संव्रियते धिया।**
**एकार्थप्रतिभासिन्या भावानाश्रित्य भेदिनः) ॥७०॥**

**तया संवृतनानार्थाः संवृत्या भेदिनः स्वयम्।**
**अभेदिन इवाभान्ति भावा रूपेण केनचित् ॥७१॥**

**तस्या अभिप्रायवशात् सामान्यं सत् प्रकीर्त्तितम्।**
**(तदसत्परमार्थेन यथा संकल्पितं तथा) ॥७२॥**

---

नामेकेन विजातीयेनासंसर्गः। यथा गोव्यक्तीनामेकेनागोस्वभावेनासंसर्गः **स एवासंसर्गः। तद्व्यतिरेकिणान्त**स्मादगोस्वभावाद् व्यावृत्तानां गोभेदानां **समानता** 62b गोत्वं। एवमन्यदपि सामान्यं बोद्धव्यं।[7]

एतदुक्तम्भवति। समानामिति कर्त्तरि षष्ठी तेन समानानाम्भावः सामान्यमिति विजातीयव्यावृत्ताः समानाकारोत्पन्ना भावाः सामान्यमित्यर्थः। अस्यैव च सामान्यस्य लिङ्गत्वं लिङ्गित्वन्तत्सम्बन्धश्च वस्तुत्वात्। अर्थक्रियाकारित्वाच्च प्रवृत्तिविषयत्वं विकल्पविषयत्वं च यथाऽध्यवसायं न तु ज्ञानाकारस्य। एतद्विपरीतत्वात् ।।[1]

तदेवं समारोपपक्षे परोक्षं दूषणम्परिहृत्यान्यव्यावृत्तिपक्षे परोक्षं दूषणमन्यव्यावृत्त्यनभ्युपगमादेव निरस्यान्यव्यावृत्ता एव भावा एकत्वेनाध्यवसीयमानाः सामान्यमिति च प्रतिपाद्य बुद्ध्याकारेपि सामान्ये परोक्तं दूषणमपनेतुमाह। **अपि चे**त्यादि। **भावानाश्रित्य भेदिन** इति व्यावृत्तानि स्वलक्षणम्वाश्रित्य धीरे**कार्थप्रतिभासि**[2]**न्यु**त्पद्यते। **यया स्वरूपेण** स्वाकारेणैकेन रूपेण। **पररूपं**। परस्परव्यावृत्तं वलक्षणं **सम्व्रियते** प्रच्छाद्यते। दिति ।धि। किम्विशिष्टया या (।) **संवृत्या**। संव्रियतेऽनया स्वलक्षणमिति कृत्वा। **सम्वृतनानार्था**(:) स्थगितनानार्थाः **स्वयम्भेदिनो**पि **केनचिद् रूपेण** विजातीयव्यावृत्त्युपकल्पितेन गोत्वादिरूपेणा**भेदिन इवाभान्ति** संसृष्ट इव। तेन (।)

"बुद्ध्या[3]कारश्च बुद्धिस्थो नार्थबुद्ध्यन्तरानुगः।
नाभिप्रेतार्थकारी च सोपि वाच्यो न तत्वत" इत्यादि निरस्तं ।।

तस्माद् बु**द्धेरभिप्रायव**शात्। एकाकाराध्यारोपवशात् **सामान्यंस** केस्न**प्रकीर्तितं**। बुद्ध्यारोपित एवाकारः सामान्यमुक्तमिति यावत्। **यथा** तया **संक-**

**बुद्धिर्विकल्पिका तदन्यव्यतिरेकिणो भावानाश्रित्य उत्पन्ना[6] स्ववासना-**

---

**ल्पितमा**रोपितं **तथा तत्** सामान्य**मसत् परमार्थेन**।

ननु यद्यभिन्नः प्रतिभासोऽभ्युपगम्य[4]ते कथं सामान्यमसदित्युच्यते। न (।) व्यक्तिभ्यो भिन्नस्याभिमतस्याभेदेन प्रतिभासनात्। सर्वात्मना चाभेदे व्यक्तिवद-नन्वयादनुगतस्य प्रतीतिर्भ्रान्तिरेव। भेदाभेदे च तथैवोभयरूपतया प्रतिभासः स्यात् (।) न च यत्र प्रत्यये यदैव गौरिति प्रतिभासः तदैव तत्र गोत्वमस्येति प्रतिभासः।

अथ स्याद् (।) यदननुगमे यस्यानुगमस्तत्ततो भिन्नं य[5]था नीलादनीलं। शावलेयाननुगमे च गोत्वस्यानुगमो व्यक्त्यन्तरे (।) तस्मात् ततो भिन्नं शावलेया-भिन्नगोत्वग्राहकन्तर्हि प्रत्यक्षं भ्रान्तं स्याद् भिन्नस्यान्यप्रमाणगृहीतस्याभेदेन ग्रहणात्। न चैकस्य येनैव रूपेण भेदस्तेनैवाभेदो विरोधात्। नापि वस्तूनां विशेष-रूपतया भेदः। सामान्यरूपतयाऽभेदः। एवं हि विशेषाणामेकदेशा[6]दित्वं स्यान्न च स्यात्। सामान्यविशेषयोश्च प्रतिभासभेदो न स्यात् सर्वात्मनाऽभिन्नत्वाद्। भेदे वानुगतव्यावृत्तरूपयोः परस्परासंश्लेषेणैकान्तभिन्नत्वप्रसङ्गात्।

यदि च प्रतिव्यक्ति तदभिन्नन्तदेकं सामान्यमस्तीति कुतः। न च तत्र प्रथम-व्यक्तिदर्शनेऽगृहीतमपि द्वितीयादिव्यक्तौ स एवायमिति प्रतीतेरेकं[7] सामान्य- 63a मस्तीति युक्तं (।) स इति स्मरणांशस्यानुभूतसामान्यविषयाभावेनोत्पत्त्यसम्भ-वात्। ततश्च यथा प्रथमव्यक्तौ न गृहीतन्तथा द्वितीयादिव्यक्तावपि प्रत्येकं गृहीत-मिति कथं स एवायमिति ज्ञानस्योत्पत्तिः स्यात्। न च स इति स्मरणान्यथानु-पपत्त्या प्रथमव्यक्तौ निर्विकल्पकेनान्येन वा ज्ञानेन सामान्यग्रहणकल्पना युक्ताऽ-नुगत[1]रूपप्रतिभासाभावात्। नापि धर्मरूपतया तत्रास्य ग्रहणं युक्तमनुगतैक-रूपत्वात् सामान्यस्य। नापि पूर्वापरव्यक्तिसम्बन्धितयास्य प्रत्यभिज्ञाप्रत्यक्षेण ग्रहणमिति शक्यते वक्तुं। इदमेवेत्येवं प्रत्यक्षस्योत्पत्तिप्रसंगात्। पूर्वव्यक्तेरस-न्निहितत्वाच्च सन्निहितार्थनिश्चयलक्षणं च प्रत्यक्षमिष्यते।

तस्मादगोव्यावृत्तैकविशेषानुभवपूर्वक[2]मन्यस्मिन्नगोव्यावृत्तेऽनुभूयमाने सति स एवायमित्येकाकारस्य भ्रान्तस्य प्रत्ययस्य वासनासामर्थ्येनोत्पत्तेस्तदेवास्य निमित्तं कल्पयितुं युक्तन्नान्यद् (।) भ्रान्तत्वाच्च बुद्धेरयं सामान्याकारो व्यवस्थाप्यते न वाह्यस्य (।) यथाप्रतिभासं तु बाह्यानामेवार्थानां सामान्यमुच्यते।

**बुद्धिरि**त्यादिना कारिकार्थं व्याचष्टे। बुद्धि**र्विकल्पिके**त्यनेन सम्बन्धः। तेभ्यः[3] सजातीयेभ्योन्यस्तस्माद् व्यतिरेकः स येषामस्ति। ते **तदन्यव्यतिरेकिणः**। विजातीयव्यावृत्तानित्यर्थः। **स्ववासनाप्रकृतिं** विकल्प**वासनास्वभाव**म्भिन्नेष्वभि-

**स्वभावमनुविदधती। एषां भावानामभेदमध्यस्य[1] स्वयमेवाभिन्नाकारं तान् सृजन्ती मिश्रयन्ती संदर्शयति।**

443a **सा च एकसाध्यसाधनतयैव[7] अन्येभ्यो विवेकिनां भावानां विकल्पस्य वासना तस्याः। प्रकृतिः तदुद्भवा। सा चेयं एवंप्रतिभासमाना संवृतिः। अनया स्वरूपेण पररूपस्य संवरणात्। ते च संवृतभेदा भिन्नात्मानो[2]ऽपि केन चिद् रूपेणाभिन्ना इव प्रतिभान्ति।**

---

न्नप्रत्ययजननसामर्थ्यन्तदनु**विदधती**। अनुकुर्वती। एवं हि तया स्वकारणमनुकृतम्भवति (।) यदि भिन्नेष्वप्येकाकारोत्पद्यते। **एषा**मिति पदार्थानां। **अध्यस्ये**ति पदार्थेष्वारोप्य[4] भावानामेवैकं रूपमिति। **तान्** भावान् **सृजन्ती**। **अभिन्नानिव** कुर्वाणा **सन्दर्शयति**। एकरूपानिव दर्शयतीति यावद्।

ननु विकल्पस्यानुभूतार्थाहितवासनाबलोत्पत्ताविष्यमाणायां कथं सामान्याकारस्य विकल्पस्योत्पत्तिः सामान्यस्याननुभूतत्वादित्यत आह। **सा चे**त्यादि। एकं सदृशं साध्यं साधनञ्च येषाम्भावा**नां**। य[5]था घटादीनामेकमुदकादिधारणादि साध्यं। साधनं च मृत्पिण्डादि। ते **एकसाध्यसाधना**स्तद्भाव**स्तया**। करणभूतया। **अन्ये**भ्योतत्साध्यसाधनेभ्यो **विवेकिनां भावानां** सा प्रकृतिः स्वभावः भिन्नानामपि प्रकृत्या एकाकारविकल्पजननलक्षणः। तथाभूतस्य **विकल्पस्य** हेतुर्या **वासना**। तस्याश्च सा तादृशी **प्रकृति**र्यदेवं स्वरूपं पर[6]त्रारोपयन्ती। एषा बुद्धिः प्रतिभाति। व्यक्त्यभिन्नसामान्यग्राहिणी प्रतिभासत इति यावत्।

तेन यदुच्यते।

> "स्मार्त्तमेतदभेदेन विज्ञानमिति यो वदेत्।
> नूनम्बन्ध्यासुतेप्यस्ति तस्य स्मरणशक्यता (।।)"[3]

इति निरस्तं। भिन्नानामेवानुभूतानामेककार्यकर्त्तृत्वेन स्वविषयाभिन्नाकार-

63b प्रत्ययजनने सामर्थ्या[7]दनुभूतस्पष्टाकारस्यार्थस्य स्वविषयोस्पष्टस्मरणजननसामर्थ्यवत्। **तदुद्भवे**ति वर्णविकल्पवासनाया विवेकिभ्यः स्वभावेभ्यो यथासंख्यं साक्षात् पारम्पर्येण चोद्भवो यस्याः सा तथा। **सा चेय**मिति बुद्धिः **संवृति**रित्युच्यते। सम्व्रियतेऽ**नया** बुद्ध्या **स्वरूपेण** स्वप्रतिभासेन **पररूप**म्वस्तुरूपमिति करण[1]साधनं क्तिनं विधाय। **ते च** भावा**स्तये**ति बुद्ध्या। **संवृतभेदाः** प्रच्छादितनानात्वाः। **केनचिद् रूपेणे**ति विकल्पबुद्ध्यारोपितेन। **प्रतिभान्ति** विकल्पबुद्धौ।

---

[1] Mi-snaṅ-bar-byas-nas. [2] Bdag-ñid-kyis-tha-dad-kyaṅ.

[3] Ślokavārtika, **अनुमानपरि०** 160.

**तदेषां बुद्धिपरिर्वात्तनां भावानां आकारविशेषपरिग्रहाद् बहिरिव**[1] **परिस्फुरतां बुद्धिप्रतिभासं अनुसन्धानैः तेषामेव रूपं सामान्यमुच्यते ।।**

**कथमिदानीं अन्यापोहः सामान्यं इति चेत्। स एवान्यापोहः। तमेव गृह्णती**

---

**तदेषा**मित्यादि। **बुद्धिप्रतिभासं** विकल्पबुद्ध्याकारं। **अनुरुन्धानैः** पुरुषैस्तद्-**बुद्ध्युपस्थापित**मेकं **रूपं सामान्यमुच्यत** इत्यनेन सम्बन्धः। केषां सामान्यमुच्यते। **बुद्धिपरिव**[2]**र्त्तिनामेव**। **एषां** बुद्धिपरिर्वात्तनामिति सम्बन्धः। स्वलक्षणान्यनुभूय यथानुभवमसौ शुक्लो घटः कृष्णोन्यो वेत्येवं विकल्पबुद्धिष्वस्पष्टाः घटाकारास्ते बुद्धिपरिर्वात्तनो भावा ये **तेषा**मेव सामान्यं सम्बन्धि। न स्वलक्षणानां सामान्यबुद्धाव-प्रतिभासनादसम्बन्धित्वाच्च। बुद्धिपरिर्वात्तनामेव विशेषणं **बहिरिव परिस्फुरता-मि**[3]ति बहिरिव प्रतिभासमानानामित्यर्थः। बहिःस्फुरणे च कारणमाह। **आकार-विशेषपरिग्रहा**दिति (।)

बाह्यार्थविकल्पसंस्थानस्य स्पष्टस्यानुकाराद् बाह्याध्यवसाय इत्येके।

एतच्चायुक्तं। न हि सादृश्यनिमित्तो बाह्यत्वारोप इति निवेदितमेतत्। तस्मादाकारविशेषो घटाद्याकारस्तस्य परिग्रहोनुभवस्तस्माद् बहिरिव परिस्फु[4]रणं।

एतदुक्तम्भवति। घटाद्यनुभवाहितवासनासामर्थ्येन विकल्प उत्पद्यमानः स्वाकारं बाह्यघटाद्यभेदेनाध्यवस्यति न तु गृह्णाति (।) तेन शब्दविहितेर्थे क्वचित् संशयो भवत्यग्रहणात्। तत्र तु विकल्पः स्वहेतुत एव बाह्याभिन्नं स्वाकारम(ध्य)वस्यति। न तु सादृश्यात् सदृशस्यार्थस्याभावादग्रहणाच्च।

ननु बुद्धिपरिर्वात्तनामपि स्वरूपे[5] व्यतिरेकेण कोन्य एव आकारः प्रतिभासते यत्सामान्यं स्यात्।

सत्यं। तत्र तावत् केचिदाहुरेकज्ञानाव्यतिरेकादेकत्वन्तेषामिति। अन्ये त्वाहुः प्रत्येकन्तेषां स्वव्यक्त्यपेक्षया सामान्यरूपतेति (।) तदेतदुभयमप्ययुक्त-मेकप्रतिभासाभावात्। केवलमेकरूपतया तेषामध्यवसायात् परैः सामान्यमिष्ट-मिति तदभिप्रायादेव[6]मुच्यते। आ चा र्य स्य तु समाना इति प्रतिभासोभिप्रेतो नैक इति तथा च वक्ष्यति।

अथवा(।) अस्तु "प्रतिभासो धियाम्भिन्नः समाना इति तद्ग्रहणादि"-(१।१०६)ति। यदि बुद्धिपरिर्वात्तनामेव विकल्पबुद्धिसन्दर्शितं रूपं सामान्यन्तस्य च विधिरूपत्वात् **कथमिदानीमन्यापोहः सामान्य**मित्युच्यते।

**विकल्पानां प्रकृतिविभ्रमात् वस्तुग्राहिणीव प्रतिभाति। सा हि तद[3]न्यविवेकिषु भावेष्वेव भवन्ती विवेकविषयेति गम्यते।**

**ननु बाह्या विवेकिनः। न च तेषु विकल्पप्रवृत्तिः। कथं तेषु भवतीति। व्याख्यातार[4] एवं विवेचयन्ति न तु व्यवहर्त्तारः। ते तु स्वालम्बनमेव अर्थक्रियायोग्यं मन्यमानाः विकल्प्यार्थविकीकृत्य प्रवर्त्तन्ते। तदभिप्राय[5]वशाद् एवमुच्यते।**

---

64a **स एवेति** सिद्धान्तवादी। स एव विकल्पबुद्धि[7]व्यवस्थापितः प्रतिभासमानोऽ**न्यापोह** उच्यते। अन्यविविक्तपदार्थदर्शनद्वारायातत्वात्।

यदि विकल्पाकारः सामान्यं कथं बाह्यानां समानरूपतया प्रतीतिः। यदाह(।)

"अथ निर्विषया एता वासनामात्रभावतः।
प्रतिपत्तिः प्रवृत्तिश्च बाह्यार्थेषु कथम्भवेद्" (।)

इत्यत आह। **तमे**वेत्यादि। तमिति विकल्पबुद्धिप्रतिभासं **गृह्णती** सा विकल्पिका बु[1]द्धि**र्वस्तुग्राहिणीव प्रतिभाति**। कस्माद् **विकल्पानां प्रकृतिविभ्रमात्** स्वभावेनैव स्वाकाराभेदेनार्थग्रहणविभ्रमात्।

कथन्तर्ह्यपोहविषयेत्युच्यत इत्याह। **सा हि** विकल्पिका बुद्धिरध्यवसायवशात् **तदन्यविवेकिषु भावेषु** स्वलक्षणेषु **भवन्ती विवेकविषयेति गम्यते**। कार्यतो न तु विवेकस्वभावविषयीकरणात्।

परस्त्वविदिताभि[2]प्रायः प्राह। **नन्वि**त्यादि। सामान्याद् **बाह्याः** स्वलक्षणानीत्यर्थः। एवं हि बाह्याध्यात्मिकानां संग्रहः कृतो भवति। **विवेकिनः** परस्परविलक्षणा (।) **न च तेष्वि**ति स्वलक्षेणेषु (।) **कथन्तेषु विकल्पबुद्धिर्भव**तीत्युच्यते। **व्याख्यातार** इत्यादिना परिहरति। ते हि यथावस्थितम्वस्तु व्यवस्थापयन्त **एवम्विवेचयन्ति**। अन्यो विकल्पबुद्धिप्रतिभासो न्यत्स्व[3]लक्षणमिति। **न व्यवहर्त्तार** एवं विवेचयन्ति। **ते तु** व्यवहर्त्तारः **स्वालम्बनमेवे**ति विकल्पप्रतिभासमे**वार्थक्रियायोग्यं** बाह्यस्वलक्षणरूपम्**मन्यमानाः**। एतदेव स्पष्टयति (।) दृश्योर्थः स्वलक्षणम्**विकल्प्योर्थः** सामान्यप्रतिभासस्ता**वेकीकृत्य** स्वलक्षणमेवेदम्विकल्पबुद्ध्या विषयीक्रियते शब्देन चोद्यत इत्येवमधिमुच्यार्थक्रि[4]याकारिण्यर्थे **प्रवर्त्तन्ते**। **तदभिप्रायवशाद्** व्यवहर्त्तृणामभिप्रायवशा**देवमुच्यते** विवेकिषु भावेषु विकल्पबुद्धिर्भवतीति दृश्यविकल्प्यावेकीकृत्य प्रवृत्तेरिति वदता (।) **न** स्वाकारे बाह्यारोप इत्युक्तम्भवत्यन्यथा स्वाकार एव प्रवृत्तिप्रसङ्गात्। मरीचिकायां जलारोपादिव। नापि बाह्ये स्वाकारारोपः। आरोप्यमाणफलार्थित्वेनैव प्र[5]वृत्तिप्रसंगात्। जलार्थिन इव जलभ्रान्तौ।

**तथा तत्कारितयाऽतत्कारिभ्यो भिन्नान् शब्देन प्रतिपादयन्तीत्युच्यते। तत्वचिन्तकास्तु प्रतिभासभेदादिभ्यो नाभेद[6]मनुसन्धत्ते।**

**यदि प्रतिपत्त्रभिप्रायोऽनुविधीयते, तदाऽन्यापोहोऽपि सामान्यं (मा) भूत्।**

---

• ननु दृश्यविल्पयोरेकीकरणं किमुच्यते। यदि दृश्यस्य विकल्प्यादभेदः बाह्येर्थे प्रवृत्तिर्न स्यात्। विकल्प्यस्य दृश्यादभेदः स्वलक्षणं शब्दार्थः स्यात्। न च दृश्यविकल्प्ययोरेकीकरणं प्रत्यक्षेण तस्य विकल्प्याविषयत्वात् (।) नापि विकल्पेन तस्य दृश्याविषयत्वात्। अतीतादौ च दृश्याभा[6]वात् कथन्तयोरेकीकरणं।

अत्रोच्यते। अर्थानुभवे सति तत्संस्कारप्रबोधेन तदाकार उत्पद्यमानो विकल्पः स्वाकारम्बाह्याभिन्नमध्यवस्यति न त्वभिन्नं करोति। तेन विकल्पविषयस्य दृश्यात्मतयाध्यवसायाद् दृश्यविकल्पयोरेकीकरणमुच्यते (।) दर्शनार्हो दृश्यः शक्यते **वा** द्रष्टुमिति विकल्पकदर्शनस्यापि[7] यो विषयः स दृश्यस्तेनानागतस्याप्यर्थस्यागमोपदर्शितस्य दृश्यत्वं सिद्धन्तथाऽभावस्यापि। अत एवाभावः प्रत्ययः स्वाकारम्भावरूपमपि पदार्थाभावाव्यतिरेकेणाध्यस्य प्रत्येतीत्यभावविषय उच्यते न त्वभावं गृह्णाति (।) सर्वविकल्पानां निर्विषयत्वात्। 64b

**तत्कारितयेत्यादि**। न केवलन्तदभिप्रायवशाद् विकल्पबुद्धिः स्वलक्षणेषु विवेकेषु भवतीत्युच्यते। **तथा तत्कारितया** करणेना**तत्कारिभ्यो भिन्ना**नर्था**न्** **शब्देन** वक्तारः **प्रतिपादयन्तीत्युच्यते**। व्याख्यातारोपि दृश्यविकल्पयोरैक्यं किमिति **न** प्रतिपद्यन्त इति चेदाह। **प्रतिभासभेदादिभ्य** इति दृश्यस्य हि स्पष्टः प्रतिभासो न विकल्पस्य। विकल्पानुबद्धस्य स्पष्टत्वायोगात्। आदिशब्दान्निरुद्धेपि दृश्ये विकल्पस्यानिरोधात्।[2] अर्थक्रियायाः करणादकरणाच्च। **तत्त्वचिन्तका** न्यायानुसारिणः व्याख्यातारः (।) शेषषष्ठी चेयन्तत्त्वस्य चिन्तका इति। तत्त्वस्य ते चिन्तका नातत्त्वस्येति सम्बन्ध्यन्तरव्यवच्छेदमात्रापेक्षायां क्रियाकारकभावस्याविवक्षितत्वात्। (।) चिन्तयतेर्वा पचाद्यजन्तस्य तत्त्वशब्देन षष्ठीसमासं कृत्वा स्वार्थिकः कन्प्रत्ययः कृतः। ततोत्र **तृजकाभ्या**[1]मित्यादिना षष्ठी[3]समासप्रतिषेधो नाशंक्यः। **नाभेदमनुसन्धत्ते**। दृश्यविकल्पयोरिति प्रकृते।

**यदीत्यादि** चोदकः। **प्रतिपत्त्रभिप्रायोनुविधीयते** बाह्येषु सामान्यव्यवस्थानं। **तदाऽन्यापोहोपि सामान्यं मा भूत**। किं कारणं (।) **न ह्येव**मिति। अन्यापोहः शब्देन चोद्यत इत्येवं व्यवहर्त्तॄणां नास्ति **प्रतिपत्तिः**। आ चा र्यो पि तुल्यतां

---

[1] Pāṇini. 2: 2: 15.

**न ह्येवं प्रतिपत्तिरिति चेत्। न वै केवलं एवमप्रतिपत्तिः व्यक्तिव्यतिरिक्ताव्यति-**
443b **रिक्तैक[7]त्वव्यापित्वादि[1]भिराकारैरपि नैव प्रतिपत्तिः। केवलं अभिन्नाकाराया बुद्धेर्य आश्रयः सोऽन्यापोह उच्यते। तस्य वस्तुषु सम्भवात्, अविरोधात्[1] शब्दाश्रयिव्यवहारस्य तथा दर्शनाच्च। यथेयं बुद्धिः प्रतिभाति, ततः न किंचिदपि वस्तुभूतं सामान्यम्॥**

---

ख्यापयन्नाह। **न वै केव[4]लमि**त्यादि। **एवमप्रतिपत्ति**रित्यन्यापोहरूपेण। त्वया यथा **व्यक्तिव्यतिरिक्तादिभिराकारै**रिष्टं सामान्यन्तथा**पि नैव प्रतिपत्तिः**। आश्रयाद् व्यतिरिक्तं वै शे षि का दीनामव्यतिरिक्तं सां ख्या दी ना मादिशब्दात् प्रत्येकपरिसमाप्तत्वादिपरिग्रहः। तत्र भेदस्तावत्सामान्यस्य न प्रतिभासत एव। इह सामान्यमिति बुद्ध्यनुत्पत्तेः[5] अभेदेपि व्यक्तीनामेव प्रतिभासः स्यान्न सामान्यस्य। भेदाभेदे चोभयपक्षभावी दोषः स्यात्। नापि तत्प्रत्येकपरिसमाप्तं युज्यते। यत एकव्यक्तावेकसम्बन्ध्येव तत् स्यान्नानेकसम्बन्धि। न चैवं सामान्यमनेकसम्बन्धित्वादस्य समानानाम्भावः सामान्यमिति वचनात्।

अथ व्यक्त्यन्तरेषु तस्य प्रत्यभिज्ञानात् तत्सम्बन्धित्वमेवमपि भू[6]तगुणवदेकमनेकसम्बन्धि स्यान्न प्रत्येकपरिसमाप्तं। एकैकस्यां व्यक्तावनेकसम्बन्धित्वेनाप्रतीतेः। प्रतीतौ वा तत्रानेकव्यक्तिप्रतिभासः स्यात्। अथ व्यक्त्यन्तरालेऽप्रतिभासनात् प्रत्येकपरिसमाप्तन्तदुच्यते। तत्किमेतावता तस्यानेकसम्बन्धित्वमेकत्र सिध्यति। न च सामान्ये प्रत्यभिज्ञानं युज्यत इत्यप्युक्तं। तस्मान्न तस्य
65a प्र[7]त्येकपरिसमाप्तिर्नापि नित्यत्वमेकत्वं व्यापित्वं च प्रतिभासत इति स्थितं।

यदि वस्तुभूतस्य सामान्यस्यापोहस्य च तुल्यः प्रतिपत्त्यभावो व्यवहारे। कस्तर्ह्यस्या **आश्रय** इत्यत आह। **केवल**मित्यादि। स्वलक्षणानां विजातीयरहितत्व**मन्यापोहः** सो**ऽभिन्नाकाराया** बुद्धेर्निमित्तत्वेनो**च्यते**। किं कारणं(।)**तस्य** विजातीयविरहलक्षणस्या[1]न्यापोहस्य भिन्नेष्वपि सर्वत्र **वस्तुषु भावात्** तथाभूतस्य चान्यापोहस्य सामान्यबुद्धिहेतुत्वम्प्रत्य**विरोधात्**। तथा हि यथैकम्वृक्षमवृक्षाद् व्यावृत्तं पश्यत्येवमन्यमप्यतस्तत्रैकाकारा बुद्धिरुत्पद्यते। न चात्र बाधकं प्रमाणमस्ति।

तृतीयकारणमाह। **व्यवहारस्य** चे**त्यादि**। **तथा दर्शना**दिति। अन्यापोहनिबन्धनत्वेन दर्शनात्। एतच्च तद[2]न्यपरिहारेण प्रवर्त्तते (?त इ)ति च ध्वनिरुच्यत इत्यादिना प्रतिपादयिष्यते। **यथे**त्येकाकारा **इयं** विकल्प**बुद्धिः प्रतिभाति** (।)

---

[1] Gcig-pa-dan-khyab-pa-ñid.

**यस्माद्—**

**व्यक्तयो (नानु)यन्त्यन्यदनुयायि न भासते।**

**न हि व्यक्तयस्ताः परस्परं अन्वा[2]विशन्ति। भेदाभावेन सामान्यस्यैवाभाव-प्रसंगात्। अन्यच्च ताभ्योऽन्यच्च व्यतिरिक्तं, तथा न किंचित् बुद्धौ प्रतिभासते। अप्रतिभासमानं च कथमात्मनाऽन्यं ग्राहयेद् व्यपदेशयेद् वा।**

**न च एकसम्बन्धत्वात् अपि सामान्यं स्याद् अतिप्रसंगादिति तैरुक्तम्। अभि-**

---

तथा बाह्यन्तत्सामान्यन्नास्तीति वाक्यार्थः। **ततो न वस्तुभूतं सामान्यं** विकल्प-दर्शनाश्रय इत्यभिप्रायः॥

सामान्याभावे च कारणमाह। **यस्मा**दित्यादि। **व्यक्तयः** स्वलक्षणानि। **नानुयन्ति** न मिश्रीभवन्ति। एतेनाव्य[3]तिरिक्तसामान्याभ्युपगमो निरस्तः।

व्यतिरिक्तनिराकरणार्थमाह। **अन्यदनुयायी**ति। अनुयायि यदिष्टं भेदे-भ्योन्यत् सामान्यरूपन्तत्प्रत्यक्षबुद्धौ **न भासते**।

ननु विकल्पप्रतिभासेपि सामान्ये भेदाभेदपक्षयोरयमनन्वयादिदोषस्तुल्य एवेति कथं सामान्यमिष्यते। समानाकारस्तावत् प्रतिभासत एव। यावदसौ न बुध्यते भेदाभेदरहित इति तावदस्याल[4]ङ्कार एवावस्तुत्वप्रतिपादनाद् (।) अत एव यथाप्रतिभासं त्वसावस्तीत्युच्यते।

**अन्वाविशन्ति** मिश्रीभवन्ति। यदि **परस्पर**मन्वावेशः स्यात्तदैकरूपापत्ते**र्भेदा-भावः**। तेन कारणेन **सामान्यस्यैवाभावप्रसङ्गात्**। तेन भेदानां समानानामेका-कारप्रत्ययनिबन्धनत्वं धर्मः सामान्यं। तद्भेदाभावेन भवेदित्यर्थः। **अन्यच्चे**ति व्यक्तिभ्यः अन्य[5]दित्यस्य विवरणं **व्यतिरिक्त**मिति। **तथा** तेन रूपेण सामान्य**बुद्धौ**-(।)अनेनोपलब्धिलक्षणप्राप्तस्य सामान्यस्याभावव्यवहारे साध्ये स्वभावानुपलम्भ उक्तः। न चानुपलब्धिलक्षणप्राप्तं सामान्यमभ्युपेयं। यस्माद**प्रतिभासमानं च** सामान्यं **कथमात्मना** स्वेन सामान्यरूपेण। **अन्य**मिति सामान्यवन्तं **ग्राहयेत्**। **व्यपदेशयेद्वा**। स्वेन[6] रूपेण। कथमन्यमिति प्रकृतेन सम्बन्धः। सामान्यबलाद् व्यक्तिष्वभिन्नाभिधानज्ञानवृत्तिरिष्टा। तस्मात् सामान्यमुपलब्धिलक्षणप्राप्त-मेवेष्टमिति समुदायार्थः। एवन्तावद् ग्राह्यलक्षणप्राप्तस्यानुपलम्भान्नास्त्येकमने-कसम्बन्धि (।)

भवतु नामैकमनेकसम्बद्धन्तथापि सामान्यरूपता न युक्तेत्याह। **न चे**त्यादि। **तै**रिति व्यक्तिभेदैः **उक्त**[7]मिति द्वित्वादि। संयोगकार्यद्रव्येष्वपि सामान्यस्वभावत्वं 65b प्राप्नोतीत्यप्रसंगस्योक्तत्वात्। एकमनेकसम्बद्धमित्येव कृत्वा न सामान्यं किन्त्व-

**न्नाभिधानप्रत्ययनिमित्तभूतमेकं सामान्यं न तु सर्वमिति चेत्। कथमन्यतो[4]ऽन्यत्र प्रत्ययवृत्तिः? तत्संबंधादिति चेत्। संख्याकार्यद्रव्यादौ सत्यपि प्रसज्येत। असामान्यात्मकत्वादिति चेत्। कोऽयं सामान्यात्मेति तदेव न विचारितम्[1]। तत्र[5] सति सम्बन्धे प्रत्ययवृत्तिः। ततः सामान्यमिति उक्तम्। तत्र निमित्तसम्भवात अनेकसम्बन्धिद्रव्यादिभ्योऽपि प्रत्ययवृत्तिः। ततः सामान्यात्मता।**

**अन्यथाऽन्यत्रापि मा भूत्[6]। विशेषाभावात्। तथा च द्रव्यगुणसामान्यानां रूप-**

---

**भिन्नाभिधानप्रत्ययनिमित्तमेकसामान्यं न सर्वं** द्वित्वाद्यपि। तस्य यथोक्तशब्दज्ञानानिमित्तत्वादिति चेत्। **कथमन्यतः** सामान्यादन्यत्र व्यक्तिभेदे सामान्येनैकरूपतामनापादिते। **प्रत्ययवृ[1]त्तिरे**काकारज्ञानवृत्तिः।

**तत्सम्बन्धादिति** परः। ताभिर्व्यक्तिभिः सम्बन्धादन्यतोपि सामान्यादन्यत्र प्रत्ययवृत्तिः।

**संख्येत्या** चा र्यः। भावलक्षणा चेयं सप्तमी। संख्यायां सत्यां **कार्यद्रव्ये**ऽवयविनि **सति**। **आदि**शब्दात् संयोगादिषु सन्नप्रत्ययवृत्तेस्तेपि सामान्यं प्राप्नुवन्तीति समुदायार्थः। **असामान्यात्मकत्वात्** संख्यादीनान्त[2]द्बलेन द्रव्ये नैकाकारप्रत्ययवृत्तिरिति **चेत्**।

ननु स एवायं सामान्यात्मा विचार्यते (।) **कोयं सामान्यात्मे**ति। संख्यादिभ्यो विवेकेन सामान्यलक्षणस्यैवाप्रतीतत्वात्। नैतद् व्यक्तमिति यावत्। तदेवाह। **तत्रे**त्यादि। **तत्र** कोयं सामान्यात्मेति पृष्टे त्वयोक्तमेकस्यानेकेन **सति सम्बन्धे** व्यक्तिष्वभिन्न**प्रत्ययवृत्तिः**। **तत** इति प्र[3]त्ययवृत्तेः कारणादनेकसम्बद्धमेकं **सामान्यमि**ति सामान्यलक्षणं।

अत्र सामान्यलक्षणेऽस्माभिरुच्यते। **अनेकसम्बन्धि**नो विद्यन्ते येषां कार्यद्रव्यादीनां। आदिशब्दात् द्वित्वादिपरिग्रहः। तेभ्योपि तदाश्रयद्रव्येष्वेकाकारप्रत्ययोत्पत्तिः स्यात्। किङ्कारणम् (।) **निमित्तसम्भवात्**। तथा ह्यनेकसम्बन्धादेव निमित्ता[4]त् सामान्यादेकप्रत्ययोत्पत्तिरिष्यते (।) अस्ति चानेकसम्बन्धित्वमेकप्रत्ययनिमित्तन्द्रव्यादिष्वपि। **ततश्चे**त्येकप्रत्ययप्रवृत्तेः संख्यादीनां **सामान्यात्मता**। **अन्यथे**ति। यथोक्तसामान्यलक्षणयोगेपि संख्यादिषु सामान्यात्मता यदि नेष्यते। **अन्यत्रा**पि सामान्याभिमते **मा भूत्**। किं कारणं। **विशेषाभावात्**। **तथा च** द्रव्यादी[5]नामपि सामान्यरूपतापत्तौ **द्रव्यगुणादीनां रूपसंकरः**। **बुद्धेरेव प्रतिभास**

---

[1] Dbyod-pa.

**संकरः। तथा च तर्हि बुद्धेरेव प्रतिभासो अर्थज्ञानरूपत्वात् सत्तया सामान्यमिति चेत् (।) तन्न। एवम्।**

**ज्ञानादव्यतिरिक्तञ्च कथमर्थान्तरं व्रजेत् ॥७३॥** 444a

**ज्ञानस्य[1] रूपं कथं अर्थान्तराणां सामान्यं, तस्य तेष्वभावात्। तद्भावाध्यवसयादिति। तथा भ्रान्त्या व्यवहार इति चेत्। तत्र तत्प्रतिभासो[1]त्पत्तेः किन्नि-बन्धनम्। अनाश्रयस्योत्पत्तौ सर्वत्र स्यात्।**

**(अथवा) एकाकारे एकज्ञानं अव्यतिरिक्तं कथं अन्यस्य पुनर्ज्ञानस्य व्यक्त्य-**

---

इति विकल्पबुद्धेरेकाकारप्रतिभासः **सामान्य**मिति सम्बन्धः। स च ज्ञानरूपत्वात्। ज्ञानवत् सन्नेव। तदुक्तं (।)

"सामान्यं वस्तु रूपं हि बुद्ध्याकारो भविष्यति।
वस्तुरूपा च सा बुद्धिः शब्दार्थेषूपजायते।
तेन वस्त्वेव कल्प्येत वाच्यं बुद्ध्यनपोहकमि"ति।[6]

**तन्ने**त्यादिना प्रतिषेधति। यत्तज्ज्ञानरूपं सामान्यमिष्यते। तज्ज्**ञानादव्यतिरिक्तं** ज्ञानस्वलक्षणवत् **कथमर्थन्तर**म्बाह्यं **व्रजेत्**। न तेषां सामान्यमिति यावत् (।)

तद् व्याचष्टे (।) **ज्ञानस्ये**त्यादि। **तस्य** ज्ञानरूपस्य **तेष्व**र्थे**ष्वभावात्**।

सत्यं (।) न ज्ञानरूपस्य व्यक्तिष्वन्वयः किन्तु तस्मिन् बुद्धिप्रतिभासे **तद्-भावाध्यवसायात्**। बाह्यभा[7]वाध्यवसायात्। **तथा भ्रान्त्या** समान**व्यवहार** 66a **इति चेत्**।

एतच्चेष्टमेव सिद्धान्तवादिनः। केवलं प्रकृत्यैककार्याः व्यक्तयोऽतत्कार्याद् व्यावृत्ताः। तथाभूताया विकल्पबुद्धेर्निमित्तमित्यन्यापोहाश्रया सा बुद्धिरित्य-भिमतं शास्त्रकारस्य।

परस्त्वेवंभूतं निमित्तं नेच्छति। अत एव सिद्धान्तवादी निमित्तमेव पर्यनु-युंक्ते[1] (।) **तत्रे**त्यादि। **तत्र** व्यक्तिभेदेष्ववस्तुभूतेषु व्यक्तीनां च प्रकृत्या विजा-तीयव्यावृत्तानामेककार्यत्वानिच्छतचो (?तो) ज्ञानो**त्पत्तेः किन्निबन्धनं**। नैव किञ्चित्। तथा हि परो विजातीयव्यावृत्तानां भेदानामेकप्रत्ययहेतुत्वन्नेच्छति। न चास्ति वस्तुभूतं सामान्यं। **अनाश्रयस्ये**त्यनिमित्तिस्य सामान्यज्ञानस्यो**त्पत्तौ सर्वत्र स्या**दिति गौरित्येकाकारः प्रत्ययो वृक्षेष्वपि[2] स्यात्।

**ज्ञानादव्यतिरिक्त**मित्यादेरपरमर्थमाह। **अथवे**त्यादि। पूर्वमर्थान्तरशब्देन

---

[1] Log-paḥi-phyir. [2] Śes-pa-poḥi.

**न्तरभाविनो रूपम्। ततश्च ज्ञानान्तरात् व्यक्त्यन्तर[2]मविशेषकं कथं सामान्यं भवेत् ?**

**तस्मान्मिथ्याविकल्पोयमर्थेष्वेकात्मताग्रहः।**

**न हि अर्थानां भेदेनाभेदेन वापि योग्यात्मनाऽपि केनचिद् तुल्यमिति तथैषां[3] ग्रहणविकल्पोऽपि मिथ्या ॥**

**इतरेतरभेदोस्य बीजं संज्ञा यदर्थिका ॥७४॥**

**यस्येतरेतरभेदस्य प्रत्यायनार्थं अतत्साध्येभ्यो भिन्नसाध्यान् भावान् ज्ञात्वा तत्परिहारेण[4] प्रवर्त्तेतेति संकेतः क्रियते, सोऽयं तस्यैकात्मताप्रतिभासिनो मिथ्या-**

---

बाह्यमुक्तमधुना ज्ञानान्तरं निर्दिश्यते। अत एवाह (।) **कथमन्यस्य पुनर्ज्ञानस्येति**। किम्विशिष्टस्य ज्ञानस्य (।) **व्यक्त्यन्तरभाविनः**। एकस्यां गोव्यक्तौ यद्विकल्पविज्ञानन्ततोन्यत्र गोव्यक्त्यन्तरेण समुत्पन्नस्य विकल्पज्ञानस्येत्यर्थः। तथा ह्यनेकज्ञानव्यापनाद्वा सामान्यम्भवेत्। बाह्यव्यक्तिव्या[3]पनाद्वा। ज्ञानप्रतिभासस्य तु द्वयमप्यसत्। तदाह। **ततश्चेत्यादि**। **व्यक्त्यन्तरमिति** बाह्यं ॥

**तस्मा**दित्युपसंहारः।

**न ही**त्यादिना व्याचष्टे। **केनचि**दिति सामान्यरूपेण। **तथैषां ग्रहण**मित्यर्थानां समाना इति ग्रहणं ॥

ननु सि द्धा न्त वा दि ना प्यस्य विकल्पस्य निबन्धनं वाच्यमनाश्रयस्योत्पत्तौ सर्वत्र प्रसंगादित्याह। **इतरेतरभेद** इत्यादि। **संज्ञा** संकेतक्रिया **यद[4]र्थिका** (।) य इतरेतरभेदः। अर्थः फलं प्रत्याय्यत्वेन यस्य इति कृत्वा स एवम्भूत इतरेतरभेदो भावानामन्योन्यव्यावृत्तिलक्षणोस्य मिथ्याविकल्पस्य **बीजं संज्ञा** संकेतक्रिया। **यदर्थिका**। यस्येतरेतरभेदस्य प्रत्यायनफला।

**यस्ये**त्यादिना व्याचष्टे। यस्ये**तरेतरभेद**स्य **प्रत्यायनार्थं संकेतः क्रियते**। **अतत्साध्येभ्य** इत्यतत्कार्येभ्यो **भिन्नासाध्यान्भावान्**भेदेन[5] **ज्ञात्वा तत्परिहारेणे**त्येतत् कार्यपरिहारेण तत्कार्येषु **प्रवर्त्ते**तेति कृत्वा **संकेतः क्रियते**। **सोयं** यथोक्त इतरेतरभेदस्**तस्यैकात्मताप्रतिभा**सिन एकाकारस्य मि**थ्याविकल्प**स्य **बीजं** कारणं। **तमेव गृह्ण**न्निति भेदं भिन्नमित्यर्थः। एतच्चाध्यवसायवशादुच्यते। न पुनर्विकल्पस्य वस्तुगृहणमस्ति (।) **एष विकल्प** इति सामान्याकारो विकल्पः **स्ववासना[6]प्रकृते**रिति विकल्पवासनास्वभावात्। **एव**मित्येकाकारतया **प्रतिभाति**। (।७४।।)

**कथं पुनर्भिन्नानां** स्वलक्षणाना**मभिन्नं कार्य**मेकाकारविकल्पात्मकं।

**विकल्पस्य बीजम्। तमेव गृह्णन् एष विकल्पः स्ववासनाप्रकृतेरे[6]वं प्रतिभाति॥**

(ख) भिन्नानामभिन्नं कार्यम्

**कथं पुनर्भिन्नानामभिन्नं कार्यं, येन तदन्येभ्यो भेदात्[1] अभेद इत्युच्यते। प्रकृतिरेव तादृशी भावानाम्।**

**एकप्रत्यवमर्शार्थज्ञानाद्येकार्थसाधने।**
**भेदेपि नियताः केचित् स्वभावेनेन्द्रियादिवत्॥७५॥**

**यथेन्द्रियालोकमनस्कारा आत्मेन्द्रियमनस्कारा रूपविज्ञानमेकं जनयन्ति आत्मेन्द्रियमनोर्थतत्सन्निकर्षात्[7] वा, असत्यपि तद्भावनियते सामान्ये। शिंश-** 444b

---

**ये**नेत्येककार्यत्वेन। **तदन्येभ्यो**ऽतत्कार्यभ्यो **भेदा**द्धेतोर्व्यक्तीना**मभेद इत्युच्ते**। एकासंसर्गस्तद्व्यतिरेकिणां समानतेति वचनात्।

**प्रकृति**रित्यादिना परिहरति। प्रकृतिः स्वभाव एकाकारं[7] प्रत्यभिज्ञान- 66b **मेकप्रत्यवमर्शः**। अनुभवज्ञानमर्थज्ञानं। **एकप्रत्यवमर्शश्चार्थज्ञानं** चेति द्वन्द्वः। पूर्वनिपातलक्षणस्य व्यभिचारित्वात्। अल्पाज्तरत्वे[१]प्यर्थज्ञानशब्दस्य न पूर्वनिपातः कृतः। ते **आदी** यस्येति विग्रहः। आदिशब्दाद् दहनगृहादिकार्यग्रहणं। एकप्रत्यवमर्शादिरेवैकोर्थ इति कर्मधारयः। **तस्य साधने** सिद्धौ **भेदेपि** नानात्वेपि **नियताः**[1] केचित्। **स्वभावेन** प्रकृत्या। **इन्द्रियादिवत्**। अथवैकान्तेन **भेदे**पि स्वहेतुभ्यः **केचित्** समाना उत्पन्नाः केचिदसमाना इत्येतच्चोक्तन्तत्र ये समाना उत्पन्नास्ते तेन स्वभावेनैकाकारं प्रत्ययञ्जनयन्ति विनापि **सामान्येनेन्द्रियादिवत्**। तत्रैकप्रत्यवमर्शज्ञानसाधने **नियता** इत्येतद् दार्ष्टान्तिकत्वेनोपन्यस्तमर्थज्ञानाद्येकार्थसाधन इत्येतत्तु दृष्टान्तत्वेनोभयसि[2]द्धत्वात्।

अत एवादौ विभज्यते। **यथेन्द्रिये**त्यादि। **यथेन्द्रियालोकमनस्कारा रूपविज्ञानमेकं जनयन्तीति** सम्बन्धः। एतद्वस्तुबलसिद्धमुदाहरति। **आत्मे**त्यादि परसिद्धान्ताश्रयेण। नित्यमणु मनः शीघ्रं चेत्यणुस्वरूपम्मनः। **तत्सन्निकर्षा**-इत्यात्**मेन्द्रियमनोर्थसन्निकर्षाः**। "आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेने"ति वचनात्[३]। आत्मे[3]न्द्रियमनोर्थाश्च तत्सन्निकर्षाश्चेति द्वन्द्वः। आत्मेन्द्रियमनोर्थाः। यथास्वं सन्निकर्षसहाया विज्ञानं जनयन्तीति पराभ्युपगमः। **असत्यपि तद्भावनियत** इत्येककार्यत्वनियते। न हि चक्षुरादीनां चक्षुर्विज्ञानजनकत्वं नाम सामान्यम्परेणेष्टं।

---

[1] Rims. [2] Pāṇini 2: 2: 34. [3] Nyāya-bhāṣya 1: 1: 4.

**पादयो भिन्नाश्च परस्परानन्वयेऽपि प्रकृत्या एकाकारं प्रत्यभिज्ञानं जनयन्ति, अन्यां वा दहन[1]गृहादिकां काष्ठसाध्यामर्थक्रियां यथाप्रत्ययम्। न तु भेदाविशेषेऽपि जलादयः। श्रोत्रादिवद् रूपादिविज्ञाने॥**

**ज्वरादिशमने काश्चित् सह प्रत्येकमेव वा।**
**दृष्टा यथा वौषधयो नानार्थेऽपि न चापराः॥७६॥**

**यथा वा गुडूचीव्यक्त्यादीनां सह प्रत्येकं वा ज्वरादि[1]शमनादि[3]लक्षणानां एककार्यक्रियावत्। न तत्र सामान्यं अपेक्ष्यते। भेदेऽपि तत्प्रकृतित्वात्। न तदविशेषेऽपि दधित्रपुसादयः॥**

**तासु तथाभूतासु[2] (?) सामान्यमपि किंचित् अस्तीति चेत्। तत एव[4] तदेकं**

---

अधुना दार्ष्टान्तिकम्व्याचष्टे। **शिंशपादय** इति शिंशपाखदिरन्यग्रोधादयः **परस्परानन्वयेपि**। वृ[4]क्षत्वसामान्यविरहेपि वृक्ष इत्ये**काकारं प्रत्यभिज्ञानं जनयन्ति**। प्रत्यभिज्ञानाद**न्याम्वा दहनगृहादिकां काष्ठसाध्यामर्थक्रियां** शिंशपादयो **जनयन्तीति** प्रकृतं। **यथाप्रत्यय**मिति यावद् (।) अग्निसहकारिप्रत्ययलाभस्तदा दहनं जनयन्ति। गृहानुकूलप्रत्ययसंपाते गृहं। आदिशब्दाद् रथादिकार्यपरिग्रहः। **न तु भेदाविशेषेपि जलादयः**[5] काष्ठसाध्यार्थक्रियासमर्थाः प्रकृत्या तेषामतत्कार्य-त्वात्। अत्रापि दृष्टान्तमाह। **श्रोत्रादिवद् रूपज्ञान** इति। यथा श्रोत्रशब्दादयो रूपविज्ञाने कर्त्तव्ये न समर्थाः। आदिशब्दाद् रसादिविज्ञाने॥

स्यादेतद् (।) बहूनां प्रत्येकमेककार्यकर्तृत्वं सामान्यमन्तरेण न सिध्यतीत्यत आह। **ज्वरादि**त्यादि। **सहे**ति व्यक्त्यन्तरसहिताः। **प्रत्येक**मित्येकैकरूपा[6] ज्वरादिशमने एकस्मिन् कार्ये **दृष्टा यथौषधयः**। **वा** शब्दः पूर्वदृष्टान्तापेक्षया। **न चापरा** दधित्रपु**सा**(?षा)दयः।

**यथे**त्यादिना व्याचष्टे। **न तत्र** ज्वरादिशमने कर्त्तव्ये **सामान्यमोषधित्वं नामापेक्षन्ते(?)**। किङ्कारणं (।) **भेदेपि तत्प्रकृतिकत्वात्**। ज्वरादिशमनकार्य-स्वभावत्वात्। यदि भेदानामसामर्थ्यं स्यात्। भवेत्सामान्यापेक्षा। **न तदवि-**

67a **शेषेपि**[7] भेदाविशेषेपि **दधित्रपुसादयः**। दध्येव मन्दजातन्दधित्रपुसं। दधि च त्रपुसश्चेति **द्वन्द्वमन्ये** व्याचक्षते॥

तासु गुडूचीव्यक्त्यादिषु **तथाभूतास्वे**ककार्यकारिणीषु। **किञ्चिदि**ति व्यति-रिक्तमव्यतिरिक्तं च। तदुक्तं (।)

---

[1] Rims. [2] Hdi-sñam-du.

**कार्यं स्याद् (इति) मतं चेत्।**[1]

**तदयुक्तं, अविशेषात् सामान्यं न तत्कार्यकृद्॥**

**अविशेषान्न सामान्यमविशेषप्रसङ्गतः।**
**तासां क्षेत्रादिभेदेऽपि ध्रौव्याच्चानुपकारतः॥७७॥**

**सामान्यात् ज्वरादिशमनकार्यं[5] स्यात् चेत्, तस्य विशेषाभावात् व्यक्तीनां क्षेत्रादिभेदेऽपि शीघ्रप्रशमनघटादेः विशेषो गुणस्य तारतम्यं च न स्यात्। अथ सामान्ये विशषोऽस्ति चेत्, स्वभावभेदा[6]द् स्वरूपहानम्। ध्रौव्याच्चानुपकारतः सामान्यं (न कार्यकृद्)। यदि हि तद् उपकुर्यात्, अनाधेयविशेषस्य[2] अन्यानपेक्षणत्वात् स्वकार्यं सर्वं सकृज्जनयेत्[7] तज्जननस्वभावं वा न भवति। व्यक्तयस्तु** 445a

---

"निर्वर्त्यमानं यत्कर्म जातिस्तत्रापि साधनं।
स्वाश्रयस्याभिनिष्पत्त्यै सा क्रियायाः प्रयोजिके"ति।

**तत एव** सामान्यात् **तदेकं** ज्वरादिशम[1]नलक्षणं **कार्यं**न्ततश्चासिद्धो दृष्टान्त इति भावः।

**तदयुक्तमिति** सि द्धा न्त वा दी। **अविशेषात् सामान्यस्येति**। एकत्वान्नित्यत्वाच्च अविशिष्टं **सामान्यन्(न)तत्कार्यकृदि**ति शमनकार्यकृत्। अन्यथा सामान्यस्याविशेषा**त्तासां** गूडूच्यादिव्यक्तीनां **क्षेत्रादिभेदेपि** तस्यापि ज्वरादिशमनकार्य**स्याविशेषप्रसंगतः**। **चिरशीघ्रे**त्यादि। विशिष्टक्षेत्रो[2]त्पन्नानां शीघ्रप्रशमनं विपरीतानां चिरप्रशमनं। **आदि**शब्दाच्चिरतरशीघ्रतरादिपरिग्रहः। क्षेत्रसंस्कारादिभिन्नानां गूडूच्यादीनामुपयोगाद्देहे आरोग्यादिलक्षणस्य **गुणस्य तारतम्यं च न स्यात्**। सामान्यस्यैक्यात्। **अथ** क्षेत्रादिभेदेन **सामान्यस्य विशेष** इष्यते। तदा विशेषे वा सामान्यस्येष्यमाणे **स्वभावभेदः** स्याद् विशेषलक्ष[3]णत्वाद् भेदस्य। **ततश्च स्वरूपहानं**। सामान्यस्वरूपमेकं हीयते। **ध्रौव्याच्च** कारणात् **सामान्यस्य** व्यक्तिभ्यो**नुपकारतो** न सामान्यं कार्यकृदिति वर्त्तते। **यदि हि सामान्यमुपकुर्यात्** तदा नित्यत्वात् सहकारिभि**रनाधेयविशेष**स्या**न्यानपेक्षणत्वात्** सहकार्यनपेक्षणात् तत् सामान्यं **स्वकार्यं सकृज्जनयेत्**। अथ न जनयेत् तदा **तज्जननस्वभावं न भ[4]वति**। अजननावस्थाया अविशेषात् कार्यकालेपि न जनयेदिति यावत्। **व्यक्तीनां** त्वनित्यानां कार्यकृत्त्वे नायं दोष इत्याह। **व्यक्तयस्त्वि**त्यादि (।) **संस्कारो** जलावसेकादि। **विशिष्टा उत्पत्ति**र्यासान्तास्तथा। विशेषोस्यास्तीति

[1] Ḥgyur-ro-sñam-du-Sem-pas-na. [2] Dogs-dbyuṅ-du-med-pa.

**देशकालसंस्कारक्रियासामर्थ्यात् विशिष्टोत्पत्तिका विशेषवत् कार्यकारीति न विरोधः। तद्वत् तत्र केचित् च (स्व)भाव[1]भेदेऽपि एकप्रत्यभिज्ञानादिकं अर्थक्रियाकरणे तदकारिभ्यो भेदाद् वा एकेन वा नानोत्पादेऽतज्जन्येभ्यो भेदाद् अभिन्ना इति।**

**किं पुनर् [2]भेद लक्षणेन सामान्येन स्वलक्षणं समानमिति प्रत्येयं, अथान्यदेवेति चेत्। किंचातः। यदि स्वलक्षणं कथं विकल्पविषयः अन्यतो वा कथ[3]मर्थक्रिया।**

---

**विशेषवत् कार्यं** ज्वरादिशमनलक्षणं। न च तासु व्यक्तिषु यच्छीघ्रकारित्वादिलक्षणमवान्तरसामान्यमवस्थि[5]न्तदेव विशेषवत् कार्यकारीति युक्तम्वक्तुं। ओषध्यनुपयोगेपि पुंसः तत्कार्योदयप्रसङ्गात्। **तद्वदिति** विशिष्टव्यक्तिवत्। **केचिदिति** सजातीया **एकप्रत्यभिज्ञाना**दिकं। **आदिशब्दाद्** एकोदकाद्याहरणादि। **तदकारिभ्य** इति। प्रत्यभिज्ञानाद्यकारिभ्यो **भेदादभिन्ना** इत्युच्यन्ते। न त्वेकसामान्ययोगात्।

कार्यद्वारेणाभेदं प्रतिपाद्य का[6]रणद्वारेणाह। **एकेन वे**त्यादि। यथा प्रयत्नेन घटभेदा **अतज्जन्येभ्य** इत्यप्रयत्नजन्येभ्यो **भेदादभिन्ना** इत्युच्यन्ते। यद्यपि प्रतिघटं प्रयत्नस्य भेदस्तथाप्येकप्रत्यभिज्ञानहेतुत्वेन तस्याप्येकत्वं। एतच्चोत्तरत्र निश्चाययिष्यते।

**किम्पुनरि**त्यादि परः। **भेदो** व्यावृत्तिर्**लक्षणं** निमित्तं यस्य **तेन** सामान्येनातत्कार्ये[7]भ्योऽतत्कारणेभ्यश्च व्यावृत्तं **स्वलक्षणं समानमिति प्रत्येयं। अन्यथान्यदेवे**ति स्वलक्षणादन्यद् विकल्पबुद्धिपरिवर्त्तिरूपमनर्थक्रियाकारि। **तेन** भेदलक्षणेन सामान्येन समानमिति प्रत्येयं।

67b

ननु तदेषां बुद्धिप्रतिभासमनुरुन्धानैर्बुद्धिविपरिवर्त्तिनामेव भावानामाकारविशेषपरिग्रहाद् बहिरिव परिस्फुरतां सामान्यमुच्यत इति पूर्वमु[1]क्तत्वात् सन्देहानुवृत्तिरेव।

सत्यं। किन्त्वधिकस्य दोषस्य विधानार्थं उपन्यासः। दोषविज्ञानार्थमाह। **किंचात इति**। इतरो **यदी**त्यादिना प्रश्नाभिप्रायमाह। **यदि स्वलक्षणं** प्रत्येयं **कथं विकल्पविषयः**। तथा हि विकल्पबुद्ध्यभिप्रायवशाद् भेदलक्षणं सामान्यं व्यवस्थाप्यते तस्या अभिप्रायवशात्। **सामान्यं सत्प्रकीर्तितमि**ति वच[2]नात्। तथाभूतेन चेत् सामान्येन स्वलक्षणं समानं प्रत्येयं। तदा विकल्पस्य विषयः स्यात्। न चैतद् युक्तमथान्यदेव बुद्धिपरिवर्त्ति रूपं समानमिति प्रत्येयं। अत्रापि दोषमाह। **अन्यतो वा कथमर्थक्रिया** (।) न हि बुद्धिप्रतिभासिरूपाद् अर्थक्रिया सम्भवति।

**स्वलक्षणे चानित्यत्वाद्यप्रतीतेरताद्रूप्यं तेषां चावस्तुधर्मता चेत्।**

**नैष दोषः**[1]**। ज्ञानप्रतिभासिन्यर्थे सामान्यसामानाधिकरण्यधर्मधर्मि**[4]**-व्यवहाराशंका**[2]**। वस्तुस्वभावग्रहणेन अनुभवाहितवासनां आश्रित्य यदेतत् विकल्पज्ञानं उत्पन्नं तच्च अतद्विषयमपि तद्विषयमिव तदनुभवा**[5]**हितवासनाप्रभव-प्रकृतेः अध्यवसिततद्भावं स्वभाववत्। अभिन्नकार्यपदार्थेभ्यः प्रसूतेरभिन्नार्थ-ग्राहीव। परमार्थतस्तु तदन्यभेदसमाकारम्। तदन्यभेदस्य समानाकारः।**

**तत्र अर्थाकारश्च व्यवहारिणां तथाऽध्यवसाय प्रवृत्तेः, बाह्यत्वेनैकत्वेनार्थ-**

---

ततश्चातत्कारिभ्यो भेदादभिन्ना इत्युच्यन्त इति कार्यद्वारेण सामान्यव्यवस्था न[3] घटते। यतश्च बुद्धिपरिवर्त्ति रूपं समानन्ततः **स्वलक्षणे चानित्यत्वा**दिसामान्य-स्या**प्रतीतेरताद्रूप्यम**नित्यादिरूपत्वं स्वलक्षणस्य न भवेत्। स्वलक्षणे चानित्य-त्वादीनामप्रतीतेस्**तेषां चा**नित्यत्वादीना**मवस्तुधर्मता**।

**नै**त्यादिना परिहरति। बुद्धिप्रतिभासिन्येव रूपे सामान्यादिव्यवहार इत्ययं पक्षो गृहीतः। तदाह। **ज्ञानप्रतिभासि**[1]**न्यर्थ** इत्यादि।

एतच्च ग्रहणकवाक्यं। अस्यैव व्याख्यानं। **यदेतज्ज्ञानं विकल्पक**मित्यनेन सम्बन्धः। **अतद्विषयम**पि वस्तुस्वभावविषयमपि **तद्विषयमिव** स्वलक्षणविष-यमिव। **अध्यवसिततद्भावमारोपितबाह्य**भावं स्वरूपं यस्य तत्तथा। यतश्चा-ध्यवसिततद्भावमतः स्वलक्षणविषयमेवेति मन्यते। **अध्यवसिततद्भावस्वरूप**त्व-मे[5]व कथमिति चेदाह। **तदनुभवाहितवासनाप्रभवप्रकृते**रिति (।) तस्य स्वलक्षणस्य योनुभवस्तेनाहिता वासना ततः प्रभव उत्पादस्तस्य सामान्यस्य सा **प्रकृतिः** स्वभावो येनाध्यवसितभावस्वरूपम्भवतीत्यर्थः। **अभिन्नकार्या** ये **पदार्था** घटादयः। एका-कारप्रत्ययज्ञानहेतव**स्तेभ्यः** परम्परया **प्रसूतेरभिन्नार्थग्राहीव** प्रतिभाति। न तु सामान्यवस्तु[6]भूतं किंचिद् व्यतिरिक्तमव्यतिरिक्तम्वाऽस्ति यत् तद् गृह्णीयात्। **परमार्थतस्तु तदन्यभेदसमाकारं** तेभ्यः सजातीयाभिमतेभ्योऽन्ये विजातीयास्तेभ्यो भेदः भिन्नः स्वभावः स एव परमार्थेन समान आकारो यस्येति विग्रहः। तत एव तस्योत्पत्तेस्तन्निवर्त्तनत्वाच्च **तदन्यभेद**स्तस्य **समान आकार** इत्युच्यते।

**तत्रा**नन्तरोक्ते ज्ञा[7]ने **एक इवे**ति सर्वव्यक्त्यनुगत इव। **तत्कारीवे**त्यर्थ- 68a क्रियाकारीव। किं पुनस्तथा प्रतिभातीति चेदाह। **व्यवहारिणा**मित्यादि। **तथाध्यवसाये**ति विकल्पांशमेव **बाह्यत्वेनैकत्वेनार्थक्रियाकारित्वे**नाध्यवसाय-

---

[1] Ñes-pa. [2] Ḥdogs-te.

445b **कारित्वेनेति तत्कारित्वेन प्रतिभाति। अन्यथा प्रवृत्तिर्न युक्ता [7]स्यात्। तच्चार्थ-क्रियाकारितया प्रतिभासते। तदतत्कारिभ्यो भिन्नमिव। न हि तस्याऽपि तत्त्वमिति वाच्यं परीक्षानङ्गत्वात्। बुद्धिस्थास्तेऽर्थास्तेन समाना इति गृह्यन्ते। कुत[1]श्चित् व्यावृत्त (इव) प्रतिभासनात्। न च स्वलक्षणं, तत्राऽप्रतिभासनात्।**

**त एव कुतश्चित् व्यावृत्ता अभिन्ना अपि व्यावृत्तिमन्तः प्रतिभान्ति। स्वयम-**

---

व्यवहारिणां **प्रवृत्तेः**। **व्यवहारिभि**रित्यन्ये पठन्ति। व्यवहारिभिरित्यध्यवसाये-त्यनेन पूर्वसम्बन्धात् तृतीयैव कृता। न तु षष्ठी। **न लोकाव्ययनिष्ठे**ति[1]-षष्ठी प्रतिषेधात्। **अन्यथे**ति यदि विकल्पांशे बाह्याध्यवसायो न भवेत्तदा तथा-भूते विकल्पे जातेप्यर्थक्रियाकारिणी **प्रवृत्तिर्न स्यात्**। तदपि विकल्पप्रतिबिम्बकं व्यवहर्त्तृ पुरुषाध्यवसायवशा**दर्थक्रियाकारितया प्रतिभासते**। ततश्च **तदतत्का-रिभ्यो भिन्नमिव**। विकल्पप्रतिबिम्बकमेव तत्त्वं कस्मान्नेति चेदाह। **न चे**-त्यादि। तद्विकल्पप्र[2]तिबिम्बकन्न **तत्त्वं** न वस्तु। किङ्कारणं (।) अनर्थक्रिया-कारित्वेन **परीक्षाया** व्यभिचारस्या**नङ्गत्वात्**। एतच्चानन्तरमेव प्रतिपादयि-ष्यामः।

तत्र ये स्वलक्ष(ण)द्वारा याता अर्थाकारा विकल्पबुद्धौ प्रतिभान्ति **तेऽर्था** विकल्पबुद्धिप्रतिभासिनस्**तेन** भेदलक्षणेन सामान्येन **समाना इति गृह्यन्ते**। **कुतश्चिद् व्यावृत्ता**(इ)ति विजातीयव्यावृत्त्या। तथा हि (।) विक[3]ल्पप्रतिभासिनोपि वृक्ष-भेदा अध्यवसितबाह्यरूपत्वाद् अवृक्षेभ्यो व्यावृत्ता इव भासन्ते। तथान्येति। **न स्वलक्षण**न्तेन समानमिति गृह्यत इति लिङ्गवचन(वि)परिणामेन सम्बन्धः। किङ्कारणं (।) **तत्र** सामान्यप्रतिभासिनि विकल्पे स्वलक्षणा**प्रतिभासनात्**।

एवन्तावद् बुद्धिप्रतिभासिन्यर्थे सामान्यव्यवहार उक्तः। संप्रति सामाना-धिकरण्यव्यवहा[4]रमाह। **त एवे**त्यादि। **त एव** विकल्पप्रतिभासिनोर्थाः। **कुतश्चिद् व्यावृत्ता** इव सन्तो यथानुत्पलाद् व्यावृत्ता उत्पलभेदास्त एव पुन**रन्यतो**प्य**नी**लाद् **व्यावृत्तिमन्तः प्रतिभान्ति** (।) ततश्च व्यावृत्तिद्वयानुगतस्यैकस्यैव धर्मिणः प्रति-भासनात् सामानाधिकरण्यं।

अयं चानन्तरानुक्रान्तो बुद्धिप्रतिभासिष्वर्थेषु सामान्यसामानाधिकरण्य-व्यवहा[5]रो मिथ्यार्थ एव क्रियते। किं कारणं (।) **स्वयमसताम**पि विकल्पाकारा-णान्तथा एकाकारानुगतत्वेन। व्यावृत्तिद्वयानुगतेन धर्मस्वरूपेण। विकल्प**बुद्ध्योप-**

---

[1] Pāṇini 2: 3: 69.

**सतामपि बुद्धया उपदर्शनात्। मिथ्या[2]र्थ एव सामान्यसामानाधिकरण्यव्यवहारः। सर्वश्चायं स्वलक्षणानामेव दर्शनाहितवासनाकृतायातत्वात्। तत्प्रतिबद्धजन्मनां विकल्पानामतत्प्रतिभासित्वेऽपि[3] वस्तुनि प्रवृत्तिः, मणिप्रभायामिव मणिभ्रान्तेः, नान्येषाम्। तद्भेदप्रभवे सत्यपि यथादृष्टविशेषानुसरणं परित्यज्य किञ्चित्साम्यग्रहणेनाऽन्यसमारोपात्[4]। दीपप्रभायामिव मणिबुद्धेः। तेन न विकल्पविषयेष्वर्थक्रियाकारित्वम्।**

---

**दर्शनात्**। एकाकारेण प्रतिभासनात् **सामान्यव्यवहारः**। अनेकाकारेण चैकस्य प्रतिभासनात् **सामानाधिकरण्यव्यवहारः**।

यदि मिथ्यार्थ एव सर्वो विकल्पः कस्मात् कृतकत्वादि[6]द्वारायाता अनित्यानात्मादिविकल्पाः प्रमाणं नित्या विकल्पास्तु नेत्यत आह। **सर्वश्चाय**मित्यादि। **सर्वो विप्लव** इति सम्बन्धः। **विप्लवो** भ्रान्तिः। **अय**मिति सामान्यादिरूपः। **स्वलक्षणानामेव** यद्दर्शनन्तेनाहिता या वासना तत्कृतः। परम्परया सर्वविकल्पानाम्वस्तुदर्शनद्वारायातत्वात्। तथा हि नित्यादिविकल्पा अपि[7] वस्तुदर्शनेनैवो- 68b त्पन्नाः सदृशापरापरोत्पत्तिदर्शनायातत्वात्। तत्र तुल्ये सर्वविकल्पानाम्वस्तुदर्शनद्वारायातत्वे। **तत्प्रतिबद्धजन्मनाम**नित्यादि**विकल्पानामतत्प्रतिभासित्वेपि** स्वलक्षणाप्रतिभासित्वेपि **वस्तुन्य**विसम्वादः। अध्यस्तस्यानित्यादिरूपस्य वस्तुनि विद्यमानत्वात् केवलं स्वलक्षणरूपेण न प्रतिभासत इति विकल्पो[1] विभ्रम उच्यते। **मणिप्रभायामिव मणिभ्रान्ते**र्मणिस्वरूपाग्रहेप्यविसम्वादो मणिप्रभाया मणौ प्रतिबद्धत्वात्। प्रभाश्रयेण च मणिभ्रान्तेरुत्पत्तेः।

न त्वेवन्नित्यादिविकल्पास्तेषाम्वस्तुदर्शनद्वारायातत्वेपि वस्तुन्यविद्यमानस्यैवाकारस्य समारोपात्। तदाह। **नान्येषा**मित्यादि। अन्येषां नित्यादिविकल्पानां वस्तुनि सम्वाद इत्यने[2]न सम्बन्धः। **तद्भेदप्रभवे सत्यपी**ति। अर्थाभेदाद् उत्पादेपि सतीत्यर्थः। **यथा दृष्टो** यो **विशेषः** क्षणिकत्वादिलक्षणस्तस्या**नुसरणं** निश्चयं **परित्यज्य किञ्चित्सामान्य**मिति व्यतिरिक्तस्याव्यतिरिक्तस्य वा सामान्यस्य **ग्रहणेन** विशेषात्तस्य स्थिरत्वादेः **समारोपात्**। **दीपप्रभायामिव**[3] भासुरत्वादिसाम्यात् प्रवृत्ताया **मणिबुद्धे**र्न मणिवस्तुसम्वादः। पारम्पर्येणाप्यध्यवसिते मणावप्रतिबद्धत्वात्। यतश्च मिथ्यार्था एव विकल्पास्**तेन न विकल्पविषयेष्वर्थे**ष्व**र्थक्रियाकारित्वं** (।) ततश्च यदुक्तमन्यतो वा कथमर्थक्रियेति तत्सिद्धं साध्यते।

कथन्तर्ह्यतत्कारिव्यवच्छेदलक्षणं सामान्यं विकल्पविषयेष्वर्थेषु व्यवस्थाप्यत[4] इति चेत्। न। बहिरिव परिस्फुरतामेकार्थक्रियाकारितया तदकारिभ्यो भिन्ना-

**नापि स्वलक्षणस्य अनित्यत्वाद्यभावः। एवं चलाद् वस्तुनो नानित्यत्वन्नाम[5] किंचिदस्ति। क्षणस्थायित्वेन तथाभूतस्य ग्रहणाद् तेषां भवति 'अयं अनित्यः' 'अनित्यत्वमस्य'। तद्धर्मतामेवावतरन्तो विकल्पा नानेक[6]धर्मव्यतिरेकं दर्शयन्ति। न च ते निराश्रयाः। तद्भेददर्शनाश्रयत्वात्। न चावस्तुधर्मता। तत्स्वभावस्यैव**

---

नामिव प्रतिभासनात्। यच्चोक्तं (।) स्वलक्षणे चानित्यत्वाद्यप्रतीतेरताद्रूप्यमिति तत्परिहारार्थमाह। **नापीत्यादि। चलाद् वस्तुनो** यस्मा**न्नानित्यत्वन्नाम किञ्चदस्ति**। येनासम्बद्धात् स्वलक्षणस्यानित्यत्वेनायोगः स्यात्। किन्तु चलमेव वस्तु नित्यं स्व[5]लक्षणस्यैवानित्यरूपत्वादेवमनात्माद्यपि द्रष्टव्यं। तेन प्रत्यक्षेण स्वलक्षणे गृह्यमाणेऽनित्यत्वं गृहीतमेव केवलं भ्रान्तिनिमित्तसद्भावादनिश्चितम् (।) अतस्तन्निश्चयमात्रेऽनुमानव्यापारस्तेन तन्निश्चय एव स्वलक्षणेऽनित्यत्वप्रतीतिरिति सिद्धं।

यदि स्वलक्षणमेवानित्यं कथमनित्योयमर्थोऽनित्यत्वमस्येति वा धर्मिधर्मरूपतया[6] प्रतीतिरित्यत आह। **क्षणे**त्यादि। स्वलक्षणस्य **तथाभूतस्ये**ति चलरूपस्य क्षणाप्रत्युपस्थानतया। एक**क्षणस्थायित्वेन ग्रहणाद्** उत्तरकालमन्त्यक्षणदर्शिनामेतदेवम्भवत्यनित्योयमित्यादि। भेदान्तराप्रतिक्षेपविवक्षायाम**नित्योय**मिति 69a भेदान्तरप्रतिक्षेपविवक्षाया**मनित्यत्वमस्येत्ये**वं धर्मिधर्मभाव[7]प्रतीतिर्भवति।

विकल्पकल्पितत्वात् कथं बाह्ये धर्मधर्मिभाव इत्यत आह। **तद्धर्मता**मित्यादि। तद्धर्मतां स्वलक्षणधर्मताम**ेवावतरन्तः** स्वलक्षणमध्यवस्यन्तो **विकल्पा** इत्यर्थः। व्यावृत्तिभेदे कृतसंकेतशब्दानुसारेण **नाना**रूपा **एक**रूपाश्च **धर्मा**स्ते च **व्यतिरेका**श्चेति द्वन्द्वः। नानाधर्मान् अनित्यकृतकत्वादीन्। एकं धर्मं बहूनां घटादीनामनित्यत्वं[1] व्यतिरेकश्च घटादीनामनित्यत्वमिति **दर्शयन्ति**। वस्तुनीत्यध्याहारः। न च विकल्पव्यवस्थापितन्नानैकधर्मादिकन्तत्त्वम्विकल्पस्यावस्तुग्राहित्वाद् (।) अत एवाह (।) **दर्शयन्ती**ति।

अवस्तुग्राहित्वात्तर्हि **ते निराश्रयाः** प्राप्नुवन्तीति चेदाह। **न च त** इति। न इति नानाधर्मादिदर्शका विकल्पवस्तु**भे**दस्यानित्यादिरूपस्य स्वलक्षणस्य यद् **दर्शन**मनुभव[2]स्त**दाश्रयत्वाद्** विकल्पानां। तथा हि परमार्थतोऽनित्यादिरूपं स्वलक्षणं दृष्ट्वा दर्शनसामर्थ्यभाविनो विकल्पा दृष्टाकाराध्यवसायेन प्रवर्त्तन्ते। यतश्च यथादृष्टस्यैवाभिलपनेन प्रवर्त्तन्ते विकल्पा अनित्याकारा नार्थान्तरन्नित्यत्वादिविकल्पवदनुसरन्ति। ततो यदुक्तं (।) तेषां चावस्तु धर्मतेति परिहृतम्भवतीत्याह। **ने**ति। ते[3]षामनित्यत्वादीनां **नावस्तुधर्मता**। किं कारणं। **तत्स्वभावस्यैव तथा**ऽनित्यादिधर्मतया ख्यातेः **प्रतिभासना**दध्यवसायादिति यावत्। यदि

**तथा प्रतिभासनात्। वस्तुनस्तु नानैकव्यतिरेक[7]ग्रहो विभ्रमः। एककार्यकारिण-स्तस्य तथा(भाव)जिज्ञासासु तथाभावख्यापनाय तथा व्यवस्थापितत्वात्।**[1] **न वस्तुभेदात्। तस्यैवैकस्य अनेक[1]त्वायोगात् अनेकस्य चैकत्वायोगात्, व्यति-रिक्तस्य निषेधात्। तेषां प्रकृतेर्भेदात् यथावस्तु शब्दार्थाभ्युपगमे सामानाधिकर-ण्यायोगात्।** 446a

**तदुपाधेरेकस्याभिधानात् अदोष इति चेत्। अनुपकारिणि पारतंत्र्यायो-**

वस्तुधर्म एवानित्यत्वादिकं ख्याति। कस्तर्हि विकल्पकृतो विभ्रम इत्याह। **वस्तुनस्त्वि**त्यादि। एकस्य वस्तुनो **नाना**रूपेण ग्रहः। बहूनां **चैक**त्वेन। धर्मध-र्मिणोश्च **व्यतिरेकेण[4] ग्रहो विभ्रमो** भ्रान्त इत्यर्थः। किं पुनः कारणमेकत्वादिग्रहो विभ्रम इत्याह। **तस्यैकाने**केत्यादि। एककार्यकारिणो घटादिभेदस्यैकोदकाद्याह-रणादिकार्यकारिणः। **तथा भावजिज्ञासासु**। एककार्यकर्तृत्वजिज्ञासासु। **तथाभा-वख्यापनायै**ककार्यकारित्वख्यापनाय। तथाकृतस्थितित्वात्। घटादिना[5] एकरूपेण व्यवहारलाघवार्थम्व्यवस्थापितत्वात्। तथकस्याप्यनेकार्यकारिणः। यथा घटस्य चक्षुर्विज्ञानोदकधारणकादाचित्कज्ञानादिकार्यकारिणस्तथाभावजिज्ञासासु तथाभा-वख्यापनाय। अनेककार्यत्वख्यापनाय तथाकृतस्थितत्वात्। चाक्षुषपार्थिवानित्या-दिरूपेण **व्यवस्थापितत्वात्**[6]। एवमन्यत्रापि यथायोगं वाच्यं। **न वस्तुभेदाद्** एकस्मिन् पदार्थेऽनेकधर्मव्यवस्थापनं। किङ्कारणं (।) **तस्यैवैकस्य** वस्तुनो**ऽनेक-त्वायोगात्** (।) ततश्चैकस्यानेकत्वग्रहो विभ्रम इत्याख्यातं। तथानेकस्याप्येक-त्वव्यवस्थापनन्तदकार्यव्यावृत्तिद्वारेणैव न वस्त्वभेदादित्याह। **अनेकस्य चैकत्वा-योगा**दिति[7]। तथा चानेकस्यैकत्वग्रहो विभ्रमः। एवं धर्मधर्मिणोर्व्यतिरेकग्रहोपि भ्रान्त एव। किङ्कारणं (।) **व्यतिरिक्तस्य** च सामान्यस्य प्रागेव **निषेधात्। व्यक्तयो नानुयन्त्यन्यदित्यादि**ना। 69b

धर्मिणः सकाशाद् व्यतिरिक्ता एव धर्मास्ततश्च यथावस्तु शब्दार्थो भविष्यतीत्याह। **तेषा**मित्यादि। **तेषा**मनित्यत्वादीनां धर्माणां **प्रकृतेः** स्वभावस्य **भेदात्** कारणाद् **यथावस्तु शब्दा[1]र्थाभ्युपगमे** नीलोत्पलमनित्यः शब्द इत्यादि **सामानाधिकरण्यायोगात्**। नीलादिगुणानामुत्पलादिजातीनाञ्च परस्परं स्वभाव-भेदात्। तद्वाचिनां शब्दानामेकस्मिन्नधिकरणे वृत्तिर्नास्तीति सामानाधिकरण्या-योगः। तस्मान्न यथावस्तु शब्दार्थव्यवस्थेति भावः।

[1] De-ltar-bžag-paḥi-phyir.

**गात् न विशेषः। पारतंत्र्येऽपि जन्यजनकभावेन सहानवस्थितेः द्वयोरनभिधानम्। बुद्धया एकस्या[3]ध्याहारो न वस्तुविषयः शब्द(ार्थः)स्यात्। बुद्धिप्रतिभास-**

---

**तदुपाधे**रित्यादिना पराभिप्रायमाशंकते। ते नीलादयो धर्मा उपाधिर्यस्य द्रव्य[2]स्य तस्यै**कस्य** द्वाभ्यां गुणजातिभ्याम**भिधानाद् अदोषः**। सामानाधिकरण्याभावदोषो नास्ति। उत्तरमाह (।) **अनुपकारिणी**त्यादि। उपाधित्वेनाभिमतानां नीलादीनां धर्माणामनुपकारकन्द्रव्यं। न हि नीलगुणस्योत्पलत्वजातेर्वा द्रव्येणोपकारः कश्चिद् क्रियते (।) ततश्चा**नुपकारिणि** द्रव्ये तदनाधेयवृत्तीनां नीलादीनां **पारतन्त्र्यायोगात्**। नीलादयो[3] धर्मा अनुपाधिः। पारतन्त्र्याभावात्। अन्यथाऽस्यायमुपाधिरित्येव न स्यात्। अथेष्यते द्रव्यविषयं पारतन्त्र्यं धर्माणान्तदा **पारतन्त्र्येपि** द्रव्य**जन्यत्व**मङ्गीकर्त्तव्यमन्यथा द्रव्यपारतन्त्र्यायोगात्। **जनकं च** क्षणिकमेष्टव्यमक्षणिकस्यार्थक्रियायोगात्। ततश्च कार्याभिमतानामुपाधीनां कारणाभिमतस्य **च** द्रव्यस्य **सहानवस्थितेः**[4] कारणात्। **द्वयो**र्विशेषणविशेष्ययोर्वस्तुरूपयोर्युगप**दनभिधानं** (।) कारणाभिमतस्य विशेषस्य तदानीं निरोधात्। **एकस्ये**ति विशिष्टस्याप्युपाधिमतः। **अध्याहार** उपदर्शनन्तदा **न वस्तुविषयः शब्दार्थः स्यात्**। बुद्धयारोपितस्यैव विशेषस्य शब्देनाभिधानात्।

स्यान्मतं (।) यद्विनष्टं विशेष्यन्तद्विषयस्य शब्दस्य भवतु बुद्धिप्रति[5]भासविषयत्वं (।) यः पुनः सन्नेवोपाधिस्तद्वाचिनः शब्दस्य वस्तुविषयत्वमेवास्त्विति चेदाह। **बुद्धिप्रतिभासे**त्यादि। बुद्धिप्रतिभासो विषयो यस्याभिधानस्य तत्तथा (।) तद्भावस्तस्मिन् सति **सर्वं** विशेषणविषयाभिमतमप्यभिधानन्**तथैव** विकल्पबुद्धिप्रतिभासविषयमे**वास्तु**। किं कारणं (।) **तथा भिन्नोपाधिमतो** नानाविशेषणवत **एक**[6]**स्य ग्रहणे** बुद्धा**वभासनात्**। तथा ह्युपाधिमतो विनष्टस्याध्याहारिका विकल्पबुद्धिरङ्गीकर्त्तव्या (।) तदा चोपाधिमतोऽभावे उपाधेरप्यभावः पारतन्त्र्याभावात् (।) **भिन्नोपाधिमत एकस्याप्रतिभास**ने कुतः सामानाधिकरण्यं।

यदा तु विशेषणविशेष्ययोर्द्वयोरपि विकल्पबुद्धिप्रतिभासित्वमिष्टन्तदा 70a कल्पित धर्मद्वयगृहीतैकध[7]र्मिप्रतिभासिन्येकैव बुद्धिर्जायत इत्यविरुद्धं सामानाधिकरण्यं।

**उपकार्येत्या**दिना पराभिप्रायमाशंकते। **अदोषो** योयमेकस्य बुद्धयाध्याहार इत्यादिनोक्तः। **उपाधिमता समकालस्य** निष्पन्नरूपस्योपाधेः **पारतन्त्र्याभावादनुपाधित्वं**। प्राक् पारतन्त्र्यन्तदेवोपाधित्वमिति चेदाह। **नेत्यादि। न ह्य-**

विषयत्वस्य एकत्वे सर्वं तथैवास्तु। ग्रहणे तथा भिन्नोपाधिमत एकस्याभासनात्।

उपकार्योपकारकयोरुपाधि[4]तद्वतोरपि सहस्थितिकत्वाददोष इति चेत्। न। निष्पत्तौ पारतन्त्र्याभावात् अनुपाधित्वम्। न चानिष्पत्तिः, स्वभावानिश्चयात्[5]। सर्वथा पारतंत्र्याभावात् कल्पनयाऽऽरोप्य सर्वत्र व्यवहारे च सैव बुद्धिः किन्न अनुविधीयते ? वस्तुन एकेन शब्देन प्रमाणेन च विषयीकरणे वस्तुबलात् अशेषविशेषाक्षेपात्[6], तदन्यवैयर्थ्यं च न स्यात्। बुद्धिप्रतिभासस्य निर्वस्तुकत्वात् वस्तुसामर्थ्यभाविनामप्रसंगः। तदभिन्नं एकाकारस्य विषयीकरणेऽपि आकारान्तरेऽनिश्चयात्[7], आकारान्तरे साकांक्षया बुद्ध्या ग्राह्यम्। भिन्नस्य शब्दार्थस्य 446b

---

निष्पन्नस्य शशविषा[1]णतुल्यस्य पारतन्त्र्यमुपाधित्वम्वा (।) सर्वथा सतोऽसतश्चासत्पारतन्त्र्यमिति हेतोः कल्पनारोपितमुपाधीनाम्पारतन्त्र्यं कृत्वा पारतन्त्र्यव्यवहारे। सर्वथेति सर्वेण प्रकारेण यथा पारतन्त्र्यव्यवहारे बुद्धिरनुविधीयते तथा विशेषणविशेष्यव्यवहारे सैवारोपिका बुद्धिः किन्नानुविधीयते। तदनुविधानं हि न्याय्यं बुद्धिसन्दर्शितार्थप्रतिभास[2]मनाश्रित्य व्यवहर्त्तुमशक्यत्वात्। वस्तुन एकेन शब्देन प्रमाणेन च विषयीकरणे वस्तुबलाद्वस्तुस्वभावभूताशेषधर्माक्षेपात् तदन्यस्य शब्दादेर्वैयर्थ्यं च यत्प्रागुक्तमेकस्यार्थस्वभावस्य प्रत्यक्षस्येत्यादि।

व स्तु वा दि पक्षे तद्बुद्धिप्रतिभासानुरोधेन स्यात्। किं कारणं (।) बुद्धिप्रतिभासस्य निर्वस्तुकत्वाद् वस्तुसामर्थ्यभाविनान्दोषाणामप्रस[3]ङ्गः। बहुवचनेनैतदाह। न केवलं तदन्यवैयर्थ्यदोषस्याप्रसङ्गस्तथा व्यतिरिक्तस्य सामान्यस्याभाव उपाधीनां च पारतन्त्र्यायोगात्।

विशेषणविशेष्यत्वाभावः भिन्नोपाधिमत एकस्य बुद्धावप्रतिभासनात् (।) सामानाधिकरण्याभावश्च य उक्तस्तेषामप्यत्र सम्भवो नास्तीति तदेवाह। तदभिन्नमित्यादि। तथा हि तद्बुद्धिप्रतिभासि रू[4]पमभिन्नम्प्रतिभाति। तस्मात् सामान्यं यथा प्रतीतिर्न विरुध्यत इति वचनपरिणामं कृत्वा वक्ष्यमाणेन सम्बन्धः। नीलमित्युक्तेऽनीलव्यावृत्त्या नीलत्वस्यैकस्याकारस्य विषयीकरणेपि विकल्पबुद्धया तत्रैव नीलाकारे संशयव्यावृत्तिर्नाकारान्तरे (।) ततस्तद्बुद्धिप्रतिभासि रूपमनिश्चिताद्याकारमनुत्पलव्यावृत्तोत्पलाकारस्यानिश्चयात्[5]। यस्मिन्नाकारे निश्चयो नोत्पन्नस्तदाकारान्तरन्तत्र साकांक्षयोत्पलशब्दप्रयोगाद् उत्पन्नया बुद्ध्या ग्राह्यं प्रतिभातीति सम्बन्धः।

एतेन विशेषणविशेष्यभावस्य निमित्तमुक्तं (।) सामानाधिकरणस्याह। भिन्नेत्यादि। भिन्नस्य शब्दार्थस्य नीलोत्पललक्षणस्योपसंहारे प्रतिपादनेपि।

**प्रतिपादनेऽपि अभिन्नबुद्धौ प्रतिभातीति सामान्यविशेषणविशेष्यभावसामानाधिकरण्यानि यथाप्रतीति न विरुध्यन्ते। [1]धर्मधर्मिभेदोऽप्यस्य अनेकस्मादर्थाद् भेदे(ऽपि) तस्य एकस्माद् भेदस्य विधिप्रतिषेधजिज्ञासायां तदेव वस्तु। प्रतीक्षिप्तभेदान्तरे धर्मशब्देन संचोद्य[2] तथा बुद्धेः[1] प्रतिभासनात्। व्यतिरिक्तधर्ममिव अविशेषेणा[2]स्यापरं स्वभावं धर्मितया व्यवस्थाप्य प्रदर्श्यते। तन्मात्रेण**

---

धर्मद्वयोपगृहीत**मभिन्नमे**कधर्मितया बुद्धिप्रतिभासरू[6]पं विकल्प**बुद्धौ प्रतिभातीति** कृत्वा **सामान्यादीनि यथाप्रतीति न विरुध्यन्ते**।

तेन यदुच्यते भ ट्टे न (।) "अन्यनिवृत्तिमात्रमपोहं गृहीत्वा अनीलादिव्यावृत्तावनुत्पलादिव्यावृत्तेरभावादनुत्पलादिव्यावृत्तौ चानीलादिव्यावृत्तेरभावाच्च न विशेषणविशेष्यभावस्तयोर्धर्मयोस्तदभावाच्च न तदाभिधायकयोः शब्दयोः 70b शब्दयोरपि विशेषणविशेष्य[7]भावः। नापि सामानाधिकरण्यं शब्दवाच्ययोर्भिन्नत्वात्(।) नापि यत्रार्थेऽपोहयोर्भावस्तद्द्वारकं सामानाधिकरण्यमवस्तुत्वेनापोहस्याधेयत्वाभावात्(।) न च स्वलक्षणं शब्दविषयोऽन्यच्चाधिकरणं नेष्यते। न च स्वलक्षणेऽपोहयोर्भावेऽपि शब्दयोः सामानाधिकरण्यमेकविषयत्वस्याप्रतीतेरि"त्यपास्तं।

बाह्यभिन्नस्य स्वाकारस्य शब्दादिविषयत्वेनेष्टत्वा[1]त् तेन नीलोत्पलादिशब्देषु शब्दार्थाभिधायित्वमिष्यत एवेति सर्वं सुस्थं।

**धर्मधर्मिभेदोऽप्यस्य** बुद्धिप्रतिभासस्य यथा प्रतीतिर्न विरुध्यत इति वचनपरिणामेन सम्बन्धः। तमेवा**नेके**त्यादिनाह। **अनेकस्मादर्थाद्** बुद्धिप्रतिभासस्यालीकत्वात्। कुतोऽनेकार्थभेदः केवलं पुरुषाध्यवसायवशादेवमुच्यते। **तस्य** बुद्धिप्रतिभासस्**यैकस्मा[2]दर्थाद्** यो **भेद**स्तस्य **विधिप्रतिषेधजिज्ञासायां**। किमनित्यः शब्दो भवति चाक्षुषो न भवतीति **तदेव** बुद्धिप्रतिभासभूतम्**वस्तु** प्रदर्श्यत इति सम्बन्धः (।) केन प्रकारेणेत्याह। **प्रतिक्षिप्ते**त्यादि।

यद्वा धर्मधर्मिभेदोऽप्यस्य वस्तुनो न विरुध्यत इति सम्बन्धः। कुत इत्याह। अनेकस्मादर्थाद् बाह्यस्य भेदसम्भवे सति तस्यैकस्माद् यो भेदस्तस्य वि[3]धिप्रतिषेधजिज्ञासायां किमनित्यः शब्दो भवति चाक्षुषो न भवतीति तदेव बाह्यम्वस्तु प्रदर्श्यत इति सम्बन्धः। केन प्रदर्श्यत इत्याह। **प्रतिक्षिप्ते**त्यादि। **धर्मशब्देन संचोद्य व्यतिरिक्तं धर्ममिव व्यवस्थाप्ये**ति सम्बन्धः। तथा ह्यनित्यत्वन्न चाक्षुषत्वमिति धर्मशब्देन चोदने कृते व्यतिरिक्त इवानित्यत्वादिको धर्मो व्यवस्थापितो भव[4]ति। किङ्कारणमित्याह। **तथा बुद्धेः प्रतिभासनात्**। धर्म-

---

[1] Blo-la, [2] Bye-brag-tu-ma-phye-bar,

**धर्मधर्मिणोर्भेदात् भेदवतीव बुद्धिः प्रतिभाति, न वस्तुभेदाद्। तथाभूतानां भेदानां बाहुल्यचोदनया साध्यसाधनभेदश्च।**

(ग) अपोहस्य विजातीयव्यावर्त्तकत्वम्

**तत्स्वभावसमाश्रयैर्धर्मप्रतिभासभेदैः तत्स्वभावप्रतिपत्तये क्रियते।।**

**तत्स्वभाव(ग्रहाद्वा) धीस्तदर्थेयाप्यनर्थिका।**
**विकल्पिकाऽतत्कार्यार्थभेदनिष्ठा प्रजायते ।।७८।।**
**तस्यां यद्रूपमाभाति बाह्यमेकमिवान्यतः।**

---

शब्देन चोदने व्यतिरिक्तस्यैव धर्मस्य ग्राहिण्या बुद्धेः प्रतिभासनात्। **अविशेषेणे**ति सर्वभेदाप्रतिक्षेपेण**परमस्य** बाह्यस्याप्रतिक्षिप्तभेदान्तरं **स्वभावं धर्मितया व्यवस्थाप्य** शब्देन प्र**दर्श्यते**।

एतदुक्तम्भवति। **धर्मशब्देन संचोद्य व्यतिरिक्तं धर्ममिव** प्रदर्श्य[5] **पुनर्द्ध-**र्मिशब्देन संचोद्या**परं स्वभावं धर्मि**तया **व्यवस्थाप्य** तदेव बाह्यं वस्तु प्रदर्श्यते। अनित्यत्वं शब्दस्य न चाक्षुषत्वम् (।) अनित्यो न चाक्षुषः शब्द इति। भावभावाऽङ्शेनेति। भेदान्तरप्रतिक्षेपाप्रतिक्षेपेण **धर्मधर्मिणोर्भेदाद् भेदवतीव बुद्धि**र्विकल्पिका **प्रतिभाति** भिन्नाकारेव। न तु वस्तुनो भेदः। **न वस्तुभेदाद्** भेद[6]वती बुद्धिः (।) कुतः (।) **यथोक्तदोषाद्** अनुपकारिणि धर्मिणि धर्माणां पारतन्त्र्यायोगात्।

तथा साध्यमनित्यत्वं साधनं कृतकत्वमिति (।) साध्यसाधनभेदश्चेत्यत आह। **तथाभूते**त्यादि। **तथाभूताना**म्प्रतिक्षिप्तभेदान्तराणां **धर्मभेदानाम्बाहुल्य**चोदनया **वचनभेदः साध्यसाधनभेदश्च** क्रियत इति सम्ब[7]न्धः। 71a

**तस्य** ततस्ततो व्यावृत्तस्य वस्तुनः **स्वभावः समाश्रयो** येषान्तै**र्द्धर्मप्रतिभासभेदै-**र्विकल्पबुद्धिप्रति(वि)म्बैर्द्धर्मात्मकैः प्रतिभासभेदैरित्यर्थः। किमर्थं क्रियत इत्याह। **तत्स्वभावे**त्यादि। तस्यैव व्यावृत्तस्य वस्तु**स्वभावस्य प्रतिपत्तये** प्राप्तये वा।।

प्रणालिकया तेषाम्वस्तुप्रतिबन्धात् प्रकृतस्यैवार्थस्य सुखग्रहणार्थं संग्रहश्लोकमाह। **तत्स्वभावे**त्यादि[1]। तस्य वस्तुस्वभावस्यानुभवादूद्ध्वं या **धीः** प्रज्ञायते **विकल्पिका**। अपिशब्दो भिन्नक्रमः। **अनर्थिका**पि **तदर्थेव**। वस्तुविषयेव। अध्यवसायवशादतत्कार्येभ्यो यो **भेदस्तन्निष्ठा**। तदनुभवबलोत्पत्तेर्व्यावृत्तस्य च वस्तुनः सम्वादात्तन्निष्ठेत्युच्यते।।

**तस्यामि**त्थं भूतायाम्बुद्धौ योर्थाकारः दृश्यविकल्पयोरेकीकरणाद् **बाह्य-मिव**। सजातीयासु[2] व्यक्तिषु समम्प्रतिभासमान**मेकमिवान्यतो** विजातीयाद् व्या**वृत्तमिवाभाति**। तत्तु **व्यावृत्तमेव** बुद्धिरूपस्यालीकत्वात्। तद्बुद्धिरूपं **निस्तत्त्वं**

**व्यावृत्तमिव निस्तत्त्वं परीक्षानङ्गभावतः ॥७९॥**
**अर्था ज्ञाननिविष्टास्ते यतो व्या(वृत्तरूपिणः) ।**
**(तेन भिन्ना इवाभान्ति) व्यावृत्ताः पुनरन्यतः ॥८०॥**
**त एव; तेषां सामान्यसमानाधारगोचरैः ।**
447a **ज्ञानाभिधानै(र्मिथ्यार्थो व्यवहारः) प्रतन्यते ॥८१॥**
**स च (सर्वः) पदार्थानामन्योन्याभावसंश्रयः ।**
**तेनान्यापोहविष(यो वस्तुना तस्य चाश्रयः ॥८२॥**

---

निःस्वभावं। **किङ्कारणं** (।) **परीक्षानङ्गभावतः**। अर्थक्रियासमर्थमेव परीक्षाङ्गमतः **परीक्षानङ्गभावे**नार्थक्रियां प्रत्यसमर्थत्वादित्युक्तम्भवति। यतश्च बुद्धिप्रतिभासि रूपन्निस्तत्त्वमतस्तद्विष[3]यो व्यवहारो मिथ्यार्थ एव प्रवर्त्तते इत्याह ॥

**अर्था** इत्यादि। **ज्ञानविशिष्टा** इति विकल्पबुद्ध्यारूढास्ते **ज्ञानविशिष्टा**स्सन्तः यतो विजातीयाद् **व्यावृत्तिरूपिणो** व्यावृत्तिरूपवन्तः। यथानुत्पलाद् **व्यावृत्तिरूपिण** उत्पलार्थाः। **तेने**त्यन्ततो व्यावृत्तिरूपेणोत्पलत्वेना**भिन्ना इवाभान्ति न परमार्थतो** बुद्धिरूपस्यालीकत्वात्। एतेन सा[4]मान्यव्यवहारस्य निमित्तमुक्तं। **व्यावृत्ताः पुनरन्यतस्त एवे**ति (।) त एव ज्ञानविशिष्टा अर्था अन्यतो व्यावृत्तिरूपिणः सन्तः पुनरन्यतः सजातीयादपि व्यावृत्ता भान्ति। यथा त एव नीलभेदा अनीलात्। अतश्च व्यावृत्तिद्वयोपगृहीतस्यैकस्यार्थस्य भासनात् ॥

सामानाधिकरण्यबीजमुक्तं। तदेवाह। **तेषा**मित्यादि। **ते**[5]**षा**मिति बुद्धिप्रतिभासिनामर्थानां **व्यवहारः प्रतन्यत** इति सम्बन्धः। तेषामिति व्यवहारापेक्षा कर्मणि षष्ठी। किंविशिष्टो **मिथ्यार्थः**। कैः करणभूतैरित्याह। **सामान्ये**त्यादि। समानाधारत्वं **समानाधारः**। भावप्रधानत्वान्निर्देशस्य। सामान्यविषयैः सामानाधिकरण्यविषयैश्च ज्ञानाभिधानैः **सामान्यगोचरैः** सामा[6]**न्यव्यवहारः** प्रतन्यते। **इतरैः** सामानाधिकरण्यव्यवहारः ॥

**यद्यपि** शब्दज्ञानात्मक एवेह व्यवहारस्तथापि सव्यापारतामुपादाय ज्ञानशब्दयोः करणरूपता। तयोरेवार्थप्रकाशलक्षणा क्रिया व्यवहारत्वेन विवक्षितेत्यदोषः। यथा ज्ञानस्य प्रमाणत्वं फलत्वं वेति। **स च सर्वः** ज्ञानाभिधानलक्षणो व्यवहारः
71b **पदा**[7]**र्थानां** स्वलक्षणानां योन्योन्याभावः परस्परव्यच्छेदस्तत्**संश्रयः**। व्यावृत्तपदार्थानुभवद्वारेणोत्पत्तेः। **तेने**त्यन्योन्याभावसंश्रयत्वेन स व्यवहारो**न्यापोहविषय** उच्यते न त्वन्यव्यावृत्तिविषयत्वात्। विधिविषयत्वादस्य व्यवहारस्य ॥

**यत्रास्ति वस्तुसम्बन्धा) यथोक्तानुमितौ यथा ।**
**नान्यत्र भ्रान्तिसाम्येपि दीपतेजो मणौ यथा ॥८३॥**
**(तत्रैककार्योऽनेकोऽपि तद्कार्यान्यताश्रयैः) ।**
**एकत्वेनाभिधाज्ञानैर्व्यवहारं प्रतार्यते ॥८४॥**
**तथानेककृदेकोपि तद्भावपरिदीपने ।**
**अतत्कार्यार्थभेदेन (नानाधर्मा) प्रतीयते ॥८५॥**
**यथाप्रतीतिकथितः शब्दार्थोसावसन्नपि ।**
**सामान्याधिकरण्यञ्च वस्तुन्यस्य न संभवः ॥८६॥**

---

वस्तुलाभस्य च वस्तुप्राप्तेश्चाश्रयो न भवति व्यवहारः। न च सर्वः किन्तु **यत्र** व्यवहारेऽस्ति पारम्पर्येण तथा[1]भूत**वस्तुसम्बन्धः**। उदाहरणमाह। **यथोक्तानुमितौ यथेति**। **यथोक्तानुमितिः** पूर्वोक्तानुमानविकल्पः। **नान्यत्र** स्थिरादिविकल्पे तत्र पारम्पर्येणापि वस्तुसम्बन्धाभावात्। वस्तुनोऽस्थिरादिरूपत्वात्। अनुमानविकल्पस्येतरस्य च स्वप्रतिभासेनर्थेऽर्थाध्यवसायद् **भ्रान्तिसाम्येपि**। **दीपतेजो मणौ यथेति**। यथा मणितेजसि म[2]णिबुद्धिर्भ्रान्ता। तथा दीपतेजस्यपितुल्येपि भ्रान्तत्वे मणिप्रभा मणित्वेन गृहीता मणावधिगन्तव्ये सम्वादिका। न तु दीपतेजः। तद्वत् स्थिरादिविकल्पो सम्वादक इत्यर्थः॥

यदि ज्ञाननिविष्टानामेवार्थानां सामान्यादिव्यवहारः बाह्येष्वर्थेषु तर्हि सामान्यादिव्यवहाराभावात् प्रवृत्तिर्न स्यादित्यत आह। **तत्रे**त्यादि। **तत्र** शब्दो वाक्योपन्या[3]से। निर्द्धारणे वा। तत्र व्यक्तिष्वेककार्या व्यक्तयो निर्द्धार्यन्ते। **अनेकोप्येककार्यो** यथा घटभेदा एवोदकाहरणादिकार्यास्तदकार्याय तथाभूतकार्यनुकुर्वते। तेभ्योन्यताव्यावृत्तिः सा आश्रयो येषां **ज्ञानाभिधानात्तै**रनेकोपि पदार्थ **एकत्वेन व्यवहारम्प्रतार्यते**। सामान्यव्यवहारं प्राप्यत इति यावत्॥

तथेत्यनन्तरसा[4]मान्यव्यपेक्षया। **एकोप्यनेककार्यकृत्**। यथा घटश्च चक्षुर्विज्ञानोदकाहरणादिकार्यकृत्। **तद्भावदीपने**। अनेककार्यकर्तृत्वप्रकाशने। **अतत्कार्येभ्यो भेदेन** हेतुना। **नानाधर्मा** घटश्चाक्षुषः पार्थिव इत्यादि। तेन सामानाधिकरण्यविशेषणविशेष्यभावव्यवहारश्च बाह्येष्वेव दर्शितः॥

यदि बाह्येषु सामान्यादि[5]व्यवहारः पारमार्थिकस्तर्हि प्राप्त इत्याह। **यथाप्रतीतिकथितः** इति। विकल्पबुद्ध्यनुरोधेन **शब्दार्थः** सामान्यलक्षणः परमार्थतो**सावसन्नपि** यथाप्रतीतिकथितः। **सामानाधिकरण्यं** च यथाप्रतीतिकथितं। यस्माद् **वस्तुन्यस्य** शब्दार्थस्य सामानाधिकरण्यस्य च **न सम्भवः**॥

**धर्म्मधर्म्मिव्यवस्थानं (भेदोऽभेदश्च) यादृशः।**
**असमीक्षिततत्त्वार्थो यथा लोके प्रतीयते ॥८७॥**

**तन्तथैव समाश्रित्य साध्यसाधनसंस्थितिः।**
**परमार्थावताराय विद्वद्भिरवकल्प्यते ॥८८॥**

**संसृज्यन्ते न भिद्यन्ते स्वतोर्थाः पारमार्थिकाः।**
**रूपमेकमनेकञ्च तेषु बुद्धेरुपप्लवः ॥८९॥**

**भेदस्ततोऽयं बौद्धेऽर्थे (सामान्यं) भेद इत्यपि।**
**तस्यैव चान्यव्यावृत्या धर्मभेदः प्रकल्प्यते ॥९०॥**

**साध्यसाधनसंकल्पे वस्तुदर्शनहानितः।**

---

धर्मधर्मिव्यवहारश्च ज्ञानप्रतिभासि[6]न्यर्थं इति यत् प्रकृतन्तत्संग्रहार्थमाह। **धर्मे**त्यादि। अयं **धर्मो**ऽयं **धर्मी**ति **व्यवस्थान**न्तयोश्च **भेदो**ऽस्यायं धर्मः कृतकत्वादिलक्षणः। अ**भेदः** कृतकोयमिति **यादृशः**। अयं च विकल्पारोपितत्वात्। **असमीक्षिततत्त्वार्थः**। अनपेक्षितस्तत्त्वार्थो वस्त्वर्थो येनेति विग्रहः। **यथा लोके** 72a बुद्ध्यारूढोप्यध्यवसिततद्भावतया **प्रतीयते**[7] ॥

**तं धर्मा**दिविभागन्**तथै**वेति यथालोकप्रतीतिः **साध्यसाधनसंस्थितिर्विद्वद्भिरवकल्प्यत** इति सम्बन्धः। किमर्थं। **परमार्थावताराय**। अनित्यादिवस्तुस्वभावस्यावगाहनाय ॥

किं पुनः कारणमेकत्वादिव्यवहारस्य वस्तुन्यसम्भव इत्याह। **संसृज्यन्त** इत्यादि। **पारमार्थिका अर्थाः स्वतो न संसृज्यन्ते**। ततो न सामान्यव्यवहारो वस्तुनि। **न भि[1]द्यन्ते** कृतकत्वादिधर्मैः प्रत्येकं तस्य वस्तुनोमेकत्वायोगात्। अतश्च **ते**ष्वर्थेषु बहुषु रूप**मेक**मेकस्मिन्नर्थे**ऽनेकं रूपं** यदध्यवसीयते तद्**बुद्धे**र्विकल्पिकाया **उपप्लवो** भ्रान्तिः। यतश्च न संसृज्यन्ते न भिद्यन्ते पारमार्थिका अर्थाः ॥

ततः कारणात् **सामान्य**मिदं बहूनां। तथा धर्माणां धर्मिणां च **भेद इत्यपि** योयम्**भेदो** नानात्वव्यवहारः स **बौ[2]द्धेर्थे**। न बाह्ये स्वलक्षणे। बुद्धिप्रतिभासस्यालीकत्वात् (।) कथन्तर्हि तत्र स्वलक्षणे कृतकत्वादिधर्मभेद इति चेदाह। **तस्यैव चे**त्यादि। **तस्यैव** स्वलक्षणस्या**न्यव्यावृत्त्या धर्मभेदः प्रकल्प्यते** ॥

कस्मात् कल्पितधर्मभेदद्वारेण गम्यगमकभावो न वस्तुदर्शनमात्रेणेत्यत आह। **साध्ये**त्यादि। इदं **साध्य**मिदं **साधन**मित्यस्मिन् **संकल्पे वस्तुद[3]र्शनहानितः**। यद्वा प्रत्यक्षवदनुमानेन सामान्यविशिष्टं स्वलक्षणमेव कस्मान्न गृह्यत इत्यत आह।

**भेदः सामान्यसंसृष्टा ग्राह्या नात्र स्वलक्षणम् ॥९१॥**
**समानभिन्नाद्याकारैर्न तद् ग्राह्य कथञ्चन ।**
**भेदानां बहुभेदानां तत्रैकस्मिन्नयोगतः ॥९२॥**
**तद् रूपं सर्वतो भिन्नं तथा तत्प्रतिपादिका ।**
**न श्रुतिः कल्पना वास्ति सामान्येनैव वृत्तितः ॥९३॥**

इति संग्रहश्लोकाः ।

**किं पुनः स्वलक्षणे शब्दा नियुज्यन्त इति चेत् ।**

---

**साध्येत्यादि**। साध्यसाधनसंकल्पे वस्तुदर्शनहानितः। कुतः स्वलक्षणस्य सामान्य-विशिष्टस्य ग्रहणं। **भेदः सामान्यसंसृष्टो ग्राह्य** इत्याचार्य दिग्नाग प्रभृतिभिः सामान्यसंसृष्टस्य स्वलक्षणस्य ग्रहणं प्रतिज्ञातमित्या[4]शङ्कामपनयन्नाह। **भेद** इत्यादि। **भेदः सामान्यसंसृष्टः प्रतीयत** इत्यत्रापि वचने ग्राह्यं न **स्वलक्षणमेव** निर्दिष्टमिति नैवम्बोद्धव्यमित्यर्थः। किन्तु बाह्या एव भेदास्तेनान्यापोहलक्षणेन सामान्येन संसृष्टा अध्यवसीयन्ते न तु गृह्यन्त इति तत्रापि बोद्धव्यं।

अन्ये तु **भेदः सामान्यसंसृष्टो ग्राह्य** इति पुल्लिङ्गे[5]न पठन्ति। तत्रायमर्थो भेदः। **सामान्यसंसृष्टो** ग्राह्य इत्यत्रापि वचने। न स्वलक्षणं बोद्धव्यं॥

किम्पुनः कारणन्तत्रैव बोद्धव्यमिति चेदाह। **समाने**त्यादि। अनेकस्मिन्नेकाकारः **समाना**कारः। एकस्मिन्ननेकधर्मत्व**म्भिन्ना**कारः। **आदिशब्दाद्** धर्म-धर्म्याकारपरिग्रहः। **न तत्** स्वलक्षणं **ग्राह्यं कथंचन**। किं कारणं (।) तत्रैकस्मिन् स्वलक्षणे[6] कृतकत्वानित्यत्वादिरूपेण **बहुभेदा**नान्धर्माणां किम्विशिष्टानाम्**भेदा-नाम्**वस्तुरूपाणान्**तत्रैकस्मिन्** स्वलक्षणे**ऽयोगात्**। न ह्येकस्य वस्तुरूपाणि बहूनि युज्यन्ते निरङ्शत्वात् स्वलक्षणस्य ॥

उपसंहरन्नाह। **तद्रूप**मित्यादि। **तत्**तस्माद **रूपं** स्वलक्षणं **सर्वतो भिन्न**मसाधारणन्**तथा** तेनासाधारणेन रूपेण तस्य स्वलक्षणस्य न[7] **प्रतिपादिका श्रुतिः** शब्दो **नास्ति**। **कल्पना वास्ति**। नेति प्रकृतं। असाधारणेन स्वरूपेण स्वलक्षणस्य ग्राहको नास्तीत्यर्थः। किं कारणं (।) **सामान्येनैव** शब्दस्य कल्पनायाश्च **वृत्तितः**॥ 72b

तत्प्रतिपादिका न श्रुतिरस्तीति ब्रुवता स्वलक्षणे शब्दा न नियुज्यन्त इत्युक्त-मतश्चोदयति।

**किम्पुन**रित्यादि। संकेतेन विषयीकृताः **संकेतिनः**। तमाहुः शब्दा(ः।) व्य[1]**व-हाराय** संकेतः **स्मृतः**। **तदा** व्यवहारकाले **तत्स्वलक्षणन्नास्ति** यत्र संकेतः कृतः।

**शब्दाः संकेतितं प्राहुर्व्यवहाराय स स्मृतः ।**
**तदा स्वलक्षणंनास्ति सङ्केतस्तेन तत्र न ॥९४॥**

**न हि शब्दैः संकेतितार्थप्रदर्शने संकेतः। अपि नाम पश्चात्काले कृतः संकेतः** 447b **अस्माच्छब्दावेतदर्थप्रतिपत्तिः इति मत्त्वा व्यवहारार्थं उपयुज्यत**[7] **इति चेत्। प्राक् स्वलक्षणे कृतसंकेतः शब्दः पश्चाद् योज्यत इति न युक्तम्। तस्य व्यक्तेर्देशकाल-भेदेष्वनास्कन्दात्। एवं चेत् स्वलक्षणे नास्ति संकेतकरणम्।**

**अथ व्यतिरिक्ताव्यतिरिक्तव्यापि शब्दैरुच्यते, तत्र व्यवहारकालाभावदोष इति चेत्। न। एवम्।**

**अपि प्रवर्तेत पुमान् विज्ञायार्थक्रियाक्षमान् ।**
**तत्साधनायेत्यर्थेषु संयोज्यन्तेऽभिधायकाः ॥९५॥**

**न खलु लोकोऽसंकेतयन् शब्दानप्रयुञ्जानो वा दुःखितः स्यात् व्यसना (पन्नः।) अथ किमिति चेत्। सर्व एवावधेय आरम्भः फलार्थः। निष्फलारम्भस्य**[3] **उपेक्षणी-**

---

एकस्यापि स्वलक्षणस्य क्षणिकत्वात् कालान्तरे तेनैव रूपेणानुगमो नास्त्यक्षणिकत्वे वा संकेतः ज्ञानाभावादेव तद्विषयत्वस्य कालान्तरेनुगमो नास्ति किमुत देशकाल-भिन्नेषु स्वलक्षणेषु। **तेन** कारणेन **तत्र** स्वलक्षणे **संकेतो न** क्रियत इत्यध्या[2]हारः।

**न ही**त्यादिना व्याचष्टे।

**अपि नामे**ति कथन्नु नाम। **प्रागि**ति संकेतकालकृतसम्बन्धस्य शब्दस्येति सम्बन्धः। एकत्रैकस्मिन् **स्वलक्षणे पश्चा**दिति व्यवहारकाले। किङ्कारणं (।) **न युक्त**मित्याह। **तस्ये**त्यादि। **तस्ये**ति संकेतकालदृष्टस्य व्यवहारावस्थाना-दिषु दे**शकालभेदेष्वनास्कन्दना**त्। अनुगमात्। न ह्येकत्र दृष्टो भेदोन्य[3]त्र सम्भवति॥

**व्यतिरिक्त**मिति वै शे षि क दर्शने**नाव्यतिरिक्तं** सां ख्य दर्शनेन। समान-जातीयव्यक्ति**व्यापनाद्** व्यापि सामान्यं। **तत्त**स्मा**न्न व्यवहारकालाभावदोषः**। व्यवहारकाले शब्दार्थस्याभावदोषो नास्ति। सामान्यस्य शब्दार्थत्वात्तस्यैवैकत्वेन संकेतव्यवहारकालयोर्विद्यमानत्वात्।

कथं नामेत्यस्मिन्नर्थे **अपि**शब्दः[4] (।) व्यवहारकाले शब्दादुच्चरिता**दर्थ-क्रियाक्षमान्** अर्थान् **विज्ञाय तत्साधनाया**र्थक्रियासाधनाय कथन्नाम प्रवर्त्तेत **पुमा**नित्यनेनाभिप्राये**णार्थेषु संयोज्यन्तेऽभिधायकाः** शब्दाः।

**न खल्वि**त्यादिना व्याचष्टे। फलनिरपेक्षं क्वचित् तात्पर्यं **व्यसनं**। यदयं लोको **संकेतयन्** संकेतमकुर्वाणः संकेतितेर्थे **शब्दान् प्र**[5]**युञ्जानो** वा। **सर्व एवे**ति

**यत्वात्। तदयं क्वचित् शब्दं नियुञ्जानः किंचित् फलमेवेहितुं युक्तः। तच्चेत् सर्वमिष्टानिष्टप्राप्तिपरिहारलक्षणम्। तेनायं इष्टा[4]निष्टसाधनासाधनं कृत्वा, तत्र प्रवृत्तिं निवृत्तं वा कुर्यां कारयेयं वेति नियोग आद्रियेत शब्दान् वा नियुंजीत। अन्यथोपेक्षणीयत्वात्** तत्र[5] **जातिरनर्थक्रियायोग्या।**

**न हि जातिर्वाहदोहादौ क्वचिदपि प्रत्युपस्थिता। न वा तादृशप्रकरणाभावे लोकव्यवहारेषु शब्दप्रयोगः। व्यक्तेरशक्यचोदनत्वात्**[6] **लक्षितलक्षणा जातिरुच्यत**

---

शाब्दोन्यो वा**वधेयो** ग्रहणार्ह **आरम्भो** व्यवहारः **फलार्थः**। न तु निष्फलः (।) कि-ङ्कारण (।) **निष्फलारम्भस्य** प्रेक्षापूर्वकारिभि**रुपेक्षणीयत्वा**दग्राह्यत्वात्। **तदिति** तस्मात्। **अयं** प्रतिपत्ता **क्वचि**दभिमतेर्थे **नियुञ्जानः** संकेतयन् **फलमेवेहितुं युक्त** इति प्रयोजनमेवापेक्षितुमर्हतीति यावत्[6]। **तच्चेति** फलमिष्टस्याप्तिलक्षण-मनिष्टस्य च त्यागलक्षणमिति यथायोगं सम्बन्धः। ये**नेष्टानिष्टप्राप्तिपरिहार**-रूप एव पुरुषार्थोभिप्रेतस्**तेनायं** पुरुषस्तयो**रिष्टयोः** फलयोः **साधनमसाधनं** चार्थं ज्ञात्वा **तत्रे**ष्टसाधने **प्रवृत्ति**मनिष्टसाधने च **निवृत्तिं कुर्यां कारयेयम्वा** परानित्यने-नाभिप्रायेण शब्**दान्नियुञ्जीत** प्रयोक्ता[7] श्रोतापि **नियोगे वाद्रियेत**। 73a

युक्तन्तावत् परं व्यवहारयेयमिति शब्दनियोगः। शब्दनियोगस्य पराङ्गत्वात्। स्वयन्तु प्रवृत्तिनिवृत्तिकारणे कः शब्दस्योपयोगः।

सत्यं (।) केवलं शब्दप्रयोगाभ्यासात् स्वयमपि प्रतिपद्यमानः कदाचिदेवं प्रतिपद्यत इत्युपन्यासः कृतः। **अन्यथोपेक्षणीयत्वा**दिति फलमन्तरेण शब्दनियोग-स्योपेक्षणीयत्वात्। **तत्रै**वं व्यवस्थिते न्याये **जाति[1]रनर्थक्रियायोग्या**ऽतो न शब्द-विषया।

तद्व्याचष्टे **न ही**त्यादि। **न जातिर्वाहदोहादिकं** कर्त्तुं समर्था (।) ततश्च वाहदोहाद्यर्थिनो जातिचोदना निष्फलेति न तदर्थः **शब्दप्रयोगः**।

यापि स्वप्रतिपत्तिलक्षणार्थक्रिया जातेरुपवर्ण्यते। न तदर्थम्पुरुषः प्रवर्त्तते शब्दप्रयोगादेव तस्याः सिद्धत्वात्। जातिमात्रप्रतिपत्त्यर्थं शब्दप्रयोगो भविष्य-तीति चेदत आह। **न वे**त्यादि। **तादृश**मिति वाहदोहादि**प्रकरणं** निष्फलस्य शब्दप्रयोगस्योपेक्षणीयत्वादित्युक्तत्वात्। जातौ च वाच्यायां सत्यां। गामानये-त्यत्र वाक्येन वाक्यार्थप्रतीतिः स्यात्। गोत्वस्य क्रियात्वेन्वयाभावात्। नापि लक्षि-तलक्षणया वाक्यार्थप्रतीतिरप्रतीतेर्न हि पदेभ्यस्तावत् सामान्यानां प्रतीतिः (।) पुनस्तेभ्यो विशेषाणां विशेषेभ्यश्चान्वयस्येत्येवं विलम्बितरूपा वाक्यार्थ[3]प्रतीतिः।

नन्वपोहेपि वाच्ये कथं बाह्यार्थप्रतीतिर्नीरूपत्वादपोहस्य (।) न च ज्ञानांशे

**इति चेत्। अशब्दाचोदिते सम्बन्धे सत्यपि कथं प्रवर्तते? न हि कश्चित् दण्डं छिन्धी-**
448a **त्युक्ते दंडिनं छिनत्ति। नाऽपि असम्भवात् व्यक्तौ[7] प्रवृत्तिः। तथा हि असंबद्धप्रलापी**

---

शब्दनिवेशो युक्तोऽनर्थक्रियाकारित्वात् (।)

सत्यं (।) केवलमर्थक्रियाकारित्वेनैव प्रतिभासनात्तत्र शब्दनिवेशो युक्त इति प्रतिपादयिष्यते।

न त्वेवमपि तस्य ज्ञानाङ्शस्य स्वलक्षणत्वात् कथं शब्दवाच्यत्वं।

अत्रोच्यते। बाह्याभिन्नस्तावत् स्वाङ्शो विकल्पे प्रतिभासत एव (।) न तावदस्य विकल्प[4]ग्राह्यत्वात् प्रतिभासः सर्वात्मना निश्चयप्रसङ्गादनभ्युपगमाच्च।

नापि विकल्पेन बाह्यात्मतयाध्यवसाय एवास्य ग्रहणं यथावस्थितेन स्वरूपेणाग्रहणादग्रहणे च कथन्तत्र प्रतिभासः। ज्ञानस्वलक्षणत्वे तु स्वांशस्य सम्वित्स्वभावत्वात् प्रतिभासो युक्तः। तेनाविद्यारूपस्य स्वांशस्य विकल्पस्य च यदि ज्ञानस्वलक्षणत्वं नेष्यते तदा प्रतिभास एव न स्यादे[5]वमज्ञानरूपेण च विकल्पेन कथं स्वाङ्शस्य परिच्छेदोस्य ज्ञानधर्मत्वात्। तस्माज्ज्ञानस्वलक्षणत्वादेव स्वांशस्य विकल्पे प्रतिभासः स बाह्याभिन्नो विकल्पविषयो व्यवस्थाप्यते। तस्य सम्विदितरूपस्यैव बाह्याभेदेन विकल्पेनाध्यवसीयमानत्वादत एव विकल्पः सामान्यविषय उच्यते न स्वलक्षणविषयोऽर्थस्वांशयोरेकस्यापि स्वरूपेणाग्रहणात्[6]। तेन स्वांशस्य ज्ञानस्वलक्षणस्यापि बाह्यात्मतयाध्यस्तस्य सामान्यरूपत्वं। तथा च वक्ष्यति।

> "ज्ञानरूपतयार्थत्वे सामान्ये चेत् प्रसज्यते।
> तथेष्टत्वादपोह्यर्थरूपत्वेन समानते"ति। (प्र० वा० ३।९)

तस्य च शब्दवाच्यत्वं युक्तमेव।

**लक्षितलक्षणेत्यादि** परः। सत्यं न सामान्यमर्थक्रियाकारि किन्तु व्यक्तिरेव
73b केवलं **व्यक्तेरशक्यचोदनत्वात्** कारणात् सामान्ये नियुक्तः शब्दः[7] सामान्यं लक्षयति (।) तेन सामान्येन शब्दलक्षितेन सम्बन्धाद् व्यक्तिरपि लक्ष्यत इति।

तदेतदप्रतीतिकं। न हि गोशब्दादुच्चरिताद् गोत्वं प्रतीयते गौरपि तु गौरेवावसीयते। न नामैवन्तथाप्युच्यते। **अशब्दचोदि**तेत्यादि।

यदि नाम जातितद्वतोस्सम्बन्धस्तथाप्य**शब्दचोदिते** व्यक्तिविशेषे **कथं प्रवर्त्तते** (।) नैव। दण्डदण्डिनोस्सत्यपि सम्बन्धे **न हि कश्चित्** प्रे[2]क्षापूर्वकारी **दण्डञ्छिन्धीत्युक्ते दण्डिनञ्छिनत्ति**। अशब्दचोदितत्वात्तथा जातौ चोदितायां **व्यक्तौ प्रवृत्तिर्न** युक्तेत्यर्थः।

जातौ वाहदोहादीनामसम्भवादशब्दचोदितायामपि **व्यक्तौ** **प्रवृत्तिर्भ-**

**स्यात्। न पुनस्ततोऽन्यत्र प्रवृत्तिः। बलीवर्ददोहचोदनावत्। न चार्थान्तरचोदनेऽर्थान्तरं लक्ष्यते। सत्यपि सम्बन्धे[1] शब्देन दण्डिनो न प्रतीतिः।** अनियतसम्बधित्वात् **तत्र प्रवृत्तिर्न भवतीति चेत्।** तत् तुल्यं जातावपि। **व्यक्तीनां व्यंजने जातिः केवलं स्थित्यर्था। भ्रात्रादिश[2]ब्दास्तु सम्बन्धिशब्दत्वात्** आक्षिपेयुः परम्। **न तथा गोत्वादिशब्दाः सम्बन्धवाचिनः।** अपेतव्यक्तीनां जातीनामपि तच्छ्रुतिभ्यो[3]

---

विष्यतीति चेदाह। **नापी**त्यादि। केवलमर्थान्तरसम्भवि कार्यमसम्भविन्यर्थे चोदयन् वक्ता प्रतिपाद्यस्या**सम्बद्धप्रलापी स्यात्।** न पुनस्ततोसमर्थाच्चोदितात् समर्थे[2] प्रवृत्ति**र्बलीवर्ददोहचोदनावत्** (।) न हि केनचिद् बलीवर्दन्दोग्धीत्युक्ते तत्र दोहा**सम्भवात्**। बलीवर्दा**दन्यत्र** सम्भवायां गवि दोग्धुं **प्रवर्त्तते** श्रोता (।) केवलन्तस्यै**वम्भवत्य (सं)बद्धप्रलाप्ययं** वक्तेति।

स्यान्मतं (।) बलीवर्दचोदने सम्बन्धाभावात् मा भूत् स्त्रीगव्यां प्रवृत्तिः। जातौ तु चोदितायां सम्बन्धात् तद्व्यक्तौ प्रवृत्तिर्भविष्यतीत्याह। **न चे**त्यादि। **अर्थान्त**रस्य[3] सामान्यस्य सम्बन्धस्यापि **चोदनेनार्थान्त(र)स्येति व्यक्तेः**।

नन्वशब्दचोदिते सत्यपि सम्बन्ध इत्यादिनोक्त एवायमर्थः।

सत्यम् (।) अधिकविधानार्थन्तु पुनः प्रस्तावः। तदेव पूर्वपक्षयति। **अनियते**त्यादि। **अनियतः सम्बन्धो** यस्य दण्डस्य स तथोक्तः। तथा हि दण्डिनमन्तरेणापि दण्डे विद्यते तद्भावस्तस्मात्। **तत्रे**ति दण्डिनि। **नेति चे**दिति दण्डे चो[4]दिते **प्रवृत्तिर्न** भवतीत्यर्थः। जातौ तु चोदितायां नियतसम्बन्धाद् व्यक्तौ प्रतीतिर्भवतीति भावः।

**तदित्यादि** सि द्धा न्त वा दी। **तदि**त्यनियतसम्बद्धत्वं **तुल्यं जातावपि**।

कथमिति चेदाह। **व्यक्तीमा**मित्यादि। स्यादेतद् (।) यथा भ्रात्रादिशब्दाः स्वार्थमभिदधाना द्वितीयमाक्षिपन्ति तथा जातिशब्दा इत्यत आह। **भ्रात्रादिशब्दास्त्व**त्यादि। आदिशब्दात् पुत्रादि[5]शब्दाः। **सम्बन्धिशब्द**वाच्य**त्वात्** सम्बन्ध्यन्तरापेक्षैव तेषां व्यवस्थापितत्वादिति यावत्। **आक्षिपेयुः परमिति** द्वितीयं भ्रात्रादिकं। आक्षेपश्च द्वितीयसम्बन्धाकारविकल्पजननं। न तूपस्थापनमेव विनष्टेपि सम्बन्धिनि विकल्पोत्पत्तेः। **न तथे**ति वैधर्म्यकथनं। यदि सम्बन्धिवाचिन्यः स्युस्तदायन्दोषः स्यादित्याह। **अपेते**त्यादि। **अपे**ता विन[6]ष्टा **व्यक्त**यस्सम्बन्धित्वेन यासां पा ण्ड वा दि **जाती**नान्तासामपि **तच्छ्रुतिभ्यो** जातिवाचकेभ्यः शब्देभ्यो **नित्यम**पेतव्यक्तिसम्बन्धित्वेनाप्य**नुगमप्रसंगः**। एवं ह्यपेतव्यक्तिसम्बन्धित्वेन तासामनुगमो यद्यपेतानामपि व्यक्तीनामनुगमः स्यात्। यद्वा जातीनां सम्बन्धिभ्यो या अपेता व्यक्तयस्तासां तच्छब्देभ्यो नित्यम**नुगमनप्रसङ्गात्**।

**नित्यमनुगमप्रसंगात्।**

**सर्वदा तत्सम्बन्धयोग्यताप्रतीतेरिष्टमेवेति चेत्। अथ सर्वदा गोशब्दादप्रवृत्तिः। सहिता[4]सहितावस्थयोर्विशेषेणानाक्षेपात्। व्यक्तिसम्बन्धिन्या जातेश्चोदनाद् अदोष इति चेत्। अथ सापि तद्विशेषणत्वेन आक्षिप्तैवेति[5] तद्वानभिधेयः स्यात्।**

**न च जातितद्वतोः सम्बन्धः कश्चित्, अन्योन्यं जन्यजनकत्वेनानुपकारात्। ततो लक्षणमप्ययुक्तम्।[6] एवं जातौ न शब्दयोगः फलाभावात्। एवं तु—**

तद्वानर्थक्रियायोग्या (जातिः) तद्वानलं;

---

74a **सर्वदेत्या**[7]दि परः। **सर्वदेति** व्यक्त्यपायानपायकालयो**स्तत्सम्बन्धयोग्यताप्रतीतेरिष्टमेव** व्यक्त्यनुगमन**मिति चेत्**। एतत्कथयति (।) यथा भ्रात्रादिशब्दाः स्वार्थमभिदधानाः सम्बन्धिनमविशेषणात् क्षिपन्ति तथा जातिशब्दा अपीति।

उत्तरमाह। **सर्वदेति**। **सर्वदेति** व्यक्त्यपायाऽनपायकालयो**र्गोशब्दादप्रवृत्ति**र्वाहदोदादियोग्ये व्यक्तिविशेषे। किङ्कारणमिति[1] चेदाह। **सहितेत्यादि**। सप्तमीद्विवचनमेतत्। जातेर्व्यक्ति**सहितासहितावस्थयोर्विशेषेणा**र्थक्रियाक्षमस्य विशेषस्या**नाक्षेपात्**।[2] एतदुक्तम्भवति। यथाऽतीतानागतव्यक्तेः शब्दार्थरूपतया जातिशब्देनाक्षेपस्तथा वर्त्तमानाया व्यक्तेरुभयत्र शब्दार्थरूपतया प्रतिभासनस्याविशेषणादिति।

**व्यक्तिसम्बन्धिन्या जातेश्चोदनाद्** व्यक्तौ प्रतीतिर्न प्राप्नोतीत्यय[2]**मदोष इति चेत्**॥

भवत्वेवं किन्तु **सापि** व्यक्ति**स्तद्विशेषणत्वेन** जातिविशेषणत्वेन जातिचोदनाया**माक्षिप्तैवेति** न जातिः केवलाभिधेया। किन्तु **तद्वानभिधेयः स्या**दिति पक्षान्तरपरिग्रहः स्यात्। तत्र चानन्तरमेव दोषम्वक्ष्याम इत्याकूतं॥

**जातितद्वतोः** सम्बन्धमभ्युपगम्यैतदुक्तं (।) **सम्बन्ध एव** तु नास्तीत्याह। **न चेत्यादि**। किं कारणम् (।) **अन्योन्य**[3]म्परस्परम**जन्यजनकत्वेनानुपकारात्**। **तत** इति सम्बन्धाभावाज्जातिचोदनया व्यक्तेर्ल**क्षणमप्युक्तं**। **फलाभावा**दित्यर्थक्रियाया अभावात्।

व्यक्त्यभिन्नसामान्यवादिनोपि प्रत्यक्षवच्छाब्दे ज्ञाने व्यक्तिप्रतिभासः स्यात्। भेदांशेन तु तस्यापि लक्षणमयुक्तं। **एवमित्यादिना** पक्षान्तरमाशङ्कते। **तद्वानिति** जातिमान्। **अलमिति** सम[4]र्थः। **तत्रेति** तद्वति। **स चेति** सिद्धान्तवादी।

अस्यैव व्याख्यानं **स च शब्द** इत्यादि। **तत्रेति** व्यक्तौ **किमन्येन** सामान्येन

**तत्र शब्दयोग इति चेत्—**

**स च।**

**साक्षान्न योज्यते कस्माद्;**

**व्यक्तौ शब्दयोगेन फलवच्चेत्[7], स च शब्दः कस्माद् व्यक्तिषु साक्षान्न योज्यते। तत्र किमन्येन व्यवधिना?** 448b

**आनंत्याच्चेदिदं समम् ॥९६॥**

**स्यादेतत्। तद्वत्यो व्यक्तयो हि आनन्त्यात् शब्दाभिधानेऽसमर्थाः।[1] एवं चेत् इदमानन्त्यं तद्वत्यपि समम्। जातिविशिष्टा व्यक्तय एव वक्तव्या इति अवश्यं (तत्र) सम्बन्धः करणीयः, अकृतसम्बन्धस्यानभिधानात्।[2] स च न शक्यः।**

**तत्सम्बन्धिनि करणात् तत्रापि कृत एवेति चेत् उक्तमत्र। सत्यपि सम्बन्धे एकत्र कृताद् अन्यत्राप्रतीतौ हि न च सम्बन्धोऽस्तीति ॥९६॥**

**अपि[3] च।**

---

**व्यवधिना** व्यवधायकेन कल्पितेन।

"आनन्त्याच्चे"ति परः।

"इदमानन्त्यं सम"मित्युत्तरं।

एतदेव व्याचष्टे। **स्यादेत**दित्यादिना। **तद्वत्यपी**ति जातिमत्यपि। यस्माज्जात्यादिविशिष्टाः सत्यो **व्यक्तय एव** वक्तव्या इति हेतोरव[5]**श्यन्तत्रे**ति व्यक्तिषु शब्दस्य **सम्बन्धः करणीयः** (।) कस्माद् (।) **अकृतसम्बन्धस्यानभिधानात्**। कर्त्तरि षष्ठी। कृतः सम्बन्धो यस्य शब्दस्य। तेनानभिधानादित्यर्थः। कर्मणि वा षष्ठी। अकृतसम्बन्धस्य वार्थस्य शब्देनानभिधानात्। **स चे**ति सम्बन्धः। तद्वता सह **न शक्यं** कर्त्तुमानन्त्यात्। तस्मादयुक्तोयम्पक्षः।

**तत्सम्बन्धिनि**। व्यक्तिसम्बन्धिनि सामान्ये[6] शब्दस्य सम्बन्ध**करणा**द्धेतोस्**तत्रापि** जातिसम्बन्धिभ्यां व्यक्तौ सम्बन्धः **कृत एवेति चेत्**।

**उक्तमत्रो**त्तरं (।) सामान्यस्य **सत्यपि सम्बन्धे एकत्र** जातौ **कृतात्** संकेता**दन्यत्र** व्यक्ता**वप्रतीति**र्न च जातितद्वतोः सम्बन्धोस्तीत्येतच्चोक्तं। न हि सत्यपि सम्बन्धे दण्डशब्दाद् दण्डिनि प्रतिपत्तिः (।) तथा **न च** जातितद्वतोः कश्चित्**सम्बन्धोस्तीति** सम्प्रत्युक्तत्वात् ॥[7]

एवन्तावत् **सर्वभावा** इत्यादिना वार्त्तिककारः स्वाभिमतं विधिशब्दलिंगविषयमाख्याय संप्रति येनाभिप्रायेणाचार्य दिग्नागेन भेदलक्षणं सामान्यमुक्तन्त- 74b

**तत्कारिणामतत्कारिभेदसाम्ये न किं कृतः।**

**यामर्थक्रियामधिकृत्य अर्थेषु शब्दान् नियुंक्ते। तत्कारिणामर्थानामन्येभ्यो भेदात्, तेषां तत्रैवाभेद इति किन्न शब्दः प्रयुज्यते ?**[4]

**तद्वद्दोषस्य साम्याच्चेदस्तु जातिरलं परा ॥९७॥**

**स्यादेतत्। अन्यस्माद् व्यावृत्तेऽपि शब्दार्थे न तद्(वत्)पक्षाद् विशेषो व्यावृत्तिविशिष्टस्य तद्वतोऽभिधानात्। को हि व्यावृत्तिजातिव्यावृत्तिजातिमदित्यत्र विशेषः ? तद्वद् दोषोऽपि स्याद्।**

**अस्तु नाम जातिरन्या। जातिमपि हि अभ्युपगच्छताऽवश्यं वस्तूनि**[6] **अभ्युपगन्तव्यानि, तदभावेऽस्या अपि अभावप्रसंगात्। एकस्माद्**

---

दर्शयितुं पृच्छति। **अपि चे**त्यादि। एवम्मन्यते। यथा गोशब्दादप्रतीयमाने गोत्वे गोशब्दः संकेत्यते तथा। **तत्कारिणां** विवक्षितार्थक्रियाकारिणाम**तत्कारिभ्यो** ये विवक्षिता[1]र्थक्रियाकारिणो न भवन्ति तेभ्यो यो **भेद**स्तेन **सामान्यं** सर्वेषान्तत्कारिणामतत्कारिभ्यो भिन्नत्वादतस्तस्मिन्**भेदसाम्ये** अन्यापोहलक्षणे **किन्न कृतः** कस्मात् संकेतो न कृत इति पृच्छति परं। एतदेवाह। **यामर्थक्रिया**मित्यादि। दाहपाकादिलक्षणस्यार्थस्य क्रियां निष्पत्ति**मधिकृत्या**भिप्रेत्यायं पुरुषो**र्थे**ष्वभिप्रेतार्थक्रियाकारिष **शब्दान्नि**[2]**युङ्क्ते** प्रयुङ्क्ते। **तत्कारिणा**मभिप्रेतार्थक्रियाकारिणा**मन्येभ्यो**ऽतत्कारिभ्यो **भेदात्** कारणात् तत्कारिणः सर्वविजातीयव्यावृत्ता अभिन्ना भवन्ति। तत **एषामर्थानान्तत्रैवाभेद इति** अन्यव्यावृत्तिलक्षणे **किन्न शब्दः प्रयुज्यते**। व्यावृत्तिविशिष्टस्यापि संकेतवशात् प्रतीतिः स्यादिति प्रश्नाभिप्रायः।

**तद्वदि**त्यादि। जातिमत्पक्षे यो दोष आचार्य दिग्नागेनोक्त[3] "स्तद्वतो नास्वतन्त्रत्वादि"त्यादिना यस्तद्वद्**दोषस्तस्य साम्या**त्तस्य दोषस्यावताराद् भेदेन्यव्यावृत्तिलक्षणे शब्दो न नियुज्यते। **अस्त्वयन्दोष** इत्यभ्युपगच्छति। **नैवायन्दो**षोस्तीति प्रतिपादितमभ्युगम्य त्वेवमुक्तं। **जातिरलम्परा**। जातिस्त्वन्या न युक्तेत्यर्थः।

**स्यादि**त्यादिना व्याचष्टे। **अन्यस्माद्** अतत्कारिणो **व्यावृत्तेपि** वस्तुनि **शब्दार्थे**भ्यु[4]पगम्यमाने। **तद्वत** इति व्यावृत्तिमतः। न **तद्वत्पक्षादस्य** व्यावृत्तिमत्पक्षस्य **विशेषः**। एतदेवाह। **को ही**त्यादि। त्वया व्यावृत्तिरित्युक्तं परेण जातिरित्यादि। **अत्र** वाच्ये **को विशेषः** (।) नैव कश्चिदन्यत्र शब्दभेदात्॥

**अस्तु नामेति** सिद्धान्तवादी। **जातिरन्येति** वस्तुभूता। किम्पुनस्तुल्ये दोषे व्यावृत्तिरङ्गीक्रियते न वस्तुभूता जातिरित्याह। **जाति**[5]**मपि ही**त्यादि। **तदभाव**

**भेदस्तदन्येषामभेदः, तद्विशिष्टेष्वर्थेषु प्रतिपत्तिरस्तु। सर्वथा दोषपरिहा[7]रस्य** 449a
**कर्त्तुमशक्यत्वात् अर्थान्तराभ्युपगमे हि प्रयोजनाभावात्। तदर्थस्यान्येन सिद्धेः, तदभ्युपगमस्याऽपि अवश्यंभावात्॥**

**अपि च।**

**तदन्यपरिहारेण प्रवर्तेतेति च (ध्वनिः)।**
**(उच्यते) तेन तेभ्यो(स्या) व्यवच्छेदे कथञ्च सः॥९८॥**

**शब्दं प्रयुंजान एषोऽर्थेषु अनिष्टपरिहारेण (कथं) प्रवर्तेतेत्यभिप्रायेण प्रयुंक्ते। तत्रान्यत्र च[2] प्रवृत्यनुज्ञायां, प्रवृत्तिनिवृत्त्यनुज्ञायां वा अभिधानग्रहणवैयर्थ्य**

---

इति व्यावृत्त्यभावे **अस्या** अपीति वस्तुभूताया जातेः। भावानां भेदाभावे सत्यनेकार्थसमवेतरूपाया जातेरभावात्। न च जात्याभेदः क्रियत इत्युक्तं। तस्मादवश्यम्भेदोभ्युपगन्तव्यः (।) स **चैकस्मा**दतत्कार्या(त्?) **भेदस्तदन्येषा**न्तस्मादतत्कार्यादन्येषान्तत्कार्याणा**मभेदस्तद्विशिष्टे**ष्वभेदविशिष्टेषु **प्रति[6]पत्तिरस्तु।** प्रतिपत्त्यालम्बनत्वात् प्रतिपत्तिरित्युक्तः। न पुनः स एव प्रतिपत्तिः। करणसाधनो वा प्रतिपत्तिशब्दः प्रतिपद्यन्तेऽनया व्यावृत्त्या करणभूतया भावानिति कृत्वा।

**सर्वथे**ति। यदि व्यावृत्तिविशिष्टो जातिविशिष्टो वार्थो वाच्यस्तद्वत्पक्षोदितो यथानन्त्यादि**दोषस्तत्परिहारस्य कर्त्तुमशक्यत्वात्।** तुल्यश्चेद्दोषो जातिरेव[7] कस्मान्नाभ्युपगम्यत इति चेदाह। **अर्थान्तरे**त्यादि। **अर्थान्तर**म्वस्तुभूता जातिः। 75a भिन्नेष्वभिन्नप्रत्ययजननं जातेः प्रयोजनमिति चेदाह। **तदर्थस्ये**ति जातिसाध्यस्य। **अन्येने**त्यतत्कार्यव्यावृत्तिलक्षणेनाभेदेन (।) जात्यापि हि सोर्थः साध्यत इति कस्माज्जातित्यागे व्यावृत्त्यभ्युपगम इत्यत आह। **तदि**त्यादि। **तदभ्युपगमस्ये**ति व्यावृत्त्यभ्युपगमस्य (।) त[1]दनभ्युपगमे हि जातिकल्पनैव न स्यादित्युक्तं॥

अधुना शब्देनावश्यं व्यावृत्तिश्चोदनीयेत्यत आह। **अपि चे**त्यादि। विवक्षितादर्था**दन्यस्तस्य परिहारेण** श्रोता **प्रवर्तेतेति** कृत्वा **ध्वनिरुच्यते** प्रतिपादकेन। चकार एवशब्दस्यार्थे भिन्नक्रमश्च तदन्यपरिहारेणेत्यस्यानन्तरं द्रष्टव्यं। **तेने**ति ध्वनिना। **तेभ्य** इत्यनभिमतेभ्यस्तस्याभिमतस्यार्थस्या[2] **व्यवच्छेदे**ऽव्यवच्छेदेनाभिधीयमान इत्यर्थः (।) **कथं** श्रोता **प्रवर्त्तेते**ति।

**शब्दमि**त्यादिनैतदेव व्याचष्टे। **एष** वक्तार्थेष्वभिमतार्थक्रियाकारिष्**वनिष्टपरिहारे**णानभिमतार्थव्यवच्छेदेन **प्रवर्त्तेत** कथं नाम श्रोतेत्यनेना**भिप्रायेण प्रयुङ्क्ते।**

यदि शब्देनान्यव्यवच्छेदो न चोद्येत तदा **तत्र** प्रत्याय्याभिमते**ऽन्यत्र चे**त्यनभिमते

**(प्रसंगा)त्। अन्यव्यावृत्त्यनभिधाने चैकचोदनानादरात्, अवचनमेव स्यात्।**

**तस्मादवश्यं** [3]**व्यवच्छेदोऽभिधेयः। स च तदन्येष्वभिन्नश्चेत्, जातिधर्मोप्यस्ति। तं नियताभ्युपगमं नियतचोदनं जात्यर्थप्रसाधनं परित्यज्य**[4] **अर्थान्तरकल्पनं केवलमनर्थनिर्बन्ध एव यथा कल्पनमस्यायोगात्।**

**न वै न क्रियत एव व्यच्छेदः। प्रवृत्तिविषयं कथयद्भिर्जातिरुक्ता।**[5]

---

प्रवृत्तिरनुज्ञा[3]ता भवति। तस्यां च सत्यान्तस्याभिमतस्यार्थस्य **यन्नाम ग्रभिधान**न्तस्य **ग्रहणवैयर्थ्यप्रसङ्गात्**। तथा ह्यानयेत्युक्ते वस्तुमात्रमाक्षिप्तन्तत्रानभिमतव्यवच्छेदायाग्निशब्दः प्रयुज्यतेऽग्निमानयेति। यदि तु तस्मिन्नपि प्रयुक्तेऽनग्न्यानयनं न व्यवच्छिन्नन्तदाग्निशब्देनोच्चारितेन न किंचित् प्रयोजनं। आनयेत्यनेनाप्यनानयनस्य[4] प्रतिक्षेपादानयनमनानयनं चानुज्ञातं स्यादतः प्रवृत्तिनिवृत्त्यानुज्ञायां च सत्यान्त**न्नामग्रहणवैयर्थ्यप्रसंगा**दिति पूर्वेणैव सम्बन्धः। एवं एकस्याभिमतस्याग्न्यादे**रेक**स्य चानयनादिलक्षणस्यानुष्ठानस्य या **चोदना** तस्या अ**नादरादवचनमेव** शब्दानां **स्यात्। अन्यव्यावृत्त्यनभिधाने** सति।

अथवा **प्रवृत्तिनिवृत्त्यनु**[5]**ज्ञाया**मिति वक्ष्यमाणेन सम्बन्धनीयं। यथोक्तविधिना प्रवृत्तिनिवृत्त्यनुज्ञायां **चैकचोदनाऽनादरात्**। एकस्य प्रवृत्तिलक्षणस्य निवृत्तिलक्षणस्य वा व्यापारस्य चोदनाऽनादरादिति (।) शेषं पूर्ववद् व्याख्येयं।

एवं च शब्दव्यवहारोच्छेदः स्यान्न चैवन्त**स्मादवश्य**मित्यादि। **स चे**त्यन्यव्यवच्छेदः। **तदन्ये**ष्विति तस्मादतत्कार्यादन्ये[6]ष्वेककार्येष्व**भिन्नः**। सर्वेषामतत्कार्याद् व्यावृत्तत्वात्। इति कृत्वानेकार्थव्यावृत्तित्वं **जातिधर्मोप्यस्ति** व्यवच्छेदस्य। **तमि**ति व्यवच्छेदङकिम्विशिष्टं **नियत**मभ्युपगमो यस्य स तथा। तदनभ्युपगमे जातेरभावप्रसङ्गात्। **नियतं चोदनम**भिधानं यस्य तत्तथा। तदचोदने शब्दप्रयोगस्य नैष्फल्यं स्यात्। व्यक्तिषु बुद्धिशब्दयोर[7]नुगमलक्षणो **जात्यर्थ**स्तस्य **प्रसा(ध)नं** प्रसाध्यतेऽनेनेति कृत्वा। एवंभूतं व्यवच्छेदं **परित्यज्यार्थान्तर**स्य सामान्यस्य **कल्पनं केवलमनर्थनिर्बन्ध** एवाऽवस्त्वभिनिवेश एव केवलं नान्यत् किञ्चित कारणमस्तीत्यर्थः। किङ्कारणं। (।) **यथा कल्पनं** नित्यव्यापिताद्यकारै**रस्य** सामान्यस्या**योगा**दित्यन्यव्यावृत्त्यभिधानेऽयमभिप्राय आचार्य दि ग्ना ग स्य।।

75b

**नेत्यादि** परः। **न वै न क्रियत एव** शब्देन **व्यवच्छेदः** किन्तु क्रियत एव। किमर्थन्तर्हि जातिरुक्तेत्यत आह। **प्रवृत्ती**त्यादि अर्थक्रियार्थिनो हि या **प्रवृत्ति**स्तस्या **विषयो** जातिः। तं **कथयद्भि**रस्माभिर्जातिरुक्ता।

**व्यवच्छेदे**त्यादि सि द्धा न्त वा दी। अस्य शब्दस्याभिधेयो **व्यवच्छेदोस्ति चेत्**।

**व्यवच्छेदोस्ति चेदस्य नन्वेतावत् प्रयोजनम् ।**
**शब्दानामिति किं तत्र सामान्येनापरेण वः ॥९९॥**

**ननु प्रवृत्तिविषयं प्रतिपाद्यते इत्युक्तम् । तद् वचनमुक्त्वाऽपि नोक्ता जातिः । तथा[6] हि सा न प्रवृत्तियोग्येति निवेदितमेतद् । तद्द्वारेण अचोदिते प्रवृत्तिरप्यचोदिता[1] । तद्वच्चोदने हि व्यवधानम् ।**

**जातितद्वतोः प्रवृत्तिविषयत्वे[7] व्यावृत्तितद्वन्तौ किन्नेष्येते । व्यावृत्तेरवस्तुत्वेनासाधनत्वान्नेति चेत् । तदेतज्जातेरपि तुल्यम् । तद्वतः साधनात् दोषो न** 449b

---

अस्य वा जातिमतो व्यवच्छेदः शब्दवाच्योस्ति चेत् । **नन्वेतावदन्य**[2]व्यवच्छेदेनेष्टप्रवर्त्तनं **प्रयोजनं शब्दानामि**ति कृत्वा । **तत्रे**ति व्यवच्छेदेनेष्टप्रवर्त्तने कर्त्तव्ये । तत्र वा प्रवृत्तिविषये **किं सामान्येनापरेण** वः प्रयोजनं ॥

**नन्वि**त्यादि परः । **उक्त**मित्याचार्यः । **तथा हीत्य**युक्तत्वप्रतिपादनं । **सेति** जातिः । अर्थक्रियां प्रत्यसामर्थ्या**न्न प्रवृत्तियोग्या** जातिः । नापि गोशब्दाज्जातिः प्रतीयते । **निवेदितमेत**[3]दिति "**तत्रानर्थक्रियायोग्या जातिरि**"(प्र. स.)त्यादिना । जातिद्वारेण च द्रव्येऽर्थक्रियासमर्थे पुरुषस्य प्रवृत्तिर्भविष्यतीति चेदाह । **तद्द्वारेणे**त्यादि । **अ**शब्द**चोदि**ते **स**त्य**पि** सम्बन्धे कथं प्रवर्त्तेतेत्यादिना । जातिद्वारेण तद्वानेव चोद्यत इति चेदाह । **तद्वच्चोदन** इत्यादि । व्यवधानमुक्तमिति लिङ्गपरिणामेन सम्बन्धः । सामान्येन तत्र व्यवधानमि[4]त्युक्तं । स च साक्षान्न योज्यते कस्मात्(।)किन्तत्रान्येन व्यवधानेत्यादिना ।

स्यान्मतं(।) न जातिः केवला व्यक्तिर्वा शब्दाश्रयाः प्रवृत्तेराश्रयः केवलाया जातरेर्थक्रियायामसामर्थ्यं । व्यक्तेश्च केवलाया अशक्यचोदनत्वात् । तस्माज्जातितद्वन्तौ सहितौ प्रवृत्तिविषयस्तयोरेव समस्तयोः शब्दार्थत्वमित्यत आह । **जातितद्वतो**रित्यादि । **प्रवृत्ति**[5]**विष**यत्व इति शब्दाश्रयायाः प्रवृत्तेर्विषयत्वेभ्युपगम्यमाने । **व्यावृत्तितद्वन्तौ किन्नेष्ये**ते प्रवृत्तिविषयत्वेनेत्यध्याहारः । प्रमाणसिद्धौ हि व्यावृत्तितद्वन्ताविति भावः । **व्यावृत्तेः** शब्दभूतायाः बुद्धिपरिकल्पितत्वा**दवस्तुत्व**मतो वाहदोहाद्यर्थक्रियांप्रत्**यसाधनत्वान्न** प्रवृत्तिविषयत्वमिति चेत् । **तदेत**दसाधनत्वं **जातेस्तुल्यं** सापि[6] वाहदोहादावसमर्था ।

**तद्वत** इति जातिमतोर्थक्रिया**साधनात्** प्रवृत्त्यभावलक्षणो **दोषो न भवतीति चेत्** ।

---

[1] Gsal-zin-te.

**भवतीति चेत्, तुल्यं तद्व्यावृत्तिमतो[1]ऽपि।**

**व्यावृत्तिवादिनामिव शाब्दप्रत्ययः अवस्तुग्राही। स विभ्रमवशात् अकारकेऽपि कारकाध्यवसायी। वस्तुसंवादो त[2]त्प्रतिबन्धे सति स्यात्, वस्तूत्पत्याऽन्यथा नैव। वस्तूत्पत्तेरभ्रान्तिरिति चेत्। नैतदेवम्। अतत्प्रतिभासिनस्तदध्यवसायाच्च। प्रभायां मणिभ्रान्तिः प्रतिभासात् भ्रान्तेः। यदि[3] भ्रान्तेः संवादो नेति चेत्। न। यथोक्तवदेव[१] व्यभिचाराःस्यात्। वितथप्रतिभासो हि भ्रान्तिलक्षणम्। तन्नान्तरीयकतया हि संवादो न प्रतिभासापेक्षी[4]।**

---

**तुल्यमित्यादि** सि द्धा न्त वा दी। **तदिति** अर्थक्रियासाधनत्वं।

एवन्तावत्प्रतिबन्धकन्यायेनाविद्यमानाया अपि व्यावृत्तेः सद्भावमभ्युपगम्य शब्दार्थत्वमुक्तमाचार्य दि ग् ना गेनेति व्याख्याय पुनर्विधिमेव शब्दार्थमाह। **अव-** 76a **स्तुग्रा[7]ही** चेत्यादि। यद्यवस्तुविषयः कथमर्थक्रियार्थिनं पुरुषं प्रवर्त्तयतीति चेदाह। **स विभ्रमे**त्यादि। स इति शाब्दप्रत्ययः। **विभ्रमवशात्** पुरुषं प्रवर्त्तयति। विभ्रम एव कथमित्याह(।)**अकारकेपि** स्वप्रतिभासेर्थक्रियायोग्यत्वात् **कारको** बाह्योर्थ**स्तदध्य-वसायी** यतः। कथन्तर्ह्यनुमानादेर्वस्तुसम्वाद इत्यत आह। **वस्तुसम्वाद** इत्यादि। तस्मिन् साध्ये **प्रतिब[1]न्धे सति**(।)प्रतिबन्ध एव कुतः। **वस्तूत्पत्त्या** साध्यवस्तू-त्पत्त्या हेतुभूतया **अन्यथे**त्यसति प्रतिबन्धे। **नै**वास्ति सम्वादः शब्दादेः प्रत्ययस्य। **वस्तूत्पत्तेरभ्रान्तिरिति चेत्**। स्यादेतद् यदि वस्तुनश्चोत्पद्यते वस्तुसम्वादि शाब्दा-दिज्ञानमिति व्यापकविरुद्धोपलब्धिम्मन्यते। **नैतदेवं**। सत्यपि वस्तूत्पत्ता**वतत्प्रति-भासिनो** वस्तुरूपाप्रतिभासिन**स्तदध्यव[2]सायाद्** वस्त्वध्यवसायाद् भ्रान्तित्वं। ततो वस्तुरूपोत्पत्तिभ्रान्त्योर्विरोधाभावात् सन्दिग्धव्यतिरेकिता हेतोरिति भावः। मणि**प्रभायाम्**मणिभ्रान्तिर्मणिं सम्वादयत्येव। व्यभिचारमेव समर्थयन्नाह। **वितथे**त्यादि। एतदाह(।) **यदि भ्रान्तेः** सम्वादस्य च विरोधः स्यात् तदा भ्रान्तेर-वस्तुसम्वादनं साध्यं प्रत्यव्यभिचारः स्यात्। स न नास्ति।[4] यस्माद् **वितथ-प्रतिभासो भ्रान्तिलक्षणं** न विसम्वादनं। **तन्नान्तरीयक**तयेति वस्तुनान्तरीयकतया तत उत्पत्तेरिति यावत्। अयं **सम्वादो न प्रतिभासापेक्षी**। न वस्तुगतम्प्रति-भासमपेक्षते। वस्तुप्रतिबद्धत्वेनैवातत्प्रतिभासस्यापि सम्वादात्।

तस्मात् स्थितमेतद् वितथप्रतिभास्यपि शाब्दः प्रत्ययः सति वस्तुप्रतिबन्धे तस्य सम्वा[5]दक इति।

---

[1] Ji-skad-bśad-pa-lta-bu-kho-nas.

**वस्तुनि यथाभावं अर्पितचेतसः प्रवृत्तौ ग्राह्यस्य सामान्यस्यानर्थक्रियायोग्यत्वात् अप्रवृत्तिः तस्मिन्। अन्यत्रापि प्रवृत्तौ अतिप्रसंगः। तद्वद्ग्रहणे[5] च सामान्यवैयर्थ्यादयः प्रोक्ताः। जातिग्रहणेऽपि सम्बन्धात् श्लिष्टाभासा बुद्धिः प्रवर्त्तयतीति चेत्। तस्यैकस्यापि स्वभावस्थित्यग्रहणात् न जातिर्न[6] तद्वानिति परवाद एवाधीयते ॥६६॥**

(घ) सामान्याभावे प्रत्यभिज्ञासंगतिः

**एवं हि अन्वयिनोऽप्यभावात् स्वभावेन भिन्नार्थेषु सैवैषेति प्रत्यभिज्ञाऽपि न स्यादिति चेत्।**

**नैष दोष[7] एवं—** 450a

---

अथ पुनर्यथावस्त्वेव शाब्दः प्रत्यय इष्यते। तदा **वस्तुनि** बाह्ये। **यथाभावं** यथावस्तु **अर्पितचेतसः** आरोपितज्ञानस्य शब्दबलाद्यन्यथा वस्तूत्पन्नज्ञानस्येति यावत्। एवं **प्रवृत्ता**वभ्युपगम्यमानायान्तस्य शाब्दस्य ज्ञानस्य सामान्यं **ग्राह्य**मेष्टव्यं स्वलक्षणे शब्देन चोदनाभावात् (।) तस्य च ग्राह्यस्य **सामान्यस्यानर्थक्रियायोग्यत्वा**द्धेतो**रप्र**[6]**वृत्तिस्तस्मिन्** विकल्पविज्ञानविषये सामान्ये। **अन्यत्रे**ति सामान्यादन्यत्र व्यक्तावशब्दचोदितायामपि **प्रवृत्तावतिप्रसङ्गः**। गोशब्दादश्वव्यक्तावपि प्रवृत्तिः स्याद् गोत्वसामान्यस्याश्वव्यक्तेश्च सम्बन्धाभावान्नैवमिति चेन्नाशब्दचोदिते सत्यपि सम्बन्धे प्रवृत्त्ययोगादित्याद्युक्तं।

अथ न केवला जातिः शब्देन चोदितेति किन्तु तद्वानिति (।) तदा **तद्द**[7]**द्ग्रहणे चा**भ्युपगम्यमाने **सामान्यवैयर्थ्यादयः प्रोक्ताः**। व्यक्तिष्वेव साक्षाच्छब्दो नियुज्यतां किं सामान्येनेति सामान्यवैयर्थ्यमुक्तं। आदिशब्दाद् आनन्त्यादिदोषपरिग्रहः। जातिरेव शब्देन चोद्यते। सा तु जातिर्व्यक्तिसमवेतत्वान्न शक्यते केवला गृहीतुमतो व्यक्तिरूपेणैकीभूता गृह्यते (।) तदेवाशङ्कते। **जाती**त्यादि। **श्लिष्टाभा**सेति स्वसामान्यलक्षणा[1]भ्यां सम्भिन्नाभासा **बुद्धि**रर्थक्रियाकारिण्यां व्यक्तौ **प्रवर्त्तयतीति चेत्**। तदा **न जातिर्न तद्वान्**। स्वेन रूपेण गृह्यत इत्यध्याहारः। किङ्कारणम् (।) **एकस्यापि** सामान्यस्य तद्वतो वा या **स्वभावस्थिति**रसंसृष्टं रूपं तस्य श्लिष्टाभासया भ्रान्तया बुद्ध्या। **अग्रहणात्**। ततश्च भ्रान्ताया बुद्धेः प्रवृत्त्यभ्युपगमात् **परवाद एवा**न्यापोहवादिदर्शनमेव ॥ 76b

**एवमि**[2]त्यादि परः। **अन्वयिन** इत्यनेकव्यक्तिगम्यस्य सामान्यस्य।

**नैष दोष** इति सि द्धा न्त वा दी। आदिशब्दादुदकाहरणान्तान्ताम्**भेदे**पि परस्परव्यावृत्तत्वेपि वस्तुधर्मतया **तां तां ज्ञानादिकां** सदृशीम**र्थक्रियां कुर्वतो दृष्ट्**वा तदन्येभ्योतत्कार्येभ्यो **यो विश्लेषो** विच्छिन्नः स्वभावः **स विषयो** येषां **ध्वनीनान्**तैर्ध्वनि-

**ज्ञानाद्यर्थक्रियान्स्तांस्तां दृष्ट्वा भेदेपि कुर्वतः ।**
**(अर्थान् तद्)न्यविश्लेषविषयैर्ध्वनिभिः सह ॥१००॥**

**उक्तमेतद्**[1] । **वस्तुभेदेऽपि सदृशार्थक्रियया चक्षुरादिवदिति चेत् । ज्ञानाद्यर्थक्रियामेकां तेषु पश्यतोऽन्येभ्यो भिन्ना वस्तुधर्मतयैव तदे**[2]**वेदमिति प्रत्ययं तद्व्यावृत्तिविषयध्वनिसंसृष्टं स्वानुभववासनाप्रबोधात् जनयन्ति । अन्यथा न भेदसंसर्गवती बुद्धिः स्यात् । यथा दण्डिषु**[3] **दण्डः । तत्र एकेन दण्डेन युक्ता अपि अन्यत्र स एवेति न (भवति) प्रतीतिः, अपि तु तदिहेति । नैवं प्रत्यभि-**

---

भिरन्तर्जल्परूपैः **सह संयोज्यार्थान्** स [3] एवायमिति कुर्यादपि पुमान् । **अपि** शब्दो भिन्नक्रमोन्यदर्शनेपीत्यर्थः । पूर्वदृष्टादर्थादन्यस्य विलक्षणस्य दर्शनेपि सदृशार्थक्रियाकारित्वेन विप्रलम्भादेकत्वमारोप्य **प्रत्यभिज्ञानं** कुर्यादिति समुदायार्थः ।

कथं पुनर्भिन्ना अभिन्नामर्थक्रियां कुर्वन्तीत्यत आह । **उक्तमेत**दित्यादि ।

"एकप्रत्यवमर्शार्थज्ञानाद्येकार्थसाधने" (१।७५)

इत्यादिना[4] प्रागुक्तत्वात् । **एका**मिति सदृशीन्**तेष्**विति भिन्नेष्वन्येषु **पश्यतः** पुंसः । अन्येभ्य इत्यतत्कारिभ्यो व्यावर्त्तमाना भावा **वस्तुधर्मतयैव** वस्तुस्वभावेनैव । **तदे**वेदमित्येवमाकारं मिथ्या**प्रत्ययं जनयन्ती**ति सम्बन्धः । किम्विशिष्टमित्याह । **तद**ित्यादि । तेभ्योऽतत्कार्येभ्यो या **व्यावृत्ति**रेकार्थक्रियाकारिणामर्थानां सा **विषयो** यस्य **ध्वने**स्तेन **संसृष्टं** संस[5]क्तं **साभिलाप**मिति यावत् ।

यदि वस्तुधर्म्मतया **जनयन्ति** किन्न सर्वदेत्याह । **स्वानुभवे**त्यादि । तेषाम्भावानां यः स्वोनुभवः पूर्वमुत्पन्नस्तेन या प्रत्यभिज्ञानोत्पत्तये **वासना** शक्तिलक्षणादिता । तस्याः **प्रबोधः** कार्योत्पादनंप्रत्याभिमुख्यन्तस्याश्च प्रबोधः पुनस्तज्जातीयपदार्थानुभवात् । एवंलक्षणश्च प्रबोधो न सर्वकालमतो न सदा प्रत्यभि[6]ज्ञानसम्भव इति । **संसृष्टभेद**मिति पूर्वपश्चाद्दृष्टयोर्व्यक्त्योर्भेदः संसृष्ट एकीकृतो येन स तथा । **अन्यथे**ति यद्येककार्यत्वेन सादृश्येनैकत्वमारोप्य भिन्नेष्वपि भ्रान्तं प्रत्यभिज्ञानं नेष्यते (।) अपि त्वेकसामान्ययोगात् तदा **न भेदसंसर्गवती** । भेदानां संसर्ग एकरूपतापादनन्तद्वती बुद्धिर्न स्यात् । बहुष्वेकरूपा **बुद्धिर्न** स्यादित्यर्थः ।[7]

77a

न **ह्येकेन दण्डेन युक्ता** अपि दण्डिन एकत्वेन गृह्यन्ते । तदेवाह (।) **यथा दण्डिष्**विति । न हीत्येतदेव व्यनक्ति । **तत्रे**ति दण्डिषु । **अन्यत्रे**ति एकस्माद् दण्डिनोन्यस्मिन् दण्डिनि । तद्दण्डद्रव्यं यदेकदण्डिनि दृष्टन्तदिह द्वितीये दण्डिनीत्येवं **स्यात्** । **न तु** तद्द्वारेण **स एवायन्दण्डीति** । यद्वा **यथा** बहुष्वेकदण्डयोगात् । प्रत्येकमयमपि दण्डस्तथा स एवायन्द[1]ण्ड इति न भवति **प्रतीति**स्तद्वत् । व्यक्ती-

**ज्ञानम्। तदेवेदमित्यथ कथम्? अन्यदस्ति। ततः एकं अनेकत्र पश्यतो[1]ऽपि भेदसंसर्गवत् न युक्तम्। विभ्रमवशात् तथा प्रतिभासने हि अविरोधः। [4]निमित्ताभावात् विभ्रमो न युक्त इति चेत्। त एव तदेकार्थकारिणो भावा अनुभवद्वारेण [5]प्रकृत्या विभ्रमफलाया विकल्पवासनाहेतुत्वात् निमित्तम्। मरीचिकादिषु जलादिभ्रान्तेर् भिन्नावपि अभिन्नाकारस्य परामर्शप्रत्ययस्य**

---

नामप्येकसामान्ययोगान्न स एवायमिति प्रतीतिः स्या**दपि तु तदि**हेति।

भवत्वेवमिति चेदाह। **नैवमि**त्यादि। **तदि**त्यादिनोपसंहारः। **एक**मिति समान**मनेक**त्र व्यक्तिषु **पश्यतोऽ**पि पुंसो **भेदसंसर्गवत्**। भेदानां संसर्ग एकाकारता तद्वज्ज्ञानं **न युक्तं**। अन्यापोहवादिनस्त्वयमदो[2]ष इत्याह। **विभ्र**मेत्यादि। भ्रान्तिसामर्थ्यादित्यर्थः। **तथे**त्येकरूपतया वस्तुभूतमेकं सामान्यं प्रत्यभिज्ञानस्य **निमित्त**न्तस्या**भावाद् विभ्रमो न युक्तमिति चेत्। त एवे**ति व्यावृत्ता **भावास्त**स्य ज्ञानादे**रेक**स्यार्थस्य **कारिणः** करणशीलाः। **अनुभव** एव **द्वारं** हेतुस्तेन **प्रकृत्या** स्वभावेन **विभ्रमफलाया** भ्रान्तिफलाया **हेतुत्वान्निमित्तं**।

ननु **मरीचि[3]कादिषु जलादिभ्रांतेः** सादृश्यमन्तरेणोत्पत्तावतिप्रसंगः। सादृश्यं चेदिष्यते सामान्यमपि कस्मान्नेष्यत इत्याह। **मरीचिकादिष्वि**त्यादि। प्रथमेनादिशब्देन रज्वादिपरिग्रहः। द्वितीयेन सर्पादिभ्रान्तेः। **तावेवे**ति जल-मरीचिका**रूपौ** भावौ **अभिन्नाकारस्य** तदेवेदं जलमित्येवं रूप**म्परामर्शप्रत्ययस्य निमित्त**भूतो यो[4]**नुभवस्तस्य जनकौ कारणं भिन्नाव**पि।

एतदुक्तम्भवत्यसदृशानान्तावन्न सादृश्यमस्ति। सदृशानामपि सदृशमेव स्वरूपं भ्रान्तिनिमित्तं। न तु सादृश्यं। तथा हि जलानुभवज्ञानन्ताव(त्)जलाकार-परामर्शवासनामाधत्ते। सा च वासना यथा पुनर्जलस्वलक्षणानुभवेन प्रबोध्यते। तथा मरीचिकाख्यपदार्थानुभवेनापि[5] प्रकृत्या। तस्य तत्स्वभावत्वात्। ततो यथा जलानुभवाज्जलाकारपरामर्शप्रत्यय उच्यते। तथा मरीचिकानुभवादपि। अतश्च तौ जलमरीचिकाख्यौ भावानुभवद्वारेण जलभ्रान्तेर्निमित्तं भवतः। न चातिप्रसङ्गः। तुल्येप्यजलरूपत्वे मरीचिकास्वरूपस्य स्वहेतुभ्य एव सादृश्योत्पन्नत्वान्न तु सादृश्ययोगात् सदृशो भव[6]तीति सामान्यप्रस्तावे न्यायस्योक्तत्वात्।

एवन्तावद् उ द्यो त क रा दिमतं निराकृत्य मी मां स क मतं निराकर्त्तुमाह। **न ही**त्यादि। तथा हि जलज्ञाने द्वयं प्रतिभासते जलसामान्यन्तस्य च देशादिस-

---

[1] Sñam-paḥi-śes-pa.

**निमित्ता[6]नुभवजनको कारणम्। न तत्रान्यदेव किंचित् सामान्यं तथा प्रत्यय-भूतम्। सत्त्वे वा सदर्थग्राहिणी बुद्धिः भ्रान्तिर्न स्यात्।**

450b **अभूताकारसमारोपा[7]द् भ्रान्तिरिति चेत्। न। तत्सामान्यग्राहिणी सा भवति। यमेव चाकारमियं आरोपयति, स एव तस्य विषयः। अविषयीकृतस्य समारोपो ऽसामर्थ्यात्। आकारान्तरवत्। स च तत्र नास्त्यत[1]: सामान्यं न विद्यते।**

---

म्बन्धित्वन्ततो नेति बाधके प्रत्यये न देशादिसम्बन्धित्वं बाध्यते न जलसामान्यमतो 77b जलज्ञानं सामान्यालम्बनमेवेत्यत उच्यते[7]। **न तत्र मरीचिकासु अन्यदे**वेति भिन्नं **किंचित् सामान्यं** जलसामान्यन्त**थे**ति जलरूपेण। **सत्त्वे वा** जलसामान्यस्याभ्यु-पगम्यमाने वस्तुभूतसामान्यग्राहित्वेन **सदर्थग्राहिणी बुद्धिः**।

अथ स्याद् (।) अन्यदेशाद्यवस्थितजलसामान्यालम्बिकैव जलबुद्धिर्न भ्रान्तिस्त-दुक्तं (।)

"सर्वत्रालम्बनं बाह्यं देशकालान्यथात्मकमि"ति।[1]

कथन्तर्हि मरीचिकायां[1] जलप्रतीतिर्भ्रान्तिरन्यदेशाद्यवस्थितस्य जलसामान्यस्य तत्र समारोपादिति चेत्। एतदेवाह। **अभूते**त्यादि। मरीचिकास्वविद्यमानस्य जला**कार**स्य **समारोपाद् भ्रान्तिः**।

**नेत्या**दि सि द्धा न्त वा दी। **तत्**सामान्यग्राहिणी अन्यदेशावस्थितजल**सामान्य-ग्राहिणी सा** जलबुद्धि**र्न भवति**। कस्मादित्याह। **यमेव चे**त्यादि। **यमेवाकार**-मित्यभूतं[2]जलाकार**मियं** जलबुद्धिस्तत्र मरीचिकास्व**ारोपयति**। आरोप्यमाण-स्यापि कस्माद् विषयत्वमित्यत आह। **अविषयीकृ**तस्येत्यादि। एतदाह (।) विकल्पोत्पत्तिकाले यत्सामान्यं न विषयीकृतन्तेन न तस्य समारोपः। आकारा-**न्तरवत्**। न ह्याकारान्तरमग्न्यादि तत्र समारोप्यते तस्य तदानीमविषयत्वात्। यश्चाकारो बाह्याभेदेनारोप्य[3]ते तस्यैव विषयत्वेन प्रतिभासनं। **स चे**त्यारोप्यमाणो जलाकारस्**तत्र** मरीचिकासु **नास्ति** बाध्यमानत्वा**दतो सामान्यं** जलज्ञानन्न विद्यते सामान्यमस्येति कृत्वा। **तथा** मरीचिकावत् सत्यजलेष्वपि जलाकाराध्यारोपकं जलज्ञानमसामान्यं।

**सतीत्या**दि परः। अन्यदेव जल**सामान्यं** सति तस्य **ग्रहे तदारोपो** जलारोपः **नान्यथा**[4] (।) यदि जलसामान्यमन्तरेण सत्यजले जलारोपः स्यात् तदा**ऽतिप्रसंगः**। अग्न्यादावपि जलारोपः स्यात्।

---

[1] Ślokavārtika. **निरालम्बन०** 108

**सति सामान्यग्रहे तदारोपो नान्यथा, अतिप्रसंगःस्यादिति। सति एककार्यकारिणां ग्रहे किन्नेष्यते। दृष्टे सामान्येऽवश्यं च व्यक्तीनां स्वार्थ[2]जननशक्तिरभ्युपेया।**

**ततस्त एवान्येभ्यो भिन्ना तादृशं ज्ञानं जनयन्तीति चेत्, तत्र सामान्येन किं करणीयम्? यथाभावं असंसृष्टभेद एव किन्न प्रत्येति अविद्याप्रभवात् वि[3]कल्पानां न च बाह्यार्थमनपेक्ष्य विभ्रमो भवति, अपि तु आन्तरं विप्लवम्[1]। यथा केशादि-**

---

**सती**ति सि द्धा न्त वा दी। **एकं कार्यं** पानावगाहनादि तत्**करणशीला**नां सत्य-जलानां **ग्रहे सति किन्नेष्य**ते जलारोपः। सामान्यमन्तरेण भिन्नानामेककार्यकरण-शक्तिरेव नास्तीति चेदाह। **अवश्यं चे**त्यादि। प्रतिपादि[5]तं चैतद् (।)

"एकप्रत्यवमर्शार्थज्ञानाद्येकार्थसाधन" (३।७२)

इत्यत्रान्तरे।

अन्ये तु **न हि तत्रान्यदे**व किंचित् सामान्यमस्तीत्यादिकं ग्रन्थं सामान्यशब्दं सादृश्यार्थं कृत्वा व्याचक्षते। तत्तेषां व्याख्यानन्नातिश्लिष्टं यत्तथा प्रतीयत इत्या-देरवाचकत्वात्। न हि सादृश्यं जलरूपतया प्रतीयत इति।

**तत** इत्येककारणशक्तेः। **त एवे**ति यथोक्त[6]शक्तिषु युक्ता व्यक्तय एव न तु सामान्यं। **अन्येभ्य** इत्यतत्कार्येभ्यः। **तादृश**मित्येकाकारं। **यथाभाव**मिति पदार्थानतिवृत्तावन्वयीभावः। यथा स्वलक्षणं सामान्यविरहि स्थितं। तदतिवृत्त्या **किन्न प्रत्येति विकल्प**प्रत्ययः (।) कस्मात्तत्राभूतं सामान्यमारोप-यति। **यथाभाव**मित्यस्यैवार्थो**संसृष्टे**त्यादि। असंसृष्ट एकरूपतामना[7]-पन्नः। **भेदः** परस्परं विशेषो यस्य भावस्य स तथा। अशक्ति-रेषा। यथावस्थितग्रहणंप्रति **विकल्पानां**। कस्मात् **अविद्याप्रभवात्**। भूता-र्थग्रहणं विद्या। तद्विरोधाद् विकल्प एवाविद्या। प्रभाव एव प्रभवशब्देनोक्तः। विकल्पसामर्थ्यादित्यर्थः। यथास्थितवस्त्वग्रहणं हि विकल्पस्य स्वभावः प्रकृत्या भ्रान्तत्वात् तस्य[1] वस्तुभूतं सामान्यं विनाश एव विकल्पस्य विभ्रमो न युक्त इति चेदाह। **न चे**त्यादि। विकल्पस्वरूपमेवात्रान्तरो विप्लव उक्तः। विकल्पस्यैव तत्स्वरूपं येनासौ **बाह्य**साधर्म्य**मनपेक्ष्य विभ्रमो भवती**त्यर्थः। केशाद्याकारा भ्रान्तिः **केशादिविभ्रमः** (।) स यथा बाह्यार्थानपेक्षः सन्नभूताकारोपग्रहण**मान्तर-म्विप्लव**माश्रित्य भ्रान्तो भ[2]वति। तद्वद् विकल्पोप्यभूतसामान्याकारग्रह-णादित्ययमत्रार्थोभिप्रेतः। भ्रान्तिबीजमान्तरो विप्लवस्तस्मादुत्पत्तेरित्यय- 78a

---

[1] Lhuṅ-ba-la brgyus-pa-dug.

**विभ्रमः। अविद्योद्भवाद् विप्लव[4]त्वे चक्षुरादिष्वपि प्रसंग इति चेत्। न। तस्या विकल्पलक्षणत्वात्। विकल्प एव हि सा (अविद्या)। स्वभावेनैव तानि विपर्यस्तानि[1]। नैवमिन्द्रियज्ञानानि विकल्पकानि। न वा तेष्वपि एष दोषः, अद्वयानां**

न्तावदर्थोत्र नाभिप्रेतः। एतच्चोत्तरत्र व्यक्तीकरिष्यते।

चोदकस्त्वविद्याप्रभवादित्यत्राविद्याशब्देनाप्रहीणावरणसन्ततौ द्वयनिर्भासबीजमेवोक्तं। ततश्चोद्भव उत्पत्तिस्तथा आन्तरोपि विप्लवस्तदैव बीजमे[3]वंभूतं चाविद्योद्भवत्वं सर्वविज्ञानानामस्तीत्यत आह। **अविद्योद्भवाद् विप्लवत्व** इत्यादि। अविद्याया उद्भवादुत्पादाद् विप्लवत्वे भ्रान्तत्वे **चक्षु**र्विज्ञाना**दिष्वपि** विप्लव**प्रसंगः**। **ने**त्यादिना स्वाभिप्रायमाह। **तस्या** इत्यविद्यायाः सामान्याकारारोपकं ज्ञानम्**विकल्पस्तल्लक्षणत्वात्**। तदाह। **विकल्प एव ही**त्यादि। **से**त्यविद्या। **स्वभावे[4]ने**ति प्रकृत्या। **नैव**मित्यादिना प्रसंगं परिहरति। तेषां स्वलक्षणाकारत्वेनाविकल्पकत्वात्। तस्मान्न तानि विकल्पवत् स्वभावेन विपर्यस्तानि **इन्द्रि**यादिविकारेण तु केषांचिद् भवति भ्रान्तता।

बाह्यार्थनयेनोक्ताऽधुनान्तर्ज्ञेयनयेनाह। **न चे**त्यादि। एतदाह। भवतु- नाम यादृशश्चोद्याकारेणाविद्याशब्दस्यार्थः कल्पितस्तथाप्यति[5]प्रसङ्गदोषो नास्तीष्टत्वादिति। **न वा तेष्वपि** चक्षुरादिज्ञानेष्**वेष** भ्रान्तत्व**दोष**स्तेषामपि विप्लुतत्वात्। तदेवाह। **अद्वयाना**मित्यादि। चक्षुरादिविज्ञानानामात्मसम्वेदनमेवाद्वयन्नात्र द्वयमस्तीति कृत्वा। तथा हि विज्ञानसमानकालम्विच्छिन्नप्रतिभासि। ग्राह्यत्वेनाभिमतं नीलादि। एकानेकविचाराक्षमतया न परमा[6]र्थंसत्। तदपेक्षया च यद्विज्ञानस्य ग्राहकत्वं कर्तृरूपन्तदप्यसत्। न तु सम्वेदनन्तस्य प्रत्यक्षत्वात्। भ्रान्तग्राहकाकाराव्यतिरिक्तत्वात्स्वसम्वित्तेरपि भ्रान्तत्वमिति चेन्न तस्याः स्वरूपेणासत्त्वे प्रतिभास एव न स्याच्छशविषाणवत्। भ्रान्तेरपि च स्वरूपेण सत्यत्वमन्यथा भ्रान्तित्वायोगात्। स्वरूपविज्ञानैकरूपं ज्ञानञ्च स्वसम्विद्रूप[7]मेवेति कथन्न (संवित्तेः सत्यत्वं। यद्वा द्वयप्रतिभासो भ्रान्तिर्भ्रान्तिश्च तत्त्वाधिष्ठाना। द्विचन्द्रादिभ्रान्तिवत्। तत्त्वं च द्वयविपरीतमद्वयन्तच्च स्वसम्विद्रूपमेव (।) न तु द्वयाभावतास्यासत्त्वादिति कथं न सा सम्वित्तेः........तदेवं यथोक्तचोद्य.......................................................

..........यानि च....................................................स्याद् ग्राह्यग्राहकरूपेण प्रतिभासनात् तान्यपि भ्रान्तानीति)[2] वक्ष्यामः तृतीये परिच्छेदे

78b

[1] Stram-pa-yin-no. [2] In the margin, illigible.

**द्वयप्रतिभासात् इति वाच्यम्। सर्वेषां विप्लवत्वे च प्रमाणतदाभासयोर्व्यवस्था हि आश्रय**[6]**परावृत्तेः, अर्थक्रियायोग्याभिमतसंवादनात्। मिथ्यात्वेऽपि प्रश-मानुकूलत्वात्। मातृसंज्ञादिवत्। मरीचिकासु जलसंज्ञा, अन्यस्य च भिन्न-भावोत्पत्तेः**[7] **विभ्रमस्य चाविशेषेऽपि अभिप्रेतार्थक्रियायोग्यायोग्योत्पत्तेः यथा-** 45 1a **क्रमं संवादेतरौ**[1]**। अयोग्यात् उत्पत्तेरिति चेत्। विकल्पानां अर्थप्रति-**

---

(।)अत एव द्वयनिर्भासवतां स्वसंवित्तेः प्रत्यक्षत्वेपि न तत्त्वदर्शित्वं व्यवस्थाप्यते प्रमाणाप्रमाणविभागः। कथमिति चेदाह। **सर्वेषामि**त्यादि। **विप्लवो** भ्रान्त-त्वं। **तदाभासः**। प्रमाणाभासः। तयो**र्व्यवस्था**विभागः। आश्रयो भ्रान्तिबीज-**मालय**विज्ञानन्तस्य परावृत्तिरावरणविगमः। आङ् मर्यादायाम् (।) **आश्रय-**परावृत्तेः सर्व[1]दा**र्थक्रियायोग्याऽभिमतसम्वादनात्** प्रामाण्यव्यवस्थेति सम्बन्धः। **अर्थक्रिया** दाहपाकादिनिर्भासविज्ञप्तिलक्षणा। तस्यां **योग्यं** च तद**भिमतं** पुरु-षस्येष्टत्वात्। तस्य **सम्वादना**दिति विग्रहः। अभिमतस्येव सम्वादनादित्यव-धारणं न पुनस्सम्वादनादेवेति प्रमाणादपि कदाचित् प्रत्ययवैकल्येन सम्वादास-म्भवात्। अर्थक्रियायोग्याभिमतसम्वाद[2]नादित्युपलक्षणं (।) तथाभिमतासम्वा-दनादित्यपि द्रष्टव्यं।

एवं हि प्रमाणाभासव्यवस्थायाः कारणमुक्तम्भवेत्। विज्ञानवादे बाह्या-भावात् कथमर्थक्रियायोग्याभिमतसम्वादनं। नायन्दोषोग्निर्जलनिर्भासस्यैव ज्ञानस्य दाहपाकादिनिर्भासज्ञानोत्पादनसमर्थस्य योग्यशब्देनाभिधानात्। एव-न्तावच्चक्षुरादिविज्ञानस्य धूमादिलिङ्गजन्यस्य चाग्न्यादि[3]निर्भासिनः प्रमाण-व्यवस्थोक्ता। कृतकादिलिङ्गजन्यस्य त्वनात्मादिज्ञानस्याह। **मिथ्ये**त्यादि। सामान्याकारारोपप्रवृत्तत्वादनात्मादिज्ञानस्य **मिथ्यात्वं**। तथापि **प्रशमानुकूल-त्वात्** प्रामाण्यं प्रशमो रागादिप्रहाणं। अनात्मादिसामान्याकारेण वस्तु गृहीत्वा भावयताम्भावनानिष्पत्तावनात्मादिस्वलक्षणप्रत्यक्षीकारेण रागादिप्रहाणात्। कस्य पु[4]नर्मिथ्यात्वेपि प्रशमानुकूलत्वं दृष्टमित्यत आह। **मातृसंज्ञे**त्यादि। अमा-तरि मातृसंज्ञा मिथ्यापि सती। रागानुत्पत्तिकारणं। इयता च साधर्म्येणायं दृष्टान्तः। न तु मातृसंज्ञादिकं प्रमाणं। आदिशब्दाद् भगिन्यादिसंज्ञापरिग्रहः। षष्ठ्यर्थे चायम्वतिः।

बाह्यार्थदर्शनेपि वस्तुभूतसामान्याभावाद् यदि सर्वो विकल्पो भ्रान्तस्तत्र यथा जलसामान्यरहित[5]ात् **(म)रीचिस्वलक्षणादुत्पन्नो जलविकल्पो** भ्रान्त-

---

[1] Hgal-ba-med.

**बन्धा[1]नियमात् न हि विकल्पा उत्पद्यन्ते। सति मरीचिकादर्शने तदुद्भवा जलभ्रान्तिरिति अजलविवेकिनार्थेन स्वभावा[2]नुकारार्पणेन जननात् न यथास्वभावम्। तु सा विशेषलक्षणापाटवात् प्रत्ययापेक्षिणा वा स्ववासनाप्रबोधेन जन्यते। तस्माद् भिन्नभावजन्मा विकल्पविभ्रमो भ्रान्त्या[3] स एवायमिति प्रत्यभिज्ञानम्, न व्यतिरिक्तस्य सामान्यस्य दर्शनात्, न व्यतिरिक्तोस्य, व्यक्तिवदनन्वयात् ॥१००॥**

**अपि च।**

---

स्तथा सत्यजलादपि जलत्वशून्याज्ञातो जलविकल्पस्तस्याप्यतस्मिंस्तद्ग्रहप्रवृत्तत्वाद् भ्रान्तत्वं। तत्कुत एतदेकस्यार्थसम्वादो परस्य नेत्याह। **मरीचिके**त्यादि। **अन्यस्य चे**ति सत्यजले जलज्ञानस्य जलत्वसामान्यस्याभावान्मरीचयो जलं च **भिन्नो भावस्तत** उ**त्पत्तिस्तस्या अविशेषेपी**ति सम्बन्धः। **वि[6]भ्रमस्य चाविशेषे**पीति जलरहिते मरीचिद्रव्ये यथा जलसामान्याध्यारोपाज्जलविकल्पो विभ्रमस्तथा सत्यजलेपि तस्याप्यतस्मिँस्तद्ग्रहरूपत्वादन**भिप्रेतार्थक्रिया पाना**दिः। तस्यां **योग्यं** जलस्य स्वलक्षण**मयोग्यं** मरीचिकानां। तत **उत्पत्ते**र्हेतोः 79a सत्यजले मरीचिकासु च जलविकल्पस्य। **यथाक्रमं सम्वादेतरौ**[7] इतर इत्यसम्वादः। **अयोग्यमरीचिकास्वलक्षणात्**। न ह्यजलरूपं जलाकारस्य योग्यमिति मन्येत।

**विकल्पे**त्यादिना परिहारः। **अर्थप्रतिबद्धो**र्थाकारानुविधानेनोत्पत्तिः। तदेव व्याचष्टे। **न ही**त्यादि। **यथार्थ**मिति पदार्थानतिवृत्तावव्ययीभावः। एवकारश्च भिन्नक्रमः। नैव हि पदार्थानुरूपं ग्राहकमुत्पद्यत इत्यर्थः॥

कथन्तर्हि जलज्ञान[1]स्य मरीचिकाभ्य उत्पत्तिरुक्तेति चेदाह। **सती**त्यादि। मरीचिकासु चक्षुर्विज्ञानादौ भ्रान्तमुपजायते तस्मिन् सत्यनुभूताकाराध्यारोपिणी **जलभ्रान्तिरि**ति पारम्पर्येण **तदुद्भवा** मरीचिकोद्भवेत्युच्यते। **यथास्वभाव**मिति पूर्ववदव्ययीभावः। जलभ्रान्तिजननासमर्थं घटा**द्यजल**मित्युक्तं। ततो **विवेकिना** जलभ्रान्तिजननस**मर्थेने**ति याव[2]त्। एवंभूतेन मरीचिकाख्येनार्थेन। **न यथास्वभावं जननात्** तदुद्भवेत्युच्यते इति सम्बन्धः। यथा स्वभावमित्यस्यैवार्थः (।) **स्वभावानुकारे**त्यादि। स्वभावमनुकरोतीति स्वभावानुकारः। स्वलक्षणानुरूपं प्रतिविम्बकन्तस्**यार्पणेन** ज्ञाने समारोपणेन। सा पुनः केन साक्षाज्जन्यत इत्याह। **सा त्वि**त्यादि। **से**ति जलभ्रान्तिर्जलात् मरीचिकाया यो **वि[3]शेषस्तस्य लक्षण**म्भेदेनावधारणन्तत्र**ापाटवा**द्धेतोः। **स्ववासना**। जलभ्रान्तिबीजन्तस्याः **प्रबो**ध आनुगुण्यं तेन **जन्यते**। किम्विशिष्टेन **प्रत्ययापेक्षिणा** प्रत्ययो मरीचिकादर्शनं जलसाधर्म्यस्मरणं च। **तस्मा**दित्युपसंहारः। विजातीयाद् **भिन्नो भावः**

**संयोज्य प्रत्यभिज्ञानं (कुर्यादप्य)न्यदर्शने ।**
**परस्यापि न सा बुद्धिः सामान्यादेव केवलात् ॥१०१॥**

**न हि परस्यापि सा बुद्धिः केवलात् सामान्यात् जन्यत इति कथनं युक्तम् ।**

**नित्यं तन्मात्रविज्ञाने व्यक्त्यज्ञानप्रसङ्गतः ।**

**यद्यनया बुद्धया नित्यं सामान्यं गृह्यते, अनेन ज्ञानेन व्यक्तिरनित्यैव स्यात् ।५**

(ङ) तद्वत्तानिश्चयः

**तदा कदाचित्संबद्धस्यागृहीतस्य तद्वतः ॥१०२॥**
**तद्वत्तानिश्चयो न स्याद् व्यवहारस्ततः कथम् ।**

**यदा सामान्याग्राहि विज्ञानं न भेदोपलब्धावुपयुक्तं, तदा न तौ कदाचिदपि सम्बन्धाप्रतिपत्तौ[6] इदमस्य सामान्यम् । न चेदं तद्वत् इति । तथा च तत्प्रतिपत्त्या तद्वति न प्रवृत्तिः, अर्थान्तरवद् ।**

---

स्वलक्षणमात्रन्ततो **जन्म** यस्य विकल्पविभ्रमस्य स तथा विकल्प एव विभ्रम इति विग्र[4]हः । **न व्यतिरिक्तस्य सामान्यस्य दर्शनात्** । इहेति प्रतीतिप्रसङ्गात् । नाव्यतिरिक्तस्य सामान्यस्य दर्शनात् । **प्रत्यभिज्ञान**मिति प्रकृतेन सम्बन्धः । **व्यक्तिवदनन्वया**दिति । व्यक्त्यात्मके तद्वदेव तस्यानन्वयात् सामान्यरूपमेव नास्तीति ॥

**परस्ये**ति सामान्यवादिनः । **से**ति सामान्याकारा । **केवला**दिति व्यक्तिनिरपेक्षत्वात् । (।१०१॥)

**न ही**त्यादि विव[5]रणं ।

कस्मान्नाहेतीत्याह । **नित्य**मित्यादि । **तन्मात्रविज्ञान** इति सामान्यमात्रग्रहे ।

**यदी**त्यादिना व्याचष्टे । **अनये**ति सामान्याकारया । **अनेन ज्ञाने**नेति सामान्यालम्बिना ।

**तदे**ति व्यक्तेरग्रहे । **सम्बद्धस्य** सामान्ययुक्तस्य **तद्वतः** सामान्यवतः ॥

**तद्वत्ता** सामान्यवत्ता । यदि सामान्यन्तदाश्रयश्च तेन ज्ञानेन गृह्येत तदोभयग्रहण[6]पूर्वकस्त**द्वत्तानिश्चयो** (न) भवेत् । **ततः** सामान्यग्रहाद् **व्यवहारो** व्यक्तौ प्रवृत्तिः **कथन्नैव** ।

**यदे**त्यादिना व्याचष्टे । **न तावि**ति सामान्यतद्वन्तौ । **इदमस्य** भेदस्य **सामान्यं** । **तथा चे**ति सामान्यतद्वतोः सम्बन्धाप्रतिपत्तौ । **तत्प्रतिपत्त्या** सामान्यप्रतिपत्त्या । **तद्वति** सामान्यवति । **अर्थान्तरव**दिति न ह्यश्वप्रतिपत्तिकाले तद्रूपेणा-

**स्यादेतद्।**

**एकवस्तुस(हायाश्चेद् व्यक्तयोर्ज्ञानकारणम्) ॥१०३॥**

451b **स्यादेतद्। व्यक्तयस्तदुपलम्भवस्तुकारणं, न केवलाः, यदा तस्य एकं सहकार्यस्ति तदा तत्सहितग्रहणात्।**

**तदेकं वस्तु किं तासां नानात्वं समपोहति।**
**नानात्वाच्चैकविज्ञानहेतुता तासु नेष्यते ॥१०४॥**

**तदेकं तासां व्यवहारसमय इति। किमिति नानात्वं तदेकविज्ञानानुत्पादेकारणमुच्यते।**

**अनेकमपि यद्येकमपेक्ष्याभिन्नबुद्धिकृत्।**

**न च भेदात् अनेका जनयत्येवैकं विज्ञानमिति उक्तं। न भेदाजननविरोधीः। किं पुनः? सम्बन्धात्[1] विरोधः। तेनैकमेव सहकारीति चेत्। एवं तु—**

---

79b गृहीते गोद्रव्ये[7]ऽश्वप्रतिपत्त्या प्रतिपत्तिरस्ति। एकवस्तुसहाया इति सामान्यसहायाः।

**स्यादेत**दित्येतस्यैव व्याख्यानं। **तस्ये**ति ज्ञानस्य। **एकं सहकार्य**स्तीति सामान्यं सहकारि भवतीत्यर्थः। **तदा तत्स**हिताः सामान्यसहिताः। एवं च सामान्यतद्वतोर्द्वयोर्**ग्रहणात्** सामान्यप्रतिपत्त्या तद्वति प्रतिपत्तिः सिद्धेति भावः॥

**त**दित्या चा र्यः। **एकम्वस्तु** सामान्यन्**तासां** व्यक्तीनां **नानात्वं समपो**हत्यपनयति। किं पुनस्तासां नानात्वापोह इष्यत इत्याह। **नानात्वाच्च**चेत्यादि। ह्यर्थः च शब्दः। **तास्वि**ति व्यक्तिषु। **किमि**त्यादिना व्याचष्टे। **तेनैकेन** सामान्येन। भेदेषु **यन्नानात्वन्तदेकविज्ञानाकारण**त्वे भेदानां **कारणमुच्यते**। नानात्वाद्व्यक्तयो नैकं विज्ञानं जनयन्तीति। एकसामान्यसम्बन्धेपि यदि भेदानान्**नानात्वा**दप्रच्युतिर्न ते**ष्वेकाका**[4]रं **विज्ञान**मिति पूर्ववद्व्यक्तीनामग्रहणं॥

**अनेकमपि** व्यक्तिरूपं। **एक**मिति सामान्यं। **ने**त्यादिना व्याचष्टे। यदि **भेदाजननविरोधी** स्यात् तदा सत्यपि सामान्ये **भेदान्न जनयंत्येवैकं विज्ञानं**।

**ताभि**रिति व्यक्तिभिः (।) किं पुनः समस्ताभिरेव **विना**। **ने**त्याह। **प्रत्येक**मिति। तथा हि शावलेयाभावे बाहुलेये गोबुद्धिस्तथा तदभावेन्यत्राप्येवम्प्रत्येकं सर्वा[3]सां व्यक्तीनामभावेपि। **तेनै**केन सामान्येन **क्रियमाणां** धियं

---

[1] Bral-bas.

**ताभिर्विनापि प्रत्येकं क्रियमाणां धियं प्रति ॥१०५॥**
**तेनैकेनापि सामर्थ्यन्तासां नेत्यग्रहो (धिया ।[1]**

**कथं तत्र तद्व्यक्तीनां सामर्थ्यं प्रतीयते। तदभावाद् ताभिः प्रत्येकं विनाऽपि-असति सामान्येऽभावात् इतरथा च भावात्।**

**नैष दोषः[4]। यथा नीलादीनामेकैकापायेऽपि चक्षुर्विज्ञानमुत्पद्यते तेषां समूहेऽपि नासामर्थ्यं, तथेहापि एकैकापायेऽपि जननात् न सर्वदा ऽसामार्थ्यमिति चेत्।**

**विषम उपन्यासः[5]। एवम्—**

**नीलादेर्नेत्रविज्ञाने पृथक् ) सामर्थ्यदर्शनात् ॥१०६॥**
**शक्तिसिद्धिः समूहेपि नैवं व्यक्तेः कथञ्चन ।**

---

प्रत्यभिज्ञानात्मिकां प्रति **सामर्थ्यन्तासां** व्यक्तीनां नास्ति। **इति** हेतोर**ग्रहो धिया** सामान्यज्ञानेन **तासां** व्यक्तीनां।

तदेवाह (।) **कथ**मित्यादि। **तत्र** ज्ञाने सामान्याकारे। **तद्भावादि**ति सामान्यप्रत्ययस्य भावात्। एतेन व्यतिरेकाभाव उक्तः। प्रयोगस्तु यो यदभावेपि भवति न तत्तन्निमि[4]त्तं यथा शालिबीजाभावेपि भवन् यवाङ्कुरः। भवति च प्रत्येकं शावलेयाद्यभावेपि बाहुलेयादौ गोबुद्धिरिति व्यापकविरुद्धः। तन्निमित्ततायास्तदभावेन व्याप्तत्वात्। सामान्यस्य तु तत्र शक्तिरित्याह। **असतीत्यादि**। असति **सामान्ये** सामान्यबु**द्धेरभावात्**। अनेन व्यतिरेक उक्तः। **इतरथा चे**ति सति सामान्ये सामा[5]न्यबुद्धे**र्भावात्**। अनेनान्वय उक्तः ॥

यदि सामान्यसहितानामेव व्यक्तीनां सामान्यबुद्धिं प्रति सामर्थ्यमिष्यते। तदा तथोक्तन्यायेन सामान्यस्यैव शक्तिर्न व्यक्तीनामिति।

**नैष दोष** इत्याह परः। **एकापायेपी**त्येकैकस्यापायेपीत्यर्थः। तथा हि यथा नीलादिसमुदायालम्बनं **चक्षुर्विज्ञान**मुत्पद्यते। तत्र चैकैकस्मिन् नीलादावपनीते भव[6]त्येव परिशिष्टे च वर्णस**समूहे** चक्षुर्बुद्धिर्न चेयता नीलादीना**मसामर्थ्यं** समूहे किन्तु सामर्थ्यमेव। प्रत्येकं नीलादीनां समूहज्ञाने। **तथेहापि** व्यक्तिष्वे**कैकापायेपि** भवति सामान्यविज्ञानमिति। नेयता प्रत्येकं **सर्वदा** व्यक्तीना**मसामर्थ्य**मिति सम्बन्धः। ततश्च यो यदभावेपि भवतीत्यादि प्रयोगेऽनेकान्त इति।

**विषम** इत्याचार्यः[7]। उपन्यस्यत इत्यु**पन्यासो** नीलादिदृष्टान्तस्तस्य प्रक्रान्तेन साम्यन्नास्तीत्यर्थः। नैवं व्यक्तेः कथंचनेति। न प्रत्येकं समस्तानां व्यक्तीनां सामर्थ्यमित्यर्थः। 80a

**इन्द्रिया (?नीला) दीनां चक्षुर्विज्ञानस्य प्रत्येकं सामर्थ्यं दृष्टमिति समूहे[6]ऽपि शक्तिरविरुद्धा। तथा व्यक्तयो सामान्यमनपेक्ष्य न कदाचित् अन्वयिज्ञानजनिकाः। तस्मादसमर्था एव व्यक्तयस्तत्रेति तेन न गृह्येरन्।**

452a **तासामन्यतमापेक्षं तच्चेच्छक्तं न केवलम् ॥१०७॥**

**अथ कुविन्दस्य वेमाभावे पटाकरणम्। कुविन्दः प्रत्येकं वेमाभावे तत एव कुविन्दाद् न पटोत्पत्तिः।**

**तथा च व्य[1]क्तीनां प्रत्येकं व्यक्तिविज्ञानजननेऽपि न सामान्यं केवलं तद्। स्यादेतत्। अथ किम्। व्यक्तीनाम्मध्ये कामप्येकामपेक्ष्य विज्ञानं जन्यत इति।**

**एवं सति।**

---

तद्व्याचष्टे। **नीलादीनामित्यादि। प्रत्येकमपि सामर्थ्यं दृष्टमिति।** नीलादयो हि यथा स्वेन स्वेन रूपेण भिन्नास्तद्वच्चक्षुर्विज्ञानान्यपि। स्वाकारभेदात्। तत्र नीलसहिते[1]न समूहेन यज्जन्यते चक्षुर्विज्ञानन्न तत्तद्विकलेन यच्च तद्विकलेन न जन्यते तदन्यदेव। तस्मात् समूहाकारोपरक्तस्य विज्ञानस्य **प्रत्ये**कन्न नीलादीन्प्रत्यन्वयव्यतिरेकानुविधानाद् गम्यते तेषां प्रत्येकं सामर्थ्यमिति **समूहेपि शक्तिरविरुद्धा। तथे**ति नीलादिवत्। **न कदाचि**दिति प्रत्येकं संहता वा।

एतदाह। यदि शावलेयसहितसामान्यजन्यं गोज्ञानमन्यद[2]न्यच्च बाहुलेयसहायजन्यं स्यात्(।)तदा व्यक्तीनां प्रत्येकं स्वाश्रयद्वारभाविज्ञाने शक्तिर्गम्येत। किन्त्वेकमेव सर्वासु व्यक्तिषु प्रत्यभिज्ञानन्तस्य सर्वत्रैकाकारत्वात्। प्रत्येकं व्यक्तीनां चाभावेपि सामान्यादेवास्योत्पत्तेः। **तस्मादसमर्था एव व्यक्तयस्तत्र** सामान्यज्ञाने। **इति** हेतोस्**तेन** सामान्यज्ञानेन **न गृह्येरन्**॥

**तासा**म्व्यक्तीनाम्मध्ये**ऽन्यतमापेक्ष**मि[3]ति कांचिद्व्यक्तिमपेक्ष्येत्यर्थः। **तदि**ति सामान्यं **केवलं** व्यक्तिनिरपेक्षं।

**अथे**त्यादिना व्याचष्टे। **कुविन्द**स्तन्तुवायः। बहूनां वेमानाम्मध्ये **प्रत्येकं वेमाभावे**प्येकेनान्यतमेन **पटं करो**तीति (।) यद्यपि सर्वेषां व्यभिचारस्तथापि **न तत** एव **कुविन्दादे**व वेमरहितात् **पटोत्पत्ति**: शक्या वक्तुं। यस्मान्न वेमरहितः कुविन्दः पटं करोति[4] केवलस्य पटकरणाशक्तेः। **तथा च न सामान्यं केवलन्तद्धे**तुर्विज्ञानहेतुः।

**एवमि**त्याचार्यः। **तासामन्यतमापेक्षं** सामान्यं शक्तमिति ब्रुवता व्यक्त्युपकार्यं सामान्यमिष्टमनपकारिण्यपेक्षायोगात्॥

**तदेकमुपकुर्युस्ताः कथमेकां धियञ्च न।**

**भिन्नार्थानां एकार्थयोगविरोधात् सर्वोयं आरम्भः चेत्**[1]**। यदि ता व्यक्तयोपि एकं सामान्यं उपकुर्युः, आसां विज्ञानेन कोऽपराधः**[3] **कृतः ? तत्र किमन्तर्गडुना सामान्येन कार्यम्।**

**यथा भिन्नानामपि तासामेकसामान्योपकारशक्तिरस्ति, एवन्तदेकमेव विज्ञानं कुर्वन्तु**[2] **।**

**अपि च।**

**कार्यश्च तासां प्राप्तोसौ जननं यदुपक्रिया ॥१०८॥**

**न हि पूर्ववद् अनतिशयात्मानं बिभ्रतोऽस्य कश्चिदुपकारकः, अतिप्रसङ्गात्।**

---

एवं चे**त्तदेकं** सामान्य**मुपकुर्युस्ता** व्यक्तयः **कथमेकां धियं च न**। एवशब्दार्थे चशब्दः। एकां प्रत्यभिज्ञानात्मिकान्धियमेव कथं नोप[5]कुर्युस्तामेवोपकुर्युरिति यावत्।

**भिन्नेत्या**दिना व्याचष्टे। भिन्नानां विलक्षणानामेकार्थोपक्रिया। प्रत्यभिज्ञाद्येकार्थक्रियाविरोधिन्यसति सामान्य इति **सर्वोयं** सामान्यसिद्ध्यर्थं **आरम्भः। आसा**मिति व्यक्तीनां **विज्ञानेन** प्रत्यभिज्ञानाख्येनापराधः कृतो यत् तद्विज्ञानन्न कुर्वन्ति (।) न कश्चित्कृतस्तस्मात्तदेव कुर्वन्तीति भावः। तथा च **किम**[6]**न्तर्गडुना**। घंटामस्तकयोरन्तरालवर्त्ती मांसपिण्डोन्तर्गडुस्तेन तुल्यस्तथोक्तः। तद्वन्निष्फलेनेत्यर्थः॥

स्यान्मतं (।) **भिन्नानामेकसामान्योपकारशक्तिरस्त्य**तस्ते सामान्यमेव साक्षादुपकुर्वते न तु विज्ञानमित्यत आह। **यथे**त्यादि। **एवन्तदे**कमिति सामान्यजन्यं य**द्विज्ञानन्तदेव कुर्वन्तु**। किं सामान्योपकारेण निष्फलेन। एवम्म[7]न्यते (।) विज्ञाने व्यक्तयो न स्वाकारोपधानेन व्याप्रियन्ते (।) सामान्यज्ञाने स्वलक्षणस्याप्रतिभासनात्। किंत्वाधिपत्यमात्रेण (।) तच्च यथा सामान्ये तथा तद्विज्ञानेपि तुल्यमिति। 80b

किं च यदि व्यक्तयः सामान्यमुपकुर्वते तदा **तासां** व्यक्तीनां **कार्यश्चासौ** सामान्यात्मा प्राप्तः। यस्मा**ज्जननमेवोपक्रिया**॥

तदेव स्फुटयन्नाह। **न ही**त्यादि। अतिशयो विशेषस्तदभावादन[1]तिशयमात्मानं स्वभावमस्य। सामान्यस्योपकारकासन्निधेः पूर्ववदुपकारकसन्निधाने-

---

[1] Btsams-pa-yin-la. [2] Rag-mod.

**अर्थान्तरेण जनने हि तस्य किं तेन क्रियते। तस्य तदाश्रयत्वेऽनुपकारिणः क आश्रया[5]श्रयिभावः अतिप्रसङ्गो वा। उपकारेऽपि तत्रैव तत्प्रतिबन्ध इति तत्करणात् तस्योपकारी किमन्योऽपेक्ष्यते? तदपेक्षास्याश्रयस्य। तदुपयोगेऽनुपकार्यत्वे केयं अपेक्षा[6] नाम? तदुत्पत्तिधर्मभावप्रतिबन्धत्वादपेक्षते नाम। अनाधेयातिशयत्वेऽपि अपेक्षते च परानिति व्याहतमेतत्।**

---

पि विभ्रतः क**श्चिदुपकारक**ो न हीति सम्बन्धः। **अतिप्रसङ्गात्**। एवं हि सर्वः सर्वस्योपकारकः स्यात्। तस्मादुपकारकेणैवोपकार्यस्यातिशयो जन्यत इत्यभ्युपेयं। स चातिशय उपकार्यस्यात्मभूत इति जननमेवोपक्रिया। सामान्यादर्थान्तरभूत एवातिशयो[2] व्यक्तिभिर्नान्यित इत्याह। **अर्थान्तर** इत्यादि। **तस्यो**पकार्यस्य सामान्यस्य **किन्तेना**र्थान्तरेणोपकारेण **क्रियते**। तस्य चोपकारस्यार्थान्तरस्य किन्तेन सामान्येन येन तस्य सामान्यस्यासावुपकारसम्बन्धी स्यात्। सामान्यस्य सम्बन्धिन उपकारस्य·करणाद् व्यक्तयोप्युपकारिण्यः स्युः। उपकारस्य सामान्यमाश्रयस्तत आश्रयाश्रयिभावलक्षणः स[3]म्बन्धस्तयोरित्यत आह। **तस्ये**त्यादि। तस्योपकारस्य **तदाश्रयत्वे**। तत्सामान्यमाश्रयो यस्येति कृत्वा। तस्य वा सामान्यस्य तदाश्रयत्वे। तस्योपकारस्याश्रय इति कृत्वा। उपकरोतीत्युपकारी तदभावादनुपकारि सामान्यमुपकारः सामान्यकृतोऽस्त्यस्योपकारस्येत्युपकारी। तत्प्रतिषेधादनुपकारी। अनुपकार्य इत्यर्थः। अर्थद्वयं चैतत्त[4]न्त्रेणोपात्तम् (।)तेनायमर्थः(।)अनुपकारकस्य सामान्यस्यानुपकार्यस्य चोपकारस्य यथाक्रमं **क आश्रयाश्रयिभाव** इति। **अतिप्रसङ्गो वे**ति। अनुपकारिण आश्रयाश्रयिभावे सर्वत्र तत्प्रसङ्गात्। **उपकारे वा** सामान्यकृते उपकारस्याभ्युपगम्यमाने। **तत्रैव** सामान्ये तस्योपकारस्य **प्रतिबन्ध इति किमन्यो** व्यक्तिभेदस्**तस्यो**पकारस्य **करणात् तस्य** सामा[5]न्य**स्योपकारी** नैवेति चेत्। **तदपेक्ष**स्येति व्यक्त्यपेक्षस्**याश्रयस्ये**ति सामान्यस्य। उपकारं प्रत्याश्रयत्वात्। **तदुपयोगे** तस्मिन्नुपकारे। उपयोगे कल्प्यमाने नित्यत्वादनुप**कार्यत्वे** सामान्यस्य **केयं** व्यक्तिं प्रत्**यपेक्षा नाम**। नैव। कस्तर्ह्यपेक्षत इत्यत आह। **तदुत्पत्ती**त्यादि। तस्मादपेक्षणीयादुत्पत्तिः सा धर्मः स्वभावो यस्य स **तदुत्पत्तिध[6]र्म्म**भावः। स्वभावस्य **प्रतिबन्धा**दायत्तत्**वादपेक्षते नाम** उपकारिणं(।)नामशब्दः प्रसिद्धेर्द्योतकः। अनुत्पत्तिधर्मकमपि सामान्यमपेक्षत इति चेदाह। **अनाधेयेत्या**दि। यत्तैरुपकारकैरनाधेयोनुत्पाद्य आत्**मातिशयो** यस्य स तथा। एवंभूत आत्मीयस्येति पुनर्बहुव्रीहिरेवम्भूत**त्वे** (?) सामान्यपदार्थः[7]

---

[1] Illigible.

**तस्माद् यः कश्चि[7]त् क्वचित् प्रतिबन्धः स सर्वो जन्यतायामेवोद्भवति। परभावजनने हि तदनुपकारात्, अकिञ्चित्करस्यानुपकारात्। तस्माद् उपकारक-सामान्यविज्ञानजनने व्यक्त[1]मस्य तत्कार्यता।** 452b

**केवलस्य हि सामर्थ्ये क्वचिदपि य(?अ)त्र सामर्थ्यासिद्धेरग्राह्यत्वं व्यक्तीनाम्। विज्ञाने प्रतिभासनात् व्यक्तयः समर्था इति चेत्। असिद्धोपकाराणां[2] कथं प्रतिभासः ? स एव सामान्याभ्युपगमे चिन्त्यते[1]।**

**यस्माद् अनुपकारकस्याविषयत्वं, अतिप्रसङ्गात्। नाविषयस्य विज्ञाने**

---

**अपेक्षते च परानिति व्याहतमेतत्।** व्यापकविरुद्धोपलब्ध्या। तथा ह्यपेक्षाधेयातिशयत्वेन व्याप्ता। तद्विरुद्धमनाधेयातिशत्वमिति। 81a

**यः कश्चिद्** भावः **प्रतिबन्धः** कस्यचिद् वस्तुनः **क्वचिदा**श्रये **स सर्वो जन्यतायां** कार्यतायामे**वोद्भवति**। आश्रयेणाश्रितस्यानात्मभूत एवोपकारः क्रियत इति चेदाह। **परभावेत्यादि। तदनुपकारात्त**स्योपकार्यस्या[1]नुपकारात्। न ह्यन्यस्मिन्नुपकृतेन्य उपकृतो नाम। तस्य तदाश्रयत्वेऽनुपकारिणः कोयमाश्रयाश्रयिभाव इति सर्वम्वाच्यं।

न च पौनरुक्त्यदोषः। पूर्वं सामान्यतद्वतोरुपकार्योपकारकभावद्वारेणोक्तमधुना सर्वविषयं वास्तवं सम्बन्धमुपादायेति। तस्मादर्थान्तरकरणादाश्रयाभिमतोकिंचित्करः (।) तथाभूतोप्युपकारक इति चेदाह[2]। **अकिञ्चित्करस्ये**त्यादि। यत एव**न्तस्माद् विज्ञानजनन** इत्यन्वयिविज्ञानजनने। **व्यक्त**—मवश्य**मस्य** सामान्यस्य। **तत्कार्य**ता व्यक्तिकार्यता (।)

यथोक्तदोषभयात् **केवलस्य** व्यक्त्यनपेक्षस्यान्वयिविज्ञानजननं प्रति **सामर्थ्ये**-भ्युपगम्यमाने **व्यक्तीनां क्वचिद**पि काले। **अत्रे**त्यन्वयिविज्ञाने **सामर्थ्यासिद्धेः**-कारणाद**ग्राह्यत्वं व्यक्तीनां**। अकारणस्य विषयत्वायो[3]गात्। **विज्ञाने प्रतिभासनादि**ति। न ह्यसमर्थस्य शशविषाणादेरन्वयिविज्ञाने प्रतिभासनमस्ति। **व्यक्तयस्तु** प्रतिभास·ते (।) तस्मात् सामान्यवत्ता अपि **समर्था** इति। असिद्धः सामान्यविज्ञाने उपकारो यासां व्यक्तीनान्ता **असिद्धोपकारास्तासां कथं** सामान्यविज्ञाने **प्रतिभासः** (।) नैव। उपकार एव कथमसिद्ध **इति चेदा**ह। **स एवे**त्यादि। **स** इ[4]त्युपकारः **सामान्याभ्युपगमे** हि तस्यैव तत्र सामर्थ्यन्न व्यक्तीनां। यथोक्तं।

"ताभिर्विनापि प्रत्येकं क्रियमाणां धियं प्रती"त्यादि (१।१०५)।

माभूद् व्यक्तीनामुपकारः सामान्यविज्ञाने प्रतिभासस्तु कस्मान्न भवतीत्याह। **यस्मादि**त्यादि। **अतिप्रसंगादि**ति। **अनुपकारकस्य विषयत्वे** सर्वस्य विज्ञानस्य

---

[1] Bsam-par-bya-ba.

**प्रतिभासनम्। अनुपकारकस्याविषयत्वे[3]ऽतीतादीनामविषयता, असतां अनुपकारित्वादिति इति चेत्। भवन्तु तद्विषयाणि निर्विषयाणि। निर्विषयत्वेऽपि तद्रूपानुभवाहितवासनाया उत्पद्यमानत्वात्,[4] स आकारो विज्ञानस्यात्मभूत एव।**

**भावाभावानुविधानात् सामर्थ्यं न तु प्रतिभासनात्। अप्रतिभासिनोऽपि सामान्यप्रतिभासिनां विप्लवाः केशादयः, तेषां निष्क्रियत्वात्।**

---

सर्वो विषयः स्यात्। माभूद् विषयः प्रति[5]भा(स)स्तुकस्मान्नेति **चेदाह। नाविषयस्ये**त्यादि। **अनुपकारकस्ये**त्यादि। अनुपकारस्येति पाठान्तरं। तत्र न विद्यते विज्ञानकार्यस्योपकारो यस्मादर्थात् सोनुपकार इति व्याख्येयं। **तस्याविषयत्वेऽतीतानागतादीनां**। आदिशब्दात् प्रधानेश्वरादीनां यथागमकं कल्पितानां ग्रहणं। **असता**मित्यसामान्यहेतुः। **भवन्त्वि**त्यादिना सि[6]द्धसाध्यतामाह। **तद्विषयाणी**त्यतीतविषयाणि (।) **निर्विषयत्वे** कथन्तेष्वन्तर्भविष्यति चेत्येवमाद्यर्थानुकारी प्रतिभास इत्यत आह। **निर्विषयत्वे**पीत्यादि। **तदनुपकारी**ति योसावर्थोनुभूतोऽतीतश्च तदनु(प)कारी। अस्पष्टेन रूपेणातीतस्यैवार्थस्यानुकारान्नातीतादिकन्नाम किञ्चिदस्ति यस्य रूपमनुकुर्यात्। स च प्रतिभासो[7] **विज्ञानस्यात्मभूत एवा**स्पष्टरूपस्य बहिरविद्यमानत्वात्। तद्रूपानुकारित्वे कारणमाह। **तद्रूपानुभवे**त्यादि। यद्रूपो वर्त्तमानार्थानुभवो जातस्तेन या **वासना आहि**ता तत **उत्पद्यमानं** ज्ञानमनुभूतार्थाकारेणोत्पद्यत इत्यर्थः। युक्तमतीते तद्रूपार्थानुभवोत्पत्तिर्वर्त्तमानावस्थायामर्थस्यानुभूतत्वाद् अनागतादौ कथं। न हि तत्रानुभवो[1]स्ति। तत्राप्येवम्भूतोर्थो भविष्यतीत्येवंभूताच्छब्दाद् योभिलापसंसृष्टो विकल्पः स एव स्वसंविदितत्वात् तद्रूपोनुभवस्तेनाहितवासनोत्पत्तेरदोषः।

81b

एवं प्रधानादिविकल्पेष्वपि यथागमं शब्दार्थाकारविकल्पानुभववासनोत्पत्तिर्व्याख्येया। एवमतीतादीनामविषयत्वे प्रसङ्गादनुपकारको विषय इति यदुक्तन्तदैकान्तिकमेव। तथा व्यक्ती[2]नामसिद्धोपकाराणामविषयत्वान्नास्ति सामान्यज्ञाने प्रतिभासः। ततश्च यदुक्तं(।) समर्था व्यक्तयो विज्ञाने प्रतिभासनादिति (।) तस्यासिद्धत्वमुक्तं।

अधुना प्रतिभासमङ्गीकृत्यानैकान्तिकत्वमाह। **भावाभावे**त्यादि। अर्थभावे भावस्तदभावे चाभावो विज्ञानस्य **भावाभावानुविधानं**। तस्माद्धेतोरर्थस्य विज्ञाने **सामर्थ्यं** गम्यते। **न तु[3] प्रतिभासनात्**। यस्माद् वस्तुस्थित्या सामान्यस्यासत्यपि प्रतिभासने विकल्पविज्ञाने सामर्थ्याभ्युपगमात्। तदेवाह (।) **अप्रतिभासिनोपी**त्यादि। **न हि व्यक्तिव्यतिरेकेण सामान्यं प्रतिभासते**। यदपि सामान्य-

**अभिन्नप्रतिभासा धीर्न भिन्नेष्विति चेन्मतम् ।**

**नानेकस्मात् एककार्यकरणमिति वाच्यम् । अथ चेत् भिन्नेषु अर्थेषु तद्व्यवस्थानं, धीरभिन्नप्रतिभासिनी च न हि स्यात् । न सामान्यप्रतिभासिनीषु स्वलक्षणप्रतिभासः ।**

**तदभावेऽपि तासां भावात्, आकारान्तरेण स्वविज्ञाने प्रतिभासनात्, एक-**

---

प्रतिभासि विकल्पविज्ञानन्तदपि वर्णसंस्थानाद्याकारमेव । न हि तत्रापि वर्णाद्याकारविविक्तोन्यः सामान्याकारो लक्ष्यते ।[4] न च वर्णसंस्थानाद्यात्मकं सामान्यं । तस्मान्न वस्तुस्थित्या सामान्यं प्रतिभासते (।) तथापि तस्याप्रतिभासिनो भवन्मतेन भावात् । विज्ञाने सामर्थ्यात् । भाव्यते जन्यते कार्यमनेनेति भावः सामर्थ्यमुच्यते । सत्यपि च प्रतिभासने नास्ति सामर्थ्यमिति दर्शयन्नाह । **प्रतिभासिना**मित्यादि । विप्लवन्ते वस्तुत्वादपगच्छन्तीति **विप्लवाः केशादय** एव[5] (।) विप्लवा इति विग्रहः । ते हि तैमिरिकादिदर्शने प्रतिभासन्ते तथापि ते**षामभावात्** । पूर्ववद् भावशब्दव्युत्पत्तेरसामर्थ्यमभावशब्देनोच्यते । विज्ञानजननं प्रत्यसामर्थ्यमित्यर्थः । तदेव सामर्थ्येपि प्रतिभासदर्शनात् प्रतिभासनात् सामर्थ्यमित्यस्यानेकान्त उक्तो भवति ।

"तदैकमुपकुर्युस्ताः कथमेकान्धियं च ने"ति (१।१०७)

यदुक्तन्तत्र[6] परस्योत्तरमाशंकते । **अभिन्ने**त्यादिना । **अभिन्नप्रतिभासा** एकाकारा । **भिन्नेषु** स्वलक्षणेषु । तेषां स्वलक्षणानामाकारस्तदाकारः सोर्पित आहितो यस्याम्बुद्धौ सा तथा (।) एवंभूता चासाव**भिन्नप्रतिभासिनी च न हि स्याद्** यदि विलक्षणेभ्य एवोत्पद्येत । भवति चाभिन्नप्रतिभासिनी । तस्मान्न विलक्षणेभ्य एवोत्पद्यते किन्तु सामा[7]न्यपदार्थादिति । 82a

**ने**त्यादिना प्रतिविधत्ते । एतत्कथयति (।) यदि स्वलक्षणानि स्वाकारा वा (?) तेन सामान्याकाराणां बुद्धीनां जनकानीष्यन्ते तदेतद् युज्यते । **भिन्नेषु** कथमभिन्नप्रतिभासा बुद्धिरिति । तच्च नास्ति यतो **न सामान्यप्रतिभासिनीषु** बुद्धिषु **स्वलक्षणप्रतिभासः** । यस्मात् **सामान्यग्राहिणीषु** बुद्धिषु स्वलक्षणप्रतिभासाभ्युपगमे तिस्रः कल्प[1]नाः । (१) येन रूपेण चक्षुरादिबुद्धिषु व्यक्तयो भासन्ते तेनैव सामान्यबुद्धिष्वपि । (२) सामान्यबुद्धौ वा यद्रूपमाभाति तदेव स्वलक्षणानां । (३) रूपद्वयं वा एकस्य भेदस्याभ्युपगन्तव्यं । येन केन चक्षुरादिबुद्धिषु भासतेऽन्येन विकल्पबुद्धिष्विति ।

(१) तत्राद्ये पक्षे चक्षुरादिबुद्धिवत् स्वलक्षणाभावे सामान्यबुद्धीनामप्यभावः स्यान्न चैवं । **तदभावेपि** तस्य[2] स्वलक्षणस्याभावेपि **तासां** सामान्यबुद्धीनां

**स्मिन्ननेकाकारायोगा(दतिप्रसंगा)च्च।**

453a **तस्मान्नेयं[7] तदुद्भवा भिन्नार्थग्राहिणी अभिन्ना भाति।**

**अतत्प्रतिभासिन्यपि अध्यवसायविभ्रमात् व्यवहारयति लोकम्। स तु तस्यां प्रतिभासमान आकारो नार्थेष्वस्ति, अन्यत्र भेदाभेदिनः[1]। स चारूप एव। तमेवाकारं गृहीत्वा तथा विप्लवत इत्युक्तं प्राक्।**

---

भावात्। (२) द्वितीयस्य पक्षस्याभावमाह। **आकारान्तरे**त्यादि। सामान्याकारादाकारान्तरेणासाधारणेन **स्वज्ञाने** चक्षुरादिज्ञाने **प्रतिभासनान्न** सामान्याकार एव रूपं व्यक्तीनां। (३) तृतीयम्पक्षं निराकर्त्तुमाह। **अनेकाकारायोगा**दिति। एकस्यानेकत्वमयुक्तमेकानेकत्वयोर्विरोधात्। **अतिप्रसङ्गा[3]च्चे**त्येकस्यानेकत्वकल्पनायां न क्वचिदेकत्वं स्यादित्यर्थः। स्वलक्षणं च सामान्यबुद्धौ न प्रतिभासते।

यत एवन्त**स्मान्नेयं** सामान्याकारा बुद्धिः। **भिन्नार्थग्राहिणी** (।) आहितस्वलक्षणाकारा सत्य**भिन्नाकारा भाति। तदुद्भवा** भिन्नपदार्थोद्भवा। किन्तु स्वल[4] क्षणग्राहिणोनुभवेनाहितां वासनामाश्रित्य प्रकृत्या भ्रान्तैवेयमुत्पद्यते। पारम्पर्ये[4]-च व्यक्तयस्तस्याः कारणं कथ्यन्ते।

यदि सामान्यबुद्धिर्न स्वलक्षणप्रतिभासिनी कथं स्वलक्षणे लोकं प्रवर्त्तयतीति चेदाह। **अतत्प्रतिभासिन्यपी**त्यादि। अस्वलक्षणप्रतिभासिन्यपि स्वप्रतिभासेऽनर्थेऽर्था**ध्यवसायविभ्रमा**द्धेतो**र्व्यवहारयति लोकं** दृश्यविकल्प्यावेकीकृत्य प्रवर्त्तयतीति यावत्। यदि सामान्यबुद्धिः सामान्याकारा स एव पारमार्थिकन्तर्हि सामान्यम्भविष्यतीत्याह। **स तु तस्यां**मित्यादि। **स प्रतिभासमानः** सामान्या**कारो नार्थेष्वस्ति**। तस्य व्यतिरिक्तस्य व्यतिरेकेणानुपलम्भनात्। अव्यतिरिक्तस्य च व्यक्तिवदनन्वयात्।

कथन्तर्हि व्यक्तिष्वभिन्नाकारप्रतिभास इत्याह। **अन्यत्र भेदादभेदिन** इति। भेदोन्यापोहः स एव प्रतिव्यक्त्यभेदी। तथा हि यथैका गोव्यक्तिरगोव्यावृत्ता तथान्यापि[6]। तदनेन प्रकारेण स्वलक्षणान्येव विजातीयव्यावृत्तान्यभेदीनि भेद-इत्युच्यन्ते। अन्यत्र शब्दश्चायम्विभक्त्यन्तप्रतिरूपको निपातः। अन्यशब्दसमानार्थः। न त्वयन्त्रल्प्रत्ययान्तः सप्तम्यर्थस्याविवक्षिततत्वात्। तेनायमर्थो यथोक्तेन प्रकारेण स्वलक्षणात्मकाद् भेदादभेदिनोन्यः प्रतिभासमान आकारो-82b र्थेषु नास्ति किन्तु स्वलक्षणात्मक एव भेदो[7] विजातीयव्यावृत्तेरभेदी सर्वत्र विद्यतेऽभेदाध्यवसायात्। अभेदाध्यवसायस्य च स एव भेदः पारम्पर्येण निमित्तं।

ननु बुद्धावभिन्नाकारः प्रतिभासते कथमर्थेषु नास्तीत्युच्यत इत्याह। **स चारूप** इति (।) ह्यर्थे च शब्दः। स हि विकल्पप्रतिभस्याकारो निःस्वभावस्तत्त्वा-

**अपि च सामान्यवस्तुवादिवदपि व्यक्तीनां भेद एव कथं तत्र बुद्ध्याकारभेद**[2] **इति तुल्यं चोद्यम्। न तुल्यं, तत्र सामान्याभेदादिति चेत्। ननु तत्र तस्य सतोऽपि आभासो न लक्ष्यते, सा हि बुद्धिर्वर्णसंस्थानवती विभाव्यते। न चेदृशं सामान्यम्।**[१] **न च ततोऽन्यत्र**[3] **अभेदाकारोऽपि क्वचित्।**

**आकृतिसामान्यवादिनोऽपि स तथा विशेषवत् तस्य अव्यतिरेकात् अर्थावृत्तिरिति भेदात् नाभिन्नः प्रतिभासो युज्यते।**

---

न्यत्वेन परमार्थतो व्यवस्थापयितुमशक्यत्वादिति संप्रत्येवोक्तत्वात्।[1] **तमेवाकारङ्गृहीत**बुद्धिस्तदाकारोत्पत्तिरेवास्याः ग्रहणन्त**थे**त्यरूपस्याकारस्य ग्रहणाद् **विप्लवते** भ्रान्ता भव**तीत्युक्तम्प्राक्**। अशक्तिरेषा विकल्पानामविद्याप्रभवत्वादिनोक्तत्वात्।

दोषस्य परिहारमुक्त्वाऽधुना तुल्यदोषतामापादयन्नाह। **अपि** चेत्यादि। **न तुल्यमि**ति परः। **तत्रे**ति **भिन्नासु व्यक्ति**षु तत एव सामान्यात्तुल्याकाराद् बुद्धिरिति **न तु**[2]**ल्यं चोद्यं**।

**नन्वि**त्यादि सि द्धा न्त वा दी। **तत्र** व्यक्तिषु **तस्य** सामान्यस्य **सतोष्या** (?प्या) **भास आकारो न लक्ष्यते**। यद्वा **तत्रे**ति विकल्पिकाविकल्पिकायां बुद्धौ। स्यादेतद् (।) विकल्पिकायान्तस्याभासोस्तीत्याह। **सा ही**त्यादि। **सा हि** विकल्पिका बुद्धि**र्वर्णसंस्थानवती विभाव्यते**ऽनुभूयते । वर्णाद्याकारमेव सामान्यमिति चेदाह। **न चे**त्यादि। **ई**[3]**दृश**मिति वर्णसंस्थानाकारं गुणत्वाद् वर्णसंस्थानादेः सामान्यस्य च गुणव्यतिरेकात्। **न च तत** इति वर्णसंस्थानादेः।

एवं तावद् भिन्नं सामान्यं निराकृत्याभिन्नं निराचिकीर्षन्नाह। **आकृती**त्यादि। स्वलक्षणानामात्मभूतमेव सादृश्यमाकृतिस्तदेव सामान्यन्तस्य वादः स यस्यास्ति। तद्वा वदितुं शीलं यस्य सां ख्य स्य **स तथा**। **विशेषव**[4]**त्** स्वलक्षणवत् **तस्य** सामान्यस्य स्वलक्षणा**दव्यतिरेका**द्धेतोरर्थान्तरे द्वितीयादिव्यक्तिष्**वृत्तिः**। **इति** हेतोस्तदपि सामान्यं स्वलक्षणमेव जातन्ततो **भेदा**द्धेतोर्विद्यमानस्य **नाभिन्नः प्रतिभासो युज्यते** व्यक्तिष्वित्यध्याहारः।

तदेवमु द्यो त क रा द्यभिहितमभिन्नप्रतिभासमभ्युपगम्य व्यतिरिक्तस्याव्यतिरिक्तस्य च सामान्यस्यायो[5]गाद् भ्रान्तिरेवायं व्यक्तिष्वेकाकारप्रतिभास इत्युक्तं।

---

[1] Bām-po bži-pa = **चतुर्थमाह्निकम्**

**अथवा। अस्तु बुद्धेः प्रतिभासः—**

**"अभिन्नप्रतिभासाधीनं भिन्नेष्विति"**

**प्रतिभासो धियां भिन्नः समाना इति तद्ग्रहात् ॥१०९॥**

**अस्तु प्रतिभासो धियां भिन्नाः समाना इति**[4] **तासां ग्रहणात्। नैव तासु अभिन्नः प्रतिभासः समाना इति ग्रहणात्। न हि एकप्रतिभासे समाना इति युज्यते। किन्तर्हि? तदेवेदमिति।**

**द्वयस्य**[5] **सम्बन्धादिति चेत्। न अप्रतिबद्धस्य सम्बन्धायोगात्, अतिप्रसङ्गाच्च। ताः समाना इति चेत्, कथमन्योन्यस्य साम्यम्? तत्सम्बन्धादिति चेत्। न।**[6]

---

अधुनास्त्येकप्रतिभासो व्यक्तिष्वित्याह। **अथवास्त्वित्यादि।** यदुक्तम् (।) **अभिन्नप्रतिभासा धीनं भिन्नेष्वि**त्येतदस्तु। इष्टमेवैतदित्यर्थः। यतः **प्रतिभासो धियां** सामान्यबुद्धीनां **भिन्नः।** किङ्कारणं (।) **समाना इति** तासां व्यक्तीनां **ग्रहणात्।**

**नैवे**त्यादिना व्याचष्टे। **तास्वि**ति सामान्यबुद्धिषु[6] **अभिन्न** इत्येक(:)**प्रतिभा**सोस्ति (।) किं कारणं (।) **तासां** व्यक्तीनां **समाना इति ग्रहणात्।**

ननु **समाना** इति ग्रहे सत्ये**कप्रतिभासः** कस्मान्न **युज्यत** एवेत्यत आह। **न ही**त्यादि। **किन्तर्हि तदेवे**ति यत्पूर्वदृष्टन्तदे**वेद**न्दृश्यत इत्येवं स्यान्न तु पूर्वेणेदं समानमिति भेदाधिष्ठानत्वात् समानव्यवहारस्य। **द्वयस्ये**त्यादि। **यदि** सामान्यमेव केवलन्ता[7]भिर्बुद्धिभिर्गृह्यते तदा भवेदयं दोषः। किन्तु सामान्यं विशेषश्च द्वयमपि सामान्यबुद्ध्या गृह्यते। ततो द्वयस्य ग्रहणाददोषः। यतस्तेनैव सामान्येन युक्ता विशेषाः समाना इति गृह्यन्त इति।

83a

**तथापी**त्या चा र्यः। द्वयस्य ग्रहणेपि कल्प्यमाने **तदिहेति स्यात्।** तत् सामान्यं यत्पूर्व व्यक्तौ दृष्टन्तदिह व्यक्त्यन्तरे दृश्यत इत्येवं स्यान्न तु समान इति व्यक्तिभ्य ए[1]कान्तभिन्नत्वात् सामान्यस्य। **तदेवेत्य**र्थान्तरभूतं गोत्वादिकं **तासां** व्यक्तीनां साम्यं येन **तास्समाना इति चेत्। अन्यः** सामान्यात् **साऽन्यस्य** स्वलक्षणस्य **कथं** केन प्रकारेण **साम्यं।** न केनचिदित्यभिप्रायः। तथा हि व्यक्तिरूपानुकारात् सामान्यं व्यक्तीनां साम्यं कल्प्येत (।) तच्च नास्ति व्यक्तिभ्योऽत्यन्तंविलक्षणत्वात् सामान्यस्य। नाप्यनेनान्ये समाना येन तत्साम्यं स्यात्[2]। न हि व्यक्तिरूपानुकारादिना साम्यं किन्तु **तत्सम्बन्धात्।** व्यक्तिभिः सम्बन्धात्। सामान्यं व्यक्तीनां सामान्य**मिति चेन्नै**तदेवं। किङ्कारणम् (।) **अप्रतिबद्ध**स्य व्यक्ताव-

**कथन्ता भिन्नधीग्राह्याः समाश्चेदेककार्यता ।**
**सादृश्यं ननु धीः कार्यं तासां सा च विभिद्यते ॥११०॥**

**ग्रहणदर्शनात् । श्रासु श्रभिन्नप्रतिभासः ।**

**ननु आस्वभिन्नप्रतिभास, न तद्[7]दर्शने भेदाभेदप्रतिभासात् न समानाः** 453b

---

नायत्तस्य ताभिरनुपकृतस्येत्यर्थः । समवायलक्षणेन सम्बन्धेन सम्बन्धात् सामान्यस्य **साम्ये**ऽभ्युपगम्यमाने**ऽतिप्रसंगः** संख्यासंयोगकार्यद्रव्याणामपि सामान्यरूपता स्यात् ।[3] ततश्च तत्सम्बन्धात् संख्येयादिषु समानप्रतिभासः स्यात् ।

**कथमि**त्यादि परः । समाना इति ग्रहणाद् व्यक्तिषु प्रतिभासभेदः साध्यते (।) तच्चैतद् **विरुद्धं** । यस्मात् **समाश्चेता** व्यक्तयः क**थम्भिन्नधीग्राह्या** एवेति सावधारणं । अभिन्नधीग्राह्या अपि प्राप्नुवन्तीत्यर्थः । तथा हि यत्र किञ्चित् सामान्यं कश्चिच्च विशेषस्तत्र समाना इति ग्रहणं युक्तमन्यथा[4] घटपटादिवद्भेदप्रतिभासः स्यान्न समाना इति ।

तद्व्याचष्टे । **नन्वि**त्यादि । **आसु व्यक्ति**ष्वित्यनेन विशेषरूपमाह । **अभिन्नः प्रतिभास**ः सिद्ध इत्यध्याहार्यः ।

अनेन च सामान्यस्य रूपमुक्तं ।

तदेवं साधारणाऽसाधारणरूपग्रहणाद् व्यक्तयः समाना गृह्यन्त इति समुदायार्थः । तत्किं समानेष्वेकानेकप्रतिभासो विद्यते येनैवमुच्यते ।[5] यदि स्यादिहेति बुद्धिः स्यादित्युक्तं । सामान्यात्मकत्वाद् विशेषाणां **समाना इति प्रतिभास इति चेत् ।** नन्वनुगतप्रतिभासाभावे सामान्यमस्तीति कुतः । न च समानरूपान्यथानुपपत्त्या सामान्यकल्पना युक्ता । स्वहेतुभ्य एवं केषांचित् समानामेवोत्पत्तेः केषांचिदसमानां । न च सामान्यात् तेषां समानरूपता युज्यत इत्युक्तं ।[6]

तेन यदुच्यते भ ट्टे न ॥

"न चाप्रसिद्धसारूप्यानपोहविषयात्मना ।
शक्तः कश्चिदपि ज्ञातुं गवादीनविशेषतः ॥
अथासत्यपि सारूप्ये स्यादपोहस्य कल्पना ।
गवाश्वयोरयं कस्मादगोपोहो न कल्प्यते ॥
शावलेयाच्च भिन्नत्वं बाहुलेयाश्वयोस्समं ।
सामान्यं नान्यदिष्टं च क्वागोपोहप्रवर्त्तनं ॥
अपोह्यानपि चाश्वादीनेकधर्मान्वयादृ[?]ते ।

**प्रतीयन्ते इति चेत् न हि एककार्य(ता)सादृश्येनैव । अर्थज्ञाने द्वावाकारौ दृष्टौ। अदृष्टे यथा अर्थद्वयकल्पनेन स्वयमेव [1]एककार्या व्यक्तयः कल्पनाविषयतां उपगताः। तस्मादनया व्यभिचारेण तथा ऽऽरोप्यत इति न दोषः।**

**धीः कार्यं तासां सा च विभिद्यते।**

**तद्वत् प्रतिद्रव्यं तत्प्रतिभासिनोपि ज्ञानस्य (व्यक्ति)[2]भेदात् कथं**

---

83b न निरूपयितुं शक्यस्तदपोहो न सिध्यती[2]ति" (।)[१]

अपास्तं । सामान्यमन्तरेणापि स्वहेतुभ्य एव गवादीनां समानामुत्पत्तेर्यदि नाम सारूप्यमर्थान्तरभूतं नेष्यते सरूपास्त्विष्यन्त एव ते। एवंरूपाश्च येन भवन्त्यश्वादयस्ते सर्वेऽविशेषेणागोरूपतया निषिध्यन्त इति न काचित् क्षतिः।

आ चा र्यस्तु "न नाम स्वहेतुभ्यः समाना उत्पन्नास्तथापि न सा[1]मान्यबलात् समाना इति प्रतीतिरि' ति दर्शयन्नाह। **नेत्यादि**। **तद्दर्शन** इति व्यक्तिग्राहिणि ज्ञाने। सामान्यज्ञाने वा। **भिन्नाभिन्नयो**रिति विशेषसामान्ययोः। **एककार्यतासादृश्य**मिति। एककार्यतैव सादृश्यं साम्यं **तेनैव** समाना व्यक्तयः **प्रतीय**न्त इत्यर्थः। न तु पारमार्थिकेन सामान्येन। तेनैककार्यता सादृश्यं येषान्त एवापोह[2]विषया येषां त्वेककार्यता नास्ति तेऽपोह्या इति सिद्धं। यथा चैकान्तभिन्ना अप्येककार्यं कुर्वन्ति तथोक्तं प्राक्।

कस्मान्न सामान्येन समाना प्रतीयन्त इत्याह। **न ही**त्यादि। **अर्थज्ञान** इत्यनुभवज्ञाने **द्वावाकारौ** भिन्नौ। **अर्थद्वयकल्पनेन** समानासमानकल्पनेन। **कल्पनाविषयता**मित्येकत्वारोपविकल्पविषयतां। **तथे**ति समान[3]रूपतया। **अनया** विकल्पबुद्ध्या।

**नन्वि**त्यादि परः।

**तासां** व्यक्तीनां **धीः कार्यं सा च विभिद्यत** इत्येतावान् कारिकाभागः। **प्रतिभाव**मित्येतदपेक्ष्य पठितः। एवम्भावं प्रति। **तद्वदि**त्यादि विवरणं। **तत्प्रतिभासिनोपि** व्यक्तिप्रतिभासिनोपि **ज्ञानस्य**। **तद्वद्व्यक्तिभेदात्**। **कथमेककार्या व्यक्तयो** नैव। (।११०।।)

स्यादेतत् (।) नानुभवज्ञानेनैककार्याः व्य[4]क्तयः किन्तु यत्तद्विकल्पकमेक-

---

[1] Ślokavārtika.

**एककार्याः? तद्धि तासां कार्यं भिद्यते। घटादेः उदकाहरणादि यदेककार्यं तदपि प्रतिद्रव्यं भेदात् भिद्यत एवेति। भिन्नानां[3] नैककार्यता इति चेत्। नायं दोषः। एवम्—**

**एकप्रत्यवमर्शस्य हेतुत्वाद् धीरभेदिनी।**
**एकधीहेतुभावेन व्यक्तीनामप्यभिन्नता ॥१११॥**

**निवेदितमिदं यथा वस्तूनां न स्वभावसंबन्धः[4]। तत्र एकाकारा बुद्धि-भ्रान्तिरेव। तां क्रमेण भेदिनो विकल्पहेतवो भवन्तः पदार्था न**

---

रूपाध्यारोपेण तदपेक्षयेत्यत आह। **तद्धी**त्यादि। तद्धयनुभवज्ञानन्**तासां** व्यक्तीनां **कार्यं** न विकल्पविज्ञानन्तस्य व्यक्त्यभावेपि भावात्। तस्यैव च विकल्पस्य समाना इत्येवमुत्पद्यमानस्य व्यक्तिषु किं साम्यं। पटादीनां शीतापनयनमित्येवमादिपरिग्रहः। **प्रतिद्रव्य**मित्यव्ययीभावात् षष्ठ्या अम्भावः।[6] द्रव्यस्य द्रव्यस्य यो भेदस्तस्माद् **भेदात्** कारणभेदाद् **भिद्यत** इति यावत्।

**नेत्याचार्यः।** **एकप्रत्यवमर्श**स्येति स्वविषयस्यैकाकारप्रत्ययस्य **हेतुत्वाद् धी**र्निर्विकल्पिका सविकल्पिका वाऽ**भेदिनी** भाति। **एकधीहेतुभावेन**त्यध्यवसितैकरूपाया बुद्धेर्हेतुत्वेन **व्यक्तीनामभिन्नता** भाति।

एतदुक्तम्भवति। प्रत्येकं यद्यपि व्यक्तिस्वरूप[7]ग्राहिण्यो धियो भिन्नास्तथापि प्रत्यभिज्ञया तासामेकत्वमध्यवसीयते। अनेन चैककार्यतासादृश्येन व्यक्तीनामेकत्वं। न त्वेकपरामर्शहेतुत्वेनानुभवज्ञानानामेकत्वमुपचर्यते। नापि तथाभूतानुभवज्ञानहेतुत्वेन व्यक्तीनामेकत्वमुपचर्यते। स्खलितप्रत्ययविषयत्वाभावादुपचरितोपचाराभावाच्च। वृत्त्यर्थानुरूपश्च कारिकार्थो न व्याख्यातः स्या[1]त्। (।१११॥) 84a

ननु यद्येककार्यतासादृश्येन व्यक्तीनामेकत्वाध्यवसायः कथन्तर्हि बुद्धीनामेकत्वाध्यवसायः। एककार्यत्वाभावात्। अथ ताः स्वभावत एकत्वावसायं जनयन्ति व्यक्तयोप्येवम्भविष्यन्तीति किमेककार्यतासादृश्येन।

सत्त्यम् (।) आचार्यदिग्नागाभिप्रायेणैवमुक्तमित्यदोषः। तस्मादेकत्वाध्यवसादेकत्वमिष्यते। न परमार्थत इत्यत आह[2]। **निवेदित**मित्यादि। **"सर्वभावाः स्वभावेन व्यावृत्तिभागिन"** (प्र० वा० १।४२) इत्यत्रोक्तत्वात्। **तत्रे**त्यसंसर्गिषु भेदेषु। **एकाकारा बुद्धि**रतस्मिंस्तद्ग्रहाद् **भ्रान्तिरेव**।

अथ स्यात्(।)सामान्यमन्तरेण भ्रान्तरेवायोग इत्यत आह। **तान्त्वि**त्यादि। ताम्भ्रान्तिम्भेदिनः **पदार्था व्यावृत्तानि** स्वलक्षणानि **क्रमेण** जनयन्ति न साक्षात्।

**जनयन्तीति निवेदितम्। स त्वेषामभिन्नोऽतत्कारिस्वभावविवेकः,**[5] **इति ज्ञानादेः कस्यचिदेकस्य करणात्।**

**तदपि प्रतिद्रव्यं अभिन्नम् प्रकृत्या अभेदावस्कन्दिनो हेतुत्वात् अभिन्नं ख्याति। तथाभूतहेत्वभेदाध्यवसायस्य ज्ञानाद्यर्थस्य हेतुत्वात्, व्यक्तयोपि। प्रकृत्या**
45 3a5 **एकं प्रत्ययं संसृष्टाकारं स्वभावभेदपरमार्थानुपचरितं जनयन्तीति असकृन्निवेदितम्।**

**एवं चेत् एककार्यवस्तुभेदः।**

---

**स्वभाव**(त) इति प्रकृत्या। चकारो निवेदितमित्यस्या[3]नुकर्षणार्थः। **एतदपि** तत्रैव प्रस्तावे **निवेदितं। क्रमेणे**ति यदुक्तन्तस्य व्याख्यानं **विकल्पहेतवो भवन्त** इति। विकल्पकारणत्वादनुभवज्ञानम्विकल्पः। विकल्पहेतोरनुभवज्ञानस्य हेतवो भवन्त इत्यर्थः। व्यक्तयोनुभवज्ञानं जनयन्ति तच्चैकाकारां भ्रान्तिमित्ययं क्रमार्थः।

**स त्वेषा**मित्यादिना का रि का र्थमाह। सर्वेषाम्भावानाम्भेदोन्या[4]पोहः। किं स्वभावो**ऽतत्कारिविवेकः** स एषा**मभिन्न** इत्युच्यते। कस्माद् (।) **ज्ञानादेरर्थ**स्येन्द्रियस्योदकाहरणादेश्च **कस्यचि**दित्यात्मानुरूपस्**यैकस्य करणात्।**

यद्वा (।) ननु बुद्धेरेवायमभिन्नाकारः कथं व्यक्तीनामित्यत आह। **स** त्वाकार **एषां** बाह्यानाम**भिन्न**स्तथैव **प्रतीतेः** (।) प्रतीतिरेव कुतः। ज्ञानादेः कस्यचिदेकस्य करणात् (।) स चाका[5]रो भेदोन्यापोह इत्युच्यते न सामान्यं। किङ्कारणम् (।) **अतत्कारिस्वभावविवेको** यतः।

एतदुक्तम्भवति। प्रतिव्यक्तिर्गौर्गौरिति प्रत्ययेनातत्कारिस्वभावविवेको-तत्कारिस्वभावविविक्त एव स्वभावो विषयीक्रियते। न त्वर्थान्तरभूतं सामान्यन्तेन भेद इत्युच्यते। एतत्पश्चार्द्धस्य व्याख्यानं ॥१११॥

ननु कथं ज्ञानादेरेकत्वमित्याह। **तदपी**त्यादि।[6] पूर्वार्द्धस्यैतद् व्याख्यानं। **तदपि** ज्ञानादिकार्य**मभिन्नं ख्याती**ति सम्बन्धः। **प्रकृत्ये**ति स्वभावेन। **अभेदावस्कन्दिन** इत्यभेदाध्यवसायिनः। **तथाभूते**त्यादिना व्यक्तीनामपि विकल्पं प्रति पारम्पर्येण कारणत्वमाह। **अभेदावसायो** विद्यते यस्मिंस्त**स्य** ज्ञानादे-
84b रित्यनुभवज्ञानस्योदकाद्याहरणादेश्चार्थस्य **हेतुत्वात्** कारणा[7]त् क्रमेण व्यक्त-योप्येकं प्रत्ययं जनयन्तीति सम्बन्धः। किम्विशिष्टमित्याह। **संसृष्टाकार**मित्या-दि। संसृष्टो व्यक्तिष्वारोपित एक आकारो येन स तथा। **स्वभावभेदो**न्य-व्यावृत्तं रूपं स एव **परमार्थोनुपचरितो**ऽस्येति विग्रहः। पारम्पर्येण व्यावृत्तस्वलक्षण-द्वारायातत्वाद् विकल्पस्य।

**ननु च तान्तु भेदिनः पदार्था इत्यादिनाऽयम[1]र्थोऽनन्तरमेवोक्तः।**

**सा चातत्कार्यविश्लेषः,**

**एव ।**

**तदन्यस्यानुवर्त्तिनः ।**

**अदृष्टेः प्रतिषेधाच्च;**

**न हि दृश्यं विभागेन न प्रतिभासत इति**[1] **। सति वा क्वचिद् अनाश्रितं कथं ज्ञानहेतुरित्येतदप्युक्तम् । संकेतोपि न युक्तः । तस्मात्—**

**संकेतस्तद्विदर्थिकः ॥११२॥**

**एव युक्तः । योयं अन्योन्यं विवेकः भावानां तत्प्रतीतये संकेतोऽपि**

---

सत्त्वं (।) किन्तु क्रमेण विकल्पहेतवो भवन्त इत्याद्यस्यैवार्थोऽनेन स्फुटीकृतः । एककार्यभेदवस्तुभूतं सामान्यम्भविष्यतीत्यत आह । **सा चे**त्यादि । सा चैककार्यता । **अतत्कार्येभ्यो विश्लेषो** व्यावृत्त एव स्वभावो न वस्तुभूतं सामान्यं । किं कारणन्त**दन्यस्य** स्वलक्षणादन्यस्या**नुवर्त्तिनो**न्वयिनो वस्तुनो व्यक्तिव्यतिरेकेणा[2]**दृष्टेः प्रतिषेधाच्च** पूर्वोक्तात् ।

**न ही**त्यादिना व्याचष्टे । **दृश्यमु**पलब्धिलक्षणप्राप्तं **विभागेन** व्यक्तिभ्यो भेदेन । **सति वा** सामान्ये नित्यत्वादनाधेयातिष(?श)यत्वेन **क्वचिद्** व्यक्तयन्तरे **अनाश्रितं कथं ज्ञानहेतुः** । नैव । आश्रयव्यंग्यस्य तस्य **ज्ञानहेतु**त्वमिष्टमित्यभिप्रायः । एतदप्युक्तमित्यनेन सम्बन्धनीयं । अस्यापि प्रागुक्तत्वात् ।

यत[3] एवम्भूतं सामान्यं नास्ति । तस्मात् **संकेतोपी**त्यादि । **तदि**त्यन्यापोहः सम्बध्यते । तस्यास्यापोहस्य विकल्पेन स्वाकाराभेदेनाध्यस्तस्य **वित्** ज्ञानं । तत्पूर्वको लाभश्च । तद्वित् । सैवार्थः फलमिति विशेषणसमासः । (स)मयस्यास्ति संकेतस्येति मत्वर्थीयष्ठन् । विकल्पाध्यवसितबाह्यार्थप्रतिपत्त्यर्थमिति समुदायार्थः । सर्वश्चारम्भः फलार्थ इ[4]ति विदिर्लाभार्थोप्याक्षिप्त एवान्यथा संकेतकरणस्य वैयर्थ्यात् ।

ननु तद्विदर्थो यस्येति बहुब्रीहिणा भवितव्यं लाघवात् । बहुब्रीहिणोक्तत्वान्मत्वर्थस्य तद्विभा(गा)नुत्पत्तिर्लाघवत्वं । तथा च भाष्य[1] उक्तं "कर्मधारयाद् बहुब्रीहिर्भवतीत्यादि" ।

**नैष दोषः । इदमपि तत्रोक्तं**[2] "**क्वचित्कर्मधारय एव सर्वसाधनाद्यर्थ**" इति । **आकृतिगणत्वाच्च स**[5]**र्वसाधनादेस्तत्रायन्तद्विदर्थिकशब्दो द्रष्टव्यः** । (।११२॥)

---

[1] Vyākaraṇa-mahābhāṣya. [2] Ibid.

**क्रियमाणोऽतत्कारिविवेकेन प्रवृत्त्या एव शोभते।**

**अतत्कारिविवेकेन प्रवृत्त्यर्थतया श्रुतिः।**

**यदि तत्प्रतीत्यर्थो न संकेतः, तस्य व्यवहारकालेऽपि असंस्पर्शान्नान्य-परिहारेण प्रवर्त्तेत[3]। न हि तेषां तेभ्यः स विवेकः शब्देन चोद्येत।**

**सा च श्रुतिः—**

**अकार्यकृतितत्कारतुल्यरूपावभासिनी ॥११३॥**

**धियं वस्तु(पृथग्भावमात्रबीजामनर्थिकाम्)।**

---

**योयमि**त्यादि विवरणं। **अन्योन्यं विवेको**न्यव्यावृत्तः स्वभावो **भावानान्त त्प्रतीत**ये तन्निश्चयार्थं स्वप्रतिभासेऽध्यवसितबाह्यरूपे **संकेतोपि क्रियमाणः शोभेत** युक्तियुक्तत्वात् (।) किमर्थं क्रियत इत्यत आह। **अतत्कारी**त्यादि। विवक्षितार्थ-क्रियाकारिणो ये न भवन्ति तेषां **विवेके**[6]न परिहारेण **प्रवृत्त्यर्थतया**। अतत्कारिषु-प्रवृत्तिर्माभूदित्यर्थः।

अमुमेवार्थं व्यतिरेकमुखे**ण**(?न) द्रढयन्नाह। **यदी**त्यादि। **तस्या**न्य-परिहारस्य **प्रतीत्यर्थो** यदि **न संके**तस्तत्कारिणी तदन्यपरिहारस्य व्यवहारकाले-प्यसंस्पर्शात्। यद्वा यदि न तत्प्रतीत्यर्थः संकेत इति विजातीयव्यावृत्तस्वभाव-

८५a प्रतीत्यर्थः संकेतः(।)**तदा** तस्यान्य[7]व्यावृत्तस्य स्वभावस्य **व्यवहारकालेपि** न केवलं संकेतकाले**ऽसंस्पर्शा**च्छब्देनाविषयीकरणा**न्नान्यपरिहारेण प्रवर्त्तेत**।

एतदुक्तम्भवति। यदा विधिरूपेणान्यव्यावृतोर्थो विषयीकृतस्तदान्यव्यव-च्छेदः प्रतीयेत। एतदेवाह। **न ही**त्यादि। **विवेक** इति विविक्तः स्वभावः। **तेषान्त**त्कारिणा**न्तेभ्य** इत्यतत्कार्येभ्यः। यदि हि तस्य विविक्त[1]स्य स्वभावस्य प्रतीतये संकेतः कृतः स्यादेवं व्यवहारेपि **शब्देन चोद्येत** (।) तथा चान्यपरिहारेण प्रवर्त्तेतेति संकेतोपि तद्विदर्थिक एव युक्तः।

ननु च शब्दजनिता बुद्धिः स्वाकारमेव बाह्यतयाध्यस्य ग्रहणादलीका। ततश्च तज्जनकस्य शब्दस्य कथम्वस्तुसम्वादः कथं चान्यापोहविषयत्वमित्यत आह।

**सा चे**त्यादि। अन्यापोहप्रति[4]पत्त्यर्थं या संकेतिका। **सा च श्रुतिः। धियं जनयन्त्य**पीति सम्बन्धः। किम्विशिष्टाम् (।) **अकार्यकृ**ति। अवाह्यरूपे स्वाकारे। **तत्कारि तुल्यरूपे**णार्थक्रियाकारि बाह्यैकरूपे**णावभासो**ध्यवसाय इति तृतीया-समासः स यस्या विद्यत इति पश्चात मत्वर्थीयः।

**जनयन्त्यप्यतत्कारिपरिहाराङ्गभाव[4]तः ॥११४॥**

**वस्तुभेदाश्रयाच्चार्थे न विसंवादिका मता ।**
**ततोऽन्यापोहविषया तत्कर्त्राश्रितभावतः ॥११५॥**

**एकं तमाकारमारोप्यार्थेषूत्पद्यमानां मिथ्यावभासित्वात् अकार्यकारिणमपि[5] कार्यकारिणमिवाध्यवसन्तीं वस्तुपृथग्भावमात्रबीजां समानाध्यवसायां मिथ्यां जनयन्त्यपि श्रुतिः तदन्यपरिहाराङ्गभावात्, परमार्थतः तद्व्यतिरे-**

---

एतदुक्तम्भवति। स्वाकारमबाह्यं बाह्यमिवाध्यवस्यन्तीमिति यावत्।

एतेन प्रवृ[3]त्त्य(र्थ)त्वं श्रुतेराख्यातं।

वस्तुभूतसामान्यमन्तरेण कुतस्तस्या उत्पत्तिरिति चेदाह। **वस्त्वित्यादि**। **वस्तूनाम्पृथग्भाव** इतरेतरभेदस्तन्**मात्रं बीज**ङ्कारणं पारम्पर्येण यस्याः सा तथोक्ता। यतश्चानुगतं रूपं व्यावृत्तं चैकीकृत्य गृह्णात्यतोऽ**नर्थिकां** जनयन्त्यपि श्रुतिरर्थे न विसम्वादिका। कस्माद् (।) **अतत्कारिपरिहाराङ्गभावतः**। विजाती[4]याव्यवच्छेदहेतुभावतः।

एतदुक्तम्भवति। यद्यन्यव्यावृत्तवस्त्वध्यवसायिनीं बुद्धिं जनयेच्छ्रुतिस्तदा तदन्यव्यावृत्त एव स्वलक्षणे पुरुषं प्रवर्त्तयतीति सम्वादिका स्यात्। संकेतकाले च श्रुतेरितरेतरभिन्न एव स्वभाव आश्रयस्तत्रास्याः संकेतितत्वात्। तदेवम्पारम्पर्येण **वस्तुभेदाश्रयाच्च** कारणा**दर्थे। न विसम्वादिका मता**। व्यवहा[5]रकालेप्यन्यव्यावृत्तस्यैव वस्तुनः प्रापणात्।

ननु विधिरूपेण वस्त्वध्यवसायात्कथं श्रुतेरन्यापोहविषयत्वमित्यत आह। **तत** इत्यादि। यतश्चा**तत्कारिपरिहारांगभाव**तः श्रुतेर्वस्तुभेदाश्रयत्वं च **ततः** कारणाद**न्यापोहविषया**। एतदेव द्वयमाह। **तत्कर्त्राश्रितभावत** इति। तस्मिन्नपोहे कर्त्तृभावतः। आश्रितभावश्च[6] स्वार्थाभिधानद्वारेणार्थादतत्कारिपरिहाराङ्गभावतस्तस्मिन्नपोहे कर्त्तृभावः श्रुतेः। व्यवहारकाले संकेतकाले च वस्तुभेदाश्रयद्वारेण प्रवृत्तेस्तस्मिन्नपोहे श्रुतेराश्रितभावः।

**एके**त्यादिना कारिकार्थमाह। **तमि**त्य**एकमाकारं** स्वप्रतिभासिन**मारोप्यार्थे**ष्वध्यस्**योत्पद्यमानां**। स च स्वप्रतिभासो[7] **मिथ्यावभासित्वादकार्यकारी**। तमेवंभूत**मपि कार्यकारिणमिवाध्यवस्यन्तीं**। अनेना**कार्यकृत**इत्यादि व्याख्यातं। **वस्तुपृथग्भावमात्र**मन्यव्यवच्छेदमात्रं यस्या बुद्धेरिति विग्रहः। **मिथ्याबुद्धिं जनयन्त्यपि श्रुतिः** (।)कस्मान्मिथ्याबुद्धिरित्यत आह। **समानाध्यवसाया**मेकाकारा-

85b

**किषु अर्थेषु[6] न विसंवादिकेति।**

**तथा हि तेषु स व्यतिरेको भूतः, सर्वथाऽभ्युपगमनीयत्वात्। व्यतिरि-**
454b **क्तस्याव्यतिरिक्तस्य च सर्वथाऽयोगात्। तस्य वस्तुनि निवेशने शब्दज्ञानाभ्यां[7] दूरोत्सृष्टमेव वस्तु स्यात् तद्विषयाभिमतस्य तत्स्वभावात्, अन्यस्य वस्तु-धर्मस्यापि क्वचिदसंस्पर्शात्। तत एव सा श्रुतिरन्यापोहविषयेत्युच्यते।**

**अन्यव्यावृत्तेष्वर्थेषु व्यावृत्तिभेदं[1] विशेषेणोपादाय निवेशनात्, व्यवहा-**

---

ध्यवसायां। **तदन्यपरिहाराङ्गभावात्**। विवक्षितादर्था[1]दन्यस्य परिहारांगभावतया व्यवच्छेदाश्रयभावतः। **परमार्थतो** वस्तुतः। **तद्व्यतिरेकिष्व**तत्कार्यव्यतिरेकिषु **न विसम्वादिके**त्युच्यते। तथा ह्यनित्यकृतकादिश्रुतयो यथाभूतस्य नित्यादि-व्यावृत्तस्य वस्तुनो व्यावृत्तिमुपादाय संकेतितत्वाद् व्यवहारेपि तथा भूतस्या-न्यपरिहाराङ्गभावेन प्राप्तिहेतवो भवन्ति। तेन यथार्थदर्शना[2]न्यायातत्वा-च्छ्रुतेरपि सम्वादः।

यद्वा यथाभूते व्यवच्छेदे सा श्रुतिः संकेतिता तस्य परमार्थतोस्ति वस्तुषु सद्भाव इतीयता लेशेनाविसम्वादित्वं न तु धूमादिवच्छब्दानामावश्यको वस्तुनि प्रतिबन्धस्तेषामिच्छामात्रप्रतिबद्धत्वात्।

अविसम्वादित्वमेव समर्थयन्नाह। **तथा ही**त्यादि। **तेषु** भावेषु **स व्यतिरेको** व्यवच्छेदो **भूतः** सत्यः[3] (।) कुतः (।) **सर्वथा** सामान्याभ्युपगमेप्यवश्यं व्यवच्छे-दस्या**भ्युपगमनीयत्वा**दन्यथा व्यवच्छिन्नस्वभावाभावे सामान्यस्यैवाभावप्रसङ्गा-दित्युक्तं। सामान्योक्तापि तत्र भूत इति चेदाह। **नैक** इत्यादि। **एकः** सामा-न्यपदार्थो व्यक्तेर्व्यतिरिक्तो वै शे षि का दीनामव्यतिरिक्तः सां ख्या नां न तेषु भूत इति सम्बन्धः। कस्मात् (।) **सर्व[4]था व्यतिरिक्तस्याव्यतिरिक्तस्य** च प्रमाण-बाधितत्वेना**योगा**दसम्भवात्। बाधकम्प्रमाणं प्रागुक्तं वक्ष्यते च।

यदि पुनर्यथा प्रतिभासमपि सामान्यं शब्देन चोद्येत तदा तस्य सामान्यस्य वस्तुन्यविद्यमानस्य समावेशने शब्देन विषयीकरणे। **तस्य** वा सामान्यस्य प्रमाण-बाधितस्य **वस्तुनि** बाह्ये **निवेशने**ऽभ्युपगम्यमाने[5] **दूरोत्सृष्टमेवा**त्यन्तविप्रकृष्ट-मेव **वस्तु स्यात्**। कुतः (।) **शब्दज्ञानाभ्यां** शब्दात् तदुक्ताच्च ज्ञानादित्यर्थः। यद्वा शब्दज्ञानाभ्यां दूरमुत्सृष्टं त्यक्तं स्यात्। कुतः (।) **तद्विषयाभिमतस्य** शब्दादि-विषयाभिमतस्य। **तस्ये**ति सामान्यस्य वस्तुस्वभावात्। **अन्यस्य** सामान्यव्यतिरिक्त-स्य **वस्तुधर्मस्य** वस्तुस्वभावस्य स्वलक्षणस्या**संस्प[6]र्शा**दग्रहणात्। यतश्च स्वलक्षणन्न गृह्णात्यथ च स्वाकाराभिन्नमध्यवस्यति। **तत एव सा श्रुतिरन्यापोहविषयेत्युच्यते**।

**रेऽप्यन्यपरिहारेण प्रवर्त्तनाच्च।**

**अवृक्षव्यतिरेकेण वृक्षार्थग्रहणे द्वयम्।**
**अन्योन्याश्रयमित्येकग्रहाभावे द्वयाग्रहः ॥११६॥**
**संकेतासंभवस्तस्मादिति[2] केचित् प्रचक्षते।**

**यदि एको वृक्षोऽवृक्षेभ्यो भिन्नः तस्य अवृक्षाग्रहणे तथा ग्रहणासामर्थ्यात्,**

---

ननु विधिरूपेण बाह्यस्यैवाध्यवसायात् कथमन्यापोहविषयेत्युच्यत इत्याह। **अन्ये**त्यादि। विजातीय**व्यावृत्तेष्वर्थेषु व्यावृत्तिभे**दम्विजातीयव्यच्छिन्नस्वभाव**मविशेषे[7]णोपादाय** विजातीयव्यावृत्तमात्रं रूपमाश्रित्य सजातीयव्यक्तिषु शब्दस्य **निवेशनात्** संकेतकरणादित्यर्थः। अनेनान्यापोहाश्रितत्वं श्रुतेराख्यातं। **अन्यपरिहारेण प्रवर्त्तना**दित्यन्यापोहं प्रति कर्तृभावः श्रुतेरुक्तः।(।११५।।) 86a

**अवृक्षेत्या**दिना परस्य चोद्यमाशंकते (।)अन्यापोहवादिनः किल न विधिरूपेण वृक्षार्थस्य ग्रहणं नाप्य[1]वृक्षार्थस्य। किन्त्वन्योन्यव्यवच्छेदेन (।) तत्र (।)**अवृक्षव्यतिरेकेण वृक्षार्थग्रहणे** वृक्षशब्दस्य योर्थस्तस्य ग्रहणेऽभ्युपगम्यमाने। **द्वयं** वृक्षावृक्षग्रहण**मन्योन्याश्रयं**। तथा ह्यवृक्षार्थव्यवच्छेदेन वृक्षार्थग्रहणे सत्यवृक्षग्रहणपूर्वकं वृक्षग्रहणमंगीकृतं। अगृहीतस्यावृक्षस्य व्यवच्छेतुमशक्यत्वात्। अवृक्षस्यापि ग्रहणं वृक्षार्थव्यवच्छेदेनेति तत्रापि वृक्षग्रह[2]णपूर्वकमवृक्षग्रहणमापतितं। वृक्षमगृहीत्वा तद्व्यवच्छेदेनावृक्षार्थस्य व्यस्थापयितुमशक्यत्वात्। एवं वृक्षावृक्षयोर्मध्ये **एक**स्य वृक्षस्यावृक्षस्य वा **ग्रहाभावे द्वयाग्रहः**।

यतश्च द्वयोरप्यग्रहस्**तस्मात्** कारणादन्यव्यवच्छिन्नेर्थे शब्दस्य यः **संकेत** उक्तस्तस्य**ासम्भव इति केचिदाचक्षते**। तथा चाहो द्यो त क रः। "स यावच्चागान्न प्रतिपद्य[3]ते तावदगवि प्रतिपत्तिर्न युक्ता। यावच्च गान्न प्रतिपद्यते तावद्गवीत्युभयप्रतिपत्त्यभाव" इति।

एतमेवार्थं म्भ ट्टो प्याह।

"सिद्धश्चागौरपोह्येत गोनिषेधात्मकश्च सः।
तत्र गौरेव वक्तव्योनन्यो यः प्रतिषिध्यते।
स चेदगोनिवृत्त्यात्मा भवेदन्योन्यसंश्रयः।
सिद्धश्चेद् गौरपोह्यार्थं वृथापोहप्रवर्त्तनं।
गव्यसिद्धे त्वगौर्नास्ति तदभा[4]वेपि गौः कुत"[1] इति।

तस्माद् वस्तुभूतं सामान्यमेष्टव्यं। तत्र विधिरूपेणैव संकेत इति ते मन्यन्ते।

---

[1] **"प्रकल्पनाम"** also

**अविज्ञातवृक्षेण तद्व्यवच्छेदरूपस्य अवृक्ष(स्य) अपि अपरिज्ञानाच्च बुद्धावनारूढेऽर्थे संकेतो न समर्थ इति ये(चोदयन्ति),**

**तेषामवृक्षास्संकेते व्यवच्छिन्ना न वा यदि ॥११७॥**

**अथ ।**

**व्यवच्छिन्नाः कथं ज्ञाताः प्राग् वृक्षग्रहणादृते ।**

**न हि तदा प्रतिपत्ता वृक्षमपि न वेत्ति अवृक्ष[5]मपि न वेत्ति, तज्ज्ञानायैव तदर्थितया उपगमात्। स च तदजानानः कथं संकेतेऽवृक्षव्य-**

---

**यदी**त्यादिना व्याचष्टे। **तस्ये**त्यवृक्षभेदलक्षणस्य वृक्षस्य। एवन्तावन्न वृक्षस्य ग्रहणं नाप्यवृक्षस्येत्याह[1] (।) **अविज्ञाते**त्यादि। **अविज्ञातो वृक्षो** यस्य पुंसस्तेन **तद्व्यवच्छेदरूपस्ये**ति वृक्षव्यवच्छेदरूपस्य **बुद्धावनारूढेर्थ** इति (।) यदि वृक्षावृक्षौ बुद्धावारूढौ स्यातां तदाऽवृक्षपरिहारेण वृक्षे संकेतः स्यात्। अनारूढे च वृक्षेऽवृक्षे चार्थे कथं संकेतः (।)

**तेषा**मित्यादिना परस्याप्ययन्दोषस्तुल्य इत्याह। ततश्च यस्तस्य परिहारो ममापि स एवेति भावः। (।११६॥)

**य एक**मित्यादिना व्याचष्टे। अन्यव्यवच्छेदेन संकेते क्रियमाणे ये वादिन **एकम्वस्तु सामान्यमभ्युगम्येतरेतराश्रयदोषं[6] चोदयन्ति**। **तेषान्तत्रापि** वस्तुभूते सामान्ये वृक्षत्वलक्षणे **संकेते क्रियमाणे** द्वयी कल्पना अवृक्षा **व्यवच्छिन्ना न वे**ति। (११७॥)

यदि **व्यवच्छि**न्नास्तदा ते **ज्ञाता** अङ्गीकर्त्तव्या। अज्ञातानां व्यवच्छेदाभावात्। तच्च ज्ञानन्तेषु न युज्यते। तदाह। **कथ**मित्यादि। **कथं** ज्ञाता **वृक्षार्थग्रहणाद् ऋते**। इत्येतावान् **कारिका**भागः। **प्राक्**छब्दस्तु मिश्रकव्याख्यानेनोपात्तः। वृ[7]क्षार्थग्रहणम्विना प्राग् वृक्षार्थग्रहणादवृक्षाः। **कथं ज्ञाता** इत्यर्थः। ये तु प्राक्शब्दं कारिकायां पठन्ति तैरर्थशब्दो न पठितव्यः। न ह्यवृक्षनिश्चयकाले वृक्षार्थग्रहणमस्त्यवृक्षग्रहणपूर्वकत्वात् वृक्षग्रहणस्य (।) न च वृक्षनिश्चयमन्तरेण वृक्षार्थग्रहो युक्तस्तस्यापि वृक्षग्रहणपूर्वकत्वात्। एतदेवाह। **न ही**त्यादि। **तदे**ति संकेतकाले **प्रतिपत्ता**। यस्मै संके[1]तः क्रियते। कस्मान्न **वेत्ती**त्याह। **तदि**त्यादि। तस्य वृक्षावृक्षस्य **ज्ञानायैव तदर्थितया** संकेतार्थितयो**पगमा**दुपस्थितत्वात्। कथं नाम संकेतोत्तरकालं वृक्षावृक्षौ ज्ञास्यामीति। यद्वा तदर्थितयोपगमादिति संकेतार्थितया प्रवृतेः। अतो नास्ति संकेतकाले वृक्षावृक्षज्ञानं प्रतिपत्तुः। **स च** वृक्षावृक्ष-

86b

**वच्छेदं प्रतिपद्येत। अप्रतिपत्तौ च परिहृततदन्यनिवेशशब्दात्।**

**अनिराकरणे तेषां सङ्केते व्यवहारिणाम् ॥११८॥**

**न स्यात् तत्परिहारेण प्रवृत्तिर्वृक्षभेदवत्।**

**न हि संकेतकालः परार्थव्यवच्छेदेन निवेशिताच्छब्दात् व्यवहारकाले अवृक्षपरिहारे[7]ण प्रवृत्तिर्न युक्ता, शिंशपादिभेदवत्। अथ।** 455a

**अविधाय निषिध्यान्यत् प्रदर्श्यैकं पुरः स्थितम् ॥११९॥**

---

**मजानानः कथमवृक्षव्यवच्छेदं प्रतिपद्ये[2]त संके**ते। नैव प्रतिपद्येत। अवृक्षव्यवच्छे-**दाप्रतिपत्तौ** च सत्याम**परिहृतो** न व्यवच्छिन्नस्**तदन्य**स्तस्माद् वृक्षादन्यो यस्मिन् वृक्षार्थे सो **परिहृत**तदन्यस्त**स्मिन्निवेश**स्संकेतः। सप्तमीति योगविभागात् समासः। स यस्मिन् शब्देस्तीति मत्वर्थीय इति। अपरिहृततदन्यन्निर्देष्टुं शीलमस्येति णिनिर्वा। अवृक्षादव्यवच्छिन्नेर्थे संप्रमुग्धरूपे संकेतितादिति या[3]वत्।

अपरः प्रकारः। वृक्षादन्यस्तदन्यस्तस्मिन्निवेशः संकेतः। अपरिहृतश्चासौ तदन्यनिवेशश्चेति कर्मधारयः। स यस्यास्ति वृक्षशब्दस्येति पूर्ववत्। अवृक्षादव्यवच्छिन्नत्वाद् वृक्षार्थस्य। तत्र संकेत्यमानस्य शब्दस्यावृक्षेपि निवेशः प्रसक्तः। वृक्षभेदेष्विवेति समुदायार्थः। (।११८।।)

तस्मादेवंभूताद् वृक्षशब्दाद् **व्यवहारिणां** पुंसां व्यवहारका[4]ले **तत्परिहारेणा**-वृक्षपरिहारेण नियते शाखादिमति **प्रवृत्तिर्न स्यात्**। किन्त्वविशेषेण वृक्षावृक्षयोः प्रवृत्तिर्भवेत्। किम्वत्। **वृक्षभेदवत्**। न हि वृक्षशब्दात् प्रकरणादिरहिताद् वृक्षविशेषे खदिरादौ तदन्यवृक्षपरिहारेण प्रवृत्तिर्भवति। **संकेतकाले** तेषा**मव्य-वच्छेदा**त्।

**न ही**त्यादिना व्याचष्टे। **संकेत**कालः संकेतशब्देनोक्तः[5] **परार्थव्यवच्छेदेनेति** परस्मादवृक्षाद् वृक्षाद् वृक्षार्थस्याव्यवच्छेदेन। द्वितीये तु व्याख्याने (।) परस्मिन्नवृक्षे वृक्षशब्दस्य संकेताव्यवच्छेदेनेति व्याख्येयं। **निवेशिता**दिति संकेतितात्। **तत्परिहारेणा**वृक्षपरिहारेण **वृक्षव**दित्यस्य व्याख्यानं **शिंशपादि-भेदवदि**ति। शिंशपादय एव भेदा इति विशेषणसमासः वतिः सप्तम्यर्थे। सूत्रे तु वृक्षभेदा इति षष्ठीसमासः। शिंशपादयो हि भेदा वृक्षस्य भेदा भवन्तीत्यनुरूपैव वृत्तिः तेषु च यथा वृक्षशब्दान्न परस्परव्यवच्छेदेन प्रवृत्तिस्तथा सूत्रविभाग एव व्याख्यातं।

**अथे**त्यादिना पराभिप्रायमाशंकते। **अविधायानिषिध्यान्यदि**ति प्रतिषेधद्वयं

**वृक्षोऽयमिति संकेतः कृतः तत् प्रतिपद्यते ।**
**व्यवहारेऽपि, तेनायमदोष[1] इति चेत्;**

**न हि वस्तुसामान्यवादिना किंचिद् विधीयते। अथ किञ्चित् पुरःस्थितं वस्त्वेकं प्रदर्श्य वृक्षो[2]यमिति संकेतः क्रियते। तेन संकेतकाले तथादृष्टमेवार्थं तत्संबन्धिनं वा व्यवहारकालेऽपि प्रतिपद्यत इति तुल्यः प्रसंगः स्यादिति चेत्। न हि तुल्यः। एवं तत्रापि—**

**तरुः ॥१२०॥**

**अयमप्य[3]यमेवेति प्रसंगो न निवर्त्तते ।**

**एकं प्रदर्श्य अयमपि वृक्षोऽयमेव वृक्ष इति वाद्यपि अयमपीति वा अयमेवेति प्रकारद्वयेन, तयोश्च स एव दोषः। दृष्ट[4]विपरीतस्य सुज्ञा-**

---

केचित् पठन्ति। संकेते विषयमभिधायातोन्यच्चानिषिध्येति। तच्चायुक्तमिव दृश्यते विधिप्रतिषेधौ मुक्त्वा शब्दप्रवृत्त्यसम्भवात्। एकस्य हि प्रदर्शनमभिदधता विधेरङ्गीकृतः। ततश्चाविधाय प्रदर्श्येतिपदद्वयं व्याहतं स्यात्। तस्मादविधायेत्यत्रैव नञ् द्रष्टव्यः। **अविधाय निषिध्यान्यदि**ति पाठः। निषिध्यान्यत् पूर्वन्तद्व्यवच्छेदेनापरं संकेतवि[1]षयमविधाय। प्रतिषेधपूर्वकं विधिमकृत्वा विधिमात्रमेव केवलं कृत्वेत्यर्थः अत। एव **प्रदर्श्यैक**मिति वृत्तावपि न कस्यचिद् व्यवच्छेदेन किंचिद् विधीयत इत्यन्यनिषेधपूर्वकमेव विधानं प्रतिषेधति। केवलस्तु विधिरंगीकृत एव। **एक**मिति सामान्यं। एतेन सामान्ये संकेतकरणात् सर्वव्यक्तिषु कृत इत्याचष्टे (।११९॥)

**वृक्षोयमिति सं[2]केत**स्वरूपन्दर्शयति। यद्वस्तु प्रदर्श्य संकेतः **कृतस्तत् प्रतिपद्यते व्यवहारेपि** (।) **तेन** कारणेना**यम**नन्तरोक्तो **वस्तुसामान्यवादिनोऽदोषः। तथा दृष्टमेवार्थ**मिति सामान्यं यत्र **संकेतः कृतः। तत्सम्बन्धिनं वे**ति सामान्यसम्बन्धिनमाश्रयं। **तत्रापी**ति विधिना केवलेनापि संकेते क्रियमाणे द्वौ विकल्पौ वृक्षोयमिति संकेतं कुर्वाणः **तरुर[3]यम**पीति विदधीत। तरुरयमेवेति वा। आद्ये पक्षे तरुत्वमन्यस्याप्यनिषिद्धमिति व्यवहारे नियमेन प्रवृत्तिर्न स्यादिति स एव प्रसङ्गः। अथ तरुरयमेवेति तदा स एवातरुरव्यवच्छेदोङ्गीकृतः। ततश्च संकेतकाले प्रतिपद्यमानेन कथं वृक्षावृक्षौ ज्ञाताविति तदवस्थः प्रसङ्गः। तदाह (।) **प्रसंगो न निवर्त्तत** इति।

**एक**मित्यादि[4]ना व्याचष्टे। **अयमपि वृक्षोऽयमेव वृक्ष** इति। **गति**मिति प्रकारं। **तयोश्चे**ति द्वयोरपि प्रकारयोः। **न दोष** इत्यादि परः। दृष्टोपटाकारोनुभूतस्**तद्विपरीतस्य** ततो विलक्षणस्य **सुज्ञानत्वात्**।

**नत्वाददोषः। एकं (हि) किंचिद् पश्यतोऽन्यत्र तदाकारविवेकिनीं बुद्धिमनुभवतः यथानुभवं ततोऽन्यो वैधर्म्यनिश्चयः। तद्[5]विवेचने ततः स अयमेव वृक्ष इति प्रदर्श्य व्युत्पादितः। यत्रैव तं न पश्यति तमेवावृक्षं स्वयं प्रतिपद्यते।**

**नेदं संभवति व्यवच्छेदवादे। एकत्र दृष्टस्य[6] रूपस्य क्वचिद् अनन्वयात्।**

**दृष्टप्रतिपत्तौ अन्यस्मिन्न स्यात् तथा प्रतीतिरिति चेत्।**

**एवं तर्हि तत्रापि तुल्यमेतद्। यस्माद्—**

---

एतदेव ग्रहणकवाक्यम**एकं** **ही**त्यादिना व्याचष्टे। एकं हि **किंचित्** सामान्यं वृक्षत्वादिकम्**पश्यतोन्यत्र** तत्सामान्यरहिते विलक्षणे वस्तुनि[5] **तदाकारविवेकिनीं** यथा परिदृष्टाकारविलक्षणाकाराम्**बुद्धिमनुभवतः** पुंसो **यथानुभवन्ततो** यथा परिदृष्टाद**न्य**दित्येवंरूपो **वैधर्म्यनिश्चयो** वैलक्षण्यनिश्चयः।

एतेन वैधर्म्यनिश्चयस्य स्वभाव उक्तः।(।१२०।।)

**तद्विवेचन** इति व्यापारः (पूर्वदृष्टादृष्टार्थविवेचनः) पृथग्भावस्य व्यवस्थापयति। **ततो**न्यदित्यनेनैव तद्वि[6]वेचने सिद्धे यत्पुनस्तद्विवेचनग्रहणन्तत्स्पष्टार्थं। तत्रैतस्मिन् क्रमे सति यथानुभवम्वैधर्म्यनिश्चयवान् **स** प्रतिपत्ता। **यं** शाखादिमन्तमर्थम्विशिष्टसामान्यवन्तमाकारान्तराद् **विवेचयति**। तं पुरोधाय**अयमेव वृक्ष इति** प्रदर्श्य **व्युत्पादि**तः संकेतं ग्राहितो। **यत्रैव तं** संकेतानुरूपं सामान्यात्मान**न्न पश्यति**। **तमेवावृक्षं स्व[7]यमेव** शब्दव्यापारम्विना **प्रतिपद्यते**। तदेवमाकारान्तरात् स्वयमेव विवेकेनावधारितं सामान्यात्मानमुपादाय संकेते कृते सर्वासु सजातीयव्यक्तिषु कृतो भवति। सामान्यस्य सर्वत्रान्वयात्। **अयमे**वेति चावधारणात् संकेते कृते दृष्टविपरीतस्य सुज्ञानत्वात्। ततोन्यत्रावृक्ष इति निश्चयो भवतीति न यथोक्तदोषः। 87b

अन्यापोहवादिनोप्ये[1]वमिति चेदाह। **नेद**मित्यादि। **एकत्र** संकेतकाले **दृष्ट**स्यासाधारणस्य **रूपस्य क्वचिद्** व्यक्त्यन्तरेऽ**नन्वया**दननुगमात्। ततश्च संकेतकाले यो वृक्ष इत्येवं गृहीतो भेदस्तस्यान्यत्र दर्शनन्नास्ति। तत्र संकेतकाले दृष्टे पश्चाद् **दृश्यमाने** च स्वलक्षणे यद् भिन्नप्रतिभासि दर्शनमुत्पन्नन्तेन हेतुना। वृक्षावृक्षयोः **प्रतिपत्तौ** क्रियमाणायां व्यक्त्यन्तरे[2]**प्यन्यस्मिन्** वृक्षभेदे**पि न स्यात्तथा** वृक्ष इति **प्रतीतिः**। तथा हि यो वृक्षभेदः संकेतकाले दृष्टस्तस्माद् घटादयो विलक्षणास्तथान्योपि वृक्षभेदः। तत्र यथा घटादिषु वृक्ष इति प्रतिपत्तिर्न भवति तथा वृक्षभेदेपि न स्यात् किन्त्ववृक्ष इत्येव प्रतिपत्तिर्भवेदित्यर्थः।

**एवन्तर्ही**त्या चा र्यः **तत्रापी**ति विकल्पाकारोपि सामान्ये संके[3]ते क्रियमाणे

455b **एकप्रत्यवमर्शश्चेज्ज्ञान एकत्र हि स्थितः ॥१२१॥[7]**
**प्रपत्ता तदतद्धेतूनर्थान् विभजते स्वयम् ।**

---

तुल्यमेतदितीतरेतराश्रयप्रतिविधानं ।

एतदुक्तम्भवति । सर्वभावाः स्वहेतुतो भिन्ना इति पूर्वमेव प्रतिपादितं । तेन वृक्षा अवृक्षाश्च भिन्ना एव निर्विकल्पके ज्ञाने प्रतिभासन्ते (।) वृक्षेषु च विधि-रूपेणैव वृक्षविकल्प उच्यते । तथाऽवृक्षेषु वृक्षनिषेधेनावृक्षविकल्प उत्पद्यत इति कुत इतरेतराश्रयत्वं ।

ननु य[4]द्यपि विधिरूपेण वृक्षविकल्पस्य प्रतिपत्तिस्तथाप्यवृक्षादिव्यावृत्तिद्वारे-णोत्पद्यमानत्वादवृक्षादिप्रतिपत्त्यपेक्षत्वन्ततश्च स एवेतरेतराश्रयदोषः ।

नैतदस्ति । यतोऽवृक्षादिव्यावृत्तिर्वृक्षादिस्वरूपमेव तदनुभवद्वारेणैव वृक्षादि-विकल्प उत्पद्यते न त्ववृक्षादिप्रतिपत्त्यपेक्ष इति कुत इतरेतराश्रयत्वं । तत्र[5] वृक्ष-विकल्पे प्रत्येकं शिंशपाद्यभेदेन वृक्षाकारोऽभिन्नः प्रतिभासते । स च संकेतात् पूर्वं स्वसम्वेदनप्रत्यक्षसिद्धः ज्ञानरूपत्वादतस्तत्रैव शब्दः संकेत्यते ।

तेन यदुच्यते भट्टेन ॥

"संकेतात् पूर्वमिन्द्रियैरन्यापोहो न गम्यते ।
नान्यत्र शब्दसंकेतः किन्दृष्ट्वा स प्रयुज्यतां ॥
अन्वयेन विमुक्तत्वान्नानुमाप्यत्र विद्यते ।
सम्बन्धानुभवो[6]प्यस्य तेन नैवोपद्यत" इति[1]

**निरस्तं ।**

कस्मादितरेतराश्रयप्रतिविधानन्तुल्यमित्याह । **यस्मा**दित्यादि । सजातीय-व्यक्तिष्वेकाकारम्प्रत्यभिज्ञानमे**कप्रत्यवमर्श**स्तथाऽख्या संज्ञा यस्य **ज्ञानस्य** तत्तथा । अनेन भिन्नास्वपि व्यक्तिष्वेकाकारं प्रत्यभिज्ञानमेकत्वमारोपयतीत्युक्तं । ततश्च 88a विकल्पविज्ञानारोपितैकत्वासु व्यक्तिषु[7] यत्र क्वचित् संकेतः कृतः सर्वत्र कृतो भव-तीत्यस्य बीजमाख्यातं । **एकत्र ही**त्यनेन विजातीयपदार्थपरामर्शशून्याकारन्तेन परामर्शस्य प्रतिनियताकारत्वमाह । विजातीयपदार्थाकारव्यावृत्त्या सजातीयेषु सर्वेषु यदेकप्रत्यवमर्शज्ञानन्**तत्र स्थित** इत्यर्थः । एतेनापि सजातीयाऽसजातीया-वस्तुविभागबीजमुक्तं । अत एवाह । तदित्यनेनैकः[1] परामर्शो गृह्यतेऽतच्छब्देन तद्विपरीतः । स चासश्च तदतौ । तयोर्हेतवस्**तदतद्धेतवः** । **तान् विभजते** । एक-

---

[1] Ślokavārtika.

**प्रागपि निवेदितमेतत् भावाः प्रकृतिभेदिनः केचिदेव ज्ञानादिकं फलं कुर्वन्ति नान्ये। तान्[1] स्वयमेव विभज्य तदतद्धेतूंश्च प्रत्येति। तस्य—**

**तद्बुद्धिवर्त्तिनो भावान् भातो हेतुतया धियः ॥१२२॥**

**अहेतुरूपविकलानेकरूपानिव स्वयम् ।**

**भेदेन प्रतिपद्येतेत्युक्तिर्भेदे[2] नियुज्यते ॥१२३॥**

**(तं तस्याः प्रतियतो धीर्भ्रान्त्यै)कं वस्त्विवेक्षते ।**

---

शाखादिमदाकारपरामर्शहेतून् तद्विपरीतांश्च पृथक् करोति **स्वयमेव** संकेतात् (।) **प्रागपि** निवेदितमेतद् (।) "एकप्रत्यवमर्शार्थज्ञानाद्येकार्थसाधनं" (१।७५) इत्यत्रान्तरे। व्यतिरिक्तस्याव्यतिरिक्तस्य च सामान्यस्य निषेधान्निषेत्स्यमानत्वाच्च।[2] **भावाः प्रकृतिभेदिनः** स्वभावेनैव विलक्षणाः (।) **ज्ञानादिक**मित्यादिशब्दाद् उदकाद्याहरणादिकं **केचिदेव कुर्वन्ति नान्ये** (॥१२१॥)

प्रकृत्या तदतज्जननस्वभावत्वात्तेषां। **तान्भावानयं** प्रतिपत्ता **स्वयमेव** शब्दव्यापारं विना **विभज्य** विभागं कृत्वा **तद्धेतूनतद्धेतूंश्च प्रत्येति**। तेन कुत इतरेतराश्रयत्वदोषः। यो हि तद्धेतूनतद्धेतूंश्च भावात्स्व[3]यमेव प्रतिपद्यते। **तस्य** प्रतिपत्तुस्तद्बुद्धिपरिवर्तिन इत्यादि कर्मपदं प्रतिपद्येतेत्येतत् क्रियापदापेक्षं। अतद्धेतुभ्यस्तद्धेतून् विभज्य स्थापयति या **बुद्धिः** सा (।) **तद्बुद्धिस्तत्परिर्वा**त्तिनस्तदारूढान्। विकल्पिकाया **धियो हेतुत**या **भातो** भासमानात्।

इव शब्दस्य वक्ष्यमाणस्य सम्बन्धाद्धेतुतयेवेति द्रष्टव्यं न तु ते विकल्पप्रतिभासि[4]नो हेतवस्तेषां बहिरसत्वात्। केवलम्प्रतिपत्तुस्तथाध्यवसायादेवमुच्यते। **अहेतुरूपविकलान् भात** इत्यत्राभिसम्बन्धः। **इव** शब्दयोगश्च पूर्ववत्। एकाकारपरामर्शबुद्धेर्ये न हेतवस्तेषां रूपेण विकलानिव। दृश्यविकल्पयोरेकीकरणाद् बाह्येन **सहैकरूपानि**व भात इत्यत्राभिसम्बन्धः। **स्वयं** संकेतादुत्तरकालमपि[5]। अतत्कारिभ्यो **भेदेन** तान् भावान् **प्रतिपद्येतेति** कृत्वा। **उक्तिः** शब्दो **भेदे** विजातीयव्यावृत्ते स्वभावे विकल्पेन स्वाकाराभेदेनाध्यस्ते **नियुज्य**ते संकेत्यते। **तम्भेदं** यथोक्तं। **तस्याः** श्रुतेः सकाशाद् व्यवहारे **प्रतियती** प्रतिपद्यमाना परि**धीर्भ्रान्त्या एकम्वस्त्विवेक्षते**। सजातीयव्यक्तिषु तम्विजातीयव्यावृत्तं स्वभावं स्वाकाराभेदेन प्रतियती[6] धीरेकमिव वस्तु प्रेक्षत इत्यर्थः।

ततः सर्वेष्वेकपरामर्शहेतुषु वृक्ष इति प्रतिपत्तिरतो यदुक्तं दर्शनेन प्रतिपत्तौ व्यक्त्यन्तरेपि न स्यादिति तदपास्तं।

यच्चाप्युक्तम्भ ट्टे न ॥

**तेषां प्रकृत्यैव प्रत्ययवशात् तथाभूतस्य विकल्पस्य कारणानामन्वयात्, तद्द्रष्टुर्बुद्धौ विपरिवर्त्तमानान् तज्ज्ञानहेतु[3]तया तदन्यव्यावृत्या च अतथाभूतानपि तथाध्यवसितान्, अविभक्तबाह्याध्यात्मिकभेदान् विकल्पव्यवस्थया**

---

"गोशब्दानभिधेयत्वमश्वादीनां हि ते कथं।
न दृष्टस्तत्र गोशब्दः संकेतसमये यदि।
एकस्मात्तर्हि ते पिण्डाद्यदन्यत् सर्वमेव तत्।
88b भवेदपो[7]ह्यमित्येवं नहि सामान्यवाच्यते"ति (।)[1]

तदपि निरस्तं। एकव्यक्तौ गोशब्दस्य संकेते विषयस्य व्यक्त्यंतरेनुगमात् स एवायं गौरिति प्रतीतेरिति। तथापि (।)

**तेषा**मित्यादिना का रि कार्थमाह। **तेषां** विजातीयवस्तुविवेकिनामर्थानां **प्रकृत्या** तथाभूतविकल्पकारणानामन्वयादिति सम्बन्धः। **प्रकृत्या** स्वभावेन न पुनरेकसामान्ययोगात्। सर्वे[1] तर्हि परामर्शं कस्मान्न जनयन्तीत्याह। **प्रत्ययवशा**दिति। अनुभवज्ञानं प्रत्ययस्तद्द्वारेण तेषां विकल्पजननात्। **तथाभू**तस्यैकप्रत्यवमर्शात्मकस्य **विकल्पस्य कारणानामन्वयात्** सद्भावाद् (।) यथैको वृक्षभेदः प्रकृत्या तथाभूतविकल्पहेतुभूतस्तथा द्वितीयादिरपीत्यनेनाकारेणान्वयो न पुनरेकम्वस्तु सामान्यात्मकमस्ति। तस्मादन्व[2]याद्धेतोरेककार्यवत्त्वेनैकाध्यवसाययोग्या**निति** वाक्यशेषः।

**तद्द्रष्टु**रिति व्यक्तिष्वेककार्यकरणस्य **द्रष्टुर्बुद्धौ विपरिवर्त्तमा**नानारूढान्। तस्माद् द्रष्टुरिति भवितव्यं। "कर्तरि चे"ति षष्ठीसमासप्रतिषेधादिति चेन्न। शेषषष्ठ्या विवक्षितत्वात्। द्रष्टृशब्दस्य चातृन्प्रत्ययान्तत्वात्। तत्र तृन्निति षष्ठी प्रतिषेधात्। तच्छब्दस्य द्वितीया[3]न्तस्य **साधनं कृते**ति समासः। अन्ये तु **तत्प्रयोजक** इत्यादिनिर्देशात् प्रतिषेधसूत्रस्यानित्यत्वं ज्ञापयन्ति। एवमन्येष्वपि निर्देशेष्वेवंजातीयेष्वेवंरूपाः परिहारा वक्तव्याः। **तज्ज्ञानहेतुतया** तस्य विकल्पज्ञानस्य हेतुतया। **तदन्यव्यावृत्त्या चे**त्येकाकारप्रत्यभिज्ञानहेतुभ्यो येऽन्ये तथाभूतविकल्पाऽहेतवः। तेभ्यो व्या[4]वृत्त्या च। अ**तथाभूतान**पि न हि ते विकल्पारूढास्तद्धेतवो बहिरविद्यमानत्वात्। अत एवाहेतुरूपविकल्पत्वमप्यसत्तेषामवस्तुसत्त्वात्। **तथाध्यवसितान्**। तज्ज्ञानहेतुतया तदन्यव्यावृत्त्या चारोपितान्। अनेन **भातो-हेतुतया धियः**। अहेतुरूपविकलानिवेति व्याख्यातं।

---

[1] Ślokavārtika.

**प्रतिपत्तिमनुसृत्य एते वृक्षा इति स्वपर[4]विकल्पषु एकप्रतिभासान् अादश्य तद्विज्ञानहेतून् भेदेन प्रतिपद्येतेत्यभिप्रायेण[1] अतद्धतुभ्योऽभिन्ने नियुङ्क्ते। ततः तमध्यस्य प्रतिपद्यमाना बुद्धिः व्यभिचारवशादेव[5] एकवस्तुग्राहिणीव प्रतिभाति। तेषां भिन्नानां दर्शनेऽपि यस्य दर्शनादर्शनाभ्यां वृक्षावृक्षविभागं कुर्वीतेति**

---

**अविभक्तबाह्याध्यात्मिकभेदा**नित्यनेनैकरू[5]पानित्येतद् व्याचष्टे। अविभक्तो बाह्याध्यात्मिकभेदो येष्विति विग्रहः। दृश्यविकल्पयोरेकीकरणेन गृहीतानित्यर्थः। यस्मै संकेतः क्रियते स **प्रतिपत्ता**। **प्रतिपत्तिमनुसृत्य**। संकेतकाले यादृशी तस्य प्रतिपत्तिः। अहेतुरूपविकला एककार्या भावा एकरूपा येष्वयं वृक्षशब्दः संकेतितस्त एवामी (।) तस्माद् वृक्षा इत्येवमाकारा।[6] तामनुसृत्य। तां स्मृत्वा। विकल्पविज्ञाने स्थितस्सन्। तान् यथोक्तान् भावान् **तद्विज्ञानहेतून**तद्विपरीतेभ्यो भेदेन। **एते वृक्षा इति** व्यवहारकालेपि वृक्षशब्दश्रवणात् कथन्नाम **प्रतिपद्येतेत्यनेनाभिप्रायेणा**क्त**मतद्धतुभ्यो भेद**व्यवच्छिन्ने स्वभावे **विकल्पेन** विषयीकृते **नियुङ्क्ते** संकेतस्य कर्त्ता। (।१२३॥)

ननु व्यावृत्तस्य स्वलक्षणस्य व्यवहा[7]रकालेनुगमो नास्ति (।) नापि विकल्पप्रतिभासिनः सामान्याकारस्य स्वज्ञानाभिन्नत्वाद् विकल्पान्तरेन्वयोस्ति। नापि वक्तृसम्बन्धिनस्तस्य श्रोतुः श्रोतृसम्बन्धिनो वा वक्तुः प्रतीतिरन्यचेतोधर्मत्वेनातीन्द्रियत्वात्। न चाप्रतिपन्ने समं प्रतिपाद्यप्रतिपादकाभ्यां संकेतः सम्भवतीत्याह। **स्वपरे**त्यादि। स्वस्य प्रतिपादकस्य परस्य च प्रति[1]पाद्यस्य **विकल्पे**ष्वेककार्यकरणलक्षणेन भ्रान्तिनिमित्ते**नैकप्रतिभासान्** भावान् संकेतविषयान**ादर्श्य**। 89a

एतदुक्तम्भवति। यथैकस्तैमिरिको द्विचन्द्रन्दृष्ट्वान्यतैमिरिकायोपदिशन् स्वदृष्टमेवोपदिशति न परदृष्टमप्रत्यक्षत्वात्। अथ च तस्यैवम्भवत्ययमेव मया परस्मै प्रतिपादित इति। परोपि च स्वसन्तानभाविनमेव द्विचन्द्रा[2]कारम्प्रतियन् य एव प्रतिपादकेन मम प्रतिपादितस्स एव मया प्रतिपन्न इति मन्यते। तद्वत् प्रतिपाद्यप्रतिपादकयोर्बुद्ध्याकारस्याध्यवसितबाह्यरूपस्य भेदेप्येकत्वाध्यवसायात् संकेतकरणं व्यवहारकाले च तस्यैव प्रतीतिरेकत्वाध्यवसात्। **त**मित्यन्यव्यवच्छिन्नं स्वभाव स्वाकारेणाभिन्नम**ध्यस्य प्रतिपद्यमाना**[3] **बुद्धिः**। **तस्या** इति श्रुतेः। **एकवस्तुग्राहिणीव प्रतिभाति**।

तेन यदुच्यते भट्टेन॥

"न चान्वयविनिर्मुक्ता प्रवृत्तिः शब्दलिङ्गयोः।

---

[1] Tha-dad-par-ḥgyur-ba.

**न युज्यते। तस्य व्यतिरिक्तस्य शाखादिप्रतिभासस्य**[6] **दण्डवद् दण्डिनि अग्रहणात्। अपरस्मात् प्रविभागेनागृहीतस्य अनुपलक्षणात्।**

456a **आकृतेरेकत्र दृष्टाया अप्यन्यत्र द्रष्टुमशक्यत्वात्, तदतद्वतो वृक्षावृक्षत्वे**[7] **व्यक्तिरेकैव वृक्षः स्यात्।**

"**भवतु नाम घटादिशब्दे अर्थान्तरव्यवच्छेदः। न ह्यज्ञेयमित्यादिवाक्ये तथा।**

ताभ्यां न विनापोहे धीर्न चासाधारणेन्वयः।
अपोहश्चाप्यप्रसिद्धोऽव्यभिचारः क्व कथ्यतां।
तस्मिन्नविद्यमाने च न तयोः स्यात्प्रमाणते"ति (।)[1]

अपास्तं। यत एकस्मिन्नन्यव्यावृत्ते स्वलक्षणे शब्दलिङ्गाभ्यां स[4]म्बन्धम्प्रतिपद्यमानोप्यन्यत्राप्येवंरूपेषु सम्बन्धं प्रतिपद्यत एवैकत्वाध्यवसायादिति कुतोन्वयरहितत्वादिदोष इति। वस्तुभूतन्तु सामान्यमाश्रित्य वृक्षावृक्षविभागो न घटते। तदाह (।) **न पुनरि**त्यादि। **एकम्वस्तु** सामान्यं दृश्यमुपलब्धिलक्षणप्राप्तन्तत्र स्वलक्षणेष्**वस्ति**। यथा वृक्षभेदेभ्यो घटादयो भिन्नास्तथा धवादयोपि[5] (।) परस्परन्तेषाम्**भिन्नानान्दर्शनेपि यस्य** सामान्यस्य **दर्शनादर्शनाभ्यां वृक्षावृक्षविभागं कुर्वी**त यत्रेदं सामान्यं दृश्यते स वृक्षो यत्र न दृश्यते सोऽवृक्ष इति।

कस्मान्नास्तीत्याह। **तस्ये**त्यादि। सामान्यस्य **व्यतिरिक्तस्य शाखादिप्रतिभासाद्** विभागेनाग्रहणात्। न हि वृक्षादिषु द्वौ प्रतिभासावुपलभ्येते। एकः शाखा[6]द्याकारोऽपरश्चाशाखाद्याकारः। न च शाखाद्याकार एव सामान्यं प्रतिभासत इति शक्यम्वक्तुन्तस्य शाखाद्याकारत्वात्। **दण्डवद्दण्डिनी**ति वैधर्म्यदृष्टान्तः। यथा **दण्डिनि दण्डस्य** भेदेन ग्रहणं। नैवं सामान्यस्य। **अपरस्मा**च्छाखादिमतः **प्रविभा-**

89b **गेनागृहीतस्य** च सामान्यस्य व्यक्तिष्**वनुपलक्षणात्**। स्वरूपेण परस्योपल[7]म्भनमुपलक्षणन्तच्च स्वयमगृहीतस्य कथम्भवेत्। अनर्थान्तरसामान्यवादिनस्त्**वाकृतेरेकत्र** व्यक्तौ **दृष्टायाः** स्वलक्षणादव्यतिरेकात्तद्वदेव**ान्यत्र** व्यक्त्यन्तरे **द्रष्टुमशक्यत्वात्**। ततश्च **तदतद्वतो**रिति संकेतकालपरिदृष्टैकवृक्षाकृतिर्यस्यास्ति स तद्वान्। पश्चाद् व्यवहारकाले दृश्यमानो वृक्षभेदः पूर्वदृष्टवृक्षाकृतिरहितोऽतद्वान्। तयोर्यथा[1]क्रमं **वृक्षावृक्षत्वे** न्यायप्राप्तत्वे सति **व्यक्तिरेकैवे**ति संकेतकाले दृष्टैव **वृक्षः स्या**न्न तु व्यवहारकाले दृश्यमाना। संकेतकाले दृष्टाया आकृतेरन्यत्रादर्शनात्।

अन्यापोहे शब्दार्थपरैरव्यापित्वं चोदितं तत्परिजिहीर्षवान् पूर्वपक्षदिग्मात्र-

---

[1] Ślokavārtika.

**यतो न व्यवच्छेद्यते ज्ञेयत्वं हि किञ्चि[1]द्[1] । ततो भेदविषयीकरणं तस्य ज्ञेयत्वादि"ति चेत्। नैष दोषः। एवं--**

**क्वचिन्निवेशनायार्थे विनिवर्त्य कुतश्चन ॥१२४॥**
**बुद्धेः प्रयुज्यते शब्दस्तदर्थस्यावधारणात् ।**
**व्यर्थोऽ[2]न्यथा प्रयोगः स्यात् तज्ज्ञेयादिपदेष्वपि ॥१२५॥**
**व्यवहारोपनीतेषु व्यवच्छेदो[2]ऽस्ति कश्चन ।**

---

न्तावत् करोति । **भवतु नामे**त्यादि। कस्मात्तत्रार्थान्तरव्यवच्छेदो नास्तीत्याह। **न ह्यज्ञेयमि**त्यादि । **यत** इ[2]त्यज्ञेयात्। अज्ञेयं कस्मान्नास्तीति चेदाह। **तत** इत्यादि। अज्ञेयाद् विज्ञेयस्य **भेदेन विषयीकरणम**ङ्गीकर्त्तव्यमन्यव्यवच्छेदवादिना-ऽन्यथा कथमज्ञेयात् ज्ञेयस्य व्यवच्छेदः। **तत**श्चाज्ञेयात् **ज्ञेयस्य** भेदेन विषयीकरणे सत्येव तस्याज्ञेयाभिमतस्य ज्ञेयत्वात्। न ह्यविषयीकृताद् व्यवच्छेदः शक्यो दर्शयितुं। आदिशब्दात् स[3]र्वसमुदायद्व्यादिशब्दानां ग्रहणं ।

तदुक्तम्भ ट्टो द्यो त क रा भ्यां। अन्यापोहश्च शब्दार्थ इत्ययुक्तमव्यापकत्वात्। यत्र द्वैराश्यम्भवति तत्रेतरप्रतिषेधादितरः प्रतीयते यथा गौरिति पदेऽगोः प्रतिषेधेन गौः प्रतीयते।

न पुनः सर्वपद एतदस्ति। न ह्यसर्वन्नाम किंचिदस्ति यत्सर्वशब्देन विनिवर्त्त्येत। अथ मन्यसे एकाद्यसर्व[4] तत् सर्वशब्देन निवर्त्त्यते। तत्र स्वार्थापवाददोषप्रसङ्गात्। एवं हि सत्येकादिव्युदासेन प्रवर्त्तमानः शब्दः। अङ्गप्रतिषेधादङ्गव्यतिरिक्तस्य चाङ्गिनोनभ्युपगमादनर्थकः स्यात्। एवं सर्वसमुदायशब्दा एकदेशप्रतिषेधरूपेण प्रवर्त्तमानाः समुदायिव्यतिरिक्तसमुदायानभ्युपगमादनर्थकाः प्राप्नुवन्ति। द्व्या[5]दिशब्दानां च समुच्चयविषयत्वादेकादिप्रतिषेधे प्रतिषिध्यमानानामसमुच्चयत्वात्। द्व्यादिशब्दानामनर्थकत्वमिति।

**नैष दोष** इत्याचार्यः। यस्मादाकांक्षावतीं **बुद्धिं कुतश्चिन्निवर्त्त्य** तस्या **बुद्धेः क्वचि**द्विनियतेऽर्थे **निवेशनाया**काङ्क्षावतः पुंसः कश्चि**च्छब्दः प्रयुज्य**ते प्रतिपादयित्रा। **क्वचिन्निवेशना**येत्यनेनान्वय उक्तः।[6] कुतश्चिद्विनिवर्त्त्येत्यनेन व्यतिरेकः।

किङ्कारणं कुतश्चिन्निवर्त्त्य क्वचिन्निवेश्यते शब्द इत्यत आह। **तदर्थस्ये**त्यादि। शब्दार्थस्या**वधारणात्**। **अन्यथा** यदि तेन शब्देन न कश्चिदर्थो व्यवच्छिद्येत **व्यर्थः** शब्द**प्रयोगः स्यात्** । यत एवन्**तस्माज्ज्ञेयादिपदे**ष्वित्यादिशब्दात् सर्वविश्वादिप-

---

[1] Cuṅ-zad-kyaṅ. [2] P.V. **व्यवच्छेद्यो०।**

**शब्दं हि सर्वः अन्वयव्यतिरेकाभ्यां नातिवर्त्तते। तस्य प्रवृत्ति[3]-निवृत्तिफलत्वात्। यदि अयं कस्यचिद् कुतश्चिद् बुद्धिं न निवर्त्तयेत्, अनिवर्त्य च यथाऽनुज्ञानात् सर्वव्यवहारेषु न किञ्चिद् व्यवहरेत्, व्यवहारस्यावधारण[4]नान्तरीयकत्वात्। यथा घटेनोदकमानये इति। यदि घटेन सह उदकस्य कथमपि अवश्यं आनयनमिच्छेत्। उदकमानयत्येव वाच्यं स्यात्। न घटेनेति[5]। तथाऽञ्जलिनाऽन्येनापि कथञ्चिदानयनमभिप्रेतं स्यात्। आनयेत्यनाक्षिप्तकरणकर्मकमेव वाच्यं स्यात्।**

---

१०a देषु। किम्विशिष्टेषु (।) **व्यवहारोपनीतेषु**। विधिप्र[7]तिषेधलक्षणः शाब्दो व्यवहारस्तदर्थमुपनीतेषु। लौकिकप्रयोगस्थेष्विति यावत्। तेषु व्यवहाराङ्गेषु यथाकथंचिद् **व्यवच्छेद्योस्ति कश्चित्**।

एतदुक्तम्भवति। यत्परश्च शब्दः स शब्दार्थ इति विधायकस्यापि वाक्यस्य व्यवच्छेदपरत्वाद् व्यवच्छेदोपि शब्दार्थ उच्यते इति न काचित् क्षतिः।

**शब्दं हीत्यादिना** व्याचष्टे। **सर्वः** पुमान् लौकिकः परीक्ष[1]को वा कस्मान्नातिवर्त्तत इत्याह। **तस्येत्यादि**। **तस्य** शब्दस्य **प्रवृत्तिनिवृत्तिफलत्वादिति** कुतश्चिन्निवर्त्त्य क्वचित् प्रवृत्त्यर्थत्वादित्यर्थः। इतरथा शब्दप्रयोगो विफलः स्यात्। तदाह। **यदीत्यादि**। **अयम्वक्ता कस्यचित्** प्रतिपाद्यस्य **कुतश्चिदनभिमतान्न निवर्त्तयेद् बुद्धिमनिवर्त्त्या**भिमते च क्वचिन्न प्रवर्त्तयेत् तदा **यथाभूतानुज्ञानादिति** शब्दप्र[2]योगात् पूर्वं प्रतिपत्तुर्यथा संप्रमुग्धरूपोर्थस्तथाभूतस्य शब्देनाननुज्ञानात्। यथाकथंचिद् यादृशस्य तादृशस्यानुज्ञानादित्यर्थः। **सर्वव्यवहारेषु न किंचिद्वचनं व्यवहरे**दुच्चारयेत्। किङ्कारणं (।) शब्द**व्यवहारस्यावधारणनान्तरीयकत्वात्**।

एतदेव साधयन्नाह। **यथेत्यादि**। "अत्र ह्युदकमानये" त्युक्ते श्रोतुः करण[1]-विशेषे**ऽवश्यमाकां[3]क्षा** भवति तत्र च नियमार्थं "**घटेने**"त्युच्यते। सोयं घटो नेति शब्दः स्वार्थाभिधानपुरस्सरमेव करणान्तरव्यवच्छेदाक्षेपात् फलवान् भवत्यन्यथा सत्यपि घटशब्दप्रयोगे यदि **नाञ्जलिना तथान्येना**पि करणेनोदकानयनं **यथाकथंचिदि**-ति। अल्पप्रमाणं बहुप्रमाणं वा जला**नयनमभिप्रे**तमित्यर्थः। उदकशब्दोपि कर्मान्त[4]-रव्यवच्छेदेन यदि विशिष्टे कर्मणि न प्रवर्त्तकस्तदा तस्यापि प्रयोगोनर्थक इत्याह। **तथेत्यादि**। **आनयेत्येव केवलम्वचनं स्यात्** (।) किंभूतम**नाक्षिप्तकरणकर्मकं**। अनाक्षिप्तविशेषणानाश्रितं करणं घटाख्यं कर्म चोदनाख्यं यस्मिन्नानयेत्येतावति वचने तत्तथोक्तं। तथानयेत्यस्मिन् व्यापारेभिमुखीभूतः पुमान्। आनयेत्यने[5]न यद्यानयनादन्यस्माद् व्यापारान्न व्यवच्छिद्येत तदाऽनयेत्यपि न वाच्यं स्यात्।

**एवं आनयनं अन्यद् वा[6] ऽनुष्ठानाननुष्ठानं किञ्चिद् यद्यभिमतं स्यात्। तदा आनयेत्यपि न ब्रूयात् शब्दार्थाभावात्। तथा ज्ञेयादिशब्दानां व्यवहारोपनीतानामपि केनचिद् व्यवच्छेद्येन[7] भाव्यम्। अनन्याशंकायां प्रयोगायोगात्। तत्र हि यदेव मूढमतेराशंकास्थानं तदेव निवर्त्यम्। अनाशंकमानो वा श्रोता किमुपदेशमपेक्षते। अभूतं च[1] वचनं कुर्वाणः वक्ता कथं नोन्मत्तः स्यात्।** 45 6b

---

एतदेवाह। **एवमानयनमित्यादि। अन्यद्वा किञ्चिदनुष्ठानमिति।** आनयनादन्यत्। किम्(।) भोजनाद्यनुष्ठानं। **अननुष्ठानं** चेति व्यापाराकरणमनानयनं च **यद्यभिमतं स्यात्तदा** क्रियापद**मानयेत्यपि न ब्रूयात्।** नयनमन्यद्वेति क्वचित् पुस्तके पा[6]ठः स **त्व**(?त्व) युक्तः। आनयनशब्दस्य प्रक्रान्तत्वात्। तस्माद् व्यवहारोपनीतानां घटादिशब्दानामस्ति **व्यवच्छेद्यो** यथा तेषान्**तथा व्यवहारोपनीतानां ज्ञेयादिशब्दानां** केनचिद् व्यवच्छेद्येनाज्ञेयादिना।

**अनन्याशङ्कायामि**त्यज्ञेयत्वादेराशङ्काऽन्याशङ्का। तदभावोनन्या शंका। असत्यामज्ञेयत्वाद्याशङ्कायामित्यर्थः। तथा ह्यनित्यादि[7]रूपेणाज्ञेयः शब्द इत्याशंकायामिदं प्रयुज्यतेऽनित्यादिनाकारेण ज्ञेय इति। तत्रानित्याद्याकारेण यदज्ञेयत्वमाशंकितं तदेव व्यवच्छिद्यते। एवं ज्ञेयास्सर्वपदार्थास्सर्व (ज्ञ) ज्ञानस्येत्यत्रापि स र्व ज्ञ ज्ञानापेक्षया यदज्ञेयत्वमाशंकितन्तदेव व्यवच्छेद्यं। तथा कश्चिदाह। निरुपाख्यानामभावात्तत्र ज्ञानस्य वृत्तिर्नास्ति तस्मादज्ञेयास्त इति।[1] अत्राप्यज्ञेयत्वमारोपितन्तदेव व्यवच्छेद्यं। सर्वाभावो न भवतीत्येवमभावस्यापि विषयीकरणात्। एवमन्यत्रापि ज्ञेयशब्दप्रयोगे वाच्यं। तथा प्रमेयशब्दे। तथा **"क्षणिकास्सर्वे संस्कारा"** इत्यत्रापि सर्वस्य दीपादेरेव क्षणिकत्वं कैश्चित् कल्पितन्न सर्वस्य (।) तद्व्यवच्छेदेन सर्वसंस्काराणामनित्यत्वं। एवं कश्चिदागतः किम्वा स[2]र्व एवेत्याशङ्कायां सर्वो ग्राम आगतः। इति कस्यचिदेव यदागमनमाशंकितन्तदेव व्यवच्छेद्यं। तथा समुदायालम्बनाः पञ्च विज्ञानकाया इति चैकदेशालम्बना इत्येकदेशालम्बनत्वं निषिध्यते। एवमन्येष्वपि द्व्यादिशब्देषु व्यवहारोपनीतेषु प्रकरणवशाद् यथायोगं व्यवच्छेदो वक्तव्यः। 90b

अयमत्र समुदायार्थः (।) न वस्तुभूतं प्रति[3]योगिनमभिन्नबुद्धिग्राह्यं राशिद्वयेऽवस्थाप्याऽन्यापोहः शब्देन चोद्यत इत्युच्यते। किन्तु यः श्रोत्रा तथाभूतेप्यतथाभूत आकार आरोप्यते सोपि व्यवच्छेद्य एव शब्देनेति।

एतदेव स्फुटयन्नाह। **तत्र हीत्यादि। यदेव मूढमते**ः प्रतिपाद्यस्या**शंकास्थान**माशंकाविषयः। **तदेव** ज्ञेयादिशब्दानां **निवर्त्त्यं**। श्रोत्रा नैव कश्चिदाशङ्कि[4]त इति चेदाह। **अनाशङ्कमानो वेत्यादि।** यद्यसौ न किञ्चिदाशङ्कते। यथाभूत-

**तत्संस्कारायैव शब्दानां कृतसंकेतत्वात्। ज्ञेयादिशब्दाश्चाव्यवहारानुपनीता न किञ्चिद्। वाक्यगतस्य तदर्थप्रतिपादकत्वात्। क्व[2] तत्प्रयोग इति चेत् प्रयोग-विषयचिन्तायां अन्यापोह इत्युच्यतेः। अनिर्दिष्टप्रयोगमित्यादिज्ञेयशब्दस्य कोर्थ (इति) प्रश्नस्य न कश्चिदर्थः। ततः क्वचिदपि न प्रतिपत्तः। तथा**

---

निश्चयवान् तदा परस्माद् वक्तुः **किमुपदेशमपेक्षते**। नैवेत्यभिप्रायः। आकांक्षाप-नयनं **श्रोतृसंस्कारस्तद्** यत्र वचने **ना**स्ति तदा श्रोतृसंस्कारं तथा**भूतं** च **वचनं कुर्वाणो वक्ता कथं नोन्मतः स्या**त्। **तस्माद्** वक्ता श्रोतुराकांक्षावतः संस्कार-मेवाधित्स[5]मानः शब्दं प्रयुंक्ते। किं कारणं (।) **तत्संस्कारायैव** श्रोतृसंस्कारायैव **शब्दानां कृतसंकेत**त्वात्।

भवतु नाम वाक्यस्थानां व्यवहारार्थमुपनीतानां ज्ञेयादिशब्दानां यथोक्तं व्यवच्छेद्यं। ये त्वव्यवहारोपनीताः केवला एव ज्ञेयादिशब्दास्तेषु कथं। न हि तत्र प्रतिपत्तुराशङ्कास्थानमस्तीत्यत आह। **अव्यवहारोपनीताश्चे**त्यादि। वा[6]क्येष्वनन्तर्भूतो वाचकः शब्दो नास्तीत्यर्थः। यतो वक्ता फलार्थी प्रथमन्ताव-दिममर्थम्विशिष्टक्रियासम्बद्धमनेन शब्देनास्मै प्रतिपादयामीत्यभिप्रायेण "देव-दत्त गामानये"त्येवं प्रयुंक्ते। तेन क्रियान्वितानामेव पदार्थानामभिधानं। न त्व-

91a भिहितानाम्पदार्थानाम्पश्चादन्वयः। गामित्यादौ कर्मादिविभक्तेरनुत्पादप्र[7]सं-गात्। तस्माद् वाक्यस्थानामेव प्रयोगः। तदेवाह। **वाक्यगतस्येत्यादि**। तस्यै**वार्थ-**प्रतिपादकत्वादिति भावः।

ये तु वै या क र णैः सर्वविश्वेत्यादिगणेषु पठ्यन्ते। प्रकृतिप्रत्ययविभागेन वा संस्क्रियन्ते। तथा नि रु क्त कारैः (।) तेपि रेखागवयस्थानीया वाक्यस्थानामेव प्रति-पत्त्युपाया द्रष्टव्या न तु तेषां लौकिकः कश्चिदर्थोस्ति। तस्मात् वाक्यस्थानामेव पदानामर्थवत्ता। तत्रैव चावस्थितानामर्थचिन्ता क्रियते। तदाह। **क्व पुनरि**त्यादि। **एत** इति ये वाक्यस्थाः **प्रयोगविषयचिन्तायां** प्रवर्त्तमानाया**मन्यापो**हः शब्दार्थ **उच्यते**। अन्योऽपोह्यतेऽनेनेति कृत्वा। ये त्वप्रयोगस्था ज्ञेयादिशब्दास्तेषामर्था-सम्भवाच्चिन्तैव नास्तीत्याह। **अनिर्दिष्टप्रयोग**मित्यादि। निर्दिष्ट उपात्तस्तथा[2] चासौ प्रयोगश्चेति कर्मधारयः। पश्चान्नञा सहाभावार्थेऽव्ययं विभक्तीत्यादिना-ऽव्ययीभावः। ततश्च सप्तम्या**स्तृतीया सप्तम्योर्बहुल**[1]**मि**त्यम्भावः।[2] उपात्तप्रयो-गाभावे सति वाक्येनुपनीतस्य केवलस्य **ज्ञेयशब्दस्य कोर्थ** इति **प्रश्न** इत्यर्थः।

---

[1] Pānini.

**घटादिशब्दा[3]नाम[3]पि न किंचिद् । प्रकरणे श्रवणादेव यापि प्रतिपत्तिः साऽपरिसमाप्ततदर्था दृष्टप्रयोगविषयानुसारेण साकांक्षत्वात् । तदर्थविप्लवः घटादिपदग्रहात्[4] । तादृशो ज्ञेयादिशब्देष्वपि यथादर्शनं अस्त्येव । तस्मात् सर्व-**

---

क्रियाविशेषणमेतदित्यपरे । प्रश्नक्रिया हि विशेष्या । क्रियाविशेषणानाञ्च कर्मत्वमिति ।[3] अत्र च यदि कर्मधारयसमासस्तस्य स्वपदार्थवृत्तित्वात्कथन्तेन प्रश्नक्रियाविशेषितेति वक्तव्यं ।

अथानिर्दिष्टः प्रयोगो यस्मिन् ज्ञेयशब्द इति बहुव्रीहिस्तदापि शब्दो विशेषितो न क्रिया । यदा त्वेवम्विग्रहोऽनिर्दिष्टः प्रयोगो यस्मिन् प्रश्न इति तदा भवति क्रियाविशेषात् तदापि प्रश्नशब्दसामानाधिकरण्यात् सप्तम्येव युक्ता[4]ऽनिर्दिष्टप्रयोगे प्रश्न इति । किङ्कारणं केवलस्य ज्ञेयशब्दस्यार्थो नेति चेदाह । **तत** इति (।) ततो ज्ञेयशब्दात् **क्वचिद् (अपि न) वस्तुप्रतिपत्तेः** । विधिप्रतिषेधफले व्यवहारे च केवलस्य ज्ञेयशब्दस्य प्रयोगाभावात् कुतोऽर्थप्रतिपत्तिः । यदादिशब्दोऽनित्यादिरूपेण किं ज्ञेयो भवत्यथाज्ञेय इत्येवं प्रक्रान्ते ज्ञेय इति केवलः प्रयुज्यते । तदापि यार्थप्रति[5]पत्तिः सा प्रकृतं शब्दादपदमपेक्ष्य भवन्ती वाक्यादेव जायते । पदान्तरसहितस्य पदस्य वाक्यत्वात् । तस्मान्नास्ति पदान्तरनिरपेक्षात् पदार्थप्रतिपत्तिः । यथा ज्ञेयादिपदानां केवलानां न किंचिद्वाच्यं तथा **घटादिशब्दानामपि केवलानां** ।

ननु च किं घटेनोदकमानयाम्यथाञ्जलिनेति प्रस्तावे । घटेनेति प्रयुक्ते । तत्र च यः प्रकरणं[6] न ज्ञातवान् तस्यापि प्रतिपत्तुर्घटेनेति केवलशब्दश्रवणाद् घटाकारा प्रतिपत्तिरुत्पद्यत एवेति कथमुच्यते केवलाच्छब्दात् न प्रतिपत्तिरित्याह । **यापीत्यादि** । अपरिसमाप्तः स जिज्ञासितोऽर्थो यस्यां प्रतिपत्तौ **साऽपरिसमाप्ततदर्था** । कथमपरिसमाप्ततदर्थेतेत्याह । **दृष्टप्रयोगानुसारेणे**ति । यावत्सु नयनानयनादिक्रियाचोदना[1]प्रवृत्तेषु । तेन घटशब्दस्य **प्रयोगो दृष्टस्तदनुसारेण** तावत्सु पूर्ववाक्येष्वाकांक्षावती प्रतीतिर्भवति किमयमर्थो विवक्षितः किम्वायमित्येवं **साकांक्षत्वा**दुपप्लवमानं रूपत्वेनासमाप्तार्था विप्लवभ्रान्तिरेव । एतत्कथयति (।) नैव केवलशब्दमात्रश्रवणादर्थप्रतिपत्तिरस्ति किन्तु वाक्येषूपलब्धस्यार्थवतः पदस्य सादृश्येनो[2]पहृतबुद्धेः केवलशब्दश्रवणादर्थप्रतिपत्त्यभिमान इति । यथा दृष्टप्रयोगानुसारेण केवल**घटादिपदश्रवणादर्थ**प्रतिपत्ति**विप्लवस्तादृशो ज्ञेयादिशब्देष्वपि** (।) **यथादर्शनं** । यथाप्रयोगोपलम्भं । यावत्सु वाक्येषु ज्ञेयशब्दः प्रयुज्यमानो दृष्टस्तदनुसारेण केवलज्ञेयशब्दश्रवणा**दस्त्येवा**र्थप्रतिपत्तिविप्लवः । अनेन स[3]र्वथा घटा**दिशब्दैर्ज्ञेयादिशब्दानान्तुल्यतामाह** ।

**यच्चाप्युक्तम् (।) "एकादिव्युदासेन प्रवर्त्तमानः सर्वशब्दाङ्गे प्रतिषेधादङ्गव्य-**

**शब्दप्रयोग कुतश्चित् निवर्त्य कुत्रचित् निवेशनात् अर्थवत्ता, तत्साफल्यात्**[5]।

**निवेशनं च यो यस्माद् भिद्यते विनिवर्त्य तम् ॥१२६॥**
**तद्भेदे भिद्यमानानां समानाकारभासिनि ।**
**स चायमन्यव्यावृत्या गम्यते तस्य वस्तुनः ॥१२७॥**

---

तिरिक्तस्य चाङ्गिनोनभ्युपगमादनर्थकः स्यादि"ति।

तदयुक्तं। यतोन्य एवैकादिबुद्धिविषयाभावा अन्ये च समुदायादिबुद्धिविषयाः प्रतिभासन्ते। ये च विशिष्टावस्थाः समुदायादिबुद्धिविषयास्त[4] एवाङ्गिन उच्यन्तेन्यस्याङ्गिनो निषेधात्। यादृग्भूताश्च ते परेण समुदायादिधर्मारम्भका इष्यन्ते तादृग्भूता एवास्माभिः समुदायबुद्धिजनकत्वेन तदालम्बना इष्यन्ते विरोधाभावात्। तेन सर्वसमुदायद्वित्वादिशब्दानामेकादिनिषेधो घटत एव।

**तस्मा**दित्यादि। यतः सर्वं वाक्यं सावधारणम्वाक्यस्थानामेव पदाना[5]मर्थवत्ता। **तस्मात् सर्वशब्दप्रयो**ग इत्युपसंहारः। **तत्साफल्यात्** तस्य शब्दप्रयोगस्य साफल्यात्। एवं सर्वशब्दानां यथोक्तविधिनाऽन्यापोहे वाच्ये।

यदुक्तम्भ[1]ट्टो द्यो त क रा भ्यां।

"अन्यापोहश्च किम्वाच्यः किम्वाऽवाच्योयमिष्यते।
वाच्योपि विधिरूपेण यदि वान्यनिषेधतः॥
विध्यात्मनास्य वाच्यत्वे त्याज्यमेकान्तदर्शनं।[6]
सर्वत्रान्यनिषेधोयं शब्दार्थ इति वर्णितं॥
अनपोहव्युदासेन यद्यपोहोभिधीयते।
तत्र नत्रैवमिच्छायामनवस्था भवेत्तव॥
अथाप्यवाच्य एवायमन्यापोहस्त्वयेष्यते।
तेनान्यापोहकृच्छब्द इति बाध्येत ते वचः॥
यस्माद् येष्वेव शब्देषु नञ्योगस्तेषु केवलः।
भवेदन्यनिवृत्त्यंशस्स्वात्मैवान्यत्र गम्यत" इति॥

92a

तदयुक्तं।[1] विधेः शब्दार्थस्यार्थादन्यनिषेधस्याभ्युपगमात्।

यदि तर्हि विधिरेव शब्दार्थोर्थादन्यनिषेधः (।) कथन्तर्ह्याचार्य दि ङ्ना गे न "शब्दोर्थान्तरव्यावृत्तिविशिष्टानेव भावानाहे"त्याद्युक्तं (।)

न विरुध्यत इत्यत आह। **निवेशनं चे**त्यादि। अनेन चैतद्दर्शयति(।) संकेतेपि तावद् विधिरूपेण शब्दः प्रवर्त्तते किं पुनर्व्यवहार इति। **यो** वृक्षा[2]र्थो **यस्मा**-

---

[1] Ślokavārtika.

**कश्चिद् भाग इति प्रोक्तं रूपं नास्याऽपि[6] किञ्चन ।**
**तद्गतावेव शब्देभ्यो गम्यतेऽन्यनिवर्त्तनम् ॥१२८॥**
**न तत्र गम्यते कश्चित् विशिष्टः केनचित् परः ।**

---

दवृक्षाद् घटादेर्भिद्यते **विनिवर्त्त्येत** स वृक्षन्त्यक्त्वेत्यर्थः। **निवेशनं** संकेतकरणं वृक्षशब्दस्य द्रष्टव्यं। **तम्विनिवर्त्त्येत्य**नेनावृक्षे वृक्षशब्दो न संकेत्यत इत्युक्तम्भवति। क्व पुनस्तन्निवेशनमित्याह। **भेदे भिद्यमानानां** वृक्षाणां यस्तद्भेदस्तस्मादवृक्षाद् भेदः। अवृक्षाद् भिन्नः स्वभावः। यथैव ह्येको वृक्षविशेषस्त[3]स्माद् वृक्षाद् भिन्नस्तथा सर्वे वृक्षभेदाः।

ततस्तेष्वसौ तद्भेदो विकल्पबुद्ध्या सर्वेष्वेकत्वेनारोप्यत इति समानाकारभासी भवति। तस्मिन् **समानाकारभासिनि** तद्भेदे भिन्नस्वभावे निवेशनं शब्दस्य। **स चायमि**ति चशब्दोवधारणार्थः। स एवायम्विकल्पप्रतिभास्याकारो बाह्याभिन्नः।

यद्वा स एव तद्भेदोऽवृक्षाद् भिन्नस्वभावलक्ष[1]णः प्रोक्त आचार्य दि ङ् ना गे न। कथं **प्रोक्त** इत्याह। **अन्यव्यावृत्त्या गम्यते तस्य वस्तुनः कश्चिद् भाग** इत्यनेन। अस्य चार्थम्वृत्तौ व्यक्तीकरिष्यामः।

नन्वन्यव्यावृत्त्या विशिष्टो वस्तुभागः परमार्थत एव कस्मान्न गृह्यत इत्याह। **रूपं स्वभावो नास्यापि** भेदस्य **किञ्चन** निवृत्तिरूपस्य भेदस्यासत्त्वात्। विकल्पप्रतिभासिनश्च बुद्धिवि[5]भ्रमात्।

यदि भेदस्य न रूपं किञ्चन कथन्तर्हि शब्दोन्यव्यावृत्तिविशिष्टानेव भावानाहेत्युच्यत इत्यत आह। **तद्गतावि**त्यादि। तस्य यथोक्तस्य भेदस्य विजातीयव्यावृत्तस्य स्वभावस्य विधिरूपेण गतावेव **शब्देभ्यो गम्यतेन्यनिवर्त्तनं**। (।१२७।)

तथा हि वृक्ष इत्युक्तेऽर्थादवृक्षनिवर्त्तनं प्रतीयते। एतावन्मात्रेण चान्यव्यावृ[6]त्तिविशिष्टत्वमुक्तं। न तु परमार्थतो विशेषणविशेष्यभावः। तदाह। **नेत्यादि**। **तत्रे**त्यन्यापोहे शब्दार्थे आ चा र्य ग्रन्थे वा। **कश्चित् पर** इत्यन्यस्माद् व्यावृत्तोर्थः। **केनचि**दन्यव्यावृत्तिलक्षणेन **विशिष्टो न गम्यत** इति।

तेन यदुच्यते भ ट्टे न।

"न चासाधारणम्वस्तु गम्यतेऽपोहवत्तया।
कथं वा परिकल्प्येत सम्बन्धो[7] वस्त्ववस्तुनोः॥ 92b
स्वरूपसत्त्वमात्रेण न स्यात् किञ्चिद्विशेषणं।

**न चापि शब्दो द्वयकृदन्योन्याभाव इत्यसौ ॥१२९॥**

457a **अरूपो रूप[7]वत्त्वेन दर्शनं बुद्धिविप्लवः ।**

**निवेश्यमानः शब्द आक्षिप्ततदन्यव्यावृत्तिरसावपि यस्माद् भिद्यते तन्निवर्त्यं भिद्यमानानां समानरूपप्रतिभासी भेदो निर्दिष्टः । अर्थान्तर[1]व्यावृत्यातस्य**

---

स्वबुद्ध्या रज्यते येन विशेष्यन्तद्विशेषणं ॥
न चाप्यश्वादिशब्देभ्यो जायतेऽपोहबोधनं ।
विशेष्यबुद्धिरिष्टेह न चाज्ञातविशेषणा ॥
न चान्यरूपमन्यादृक् कुर्याज्ज्ञानविशेषणं ।
कथं चान्यादृशे ज्ञाने तदुच्येत विशेषणं ।
अभावगम्यरूपे च न विशेष्येस्ति वस्तुता ।
विशेषितमपो[1]हेन वस्तु वाच्यं न तेस्त्यत(:॥)"[1]

इत्यपास्तं ।

नन्वेकस्य शब्दस्य कथं विधिप्रतिषेधलक्षणं व्यापारद्वयम् (।) आह ।

**न चापि शब्दो द्वयकृत्** । स्वार्थाभिधानमन्यव्यावर्त्तनं च द्वयं करोति (।) किङ्कारणम् (।) **अन्योन्याभाव इति** । **इति**शब्दो हेतौ । यस्मादवृक्षभेदाभावो वृक्षार्थस्तदभावश्चावृक्षार्थ इतरेतराभावत्वेन । तस्माद् वृक्षशब्दाद् वृक्षार्थप्रतिपत्त्यैवार्था[2]द् अवृक्षनिवृत्तिप्रतिपत्तिरपि भवतीति न द्वौ व्यापारौ साक्षाच्छब्दस्य । तेन ।

"यदि गौरित्ययं शब्दः समर्थोन्यनिवर्त्तने ।
जनको गवि गोबुद्धेर्मृग्यतामपरो ध्वनिः ॥
न च ज्ञानफलाः शब्दा न चैकस्य फलद्वयं ।
अपवादविधिज्ञानं फलमेकस्य वः कथम् (।)"

इति निरस्तं ।

यदि शब्दवाच्यो भेदस्सर्वत्रानुयायी तदेव तर्हि पारमार्थिकं सामा[3]न्यम्भविष्यतीत्यत आह । **असाविति** शब्दविषयोनुयायी भेदः **अरूपो** निःस्वभावः । तस्मिन्नरूपे दृश्यविकल्पयोरेकीकृत्य वक्तृश्रोत्रोर्य**द्रूपवत्त्वेन दर्शनन्तद्बुद्धिविप्लवो** भ्रान्तिरित्यर्थः ।

**निवेश्यमान** इत्यादिना व्याचष्टे । यस्माद् भिद्यते वृक्षादिकोर्थ**स्तन्निवर्त्यं**

---

[1] Ślokavārtika. [2] Ibid.

**वस्तुनो भागः कश्चिद् गम्यत इति शब्दोर्थान्तरनिवृत्तिविशिष्टानेव भावानाहेत्यादिना निर्दिष्टः। स हि तं भेदं कथयन् अर्थान्तरव्यव[2]च्छेद-माक्षिपन्नेव वर्त्तते। एकगतभेदचोदनाया हि तदन्यव्यावृत्तिनान्तरीयकत्वात्। स एव भेदः तद्व्यावृत्या गतो भागः। तद्गतेः तदुपाधित्वात्। स विशिष्टो[3]**

---

तत्यक्त्वा निवेश्यत इति सम्बन्धः। कुत्रेत्याह। **भिद्यमानाना**मित्यादि। एतच्च का रि का व्याख्याने विभक्तार्थं। **आक्षिप्ता** तदन्यव्यावृत्तिर्येन शब्देनेति विग्रहः। स एव चायं **समानरूपप्रतिभासी भेदो निर्दिष्ट** आचार्य दि ङ्ना गे न। कथमित्याह। **अर्थान्तरव्यावृत्त्या तस्य वस्तुनः कश्चिद् भागो गम्यत इति। तथा शब्दोर्थान्तरनिवृत्तिविशिष्टानेव भावानाहेत्यादिना।** आदिग्रहणाच्छब्दार्थान्तरा-पोहं कुर्वती श्रुतिरभिध[5]त्त इत्यादि परिग्रहः।

**स ही**त्याद्यस्यैव समर्थनं। **स हि** वृक्षशब्दस्**तम्भेद**मवृक्षव्यावृत्तं स्वभावं **कथ-**यन्नार्थान्तरस्यावृक्षार्थस्य **व्यवच्छेदमाक्षिपन्नेव वर्त्तते**। किं कारणम् (।) **एकगत-भेदस्ये**त्यादि। यथा हि वृक्षभेदा एव खदिरादयः स्वभावेनैवावृक्षेभ्यो भिन्ना एवम-वृक्षा अपि वृक्षेभ्यः भेदस्य द्विष्ठत्वात्। तत्र वृक्षशब्देनैक**गतस्य** वृक्षा[6]र्थगतस्य **भेदस्य** भिन्नस्य स्वभावस्यैकाकारप्रतिभासिनो या **चोदना तस्यास्तदन्यव्यावृत्ति नान्तरीयकत्वात्**। तस्माद् वृक्षार्थादन्यस्यावृक्षस्य या व्यावृत्तिस्तन्नान्तरीयक-त्वात्। एवं ह्यवृक्षाद् व्यावृत्तरूपो वृक्षार्थोऽभिहितः स्याद् यद्यवृक्षार्थस्य तत्र निवृत्तिर्गम्येत। **स एवा**न्यस्माद् भिद्यमानस्य विकल्पबुद्धिप्रतिभासी **भेदो** भि[7]न्नः स्वभावः। **तद्व्यावृत्त्या**ऽर्थान्तरव्यावृत्त्या यथोक्तन्यायेनार्थाद् गम्यमा- 93a नया। **गतो च** बुद्धो **भागो** वस्तुन इत्युक्त इत्यध्याहारः। व्यावृत्तवस्तुदर्शन-द्वारायातत्वाद् वस्तुरूपत्वेनाध्यवसायाच्च वस्तुभागो गत इत्युच्यत इत्यभिप्रायः।

एतदुक्तम्भवति (।) अतत्परामर्शजननेभ्यो व्यावृत्तरूपन्तत्परामर्शजननेष्वा-रोपितैकत्वं विकल्पबुद्धिप्र[1]तिभासनमेवाकारमविभक्तबाह्याध्यात्मिकभेदं शब्दः प्रतिपादयति शाब्दे ज्ञाने तस्यैव प्रतिभासनात्। तञ्च प्रतिपादयन्नन्यव्यावृत्ति-मर्थादाक्षिपति (।) अतोनेनाभिप्रायेणोक्तमा चा र्ये णान्यव्यावृत्त्या गम्यते तस्य वस्तुनः कश्चिद् भाग इति। न पुनरन्यव्यावृत्त्या शब्दार्थभूतया विशेषणरूपया बाह्यस्य वस्तुनः कश्चिद् भागो गृह्यतेऽन्यव्या[2]वृत्तेरेवाभावादिति। एवन्तावदन्य-व्यावृत्त्या गम्यते तस्य वस्तुनः कश्चिद् भाग इत्येतत्समर्थितं।

अधुना शब्दार्थान्तरनिवृत्तिविशिष्टानेव भावानाहेत्येतत्समर्थयन्नाह। **तद्-गतेरि**त्यादि। **तद्गते**रन्यनिवृत्तिगतेस्**तदुपाधित्वा**दस्ति भेदोपाधित्वात् (।) **स** एव

**गत इत्यर्थे कस्मिंश्चिद् नार्थान्तरव्यावृत्तिः यया विशिष्टा ये शब्दैश्चोद्यन्ते दण्डिवत् निमित्तभूता। भिद्यमानयोर्द्वयोर्भेदस्य उभयगतत्वात्, एकगतभेदाभिधानेऽपि नान्तरीयकस्तदन्याक्षेपो भवति। तस्मात् न तयोर्विशेषणविशेष्यभावः। एकभेदाभिधानेऽपि अन्यव्यावृत्तिगतिः[5]। अन्वयव्यतिरेकचोदनया**

---

**भेदस्तद्विशिष्टो गत इत्युच्यते**। आ चा र्ये णेति।

यद्वा (।) **तस्य** यथोक्तस्य वस्तुभेदस्य शब्दाद् **गतेः** प्रतिपत्तेः सावधारणत्वेन **तदुपा**[3]**धित्वात्**। सा तदन्यनिवृत्तिरुपाधिरर्थाक्षेपाद् यस्यास्तद्गतेः सा तथोक्ता। तदन्यनिवृत्तिनान्तरीयकत्वमेव तदुपाधित्वं।

एतदुक्तम्भवति। यार्थान्तरव्यावृत्तिरर्थाद् गम्यते तन्नान्तरीयकत्वात्स एव भेदः शब्दाद् गम्यमानोन्यव्यावृत्त्या विशिष्टो गत इत्युच्यत आ चा र्ये णेति।

नन्व**र्थान्तरव्यावृत्तिः** शब्दप्रवृत्तिनिमित्तभूता। **यया विशिष्टा** बाह्या **अर्था**[4] गवादि**शब्दैश्चोद्यन्ते** अप्रतीतेः। **दण्डिव**दिति वैधर्म्यदृष्टान्तः। यथा दण्डद्वारेण तद्वान् दण्डीत्युच्यते। नैवं व्यावृत्तिद्वारेण व्यावृत्तिमानिति। कस्माद् व्यावृत्तिरर्थान्तरभूता नेत्याह। **द्वयोर्हि**त्यादि। यस्माद् **द्वयो**र्वृक्षावृक्षयोः परस्पर**म्भिद्यमानयोर्यो भेदस्तस्योभयगतत्वात्**। वृक्षावृक्षगतत्वाद् वृक्षावृक्षभिन्नस्वभावत्वादित्यर्थः। तेनै**कग**[5]**तभेदाभिधानेपि**। अवृक्षापेक्षया वृक्षगतो यो भेदः। भिन्नः स्वभावस्तस्य शब्देनाभिधानेपि **नान्तरीयकस्तदन्याक्षेपो भव**ति। अवृक्षापेक्षया वृक्षगतस्य भेदस्यावृक्षनिवृत्तिलक्षणस्य वृक्षापेक्षयाप्यवृक्षगतस्य वृक्षनिवृत्तिलक्षणस्याक्षेपो भवति। **इति**शब्दो हेतौ। अस्माद्धेतोस्तदुपाधित्वात् तद्विशिष्टो गत इत्युक्तमित्यध्याहा[6]रः। **न तयो**रित्येकगतस्य भेदस्य तदन्यव्यावृत्तेश्च **न विशेषणविशेष्यभावः।**

कः पुनरयमेकगतो भेदः का च तदन्यव्यावृत्तिर्येनान्यव्यावृत्तिनान्तरीयकस्यैकगतभेदस्य शब्दात् प्रत्ययो भवतीति चेत्।

उच्यते। वृक्षशब्दवाच्यस्तावद् विकल्पबुद्धिप्रतिभासी शाखादिमदाकारः सर्ववृक्षेष्वभिन्नरूप इवातद्रूपेभ्यो भिन्न इव भा[7]समान एव गतो भेदो भिन्नः स्वभाव इत्यर्थः। एवं घटादिशब्दवाच्योप्येकगतो भेदो द्रष्टव्यः। तम्भेदं च प्रतिपादयन् शब्दो विजातीयनिवृत्तिं प्रसज्यप्रतिषेधलक्षणामर्थाद् गमयति सा तदन्यव्यावृत्तिः। 93b

ननु यद्यन्यव्यावृत्तिविशिष्टो वस्तुभागो न गम्यते किमर्थन्तर्ह्यन्यव्यावृत्तिविशिष्ट इत्याद्युक्तमित्याह। **एकभेदाभिधान** इत्यादि। यश्चायं यथा विभक्त एकग[1]तो भेदः स एव शब्देन चोद्यते (।) तत्प्रतीतिरेवान्वयगतिः (।) या त्वर्थाद्

**व्यवहाराङ्गतां शब्दानां दर्शयन् "तद्व्यावृत्त्या गम्यते।" इत्यतोऽपि व्यतिरेक उक्तः। अत एव शब्दे तदन्यव्यावृत्तिः स्वार्थाभिधानं**[6] **च न व्यापारद्वयम्। स्वार्थस्याभिधानादेव तदन्यव्यावृत्तिगतिः स्वार्थस्य भेदरूपत्वात्। न ह्यन्वयोऽव्यावृत्तिमतो नाप्यनन्वयिनो व्यावृत्तिः।**[7] **एकान्वयस्य परिहार्याभावे, तथैक-** 457b

---

**अन्यव्यावृत्तिगतिः** सा व्यतिरेकगतिः (।) एवमन्वयव्यतिरेकाभ्यां शब्दोर्थवान् भवति (।) तेना**न्वयव्यतिरेकचोदनया**न्वयस्य साक्षादर्थात्तु व्यतिरेकस्य चोदना द्रष्टव्या। तया चोदनया **व्यवहाराङ्गतां शब्दानां दर्शयन्ना**चार्य दि ङ् ना ग आह "**तद्व्यावृत्त्या गम्यते वस्तुभाग**" इति। **तथा तद्विशिष्टो वे**त्याह।[2] व्यावृत्तिशब्देन **व्यतिरेक उक्तः**। वस्तुभागशब्देनान्वयः। अनेनैतदपि व्याख्यातं शब्दान्तरापोहं कुर्वन्ती श्रुतिः स्वार्थमभिधत्त इत्यर्थः। तत्र योसावेकगतो भेदो विकल्पबुद्धिप्रतिभासी व्याख्यातः स एव स्वार्थस्तत्रार्थान्तरव्यावृत्तिरर्थान्तरापोहः प्रसज्यप्रतिषेधलक्षणस्तं कुर्वतीत्यर्थाद् गमयन्तीत्यर्थः।

यदि चान्यनिवृत्तिपुरस्सरैव वृक्षादिशब्दप्रवृत्ति[3]स्तदान्वयव्यतिरेकचोदनयेत्यादिव्याख्यानं व्यर्थं स्यात्।

तस्माद्विधिरेव शब्दार्थः।

यत एवैकभेदाभिधानेऽर्थादन्यव्यावृत्तिगतिर**त एवे**त्यादि। **स्वार्थस्य भेदरूपत्वा**दिति। यो वृक्षशब्दस्यार्थः शाखादिमदाकारः। विकल्पप्रतिभासी स भेदरूपः। भिन्नस्वभावोऽभेदाकारव्यावृत्तत्वात् स्वयं। अतो भेदरूपस्य **स्वार्थस्याभिधानादेवार्थादन्यव्यावृत्ति**[4]**गति**रेवं ह्यवृक्षाद् भेदरूपस्यैव वृक्षार्थस्य गतिर्भवेत्।

यद्यर्थात् तत्र वृक्षनिवृत्तिर्भवतीति। **तस्मात् स्वार्थाभिधान**मेव शब्दस्य व्यापारो**न्यव्यावर्त्तनन्त्वर्थादिति न शब्दस्य** व्यापार**द्वयं**।

ननु विधायकेन वाक्येनान्वयमात्रम्प्रतिपाद्यते नान्यस्य विधानं प्रतिषेधो वा। निषेधकेनापि निषेधमात्रमेव केवलं प्रतीयते नान्यस्य विधानं प्रतिषेधो वेत्यत आ[5]ह।

**न ह्यन्व**य इत्यादि। प्रतिनियतस्यार्थस्य विधानमन्वयो यथा वृक्षंच्छिन्धीति। तत्रावृक्षस्यार्थान्निवृत्तिर्व्यतिरेकः। स यत्र न विद्यते सो**व्यतिरे**क एवं भूतो**न्वयो न मे स्ति**। किन्तु सर्व एव स व्यतिरेकः।

तेन यदुच्यते भ ट्टो द्यो त क रा भ्यां (।)

> "विधिरूपश्च शब्दार्थो येन नाभ्युपगम्यते।
> न भवेद् व्यतिरेकोपि तस्य तत्पूर्वको ह्यसावि"ति[1]

---

[1] Ślokavārtika.

**परिहारस्यापि क्वचित् स्थित्यभावे निष्फलचोदनत्वात्।**

**स चायं भेदोऽरूपः। रूपवत्वेन केवलं दर्शनं बुद्धिविप्लवः।**

---

निरस्तमिष्टत्वात्। अ[6]नन्वयो वान्वयरहितो वा व्यतिरेको न हीति सम्बन्धः। तत्र विशेषस्य प्रतिषेधो व्यतिरेकः। तत्रार्थाच्छेषगतिरन्वयः। **एकान्वय** इत्यादिनैतदेव समर्थ्यते। **एकान्वयस्ये**त्येकस्य विधानस्य **परिहार्याभावे** व्यवच्छेद्याभावे निष्फलचोदनत्वात्।

यदि वृक्षञ्छिन्धीत्युक्तेर्थादवृक्षस्य न तत्र व्यवच्छेदस्तदा वृक्षशब्दप्रयोगो 94a निष्फलः स्यात्।[7] यद्वा किम्वृक्षञ्छिनद्मि उतान्यमिति श्रोतुर्जिज्ञासायां सत्यां वृक्षञ्छिन्धीत्युक्तेन्यनिषेधः प्रतीयत एवान्यथा परिहार्याभावे निष्फलमभिधानं स्यात्। तथा यदाप्याकांक्षारहितः श्रोता वृक्षञ्छिन्धीति शब्देन चोद्यते तदापि वृक्ष एव प्रवर्त्तते नान्यत्र (।) वक्ता हि वृक्ष एवायं प्रवर्त्तते नान्यत्रेत्यनेनाभिप्रायेण शब्दं प्रयुङ्क्ते। विवक्षानुगमनं च ध्वनेः। तस्मान्ना[1]स्ति व्यतिरेकरहितोन्वयस्**तथैक-परिहारस्ये**त्येकप्रतिषेधस्य प्रतिषेधस्यैवैकस्येत्यर्थः। **क्वचिदिति** प्रतिषेधेन विषयीकृते वस्तुनि **स्थित्यभावे निष्फलचोदनत्वात्**। तथा हि सुराविषयस्य पानस्य प्रतिषेधे। यदि सुराया अन्यत्रापि पानस्य नावस्थानं स्यात्। तदा सर्वस्मिन् विषये निषिद्धस्य पानस्य विशेषे प्रतिषेधोनर्थकः। तत्र सुरा(ऽ)पेयेति[2] सुरापानमात्रस्य प्रतिषेधे चरितार्थत्वाद् वाक्यस्य यद्यप्युदकादिपानं शब्देन न विधीयते। तथापि सुराया अन्यत्र पानस्यावस्थानन्न निवार्यत इत्यर्थादन्वयगतिरन्यथा सुराग्रहणमनर्थकं स्यात्। यद्वा किमुदकादिवत् सुरा पातव्या किम्वा नेति प्रश्ने सुरा न पातव्येत्युक्ते सुरैवेति प्रतीतेर्नोदकादिपानविधानं प्रकृतन्निषेध्यते (।) तेन सर्वत्र विधि[3]प्रतिषेधरूपस्यैव शब्दार्थत्वं।

कस्तर्हि विधिप्रतिषेधपर्युदासवाक्यानाम्भेदः। महान्भेदः। विधायकं हि वाक्यम्विधिं प्राधान्येनाभिधायान्यनिषेधकमर्थात्। निषेधकं च निषेधं प्राधान्येनाभिधायार्थादन्यविधानमाह। पर्युदासप्रतिपादकन्तु वाक्यं प्रतिषेधपूर्वकमन्यविधानं प्राधान्येनाहेत्यस्त्येव विशेष इति।

ननु यद्यन्यनिवृत्तिर[4]र्थात् प्रतीयते सैव तर्हि पारमार्थिकी भावानामस्ति यया विशिष्टा गृह्यन्त इत्येवं कस्मान्नेष्यते (।) किं पुनरेवन्तद्गतेस्तदुपाधित्वात् तद्विशिष्टो गत इति व्याख्यायत इत्यत आह। **स चाय**मित्यादि (।) यो **भेदो** व्यावृत्तिलक्षण आचार्य दि ङ् ना गे न विशेषणत्वेनाभिमतः स **चायमरूपो** निःस्व-

**तेनैवापरमार्थोसावन्यथा न हि वस्तुनः ॥१३०॥**
**व्यावृत्तिर्वस्तु भवति; भेदोस्यास्मादितीरणात् ।**

**रूपं हि परमार्थः स भेदो यदि रूपं स्यात् तद्रूपं अतद्रूपं वा। ताद्रूप्य नान्यस्ततो भिद्यते। न च तस्य रूपं अन्यस्य स्यात्।**

---

भावः। नास्य व्यतिरिक्तमन्यतिरिक्तम्वा रूपमस्तीति कृत्वा। कथ[5]न्तर्हि भावानां विजातीयाद् भेद इति प्रतीतिरिरिति चेदाह। **रूपवत्त्वेन** भावसम्बन्धित्वेन तस्य भेदस्य **केवलन्दर्शनम्**प्रतीतिर्**विप्लवो** भ्रान्तिः (।) केवलमिति तथाभूतबाह्यनिरपेक्षं (।) का रि का या मप्येवं व्याख्यानं द्रष्टव्यं।

ननु यदि रूपवत्त्वेन दर्शनं कथं बुद्धिविप्लव इत्यत आह। **तेनै**वेत्यादि। रूपवत्त्वेन भावसम्बन्धित्वेन यद्दर्शनम्भेदस्य तेनै**वाप[6]रमार्थो** न वस्तुभूतोऽसत्त्वात्। **असा**विति भेदः प्रसज्यरूपः। **अन्यथे**त्येवमनिष्यमाणे। **न हि वस्तुनः** स्वलक्षणस्य सम्बन्धिनी **व्यावृत्तिर्वस्तु भवति**। किं कारणं (।) **भेदोस्यास्मादितीरणात्**।

एतदुक्तम्भवति। यदि हि सा वस्तुभूता स्यात् तदा वृक्षेभ्योऽवृक्षव्यावृत्तिरभिन्ना भिन्ना वा स्यात्। यद्यभिन्ना। अस्मादवृक्षाद् वृक्षस्य भेद इति व्यतिरेक[7]-प्रतीतिर्न स्यात्। पलाशाच्चैकस्मादवृक्षव्यावृत्तेरभिन्नत्वात्। धवादीनामवृक्षव्यावृत्तिर्न स्यात्। पलाशवत् तत्स्वभावाया व्यावृत्तेस्तेष्वननुगमात्। अथ पलाशाद् भिन्ना सा। तत्राप्यवृक्षव्यावृत्तः सकाशात् पलाशस्य व्यावृत्तिः स्यादवृक्षव्यावृत्तेश्च व्यावर्त्तमानस्य पलाशस्यावृक्षरूपता स्यादवृक्षवत्। ततश्चास्मादवृक्षादस्य वृक्षस्य भेद इति प्रतीतिर्न स्यादिष्यते[1] च। तस्मात्तद्व्यावृत्तिर्न वस्तु। **भेदोस्यास्मादितीरणा**दुच्चारणादित्यर्थः। उपलक्षणं चैतत् प्रतीतेरपि ग्रहणं। 94b

**रूपं ही**त्यादिना व्याचष्टे। हि यस्मात्। रूपं किमुच्यते **परमार्थः**। वस्तुस्वभावः। भेदोन्यव्यावृत्ति**र्यदि रूपं स्याद्** यदि स्वभावो भवेत्। तदित्यवृक्षाद् व्यावृत्तिरूपं। **तद्रूपमि**ति यत्तद्व्यावृत्तं पलाशस्वलक्षणं तदात्मकं। **अतद्रूपं** वेति ततोन्यदित्य[2]र्थः। वस्तुनस्तत्त्वान्यत्त्वानतिक्रमादित्यर्थः।

**ताद्रूप्य** इत्यादिना प्रथमपक्षे दोषमाह। **ताद्रूप्ये** पलाशादन्यत्त्वे यया व्यावृत्त्या सामान्यभूतया सर्वे वृक्षभेदाः व्यावृत्ता दृष्टास्तस्यास्ताद्रूप्ये पलाशादनन्यत्वेभ्युपगम्यमाने तदेव पलाशस्वलक्षणमेव व्यावृत्तिरिति कृत्वा पलाश एवावृक्षाद् भिन्नः प्राप्नोति **नान्यो** धवादिः। **तत** इत्यवृक्षाद् **भिद्येत**। किङ्कारणमित्याह। **न ही**त्यादि। अवृक्षाद्धि व्यावृत्तिः पलाशस्यैव रूपं। **न च तस्य रूप[3]मन्यस्य** धवादेः

**न तदेव भेदस्य रूपं चेत्। अन्यदेव रूपं स्यात्। ततश्च भावस्तस्माद् व्यावर्त्तेत। ततः तस्य भेदो न स्यात्। यो यद्भेदाद् व्यावर्त्तते तत् तदेव भवतीति सोस्य भेद इति च न स्यात्। न ह्यन्योन्यस्य भेदो भवति सम्बन्धी। सति वा सम्बन्धित्वे कार्यकारणभावात् तज्जनितं रूपं भेद इति अविशेषात् स्वकारणानां कार्याणि सर्वाणि व्यावृत्तयः स्युः। भेदस्यार्थान्तरत्वे च ततोऽप्यस्य भेदोस्ती[5]ति भेदोपाधित्वात् द्रव्यान्तरवत् न भेदः स्यात्।**

---

**स्यात्।**

**न तदे**वेत्यादिना द्वितीयपक्षोपन्यासः। **न तदेव** पलाशस्वलक्षणमेव **तस्य भेदस्य रूपं** (।) **रूपं च** स्वभावश्चासौ **भेद इष्यते। ततोन्यदेव** पलाशाद् व्यावृत्ति**रूपं स्यात्**। यद्वा रूपं चान्यदेव भेदस्य स्यात्। **ततश्चा**न्यत्त्वात् कारणात्। **भावः** पलाशात्मक**स्तस्माद**वृक्षव्यावृत्तिरूपाद् **व्यावर्त्तेत। ततः** कारणात्। **ऊष्मा[4]दि**त्यवृक्षात् **तस्य** पलाशस्य **भेद इति न स्यात्**। यस्माद् **यत्** खलु वस्तु। **यतो भेदो** यद्भेदस्तस्माद् **व्यावर्त्तते। तत्तदेव भवति।** अवृक्षव्यावृत्तेर्भवति। अवृक्षव्यावृत्तेरवृक्षनिवृत्तिरूपाया निवर्त्तमानम्पलाशस्वलक्षणमवृक्षमिव स्यादवृक्षवत्। मा वा भूद् वृक्षावृक्षयोरेकत्वन्तथापि **सोस्य भेद इति च न स्यात्।**

यदि चायमवृक्षाद् भेदः पलाशादन्यः स्यात्तदयम[5]वृक्षाद् **भेदो**स्य पलाशस्य **सम्बन्धीति न स्यात्। न ही**त्याद्यस्येव समर्थनं। **अन्यः** स्वतन्त्रो**न्यस्य सम्बन्धी भेदो** धर्मरूपो **भवति। सति** वेति **सम्बन्धित्वे**भ्युपगम्यमाने वा। **सम्बन्धः कार्यकारणभावो**ङ्गीकर्त्तव्यः। भिन्नयोः कार्यकारणमन्तरेण सम्बन्धायोगात्। तत्र व्यावृत्तिमान् कारणं व्यावृत्तिः कार्यं। **इति** हेतो **रूपं** वस्त्वन्तरमेव **त[6]ज्जनित**न्तेन व्यावृत्तिमता स्वलक्षणेन जनितं **भेद इति। पादा**(? पदा)र्थान्तरस्य नाम कृतन्तस्मात् कार्यत्वेनाभिमताद् भेदाख्यात् पदार्थाद् **अविशेषा**दन्यत्रापि **कारणानां** यानि **कार्याणि** तानि **सर्वाणि व्यावृत्तयो** भेदाः **स्युः**। न चैवं। तदान्यत्रापि भेदाभिमते भेद इति व्यपदेशो मा भूत्।

95a अथ कार्यं भेद इति नोच्यते किन्तु भेदः कार्यं इत्युच्यते। तदाप्याह। **अर्थान्तरत्वे च** भेदस्याभ्युपगम्यमाने। **ततोपि** व्यावृत्तिमतो**प्यस्य** भेदस्य **भेदोस्ति**। अन्यथा भेदस्यार्थान्तरत्वमेव न स्यात्। **ततश्च** पलाशस्यावृक्षाद् यो भेदस्तस्य भेदस्य पलाशाद् भेद इति कृत्वा **स भेदो भेदोपाधिः** स पलाशाद् भेदः। उपाधिविशेषणं यस्य भेदस्य स **भेदोपाधि**स्तद्भावस्त**त्त्वन्तस्माद**साववृक्षाद् भेदः पलाशस्य **न भेदः स्या[1]त्। द्रव्यान्तरवत्**। यथा हि द्रव्यान्तरं घटादिक-

**न हि भेदोपाधिवदेव भेदः अयमत इति विशेषनिर्देशात्। ततश्चोपाध्यभावे भेदस्यैवाभावः स्यात्। ततो नान्यत्वम्। नाप्यन्यथाऽभावात् भावे**

---

मप्यघटापेक्षया यो **भेदस्तदुपाधित्वान्न** पलाशस्य भेदस्तद्वत्। स्वतन्त्रत्वादित्यभिप्रायः।

ननु यदि नाम भेदोपाधिर्भेदस्तथापि किमिति पलाशस्य भेदो न भवतीत्यत आह। **न हीत्यादि**। **अयमत इति विशेषनिर्देशात्**। अयमवृक्षाद् भेदः। **अत** इत्यवृक्षात्। अस्येत्येतदपेक्षणीयं। अस्य[2] पलाशस्यायं भेदोऽस्मादवृक्षादित्येवं विशेषनिर्देशात् पारतन्त्र्येण निर्देशात् पलाशस्य सम्बन्धी भेदो धर्मः सिध्यति। पारतन्त्र्येण च निर्देशो भेदस्याभेदे सति सिध्यति भेदान्तरप्रतिक्षेपेण। न त्वर्थान्तरत्वे भेदस्य। अर्थान्तरत्वे हि भेदोपाधित्वाद् घटवन्न पलाशस्य भेदः स्यात्। ततश्चास्मादस्य भेद इति विशेषनिर्देशो न स्यात्। तदेवं[3] व्यतिरेकपक्षेऽवृक्षाद् भेदस्यापि पलाशाद् यो भेदः सोपि रूपवानिति तस्यापि स्वाश्रयाद् भेदेन भवितव्यं। तथा च सर्वभेदानां भिन्नस्वभावतया भेदोपाधित्वेन स्वयन्न रूपभेदतेति न कश्चिद् भेदः स्यात्।

एतदेवाह। **ततश्चेत्यादि**। **उपाध्यभाव** इति व्यावृत्तिलक्षणस्य धर्मभूतस्योपाधेरभावे सर्वस्य स्वभावान्तरत्वेन धर्मित्वाद् **भेदस्यै[4]वाभावः स्यात्** तस्य धर्मिरूपत्वात्।

योपि मन्यते (।) यदि रूपवती व्यावृत्तिः स्यात् स्यात् तत्त्वान्यत्वपक्षभावी दोषो यावता नीरूपा सास्ति तया च भावा विशिष्टा गृह्यन्त इति।

तदयुक्तं।

"तद्गतावेव शब्देभ्यो गम्यतेऽन्यनिवर्त्तनं।
न तत्र गम्यते कश्चिद्विशिष्टः केनचित्पर(:" ॥ प्र. वा. १।१२८)

इति ग्रन्थविरोधात्। नीरूपस्य चास्तित्वविरोधाच्छशविषाणवत्। नीरूपत्वा[5]देव च न तस्याः प्रत्यक्षं ग्राहकं नाप्यनुमानं। सम्बन्धाभावात्।

नापि नियतरूपान्यथानुपपत्त्या तत्कल्पना सम्बन्धाभावादेव। स्वहेतुभ्य एव च नियतरूपाणामुत्पन्नत्वादिति "**सर्वभावा स्वभावेन** व्यावृत्तिभागिन" (१।४२) इत्यत्रान्तरेऽभिहितत्वात्।

नापि च साऽप्रतिपन्ना विशेषणम्भवितुमर्हति। न हि दण्डाप्रतीतौ दण्डीति प्रतीतिर्भवति।[6] नापि सा क्वचिदाश्रिता नीरूपत्वात्। न चासम्बद्धम्विशेषणम्भवति। नाप्यन्यनिवृत्तिग्रहणपुरस्सरं वृक्षादिषु वृक्षशब्दः प्रवर्त्ततेऽप्रतीतिरित्युक्तत्वात्। निवृत्तेर्नीरूपतयाऽप्रतिपन्नत्वेन संकेतस्याप्रवृत्तेश्च। कथं शब्दविषयत्वन्तस्मा-

**परमार्थः। कथन्तर्हि अभिन्नस्य वस्तुनः शब्देन चोदने तस्यैवान्यतो भेदात्,**
458a **अनंशस्य एकस्य भेदस्य[7] चोदने सर्वभेदगतेः, तत्र कथं शब्दप्रमाणान्तरणि व्यर्थानि न स्युरिति चेत्। नैष दोषः। यस्मात्—**

**एकार्थश्लेषविच्छेद एको व्याप्रियते ध्वनिः ॥१३१॥**
**लिङ्गं वा तत्र विच्छिन्नं[1] वाह्यं वस्तु न किञ्चन ।**
**यस्याभिधानतो वस्तुसामर्थ्यादखिले गतिः ॥१३२॥**

---

दनुभवद्वारेण वृक्षोऽयं नावृक्ष इत्येवं निश्चय उत्पद्यते। तेनान्यनिवृत्तिः प्रतिषेध-
95b विक[7]ल्पेन कल्पिता। यथासंकेतं च वृक्षादौ शब्दः प्रवर्त्तमानोर्थादन्यनिवृत्तिमाक्षिपति। अन्यनिवृत्तिविकल्पमाक्षिपतीत्यर्थः। तेनान्यनिवृत्त्या विशिष्टो। वस्तुभागो गम्यत इत्युच्यत इति।

यदि व्यावृत्तयः सामान्यभूता वहिर्वस्तुत्वेन नेष्यन्ते। नापि परपरिकल्पितं सामान्यमेवं सति बाह्यम्वस्त्वेव वाच्यमापतितं। तत्र च दोष इत्याह। **कथन्तर्ही**ति। **अ[1]भिन्नस्य** निरंशस्य **वस्तुनः शब्देन चोद**ने उपलक्षणं चैतत् लिंगेन प्रतिपादने। **तस्यैव**ाभिन्नस्य वस्तुन एकस्माद् भिन्नस्य पुन**रन्यतो**पि **भेदात्**। तथा हि येन स्वभावेन न शब्दोऽकृतकाद् भिन्नस्तेनैव मूर्त्तानित्यत्वाच्च। तस्यानंशत्वात्। **अनंशस्य** च वस्तुनः कृतकशब्दे**नैकस्या**कृतकाद् **भेद**स्य भिन्नस्य स्वभावस्य **चोदने**। तथा लिंगेन प्रतिपादने **सर्वभे[2]दगते**स्सर्वेभ्यो भिन्नस्य स्वभावस्य प्रतिपत्तेः। **तत्रा**नंशे वस्तुनि **कथं शब्दप्रमाणान्तराणि व्यर्थानि न स्यु**ः। एकेन शब्देन चोदने शब्दान्तराणां वैयर्थ्यं स्यात्। एकेन लिङ्गेन प्रतिपादने प्रमाणान्तराणां वैयर्थ्यं स्यात्।

**यस्मादि**त्यादिना परिहरति। तस्माद् **यो येन धर्मेण** विशेषः संप्रतीयत (१।४४) इत्यादिना प्रागेवेदं चोद्यम्परिहृतम[3]धिकविधानार्थन्तु पुनरुपन्यासः। अर्थेष्वाकारान्तरसमारोपो**र्थश्लेषः** (।) स च प्रतिपत्तिभेदेनानेकः। **तत्रे**ति बुद्धि-प्रतिभासिनि धर्मिणि बाह्यभिन्नतयाऽध्येयास्ते। बाह्यतयाध्यस्तस्यैव बुद्ध्याकारस्य शब्दवाच्यत्वात्। न पुनर्बाह्यम्बुद्ध्याकारो वा केवलः शब्दवाच्यः स्वलक्षणत्वात्। **तत्र** धर्मिणि **विधिरूपतया** स्वार्थप्रतिपत्तिद्वारे**णैकार्थ[4]श्लेषविच्छेदे**ऽपनयन **एको ध्वनिर्व्याप्रियते**। (।१३०॥)

**लिङ्गं** चैकार्थश्लेषविच्छेदे व्याप्रियते। **तत्र** स्वार्थाभिधानद्वारेण समारोप-व्यवच्छेदे शब्दप्रमाणान्तराणां साफल्यमिति यावत्। **न** पुनर्ज्ञानाद् व्यतिरिक्त**म्बाह्यम्वस्तु** स्वलक्षणं (।) स्वलक्षणाद् वा व्यतिरिक्तम्बाह्यम्वस्तु सामान्यलक्षणम्वाच्यं **किञ्चना**स्ति। **यस्य** वस्तुनोऽ**भिधान**तोऽ**खिले** वस्तुस्व[5]भावे **गतिर्भवेत्**।

**कुर्वन्नानाफलः शब्द एकाधारो भवत्यतः ।**

**यथा बाह्यान्तर्भेदसंसृष्टया बुद्ध्या स्वस्यैव अर्थ[2]क्रियायोग्यमध्यवसाय शब्दार्थ उपयुज्यत इति पूर्वोक्तवत्। तैस्तैर्भ्रान्तिकारणैः संसृष्टरूप इव प्रतिभासमाने यथासंकेत व्यवच्छेदार्थं तत्रैव ते व्याप्रियन्ते। न ह्येकसाध्यमपि व्यवच्छेदमन्यः करोति संकेतप्रतिनियमात्। नैव विच्छिन्नं किञ्चिद् वस्तु आक्षिप्यते। यस्याभिधानात् वस्तुबलेन सर्वथा गतिः स्यात् शब्दानां। बुद्धि-विषयत्वात्[4]।**

**तत्र च अवस्तुनि वस्तुसामर्थ्याभावात्। तथाभूतेनायं व्यवहारः सम्यग्-**

---

**वस्तुसामर्थ्याद्** वस्तुवशात् । यतश्च शब्दः स्वाभिधानद्वारेण व्यवच्छेदं करोति **ततः** कारणात् तं तं व्यवच्छेदं **कुर्वन्नानाफलः शब्दो** भव**त्येकाधारश्च** । कथं । **अर्थक्रियायोग्यमध्यवसाय** । अनर्थक्रियाकारिणापि स्वाभासमर्थक्रियाकारित्वेन स्वलक्षणरूपत्वेनाध्यस्येत्यर्थः । **तत्रैवे**ति बुद्धिप्रतिभासे बाह्य[7]तयाध्यस्ते । किंभूते । 96a **तैस्तैर्भ्रान्तिकारणैः संसृष्टरूप इव** भाति । (।१३१॥)

सदृशापरोत्पत्त्यादिभि**र्भ्रान्तिहेतु**भिर्नित्याद्याकारेण **संसृष्टरूप इव प्रतिभास-माने** । **ते**ऽनित्यादिशब्दाः **यथासंकेतं** यस्य यस्य समारोपस्य **व्यवच्छेदार्थं**। स्वप्रतिभासे संकेतः कुतः। तस्य तस्य प्रतियोगिनो व्यवच्छेदाय **व्याप्रियन्ते**। संकेतानुरूपमेव प्रतिपाद[1]यन्नाह। **न चे**त्यादि। ह्यर्थे चशब्दः। यतो **यथासंकेतं व्यापारस्ततो न ह्ये**कशब्दसाध्यं **व्यवच्छेदमन्यः** शब्दः **करोति**। किङ्कारणं(।) **संकेतप्रतिनियमात्**। एकैकव्यवच्छेदार्थम्बुद्ध्याकारोऽविभक्तबाह्यरूपे शब्दनिवेश-नात्। व्यवहारकालेपि स्वार्थाभिधानद्वारेण तन्नमेव व्यवच्छेदं प्रत्याययतीत्यर्थः। शब्दग्रहणमुपलक्षणमेवं लिङ्ग[2]मपीति द्रष्टव्यं।

नन्वध्यवसितबाह्यरूपत्वाच्छब्दार्थस्य ततश्च शब्देनन्यलक्षणस्य सर्वात्मना विषयीकरणात् कथं न शब्दान्तराणाम्वैयर्थ्यमित्याह **न चे**त्यादि। अवधारणश्च शब्दः। **नैव विच्छिन्नं** ज्ञानांशाद् भिन्नं **किञ्चिद् वस्तु**। स्वलक्षणं स्वलक्षणाद् व्यतिरिक्तं सामान्यलक्षणमन्यनिवृत्तिलक्षणं **वाक्षिप्यते** गृह्यते शब्देन लिङ्गेन वा। **यस्या[3]भिधानाद् वस्तुबलेने**ति वस्तुग्रहे निरंशत्वाद् वस्तुनः **सर्वथा गतिः स्यात्**। धर्माणान्ततो व्यतिरेकात्। व्यतिरेकेप्युपाधीनां नानोपाध्युपकाराङ्गशक्त्यभिन्ना-त्मनो ग्रह (१।५४) इत्यादिना सर्वथाग्रहणस्योक्तत्वात्। कस्माच्छब्दैर्विच्छिन्न-म्वस्तुनाक्षिप्यत इत्यत आह। **शब्दाना**मित्यादि।

एतदुक्तम्भवति। यतो बुद्ध्याकारमबाह्यम्बाह्यमध्यवस्य[4]न्ति शब्दास्ततो

**भूतेन नानैकधर्मभेदाभेदाः। प्रतिभास[5]विप्लवानुसारीति तस्य तत्प्रतिबन्धभूते ऽपितथा तदव्यभिचारः। ततो वितथात् प्रवृत्तस्यान्ते तथाभूतएव वस्तुनि ज्ञानसंवादात्। न पुनर्भिन्नाकारग्राहिणां ज्ञानं शब्दा[6]नामेकवस्तुविषयत्वात्। नानाफलः शब्द एकाधारो नास्ति व्याघातात्। यथार्वाणते बुद्धिप्रतिभासाश्रये न दोषः।**

---

विच्छिन्नवस्तुग्राहका इव भवन्तीत्यर्थः। बुद्धेर्विप्लवश्च बुद्ध्याकारस्य बहीरूपतया ग्रहः। **तद्विषयत्वाच्छब्दानां**। बुद्धिविप्लवेपि वाच्य**वस्तुसामर्थ्यादखिले गतिः**। किन्नेति चेदाह। **तत्र चे**त्यादि। **तत्र** बुद्धिविप्लवे**ऽवस्तुनि वस्तुसामर्थ्याभावात्**।

यद्यपि बुद्ध्याकारो ज्ञानस्वलक्षणत्वाद्वस्तु। तथाप्यसौ शब्दैर्विकल्पैर्वा बाह्या[5]-भिन्नतयाध्यस्तोऽवस्त्वेव। तेन शब्दो विकल्पो वा न स्वलक्षणविषयो यथावदेकस्यापि बाह्यस्य ज्ञानाकारस्य वाऽग्रहणादिति।

यदि बुद्धिविप्लवविषया एव सर्वशब्दाः कथं कृतकानित्यादिशब्दानान्तथाभूते वस्तुन्यव्यभिचार इत्यत आह। **तथाभूते**त्यादि। ततस्ततोऽकृतकनित्यादेर्भिन्नस्यार्थस्यानुभवद्**वारेणे**त्यर्थः। **अयं व्य[6]वहार** इति सम्बन्धः। किम्भूतः (।) **नानैके**त्यादि। नाना एकश्च नानैकं। तच्च **धर्मश्चे**ति कर्मधारयः। ततो **भेदाभेद**शब्दाभ्यान्त्रिपदो द्वन्द्वः। नानैकधर्म**भेदाभेदा** एव बुद्धौ **प्रतिभासन्त** इति प्रतिभासास्त एव विप्लवो

96b भ्रान्तत्वात्। **तदनुसारी** तेनाकारेण प्रवृत्तः। **इति** हेतोस्तस्य व्यवहारस्य **तत्प्रतिबन्धे[7]** तस्मिँस्तथाभूते स्वलक्षणे पारम्पर्येणोत्पत्तिप्रतिबन्धे सति **तदव्यभिचारः**। वस्त्वव्यभिचारः। यथा हि कृतकाद्याकाराः शब्दा विप्लवास्तथ वस्तूनामपि कृतकादिरूपेण परमार्थतोवस्थानमित्यनेनाकारेणाव्य**भिचारो** द्रष्टव्यः।

एतदेवाह। **ततोपीत्यादि**। ततो बुद्धिविप्लवविषयाच्छब्दाद् व्यवहारात् परार्थानुमानलक्षणा[1]द् **वितथादिति** भ्रान्तात्। **प्रवृत्तस्यान्ते** प्रवृत्तिपरिसमाप्तौ **तथाभूत एव** कृतकादिरूप **एव वस्तुनि** नत्वकृतकादिरूपे। अनेनाव्यभिचारस्वरूपमुक्तं। **ज्ञानसम्वादात्** स्वलक्षणग्राहिज्ञानोत्पत्तेः शब्दस्य वा ज्ञानस्य सम्वादात्।

अस्मिन्नेवान्यापोहे शब्दार्थे सामानाधिकरण्यं सिध्यति न तु वस्तुनीत्याह। **न पुनर्भिन्ने**त्यादि। **भिन्ना आकारा** जाति[2]गुणादयः शब्दप्रवृत्तिनिमित्तभूताः। तद्**ग्राहिणां ज्ञानशब्दानामेकवस्तुविषयत्वात्**। शब्द एकाधार इति सम्बन्धः। यदि हि भिन्नाकारं ज्ञानमेकवस्तुविषयम्प्रवर्त्तेत ततस्तदनुसारेण शब्दोपि तथा स्यात्। तथा च **नानाफलः शब्द एकाधार** इति भवेत्सामानाधिकरण्यं तच्च **नास्ति व्याघातात्**। तथा हि नीलोत्पलशब्दयोरेकं वा[3] वस्तुवाच्यं स्यादनेकम्वा। आद्ये पक्षे एकेनैव शब्देन निरंशस्य वस्तुनः सर्वात्मनाभिधानात्। द्वितीयस्य शब्दस्याप्रवृत्तिः स्यात् प्रवृत्तौ वा पर्यायतेति न नानाफलत्वं। द्वितीये पक्ष एकाधारता नास्ति।

**विच्छेदं सूचयन्नेकमप्रतिक्षिप्य[7] वर्त्तते ॥१३३॥** 458b

**यदान्यं तन स व्याप्त एकत्वेन च भासते।**
**सामानाधिकरण्यं स्यात तदा बुद्ध्यनुरोधतः ॥१३४॥**
**वस्तुधर्मस्य संस्पर्शो विच्छेदकरणे ध्वनेः।**

---

घटपटादिशब्दवन्नानाविषयत्वात्।

अथ मतं (।) नीलशब्दो नीलगुणविशिष्टन्द्रव्यमाह। उत्पलशब्दोप्युत्पल-जातिविशि[4]ष्टन्तदेव द्रव्यमाह। अतो विशेषणयोर्भेदान्नानाफलः शब्दो विशेष्या-भेदादेकाधार इति।

तदप्यसत्। यतो नीलगुणेन विशिष्टद्रव्यन्नीलशब्देनाभिधीयमानं सर्वात्म-नाभिधीयते निरंशत्वात्। ततः कोपरो द्रव्यस्योत्पलजातिविशिष्ट आत्मानभि-हितोस्ति यदुत्पलशब्देनाभिधीयेतेति (।) तथैव पर्यायता स्यादथ विशेषणभेदाद् वि[5]शेष्यद्रव्यस्य भेदस्तदाप्येकाधारता न स्यात्। अपोहवादिनस्त्वयमदोष इत्याह। **यथावर्णित** इत्यादि। **बुद्धिप्रतिभास आश्रयो** यस्य शब्दार्थस्य स तथोक्तः।

यथा च न दोषस्तथा प्रतिपादयन्नाह। **विच्छेद**मित्यादि। एको नीलशब्द **एकं** व्यवच्छेदमनीलव्यवच्छिन्नं नीलस्वभावं **सूचयन्नन्य**मनुत्पलव्यवच्छिन्नमुत्पल-स्वभाव**मप्रतिक्षिप्य[6] वर्त्तते** न निराकारोतीत्यर्थः। (।१३३॥)

**स** इत्यनुत्पलव्यवच्छिन्नः स्वभावः। **तेन** नीलशब्देन **व्याप्त** आक्रान्तः आक्षिप्तः सन्नुत्पलशब्दप्रयोगे बुद्धावे**कत्वेन प्रतिभास**ते। एकस्यैव धर्मिणः व्यवच्छेदद्वया-यातनीलोत्पलधर्मद्वययुक्तस्य विकल्पबुद्धौ प्रतिभासनात्। यदा चैवन्**तदा सामा-नाधिकरण्यं स्याद् बुद्ध्यनुरोधतः**।

एतदुक्तम्भव[7]ति (।) नीलशब्दप्रयोगाद् बुद्धिप्रतिभासी धर्मी नीलरूप एव 97a प्रतिभासते। तत्रार्थादनीलं व्यावर्त्त्यते न त्वनुत्पलव्यवच्छिन्नः स्वभाव उत्पल-शब्दप्रयोगादप्युत्पलरूपतया प्रतीयमानोनुत्पलं व्यावर्त्त्यते न त्वनीलव्यावृत्तः स्वभावः। शब्दद्वयप्रयोगे तु नीलोत्पलधर्मद्वययुक्तैकधर्मिप्रतिभासिनी विकल्पबुद्धि-रुत्पद्यते ततो नानाफलः[1] शब्द एकाधारो भवतीति भवेद् बु(द्)ध्यनुरोधेन सामा-नाधिकरण्यमिति।

तेन यदु द्यो त क रे णोच्यते (।) "यस्य चान्यापोहः शब्दार्थस्तेनानीलानुत्पल-व्युदासौ कथं समानाधिकरणाविति वक्तव्यं। यस्य पुनर्विधीयमानः शब्दार्थस्य जातिगणविशिष्टं नीलोत्पलशब्दाभ्यां द्रव्यमभिधीयते जातिगणौ च द्रव्ये वर्त्तेते।

**(स्यात् सत्त्वं स हि तत्रेति) नैकवस्त्वभिधायिनि ॥१३५॥**
**बुद्धावभासमानस्य दृश्य[1]स्याभावनिश्चयात् ।**
**इति संग्रहश्लोकाः ।**
**तेनान्यापोहविषयाः शब्दाः सामान्यगोचराः ॥१३६॥**
**शब्दाश्च बुद्धयश्चैव वस्तुन्येषामसम्भवात् ।**

**यदि हि वस्त्वेव विधिरूपेण शब्दविकल्पैः विषयीक्रियेत, सोऽयमिह सर्वार्थानां सर्वेणाकारेण प्रतीतिप्रसंगः । न च सामान्यादि चिन्तयित्वा न्यायशास्त्रप्रणेत्राऽन्यापोह[3]विषयावेतौ निर्दिष्टौ ।**

---

न पुनरनीलानुत्पलव्युदा[2]सौ । तस्मात् समानाधिकरणार्थो नास्ती"ति[1] निरस्तं । विधीयमानस्य शब्दार्थस्याभ्युपगमात् । (।१३३॥)

किं च पुनः (।) **शब्दस्य** स्वार्थाभिधानद्वारेण समारोप**व्यवच्छेदकरणे**भ्युपगम्यमाने । यद्वा **व्यवच्छेदकरणे** व्यवच्छिन्नस्वभावविषयीकरणे । लेशतो **वस्तुधर्मस्य** वस्तुस्वभावस्य विजातीयव्यावृत्तस्य **संस्पर्शः स्यात्** प्राप्तिलक्षणः (।) किं कारणं (।) **सत्त्व**[3]मिति विद्यमानः **स** **ह्य**ध्यवसीयमानः व्यवच्छिन्नः स्वभावः । **तत्र** वस्तुनीति कृत्वा **नैकवस्त्वभिधायिनि** शब्देभ्युपगम्यमाने वस्तुधर्मस्य संस्पर्शः सामान्यस्यैव वस्तुनोऽभावात् ।

कथमिति चेत् । **बुद्धा**वित्यादि । उपलब्धिलक्षणप्राप्तस्यानुपलम्भादसत्त्वमिति यावत् । यत एवम्वस्तुनि शब्दार्थे दोष**स्तेन** कारणे**नान्यापोहविषया** विकल्प[4]-बुद्धिप्रतिभासविषयाः **शब्दा बुद्धयश्च** प्रोक्ता आचार्य दि ङ्ना गे न । किम्भूता बुद्धयः **सामान्यगोचरा** विकल्पिका इत्यर्थः । बुद्धीनामेवैतद् विशेषणं न तु शब्दानान्तेषां सामान्यविषयव्यभिचारात् । किङ्कारणं । **वस्तुन्येषां** शब्दानां विकल्पानां च **सम्भवात्** ।

**यदि ही**त्या**दि**ना व्याचष्टे । **वस्त्वेव यदि विषयीक्रियेत** गृह्येत न तु विधिरूपे[5]-णाध्यवसीयेत । **सोऽय**मित्यनन्तरोक्तः **सर्वार्थानां सर्वेणाकारेण** वस्तुसामर्थ्यात् **प्रतीतिप्रसंगः** । **आदि**शब्दाद् अविशेषणविशेष्यभावप्रमाणान्तराप्रवृत्त्यादिपरिग्रहः । **प्रणेता** आचार्य दि ङ् ना गः । **एता**विति बुद्धिशब्दौ । अन्योपोह्यतेनेनेति विकल्पाकार उच्यते तद्विषयौ । तथा भिन्नाकाराभिर्बुद्धिभिरेकम्वस्तु यदि विषयीक्रि[6]येत । तथैव शब्देन चाभिधीयेत । तदा भिन्नफलयोः शब्दयोरेकत्र द्रव्ये वृत्तत्वात् स्यात् सामानाधिकरण्यमेतत्तु न सम्भवति । तथा हि तच्छब्दवाच्यं सामान्यं स्वलक्षणाद-

---

[1] Nyāyavārtika.

**एवं चेत्।**

**एकत्वाद् वस्तुरूपस्य भिन्नरूपा मतिः कुतः ॥१३७॥**

**अन्वयव्यतिरेकौ वा नैकस्यैकार्थगोचरौ ।**

**तदेकमनंशं वस्तु चेत् कथं बुद्ध्याकार[4]भेदैर्विषयीक्रियते। भिन्नाकारत्वं भेदाश्रयादेव। तदपि अभेदात् सामान्यस्य। तदात्मनोऽपि तदेकयोगक्षेमत्वात्। तद् अयं न अन्योन्यार्थपरिहारे[5]ण एकविषययोर्वृत्त्यसम्भवात्।**

**न च सामानाधिकरण्यादि स्यात्। न चैकस्मिन्नेव वस्त्वात्मनि वृत्त्यवृत्ती युक्ते व्याघातात्। न च अन्यत्र अवृत्तिरपि सामान्यं स्यात्[6]।**

---

भिन्नं भिन्नम्वा स्यात्। तत्राद्ये पक्षे। **एकत्वाद् वस्तुरूपस्य भिन्नरूपा** सामान्यविशेषाकारा भिन्ना **मतिः कुतः**। (।१३६॥)

स्वलक्षणाच्च सामान्यस्याव्यतिरेके। शावलेयात्मको[7] भेदो यतो बाहुलेयात्मकाद् भेदाद् व्यावर्त्तते। बाहुलेये शावलेयात्मकं गोत्वमन्वेतीत्येकस्यार्थस्यैकाधिकरणावन्वयव्यतिरेकौ प्राप्नुतः। तच्चायुक्तमित्याह। **अन्वयव्यतिरेका**वित्यादि। **एकोर्थो गोच**रो विषयो ययोरन्वयव्यतिरेकयोस्तौ तथोक्तौ। 97b

**तदेक**मित्यादिना व्याचष्टे। एकत्वादेव**ानंश**मेकस्यांशाभावात्। आक्रियत इत्याकारो बुद्धिप्रति[1]भासः। तस्य **भेदस्तदाश्रयाद्** भेदस्य। वस्तुनानात्वस्य। यदि भिन्नाकाराभिर्बुद्धिभिर्गृह्येत भिन्नं स्यात्। न चैवन्तस्य चाभावाद् वस्तुनः। सामान्यविशेषोभयात्मकत्वाद् वस्तुन एकस्यापि भिन्नाकारबुद्धिग्राह्यत्वमिति चेदाह। **तदात्मनोपी**त्यादि। स्वलक्षणात्मनस्त**देकयोगक्षेमत्वात्**। स्वलक्षणेनैकयोगक्षेमत्वात् तद्वदेवाभिन्नत्वं। **तदि**ति तस्माद**यं**[2] सामानाधिकरण्यादिर्न स्यादिति सम्बन्धः। किं कारणम् (।) **अन्योन्यार्थपरिहारेण** परस्परार्थपरिहारेण भिन्नप्रवृत्तिनिमित्तत्वेनेति यावत्। शब्दयो**रेकविषययो**रेकद्रव्याधारयो**र्वृत्त्यसम्भवात्**।

**अन्वये**त्यादि श्लोकभागं **न चे**त्यादिना व्याचष्टे। **यदैक** एव **वस्त्वात्मा** स्वलक्षणं सामान्यं च तदा शावलेयस्वलक्षणस्य गोत्वसामान्यात्मक[3]त्वात्। **तत्रै**व बाहुलेये **वृत्तिः** पुनः स्वलक्षणात्मकत्वात् तत्रै**वावृत्ति**स्तस्मिन् काले प्रयुक्ता। सा **चायुक्ता । व्याघातात्**। प्रमाणबाधितत्वात्। स्वलक्षणादभिन्नत्वा**न्नैव** सामान्य**मन्यत्र वर्त्तते**। ततो नैकस्यैकत्र वृत्त्यवृत्ती इति चेदाह। **न चे**त्यादि। **सामान्यस्ये**त्यादि। ततो नैकस्य वृत्त्यवृत्ती इत्यभिप्रायः।

**नेत्या**चार्यः सामान्यविशेषयोः सांख्या[4]दिदर्शनेन **भेदाभावात्**। **तदि**त्याद्य-

**न सामान्यस्य वृत्तिर्विशेष इति चेत्। न। भेदाभावात्। तद्धि एकरूपं सामान्यं वा भवेद् विशेषो वा। न ह्यसति रूपभेदेऽयं प्रविभागो युक्तः, सति वा**
459a **अव्यतिरेको[7] न स्यादित्युक्तम्। तद् अयमविभागो निरन्वयोऽपि न सान्वयः।**

**योपि सामान्यं भिन्नमेवाह तत्रापि—**

**अभेदव्यवहाराश्च भेदे[1] स्युरनिबन्धनाः।**

**यथास्वं शब्दानां भिन्नार्थाभिधाने कथं एकार्थबुद्ध्याश्रयाः स्युः! अर्थान्तराभिधायिनश्च निराकांक्षत्वात् आकांक्षाभावे कथं विशेषणविशेष्य[2] भावः?**

---

स्यैव समर्थनं। **तद्धि** वस्त्वे**करूपमे**कात्मकं सत्। **सामान्यम्वा भवेद् विशेषो वे**ति। सामान्याद् विशेषस्याव्यतिरेकात् सामान्यमेव स्यात्। विशेष एव वा विशेषा-दव्यतिरेकात् सामान्यस्य। न त्वेकं द्विरूपं। यतो **न ह्यसति रूपभेदेऽयं प्रविभाग** इति सामान्यं विशेष इति च। सति वा प्रविभागे सामान्यविशे[5]षयोर**व्यतिरेको न स्यादित्युक्तं प्राक्। तदि**ति तस्माद**यम्**वस्त्वात्मा। **अविभाग** इत्यनंशः।

यदि सामान्यमेव तदान्वियाद् व्यक्त्यन्तरङ्गच्छेत्। अथ विशेषात्मक एव। तदा न वान्वियात्। एकस्य तु विरुद्धधर्मद्वयासम्भव इति यावत्। तदेवाह (।) **न पुन**रित्यादि।

**योपी**ति वैशेषिकादिः। द्रव्याद् **भिन्नमेव सामान्यं** शब्दवाच्य**माह**। व्यक्तेः सामान्या[6]**नाम्भेदे**ऽभ्युपगम्यमाने**ऽभेदव्यवहाराः** सामानाधिकरण्यादिव्यवहाराः **स्युरनिबन्धनाः। यथास्व**मिति। वीप्सायामव्ययीभावः। तथा हि नीलोत्पलादि**शब्दा यथास्व**न्नीलोत्पलादिम्परस्परभिन्नं सामान्यमाहुः। यदापि नीलशब्दो नीलगुणाभि-
98a धायीष्यते तदापि भिन्नार्थाभिधानमस्त्येव। **एको** धर्मी **अर्थो** विषयो यस्या **बु**द्धेस्सा (।) **एकार्था** चासौ **बुद्धि**श्चेति कर्मधारयः पुम्वद्भावश्च। अस्या **आश्रयाः** कारणं **कथं स्युः**। ततश्च सामानाधिकरण्यं न स्यादिति भावः।

यदि नीलोत्पलादिशब्दा विशेषणद्वययुक्तैकधर्मिविषयां बुद्धिं जनयेयुः। तदै-कार्थप्रतिपादनेन स्यात् सामानाधिकरण्यन्तच्च नास्ति। व्यक्तेरर्थान्तरं सामान्य-न्तदभिधायिनश्चानाक्षेपकास्तद्गतानां भेदानान्तदपरि[1]त्यागेन वृत्तिराक्षेपः न तथा। कस्मात् (।) **निराकांक्षत्वात्**। यदा वृक्षशब्दो वृक्षत्वमेवाभिधत्ते। तदा तस्य निर्विशेषणत्वात् तावतैवासौ निराकांक्ष इति कथन्धवादीनाक्षिपेत्। अनाक्षिप्ताश्च कथं वृक्षशब्दार्थस्य भेदा धवादयोऽतद्भेदत्वाच्च कथं वृक्षः शिंशपेति विशेषण-विशेष्यभावः। तदाह। **कथमित्यादि**। सामान्यविशिष्टस्य द्रव्यस्याभिधा[2]नान्न

**सर्वत्र भावाद् व्यावृत्तेनैते दोषाः प्रसंगिनः ॥१३८॥**

**यथा हि एकः तस्माद् भिन्नः तथाऽन्योपीति भेदस्यासामान्यदोषो नास्ति। परिशिष्टाभावः[3] प्रागेव उक्तः।**

**अपि च।**

**एककार्येषु भेदेषु तत्कार्यपरिचोदने ॥१३९॥**
**गौरवाशक्तिवैफल्याद् भेदाख्यायाः समा श्रुतिः।**
**कृता वृद्धैरतत्कार्यव्यावृत्तिविनिबन्धना ॥१४०॥[4]**

---

यथोक्तो दोष इति चेन्न। उक्तोत्तरत्वात्। विशेषणविशिष्टस्यापि द्रव्यस्याभिधाने वस्तुसामर्थ्यादेकस्मादपि शब्दादखिलगतेः शब्दान्तरस्य तत्राप्रवृत्तिः प्रवृत्तौ चापर्यायतेति। तदेवं वस्तुशब्दार्थवादिनो न कथंचित्सामानाधिकरण्यादिसम्भवः।

सामान्यमपि तेषां न सम्भवतीत्युक्तं। तथा हि यदा तावत्स्वलक्षणादव्यतिरिरिक्तं सामान्य[3]न्तदा स्वलक्षणवद् व्यक्त्यन्तराननुगमादसामान्यं (।) व्यतिरेकेपि कथमन्यस्य समान्यमतिप्रसङ्गादित्यादि प्रागुक्तं।

व्यावृत्तिवादिनस्त्वयमदोष इत्याह। **सर्वत्रे**त्यादि। एते दोषा इति सामान्यसामानाधिकरण्याभावादयः। **यथा** हीत्यादि। **एको** गोभेदः शावलेयस्त**स्माद्**गोस्वभावाद् भिन्नस्**तथान्योपि** बाहुलेयादिः (।) अतो विजातीयव्यावृत्तः[4] स्वभावः सर्वत्र तुल्य इति **भेदस्य** विजातीयभिन्नस्य स्वभावस्य विकल्पबुद्ध्या सर्वत्र स्वाकाराभेदेनाध्यस्तस्या**सामान्यदोषो नास्ति। परिशिष्टाभाव** इति सामानाधिकरण्याद्यभावः प्रागेवोक्तः। 'विच्छेदं सूचयन्नेकमप्रतिक्षिप्य वर्त्तत" (१।१३३) इत्यादिना।

एवन्तावद् विजातीयव्यावृत्तं स्वभावं सर्वत्र बुद्ध्या स्वाकाराभेदेनाध्यस्तमेकं शब्दाभिधेयं प्रति[5]पाद्याधुनाऽभिन्नाकारमन्तरेणाप्येककार्येषु भावेष्वेकः शब्दो नियुज्यत इत्याह। **अपि चे**त्यादि। **तत्कार्यपरिचोदने** एककार्यतापरिचोदनार्थं। यद्वैककार्याणां परिचोदनार्थं। **एककार्येषु भेदे**ष्वेकस्य भावरहितेष्वपि **समा** एका श्रुतिः। **कृता** संकेतिता। **वृद्धै**र्व्यवहारज्ञैः। **तत्कार्या**णाम्भेदानामतत्कार्येभ्यो या यावृत्तिस्त**न्निबन्धना**[6] विजातीयव्यावृत्ततयैककार्येष्वेका श्रुतिर्निबध्यत इत्यर्थः। (।१३८॥)

ननु यदि न सामान्ये शब्दनिवेशः स्वलक्षणे तर्हि शब्दनिवेशः स्यादन्यस्याभावात्। न च स्वलक्षणं शब्दवाच्यं।

नैतदस्ति। यतः प्रतिपादकस्तावत् त्रिकालस्थान् भावान् एककार्यात् संकेतकरणाभिप्रायेण विषयीकृत्य तेष्वेव संकेतं करोति व्यवहारकाले परिचोदनार्थं।

**न भावे सर्वभावानां स्वस्वभावव्यवस्थितेः ।**
**यद् रूपं शावलेयस्य बाहुलेयस्य नास्ति तत् ।।१४१।।**
**अतत्कार्यपरावृत्तिर्द्वयोरपि च विद्यते ।**
**अर्थाभेदेन च विना शब्दाभेदो न युज्यते ।।१४२।।[5]**
**तस्मात् तत्कार्यतापीष्टाऽतत्कार्यादेव भिन्नता ।**
**चक्षुरादौ यथारूपविज्ञानैकफले क्वचित् ।।१४३।।**
**अविशेषेण तत्कार्यचोदनासंभवे सति ।**
**सकृत् सर्वप्रतीत्यर्थं कश्चित् साङ्केतिकीं श्रुतिम् ।।१४४।।**

---

98b तेन[7] यद्यपि बुद्धिपरिवर्त्तिनो भावाः सामान्यरूपास्तथापि तेष्वेव बहुषु बहिरिव परिस्फुरत्स्वेकः शब्दो निवेश्यते (।) न तु तेषु सर्वेषु भिन्नरूपे सामान्ये स्थिते प्रतिव्यक्ति भिन्नेव श्रुतिः कस्मान्न संकेतितेत्याह। **गौरवे**त्यादि। **गौरवाद्** (सामान्यं)[1] **अशक्तेर्वैफल्याच्च भेदाख्याया** भिन्नायाः श्रुतेः। यद्वा भेदाख्याया भेदकथनस्य। एतच्च वृत्तौ स्पष्टयिष्यामः। **न भावे** वस्तुभू[1]ते सामान्ये समा श्रुतिः कृता। किं कारणं सर्वभावानां **स्वभावस्य** स्वरूपस्य **व्यवस्थिते**रसांकर्यात्।

**यद्रूपं शावलेयस्ये**त्यादिना व्यवस्थितस्वभावत्वमाह। ततो नाव्यतिरिक्तं सामान्यं। व्यतिरिक्तमपि स्वस्मिन् स्वभावेवस्थितं तदपि कथं व्यक्तीनां समानं रूपं। न ह्यन्येनान्ये समाना इत्युक्तं। सास्नाद्याकारप्रत्ययस्य हेतवोऽ**तत्कार्या**स्तेभ्यो **व्यावृ**[2]**त्ति**र्व्यावृत्तः स्वभावः। **द्वयो**रिति शावलेयबाहुलेययोः। तस्मादतत्कार्यव्यावृत्तिभिन्नानामप्यविरुद्धेति। सैवार्थाभेदः शब्दाभेदस्य कारणमेष्टव्यं यतो**र्थादभेदेन विना शब्दाभेदो न युज्यते**। कथन्तर्हि बहुष्वेका श्रुतिरर्थाभेद एव प्रवृत्तेरित्यत आह। **तस्मादि**त्यादि। यापीयन्**तत्कार्यतै**ककार्य**तेष्टा** यस्याः परिचोदनार्थम्बहुष्वेका श्रुतिरित्यु[3]क्तं साप्य**तत्कार्यादेव भिन्नता** द्रष्टव्या। बहूनामतत्कार्यादेव भिन्नः स्वभावो द्रष्टव्यः।

न तु तत्कार्यता नाम सामान्यमस्ति। विनापि च सामान्ये यथा विलक्षणेष्वेकशब्दनिवेशो न विरुद्धस्तथा दर्शयन्नाह। **चक्षुरादावि**त्यादि। रूपविज्ञानमेकं फलं यस्य चक्षुरादेरितिविग्रहः। **क्वचि**दिति यस्मिन् काले विज्ञानजननसमर्थास्ते चोदयितु[4]मिष्टाः। अथवा क्वचित् काले सांकेतिकीं श्रुतिं कुर्यादिति सम्बन्धः। किमर्थं कुर्यादित्याह। **अविशेषेण** सामान्येन। **तत्कार्यस्य** चक्षुर्विज्ञानैककार्यस्य कारणकलापस्य परेभ्यः प्रकाशन**सम्भवे सति**। यदा तु चक्षुरादीनामसाधारण-

---

[1] In the margin.

**कुर्याद्दृतेऽपि तद् रूपं सामान्याद् व्यतिरेकिणः ।**

**अभिन्नमर्थमन्तरेण यथा बहुषु एका श्रुतिः, तेषां एकवृत्तेरन्यत्र प्रत्ययाजननात् । अप्रत्यासत्ति[7]के च प्रत्ययजननेऽतिप्रसंगात्, तेषु च एक श्रुतिप्रवृत्तौ** 459b **अर्थाभाव एकार्थनियोगाभावात्, भिन्नस्वभावानां पृथक् नियोगे यथाचोदितानां विभा[1]गापरिज्ञानात् इति । तस्यापि एकमेवेति लोकेन शब्दो निवेशनीयो ।**

---

कार्यत्वं चोद्यते। तदा नैका श्रुतिस्तेषु संकेत्यन इत्यर्थः। **सकृदे**ककालं **सर्वस्य** कारणकलापस्य **प्रतीत्य[5]र्थं । ऋतेपी**त्यादि। तेषां चक्षुरादीनान्**तद्रूपसामान्य**स्येत्येककार्यत्वलक्षणस्य सामान्यस्य व्यतिरिक्तस्याभावेपीत्यर्थः। सत्तैवं तेषां सामान्यमिति चेन्न तस्या अविशेषात् सर्वदा सर्वत्र चक्षुर्विज्ञानप्रसङ्गात्। **अभिन्नमर्थमन्तरे**णेति सामान्यम्वस्तुभूतम्विना। **बहुषु** शावलेयादिषु। **तेषामिति** शावलेयादिभेदानां। यदि तेषां सामान्यं स्या[6]त्तदा तत्र सामान्ये शब्दनिवेशात् सर्वत्र भेदे निवेशितः स्यात्। एकन्तु सामान्यं विना बहुष्वेकशब्दसन्निवेशो न युक्तः। ततश्चासौ शब्दः संकेत्यमान एकत्रैव भेदे संकेतितः स्यात्। तथा **चैकवृत्तेरे**कत्र भेदे कृतसन्निवेशस्यान्यत्र भेदे विलक्षणे प्र**त्ययाजननात्**। द्वितीया गोव्यक्तिस्ततः शब्दाद् गौरित्येवं न प्रतीयेत । तत्र प्रत्यासत्तिनि[7]बन्धनस्य सामान्यस्याभावात्। स्वभावानुगमा- 99a भावेपि शावलेये निवेशितोऽप्रत्यासन्ने बाहुलेये प्रत्ययं जनयिष्यतीति चेदाह। **अप्रत्यासत्तिके** चेत्यादि। **अतिप्रसङ्गात्**। गोशब्दादश्वेपि प्रतीतिः स्यात्। एवन्तावदेकं सामान्यं विना बहुष्वेकशब्दनिवेशाभाव उक्तः।

अभ्युपगम्य वैफल्यमाह। **तेषु चे**त्यादि। तथा हि बहुष्वेका श्रुतिर्निवेश्यतेऽनेकवृत्ति[1]मेकमर्थं प्रतिपादयितुं। तानेव वा भेदान् असंकरेण। तत्राद्यस्याभावमाह। **एकार्थनियोगाभावा**दिति। यद्येकस्मिन्नर्थे शब्दस्य नियोगः स्यात् तदा भवेदेकार्थप्रतिपादनं। द्वितीयाभावमाह। **भिन्ने**त्यादि। **भिन्नस्वभावाना**मसंकीर्णानां शावलेयादीनां प्रतिपत्तय इत्यध्याहारः। **पृथ**गित्येकैकस्मिन् भेदे। एकस्य शब्दस्य **नियोगे**। संके[2]ते कृते। पश्चाद् व्यवहारकाले। **यथाचोदितानामि**त्यसंकरेण प्रतिपत्त्यर्थं चोदितानां **विभागापरिज्ञानात्** तस्मान्न तेषु शब्दनियोगः फलवान्। एवं हि स्वलक्षणेषु पृथक् पृथकछब्दनियोगः फलवान्भवति।

यदि तस्माच्छब्दादसंकरेण स्वलक्षणानि प्रतीयेरन्निति (।) क्रियते च बहुष्वेकशब्दनियोगस्तस्माद् वस्तुभूतेन सामान्येन भाव्यमित्यभिप्रायः।[3]

**तस्यापीत्या**चार्यः। एकम्वस्तु सामान्यमस्तीत्येव कृत्वान्तरेणापि प्रयोजनं। **लोकेन शब्दो निवेशनीय** इत्येको विकल्पः। द्वितीयमाह। **तद्वे**त्यादि। तदिति

**तद् वा वस्तुशक्त्यैव एकां श्रुतिं उत्थापयतीति चेत्। नास्ति तद्। किं तर्हि केनचित्[2] प्रयोजनेन कञ्चिच्छब्दं निवेशयेत्। तत्र चेद् एकत्रानेकं उपयुज्येत। तद्धि तत्रावश्यमेकेनैव शब्देन चोदयितुं युक्तम्। तस्य पृथक् पृथक् चोदने गौरवं स्यात्। न चास्य अनन्यसाधारणं रूपं चोदयितुं[3] अशक्यं, अत्र च न गौरवं वैफल्यं वा केवलमनेन तत्र तेऽर्थाः चोदनीयाः। त एकेन वा शब्देन चोद्येरन् बहुभिर्वेति स्वातंत्र्यमत्र वक्तुरिति चेत् इयमेका श्रुतिर्बहुषु वक्तुरभिप्राय(वशात्) प्रवर्तमाना नोपालम्भमर्हति। न चेयमशक्यप्रवर्त्तना, इच्छाधीनत्वात्।**

---

सामान्यं **वस्तुशक्त्यैवे**ति। पुरुषव्यापारमनपेक्ष्य। एकां **श्रुतिं** ध्वनयत्यु**त्थापयति। नास्त्येव तद्** द्वयमपि। अन्तरेण प्रयोजनं पुरुषव्यापारञ्च प्रयोगाभावात्। तदेव **किन्तर्ही**त्या[4]दिनाह। केनचित्प्रयोजननेति। एभ्यः शब्देभ्यो व्यवहारे। तदतत्साधनमर्थं ज्ञात्वा प्रतिपद्येतेति। अनेन प्रथमविकल्पाभावमाह।

निर्देश्यन्त इत्यनेन द्वितीयस्य। निर्देश्यन्ते संकेत्यन्ते व्यवहर्त्तुकामैरित्यध्याहारः। **तत्रै**तस्मिन् न्यायेऽ**नेकं** कारण**मेकत्र** कार्ये **उपयुज्येत** व्याप्रियेत। **तद्वि**त्यनेकं। कुतः कारणकलापात् तदु[5]त्पद्यत इत्येव। **तत्रै**तस्मिन् कार्ये व्यवहर्त्तुका**मैरवश्य**न्तच्चानेकङ्कारणमतत्कार्यव्यावृत्तिलक्षणमेककार्यतामाश्रित्यै**केनैव शब्देन चोदयितुं युक्तं**। अनेकेन चोदने दोषमाह। **तस्ये**त्यादि। **पृथक् पृथ**गिति भिन्नैः शब्दैः। एतच्च स्वलक्षणशब्दनिवेशमभ्युपगम्योक्तम् (।)

एतदेव न सम्भवतीत्याह। **न चे**त्यादि। **अस्य** वस्तुनः। **अ[6]नन्यसाधारणं रूप**मिति। नान्यसाधारणमनन्यसाधारणं स्वलक्षणमित्यर्थः। **नाप्यस्ये**त्यनेकशब्दनिवेशनस्य।

**एतच्च गौरवाशक्तिवैफल्या**दित्यस्य यथाक्रमं विवरणं। कस्माद् वैफल्यमिति चेदाह। **केवल**मित्यादि। **अनेन** प्रयोक्त्रा तत्रैतस्मिन् कार्ये। **तेर्थाः** कारणभूता99b **श्चोदनीया** इत्येतावत् प्रयोजनं।[7] **ते** तु कारणभूताः पदार्था **एकेन वा शब्देन चोद्येरन् बहुभिर्वेति स्वातन्त्र्यमत्र** चोदने **वक्तुः**। यत एवन्तदिति तस्मादि**यमेका श्रुति**र्बहुषु वाच्येषु **वक्तुरभिप्राय**वशाद् हेतोः **प्रवर्त्तमाना नोप(ा)लम्भमर्हति। बहुष्वेका श्रुतिर्न** शक्या प्रवर्त्तयितुमिति चेदाह। **न चेय**मित्यादि। इयमेका श्रुतिः। **अशक्यं प्रवर्त्तन**मयस्या इति विग्रहः।[1] कस्मान्नाशक्यप्रवर्त्तनेत्याह। इच्छाधीनत्वाद् इच्छाया। अधीनमशक्यप्रवर्त्तनं। **यदि ह्येकत्रापी**त्यादि। तथा हीच्छयैव तत्र परपरिकल्पिते सामान्ये न वस्तुस्थित्यैव एकस्याः श्रुतेः प्रवत्तिः (।) किन्तर्हि-

**यदि हि एकत्राऽपि प्रयोक्तुरिच्छा न भवेत्, कथं प्रवर्त्तेत[5], इच्छायां वा बहुष्वपि व्याघातात् शक्येत। प्रयोजनाभावात् नात्र निवेशनमिति चेत्। प्रयोजनं हि अतत्प्रयोजनेभ्यो भवेन भिन्नेषु एकस्माद् प्रतीतिः[6] इत्युक्तं प्राक्, न पुनः स्वभावस्यैकत्वात्।**

**यथास्वं व्यवस्थितस्वभावानां अन्योन्यरूपासंश्लेषात् कथं भिन्नेषु एकस्वभावनिमित्तः शब्दो[7] भवेदिति उक्तं पुरस्तात्।** 460a

**अतत्प्रयोजनेभ्यो व्यावृतिस्तु भिन्नानामप्यविरुद्धेति प्रयोजनाभेदः शब्दाभेदस्य कारणं भवतु। तेनेमे तत्प्र[1]योजनाः, तथा चेत् अतत्प्रयोजनेभ्यो भिन्ना एवोक्ताः। न पुनरेषामन्या तत्कार्यता, अन्यत्रान्यतो भेदात्। यथा चक्षूरूपप्रति-**

---

वक्तुरिच्छावशात्। तथा **न** यदि **प्रयोक्तुरिच्छा भवेत्। कथ**मियमेका श्रुतिरेकत्रापि **प्रवर्त्तेत**। नैवेत्यभिप्रायः। तथैक[2]त्रापि प्रवर्त्तयितुमिच्छैव कारणं। न वस्तु-शक्ति(:।) तदा **बहुष्वपि** न कश्चिद् **व्याघात** इत्याह। **इच्छायां** वेत्यादि। एक त्रापि प्रवर्त्तयितुमिच्छायां कारणत्वेन कल्प्यमानायां। एनामेकां श्रुतिं। **प्रयोजना-भावादित्यादि**। न ह्येकम्वस्तुविना **बहुष्वे**कशब्दनिवेशनं फलवत्। **उक्तं प्राक्**। किमुक्तमित्याह। **भिन्नेष्वित्यादि**। **भिन्नेषु** शावलेयादिभेदे[3]ष्वे**कस्माद्** गोशब्दात् प्रतीतिर**तत्प्रयोजनेभ्यो भेदेन**। तद्गोभेदसाध्यं वाहदोहादिकं कार्यं प्रयोजनं न भवति येषामश्वादीनान्तेभ्यो भेदेनेति। किं पुनर्वस्तुभूतमेवैकत्वं न चोद्यत इत्यत आह। **न पुनः स्वभावस्यैकत्वान्न** पुनर्वस्तुभूतस्य सामान्यस्यैकत्वाद् भिन्नेष्वेका श्रुतिः। तस्यैव सामान्यव्यतिरिक्तस्याव्यतिरिक्तस्य चायो[4]गात्।(।१३९॥)

भवतु नाम सामान्यं व्यतिरिक्तन्तदपि तस्मिन् स्वभावे व्यवस्थितममिश्रमेव। तदेवाह। **यथास्वमि**त्यादि। यस्य यल्लक्षणन्तेन **व्यवस्थितस्वभावानामन्योन्य-रूपासंश्लेषात् कथमेकनिमित्तः** सामान्यनिबन्धनः **शब्दो भिन्नेषु भवेत्**। नैवेत्यभि-प्रायः। न ह्यन्येनान्ये समाना भवन्ति। एतच्चोक्तं प्राक्। **सर्वे भावाः स्वभावेन स्वस्वभावव्यवस्थि**[5]तेरित्यत्र(१।४२) प्रस्तावे।

अन्यापोहवादिनस्त्वयमदोष इत्याह। **अतत्प्रयोजने**त्या**दि**। अतत्प्रयोजनेभ्यो **व्यावृत्तिस्तु भिन्नानामप्यविरुद्धेति** कृत्वा **स** एवातत्प्रयोजनेभ्यो भेदस्**तत्प्रयोजना-**नाम**भेदस्त**द्व्यावृत्तेः सर्वत्र भावात्। **शब्दाभेदस्य कारणम्भवतु**। यतश्च न कथं-चिद् वस्तुभूतं सामान्यं घटते। **तेनेमे** गोभेदास्तत**प्रयोज**[6]**ना** वाहदोहप्रयोजना इति यदुक्तन्तत्। अतत्**प्रयोजनेभ्यो**ऽश्वादिभ्यो **भिन्ना एवोक्ताः**।(।१४०॥)

**न पुनरेषामन्या तत्कार्यतान्य**त्रान्यतो भेदात्। अन्यव्यावृत्त एव स्वभाव

**भासमनोव्यापाराणां[2] वा आत्मेन्द्रियमनोर्थसन्निकर्षेषु रूपविज्ञानैककार्याणां सामान्यकार्यचोदनासम्भवे कुतो रूपविज्ञानमिति व्यवहारलाघ[3]वार्थं गौरवे कश्चित् साङ्केतिको रूपविज्ञानहेतुः सरः शरो वेत्येवं श्रुतिं निवेशयेत्। अपि नाम तद्धेतूनां सर्वेषां सकृत् यथा प्रतिपत्तिः स्यात्। न[4] चात्रानुगामिना रूपेण किंचिदपि। अतदर्थेभ्यस्तेभ्यो भिन्ना एव व्यावृत्तिः। समूहसन्तानावस्थाविशेषशब्दाः समस्ता अपि तथाकाराः[5] किञ्चित् कार्यं तेषां तत्र विशेषाभावात् अपार्थिका विशेषचोदनेति सकृत् सर्वेषां नियोजनार्थं**

---

एषामभेद इति यावत्। एतेन **तत्कार्यता**पीत्यादि का रि का भागो व्याख्यातः। (।१४१।।)

यथेत्यादिना चक्षुरादौ यथा रूपविज्ञानैकफल इत्यादि व्याचष्टे। **आत्मेन्द्रियमनो[7]र्थसन्निक**र्षेष्विति परप्रसिद्ध्योक्तं। **रूपविज्ञानमेकं कार्यं** येषामिति विग्रहः। (।१४२।।)तद्रूपविज्ञानं कार्यं येषान्तानि तत्कार्याणि तेषां **सामान्यम**विशेषेणैक**कार्य**करणसामर्थ्यन्तस्य **चोदना** प्रकाशना। तस्याः **सम्भवे** सति (।) केन पुनः प्रस्तावेन चोदनासम्भव इत्याह। **कुतो रूपविज्ञान**मित्यविशेषेण सामग्रीगते प्रश्ने सतीत्यर्थः।[1] **व्यवहारलाघवार्थ**मेकेन शब्देन बहूनां प्रतिपादनार्थं **रूपविज्ञानस्य हेतु**श्चक्षुरादिकलापः सरः शरो **वेत्येवं श्रुतिन्निवेशये**दिति सम्बन्धः।

100a

**अपि नामे**त्यादिना व्यवहारलाघवमेव व्याचष्टे। **तद्धेतूनां** चक्षुर्विज्ञानहेतूनां। **न चात्रेति** चक्षुरादौ। येना**नुगामिना रूपेणै**कं चक्षुर्विज्ञानं जनयन्ति। तथाभूतं सामान्यञ्च[2]क्षुरादीनान्नास्ति (।) सत्ता विद्यत इति चेत्। तस्यास्तर्हि सर्वत्राविशेषात् सर्वत्र चक्षुरादिविज्ञानं स्यात्। न च सम्बन्धिभेदात् सत्ताया भेदो नित्यत्वेनानाधेयातिशयत्वात्। केवलन्तदर्थतया रूपविज्ञानैककार्यतया भावाश्चक्षुरादयः। **अतदर्थेभ्यो** रूपविज्ञानाजनकेभ्यो **भिन्ना** इति कृत्वा भेद **एवातत्कार्येभ्यो व्यावृ**त्तिरेव। एषां चक्षुरादीनामभेदः सर्वेषामतत्कार्यव्यावृत्तेस्तुल्यत्वात्। यथा चक्षुरादीनामभेदः सर्वेषामतत्कार्यव्यावृत्तेस्तुल्यत्वात्। यथा चक्षूरूपादिष्वेकं सामान्यं विनाप्येककार्यत्वख्यापनायैकः शब्दो निवेश्यते। एवंजातीयाः सर्व इत्यादि। समूहस्य सन्तानस्यावस्थाविशेषस्य च वाचकाः शब्दाः **समूहसन्तानावस्थाविशेषशब्दाः।** तत्र समूहाभिधायिनं शब्दमधिकृत्याह। **ये स[4]मस्ता** इत्यादि। **ये** रूपरसगन्धादयस्समस्ताः **किञ्चि**देकमुदकाद्याहरणादि **कार्यं। तेषां** रूपादीनां। **तत्र** कार्ये कारणतया **विशेषाभावात्।** सर्वेषां ह्येकं कार्यमिति कृत्वा तेनैककार्यत्वेन विशेषाभाव उच्यते। न तु स्वलक्षणस्याविशेषात्।

तेषामेककार्यकरणशक्तिख्यापनमात्रे कर्त्तव्येऽ**पार्थिका विशेषचोद[5]ना।** प्रति-

**घट इत्येकं शब्दं तेषु प्रयुंक्ते लोकः। तेऽपि सजातीयादन्यतश्च भेदाविशेषेऽपि तत्प्रयोजनाङ्गतया तदन्येभ्यो भिद्यन्त इति भेदात् तस्मात् अविशेषेण प्रतीयन्त[7]। तत्र घटस्य रूपादय इत्यपि घटस्वभावा रूपादयः। उदकाहरण-** 460b **विशेषादिकार्यसमर्था इति। सामान्यकार्यमात्रसाधने प्रसिद्धनात्मना वा रूपा-दिशब्दैः प्रसिद्धा विशिष्टकार्यसाधनभूताख्यविशिष्टाः ते च एवमुच्यन्तेस्य। न पुनरत्र यथावर्णितलक्षणं द्रव्यं अन्यद् किञ्चिदपि। तस्य तादृशस्या-**

---

रूपादिभिन्नेन शब्देन चोदनानिष्फलेति कृत्वा **सकृदेककालं सर्वेषां** क्वचित् कार्ये नियोजनार्थं रूपादिविशेषेषूदकधारणादिकार्यसमेषु **घट इत्येकं शब्दं प्रयुंक्ते**ऽयं **लोक** इति व्यवहर्त्ता। (।१४३॥)

ननु भिन्ना एव रूपादयः कथमेकस्माद् घटशब्दाद् अभेदेन प्रतीयन्त इति चेदाह। **तेपी**त्यादि। सजातीया[6]द् रूपादन्**यतश्च** रसादेर्**भेदाविशेषेपि। तत्प्रया-नाङ्गतया।** विशिष्टोदकाद्याहरणकार्याङ्गतया। **तदन्येभ्य** इति तत्कार्यकरणा-समर्थेभ्यः पटादिभ्यो **भिद्यन्त इति** भेद एवैषामभेदस्ततोऽ**भेदात्**। तस्मादभेदा**द-विशेषेण**ैव सामान्येनैवैकस्माद् घटशब्दात् सर्वे रूपादयः **प्रतीयन्ते।**

यदि रू[7]पादय एव केवला घटो न तु तद्व्यतिरिक्तं द्रव्यं (।) कथन्तर्हि घटस्य 100b रूपादय इति व्यतिरेक इति चेदाह। **तत्रे**त्यादि। **घटस्य रूपादय इत्यपि** यो व्यतिरेकस्तस्यायमर्थो **घटस्वभावा रूपादयो** न पटादिस्वभावा इति।

एतदेव व्याचष्टे। **उदके**त्यादि। **उदकाहारण**स्य विशेषो घटादन्येनासा-ध्यत्वं। आदिशब्दादन्यस्यापि घट[1]साध्यस्य **कार्य**स्य परिग्रहः। तस्मिन् **कार्ये समर्थाः** सप्तमीति योगविभागात्समासः। अयमत्रार्थः (।) रूपादिशब्दा रूपादीन् रूपसाध्यकार्यमात्रशक्तियुक्तानविशेषेण प्रतिपादयन्ति। घटशब्दस्तु विशिष्टकार्य-शक्तियोगेन पटादिस्वभावेभ्योपि रूपादिभ्यो भेदेन विशिष्टान् रूपादीनाह। अतो घटस्य रूपादय इति शब्दद्वयव्यापा[2]रेण सामान्यविशेषाकारबुद्ध्युत्पत्तेः सामान्य-विशेषभावो व्यतिरेकविमतिश्च प्रयुज्यत इति। एतमेव **सामान्ये**त्यादिनाह। **सामान्यकार्यं** रूपादिमात्रसाध्यन्तस्य सिद्धिः **साधनन्तस्मिन् प्रसिद्धेनात्मना** स्वभा-वेन। इत्थंभूतलक्षणा तृतीया। हेतौ वा। इत्थंभूतेन रूपेण हेतुना वा **रूपादि-शब्दैः** करणभूतैः **प्रसिद्धास्सन्तः**[3] **विशिष्टं कार्यं** घटसाध्यं घटसाध्यमेवोदकाहर-णादि। तस्य **साधनं** साध्यतेनेनेति कृत्वा। तथाभूता **आख्या** संज्ञा **यस्य** स तथा तेन विशिष्टाः। त इति रूपादय **एवमुच्यन्त** इति।

**न पुनरत्र** रूपादिसंहतौ ह्यत्र वा घट इति व्यवहारे **यथावर्ण्णितलक्षणमिति**

**नुपल[2]म्भात् । एकवचनग्रहणं तु एकशक्तिसूचनार्थं संकेतपरतंत्रं वा। तथा हेतुफलविशेषभूताः किंचिद् एकं साधयन्ति साध्यन्ते च तेऽपि सकृत्[3] प्रतीत्यर्थं ब्रीह्यादिशब्दैः कृतसंकेताः पूर्ववत् कथ्यन्ते।**

**यऽपि पृथक् समस्ता वा क्वचित् सकृदेव प्रत्यायनार्थं उपयुज्यन्ते, तेऽव-**

---

रूपादिव्यतिरिक्त**तन्द्रव्यं। तस्यावयविनस्तादृशस्ये**ति रूपादिव्यतिरि[4]क्तस्य। उपलब्धिलक्षणप्राप्तश्चावयवी परैरिष्टो दार्शनं स्पार्शनं द्रव्यमिति वचनात्। तेनोपलब्धिलक्षणप्राप्तत्वेनाभ्युपगतस्य रूपादिव्यतिरेकेणा**नुपलम्भादि**ति वाक्यार्थः। यथावान्तरेणाप्यवयविनं परमाणव एव प्रत्यक्षस्य विषयस्तथा द्वितीये परिच्छेदे प्रतिपादयिष्यते।

यदि रूपादय एव संहता घटः क[5]थन्तर्हि बहुषु घट इत्येकवचनमिति चेदाह। **एकवचनमि**त्यादि। यथा बहुष्वेकः शब्द **एकशक्तिसूचना**र्थस्तथैकवचनमपि। तेषां रूपादीना**मेक**स्मिन्नुदकाहरणकार्ये या **शक्ति**स्तस्याः **सूचनार्थं**। एककार्यकर्तृत्वेन तेष्वेकत्वमारोप्यैकवचनमित्यर्थः। न पुनस्तेष्वेका शक्तिर्विद्यते। अनपेक्षितबाह्यार्थमकवचनं **सं[6]केतपरतन्त्रम्वा**। एतच्च "**येषां वस्तुवशा वाच**" (१।६६) इत्यादिना प्रतिपादितं। सन्तानाभिधायिनः शब्दानधिकृत्याह। **तथे**त्यादि। **हेतु**श्च **फलं** च हेतुफले। तयो**र्विशेष** उपादानोपादेयभावेनैकसन्तान......नाश्रयत्वं। तम्**भूताः** प्राप्ताः प्राप्तिवचनो भवतिः सकर्मकः। साधनं कृतेति द्वितीयातत्पुरुषः। हेतुफल-**विशेषो**[7] वा भूतो निष्पन्नो येषामिति बहुव्रीहिः। आहितादेराकृतिगणत्वाद् भूतशब्दस्य परनिपातः। **किंचिदेकं साधयन्तीति**। यथांकुरनाडपत्रादयः फलमेकं। **साध्यन्ते चै**केन। यथा त एवोपादानभूतेन बीजेन। **तेप्य**कुरादयो नैकक्षणात्मकाः **सकृत्प्रतीत्यर्थः**। तेनैककार्यत्वेनैककारणत्वेन वा साम्येन **ब्रीह्यादिशब्दैः** सन्तानाभिधायिभिः **कृतसंकेताः** सं[1]केतकाले। पश्चाद् व्यवहारकाले **कथ्यन्ते** व्यवहारलाघवार्थं। अभेदेन प्रबन्धजिज्ञासायां बीजांकुरादिभेदेनानेकशब्दप्रयोगस्य वैफल्यात्। आदिग्रहणेन मनुष्यादिशब्दग्रहणं। तैरपि बालकुमारादिभेदभिन्नस्य प्रबन्धस्याभिधानात्।

101 a

ननु ब्रीह्यादिशब्दा अपि समुदायशब्दा एव रूपादिसमुदायाभिधायित्वात्।

सत्यं। किन्तु हेतुफलविशेष[2]फलप्रबन्धाभिधानादेवमुच्यते (।) तथा समुदायशब्दोनेकसमुदायापेक्षया जातिशब्दो भवत्येवमवस्थाशब्दोपि (।) केवलं विशिष्टार्थविवक्षया कश्चिच्छब्द इत्युच्यत इत्यदोषः। यथा च घटस्य रूपादयः घट इति चैकवचनं येन निबन्धनेनोक्तं। तथा ब्रीहे रूपादयो ब्रीहिरिति नैकवचनं द्रष्टव्यमत एवाह। **पूर्ववद्वाच्य**मिति। अवस्थाशब्दान[3]धिकृत्याह। **येपी**त्यादि। येपि नीला-

**स्थाविशेषवाचिनः शब्दाः[4] सनिदर्शनाः सप्रतिघा इति तदन्येभ्यो भेदसामान्येन निर्दिश्यन्ते। यथैककार्याः तत्कार्यचोदनायाँ तदन्यस्मात् घटादेर्भेदेन शब्दैः कृतसमयाः[5]। तथा कारणापेक्षया अनेकोऽपि एकेन व्यवहारार्थमेव। यथा शवलाया अपत्यानि बहुलायाश्चापत्यानि। शब्दः प्रयत्नानन्तरीयकः कृतको वेति।**

---

दिपरमाणवः **पृथगिति** नीलपीतादयः परस्परानपेक्षाः **समस्ता** वेति परस्परसहिताः। **क्वचिदिति** चक्षुर्विज्ञाने स्वदेशे परस्योत्पत्तिप्रतिबन्धे वा **सकृदेव प्रत्यायनार्थं**। एकस्माच्छब्दाद् बहूनां निश्चयार्थं। तत्र ये चक्षुर्विज्ञाने **उपयुज्यन्ते। तेवस्थाविशेषवाचिनः सनिदर्शना** इत्युच्यन्ते। ये[4] स्वदेशे परस्योत्पत्तिं प्रतिघ्नन्ति। ते **सप्रतिघा** इति।

ननु नीलपीतादयोऽत्यन्तभिन्नास्ते कथमेकेन सनिदर्शनादिशब्देनोच्यन्त इत्यत आह।

**तदन्येभ्यो भेदसामान्येनेति**। तदन्येभ्योऽनिदर्शनाप्रतिघेभ्यो यो भेदस्स एव तेषां सामान्यं सर्वेषान्ततो व्यावृत्तत्वात्। तेन हेतुना। सनिदर्शनादिशब्दा अपि परमाणुसमुदया[5]ऽभिधानात् समुदायशब्दा एवेति चेत् (।) न। एकस्यापि परमाणोः सप्रतिघादिशब्दैरभिधानात्।

कार्यद्वारेण शब्दप्रवृत्तिमुक्त्वा कारणद्वारेणाह। **यथैककार्या** रूपादयस्तत्**कार्यचोदनायां**। तदुदकधारणाद्येकं कार्यं यस्य रूपादिसामर्थ्यस्य तस्य चोदनायामेकशक्तिचोदनायामित्यर्थः। **तदन्यस्मात् घटादेर्भेदेन** घटादिशब्दैः। आदि[6]ग्रहणाद् व्रीह्यादिपरिग्रहः। **कृतसमयाः** ख्याप्यन्त इति प्रकृतं। तथा **कारणापेक्षयाप्यनेकोर्थः एकेन** शब्देन कृतसमयः ख्याप्यत इति वचनपरिणामेन सम्बन्धः **व्यवहारार्थमेव** लाघवेनेत्यर्थाद् द्रष्टव्यं। **यथा शवलाया** गोरपत्यानि सर्वाण्येवैककारणत्वेन शावलेयशब्देनोच्यन्ते **बहुलायाश्चापत्यानि** बाहुलेयशब्देन।[7] यावांश्च पुरुषप्रयत्नेन 101b कारणेन जनितः शब्दः सर्वः समानकारणजन्यत्वेन **प्रयत्नानन्तरीयकः** कथ्यते। करिष्यामीति चेतना प्रयत्नः। तस्यानन्तरमव्यवधानन्तत्र भव इति ग्रहादेराकृतिगणत्वाच्छः। देशग्रहणन्तत्र न स्मर्यते। तस्य स्वार्थिकः कन्। एतच्च कारणविशेषापेक्षयोक्तं।

कारणमात्राश्रयेणाह। **कृतको वेति**। कारणा[1]यत्तजन्मनः प्रयत्नानन्तरीयकस्यान्यस्य च सर्वस्य कृतक इत्यभिधानात्।

एवन्तावद्विधिमुखेनोक्तं।

**तथा तत्कार्यप्रतिषेधेनाचाक्षुषः[6] शब्दः। अनित्योऽनात्म इति च। तत्कारणप्रतिषेधेनास्वामिकः शून्य इति। एवमन्यदपि यथायोगम्। शून्य-** 461b **नित्यादिशब्दानां बुद्धौ[7] यथाकथितं समीहिताकारं विकल्प्य तद्व्यवच्छेदेन व्यपदेशः क्रियते। सर्वे हि शब्दार्था बुद्धिसमीहा निर्दिष्टविभक्तित्वात्।**

---

प्रतिषेधमुखेनाह। **तथे**त्यादि। तस्य चाक्षुपस्य नीलादेर्यत् **कार्य**ञ्चक्षुर्विज्ञानन्तस्य **प्रतिषेधेनाचाक्षुषः शब्दः**। न समर्थञ्चक्षुर्विज्ञानं प्रतीत्यैवमचाक्षुपशब्देन सामान्येनोच्यते। अनित्यशब्दोपि नित्यव्यवच्छेदेन व्यवस्था[2]प्यमानः। तत्कार्यप्रतिषेधेनैव। तथा हि नित्यं परैर्वस्त्वेवेष्टन्तच्चासाध्यसाधनभूतं व्यवहारपथं नावतरतीति साध्यसाधनं चाङ्गीकर्तव्यं। नित्यकार्यप्रतिषेधेनानित्यः। आत्मशब्दोपि क्वचित् कार्ये स्वतन्त्रस्य ख्यापनाय कृत इत्यनात्मशब्दोऽतत्कार्यव्यवच्छेदेन स्यात्।

एवं कार्यप्रतिषेधेनाभिधाय कारणप्रतिषेधेनाह। **त**दित्यादि। **त**[3]स्य सस्वामिकस्याशून्यस्य च यत्**कारण**न्तस्य **प्रतिषेधे**नायं शब्दादिको भावो**स्वामिकः शून्य इति** व्यवहारार्थं ख्याप्यत इति सम्बन्धः। तथा हि स्वतन्त्रेणात्मादिना योधिष्ठितस्स सस्वामिकः परैरिष्यते। एवमशून्योपि तथाभूतेनाधिष्ठात्राधिष्ठितत्वादेवाधिष्ठिता चाधिष्ठातव्यस्वी**करणमन्य**थाधिष्ठातृत्वायोगात्। तस्मात् सस्वामिकादि[4]शब्दाः कारणद्वारप्रवृत्ताः परेषां। न प्रतिक्षणविशरारुषु भावेषु सामग्रीमात्रप्रतिबद्धेषु व्यवस्थितस्वभावः कश्चिदधिष्ठातास्ति यत्प्रतिबद्धास्संस्काराः प्रवर्त्तन्ते। ततोस्वामिकाः शून्याश्च यथोक्तकारणप्रतिषेधेन व्यवस्थाप्यन्त इति। **एवमन्यद**पीति। दुःखाशून्यानाथाप्रतिशरणादिकमपि। **यथायोग**मिति किंचित्कार्यप्रति[5]षेधेन किंचित्कारणप्रतिषेधेनेत्यर्थः। दुःखाशून्यादिकार्यप्रतिषेधेन सुखशून्यादीनामप्रातिकूल्यकार्यत्वेन व्यवस्थाप्यमानत्वात्। सर्वस्य च संस्कृतस्य विपरिणामधर्मित्वेन प्रतिकूलत्वात्। **अनाथाप्रतिशरणा**दि। कार्यप्रतिषेधेन स्वतन्त्रस्य नाथादेरभावात्। तदेवं कार्यकारणयोर्विधिप्रतिषेधमुखेन चतुष्टयी शब्दानाम्प्र[6]वृत्तिराख्याता भवति।

ननु चाशून्यनित्यादेर्व्यवच्छेद्यस्याभावात् कथं शून्यादिशब्देष्वन्यव्यवच्छेदाभिधानमिति चेदाह। **शून्ये**त्यादि। **यथाकथित**मिति यस्य यादृशी सिद्धान्ताश्रयणकल्पना तया **समीहितो** रचितो शून्यनित्यादीनां य **आकार**स्तं **विकल्प्य** बुद्धावारोप्य 102a **तद्व्यवच्छेदेन** परपरिकल्पिताऽशून्याद्याकारव्यवच्छेदेन शून्यादिव्य[7]**पदेशः क्रियते**। कस्मादित्याह। **बुद्धी**त्यादि। बुद्धेस्समीहा इममर्थमारोपयामीति संकल्पः। तथा स(र्व्वं............) सांकर्यं यस्य शब्दस्य स तथा तद्भावस्तस्मात्। सर्वग्रहणादेतदाह। **यत्रापि** वस्तुभूते......................तीति।

एतदुक्तम्भवति। न वस्तुस्वलक्षणं शब्दैः स्वरूपेण विधीयतेऽपनीयते वा (।)

**अप्रतिपक्षदोषो[1]पक्षेपादिना दुर्मतीनां विस्पन्दितानीति ते (दोषोपक्षेपा) उपेक्षणीया एव। अथापि।**

**एकवृत्तेरनेकोऽपि यद्येकश्रुतिमान् भवेत् ॥१४५॥**

**न केवलं तदन्यस्माद् भेदोऽविशेषादेकशब्देन एककार्या उच्यन्ते। अपि त्वेकवृत्त्या एकशब्देन अनेकः पदार्थ उच्येत को विरोधः स्यात्। उक्तमिह तस्य उपलभ्यतेऽभिमतं अनुपलब्धेरभावः[3] स्यात्, अनुपलभ्यमानतायां वा तद्दर्शनाश्रया व्यपदेशप्रत्यभिज्ञानादयो न भवेयुरिति।**

---

केवलं विकल्पबुद्धिसन्दर्शित एव सर्वो विधिप्रतिषे[1]धव्यवहारः। ततश्चानित्यादिशब्देष्वनित्यादिप्रतिपक्षो नित्यादिर्व्यवच्छेद्यो नास्तीत्य**प्रतिपक्षदोषस्तस्योपक्षेप** उद्भावनं। आदिशब्दान्नास्त्यात्मेति प्रतिषेधे चाप्रतिषेधदोष इत्येवमाद्युपक्षेपश्च (।) **दुर्मतीनाम्** उद्योतकर प्रभृतीनां **विस्पन्दितानि** विजृम्भितान्यसम्बद्धानीति यावत्। न हि न्यायानुगतबुद्धिरसम्बद्धमुद्भावयेत्। अतश्च ते दोषो[2]पक्षेपा **उपेक्षणीया** नावधानार्हा इत्यर्थः।

अथेत्यादि परः। अपिशब्दो भिन्नक्रमः। एकस्य वस्तुनः सामान्यस्य **वृत्तेरपि** कारणादनेको व्यक्तिभेदः। एका श्रुति**रेकश्रुतिः**। सा चाधिका अस्या**नेकस्या**-स्तीत्य**येकश्रुतिमान्**। एकशब्दवाच्यो **यदि भवे**दित्यर्थः। एककार्यत्वेनैकः शब्द-बहुष्वेकेन वा सामान्येनेति न कश्चिद् विशेष इति मन्यते। अत एव व्याचष्टे। न[3] **केवलमित्यादि**। **तदन्यस्मा**दतत्कार्याद्यो भेदस्स एव सर्वेषां तत्कार्याणाम**विशेष**-स्तस्**मादेकशब्देनोच्यन्ते। अपि त्वेकवृत्त्या**प्येकस्य सामान्यस्य वर्त्तनेनाप्य**नेकः पदार्थ** एकशब्देनो**च्येत को विरोधः स्यात्**। यथैककार्यत्वेन बहुष्वेकशब्दप्रवृत्तौ नास्ति विरोधस्तथा वस्तुभूतेनापि सामान्येन। तस्माद् वस्तुभूतसामान्यकल्पनापि युक्तैवेति भावः।

उ[4]**क्त**मित्याचार्यः। तस्य वस्तुभूतस्य सामान्यस्य **उपलभ्यते** रूपेणा**भिमतं**। अभिमतत्वे उपलभ्यत्वं करणत्वेन विवक्षितमिति कर्तृकरणे कृतेत्येव समासः। उपलब्धिलक्षणप्राप्तस्य व्यक्तिव्यतिरेके**णानुपलब्धेरभाव**ः सामान्यस्येति वाक्यार्थः। **अनुपलभ्यमानतायास्वा**ऽङ्गीक्रियमाणाया**न्तद्दर्शनाश्रया** इति सामान्यदर्शनाश्रया **व्यपदे[5]शप्रत्यभिज्ञानादयो न भवेयुरिति। उक्तमिति** सम्बन्धः। बहुष्वेकशब्दो व्यपदेशस्तुल्याकारं ज्ञानं प्रत्यभिज्ञानं। **आदिशब्दात्** सामान्याश्रया व्यक्तौ प्रवृत्तिर्न भवेदित्यादेः परिग्रहः।

न हि स्वयमनुपलभ्यमानमुपलम्भनिबन्धनं व्यपदेशप्रत्यभिज्ञानमन्यत्र प्रवर्त्त-

**अपि च।**

**वृत्तिराधेयता व्यक्तिरिति तस्मिन्न युज्यते।**

**यदेतदेकमनेकत्राश्रये एकां श्रुतिं[4] वर्त्तयति तस्य केयं वृत्तिः? यथा कुण्डे बदराणि वर्त्तन्त इति आश्रय एव स्यात्। तैः प्रकाशनात् व्यक्तिरिति चेत्।**

**नित्यस्यानुपकार्यत्वान्नाधारः;**

**न ह्याधारः, अनुपकार्यत्वा[5]त्। नित्यं हि सामान्यमिष्यतेऽनित्यत्वेऽपरापरोत्पत्तेरनेकत्वात्, भेदेष्विवैकप्रत्ययायोगात्। नित्यस्य च किंकुर्वाण आश्रयः स्यात्? तस्य तत्र समवायादाश्रयश्चेत् कोयं समवायो नाम। अपृथक्-**

---

यति। न भवेयुरित्यादीन्यनेन चादिशब्देनान्यस्यापि पूर्वोक्तस्य दोषस्य ग्रह[6]णं। **न ह्यन्येनान्ये** समानानामतद्वन्तो नाम स्युः(।)तथा न जातिर्वाहदोहादावुपयुज्यत इत्यादि। अनेनैतदाह (।) जातिकल्पनायाम्बाधकं प्रमाणमस्ति। ततो न तन्निबन्धनो व्यपदेशादिः। एककार्यत्वे तु विरोधाभावात् तत्कृतमेव व्यपदेशप्रत्यभिज्ञानादिकं युक्तमिति। दूषणान्तरमप्याह। **अपि चे**त्यादि। वस्तुभूते सामान्यमिच्छता

102b स्वा[7]श्रये नैकस्मिंस्तस्य प्रवृत्तिरेष्टव्या। न हि तत्रावर्त्तमानमाश्रये व्यपदेशादिकारणं युक्तं। सा च सामान्यस्य स्वाश्रये **प्रवृत्तिराधेयता** वा भवेत्। तद्बलेनावस्थानात्। आश्रयबलेनोपलब्धि**र्व्यक्तिः** सा वा वृत्तिर्भवेत्। एतद् द्वयमपि **तस्मि**न्सामान्ये **न युज्यते**। (।१४४-४५।।)

**यदेत**दित्यादिना व्याचष्टे। **यदेतदेक**मिति वस्तुभूतं सामान्य**मनेकत्राश्रये** वर्त्तमान**मेकां श्रुतिं[1]** वर्त्तयति (।) तस्य सामान्यस्य स्वाश्रये **केयं वृत्ति**रिति प्रश्नयित्वा स्वयमेव विकल्पद्वयमाह। **आधेयता चे**त्यादि। अथवा किंशब्दः प्रतिक्षेपे (।) **केयं वृत्तिर्न** काचिदित्यर्थः। तथा हि वृत्तेः स्वा**श्रये** आधेयता वा **स्यात्**। **यथा कुण्डे** आधारे **बदराणि वर्त्तन्त** इति। व्यक्तिर्वा तस्य सामान्यस्याश्र**ये** वृत्तिः **स्यात्** **तै**राश्रयैर्व्यक्तेः **प्रकाशनात्**। तत्र यद्याधेयता वृत्तिरिष्यते।[2] तदा व्यक्तयस्तदाधारत्वेनैष्टव्याः। नित्यं च सामान्यमभ्युपगतं व्यक्त्युत्पत्तेः पूर्व्वन्तदनाधेयन्ततो **नित्यस्या**श्रयै**रनुपकार्यत्वा**द्धेतोराश्रयाभिमता व्यक्तयो **नाधारः**।

**नित्यं** हीत्यादिना व्याचष्टे। अथ नित्यं नेष्यते तदाप्य**नित्यत्वेऽपरापरोत्पत्ते**रन्यस्यान्यस्योत्पत्तेरनेकं सामान्य**मनेकत्वात्** कारणाद् **भेदेष्विव** भेदवत् तस्मिन् सामान्ये **एकप्रत्ययायोगा**देक[3]स्य ज्ञानस्यायोगात् कारणात्। **नित्यं सामान्यमिष्यत** इत्यनेन सम्बन्धः। **नित्यस्य च** सामान्यस्य **किंकुर्वाण आश्रय** आधारः **स्यान्नैवे**त्यभिप्रायः।

**सिद्धानामाश्रयाश्रयिभावः। तदेवेहाश्रयत्वमनुपकारकस्याश्रयस्य न सम्भावयामः, अतिप्रसंग[7]त्।** 461a

**तस्मात् समवायो एकार्थसमवायेत्यादिवस्तुसंबंधा वा कार्यकारणभावात् न व्यतिरिच्यन्ते। परस्परमन्यतोऽनुपकारिणा[1]मप्रतिबन्धात्, अप्रतिबन्धस्य**

---

नोपकारकत्वादाधारः किन्तु **तस्य** सामान्यस्य तत्राश्रये **समवायात्।** यदा हो द्यो त क रः। "कथं तर्हि गोत्वं गोषु प्रवर्त्तते। आश्रयाश्रयिभावेन (।) कः पुनराश्रयाश्रयिभावः **समवायः** । तत्र वृत्तिमद् गोत्वं ।[4] वृत्तिः समवाय इह प्रत्ययहेतुत्वादिति ।"[1] उपकार्योपकारकत्वाभावे समवायमसम्भावयन्नाह। **कोयमित्यादि।**

**अपृथगित्यादि** परः। अभिन्नदेशत्वेन सिद्धा **अपृथक्सिद्धाः**। तेषां **योयमाश्रयाश्रयिभा**वस्समवायः।

**तदित्यादि** सि द्धा न्त वा दी। **तदेवेदमाश्रयत्वमनुपकारकस्याश्रयस्य न सम्भावयामः**। कस्माद् (।) **अतिप्रसङ्गात्** । यद्यनुपका[5]रकस्याश्रयत्वमिष्यते। तदा सर्वः सर्वस्याश्रयः स्यात्। न भवति (।) सर्वस्य सर्वासमवेततया प्रतीतेरिति चेत्। ननूपकारकाभावे गोत्ववत् सर्वस्यैव सर्वसमवेतत्वेनैकस्मान्न प्रतीतिर्भवतीतीदमेव चोद्यते।

अथोपकार्योपकारकभावादेरन्य एवायं समवायलक्षणस्सम्बन्धः। स च न सर्वत्रास्तीति कथमतिप्रसंगः।

उच्यते। सत्यं (।) केवलं क्वचित् स[6]मवेतस्य समवायो भवति। तत्समवेतत्वं च तदायत्ततया (।) तदायत्तत्वञ्चार्थान्तरस्य तदुत्पत्तिरेव। तेनोपर्युपरिभावेनोत्पत्तिरेवेह बुद्धेर्निबन्धनन्न समवाय इत्यर्थापत्तिक्षयः। उपर्युपरिभावे(....f...........) स्यात्। नाप्यसमवेतानां समवायोस्ति येन समवेतत्वं स्यात् सर्वेषां सर्वत्र समवेतत्वप्रसङ्गात्।

उपसंहरन्नाह। **तस्मा**[7]दित्यादि। अपृथक्सिद्धयोः समवायो यथारभ्यारम्भकयोर्द्रव्ययोः पृथक्सिद्धानां संयोगः। यथाग्निधूमयोरेकस्मिन्नर्थे समवाय **एकार्थसमवायः**। यथा रूपरसयोरेकस्मिन् द्रव्ये। **आदि**शब्दात संयुक्तसमवेत(स्य) परिग्रहः। वस्तुभूताः सम्बन्धा वस्तूनां वा सम्बन्धा इति विशेषणसमासः षष्ठीसमासो वा। वस्तुग्रहणं कल्पनाकृतनिवृत्त्यर्थं। **कार्य[1]कारणभावान्न व्यतिरिच्यन्ते** न यथा 103a

---

[1] Nyāyavārtika.

**चासम्बन्धात्। यद्यप्यन्योन्यं नोपकार एकार्थसमवायिनः तस्यैकस्य उपकाराभावे यथोक्तदोष[2]प्रसंगात्। अतः स्वोपकारद्वारेण परमपि संघटय्य ख्याप्यते। तस्मात् तत्रापि कार्यकारणभावकृत एव सम्बन्धः।**

**तस्मादयमाश्रयः स्वात्मन्यनुपकुर्वाणोऽनपे[3]क्षस्याधार इति याचितकमण्डनमेतत्।**

**कथमथैवं सति अजनकं कुण्डं बदराणां आधार इति चेत्।**

---

भवन्ति। एतदेव साधयन्नाह। **परस्पर**मित्यादि। **परस्पर**मन्योन्यमुपकारिणा**मन्यतो** वाऽश्रयाभिमता**दनुपकारिणामप्रतिबन्धा**दनायत्तत्वात्। **अप्रतिबधन्नस्य चासम्बन्धात्** कारणात् सर्ववस्तुसम्बन्धाः कार्यकारणभावान्न व्यतिरिच्यन्त इति प्रकृतेन संबन्धः।

ननु चाश्रयात् सत्युपकारे आश्रितयोः परस्परमुपकार्यो[2]पकारकभावो नैवास्तीति किमर्थमन्यतो वेत्यस्योपन्यासः।

सत्यमेतत्। किन्तु **यद्यपि** साक्षा**दन्योन्यं नोपका**रस्तथाप्येककारणायत्ततया पारम्पर्येणापि सम्बन्धं कल्पयेदित्युपन्यासः। **एकार्थसमवायिनः** परस्परमुपकार्योपकारकभावो नैवेष्यत इति चेदाह। **यद्यपी**त्यादि। तत एकस्मादाश्रयादुपकारस्या**भावे यथोक्तदोषप्रसङ्गात्**। अतिप्रसङ्ग[3]भयादित्युक्तो दोषः यतश्च स्वाश्रयादे**कार्थसमवायिनो**रवश्यमुपकारोऽतः स्वाश्रयकृतः समवायिनोर्यः **स्वोपकार** आत्मोपकारस्तेन **द्वारेण परमपि** द्वितीयमपि समवायिनं **संघटय्य** प्रतिपादयित्रा **ख्याप्यते** समवायिनाविह सम्बद्धाविति।

एतदुक्तम्भवति। यथा परस्यैकार्थसमवायिनोः परस्परासम्बद्धेप्येकार्थसमवायात् सम्ब[4]न्धस्तथास्माकमेककार्यत्वेन तयोः **सम्बन्धः**। यत एवन्**तस्मात् तत्रा**प्येकार्थसमवायिनि **कार्यकारणभावकृत एवा**श्रयेण सह यः कार्यकारणभावस्तत्कृत **एव** यद्द्वारेणारोपित एव सम्बन्धः। यस्मादुपकारद्वारेणैवाधारादिभावः। **तस्मादयमाश्रयः** शावलेयादिः। **स्वात्मनि** सामान्यस्वभावे**नुपकुर्वाणः** सामान्य**स्यानपेक्षस्याधार इति याचितकमण्डनमेतत्**। मण्डनमलङ्कारो मण्डयतेनेनेति कृत्वा (।) तस्य याचितकशब्देन कर्मधारयः। कस्मात् परस्माद् याचितकम्मण्डनन्दरिद्रस्यात्मन्यविद्यमानं। तद्वत् सामान्याश्रयस्यापि सामान्यं प्रत्याधारत्वं। भावसाधनो वा तृतीयासमासश्च। यथा याचितकेनालङ्कारेण मण्डनक्रिया। तथा सामान्याश्रयस्य परस्मात् प्रार्थितेनाधारभावेना[6]धारव्यपदेशो न वस्तुस्थित्या तत उपकाराभावादिति।

१—**कथमि**त्यादिपरः। न हि **कुण्डं बदराणां जनकं**। तेषां स्वहेतोरेव

**प्रविसर्प्पतः ॥१४६॥**

**शक्तिस्तद्देशजननं[4] कुण्डादेर्बदरादिषु ।**

**प्रकृत्या असमानदेशबदरोत्पादनधर्मस्य गुरुणो द्रव्यस्य समानदेशकार्योत्पादनभाव आधारकृतः। तस्मात् तस्य पूर्वक्षणसहकारि कुण्डं[5] तत्रैव बदरकार्यं जनयत् आधार इति। अन्यथा कुण्डे बदराणीति व्यापारोऽपि न स्यात्। तदुपकारकृतोयं व्यपदेशोऽपि न स्यात्।**

**किम्पुनः संयोगकरणेनेति चेत्। तयोरेव संयोगः सोऽपि ताभ्यामेव जननात् समवायः। स एकत्रैव किन्न समवैति तत्रासामर्थ्यात्। तत् पृथगसमर्थं**

---

निष्पत्तेः (।) ततश्च यदुक्तं "सर्वत्र वस्तुसम्बन्धाः कार्यकारणभावान्न व्यतिरिच्यन्त" इति तदनेकान्तिकमिति मन्यते। **प्रविसर्प्पतो** देशान्तरविसर्प्पणशीलस्य बदरादेस्तद्देशजन[7]नमुपादानभूतस्य पूर्वकस्य बदरलक्षणस्य यो देशः कुण्डसम्बद्धस्तस्मिन्नेव **देशे जनन**मन्यत्रागमनात्। इयं **शक्तिः कुण्डाद**राधाराभिमतस्य **बदरादि**ष्वाधेयेषु। 103b

**प्रकृत्येवे**त्यादिना व्याचष्टे। **प्रकृत्या** स्वभावेनैवा**समा**नो **देशो** यस्य तत्तथोक्तं। प्रकृतिशब्दमपेक्षमाणस्यापि गमकत्वाद् बहुव्रीहिः। तथाभूतं च तत्कार्यं चेति कर्मधारयः। कार्यं च **बदरादिक**[1]मेवोत्तरोत्तरक्षणसंगृहीतं। तस्योत्**पादनं** तदेव **धर्मः** स्वभावो यस्य **गुरुणो द्रव्यस्य** बदरादेः पूर्वक्षणसंगृहीतस्य। **समानदेशकार्योत्पादनभाव आधारकृतः**। आत्मना तुल्यदेशस्योत्पादकत्वमाधारकृतमित्यर्थः। यत एवन्तस्मात् पाश्चात्यस्य बदरकार्यस्य यः **पूर्वक्षणः** उपादानभूतस्तस्य **सहकारि कुण्डं**। **तत्रै**वोपादानक्षणदेश एव **बदर[2]कार्यं जनयत्** कुण्ड**माधार** इत्युच्यते।

अनेन चैकसामग्र्यधीनयोः कुण्डबदरक्षणयोराधाराधेयभाव इत्युक्तम्भवति। **अन्यथा** यदि **कुण्डेन बदराणां** यथोक्त उपकारो **न** क्रियते तदेह **कुण्डे बदराणी**त्येवं **व्यापदेशो न स्यात्**। नियताधारस्य व्यपदेशस्य निमित्तमन्तरेणायोगात्। **तदुपकारकृत** इत्याधारोपकारकृत**ायं** व्यापदेश इह कुण्डे बदरा[3]णीति। किन्तर्हि कुण्डबदरयोर्यः संयोगस्तत्कृतः।

**किम्पुनरित्यादि** सिद्धान्तवादी। पृच्छतश्चायमभिप्रायो क्षणिकत्वे सति संयोगादीनाम्भवद्भिः कल्पनेष्यते। अक्षणिकत्वं चेद् भावानामभ्युपगम्यते संयोगादीनामेवोत्पत्तिर्न स्यादित्यर्थः। **तयोरि**ति कुण्डबदरयोः **संयोग** इत्यपि व्यपदेशनिमित्तं नास्त्युपकार्योपकारक[4]त्वाभावादित्यभिप्रायः।

462a **सहितमपि तादृश[7]मेवेत्यनुपकारकत्वात्। संयोगेन न तत्संयोगः स्यात्। तस्मादन्यस्मादुपकारात् विशेषोत्पत्तेः सामर्थ्यम्। को[1]यमुपकारोऽजन्यजनकभूताम् ? स्वरूपसिद्धेरकार्यत्वात्, पररूपक्रियायाः तत्राप्युपकाराभावाच्च। उभयथाऽप्यक्रियस्याकिञ्चित्करत्वेनानुपकारकत्वादेतच्चोक्तप्रायम्[2]।**

---

**ताभ्यामि**त्यादि परः। ताभ्यां कुण्डबदराभ्यां संयोगस्य **जननात्तयोः संयोग** इष्यते। द्वाभ्यामेव संयोगस्य जननमुभयत्र समवायः। परेणोक्त इत्य(व)मृश्य सिद्धान्तवाद्याह। **स** इत्यादि। **स** संयोग **एकत्रैव** कुण्डे बदरे वा **किन्न समवैति** जन्यते वा। एकेन कुण्डेन बदरेण वा पृच्छतश्चायं भावो यदि तौ कुण्डबदरा[5]ख्यौ भावौ संयोगजनने। आधारभावोपगमने वा। प्रत्येकं समर्थस्वभावौ तदा किमित्यन्योन्यमपेक्षत इति। पृथग[6]र्थन्तदुभयं परस्परसहितमेव समर्थमिति चेदाह। **तदि**त्यादि। यत्कुण्डबदरवस्तु**पृथगसमर्थम् तत्**परस्पर**सहितम**पि **तादृशमेवा**समर्थमेवाक्षणिकत्वादिति भावः। क्षणिकास्तु प्रत्येकं पृथगसमर्थाः प[6]श्चात् सहकारिकृतविशेषास्सहितास्समर्था इत्यविरुद्धं। ततश्च संयोगं प्रत्य**नुपकारकत्वात्**। कुण्डबदराख्यम्वस्तु। **न संयोगेन** तद्धर्म्यात्।

**सहितस्ये**त्यादि परः। सहितस्य कुण्डस्य बदरस्य च तदन्योपकारात्। **तस्मात्** कुण्डाद् यो **यो** बदरात्मा **तस्मात्** कुण्डस्योपकारात्। तस्माद्वा बदराद् यदन्यत् कुण्डन्तस्माद् बदरस्योपकारात्। **विशेषो[7]त्प**त्तेर्हेतोः कुण्डबदरयोः संयोगस्य जनने। आधारभावोपगमने वा **सामर्थ्यं** न केवलयोरिति।

104a

**कोय**मित्याचार्यः। बदराणां कुण्डादीनां चा**जन्यजनकभूतानां कोयमुपकारः** (।) **नै**वास्ति । अजन्यजनकत्वमेव कथमिति चेदाह। **स्वरूपेत्यादि**। बदर**स्वरूप**स्यान्यतः हेतोरेव **सिद्धेरकार्य**त्वान्न बदराणां जन्यत्वं नापि जनकत्वं कुण्डस्येति भावः। न[1] हि परो बदरादीनां कुण्डादेः सकाशात् स्वरूपोत्पत्तिम्वाञ्छति। स्वहेतोरेव तेषान्निष्पत्तेः। न कुण्डेन बदररूपमेव क्रियते किन्तु ततोन्यद्रूपमित्यत आह। **पररूपे**त्यादि। **तत्रे**त्याधेये। न ह्यर्थान्तरे कृतेर्थान्तरमुपकृतं स्यात्। **उभयथेति** स्वरूपपररूपक्रियाभ्यां। अनन्तरोक्तेन विधिना**नुपकारकस्य कुण्डादेरकिञ्चित्करत्वात्।**

**एतच्चोक्तप्रायं**। प्रा[2]यशब्दो बाहुल्यवचनः। प्रायेणोक्तमुक्तप्रायं। राजदन्तादेराकृतिगणत्वात् प्रायशब्दस्य परनिपातः। अयं चार्थः "कार्यश्च तासां प्राप्तोसौ जननं यदुपक्रिये" (१।१०८)त्यादि विस्तरेणोक्तः। प्रायशब्दं सदृशार्थमन्ये प्राहुः। उक्तेन सदृशमुक्तप्रायं। प्रागुक्तेनाश्रयकृतेन सामान्यस्य स्वरूपोपकारेणेदं

**तस्मात् सर्व एव वस्तुसम्बन्धा जनकस्यैव उपकारविशेषबलात् कार्य-कारणभावात् प्रविभागेन व्यवस्थाप्यन्ते।**

---

कुण्डादिकृतमाधेयस्योपकारकरणन्तुल्यमित्यर्थः।[3] **सर्व एवे**त्यादिनोपसंहारः। **सर्व एव वस्तुसम्बन्धाः** कार्यकारणभावाद्धेतोर्व्यवस्थाप्यन्त इति सम्बन्धः। विभागस्तेषां न स्यादिति चेदाह। **जनकस्यै**वेत्यादि। यद्वा **कार्यकारणभावात्** सकाशात् **प्रविभागेन** भेदेन **व्यवस्थाप्यन्ते**। कथम्भेद इत्याह। **जनकस्यै**वेत्यादि। कारणकृतः कार्यस्य य उपकारविशेषस्तस्य बलादित्यर्थः। तथा हि प्रविसर्प्पणधर्म[4]णो बदरादेः स्वोपादानदेशोत्पादनलक्षणेनोपयोगेनाधाराधेयभावः। प्रदीपकृतेन च विज्ञानजननसमर्थ-स्वरूपोत्पादेन घटप्रदीपादीनां व्यङ्ग्यव्यञ्जकलक्षणः सम्बन्ध इत्येवमन्यस्मिन्नपि सम्बन्धे यथायोगं वाच्यं।

ननु **सर्व एव वस्तुसम्बन्धा** इत्यादिना न संयोगलक्षणस्य सम्बन्धस्य कार्य-कारणभावेन्तर्भावः समानकालभाविनोरेवास्य सत्त्वा[5]त्। अथाक्षणिकपक्षे संयोगोत्पत्तिर्न युज्यते (।) क्षणिके तर्हि भविष्यति संयुक्तासंयुक्तावस्थयोश्च कुण्ड-बदरयोर्न स्वरूपभेदः प्रतीयते। तेनाक्षणिकेपि संयोगोस्त्येव प्रतीतेः।

यदाहो द्यो त क रः। "यदि संयोगो न नार्थान्तरम्भवेत्तदा क्षेत्रबीजोदकादयो निर्विशिष्टत्वात् सर्वदैवांकुरादिकार्यं कुर्युर्न चैवं। तस्मात् सर्वदा कार्यानारम्भात् क्षेत्रादीन्यङ्कुरोत्पत्तौ[6] कारणान्तरसापेक्षाणि। यथा मृत्पिण्डादिसामग्री घटादि-करणे कुलालादिसापेक्षा। यो सौ क्षेत्रादिनिरपेक्षः स संयोग इति सिद्धं। किं चासौ संयोगो द्रव्ययोर्विशेषणभावेन प्रतीयमानत्वात्ततोर्थान्तरत्वेन प्रत्यक्षसिद्ध एव। तथा हि कश्चित् केनचित् संयुक्ते द्रव्ये आहरेत्युक्तो ययोरेव द्रव्ययोः संयोग-मुपलभते ते एवाहरति। न द्रव्यमात्रं। किं च[7] दूरतरवर्त्तिनः पुंसः सान्तरेपि वने निरन्तररूपावसायिनी सेयं बुद्धिरुदयमासादयति मिथ्याबुद्धिर्मुख्यपदार्थानुभव-मन्तरेण न क्वचिदुपजायते। न ह्यननुभूतगोदर्शनस्य गवये गौरिति विभ्रमो भवति तस्मादवश्यं संयोगो मुख्योभ्युपगन्तव्यः। तथा न चैत्रः कुण्डलीत्यनेन प्रतिषेधवाक्येन न कुण्डलं प्रतिषिध्यते तस्यान्यत्र देशादौ सत्त्वात्। तस्मा[1]च्चैत्रस्य कुण्डलसंयोगः प्रतिषिध्यते। तथा चैत्रः कुण्डलीत्यनेनापि विधिवाक्येन न चैत्रकु-ण्डलयोरन्यतरविधानन्तयोः सिद्धत्वात्। पारिशेष्यात् संयोगविधानं। तस्मा-दस्त्येव संयोग" इति।[1] 104b

अत्रोच्यते। (१) यथा क्षेत्रादीनां विशिष्टावस्थाप्रतिलम्भेन संयोगारम्भ-

---

[1] Nyāyavārtika.

**तदयं कुण्डादीनां बदरादिषु जननशक्तिरेव आधारोऽस्ती**[3]**ति चेत्।**

**न सम्भवति साऽप्यत्र;**

न हि **सामान्यजननविशेषलक्षणस्याधारभावस्य सामान्याश्रयः, तस्या-जन्यत्वात्।**

**तदभावेऽप्यवस्थितेः ॥१४७॥**

**न स्थितिः;**

**अथाधारो** हि **सामान्यस्थापकः,** ततः **स्थितिहेतुकत्वात् आधार एव,**

---

कत्वमिष्यते तथा संयोगमंतरेण कार्यारम्भकत्वमेव किन्नेष्यते। अन्यथा सर्वदा संयोगारम्भ[2]कत्वं स्यात्। (२) नापि निर्विकल्पकेन प्रत्यक्षेण संयुक्ते द्रव्ये स्वरूपेण गृह्यमाणे तृतीयः संयोगः प्रतिभासते। (३) नापि सविकल्पके ज्ञाने संयुक्ते द्रव्ये मुक्त्वा संयोगशब्दं चापरः संयोगो विशेषणभावेन प्रतिभासते। (४) नापि संयुक्त-**प्रत्ययान्यथा**नुपपत्त्या संयोगकल्पना। उत्पन्ननिरन्तरावस्थयोरेव भावयोः संयुक्त-प्रत्ययहेतुत्वात्। यावच्च तस्यामवस्था[3]यां संयोगजनकत्वेन संयुक्तप्रत्ययविषयौ ताविष्येते तावत् संयोगमन्तरेण संयुक्तप्रत्ययहेतुत्वेन तद्विषयौ किं नेष्येते। किम्पार-म्पर्येण। (५) नापि सान्तरे वने निरन्तरावभासिनी बुद्धिर्मुख्यपदार्थानुभव-पूर्विका स्खलत्प्रत्ययविषयत्वेनानुपचरितत्वात्। (६) तथा न चैत्रः कुण्डलीत्यादौ चैत्रसम्बन्धिकुण्डलं प्रतिषिध्यते विधीयते वा। न संयोगः। त[4]स्मादेकसाम-ग्र्यधीनयोरेव संयुताविति प्रतीतिः। यथा कुण्डबदरयोस्तस्मात् संयोगस्यापि कार्य-कारणभाव एवान्तर्भावः। केवलं भेदान्तरप्रतिक्षेपेण संयुक्तावेतौ संयोगस्येति वा प्रतीतिर्न पुनर्वस्तुभूतसंयोगबलात्। यतश्च नास्ति कार्यकारणभावमन्तरेण वास्तवः सम्बन्धः।

**तदयमि**त्यादि। **बदरादिषु जननश**[5]**क्तिरेव कुण्डादीनामाधार** इति सम्बन्धः सामान्यस्याश्रयो जननशक्त्यैवाधारोस्त्विति चेदाह। **नेत्या**दि। **से**ति जननशक्तिः। **अत्रे**ति सामान्ये।

**न ही**त्यादिना व्याचष्टे। स्वोपादानदेश एव जननं **जननविशेषः** स **लक्षणं** यस्या**धारभावस्य** स तथा। **तस्याजन्यत्वा**दिति सामान्यस्य नित्यत्वेनाजन्यत्वात्। **तदभावे**न्याश्रयाभावे**पि** सामान्यस्या**वस्थिते**र्हेतोरा[6]श्रयवशेन **न स्थितिः** सामान्यस्य।

**अथेत्या**दिना व्याचष्टे। **तस्ये**ति सामान्यस्य **तदभावेपी**ति व्यक्त्यभावेपि व्यक्तिशून्ये देशे सामान्यस्य **स्थानात्**। यदि हि व्यक्तिशून्ये देशे सामान्यं न भवेत्तदा तत्रापूर्वव्यक्त्युत्पादे सामान्यसम्बन्धो न भवेत। न हि तस्यान्यत आगमनं निष्क्रिय-

**न हि जनकत्वात्।**

**साऽप्ययुक्तैव;**

**तस्य तद्भावेऽपि स्थानात्। पतनधर्माणां [5]वस्तूनां पातप्रतिबन्धात्, अजनकस्य हि स्थापकत्वं स्यात्। अत्रापि यदि पातप्रबन्धं न पर्यनुयुंजीत स्थापयित्रा क्रियते पात[6]प्रतिबन्धः ततोऽर्थान्तरम्। अर्थान्तरत्वे तत्रैवा स्योपयोग इति कः पततः प्रतिबन्धः? प्रतिबन्धादपातेऽपि तुल्यः पर्यनुयोगोऽनवस्था च।**

**तस्माद् पाताभाव[7]: कथं केनचित् क्रियते? अभावं करोतीति चेत्** 462b

---

त्वात्। न च भिन्नदेशावस्थिता व्यक्तिस्तस्य सामान्यस्याधारो भिन्नदेशत्वात्।[7] 105a एकत्वात् सामान्यस्य नास्ति भिन्नदेशतेति चेत्। सर्वास्तर्हि व्यक्तय एकजातिमत्य एकदेशाः प्राप्नुवन्ति। न च सर्वा जातिमत्यः स्युः। एकस्य कथम्भिन्नदेशावस्थितत्वमिति चेदयमपरोस्य दोषोस्तु।

**पतनधर्मे**त्यादिनोपचयहेतुमाह। **हि** शब्दश्चार्थे। **अपि**शब्दोभ्युपगमसूचनार्थः। अभ्युपगम्याप्ययं प्रकारः सामान्ये व्यवस्थापयितुमशक्यः। सामान्यस्यापतनधर्म्म[1]त्वादित्येवमर्थमुपन्यासः । न त्व**जनकस्य स्थापक**त्वं **सम्भव**ति । अत एवाह। **अत्रापी**त्यादि। **अत्रापि** पातप्रतिबन्धात् स्थापकाभ्युपगमे **यदि** न्यायवादी कश्चित् **पातप्रतिबन्धं न पर्यनुयुञ्जीत**। तदा भवेदजनकोपि **स्थापकः**। स्वसमयानुरोधेनेत्याकूतं। अत्राप्ययं पर्यनुयोगः सम्भवति। यः **स्थापयित्रा** क्रियते **पातप्रतिबन्धः** स स्थाप्यस्यात्मभूतो वा स्यात् ततो**र्थान्तरं** वा[2] पाताभावमात्रम्वा। न तावदात्मभूतस्तत्स्वभावस्यान्यतो निष्पत्त्यभ्युपगमात् नाप्यर्थान्तरमित्याह। **अर्थान्तरत्वेभ्युपगम्यमाने तत्रैव** प्रतिबन्धेर्थान्तरभूतेऽस्या**धारस्योपयोग इति कः पततो** बदरादेः **प्रतिबन्धो** विघातः (।) नैव कश्चित्। ततश्च कुण्डादिस्थमपि बदरादि पतेदेवेति भावः। आधारकृतेनार्थान्तरेण पातप्रतिबन्धेन बदरादेरपातः[3] क्रियत इति चेदाह। **प्रतिबन्धादपातेपी**त्यादि। प्रतिबन्धाख्यात् यदार्थाद् बदरादेरपातेभ्युपगम्यमाने **तुल्यः पर्यनुयोगः**। योयं प्रतिबन्धाख्येन पदार्थेनापातः क्रियते स किं बदरादेरात्मभूतोर्थान्तरम्वा। अर्थान्तरत्वे तत्रैवास्य प्रतिबन्धस्योपयोग इत्यादि। सर्वमनन्तरोक्तं तुल्यं।

अथ तेनाप्यपाताख्येनार्थेन बदरादेरपातः क्रियते तत्रापि तुल्यः[4] पर्यनुयोग इत्याह। **अनवस्था** चेति।

**तस्मादित्या**दिना तृतीयपक्षोपन्यासः। स **पाताभावः कथं केनचित् क्रियते**।

**नाभावो नाम कश्चित् कार्यः। तस्य केनचित् क्रियमाणे भाव एव स्यादिति। अभावस्यायोग्य[1]त्वात्। तस्माद् भावक्रियाप्रतिषेधनिर्देशोऽभावं करोतीत्यर्थः। तथा चायमपि अकार्यत्वात् केनचित् प्रतिबद्धः। तेनायं केनचिदप्रतिबद्ध[2]त्वात् न कदाचिदपि तिष्ठेत्। तस्माद् पातप्रतिबन्ध इत्यसावपि क्षणिकानां भावानां उपादानेन समानदेशस्योत्पादनम्। अस्तु नाम पातिनां तत्प्रतिबन्धो[3] ऽजनकः गतिमतो द्रव्यस्य स्थापकः कश्चिद्। अक्रियस्य किं लक्षणां स्थितिं कुर्वाणः स्थापकः स्यात् ? स्थितिर्हि तस्य स्वरूपाप्रच्युतिरेव। सा च नाश्रयायत्ता[4]**

---

नैव केनचित्। अभावस्याकार्यत्वादिति भावः। कथन्तर्ह्यभावं **करोतीति** व्यपदेश इति चेदाह। **अभावमित्यादि**। अभावङ्करोतीति व्यपदेशे **नाभावो नाम कश्चित् कार्य** इष्यते। कस्मादित्याह। **तस्येत्यादि**। **तस्ये**त्यभावस्य **कार्य**त्वाद् **भाव एव**[5] स्यादित्यभिप्रायः।

ननु यथा घटवत् कार्यत्वात् पटस्य न घटरूपता। तथा भाववन्नाभावस्य कार्यत्वादभावरूपता भविष्यतीति चेत् (।) न। घटादेरपि हि भावरूपत्वम्भवन-धर्मत्वादेव (।) तच्चाभावेप्यस्तीति कथं न भावरूपत्वमभावरूपत्वेन प्रतिभास-नान्न भावरूपतेति चेत् (।) न (।) **अभावस्य** प्रतिभासाभावात्। अभा-वानाम्परस्परविभागप्रतीतेर्घटाभावः पटाभाव[6] इत्यत्र पटादीनाम्भेदो नाभा-वानामेकत्वेन प्रतिभासनादित्युक्तं। यत एवन्**तस्माद् भावस्य** या **क्रिया** तस्याः **प्रतिषेधनिर्देशो**ऽभावंकरोतीति।

अत एव स्पष्टयति। **भावं न करोतीति याव**दिति। यावानेवास्य वाक्यस्या-र्थस्तावानेवाभावं करोतीत्यस्यापीत्यर्थः। **तथा चेति** (।) पातप्रतिबन्धस्याभाव-मात्रत्वेनाकार्यत्वे। **अयमिति** कुण्डादिः। तेन कार[7]**णेनायमिति** बदरादिः। **केन चित्**कुण्डादिनाधारेण **प्रतिबद्धः**। पातादनिवारितो **न कदाचित्तिष्ठेत्**। सदैव पते-दित्यर्थः। **तस्मादित्यादिनोपसंहारः**। **अपि**शब्दादाधेय इत्यनेनापि व्यपदेशेन **क्षणिकानां** पूर्वक्षणसंगृहीतेनो**पादानेन समानदेशस्यो**त्तरक्षणसंगृहीतस्य कार्य**स्यो-त्पादन**मुच्यते। **तस्मात्** सामान्येऽयमपि प्रकारो न सम्भव[1]तीति ख्यापनायाभ्युप-गम्यैतदुक्तं पातप्रतिबन्धा**दजनकोपि** स्थापक इति।

(105b)

तमेवासम्भवन्दर्शयितुमाह। **अस्तु नामे**त्यादि। **पातिना**म्बदरादीनान्**तत्प्रति-बन्धः** पातप्रतिबन्धोस्तु नामाजननस्वभावः। **तत्करणा**दिति पातप्रतिबन्धकरणात्। ***गतिमतो द्रव्यस्येति*** *सक्रियस्य सामान्यस्य* पुनरमूर्त्तत्वाद**क्रियस्य किं लक्षणां स्थितिं कुर्वाण** आश्रयः **स्थाप[2]कः स्यात्**। न हि सामान्यस्य पातोऽस्ति येन तत्प्रतिबन्धः

**नित्यत्वात्। साऽपि अयुक्तैव--**

**भेदाभेदविवेचने।**

**अस्तु नाम आश्रयहेतुका सामान्यस्थितिरपि। सा च सामान्यादन्याऽनन्या वा। अप्रतिबद्धत्वे तदेव[5] तस्याः स्थितिकरणं चेत्, साऽपि सामान्ये ऽप्रतिबद्धेति किं सामान्येन कृतं स्यात्? प्रतिबद्धैव चेत् तदा कः प्रतिबन्ध इति वाच्यम्? स्थितिकरणप्रतीत्या चेत् तत्राऽपि तुल्यः प्रसंगइत्यनवस्था च स्यात्[6]। तत उपकारस्यानवधारणात् सा हि तत्स्थितिरित्यप्रतीतिः जननं चेत् अनुपकारिण्याः किमत्राश्रयेणापेक्षितने? अपेक्षेति हि तत्प्रति-**

---

स्थितिर्भवेत्। किन्तु **स्थितिर्हि** तस्य सामान्यस्य **स्वरूपाप्रच्युतिरेवोच्यते। सा च** स्वरूपाप्रच्युतिर**नाश्रयायत्ता** सामान्यस्य **नित्यत्वात्।** अभ्युपगम्याप्युच्यते। **साप्याश्रयायत्ता** सामान्यस्य स्थिति**रयुक्तैव।** सामान्यात् तस्याः स्थिते**र्भेदाभेदविवेचने।** अन्यत्त्वानन्यत्त्वविचारे क्रियमाणे।

**अस्तु नामे**[3]त्यादिना व्याचष्टे। **आश्रयहेतुके**त्याश्रयायत्ता। **सेति** स्थितिः। तामेवाश्रयादन्यां स्थितिं स आश्रयः करोति न सामान्यं। सा स्थितिः सामान्ये प्रतिबद्धा ततः सम्बन्धसम्बद्धात् सामान्यमुपकृतमेवेत्यत आह। **सा चे**त्यादि। सेत्यर्थान्तरभूता स्थितिः। न हि तस्याः सामान्ये प्रतिबन्धकारणं किंचिदस्ति किं सामान्यस्याश्रयेण कृतम्भवतीत्यध्याहारः।

अभ्युपग[4]म्यत एव स्थितेः सामान्ये प्रतिबन्ध इति चेदाह। **प्रतिबन्धे चे**त्यादि। प्रतिबन्धे वाभ्युपगम्यमाने। **स्थितिकरणं चेत्।** आश्रयेण जनिता या स्थितिस्तस्याः स्थितेः स्थितिः सामान्येन क्रियते। ततः **साश्रयजनिता** स्थितिः **सामान्ये प्रतिबद्धेति। तत्रापि** स्थितेः स्थितिकरणे **तुल्यः प्रसङ्गः**। या **सा चा**श्रयप्रतिबद्धायाः स्थितेः सामान्येन स्थितिः क्रियते सा[5] आश्रयहेतुकायाः स्थितेरात्मभूता वा भवेद् **व्यतिरिक्ता वा।** आत्मभूतत्वे आश्रयेणैव सा कृतेति कथं सामान्येन क्रियते। **व्यतिरिक्तत्वे** च सैव स्थितिः सामान्येन कृता आश्रयजनिताया आद्यायाः स्थितेः **किं सामान्येन कृतं स्यात्।** अथ सामान्येन द्वितीया स्थितिः क्रियते। सा आश्रयेण जनितायां स्थितौ प्रतिबद्धा। **तदा कः प्रतिबन्ध इति वाच्यं।** सामान्य[6]जनितायाः स्थितेराश्रयजनितया स्थित्याऽपरा तृतीया स्थितिः यत इति **तुल्यः प्रसङ्गः** इत्यन**वस्था स्यात्। ततो**नवस्थानादाश्रयजनितायां स्थितौ सामान्यकृतस्यो**पकारस्यानवधारणादस्य** सामान्यस्य सम्बन्धिनीयमाश्रयेण जनिता **स्थितिरित्यप्रतीतिः जननं चे**त्प्रतिबन्ध इति प्रकृतं। न सामान्येनाश्रयजनिताया स्थितेर[7]परा स्थितिः 106a क्रियते। किन्तु सैवाद्या स्थितिर्जन्यत इति। तदा केवलं सामान्यं समर्थं स्थितिं

463a **बन्धः[7]। स च अनाधेयातिशयस्य सामान्यस्याऽयुक्त इति केवलं जनयेदिति नास्त्यन्य आश्रयः स्थितिहेतुः।**

**अभेदे वा सामान्यात् तत्स्थितिस्वरूपमेव तत्। तच्च नित्य[1]मस्तीति न स्थितिरस्य हि केनचित् क्रियते। तस्माद् न सामान्यस्याश्रयः। तदस्याश्रयो न स्थितिः।**

**अथ पुनः अव्यक्तस्य सत्त्वे तु तद्व्यक्तिर्हि व्यक्त्या प्रत्ययहेतु[2]भूत(त्वा)त्। तत्र स्थितिभूतोऽपि न युक्तः। यस्मात्।**

**विज्ञानोत्पत्तियोग्यत्वायात्मन्यन्यानुरोधि यत् ॥१४८॥**
**तद् व्यङ्ग्यं योग्यतायाश्च कारणं कारकं मतम्।**
**प्रागेवास्य च योग्यत्वे[3] तदपेक्षा न युज्यते ॥१४९॥**

---

करोतु **किमाश्रयेण** शावलेयादिना स्थितिकरणायापेक्षितेन। न **ह्यनुपकारिण्यपेक्षा** युक्ता। तस्मादपेक्षेति हि **तत्प्रतिबन्धः**। अस्मिन्वस्तुन्यस्यापेक्षेति येयमपेक्षा सा तस्मिन्नपेक्ष्ये प्रतिबन्धस्तदायत्तता। **स च** प्रतिबन्धो नित्यत्वादनाधेयातिशय**स्यायुक्त** इति केवलं सामान्यं [1] स्थितिं **जनयेदिति नास्त्यन्य आश्रयः स्थितिहेतुः**। ततश्च स्थितिकरणादाश्रयस्सामान्यस्याधार इत्येतदयुक्तमिति भावः। एव**म्भेदाभेदविवेचन** इति यदुक्तन्ततो भेदपक्षस्तावदपनीतः।

द्वितीयपक्षमाश्रित्याह। **अभेद** इत्यादि। **सामान्यादभेदे वा स्थिते**रभ्युपगम्यमाने **स्वरूपमेव** तत्स्थितिरूपं सामान्यस्य (।) **तच्च** स्वरूपं सामान्यस्य **नित्यमस्तीति न स्थिति[2] रस्य** सामान्यस्य **केन**चिदाश्रयेण **क्रियते**। यत एव**न्तस्मा**दित्यादि। **तदि**त्यादिनोपसंहारः। **तदि**ति तस्मा**दस्ये**ति सामान्यस्य।

तदेवं वृत्तिराधेयता व्यक्तिरिनि यत्पक्षद्वयमुक्तन्तत आद्यस्य निरासः कृतः(।)

२—द्वितीयपक्षमाश्रित्याह। **अथ पुन**रित्यादि। **अव्यक्तस्ये**त्यप्रकाशितस्य। व्यक्तेत्याश्रयेण ज्ञानस्याकारणत्वात् तद्व्यक्तेस्तेनाश्रयेण प्रकाशनं यत्। त[3]देव तत्राश्रये सामान्यस्य वृत्तिः स्यात्। (।१४६-४७॥)

**नेत्या चा यः**। आत्मनि स्वविषये **विज्ञानोत्पा**दनं। तत्र **योग्यत्वं** सामान्यन्तदर्थ**मन्यानुरोधि**। कारणान्तरसापेक्षं **यत्तद्वस्तु व्यङ्ग्यं** प्रतीतं। तस्याश्च स्वविषयज्ञानजनन**योग्यतायाः कारणं** यत्प्रदीपादि तद्व्यङ्ग्यस्य **कारकमेव** जनकमेव। पूर्वमयोग्यस्य पश्चाद् विज्ञानजननयोग्यस्य घटादेरुत्पादनात्।

यदि[4] पुनः प्रदीपादिसन्निधानात् प्रागपि घटादि स्वाकारज्ञानजनन**योग्य**न्तदा **प्रागेवास्य च** घटादे**र्योग्यत्वे तदपेक्षे**ति प्रदीपापेक्षा। **सामान्यस्य** नित्यत्वाद-

**सामान्यस्याविकार्यस्य तत्सामान्यवतः कुतः ।**

**न कारकाद् व्यञ्जकस्य कश्चिद् विशेषः। अपरं स्वविषयस्य विज्ञानोत्पादनसमर्थं सजातीयोपादाना[4]पेक्षं अनपेक्षं च भावं जनयन्नेव व्यञ्जक उच्यतइति ।**

**परत्र हि जन्य ज्ञानजननशक्तिरनाक्षिप्ता जन्यस्येति जननमात्रेण कारकत्वम् ।**

**यदि हि यतो[5] यः विज्ञानोत्पादनयोग्यतां प्रतिलभते, स न तज्जन्यः । तस्य सा योग्यता स्वभावभूता हि प्रागेवास्तीति विज्ञानोत्पादनं**

---

**विकार्यस्य** । तदिति यथोक्तलक्षणं व्यङ्ग्यत्वं **सामान्यवत** इत्याश्रयात्सकाशात् **कुतो** नैवेत्यर्थः। **अपरमिति** स्वसन्तानादन्यम्**भाव**मेव **जनयन्** व्यञ्जक उच्यते। किम्भूतं **स्वविषयस्य विज्ञानोत्पाद[5]नसमर्थं**। **सजातीयोपादानापेक्षमिति** स्वसन्तानसङ्गृहीतपूर्वक्षणसापेक्षं। यथान्धकारावस्थितघटादिक्षणसापेक्षम्विज्ञानजननसमर्थमुत्तरं घटक्षणञ्जनयत्प्रकाशकः ।

ननु प्रदीपकार्यत्वे घटस्य प्रदीपोपचयेपि घटस्योपचयोपि स्यादिति चेत् (।) न। उपादानगताद् विभेदात् कार्यस्य भेदो न सहकारिगतात्। सहकारिकारणं च प्र[6]दीपादिर्व्यङ्ग्यस्य घटस्येति कुतो महत्वादिप्रसङ्गोस्य (।) यद्वाऽभिव्यक्तावपि क्रियमाणायां तुल्योयं प्रसङ्ग इति यत्किञ्चिदेतत्। न च व्यङ्ग्यक्षणसदृशस्य क्षणस्य मृत्पिण्डादुत्पत्तिरपि तु प्रदीपादेवेति कुतोन्यादृशात् तादृशस्योत्पत्तिः। **अनपेक्षं चेति** । यथा सजातीयोपादानापेक्षं स्वविषयविज्ञानजननसमर्थं शब्दं जनयन्नभिघातः। न ह्य[7]भिघातात् प्राक् छब्दोस्ति येन समानजातीयापेक्षः शब्दो भवेत्। शब्दोपि हि व्यङ्ग्यः परैरिष्यत इत्येवमुक्तं । 106b

यदि तर्हि कारक एव व्यञ्जकः कस्तर्हि कारकव्यञ्जकयोर्हेत्वोर्विशेष इत्यत आह। **परत्रेत्यादि**। व्यञ्जकादन्यस्मिन् कारकत्वेनाभिमत इत्यर्थः। **ज्ञानजननशक्तिरनाक्षिप्ता** जन्यस्य। न हि स्वविषयविज्ञानजननसमर्थमेव कार्यं कारकेण बीजा[1]दिना जन्यते। ततो **जननमात्रेण कारकत्वं** स्वविषयविज्ञानजननसमर्थकार्योत्पादनलक्षणेन तु विशेषेण व्यञ्जकत्वमिति। (१४७-४८॥)

यद्यपि व्यञ्जकाद् व्यङ्ग्यो **विज्ञानोत्पादनयोग्यतां** प्रतिलभते तथापि न जन्यत इति चेदाह। **यदि हीत्यादि**। **यत** इति व्यञ्जकात्। स चेत् व्यङ्ग्यः। **तस्येति** व्यञ्जकस्य **सा योग्यता**ऽस्य व्यङ्ग्यस्य व्यञ्जकसन्निधानात **प्रागेवास्ति**।[2] यतो

**न तमपेक्षते। तस्य हि**[6] **परभूतत्वे सैव ततो भूतेति स्थितिवत्प्रसंगः। तं व्यङ्ग्यं नाप्यन्यत् क्रियते।**

463b **एवं अकिञ्चित्कत्वेन प्रतिषेधः ततो**[7] **व्याहतमेतत्।**

**तत्तु न धूमादिर्जनकोऽथकार्यत्वाद् व्यञ्जकः। सत्यं हि जनकः। न तु धूममपेक्ष्याग्निर्विज्ञानं जनयति। तथा**[1]**भूतस्याग्नेः साक्षादजनकत्वात्। केवलं तत्रोपादानमपेक्ष्य ज्ञानं उत्पद्येत न तु विषयबलेन, असत्यपि तस्मिन् परम्परया लिङ्गानुसारिणा भावात्**[2]**।**

**नापि सामान्याकारावभासि ज्ञानं, न तेषां सन्निहितविषयता। न विषयबलेनोत्पत्तिरिति प्रतिपादितं प्रतिपादयिष्यते च। ततः साक्षादुपयोगेन**

---

व्यङ्ग्यस्य **स्वभावभूता** सा। यथाव्यङ्ग्यः प्रागेवास्ति तथा तत्स्वभावभूतापि योग्यता। **तमपेक्षत** इति व्यञ्जकं। व्यङ्ग्याद् व्यतिरिक्तैव योग्यता व्यञ्जकेन क्रियत इति चेदाह। **परे**त्यादि। **अस्यामि**ति योग्यतायां। **सैव** योग्यता। **तत** इति व्यञ्जकात् **स्थितिवत्प्रसङ्गः**। यदुक्तम् (।) अन्या चेत् स्थितिस्तामेवाश्रयः करोतीत्यादि तदिहापि प्रसज्येत। **त**[3]मिति व्यङ्ग्यं। नापि व्यङ्ग्यादन्यत् तत्करणे व्यङ्ग्यस्य **न किञ्चिदिति कृत्वाऽपेक्ष्यत** इत्यनेनोपकारित्वमुक्तं। अकिंचित्करत्वेन तत्प्रतिषेधस्**ततो व्याहतमेतत्**।

यदुक्तं (।) जनक एव व्यञ्जक इति तस्य **तत्त्वि**त्यादिना व्यभिचारमाह। न हि धूमोग्नेर्जनकोऽथ च **कार्यत्वा**त्तस्य **व्यञ्जकः**। **आदि**शब्दाद् बलाकादिः सलिलस्य (।) **सत्य**मित्यादिना परिहरति। न तु धूमं लिङ्ग**म**[4]**पेक्ष्याग्नि**रात्मनि स्वलक्षणे **ज्ञानं जनयति**। कस्मात् (।) **तथाभूतस्या**नुमेयत्वेनाभिमत**स्याग्नेः साक्षादजनकत्वात्**। अन्यथाग्निस्वलक्षणाकारत्वात् प्रत्यक्षात् प्रतिभासाविशेषः स्यात्। **केवल**मित्यादिनोपादानकारणमेव तस्य साक्षाज्जनकमित्यादर्शयति। लिङ्गज्ञानमुपादानं। **न विषयबलेना**ग्निस्वलक्षणबलेन (।) किङ्कारणम् (।) **असत्यपि**[5] **तस्मिन्** वह्नौ पूर्वध्वस्तेपि भावादग्निज्ञानस्य। कथमित्याह। **परम्परये**त्यादि। लिङ्गानुसारी लिङ्गानुस्मरणविकल्पस्तेन। तथा हि कस्यचित् पुरुषस्य क्वचिद् धूमन्दृष्टवतो ध्वस्ते धूमे वह्नौ च कथमपि तत्र धूमानुस्मरणविकल्प उत्पन्ने पश्चादन्वयव्यतिरेकानुस्मरणादभूदत्र धूमस्तस्माद् वह्निरप्यत्रासीदित्येवं परम्परयाग्निजन्य[5]धूमादग्निज्ञानमुत्पद्यत एव।

**नापी**त्यादिना पूर्वोक्तमत्रैव योजयति। **सामान्याकारावभासि** चानुमान**ज्ञानं**। **न सन्निहितविषयता**। विनष्टेपि हि विषये अनुत्पन्ने च सम्भवात्। यदापि सन्निहितो विषयस्तदापि **न विषयबलेनोत्पत्तिरिति** निवेदितं प्राक् **न हि विकल्पा**

**स्वविषयविज्ञानजननसामर्थ्येन, तत्र हि परमपेक्षतेति अवश्यं तत आत्मप्रतिलम्भः न चायमात्मप्रतिलम्भः सामान्यस्य कुतश्चित् संभवति। तस्मात् तत् कुतोऽपि न व्यङ्ग्यम्। नैव सामान्यं व्यक्तियोग्यता[4]प्राप्तमिति।**

**अथ सामान्यमस्ति स्वाश्रयसमवेतं, तदा स्वाश्रयसमवायापेक्षः तदात्मन्यन्यत्र वा विज्ञानहेतुरिति उक्तम्, तत्र जन्यजनकयोः[5] आश्रयाश्रयिलक्षणसमवेतोऽयं कः स्वाश्रयसमवायापेक्षो विज्ञानहेतुः, तेन जन्यस्य एव स्यात्, तद्धेतोः भावस्य प्राग्भावात्[6] पश्चाच्च ततो भावात्। नित्यं तद्भावसद्भाव इति प्रागपि समवायात् विज्ञानोदयप्रसंगात्।**

**न हि व्यक्तिः सामान्यस्य संस्कारात् व्यञ्जिका। किन्तर्हि? तद्ग्राहिण[7]** 464a

---

**यथाभावमेव प्रवर्त्तन्त** इत्यादिना। भावाभावानभिधानाच्च सा[7]मर्थ्यन्न प्रतिभासादित्यादिना तृतीये परिच्छेदे ( ) प्रतिपादयिष्यते च। साक्षादुपयोगेन स्वरूपानुकारिविज्ञानजननसामर्थ्येन। तत्रेति स्वविषयज्ञानजनने। परमिति प्रदीपादिकं। **तत** इत्यपेक्ष्यात् प्रदीपादेः। 107a

एतदुक्तम्भवति। न सर्वो व्यञ्जको जनक इत्युच्यते (।) किन्तु स्वाकारज्ञानजनकस्य परस्य साहाय्यं यः प्रतिपद्यते स एव। ततो नास्ति व्यभिचार इ[1]ति। सामान्यमपि स्वाकारज्ञानजननाश्रयमपेक्षत इति व्यङ्ग्यमिष्टन्ततस्तेनाश्रयादुपलम्भयोग्य आत्मा लब्धव्यः (।) न चायमात्मप्रतिलम्भः सामान्यस्य कुतश्चित् सम्भवति। नित्यत्वेनाभ्युपगतत्वात्। तदिति सामान्यं।

**नैवे**त्यादि परः। स्वाश्रयसमवायव्यक्तिं ब्रूम इति सम्बन्धः। स्वाश्रयसमवायः कथं व्यक्तिरिति चेदाह। **स्वाश्रये**त्यादि। **तदि**ति सामा[2]न्यं। **अन्यत्रे**ति स्वाश्रये।
**उक्त**मित्याचार्यः। "तदेवेदमनुपकारकस्याश्रयत्वं न सम्भावयाम" इत्यादिनोक्तत्वात्। स्वाश्रयसमवेतं हि तदात्मन्यन्यत्र वा विज्ञानहेतुरिति ब्रुवाणेन स्वाश्रयसावायापेक्षः सामान्यपदार्थः विज्ञानहेतुरिष्टः। ततश्च तेन स्वाश्रयसमवायेन सामान्यात्मा जन्यस्य स्यात्। किङ्कारणं (।) **तद्धेतो**र्ज्ञानहेतोः स्वभावस्य स्वा[3]श्रयसमवायात् प्राग्भावात्। स्वाश्रयसमवाये सति पश्चाच्च ततः स्वाश्रयसमवायाद् विज्ञानहेतोः स्वभावस्य भावात्। नित्यं सामान्यस्य विज्ञानजननस्वभावत्वादसिद्धमेतदिति चेदाह। **नित्य**मित्यादि। **तत्स्वभावसद्भाव** इति विज्ञानजननस्वभावे **प्रागपि** स्वाश्रयसमवायाद् व्यक्तिशून्येपि देशे केवलात् सामान्यादित्यर्थः। सामान्याकारविज्ञा[4]नोदयप्रसङ्गात्। (।१४८-४९।।)

**नेत्यादिपरः। व्यक्तिराश्रयः सामान्यस्य संस्कारो** योग्यताधानन्तस्माद्धेतोर्न

**इन्द्रियस्य संस्कारात्। योऽपि—**

**अञ्जनादेरिव व्यक्तेः संस्कारो नेन्द्रियस्य च ॥१५०॥**

**प्रतिपत्तेरभिन्नत्वात् तद्भावाभावकालयोः।**

**अंजनादिभिः संस्कृतमिन्द्रियं प्रतिपत्तौ, कञ्चिदतिशयमासादयति स्पष्टास्पष्टविशेषणात्, तदकारिणश्चातत्संस्कारकत्वात्। नैवं व्यक्तेर्यथा हीन्द्रियस्य संस्कारः कश्चित्[2] तद्भावाभावकालयोः प्रतिपत्तावविशेषात्। विषयसंस्कारो हि इन्द्रियाविशेषेऽपि तद्विशेषाधानादुपकारी स्यात् न**

---

**व्यञ्जिका** सामान्यस्य। येन तया जन्यं स्यात् सामान्यं। किन्तर्हि **तद्ग्राहिण** इति सामान्यग्राहिणः **संस्काराद्** व्यञ्जकेति प्रकृतं।

**योपी**त्याद्या चा र्यः। **अञ्जनादे**रिवेति वैधर्म्यदृष्टान्तः। **अञ्जनादेः** सकाशाद् यथेन्द्रिय**संस्कारो** युक्तो **नैवं व्यक्तेः** सका[5]शात्। कस्मात् **प्रतिपत्ते**र्ज्ञानस्य व्यञ्जकत्वेनाभिमताया व्यक्ते**र्भावाभावकालयोः** सप्तमीद्विवचनमेतत्।

**संस्कृतमि**त्यादिना व्याचष्टे। **अञ्जनादिभिः संस्कृतमिन्द्रियं कंचिदतिशय**मात्मभूत**मासादयति**। **प्रतिपत्तौ** प्रनिपत्तिनिमित्तं। विशिष्टज्ञानोत्पादनायेति यावत्। निमित्तात् कर्म्मसंयोग इत्यनेनात्र सप्तमी। कुत एतदिति चेदाह।[6] **स्पष्टे**त्यादि। **प्रतिपत्ते**रिति विभक्तिविपरिणामेन सम्बन्धः। तथा हि तिमिराद्युप-
107b हतमिन्द्रियमस्पष्टं विज्ञानञ्जनयति। तदेवाञ्जनादिसंस्कृतं स्पष्टतोऽवसीयते (।) संस्कृतमिन्द्रियं प्रतिपत्त्यर्थमतिशयमासादयतीति।

अथाञ्जनादेः सकाशान्न प्रतिपत्तिभेदस्तदा। **तदकारिणश्च** प्रतिपत्तिभेदाकारिणश्चाञ्जनादे**रतत्सं[7]स्कार(क)त्वा**दिन्द्रियासंस्कारकत्वात्। यथाञ्जनादेः सकाशादिन्द्रियस्य **संस्कारो नैवं व्यक्तेः** सकाशात् (।) किङ्कारणं (।) **तद्भावाभावकाल**योरित्यादि। तथा हि व्यञ्जिकाया गोव्यक्तेरभावकाले यादृशं चक्षुर्विज्ञानं वृक्षादावुत्पन्नन्तस्या गोव्यक्तेः (अ)भावेपि वृक्षादौ तादृशमेव। यदि तदभावकाले पूर्वमस्पष्टं विज्ञानं वृक्षादिषूत्पन्नं पश्चाद् गोव्यक्तिकृत इन्द्रियसंस्कारो ग[1]म्येत।

विषयसंस्कारेपि सति विषयान्तरे नैव प्रतिपत्तिभेदो**ऽस्त्यतः सोपि न युक्त** इति चेदाह। **विषये**त्यादि। विषयस्य गन्धादेर्यः केनचित् संस्कारस्स **इन्द्रियाविशेषेपि**। यदि नामान्यत्र विषयान्तरे इन्द्रियस्य प्रतिपत्तिं प्रति विशेषो **नास्ति**। **तथापि तद्विशेषाधान**न्तस्य संस्कृतविषयग्राहकस्य ज्ञानस्य **विशेषाधानादुपकारी स्यात्**।

**चेन्द्रियसंस्काराः।**[1]

**प्रागदृश्ये दर्शनशक्त्याधानात् उपकारकमिति चेत् अतीन्द्रियदर्शनादेव कथं प्रतिपत्तेर्न भेदकः?**

**एकस्मिन् प्रतिनियमे**[4]**ऽपि सामान्यान्तरस्य दर्शको न स्यात् व्यक्त्या च संस्कारात्। तद्दर्शने तद्व्यंग्येषु सामान्यानां कदाप्यनिश्चयोऽन्यो वा स्यात्। अविभागायास्तस्यास्तेषु विशेषाभावात्**[5]**व्यक्तेरिन्द्रियसंस्कारो न घटते इति**

---

नेन्द्रियसंस्का[2]र उपकारी स्यादिति सम्बन्धः।

एतदुक्तम्भवति। विषया हि विनियतास्ते स्वाकारस्यैव विज्ञानस्य साधनं नाकारान्तरयुक्तस्य (।) ततो विषयसंस्कारः प्रतिनियतत्वात् स्वविषयामेव विशिष्टां प्रतिपत्तिञ्जनयन्न विरुध्यते। इन्द्रियं तु स्वग्राह्ये विषयभेदे तुल्यं साधनमतस्त-त्संस्कारः सर्वस्मिंस्तद्ग्राह्ये प्रतिपत्तेर्भेदकः प्राप्नोतीति। नेन्द्रियस्य व्यक्तिभेद[3]-स्तदिन्द्रियग्राह्ये सर्वस्मिन् दृश्ये विषये स्पष्टाकारज्ञानजननाय संस्कारमाधत्ते। किन्तर्हि व्यक्त्युत्पत्तेः **प्रागदृश्ये** सामान्ये इन्द्रियस्य **दर्शनशक्त्याधानात्** कारणाद् व्यक्तिभेद **उपकारकं इति चेत्। अतीन्द्रियदर्शनादेव** च स्पष्टमिन्द्रियस्य संस्कारो गम्यते। व्यक्तिसन्निधानात् पूर्वमसमर्थम्पश्चात्तत्सन्निधाने समर्थमिति स व्यक्ति-भेदोतीन्द्रियं सामान्या[4]ख्यमर्थन्दर्शयन् **कथं प्रतिपत्तेः** सर्वत्र **न भेदको** भेदक एवेत्यर्थः।

एतदुक्तम्भवति। दृश्येपि तावदस्पष्टे स्पष्टाकारदर्शनशक्त्याधानाद् अञ्ज-नादिकृतः इन्द्रियसंस्कारः सर्वत्र तदिन्द्रियग्राह्ये विषये प्रतिपत्तेर्भेदको दृष्टः (।) किं पुनर्योतीन्द्रियस्यार्थस्य दर्शकस्तथा चान्यस्याप्यतीन्द्रियस्य परमाण्वादेर्दर्शकः स्यादिति भावः। सामान्यस्यैव[5] दर्शनायेन्द्रियस्य संस्कारमाधत्ते व्यक्तिभेदः ततो नास्त्यतिप्रसङ्ग इति चेदाह। **एके**त्यादि। एकस्मिन् सामान्ये द्रष्टव्ये इन्द्रिय-संस्कारस्य **प्रतिनियमस्तस्मिन्नभ्युपगम्यमाने** तस्मिन्नेव व्यक्तिभेदे शावलेयादिके-समवेतं **यत्सामान्यान्तरं** सत्ताद्रव्यत्वादि। **तस्य दर्शक इन्द्रियसंस्कारो न स्यात्**। इष्यते च। आत्मसमवेतानामेव सर्वसामान्यानान्दर्शनाये[6]न्द्रिय-संस्कारो नैकस्यैवेति चेदाह। **व्यक्त्या चे**त्यादि। **तद्दर्शन** इति तेषां व्यक्तिसमवे-तानां सामान्यानान्दर्शने। **तद्व्यङ्ग्येषु** तया व्यक्त्या व्यङ्ग्येषु। दृष्टश्च दूराद् द्रव्यमात्रदर्शने द्रव्यत्वमर्थत्वयोर्निश्चयेपि सति गोत्वादावनिश्चयः। यस्मिन्ननिश्च-यस्तस्य दर्शनाय नाहितः संस्कारभेद इति चेदाह। **एकनिश्चयो वे**ति न **स्यादि**ति **सम्बन्धः**। एकशब्दो[7]न्यार्थोऽनिश्चितादन्यस्यापि निश्चिताभिमतस्य द्रव्यत्वादे- 108a

---

[1] Bam-po-lṅa-pa = **पञ्चममाह्निकम्।**

**संस्कृतमिन्द्रियमयुक्तम् ।**

**व्यक्तेः सामान्यस्य** विज्ञानजननस्वभाव इति स्वभावात् **प्रच्युतेः संस्कृतेन्द्रियानपेक्ष** एव **विज्ञानोत्पादः। संस्कृतेन्द्रियसहकारित्वात् एकाकी न** शक्त इति **चेत्। अनाधेयातिशयस्यास्य कोयं** सहकारार्थः? **अनित्या**

464b हि भावा:[7] सहकारिणो विशिष्टस्यात्मनो लाभात् **तमपेक्षन्ते। यो ह्येषां जनक आत्मा** स हि **तदैव** ततो भवतीति जनक **आत्मा** हि **परस्परापेक्षः। सामान्यान्तरेणासिद्धलिङ्गस्य स स्वभावोऽपि** कुत **इन्द्रियापेक्षः**। . . . .[१] स हि **योऽस्वभावस्तेन** तु **कथमपि** न स्यात्। **व्यक्तिसंस्कृतेन्द्रियकार्य-**

---

निश्चयो न स्यात्। किङ्कारणं (।) तस्या व्यक्तेरविभागमथास्तेषु स्वात्मसमवेतेषु सामान्येषु विशेषाभावात्। न हि सा व्यक्तिः क्वचित् प्रत्यासन्ना क्वचिन्न। ततः सर्वस्य वा निश्चयः सामान्यस्य न वा कस्यचिदपीत्येवन्तावद् **व्यक्तेरिन्द्रियसंस्कारो न घटत इत्याख्यातम्** (।)

अधुनाभ्युपगम्याप्युच्यते। **व्यक्तेरि**त्यादि। व्यक्तेस्सकाशात् पक्ष[1]द्वयेपि सामान्यस्य **विज्ञानजननस्वभाव इति** कृत्वा (।) तस्माद् विज्ञानजननात् स्वभा**वात् प्रच्युतेः** कारणान्न हि समर्थस्य सहकार्यपेक्षा युक्ता। संस्कृतमिन्द्रियं सहकारि यस्य सामान्यस्य तत्तथोक्तन्तद्भावस्तस्मात्। नित्यत्वादनाधेयातिशयस्य सामान्यस्य **कोयं सहकारार्थः** (।) नैव कश्चित्।

**अनित्या ही**त्यादिना व्यतिरेकमाह। **सहकारिणः** सकाशाद्विशिष्टस्यात्मनो ला[2]भात्। **तमिति** सहकारिणं (।) कस्माद् (।) **यो ह्येषां** क्षणिकानां **जनक आत्मा** सहकारिसन्निधेः प्राङ्नासीत्। **तदैव** सहकारिसन्निधिकाले। ततः सहकारिणः सकाशाद् **भवतीति** कृत्वा। **एषामिति** क्षणिकानां।

ननु क्षणिकानामपि कथं सहकारिणो विशिष्टात्मलाभापेक्षा। सहभाविनाम्परस्परमनुपकार्योपकारकत्वात्। यश्च क्षणो जायते न तस्य सदसत्त्वकालयोस्स[8]हकार्यपेक्षेति (।)

अयुक्तमुक्तमुपकारी ह्यपेक्षत इति नैष दोषः। सत्तापेक्षयैतदुच्यते। अत एवाह। जन्यतैवैषां परस्परतोपेक्षेति। अनासाद्य **परमिति** सहकारिणं। **तत्स्वभावं** समर्थस्वभावं। न हि तस्य सामान्यस्य केवलस्य सहकारिविकलस्य प्राग् यो न **विज्ञानजननस्वभावः** स पुनः कथंचिद् भावी। **न हीति** सम्बन्धः। नित्यत्वादिति भावः।

---

[1] Yan-gar-ba.

त्वात्सहकारि सामान्यं वि[4]ज्ञानहेतुः। एवं चेत् सामान्यं व्यक्तेः पारम्पर्येण कार्यमुक्तं स्यात्।

अपि च।

**व्यञ्जकस्य च जातीनां जातिमत्ता यदीष्यते ॥१५१॥**

**प्राप्तो गोत्वादिना तद्वान् प्रदीपादिः प्रकाशकः।**

यो हि[3] कश्चित् विज्ञानहेतुः स हि तस्य व्यञ्जकश्चेत् गोत्वादिषु प्रदीपादेरपि विज्ञानहेतुत्वं स्यात्। आलोकसंस्कारापेक्षया चक्षुषार्थप्रतीतेः। तेन[4] प्रदीपादिः हि गोत्वादिना तद्वान् स्यात्।

न हि व्यक्तेरपि सामान्यस्याभिव्यक्तिः ज्ञानहेतुतां मुक्त्वाऽन्या काचित्, स्वभावातिशयस्याधातुमशक्यत्वात्[5]।

---

किञ्च (।) व्यक्तेः सामान्यसं[4]स्कारे सति तज्जन्यं सामान्यं स्यादिति परेणेन्द्रियसंस्कारोऽङ्गीकृतः (व्यक्तेः सकाशात्)। तथापि व्यक्तिजन्यत्वं प्रसज्यत इत्याह। **व्यक्ति**रित्यादि। तत्सहकारि। व्यक्तिसंस्कृतेन्द्रियसहकारि सामान्यम्वि-ज्ञानहेतुरित्यभ्युपगम्यमाने। व्यक्तिकार्यस्येन्द्रियस्य कार्यत्वात् सामान्यं व्यक्तेः पारम्पर्येण कार्यमुक्तं स्यात्। (।१४९-५०॥)

भवतु नाम सामान्यस्य व्यञ्जिका व्यक्तिः तावदस्या जातिमत्त्वं न युक्तम[5]-तिप्रसङ्गादित्याह। **अपि चे**त्यादि। जातीनां सामान्यानां व्यञ्जकस्य व्यक्ति-भेदस्य जातिमत्ता यदीष्यते। तदा गोत्वादेः प्रकाशकः व्य (?प्र) दीपादि (:) व्यञ्जकत्वात्तेन गोत्वादिना तद्वान् गोत्वादिमान् प्राप्तः। शावलेयादिवत्। गोत्वाधारः प्राप्त इत्यर्थः।

**यो ही**त्यादिना व्याचष्टे। गोत्वादिषु व्यङ्ग्येषु विज्ञानहेतुत्वं प्रदीपादेरप्यस्ति। कथमिति चेदाह। **तेज** इत्यादि[6]। तस्मादस्त्यालोकस्य विज्ञानम्प्रति हेतुत्वं। **तत** इति ज्ञानहेतुत्वात्। **प्रदीपादय** इति (।) आदिशब्दादिन्द्रियसंस्कारादिपरि-ग्रहः। तेषामपि ज्ञानहेतुत्वात्। व्यक्तेः सकाशाद् विशिष्टस्यैवाभिव्यक्तिः सामान्यस्य भवति न तथा प्रदीपादेरिति चेदाह। **न ही**त्यादि। व्यक्तेरपि सकाशात् सामा-न्यस्याभिव्यक्तिर्ज्ञानहेतुतां मुक्त्वा न ह्यन्या काचित्। यदि हि सामा[7]न्यस्या- 108b तिशयाधानं व्यक्त्या क्रियते न प्रदीपादिना। तदा भवेद्विशेषस्तच्च नास्ति। स्वभा-वातिशयस्याधातुमशक्यत्वात्। नित्यत्वात् सामान्यस्येति भावः। **समवाय** इत्यादि। व्यक्तौ च समवेतं गोत्वं न प्रदीपादौ। तस्येति सामान्यस्य। अजन्य-

**समवायोऽभिव्यक्तिश्चेत्, तस्योत्तरं हि तस्य समवायस्य अयोगादि-त्युक्तम्। एषां समवेतानामपि दृश्यतापत्तिः पूर्ववत् पश्चादपि न कश्चिद्**[6]
465a **विशेषः न ज्ञानहेतुता। समवायादेव ज्ञानहेतुत्वे**[7] **प्रदीपादावपि स एव प्रसंगः।**

**तद् नाधेयता सामान्यस्य नाऽप्याश्रयेण व्यक्तिरवृत्तेः न ज्ञानहेतुः।**

**अत एव—**

**व्यक्तेरन्या[1]थवानन्या येषां जातिस्तु विद्यते ॥१५२॥**
**तेषां व्यक्तिष्वपूर्वासु कथं सामान्यबुद्धयः।**

**तु शब्दोऽत्रधारणार्थे विद्यत एवेति। वस्तुसती। हि स्वसामथ्य**

---

जनकयोः कोयं समवाय इत्युक्तत्वात्।

भवतु नाम समवायस्तथाप्यस्य सामान्यस्य समवायमात्रं व्यक्त्या सह जातं नान्यः **कश्चिद्विशेषो**[1] विज्ञानजननलक्षणः। **पूर्ववदिति** व्यक्तिसमवायात् प्रागवत् **पश्चादपि** व्यक्तिसमवायेपि यद्यपि सामान्यस्य **न कश्चिद् विशेषस्तथापि** समवायबलादेव स्वविषयज्ञानजननमिति चेदाह। **समवायादेवे**त्यादि। **ज्ञानहेतुत्वेन** सामान्यस्याभ्युपगम्यमाने। **स्वाश्रयो** यो यत्र समवेतस्तत्समवायिनं। सामान्य-स्याभ्युपगम्यमाने। **स्वाश्रयो** यो यत्र समवेतस्तत्समवायिनं। सामान्या**दन्येषा**मपि परमाणु**समवेतानां** रूपादीनाम**पि दृश्यतापत्तिः**[2] **स्यात्**। समवायस्यैकत्वेन सर्वत्राविशेषात्। यथा हि सामान्यमतीन्द्रियमपि केवलस्समवायो दर्शयत्येवं परमाणुगतानपि रूपादीन् किन्न दर्शयेत्। यतश्च समवायपक्षेऽयन्दोषस्**तस्मात् ज्ञानहेतुतैव** सामान्ये व्यक्तेर्व्यञ्जकत्वं। तच्चेत्थं भूतं व्यञ्जकत्वन्तुल्य**म्प्रदीपा-दावपीति स एव प्रसङ्गः** प्राप्तो गोत्वादिना तद्वानित्यादिकः। (। १५०-५१॥)

**तदिति** तस्मान्नाधेयता **सामान्यस्य** स्वा[3]श्रये वृत्तिर्नापि स्वा**श्रयेण व्यक्ति**रभि-व्यक्तिः स्वाश्रये सामान्यस्य वृत्तिः। अतश्चा**वृत्तेः** कारणात् सामान्य**न्ना**नेकत्र व्यक्तिभेदे एकाकार**ज्ञानहेतुः**। न हि यो यत्र न वर्त्तते स तत्रात्मवृत्तिद्वारेण ज्ञानहेतुर्युक्तः।

**अत एवा**नेकत्र एकस्य सामान्यस्यावृत्तेः कारणात्। **व्यक्तेः** सकाशादन्या यदि **जातिरथवानन्या**। **येषां** वादिनां। **व्यक्तिष्वपूर्वासु** संप्रत्युत्पन्नासु पश्चाद्वा दृ[4]श्यमानासु। **तु** शब्दो विद्यते शब्दात्परेण द्रष्टव्यो**ऽवधारणार्थः**। अत एवाह। **विद्यत एवे**त्यादि। **वस्तुसती** येषां जातिरिति यावत्। **स्वसामर्थ्ये** सति स्वप्रतिपत्ति**द्वारेण**। **अन्यत्रे**ति व्यक्तिभेदे बुद्धिञ्जनयन्। किं विशिष्टां **स्वरूपानुकारिणी**मेकरूपानुगतां

**नान्यत्र स्वरूपानुका[2]रिणीं बुद्धिं जनयन् तेन संबंधमपेक्षते, अन्यथाऽतिप्रसङ्गात् ।**

**स च सामान्यस्य सतः तत्त्वान्यत्वपक्षयोर्न संभवति ।**

**एकत्र दृष्टस्यान्यत्र दर्शनासम्भवात्[3] सतः ॥१५३॥**

**सा हि बुद्धिर्भूतग्राहिण्येकभाविनी व्यक्त्यन्तरमेव स्कन्देत् तत्र दृष्टं किञ्चिद् अन्यत्र दर्शनं स्यात् ।**

**अनन्यत्वेऽन्वयाभावादन्यत्वेऽप्यनपाश्रयात् ।**

**सतोऽसम्भवः ।**

---

यत्र बुद्धिञ्जनयति तेन सम्बन्धमपेक्षते। सम्बन्धमन्तरेण स्वाकारबुद्धिजननेऽति-**प्रसङ्गात्**। (।१५१-५२॥)

**स चेति** स[5]म्बन्धो व्यक्त्यन्तरेण **सामान्यस्य सतो** विद्यमानस्य। **तत्त्वपक्षे-ऽन्यत्वपक्षे** च **न सम्भवति** (।) कस्माद् (।) **एकत्र** व्यक्तिभेदस्यार्थान्तरभूतस्यान-र्थान्तरस्य **चान्यत्र** व्यक्त्यन्तरे **दर्शनासम्भवात्। सा ही**त्यादिनैतदेव साधयति। **सा हि बुद्धिर्भूतग्राहिणी** वस्तुभूतसामान्यग्राहि**ण्येकभाविनी**। एकत्र व्यक्तिभेदे उत्पन्ना **व्यक्त्यन्तरमेव** सा **स्कन्देत्** गच्छेद् (।) व्यक्त्यन्तरमपि सामान्याका[6]रेण गृह्णीयादिति यावत्। यदि तत्रैकस्मिन् व्यक्तिभेदे **दृष्टं किञ्चिद्** वस्तुभूतं सामा-न्य**मन्य**त्रेति यत्र व्यक्तिभेदे तया स्कन्दितव्यं। **तच्चान्यत्र** दर्शनं। **सत** इति वस्तुभूतस्य सामान्यस्य न सम्भवतीति सम्बन्धः। किङ्कारणम् (।) आश्रयाद-**नन्यत्वे**भ्युपगम्यमाने**न्वयाभावात्**। न ह्येकस्मादव्यतिरिक्तस्तदात्मभूतोन्य-दन्वेति। आश्रया**दन्यत्वे**पि सामन्यस्य व्यक्ताव[7]**नपाश्रयात्**। अनन्तरोक्तेना-धाराधेयादिभावनिषेधेनाश्रयभावस्य निषिद्धत्वात्। यदि व्यतिरिक्तस्य सामा-न्यस्यासम्बन्धान्न व्यक्त्यन्तरे स्वाकारज्ञानजननम् (।) एवन्तर्ह्याद्यायामपि व्यक्तौ तत्तुल्यमिति किमुच्यते व्यक्तिष्वपूर्वास्विति व्यक्तिष्वित्येव वक्तव्यं। तथैकत्र दृष्टस्यान्यत्र दर्शनासम्भवादित्यपि वक्तव्यं। एकत्रापि व्यक्तिभेदे सम्बन्धमन्तरेण दर्शनासम्भवात्।[1]

सत्यमेतत्। अभ्युपगम्यैतदुक्तमित्यदोषः।

योपि मन्यते (।) तत्त्वान्यत्त्वपक्षे सामान्यस्यान्यदर्शनं न सम्भवत्यस्माकन्तु भिन्नाभिन्नमेव सामान्यं। तथा हि (।)

> "निर्विशेषं न सामान्यं भवेच्छशविषाणवत्।
> केनचिच्चात्मनैकत्वं नानात्वं चास्य केनचित्।
> यदा च शबलम्वस्तु युगपत् प्रतिभासते।

**स्वभावो हि तत्त्वमन्यत्त्वमेव वा न लंघयति। रूपस्यातद्भूतस्याऽन्यत्त्वाव्यतिक्रमात्। इदमेव रूपान्यत्वं यन्न तदेव न आकारान्तरवत् अविशेषा[4]त्। तच्चानन्यत् तदा तदेव तत् स्यात् अतत्त्वे वस्त्वन्तरवद् अन्यत्त्वप्रसंगात्।**

**न चैकवस्तुस्वभावस्य व्यक्त्यन्तरान्वावेश.[6] अव्यक्त्यन्तरत्वप्रसगात्। ततो व्यक्तेरव्यतिरेकिणो नान्वयिनी बुद्धिः नाऽपि व्यतिरेकिणः, तस्य**

---

तदान्यानन्यभेदादि सर्वमेव प्रलीयत" इति ।[1]

तन्निषेधार्थमाह। **स्वभा[2]वो ही**त्यादि। स्वभावात् तत्त्वमेवान्यत्त्वमेव **वा न लंघयती**ति सम्बन्धः।

ननु देशकालस्वभावाभेदेपि सामान्यविशेषयोरनुगतव्यावृत्तिरूपाभ्यां भेदोपीष्यत इत्यत आह। **रूपस्यानुगतस्य** स्वभावस्या**तद्भूतस्य** व्यावृत्तरूपस्वभावस्या**न्यत्त्वाव्यतिक्रमात्**। व्यावृत्तेभ्यो विशेषरूपेभ्यो भिन्नस्यानुगतरूपस्य सामान्यस्यान्यत्त्वमेव स्यादित्यर्थः। अस्त्यतद्रूप[3]त्वमन्यत्त्वमेव (।) कथमित्यत आह। **इदमेवे**त्यादि। **यन्न त**दित्यतद्रूपमित्यर्थः। एतावदेवान्यत्त्वलक्षणमित्यर्थः। **आकारान्तरवत्**। षष्ठ्यर्थे वतिः। तथा हि सुखाद् दुःखस्याप्यन्यत्त्वमसुख रूपं दुःखमिति कृत्वा। इयता चातद्रूपस्यान्यत्त्वलक्षणेन व्याप्तिरुक्ता। अस्य चान्यत्त्वलक्षणस्या**विशेषा**दभिमतेपि सामान्ये।

एतेन पक्षधर्म उक्तः। प्रयो[4]गस्तु। यद्वस्तुत्वे सत्यतद्रूपन्तस्य ततोन्यत्त्वमेव तद्यथा सुखाद् दुःखस्य। वस्तुत्वे सत्यव्यक्तिरूपं चेष्यते सामान्यमित्यतद्रूपत्वेनान्यत्त्वे व्यवहारस्य साध्यत्वात् स्वभावहेतुः। एवन्तावदतद्रूपत्वे सामान्यस्यान्यत्त्वमेवापादितम् (।) अथान्यत्त्वं नेष्यते तदा तत्त्वं प्राप्नोतीत्याह। **तच्चे**त्यादि। व्यक्तेर**नन्यत्तदा तदेव** व्यक्तिरूपमेव **तत्** सामान्यम्भवति। **अतत्त्वे** इत्यव्यक्ति[5]रूपत्वे **वस्त्वन्तरवदन्यत्त्वप्रसङ्गात्**। एतच्चानन्तरमेवोक्तं।

अस्त्वनन्यत्त्वं सामान्यस्य तथापि व्यक्त्यन्तरमनुयास्यतीत्यत आह। **न चैके**त्यादि। **एकव्यक्तिस्वभावस्य व्यक्त्यन्तरान्वावेशो**नुगमो व्यक्त्यन्तरस्वभात्वमिति यावत्। कस्मात् तस्यावगम्यमानस्या**व्यक्त्यन्तरत्वप्रसङ्गात्**। यदि शाबलेयात्मकं सामान्यं बाहुलेयस्यात्मभूतं भवेत्तदा बाहुलेयः शाबले[6]य एव जातः शाबलेयात्मकात् सामान्यादव्यक्तिरेकाच्छाबलेयवदिति कुतोस्य व्यक्त्यन्तरत्वं। **तत** इति तस्माद् **व्यक्तेरव्यतिरेकिणः** सामान्यात्सकाशाद् **अन्वयिनी**त्यनुगामिनी।

---

[1] Ślokavārtika, Ākṛti 10.

**क्वचिदप्यनाश्रयात्। अन्यस्यापि केनचित अनुपकार्य**[7]**(त्व)ात् व्यङ्ग्यव्यञ्जक-** 465b
**भावादेः अन्यस्यापि सम्बन्धस्याभावात्, असम्बन्धात्त् न ज्ञानजननप्रसंगात्। तद्
एकस्य वस्तुनो दर्शनेन एक**[1]**वृत्तस्य अन्यत्र वृत्तिमन्विच्छन्, तत्त्वान्यत्त्वे
आक्रामतीति न युक्तमेतद्।**

**तस्मादर्थेषु इयमेकाकारा वासनाऽऽहिता प्रतीतिर्भ्रान्तिरेव**[2]**। भावभेदो
वासनायाः प्रकृतिश्चास्या आश्रय इति निर्णीतमेतत्। प्रधानेश्वरादिकार्यशब्दा
भावेषु अतद्रूतभेदेषु कथमभेदेन वर्त्तन्ते**[3]**।**

---

नापि **व्यतिरेकिणः** सामान्याद् अन्वयिनी बुद्धिरिति प्रकृतं। कस्मात् (।) **तस्य**
व्यतिरिक्तस्य सामान्यस्य **क्वचिद्** भेदेऽ**नाश्रया**दप्रवृत्तेः (।) सम्बन्धमन्तरेण प्रवृ[7]-
त्त्ययोगात्। "वृत्तिराधेयता व्यक्तिरिति तस्मिन्न युज्यत" इत्यादिना च व्यङ्ग्य- 109b
व्यञ्जकस्याधाराधेयभावस्य च सम्बन्धस्य निषिद्धत्वात्। अन्यस्तर्हि सामान्य-
तद्वतोः सम्बन्धो भविष्यतीति चेदाह। **अन्यस्यापी**त्यादि। **व्यङ्ग्यव्यञ्जकभावा-**
देरिति पञ्चमी। आदिशब्दादाधाराधेयभावपरिग्रहः। एतस्मात् पूर्वनिषिद्धात्
सम्बन्धद्वयाद**न्यस्यापि** यस्य कस्य[1]चित् **सम्बन्धस्य** व्यक्तिं प्रति सामान्यस्या-
**भावात्**। किङ्कारणं (।) नित्यत्वात् केनचिद् व्यक्तिभेदेनानुपकार्यस्य सामान्यस्या-
**प्रतिबन्धेन**। न ह्यप्रतिबन्धस्य कश्चित् सम्बन्धोस्तीत्युक्तं।

एतेन **चान्यत्त्वेऽप्याश्रया**दिति श्लोकभागो व्याख्यातः। (।१५२-५३॥)

असत्सम्बन्धमपि सामान्यं व्यक्तिषु स्वरूपानुकारिणीं प्रतीतिं जनयतीति चेदाह।
**असम्बन्धा**दित्यादि। नास्य सम्बन्धोस्तीति विग्रहः। स[2]र्वस्मात् सर्वत्र प्रतीतिः
स्यादित्यर्थः। **तदिति** तस्माद**यमिति** सा मा न्य वा दी। **एकस्य** सामान्यस्य **दर्शनेन**
हेतुना। **एकस्मिन्** शाबलेये व्यक्तिभेदे **वृत्ति**र्यस्य तस्यान्यत्र व्यक्त्यन्तरे **वृत्तिम-
न्विच्छन्** वस्तुत्वेनेष्टस्य सामान्यस्य व्यक्तेः सकाशाद् ये **तत्त्वान्यत्त्वे**। ते **नाक्रमति**
**वस्तुनो** गत्यन्तराभावात्। चोक्तो दोष इत्य**युक्तमे**तद्वस्तुभूतात् सामान्यादनुयायि-
ज्ञा[3]नमिति।

यत एवन्त**स्मादर्थेषु** परस्परविवेकिष्विय**मेकरूपैकाकारा** प्रतीति**र्भ्रान्तिरेव** (।)
भिन्नेष्वभेदाध्यारोपेण वृत्तेः। कुतस्तर्हि सोत्पन्नेत्याह। **विकल्पे**त्यादि। विजातीय-
व्यावृत्तपदार्थानुभवेन या तथाभूतविकल्पस्य प्रकृत्या जनिका **वासनाहिता** ततः
समुत्थिताः। एतच्च प्रागेवोक्तमित्याह। **भावभेद** इत्यादि। भावानान्तत्कार्याणाम-
तत्कार्येभ्यो[4] भेदः। तथाभूतानां चानुभावेनाहिता या वासना तस्याः **प्रकृतिश्च**
**स्वभावश्चास्या आश्रय इति निर्णीतमेतत्** प्राक तत्र भावभेदः पारम्पर्येण कारणं

**तेऽपि संकेतवत् सन्तानवासनयोपस्कृतत्वाद् सर्वेषामर्थानां दर्शनेषु अनपेक्ष्य तद्भेदं तथाध्यवसायात् अतथाभूतकल्पितव्यवच्छेदेन[4] उपादानबलप्रभवा विकल्पारोपिता हि विकल्पविज्ञानप्रतिभासिन्यर्थे वर्त्तन्ते ।**

**नहि तेषु अतथाभूतेषु सामान्यस्य भेदोऽभेदो वा[5] कश्चित् । तथाभूतविकल्पान्तरेण भेदोऽपि प्रतिपत्तृणामध्यवसायवशात् स्यात् ।[6] तदध्यवसायादेव चेत् सामान्यं**

---

वासना प्रकृतिः साक्षादिति द्वयमुपन्यस्तं । यद्यन्यापोह एव शब्दवाच्यः कथन्तर्हीदानीमित्यादि । **प्रधानेश्वरादिकार्यशब्दा** इति प्र धा न कार्यं मी श्व र कार्यञ्जगदिति । आदिशब्दाच्छ ब्द ब्र ह्म[5]परिणाम इत्यादिशब्दानां परिग्रहः ।

**भावे**ष्वाध्यात्मिकबाह्येषु । **अतद्भूतो**ऽप्रधानादिकार्यात्मको भेदो येषान्ते तथोक्ताः । यद्यप्यप्रधानकार्यात्तेषां भेदः स्यात् तदा भवेत् प्रधानादिकार्यात्मको भेदः (।) स एव च सर्वेषामभेदः । तेना**भेदेना**निमित्तेन सर्वत्र **वर्त्तन्ते** । स च नास्ति भावानामन्यापोहवादिनो मतेनाप्रधानादिकार्यात्मकत्वात् । ततश्च[6] कथमेवंभूतेष्वभेदेन वर्त्तन्ते । नैवेत्यभिप्रायः । ततश्चाव्यापिन्यपोहव्यवस्थेति भावः ।

**तेपी**त्यादिना परिहरति । तेपि प्रधानादिकार्यशब्दा विकल्पविज्ञानप्रतिभासिन्यर्थे प्रवर्त्तन्ते इति सम्बन्धः । कथमित्याह (।) **संकेते**त्यादि । वस्तुन्य**तथाभूते** । इच्छावशाद् यः संकेतः प्रधानकार्यं **जगदिति** । तेनाहिता या वासनाशक्तिस्तयोत्तरोत्तरक्षणविप[7]रिणामे**नोपस्कृतत्वाद्** विज्ञानसन्ततेः **सर्वे**षां बाह्याध्यत्मिकानाम**र्थानां दर्शने**ष्वनुभवेषु सत्स्वप्य**नपेक्ष्य तद्भेद**मप्रधानकार्याद् भेदम्वस्तुगतं । यदि नामार्थानामप्रधानकार्याणामेव दर्शनम्वस्तुधर्मेण तथापि वस्तुस्वभावमनपेक्ष्येत्यर्थः (।) **तथाध्यवसायाद् यथासंकेत**मप्रधानकार्यानपि भावान् प्रधानकार्यत्वेनाध्यवसानात् । अतथाभूतकल्पितप्रधानकार्यत्वेन **कल्पि[1]तं** चैतन्यं सां ख्ये न तस्य **व्यवच्छेदेन** प्रधानकार्याभावा इति यद् **विकल्पविज्ञान**न्तत्**प्रतिभासिन्यर्थे ।** स एव विजातीयव्यवच्छेदेनान्यापोह इति भावः । किं भूतास्ते शब्दा इत्याह । **उपादाने**त्यादि । **विकल्प**हेतोर्वासनाया दाढर्च्यमु**पादानबल**न्तस्मात् **प्रभव** उत्पादो यस्य विकल्पस्य तस्मात् **समुत्थिताः**

एतदुक्तम्भवति । यदि नाम वस्तुनि तथाभूतभेदाभा[2]वस्तथापि विकल्पारोपित एवान्यापोहः शब्दानां प्रवृत्तेरङ्गन्ततो नास्याव्यापितादोष इति । प्रधानादिकार्यशब्दानामभेदेन प्रवृत्तौ तेषु भावेषु सामान्यमेव वस्तुभूतं किन्नेष्यत इति चेदाह । **न ही**त्यादि । **तेषु** प्रधानकार्यत्वेनाध्यारोपितेषु । **अतथाभुतेषु** प्रधानकार्येषु व्यक्त्यभावात सामान्यस्याभाव इति भावः ।

**किन्नेति चेत्, तेनाप्यवश्यं तत्र भेदो नान्तरीयकतयेष्टव्यः, स एव सामान्यकार्ये पर्याप्तः इत्येवं निष्प्रयोजना सामान्यकल्पना।**

**यदि सत्स्वसत्सु भावेषु नेयमर्थवती सामान्यबुद्धिः विप्लवात्**[7]**। नास्या विषयनिरू-** 466a

---

. अन्यापोहवादिनस्तु न[3] दोष इत्याह। **तथेत्यादि**। प्रधानादिकार्यत्वकल्पनयेत्यर्थः। **तदन्यस्या**प्रधानादिकार्यस्य **भेदो** व्यवच्छेदः प्रधानादिकार्यत्वेनारोपितानाम्भावानां **प्रतिपत्तॄणामध्यवसायवशात् स्यात्**।

तदध्यवसायवशादेव प्रतिपपत्रध्यवसायवशादेव शावलेयादिष्वनुवृत्तिप्रत्ययनिमित्तं **सामान्यं किन्नेति** चेत्।

नैतदस्ति। यस्मात् **तेन** सामान्यवादिना[1] सामान्यं कल्पयताप्य**वश्यं** तत्र शाबलेयादिषु विजातीयाद् **भेदो नान्तरीयकतये**ष्टव्योन्यथा गोत्वादेरसिद्धिः स्यात्। **स एव** भेदः **सामान्यकार्ये**ऽभिन्नशब्दप्रवृत्त्यादिलक्षणे **पर्याप्तः** शक्तः। **इत्येवं निष्प्रयोजना सामान्यकल्पना**।

एतदुक्तम्भवति। यथा प्रधानकार्येष्वपि भावेषु सामान्यमन्तरेण प्रधानादिकार्यशब्दास्तद्बुद्धयश्चैकाकाराः[5] प्रवर्त्तन्ते। तथा गवादिषु गवादिशब्दास्तद्बुद्धयश्चैकाकाराः किन्नेष्यन्ते किं सामान्येन पारमार्थिकेन कल्पितेन। दृष्टा च परैरपि सामान्यमन्तरेण बहुषु सामान्येष्वभिन्नाभिधानप्रत्ययवृत्तिः।

तदुक्तम्भ ट्टो द्यो त क रा भ्यां

"तस्मादेकस्य भिन्नेषु या वृत्तिस्तन्निबन्धनः।
सामान्यशब्दः सत्तादावेकधीकरणेन वेति।" श्लोक वा० आकृ० २४

तेनायमर्थः (।) यथा प्रत्येक[6]मनेकार्थसमवायित्वेन सत्त्वद्रव्यत्वादौ सामान्यशब्दस्तद्बुद्धिश्च सामान्यमन्तरेण प्रवर्त्तेते (।) न चानेकार्थसमवायित्वं सामान्यं यदेव सत्त्वे तदेव द्रव्यत्वादावस्ति। **निःसामान्यानि सामान्यानीति** वचनात्। न चोपचारात्तयोः (शब्दज्ञानयोः) वृत्तिरस्खलद्बुद्धिग्राह्यत्वात्। तस्माद् यथा सामान्यं विना तयोः सत्तादौ वृत्ति[7]स्तथा शाबलेयादिषु सामान्यमन्तरेण (।) 110b यथा शाबलेयोऽगोव्यावृत्तस्तथा बाहुलेयोऽगोव्यावृत्तस्तथा खण्डोऽगोव्यावृत्त इत्यभिन्नाभिधानप्रत्ययवृत्तिः किन्नेष्यत इत्यर्थः।

स्यादेतत् (।) सर्वत्र सामान्यबुद्धिर्निर्विषयेष्टैव केवलं सामान्यमन्तरेण क्वचिदविसम्वादो न स्यादित्यत आह। **यदीत्यादि**। यदिशब्दोभ्युपगमद्योतनार्थः।[1] यद्यस्यास्सर्वत्र निर्विषयत्वमभ्युपगम्यते। **सत्स्विति** विद्यमानेषु भावेष्वगोव्यावृत्तेषु। **असत्स्विति** परमार्थतः प्र धा ने श्व रा दिकार्यतयाऽविद्यमानेषु भावेषु। **नेय-**

**पणं प्रति कश्चिदादरः। क्वचिदस्या अविसंवादो वस्तुनि। तथाभूतस्य ग्रहणं न नियमात्।[1] प्रत्यक्षवेदनावत्। अतथाभावेऽपि भावादिति निवेदयिष्यामो निवेदितं च।**

**भेदविषयोऽप्ययं बहुलं भिन्नवस्तुदर्शनबलेन तेषु भावाध्यवसायात्।[2] तथा-**

---

**मर्थवती सामान्यबुद्धिः**। तया यथारोपितस्याभिन्नाकारस्य बाह्येष्वभावभा(?) वादतश्चाभूतग्रहाद्। **विप्लवो** भ्रान्तिरेवेति कृत्वा। **नास्यास्सामान्यबुद्धेर्निर्विष**याया **विषयनिरूपणं प्रति कश्चि[2]दादरः**। यदि सर्वैव सामान्यबुद्धिर्भ्रान्ता कथन्तर्ह्यनुमानाद् वस्तुसम्वाद इत्याह। **क्वचिदि**त्यादि। क्वचिद् **वस्तुन्यस्य** बुद्धेः सकाशादविसम्वादो **यस्म**(ात्) **कार्यकारणसम्बद्धाद्** यथोक्तात्। एतच्च निवेदितं प्राक्। "यत्रास्ति वस्तुसम्बन्धो यथोक्तानुमितौ यथे"त्यादिना (१।८३)। न **तथाभूतस्या**भिन्नरूपस्यानुमानग्राह्यस्य वस्तुनि समावेशाद् **विद्यमानत्वादनु**मानविकल्पस्य[3] वस्तुविसम्वादः। **प्रत्यक्षवदिति**। वैधर्म्यदृष्टान्तः। किङ्कारणम् (।) **अतथाभावे**पीति व्यतीतेपि वस्तुनि परम्परया लिङ्गानुसारेण भावात्। यद्वाऽ**तथाभावेपि** सामान्यरहितेऽपि वस्तुन्यभिन्नाकाराया बुद्धे**र्भावात्**। इति एवं। **निवेदयिष्यामः**। **निवेदितं च** प्राक्। **भावाभावानुविधानात् सामर्थ्य**मित्यन्तरे (।)

यदि सामान्यबुद्धिः स्वाकाराभेदेन भिन्नान् भावानभिन्नानध्यस्य विधिरूप[4]तया प्रतिपद्यते कथमस्या अन्यापोहविषयत्वमुक्तमित्यत आह। **भेदे**त्यादि। अस्याः **सामान्यबुद्धे**र्भिन्नपदार्थदर्शनबलेनेति विजातीयव्यावृत्तस्वलक्षणानुभवसामर्थ्येन। उत्पत्तेरित्यध्याहारः। बहुलग्रहणम्वस्त्वभावेपि शशविषाणादौ विकल्पबुद्धेः प्रवृत्तिख्यापनार्थं। **तेषु** भिन्नेषु स्वलक्षणेषु **भावाध्यवसायात** स्वाकाराभेदे[5]न स्वरूपाध्यवसायात्। दृश्यविकल्पयोरेकीकृत्य प्रवृत्तेरित्यर्थः। यस्माद् **भिन्नवस्तुदर्शनबले-नो**त्पद्यते बुद्धिरुत्पन्ना च तान्येव भिन्नवस्तूनि स्वाकाराभेदेन प्रतिपद्यते(।) तस्माद् भेदविषयत्वम्भिन्नविषयत्वमित्यर्थः। युक्तन्तावद्वस्तुदर्शनद्वारायातेष्वनित्यादिविकल्पेषु वस्तुदर्शनबलोत्पत्तेर्भेदविषयत्वं। यत्र तु न तथाभूतम्भिन्न[6]म्वस्तु। यथा नित्यादिविकल्पेषु। शशविषाणादिविकल्पेषु च (।)तत्र कथम्भेदविषयत्वं तेषामिति चेदाह। **तथा भावे**त्यादि। यथैव भिन्नवस्तुस्वभावग्राह्यानुभवबलेनोत्पन्ना अनित्यादिबुद्धयः स्वप्रतिभासे भिन्नभावाध्यवसायेन प्रवर्त्तमाना भेदविषयाः। एव**न्तथा**

111a **भावकल्पनाया**मेव स्वप्रतिभास एव भिन्नबाह्यभावाध्यवसा[7]यकल्पनायां सत्यां **भिन्नविषयत्वे सत्यपरत्रेति** अविद्यमानेषु नित्यप्रधानकार्यादिषु शशविषाणादिषु च

**भावकल्पनायामेव अपरत्र भावात्। अन्यच्च सामान्यान्यप्रतिपत्तिरियं स्वाश्रय-**

---

नित्यप्रधानादिकार्यशशविषाणादिविकल्पानाम्भेदविषयत्वस्य **भावात्। स्वाश्रयमा-**
त्रगतव्यक्तिभेद एव स्थितं। न तु व्यक्तिशून्ये देशे। तदुक्तं भट्टेन।

"पिण्डेष्वेव च सामान्यं नान्तरा गृह्यते यतः।
न ह्याकाशवदिच्छन्ति सामान्यन्नाम केचन॥ (आकृ० २७)
प्रत्येकसमवेतत्वन्दृष्टत्वान्न निरोत्स्यते।
तथा च सति नानात्वन्नैकबुद्धेर्भविष्यति॥ (वन० ३०)
यथा च व्यक्तिरेकैव दृश्यमाना पुनः पुनः।
कालभेदेप्यभिन्नैव जातिर्भिन्नाश्रया सती"ति॥[1] (वन० ३३)

उद्योतकरोप्याह।[2] "केन सर्वगतत्वं जातेरभ्युपगम्यते येन (मृत्पिण्डे) मृद्गवके गोत्वं स्यादपि तु स्वविषये सर्वत्र वृत्तिर्वर्त्तत इति सर्वगतेत्युच्यते। कः पुनर्गोत्वस्य स्वो विषयः। यत्र गो²त्वम्भवति। क्व पुनर्गोत्वम्वर्त्तते। यत्र गोत्व-निमित्तोनुवृत्तिप्रत्ययो भवति। क्व पुनरनुवृत्तिप्रत्ययं गोत्वं करोति (।) यत्तस्य साधनं। कः पुनर्नित्ये गोत्वे गोस्साधनार्थः। यत्तेन व्यज्यते। न हि ककुदादिमदर्थ-व्यतिरेकेण गोत्वस्य व्यक्तिरिति। न पिण्डेभ्योर्थान्तरं गोत्वम्पिण्डान्तरालेष्व-ग्रहणादिति बौद्धो ब्रुवाणः पिण्डान्तरालम्पर्यनुयोज्यः। किमिदम्पि³ण्डान्तरालं। किमाकाशमाहोस्विदभाव उत द्रव्यान्तरमिति। यद्याकाशं न तत्र गोत्वं न ह्याकाशं गौरिति प्रतीयते। एतेनाभावो द्रव्यान्तरं च व्याख्यातं।

"विशेषप्रत्ययानामाकस्मिकत्वाच्च। अयं पिण्डप्रत्ययव्यतिरेकभाक् प्रत्यय उप-जायमानो निमित्तान्तराद् भवति। दृष्टा खलु पिण्डव्यतिरेकभाजां प्रत्ययानां निमित्तान्तरादुत्पत्तिर्यथा चर्मवस्त्रक⁴म्बलेषु नीलप्रत्ययस्तच्च निमित्तान्तरं सामा-न्यमिति (।) तस्माद् व्यक्तिसर्वगतं सामान्यं। व्यक्तिशून्ये⁵पि देशे विद्यमान-त्वात्। न च तत्र सामान्यस्य प्रतीतिर्व्यञ्जिकाया व्यक्तेरभावात्। यत्रैव च व्यक्तौ सामान्यं प्रतीयते सैव सामान्याभिव्यक्तौ समर्था सामान्यप्रतिपत्त्यन्यथानुप-पत्त्या गम्यते नान्ये"ति।[2]

तदाह भट्टः।

"यद्वा सर्वगतत्वेपि व्यक्तिः शक्त्यनु⁵रोधतः।
शक्तिः कार्यानुमेयादिव्यक्तिर्दर्शनहेतुका।

---

[1] Ślokavārtika. [2] Nyāyavārtika.

**मात्रगतो वा, आकाशादिवत् सर्वत्र भावकल्पना स्यात् ।**

**न याति न च तत्रासीदस्ति पश्चात्;**

**तत्र यदि स्वाश्रयमात्रग[3]तकाले पक्षयोर्घटादिशून्ययोः घटादेरुत्पादे कथं भिन्नदेशद्रव्यवर्त्तिनः सामान्यस्य तेषु सम्भवः ? स्वतः पूर्वद्रव्यात् उत्पद्यमानं द्रव्ये न याति । निष्क्रिय[4]त्वाभ्युपगमात् । यस्मात् अन्यत्रभावात् तस्मादचलतः उभयान्तरालाव्यापिनो भिन्नदेशेन द्रव्येण योगो न युक्तः । प्राक् न च स तत्रासीत्,**

---

तेन यत्रैव दृश्येत व्यक्तिः शक्तन्तदेव तु ।
तेनैव च न सर्वासु व्यक्तिष्वेतत् प्रतीयते ।
भिन्नत्वेपि हि कासांचिच्छक्तिः काश्चिदशक्तिकाः ।
न च पर्यनुयोगोस्ति वस्तुशक्तेः कदाचन ।
वह्निर्दहति र्ना(?ना)काशं कोत्र पर्यनुयुज्यता''मिति ।[1]

तत्र तयोः **पक्षयोर्मध्ये यदि स्वाश्रयमात्रगनं** अपूर्वघटाद्युत्प[6]त्तौ घटत्वादिशून्ये प्रदेशे पश्चादुत्पन्नाद् घटादे**र्भिन्नदेशं** यद् द्रव्यन्तर्द्वर्त्तिनः **सामान्यस्य । कथन्तेषु** पश्चादुत्पन्नेषु घटादिषु **सम्भवो** नैवेत्यभिप्रायः । भवेत् सम्भवो यदि तस्मात् **पूर्व-द्रव्यात्** तत्सामान्यम्पश्चा**दुत्पद्यमानन्द्रव्यं याति** । तच्च नास्तीत्याह । **यस्मादि-**त्यादि । **तदिति** सामान्यं **पूर्वद्रव्या**दिति यत्र तत्पूर्वं समवेतं तस्मा**दुत्पित्सु** द्रव्य[7]-मुत्पत्तुमिच्छु पूर्वं घटादिकं न **याति** । अमूर्त्तत्वेन **निष्क्रियत्वात्** सामान्यस्य (।) पूर्वद्रव्यादचलतोपि भिन्नदेशेन योगो भविष्यति विम्बस्यादर्शे इवेति चेदाह । **न ह्रीत्यादि । अन्यद्रव्यवृत्ते**रित्युत्पित्सुद्रव्याद् भिन्नदेशद्रव्यवृत्तेर्भावस्य सामान्याख्यस्य ततः पूर्वकादाश्रया**दचलतस्तदुभयान्तरालाव्यापिनः** पूर्वपश्चादुत्पन्नद्वयान्तराला-व्यापिनः स्वाश्रयाद् **भिन्नदे[1]शेन** द्रव्येण योगो **न हि युक्त** इति **सम्बन्धः** । बिम्बस्य तु भिन्नदेशे नादर्शेन योगोस्तीति ब्रुवाणः कथन्नोन्मतः स्यात् । सामग्रीबलाद् भ्रान्तं ज्ञानं प्रतिबिम्बानुगतादर्शप्रतिभासि तत्र जायते । यथोक्तं (।)

111b

"विरुद्धपरिणामेषु वज्रादर्शतलादिषु (।)
पर्वतादिस्वभावानां भावानां नास्ति सम्भव" इति ।

येपि तत्र भावान्तरोत्पत्तिमिच्छन्ति (।) तेषामपि न बिम्बेन योगोस्तीति यत्किञ्चिदेत[2]त् । उत्पित्सुद्रव्यात् **प्राक्** सामान्यात्मा **न च तत्रो**त्पित्सुदेशे **आसीत्** । व्यक्तिशून्ये देशे तस्य स्थानानभ्युपगमात् । अस्ति पश्चात् तत्सामान्यं

[1] Ślokavārtika. Akṛtī. 25 29

**पश्चा[5]दपि नास्ति। तत्राऽपि अनुत्पादात् न च कुतश्चित् आगतः, एवं अन्यत्र जाड्यात् क इमं भारं सहेत।**

**न चांशवत् ॥१५४॥**

**जहाति पूर्वं नाधारं;**

**उत्पित्सुदेशात् भिन्नदेशं। तयोश्च।**

**अहो व्यसनसन्ततिः।**

**भिन्नदेशयोर्वस्तुनोः सम्बन्धो द्विधा भवेद्—नानावयवात्मकं एकात्मकं वा।**

---

व्यक्तावुत्पन्नायां। सामान्यशून्याया व्यक्तेरनभ्युपगमात्। न च तत्र देशे व्यक्त्या सहोत्पन्नं नित्यत्वात्। न च व्यक्त्युत्पाद एव सामान्यस्योत्पादो भिन्नत्वात्। अभिन्नत्वे वा ततो न सामान्यविशेषभावः स्यात्। **न च कुतश्चित्** पूर्वका[3]द् व्यक्तिविशेषादागतं। एतन्न **याती**ति यदुक्तन्तस्यैवोपसंहारद्वारेणोपन्यासः।

यावद्भिः प्रकारैः सामान्यस्य व्यक्त्यन्तरे सम्भवस्ते प्रकारा नेष्यन्ते तत्र च सामान्यमिष्यत इति व्याघातः। न च प्राज्ञानान्दुःसहत्वाद् भारः। अत एवाह। **क इमम**ित्यादि। प्राज्ञो हि कथमयुक्तं सहते। जडस्त्वज्ञानाद् युक्तायुक्तविचारणाक्षमः सहेतापि। यदाहान्य[4]त्र **जाड्या**दिति।

ननु चोत्पित्सुद्रव्ये सामान्यस्योत्पत्तावपि समवेतत्वं प्रतिभासादेवावगन्तव्यं (।) स च व्यक्तिसमवेतत्वप्रतिभासोनुत्पादेपि सामान्यस्य विद्यत एवेति किमुत्पादेन व्यक्तिसमवेतञ्च सामान्यस्य रूपमिष्यते। तेन तत्पूर्वद्रव्यसमवेतमपि ततोऽविचलदुत्पित्सुद्रव्यसमवेतं च प्रतिभासत इति कथन्न **याती**त्यादि दूषणायो[5]च्यतेभीष्टत्वात्।

सत्यं। यो हि सामान्यस्य प्रतिभा[स]नेच्छति तस्येदं दूषणं स्यात् **प्रतिभासत** इति। यस्तु सामान्यप्रतिभासोलीक इति मन्यते तस्य कथं दूषणं। अलीकत्वं चोत्पित्सु द्रव्यं न याति न च तत्रासीन्न चोत्पन्नमित्यादिना ग्रन्थेन सामान्याभावेपि सामान्यावभासिनो ज्ञानस्योत्पत्तेः प्रतिपादितमाचार्येण (।) न च प्रतिभासनादेव[6] सत्यत्वं। द्विचन्द्रादेरपि सत्यत्वप्रसङ्गात्।

नापि प्रत्यक्षबाधैका बाधा। अनुमानबाधाया अपि बाधात्वात् (।) यदि तदंशवत् स्यात्तदैकेनांशेन पूर्वम्भिन्नाधारे स्थितमंशान्तरेणोत्पित्सु द्रव्यं व्याप्नुयात्। अनंशम्वा पूर्वमाधारं हित्वा। द्वयमप्येतन्नास्तीत्याह। **न चे**त्यादि। **पूर्वमाधार**मिति सूत्रभागं। **उत्पित्सुदेशाद् भिन्नदेशमि**ति मिश्रके[7]ण स्पष्टयति। **तयोश्चे**ति पूर्वपश्चादुत्पन्नयोर्द्रव्ययोः। 112a

**भिन्ने**त्यादिना व्याचष्टे। **द्विधा भवे**दिति। नानावयवात्मतया। पूर्वाधार-

466b **अन्यो[7]न्याभ्यां तत्सम्बन्धात् आलोकरज्जुवंशवत् । न च सावयवत्वमन्तरेण भिन्नदेशिनां केषांचित् एकत्र वृत्तिर्युक्ता तस्यात्मद्वयाभावात्, एकात्म[1]नश्च तत्प्रदेशवर्त्तिसम्बन्धरूपत्वात्, अन्यथा तत्सम्बन्धायोगात्। एकस्याधेयस्य यत्र स्थानं तस्मिन्नेव काले तेनात्मना तत्र न स्थानमिति एकस्य स्थिता[2]स्थितात्मनोर्युगपद् विरोधाद् अयुक्तमेतत् ।**

---

त्यागेन वा। प्रथमन्तावत् पक्षमाह। **नाने**त्यादि। एतच्च परप्रसिद्ध्योच्यते। न त्वेकमनेकावयवात्मकमिष्यत इत्युक्तं। **अन्यान्योभ्याम**वयवाभ्याम्परस्परभिन्नाभ्यामंशाख्या[1]**न्तत्सम्बन्धात्**। ताभ्याम्भिन्नदेशाभ्यां सम्बन्धात्। **आलोको** हि सावयवत्वादन्येनावयवेन घटेन सम्बध्यते। अन्येन घटादिभिः। एवं **रज्जुवंश**-दण्डादावपि स्वसम्बन्धिभिः।

**न ही**त्याद्यस्यैव समर्थनं। अथ सावयवत्वेन सामान्यमनेकवृत्तीष्येत। तथापि कथमेकमनेकत्र वर्त्तेत। यस्मादेकदेशाः सामान्यस्य वर्त्तन्त इति (।) ये च तदैकदे[2]शाः सामान्यस्य प्रत्येकम्पिण्डेषु वर्त्तन्ते। ते किं सामान्यात्मका उत नेति (।) यदि सामान्यात्मका एकमेकत्र वर्त्तेत इति प्राप्तं। न चैकमेकत्र वर्त्तमानं सामान्यमिति युक्तम्वक्तुं। अथ न सामान्यात्मकास्ते। कथं सामान्यमनेकत्र वर्त्तेत इत्युच्यते। एकदेशेषु च सामान्यस्य यद्येकदेशान्तरेण वृत्तिस्तदानवस्था स्यात्। **न च सावयवत्वमन्त[3]रेणै**कस्यानेकत्र **वृत्तिर्युक्ता**। अथानवयवं प्रतिपिण्डं परिसमाप्त्या पिण्डवदसाधारणत्वान्न सामान्यम्भवितुमर्हति। किं कारण**न्तस्या**नवयवस्य सामान्यस्यैकेन द्रव्येण सम्बन्धो य आत्मा। तद्व्यतिरेकेण **द्वितीयात्माभावात्**। **एकात्मनश्च** तस्य सामान्यस्य **तत्प्रदेशवर्त्तिसम्बन्धरूपत्वात्**। उत्पित्सुघटदेशात्। पूर्वदेशवर्त्ति यद् घटद्रव्य[4]न्तत्सम्बन्धिरूपत्वात्। नास्ति भिन्नदेशेन युगपद्योगः। **अन्यथे**त्युत्पित्सुदेशद्रव्यसम्बन्धरूपत्वे **तत्सम्बधायोगात्**। तेन पूर्वद्रव्येण सम्बन्धायोगात्। तस्मादेकव्यक्तिनियतात्मनः सामान्यस्य नास्ति **तस्मिन्नेव काले** भिन्नदेशेन द्रव्येण सम्बन्धः। सम्बन्धे वा पूर्वव्यक्तिनियतैकात्मकत्वेन सामान्यस्य पूर्वव्यक्तौ स्थितिस्तस्मिन्ने[5]व काले भिन्नदेशव्यक्तिसम्बन्धेनास्थितिरेतच्चविरुद्धमित्याह। **एकस्याधेय**स्येत्यादि। **तत्र स्थानमि**ति पूर्वव्यक्तौ। **तदैव** तस्मिन्नेव काले व्यक्त्यन्तरे त्वयाभ्युपगमात्। पूर्वव्यक्तित्यागमन्तरेणैकस्य चान्यत्रान्वयायोगात्। तत्र पूर्वस्यां व्यक्तौ। **तेनैव** पूर्वव्यक्तिनियतेनात्मना। तस्य सामान्यस्यास्थानमित्य**युक्तमे**तत्। किङ्कारणं।[6] **तत्स्थिते**त्यादि। तस्यामेव व्यक्तौ **स्थितास्थितात्म**नोः स्वभावयो**रेकस्य** सामान्यस्य **युगपद् विरोधात्**।

**सर्वत्र सर्वदा सर्वाकारेण स्थितात्मनेति चेत्, तत्स्वभावदर्शनाश्रयप्रत्ययः**

---

ननु यथैकत्यागेनापरत्र वृत्तिरेवमपरापरावयवैर्बहुषु च वृत्तिर्दृष्टत्वादिति द्विविधाभ्युपगम्यते। तथा सामान्यं यदा येनैव रूपेणैकत्र वृत्तन्तदैव तेनैव रूपेणान्यत्र वर्त्तते दृष्टत्वादिति सापि तृतीया वृत्तिः[7] किन्नाभ्युपगम्यते। तदुक्तम्भट्टेन॥ 112b

"न हि द्वैविध्यमेवेति वृत्तेरस्ति नियामकं।
त्रिविधापि हि दृष्टत्वात् सम्भवेद् द्विविधा यथे"ति।[1]

उद्योतकरोप्याह। "न गोत्वमवयवी न च समुदायस्तस्मान्न तत्र कृत्स्नैकदेशशब्दौ स्तः। न चेत् तत्रैतौ शब्दौ स्तः तस्माद् गोत्वं किं कृत्स्नम्वर्त्तते उतैकदेशेनेति न युक्तः प्रश्नः। कथन्तर्हि गोत्वं गोषु वर्त्तते। आश्रयाश्रयिभावेन[1]। कः पुनराश्रयाश्रयिभावः (।) समवायः। तत्र वृत्तिमद् गोत्वं। वत्तिः समवाय इह प्रत्ययहेतुत्वात्तेन सर्वत्र पूर्वद्रव्य उत्पित्सुद्रव्ये च समवाय एव वृत्तिरतः कथमुच्यते (।) स्थितास्थितात्मनोरेकत्र विरोधादयुक्तमेतदि"ति।[2]

एतदेवाह। सर्वत्रेत्यादि। **सर्वत्र** पूर्वव्यक्तावुत्पित्सुद्रव्ये च। **सर्वदे**वोत्पत्सुद्रव्योत्पादेपि यदा वर्त्तते तदापि द्रव्य[2]न्न **जहाति**। तेन स्थितास्थितात्मनोर्नैकत्र विरोधो स्थितात्मनोऽभावादिति। तदयुक्तं। न ह्येकसमवेतत्वमेवान्यव्यक्तिसमवेतत्वमन्यस्यास्तत्र प्रतिभासनप्रसङ्गात् (।) तस्मादेकसमवेतत्वान्यसमवेतत्वयोः परस्परं भेद एव। तच्चाभिन्नं सामान्यादेकसमवेतत्वादननुगमवदन्यत्र सामान्यस्याप्यननुगमप्रसङ्गः। यद्वैकव्य[3]क्तिकालादिसम्बन्धेन ज्ञानजननशक्तिर्यासामन्यस्य। न साऽन्यव्यक्त्यादिसम्बन्धत्वेन। तेनैकस्यां व्यक्तौ सामान्यस्य ज्ञानजननशक्तिरन्यस्यां ज्ञानजननशक्तिविरोधिनी। शक्तिश्च शक्तिमतोऽभिन्ना। शक्तिलक्षणत्वाच्च वस्तुनः। तेन यद्वस्त्वेकन्तदेकवृत्त्येवेति व्याप्तिसिद्धिः। वस्तु चैकं सामान्यं यदि कथमन्यत्रापि वर्त्तेत। तथाभूत[4]स्य प्रतिभासादिति चेत् (।) न। प्रतिभासो ह्यप्रतिभासस्य बाधको नावस्तुनस्तस्यापि प्रतिभासनात्। अस्य तु वस्तुप्रतिभासो बाधको न चानुगतं वस्त्वस्तीत्युक्तं। अत एव न प्रतिज्ञायाः प्रत्यक्षबाधा। सामान्यज्ञानस्य प्रत्यक्षत्वाभासा(?)च्च।

ननु यावदस्याप्रामाण्यं न तावदनुमानस्य प्रवृत्तिर्यावच्च नानुमानस्य प्रवृत्तिस्तावन्नास्य[5] प्रत्यक्षाभासतेत्यन्योन्याश्रयत्वं स्यादिति चेत् (।) न। यतोनुमानं प्रतिभासमानस्य वस्तुत्वसन्देहमात्रेणैव प्रवर्त्तते। नाप्यस्याप्रामाण्यनिमित्तमनुमानम्प्र-

---

[1] Ślokavārtika. [2] Nyāyavārtika.

**सर्वत्र सर्वाकारः स्यात्।**[3] **तथा च सति गव्यप्यश्व इति प्रत्ययः स्यात्। अश्वे स्थितात्मनोर्द्रव्यसम्बन्धात्, तत्स्वभावप्रतिपत्त्या च तथा निश्चयाद्, तस्यैकस्याकारान्तराभावात्।**

**तस्माद् अनवयवं अनेकदेशे युगपन्नाधीयते।**

**पूर्वमाधारं हित्वाऽपि भिन्नदेशस्थानमित्यपि नाभिमतः।**

**अन्यत्र वर्त्तमानस्य ततोऽन्यस्थानजन्मनि ॥१५५॥**

---

वर्त्ततेपि तु स्वसाध्यप्रतिबद्धलिङ्गनिमित्तम् (।) अतः सामान्यज्ञानस्य बाधकन्तस्मान्नास्ति परमार्थत एकम्वस्त्वेकदाऽनेकवृत्तिः। वृत्तौ तु तत्स्थितास्थितात्मनोर्विरोध एव।[6] आचार्यस्त्वभ्युपगम्यापि दोषमाह। **तत्स्वभावे**त्यादि। । सामान्यस्वभावस्य **दर्शनमाश्रयो** यस्य प्रत्ययस्य स **सर्वत्र** भिन्नजातीयेपि द्रव्ये **सर्वाकार. स्यात्। तथा च सति गामप्यश्व** इत्यादि। किङ्कारणम् (।) इत्याह। **अश्वे** 113a **स्थित** आत्मा यस्य द्रव्यत्वस्येति विग्रहः। गमकत्वाद् व्यधिकरणस्यापि[7] बहुव्रीहिः[1]। अश्वे स्थित इति वा **साधनं कृते**ति समासः। पश्चादात्मशब्देन द्विपदो बहुव्रीहिः। **तत्स्वभावप्रतिपत्त्या** चाश्वस्थितस्वभावद्रव्यत्वप्रतिपत्त्या च **तथा निश्चयाद्** गौर्द्रव्यमिति निश्चयात्।

स्यादेतत् (।) नाश्वसमवेतद्रव्यत्वप्रतिपत्त्या द्रव्यमिति प्रतीतिः (।) किन्तर्हि (।) द्रव्यत्वमात्रप्रतिपत्त्येत्यत आह। **तस्य चे**त्यादि। **तस्य** चाश्वे द्रव्यत्वस्यै**क**[1]**स्याद्**दृष्टस्याप्रतिपन्नस्याश्वसमवेतत्वव्यतिरेके**णाकारान्तर**स्याश्वास(:स)मवेतत्वलक्षणस्या**भावात्**। तस्मादश्वसमवेतेनैव द्रव्यत्वेन विशिष्टां गां द्रव्यमिति प्रतिपद्यमानोश्व इति प्रतीयात्। यस्य त्वश्वव्यतिरिक्तमेव द्रव्यत्वसामान्यन्तेन च विशिष्टमसौ गां प्रतिपद्यमानो नियमेनाश्व इति प्रतीयात्।

**तस्मादि**त्युपसंहारः। अनवय[2]वं सामान्य**मनेकदेशे**ऽनेको देशोऽस्येति तस्मिन् घटादौ **युगपन्नाधीयते**। नाधेयतां प्रतिपद्यते। इयता च न **चांशवदि**त्येतद् व्याख्यातं।

**जहाति पूर्वन्नाधार**मित्येतत् पूर्वेत्यादिना व्याचष्टे। स चेति पूर्वाधारत्यागः सामान्यस्य **नाभिमतः**। (१५४-५५)

**अन्यत्रेति** पूर्वव्यक्तौ **वर्त्तमानस्य** सामान्यस्य **स्वस्मात्** पूर्वाधारदेशाद् **अचल**तस्ततः पूर्वाधार[3]देशादन्यत्र स्थाने जन्म यस्य द्रव्यस्य तस्मिन् वृत्तिरित्यतियुक्ति-

---

[1] Pāṇini 2.2

**स्वस्मादचलतः स्थानाद्वृत्तिरित्यतियुक्तिमत् !**
**यत्रासौ वर्तते भावस्तेन संबध्यतेऽपि च ॥१५६॥**
**तद्देशिनञ्च व्याप्नोति किमप्येतन्महाद्भुतम् !**

**इति संग्रहश्लोकौ।**

यः सर्वत्रगतसामान्यवादी तस्यापि—

**व्यक्तौ वैकत्र सा व्यक्त्याऽभेदात् सर्वत्रगा यदि ॥१५७॥**
**जातिर्दृश्येत सर्व्वत्र;**

न जातेः कदाचिदभिव्यक्तिरिति निषिद्धमेतत्। तस्मात् अनपे[7]क्षितपरोपस्कारा नित्यं वा दृश्येत, कदाचिद् अकृता वा; तत्स्वभावावस्थानात्, अन्यस्वभावस्य कुतश्चिदप्यनुत्पादात्। 467a

---

मदित्युपहसति (१५६)

पूर्वव्यक्तिदेशादविचलदपि सामान्यन्ततोन्यदेशन्द्रव्यं व्याप्नोतीति चेदाह। **यत्रे**त्यादि। यत्र देशेऽसौ पश्चात्कालभावी भावो वर्त्तते। तेन देशेन सामान्यं न सम्बध्यते स्वव्यक्तिसर्वगतत्वाभ्युपगमात्। यत्र देशे सामान्यं न वर्त्तते तद्देशिनं च पश्चात् काल[4]भाविनम्भावं व्याप्नोतीति न्यायातिक्रान्तत्वात् किमप्येतन्महाद्भुतमिति प्रकारान्तरेणोपहसति। न हि यो यत्र देशे न वर्त्तते स तद्देशं व्याप्नोतीति न्यायानुसारिणा शक्यमवसातुं (१५७)

सर्वगतत्वकल्पनामपि निराचिकीर्षन्नाह। **यस्ये**त्यादि। तस्यापि सर्वगतसामान्यवादिनः सर्वत्रगा यदि जातिस्तदैकत्र शावलेयादौ या तस्याव्यक्तिरभिव्यक्तिस्त[5]या करणभूतया। सा जातिस्सर्वत्र व्यक्तिशून्येपि देशे। विजातीयव्यक्तिभेदे च **व्यक्त्यैव** प्रकाशितै**वाभेदादेक**त्वात् सर्वत्र व्यक्तिशून्येपि देशे दृश्येत।

एतदुक्तम्भवति। यद्यपि व्यक्तिशून्ये प्रदेशे विजातीयव्यक्तौ च स्वव्यक्तेर्व्यञ्जिकाया अभावस्तथापि स्वव्यक्त्यभिव्यक्तेनैव रूपेण तत्रावस्थानाज्जातेरुपलम्भः स्यान्नो चेत् स्वभावनानात्वं[6] प्राप्नोतीत्येकरूपा चेष्यत इति भावः। **न जाते**र्नित्याया अनाधेयातिशयत्वेन **कदाचिदभिव्यक्तिरिति निषिद्धमेतत्**।" वृत्तिराधेयता व्यक्तिरिति तस्मिन्न युज्यत" (१।१४६) इत्यत्रान्तरे। यत एवन्**तस्मात्** सा जाति**र्नित्यमनपेक्षितपरोपस्का**रानाधेयातिशया। एवम्भूता यदि स्वभावेन स्वविज्ञानजननयोग्या। तदा नित्यन्**दृश्येत**[7] व्यक्तेः प्राक् पश्चाच्च। अथ न योग्या तदा कदाचिद् दृश्येत। किं कारणं (।) **तस्मिन्** विज्ञानजननयोग्य**स्वभावे** तद्विपरीते **चावस्थानात्**। सर्वकालमेकरूपत्वादित्यर्थः। असमर्था व्यक्त्यसन्निधाने तत्सन्निधाने तु समर्था भवति। 113b

**अभ्युपगम्यापि व्यापिन्य[1]पि एकत्र व्यक्ता भेदाभावात् व्यक्तैव सर्वत्रेति व्यक्तिशन्येष्वपि देशेषु न दृश्येत ।**

**न च सा जात्यपेक्षिणी ।**
**व्यञ्जकाप्रतिपत्तौ[2] हि न व्यंग्ये संप्रतीयते ॥१५८॥**
**विपर्ययः पुनः कस्मादिष्टः सामान्यतद्वतोः ।**

**यो हि स्वाश्रयेन्द्रियसंयोगापेक्षं सामान्यं आश्रयशून्येषु प्रदेशेषु न ृश्यत ति प्रतिवक्ति, तस्या[3]पि स्वाश्रयेन्द्रियसंयोग उपकारक इति ततस्तद्दर्शी यथास्थितां**

---

ततो न नित्यन्दर्शनमदर्शनम्वा जातेरित्यत आह । **स्वभावे** त्यादि । नित्यत्वेनानाधेयातिशयत्वादिति भावः ॥ (१५७-५८)

यदि जातेर्नास्ति व्यक्ति[1]स्तत्किं व्यक्त्यैवैकत्र सा व्यक्तेत्याद्युच्यत इत्यत आह । **अभ्युपगम्या**पीत्यादि । **व्यापि**न्यपि जातिः । **एकत्रा**श्रये व्यक्ता **भेदाभावा**देकत्वाज्जाते**र्व्यक्तैव** प्रकाशितैव **सर्वत्र व्यक्तिशून्ये देशे** । विजातीये च व्यक्तिभेदे । **व्यक्तिशून्येष्वपीत्यपि** शब्दाद् विजातीयेपि व्यक्तिभेदे । अपि च **न च सा** जाति-**व्यक्त्यपेक्षिणी** । व्यञ्जिका व्यक्तिर्न्नापेक्ष्येत । व्यक्तेर्जातिव्यञ्जकत्वा[2]भावादिति भावः । यदि हि व्यञ्जिकां व्यक्तिमपेक्षेत । तदा **व्यञ्जकाप्रतिपत्तौ न व्यङ्ग्यस्य प्रती**तिः स्यान्न हि प्रदीपाद्यप्रतीतौ घटादेः प्रतीतिर्भवति । तथेहापि व्यक्त्यप्रतीतौ न जातिप्रतीतिः स्यात् । **सामान्यतद्वतो**स्तु व्यङ्ग्यव्यञ्जकयो**र्विपर्ययः पुनः कस्मादिष्टः** । तथा हि नागृहीतविशेषणाविशेष्ये बुद्धिर्वर्त्तत इति नियमात् ।[3] प्रागेव सामान्यग्रहणमिष्टन्तद्द्वारेण तु व्यक्तेः । ततो व्यञ्जिकाया व्यक्तेर्ग्रहणमन्तरेणापि व्यङ्ग्याभिमतस्य सामान्यस्य प्रतिपत्तिरिष्टेति विपर्ययः ।

**यो ही**त्यादिना व्याचष्टे । **स्वाश्र**यो यत्र समवेतं सामान्यं । सामान्यग्राहक**मिन्द्रियं** च तयो**स्संयोग**स्तद**पेक्षा** प्रतीतिर्यस्य **सामान्यस्य** तत्तथोक्तं । **आश्रयशून्याः** प्रदेशा विजातीय[4]व्यक्त्यध्यासिता व्यक्तिशून्याश्च । तेषु **न दृश्यते** । यथोक्तसंयोगाभावात् । तस्याप्येवं वादिनः । क्वचिद् व्यक्तिदर्शने सत्यस्त्येव**ाश्रयेन्द्रियसंयोगो** जातेः सर्वत्र स्थितताया **उपकारक** इति । **तत** आश्रयेन्द्रियसंयोगाद्धेतो**स्तद्दर्शी** क्वचिद् व्यक्तिभेदे जातिदर्शी **यथास्थितां** सर्वदेशव्यापिनीञ्जाति**म्पश्येत्** । यत्रैव व्यञ्जिका व्यक्तिस्तत्रैव जातेः[5] स्वरूपं दृश्यं नान्यत्रेति चेदाह । **न ही**त्यादि । **तस्यामिति** जातौ । क्वचिद् व्यक्तौ **दृश्यमानाया**न्तदीयामिति सामान्यसम्बन्धि । एकस्य दृष्टादृष्टविरोधात् । एवन्तावद् व्यक्तेर्व्यञ्जिकात्वमभ्युपगम्य च **शब्दोपात्तोर्थो व्याख्यातः** ।

**पश्येत्। न हि तस्यां दृश्यमानायां अदृष्टा सा एवं युक्ता, सामान्यस्य व्यक्ति[4]-व्यङ्ग्यत्वात्। व्यञ्जकविप्रयुक्तेषु देशेषु न दृष्टेत्यपि निराकृतं, तत्र तथाभूतस्य व्यंग्यव्यञ्जकभावस्याभावात्। स्वयं प्रतीत्य परप्रत्यायनहेतुर्हि प्रदीपादिप्रकाशकः स्वरूपशून्ये देशे व्यंग्यो न स्वयं दर्शकः, नैवं व्यक्तिरपि सामान्यस्य, विपर्ययात्।**

• **कथं हि सा सामान्स्य व्यञ्जिका[6] स्यात्, तत्प्रतिपत्तिद्वारेण दृश्या च स्यात्।**

---

अधुना न सा व्यक्त्यपेक्षिणीत्यादि व्याख्यातुमाह। **व्यक्तिव्यङ्ग्यत्वा**दित्यादि। तस्य च मिथ्यात्वमनन्तरोक्तेनैव[6] प्रतिपादितं। न ह्येकस्य दष्टादृष्टमस्त्यतोऽ-पूर्वपक्ष एवायं केवलन्दोषान्तराभिधानार्थं गजनिमीलनं कृत्वोपन्यस्तं। तथाभूतस्येति न्याय्यस्य। **तत्रेति** जातितद्वति। न्याय्यस्य **व्यङ्ग्यव्यञ्जकभावस्याभावात्**। किङ्कारणं। **स्वेत्यादि**। हि यस्मात्। **स्वरूपशून्ये** देशे प्रदीपादिरहिते देशे। स्वव्यङ्ग्यं घटादिकं। **नैवं** यथो[7]**क्तेन** न्यायेन **व्यक्ति**र्व्यञ्जिका **सामान्यस्य**। किङ्कारणम् (।) विपर्ययात्। यस्मादगृहीत्वापि व्यक्तिं सामान्यमादौ गृह्यत इतीष्यते परेण। सामान्यग्रहणद्वारेणैव व्यक्तेर्ग्रहणाभ्युपगमादतश्च व्यञ्जका-प्रतिपत्त्यापि व्यङ्ग्यस्य ग्रहणात्। व्यञ्जकधर्मातिक्रमो व्यक्तेः। 114a

एतदेवाह। **कथं** हीत्यादि। सेति व्यक्तिः सामान्यस्य व्यञ्जिका च स्या-दिति **स[1]म्बन्धः**। **तत्प्रतिपत्तिद्वारेणेति** सामान्यप्रतिपत्तिद्वारेण। सा व्यक्तिर्दृश्या स्यादिति विरुद्धमेतत्। **एवमिति** सामान्यदर्शनबलेन। व्यक्तेर्दर्शनेभ्युपगम्यमाने। **व्यङ्ग्या** सा व्यक्तिः **प्रसज्यते** सामान्यञ्चेत्यध्याहारः। **प्रदीपेन घटवदिति**। तृतीयेति योगविभागात् समासः। सुप्सुपेति वा समासः। यथा प्रदीपेन घटो व्यङ्ग्यस्तद्वत्सा[2]मान्येन व्यक्तिर्व्यङ्ग्या प्राप्तेर्थः। तत्**प्रतिपत्तिमन्तरेण** सामान्य-प्रतिपत्तिम्विना व्यक्ते**रदृश्यरूपत्वात्**। **अन्ये त्वाहुः**। व्यङ्ग्या च सैवं प्रसज्यत इत्यत्र चशब्देन सामान्यव्यञ्जकमित्येतदुपात्तं। ततः प्रदीपघटाभ्यां तुल्यमिति द्वन्द्वादेव वतिर्द्रष्टव्यः। पूर्वनिपातलक्षणस्य व्यभिचारित्वाद् घटशब्दस्यापूर्वनिपातः। प्रदीपव[3]त् सामान्यं व्यञ्जकं। घटवच्च व्यक्तिर्व्यङ्ग्या। **प्रसज्यत** इति वाक्यार्थ इति। अनेनेति **सामान्यवादिना**। सामान्यम्विना **किमसम्भवत्कार्यमभिसमीक्ष्य**। एवमित्युक्तविधिना। **बह्वायासः**। अशक्यसाधनतया बहुदुःखहेतुः। (१५८-५९)

**परस्परे**त्यादि परः। **भेदाद्विलक्षणत्वाद्धेतोर्व्यतिरेकिणीष्वनन्वयिनीषु**। **अन्व-यिन** एकाकारस्य **प्रत्ययस्य** प्र[4]त्ययग्रहणमुपलक्षणमेवं शब्दस्य। सामान्यमन्त-रेणा**योगात्**। सामान्यवाद आश्रित इति **सम्बन्धः**।

**कथ**मित्याचार्यः। ये **पाचका**दिशब्दा न क्रियानिमित्तानिच्छन्ति तान प्रत्ये-

**एवं प्रदीपेन घटवत् व्यङ्ग्या प्रसज्यते। केनचित् प्रकारेण एवं प्रतीतिमन्तरेणादृश्य-**
467b **रूपत्वात्। अन्य[7]च्च, अनेन किमयुक्तमभिसमीक्ष्य एवं बह्वायास आश्रितः सामान्य-वादिना परस्पर-भेदात्। व्यक्तिव्यतिरेकिणीषु अन्वयिनः प्रत्ययस्यायोगात्। कथं—**

**पाचकादिष्वभिन्नेन विना[1]प्यर्थेन वाचकः ॥१५९॥**

**नहि पाचकवाचकादीनामनन्वयिनामपि पचनपाचकेति शब्दप्रत्ययानुवृत्तिरस्ति। तेषु अभिन्नमन्यदेकं नास्तीति[2] यैर्भेदैर्हि तथा प्रतीयेरन्। कर्मत्वादिति चेत्, अथ प्रत्ययादेव सोऽपि प्रत्ययः वरम्। अन्येन वा कर्मणा किं कृतः। भेदो हि**

---

तदुक्तं। अभिन्नेन सामान्याख्ये**नार्थेन विना पाचकादिषु** कथमेकः शब्दो **वाचकः**। वाचकग्रहणेन प्रत्ययो**न्वयी** गृहीत एव तेन विना शब्दस्याप्रवृत्तेः[5]। अत एव वृत्तौ **शब्दप्रत्ययानुवृत्तिरस्ती**त्याह।

उ द्यो त क रे णापि गवादिष्वनुवृत्तिप्रत्ययः पिण्डादिव्यतिरिक्तनिमित्ताद् भवति विशेषप्रत्ययानामनाकस्मिकत्वान्नीलादिप्रत्ययवत्। यत्तन्निमित्तन्तत्सामान्यमिति सामान्यसिद्धौ प्रमाणे कृते स्वयमेवाशंकितम् (।)

अथ मन्यसे यथा पाचकादिशब्दा अनुवृत्ताश्च भवन्ति न च[6] पाचकत्वन्नाम सामान्यमस्ति (।) यदि स्यात्। भावोत्पत्तिकाल एवाभिव्यक्तं स्यात् तथा गवादिष्वनुवृत्तिप्रत्यया इति। न (।) हेत्वर्थापरिज्ञानात्। विशेषप्रत्ययानामनाकस्मिकत्वादित्यस्य हेतोः पिण्डप्रत्ययव्यतिरिक्तस्य प्रत्ययस्य निमित्तान्तरादुत्पाद
114b इत्ययमर्थः। न पुनः सर्वानुवृत्तिप्रत्ययः सामान्यादेव भवतीति। एव[7]ञ्च सति पचनक्रियाया यत्प्रधानं साधनन्तत्पाचकशब्देनोच्यते। तच्च प्राधान्यं पाचकान्तरेष्वप्यस्तीति न दोष इति वदता पाचकत्वादिसामान्यम्विना पाचकादिशब्दानां वृत्तिरिष्टैवो द्यो त क रे णेत्यनेनाभिप्रायेणा चा र्ये णाप्युक्तं **कथ**मित्यादि।

न च पचनक्रियायां प्राधान्यनिमित्तायां पाचकादिशब्दप्रवृत्तिर्युक्ता। त[1]न्निमित्तत्वे हि प्रधानं प्रधानमित्यनुगामी शब्दः स्यान्न पाचक इति। अत एवाह (।) **न ही**त्यादि। **तेष्वि**ति पाचकादिषु। **अन्यदि**ति द्रव्याद् व्यतिरिक्तं। एवं सर्वशक्तिष्व**भिन्नं यैनै**केन ते पाचकादयो भिन्नास्सन्तोपि **तथे**त्यभेदेन **प्रतीयेरन्** ज्ञानेन। उपलक्षणमेतत् तथाभिधीयेरन्। पाचकेष्वधिश्रयणादिलक्षणं। पाठकेष्वध्ययनात्मक[2]मेवमन्येष्वपि यथायोग्यं। **कर्म**कप्रत्ययादिनिमित्तमस्तीति **चेत्**। **स** इत्यन्वयी। प्रत्ययग्रहणमुपलक्षणमेवं शब्दोपि। **अन्येन** वेति **कर्मणो** हेतुना प्रयत्नादिना। **भिन्न**मित्यादिनैतदेव समर्थयते। **तदि**ति बाह्योपन्यासे। तत्कर्मेति

**अभिन्नप्रत्ययस्य हेतुर्न स्यादथ एकसामान्य[3]वांछा सा भिन्नकर्मणोऽपि अभिन्नं प्रत्ययं जनयेत् चेत्—व्यक्तिभिः कोऽपराधः कृतः, येन तास्तथा नेष्टाः। यदि तासामेकरूपत्वात, अतदाकारविशेषव[4]तीति व्यतिरेकप्रतीतिर्न स्यादित्यत्र यथा-व्यतिरेकं विशेषप्रत्यया अपि यथासंकेतं अर्थान्तरविवेकादित्युक्तम्। ततो व्यक्ति-वत्—**

---

वा सम्बन्धनीयं। प्रतिपाचकं कर्मणो भेदात्। येनापराधेन ताः व्यक्तयस्तथेत्यभिन्न-प्रत्यय[3] हेतुत्वेन।

सत्यं (।) न कश्चिदपराधः किन्तु तासां व्यक्तीनामे**करूपत्वात्**। तथा हि द्रव्यमेकरूपमनंशत्वात्। एतदेव चेद**भिन्नप्रत्यय**निबन्धनं न तु ततो व्यतिरिक्तं धर्मान्तरन्तदा पाचकस्य पाचकत्वमिति **व्यतिरेकप्रतीतिर्न स्यात्**। न हि तस्यैव ततो व्यतिरेको युक्तः। तस्याव्यक्तेराकारस्त**दाकार**स्तस्मादन्योऽभेदाकारस्तस्य **वि[4]शेषः** सोस्ति यस्यां **सा अतदाकारविशेषवती**। द्रव्याकारादन्याकारेत्यर्थः।

एतदुक्तम्भवति। द्रव्येभ्य एव प्रत्ययो द्रव्यमित्येवमाकारः। ततोन्येनैवा-कारेण पाचकप्रत्यय[ः प्रतिषेधप्रत्यय]स्स यदि द्रव्यनिमित्तमेव स्यात् तदा द्रव्यमात्र-प्रत्ययाविशिष्टः स्यात्। अथ किमर्थमतदाकारविशेषवतीत्युभयमुक्तमतदाकारेत्येव वक्तव्यं।[5] विशेषवतीत्येव वा। उच्यतेऽभेदाकारेत्युक्ते द्रव्यस्याभाव इति प्रति-षेधप्रत्ययोप्यतदाकार इति शक्येत व्यपदेष्टुं न चासौ वस्त्वन्तरनिबन्धनः परेणेष्टः। विशेषप्रत्ययानामेव धर्मान्तरनिबन्धनत्वात्। विशेषग्रहणे च केवले क्रियमाणे। चैत्रप्रत्ययो मैत्रापेक्षया भवति विशेषवान्। न त्वतदाकारः। चैत्राद्यभिधा[6]नेन द्रव्यस्यैव प्रतिपादनात्। उभयोपादानात्त्वयमर्थो भवत्यद्रव्याकारश्चासौ प्रत्ययो वस्तुस्पर्शाद् विशेषवांश्चेति। तस्मात् तत्र द्रव्यव्यतिरिक्ते न निमित्तान्तरेण भाव्यमिति।

**उक्तमि**त्याचार्यः। यथा व्यतिरेको गोर्गोत्वं पाचकस्य पाचकत्वमित्यादिको यथा च विशेषप्रत्यया अनन्तरोक्तास्तथोक्तमिति सम्बन्धः।[7] कथमुक्तमित्याह। 115a
**यथास्वमित्यादि**। **अर्थान्तरविवेको**र्थान्तरव्यवच्छेदः। **यथास्वमिति** यस्य शब्दस्य **यथासंकेतं** यो व्यवच्छेदस्तस्मादित्यर्थः। तथा हि पाचकशब्दोऽपाचकव्यवच्छिन्नम-प्रतिक्षिप्तभेदान्तरं प्रतिपादयन् धर्मिवचनः (।) पाचकत्वशब्दस्तु तमेव व्यवच्छिन्नं प्रतिक्षिप्तभेदान्तरमाहेति धर्मवचनः। ततो धर्मधर्मिभेदकल्पनया पाचकस्य[1] पाच-कत्वमिति व्यतिरेकविभक्तिः प्रयुज्यते। एवं द्रव्यशब्दस्याप्यद्रव्यव्यवच्छिन्ने स्वभावे संकेतितत्वात् तदनुसारेणाद्रव्याव्यवच्छेदानुसारेणाद्रव्यव्यवच्छेदानुकारिणी बुद्धि-

**भेदान्न हेतुः कर्मास्य;**

**पाचकाद्यभेदप्रत्ययस्य। यदि तेषां कर्मजात्यभेदाद्धेतुः,**

**न जातिः कर्म्मसंश्रयात्।**

**गोत्वमिव गमनादिः अर्थान्तरसम्बन्धि[6]जातिर्हि अर्थान्तरप्रत्ययहेतुश्चेत् पाचककर्मस्वपि कर्मजातिः, तत्कर्मापि पाचकशब्देन न वाच्यम्। अथ किमिति** 468a **तत्कर्माश्रयस्य द्रव्यम्। कर्मजातिरपि सा[7]—**

**श्रुत्यन्तरनिमित्तत्वात्;**

---

रुत्पद्यते। पाचकशब्दात् त्वपाचकव्यवच्छिन्नानुकारिण्येव बुद्धिरतो यथाव्यवच्छेदं संकेतानुसारेण विशेषवती बुद्धिरेकत्राप्यविरुद्धा। एतच्च भेदान्तरप्रतिक्षेपाप्रतिक्षेपेत्यादिषु प्रतिपादितं[2]।

**तस्मा**दित्यादिनोपसंहारः। यथा **व्यक्ती**नां भेदस्तद्वत् कर्मणोपि भेदाद्धेतोरस्य **पाचकाद्यभेदप्रत्ययस्य** न हेतुः कर्मेति सम्बन्धः। **तेषां** पाचकानां यानि **कर्मा**णि पाकाख्यानि तेषु कर्मसु या पाचकत्व**जातिः** समवेता सैवा**भेदाद्धेतुः** पाचकाभेदप्रत्ययस्य। **नेत्या**दिना प्रतिषेधति। न जातिर्हेतुरिति प्रकृतं। किङ्कारणं (।) **कर्मसंश्रय**यात्। कर्मणि सम[3]वेतत्वात्। द्रव्या**दर्थान्तरं** कर्म तत्**सम्बन्धिनी**। अर्थान्तर इति द्रव्ये। **गोत्वमिवेति** निदर्शनं। न हि गोत्वं शाबलेयादिसम्बन्धि। कर्क्कादिष्वश्वभेदेषु गोप्रत्ययहेतुः। **पाचककर्मसु** पाकाख्येषु कर्मजातिस्समवेता। न च तानि कर्माणीति पाकाख्यानि। शब्दग्रहणमुपलक्षणं। तथा पाचकप्रत्ययेन परिच्छिद्यन्ते। तस्य पाकाख्यस्य कर्मण आश्रयो द्रव्यं[4] पाचकशब्देनोच्यते। न च तत्र द्रव्ये **कर्मजातिस्स**मवेता।

एवन्तावद**र्थान्तरसम्ब**न्धित्वं कर्मजातेराश्रित्य द्रव्यविषयं पाचकाभिधानप्रत्ययं प्रत्ययनिमित्तत्वमुक्तम् (।) (१५६-६०)

अधुना प्रकारान्तरेणाह। **तस्ये**त्यादि। **पाचकश्र**तेरन्या श्रुतिः **श्रुत्यन्तरं**। श्रुतिग्रहणमुपलक्षणमेवं ज्ञानान्तरनिमित्तत्वात्। श्रुत्यन्तरमेवाह। **पाक** इत्यादि। **तत** इति कर्मजातेः कर्मविष[5]यस्याभिधानस्य प्रत्ययस्य च हेतुत्वात् कर्मजातेरित्यभिप्रायः।

स्यान्मतं (।) न कर्मजातिः पाचकप्रत्ययं जनयति किन्तु कर्मजातिसमाश्रयात् कर्मैवेत्यत आह। **तस्ये**त्यादि। तस्येति पाचकाद्यभेदप्रत्ययस्य। **कर्मनिमित्तं** यस्येति विग्रहः। प्रोक्तं व्यक्तिवद् भेदान्न **हेतुः कर्मास्ये**त्यादि।

ननूक्तं जातिसमाश्रयाद् भिन्नमपि कर्माभिन्नप्रत्ययहेतुरिति।

**पाकः पाक इति ततः स्यात् न च पाचक इति। तस्य सा कर्मनिमित्तता प्रोक्ता। अन्यच्च—**

**स्थित्यभावाच्च कर्मणः ॥१६०॥**

**न ह्यनित्यं कर्म सर्वत्र। तस्य प्रत्ययस्य कर्मनिमित्तत्वे निरुद्धे कर्मणि पाचक इति नोच्येत, पचत एव कर्मभावात्। तत एव—**

**असंबन्धान्न सामान्यं; नायुक्तं शब्दकारणात्।**
**अतिप्रसंगात्;**

**असंबंधान न सामान्यं शब्दहेतुताऽतिप्रसंगात्[2] नासम्बद्धम्। तत एव कर्मणः सामान्यं न कर्माविशेषात्। एकं कर्म तत्सामान्यं हि न कर्म कर्त्रभावात् (आकृत्यभावात्)। आश्रयसम्बन्धोऽपि न तत्र। तथा हि असम्बन्धात् न शब्दज्ञानकारणम्।**

---

उक्तमिदमयुक्तन्तूक्तं। जातिसम्बन्धेपि कर्मणस्तथैव भिन्नत्वात्। **किञ्चे**त्यादिनोपचयहेतुमाह। **तस्य** पाचकाद्यभेदप्रत्ययस्य कर्मनिमित्तत्वेऽभ्युपगम्यमाने। **निरुद्धे कर्मणि** पुरुषः **पाचक इति नोच्येत**। उच्यते च योग्यतामात्रेण (।) ततो न वस्तुभूतक्रियानिमित्तोयं व्यपदेशः। अतीतस्यापि कर्मणोस्तित्वाददोष इति चेदाह **पचत** एवेत्यादि[7] (।) यद्यतीतस्य सत्त्वं स्याद् वर्त्तमानवदुपलभ्येतोपलब्धिलक्षण- 115b प्राप्तं च कर्मेष्यते।

स्यान्मतं (।) कर्मजातिः कर्मणि समवेता कर्मापि द्रव्ये समवेतन्ततः सम्बद्धसम्बन्धात् कर्मजातिर्द्रव्यविषयस्य पाचकप्रत्ययस्य हेतुरिति चेदाह। **तत एवे**त्यादि। **तत एवे**ति कर्मणो विनष्टत्वादेव न सामान्यस्य कर्मणा सम्बन्धः साक्षात्। नापि कर्मद्वारेण पारम्पर्येण द्रव्यसम्बन्धोस्या**स[1]म्बन्धात्** कारणान्न **सामान्यं** पाचकाद्यभिधानप्रत्ययस्य हेतुः। असम्बद्धमपि हेतुरिति चेदाह। **ने**त्यादि। अयुक्तमित्यसम्बद्धं। शब्दग्रहणमुपलक्षणमसम्बद्धं सामान्यं न ज्ञानशब्दकारणमित्यर्थः। कुतः (।) **अतिप्रसङ्गात्**। गोत्वमप्यश्वज्ञानस्य हेतुः स्यात्। (१६०-६१)

विनष्टे हीत्यादिना व्याचष्टे। **तत् सामान्यमि**ति कर्मसामान्यन्न कर्मणि समवेतन्तस्यासत्त्वात्। कर्माभावादेव कर्त्तरि पा[2]चके पारम्पर्येणापि समवेतम् (।) अतः सम्बद्धसम्बन्धोप्यस्य सामान्यस्य द्रव्येण सह नास्ति। **अन्यथे**त्यसम्बद्धस्यापि ज्ञानादिहेतुत्वे। स्थित्यभावाच्च कर्मण इत्यादि यदुक्तं (।) तम(?द)तीतेत्यादिना पक्षान्तरमाशंकते। **अतीतं** यद्विनष्टं। **अनागतं** यद् भविष्यति कर्म। **तयो**रिति शब्दज्ञानयोः (।) कर्माप्यतीतानागतमसत्। **ज्ञानाभिधानयोर्नि**मित्तमिति-

**अन्यथाऽतिप्रसङ्गः स्यात् । तदतीतानागतयोर्निमित्तीकृत्य तयोः प्रवृत्तिरिति चेत्—**

**कर्माऽपि नासज्ज्ञानाभिधानयोः ।।१६१।।**

**न निमित्तम् । तद्, (ते)**

**अनैमित्तिकतापत्तेः;**

**असत् शक्तिविकलं कथं[4] निमित्तं स्यात् । तस्यैव वस्तुनः क्रियाकरणलक्षणत्वात् ततः अतीतानागतकर्मनिरोधो नानुपलब्धिनिमित्तम् । व्यक्त्यादिकमन्यत्तु नेष्ट[5]त्वात्, ते अनिमित्ते स्याताम् । तथा च न जातिसिद्धिः, तस्या ज्ञानाभिधानयोर्निमित्तत्वेनेष्टत्वात् । यदि शक्तिः पाचकादिशब्दनिमित्तं, न तु कर्मसामान्ये[6],**

**न च शक्तिरनन्वयात् ।**

---

सम्बन्धः । किं कारणं[3] (।) **तयो**रित्यादि । तयोर्ज्ञानाभिधानयोः ।

**असती**त्यादिना व्याचष्टे । उपाख्यायते प्रकाश्यते वस्त्वनयेत्युपाख्यार्थक्रियाशक्तिः । सा निर्गता यस्मादसतस्तत्तथोक्तं । **असद्** यस्मादर्थक्रिया**शक्तिविकलं** । तदेवंभूतं **कथं** शब्दज्ञानयो**र्निमित्तं** स्यादित्यर्थः ।

अथासतोपि हेतुत्वमिष्यते तदा तस्य वस्तुत्वमेव स्यान्नासत्त्वं । किङ्कारणमित्याह । **कार्ये**त्यादि । ल[4]क्षणशब्दः स्वभाववचनः । **तदिति** तस्मात् । अतीतं प्रच्युतरूपं । अनागतमसंप्राप्तरूपं । कर्मणः सकाशादन्य**च्च व्यक्त्या**दिकं ज्ञानाभिधानयोर्निमित्तत्वेन **नेष्टं** सामान्यवादिना ।

"व्यक्तिः कर्माश्रयो द्रव्यं ।"

आदिशब्दात् संकेतवासना तत्परिपाकयोर्ग्रहणं । **ते** इति शब्दज्ञाने । **तथा चे**त्यन्वयिनोः पाचकादिशब्दज्ञानयोरनिमित्तत्वे सति **न जातिसिद्धिः**।[5] चशब्दात् नित्यं सत्त्वमसत्त्वम्वा शब्दज्ञानयोः स्यात् । कस्मान्न जातिसिद्धिरित्याह । **तस्या** इत्यादि । **तस्या जाते**रभिन्नस्य **ज्ञानस्याभिधानस्य** च **निमित्तत्वेनेष्टत्वात्** । यथा च पाचकादिविषये । ते अनिमित्ते प्रवर्त्तेते तथा गवादावपीति केन निबन्धनेन जातिः कल्प्येत ।

**शक्ति**रित्यादिना पक्षान्तरमाशंकते । कर्माश्रयस्य द्रव्यस्य शक्तिः । शब्दग्रहणमुपलक्षणं[6] (।) पाचकादि ज्ञानस्यापि शक्तिर्निमित्तं । **ने**त्यादिना प्रतिषेधति । न पाचकादिशक्तिः पाचकादिशब्दनिमित्तं (।) किङ्कारणं (।) शक्तेर्द्रव्याव्यतिरेकेण द्रव्यवदेवानन्वयादनन्वयिनश्चार्थस्यान्वयिज्ञानाभिधानं प्रति निमित्तत्वानभ्युपगमात् । अभ्युपगमे वा जातिकल्पनाया निर्निबन्धनत्वप्रसङ्गात् ।

**न ह्यन्यैव काचित् पाकादिशक्तिः, तस्याः पाकाद्यर्थक्रियासपयोगेन द्रव्यस्यानुपयोगि[7]त्वप्रसङ्गात्। यदि तस्यां तदुपयोगः, किमिति शक्तिकृत्यम्। शक्तावुपयोगाय शक्त्यन्तरस्य व्यतिरेकिणोऽभ्युपगमेऽतिप्रसङ्गात् द्रव्यमेवोपयुज्यत इति वाच्यम्[1]।** 468b

**तस्मात् उपयोगे शक्तौ अर्थक्रियायामेवोपयुज्यत इति किन्नेष्यते, अन्तराले किंमनर्थिकया शक्त्येति तत्कार्यद्रव्यमेव तदन्वयात्, तत्रान्वयी शब्दो न स्यात्।**

**सामान्यं पाचकत्वादि यदि प्रागेव तद् भवत ॥१६२॥**
**व्यक्तं सत्तादिवन्नो चेन्न पश्चादविशेषतः।**

---

भिन्नैव शक्तिरिति चेदाह। **न ही**त्यादि। न हि द्रव्याद[7]न्यैव शक्तिर्यदि स्यात्तदा **तस्या** एकशक्तेः **पाकाद्यर्थक्रियासपयोगेन** कारणेन **द्रव्यस्य** शक्त्याधार**स्यानुपयोगित्वप्रसङ्गात्**। तस्यां पाकादिनिर्वर्त्तिकायां शक्तौ तस्य द्रव्यस्योपयोगः। एवमपि पारम्पर्येण पाकादौ द्रव्यमुपयुक्तं स्यादिति भावः। 116a

**किमि**त्यादि सि द्धा न्त वा दी। अर्थान्तरभूतया **शक्त्या** न किञ्चित् प्रयोजनं। तथा हि पाकादिनिर्वर्त्तिकायां प्रथमायां **शक्तौ** द्रव्यं[1] यया शक्त्योपयुज्येत। सापि शक्तिर्यदि व्यतिरिक्ताऽभ्युपगम्येत तदा पाकादिनिर्वर्त्तिकायां **शक्तौ** द्रव्यस्यो**पयोगाय शक्त्यन्तरस्य** द्रव्याद् **व्यतिरेकिणोऽभ्युपगमेऽतिप्रसङ्गात्**। तस्यामपि शक्तावुपयोगायापरा व्यतिरिक्ता शक्तिः कल्पनीया तत्राप्यपरेत्यनवस्था स्यादित्यर्थः। तस्मादन्तरेण व्यतिरिक्तं शक्तिं **द्रव्यमेव** प्रथमायां पाकादिनिर्वर्त्तिकायां श[4]क्ता**वुपयुज्यत इति वाच्यं**। एवं च द्रव्यस्योपयोगे **शक्ता**विष्यमाणे। तद्द्रव्यम**र्थक्रियायां** पाकादिलक्षणाया**मेवोपयुज्यत इति किन्नेष्यते**। द्रव्यस्यार्थक्रियायाश्चान्तराले **किमनर्थिकया शक्त्या** कल्पितया।

यत एवन्त**स्मात्** पाकाद्यर्थक्रियाशक्तिरित्यनेन द्रव्यमेवोच्यते। किम्भूतन्तत्कार्यं तत्पाकादि कार्यं यस्य। तच्च द्रव्यं व्यक्त्यन्तरं नान्वेतीति कृत्वा। ततो[3] द्रव्यात् पाचकः पाचक इत्य**न्वयी शब्दो न स्या**ज्ज्ञानञ्च। शब्दग्रहणं तूपलक्षणं। (१६१-६२॥)

पाचकादिषु द्रव्येषु पाचकत्वादिसामान्यमस्ति तदन्वयि शब्दज्ञाननिबन्धनमिति चेदाह। **सामान्यमि**त्यादि। **सामान्यं पाचकत्वादि** यदीष्यते। तदा पाकादिनिर्वर्त्तनशक्त्यवस्थायाः **प्रागेव** द्रव्यस्योत्पत्तिसमकाल एव द्रव्यसमवेतन्**तद् भवे**दित्यर्थः। तथा च तदहर्जातो[4]पि बालः पाचकादिज्ञानाभिधानविषयः स्यादिति भावः। **नो चेत्** प्रागेव भवेत तदा **पश्चाद**पि **न** भवेत। तस्य द्रव्यस्याविशेषात। अस्त्येव सर्वकालं

**अथापि पाचकत्वमिति सामान्यस्य कादाचित्कत्वे सत्यर्थे तत्समवायस्य अकादाचित्कत्वात्। तत्प्रथमत्वे सत्तादिवद् व्यज्येत। यावन्ति अर्थे सामान्य-धर्माणि तानि अस्योत्पादेन सह समवयन्ती[4]ति ग्रन्थः।**

**तद्व्यतिक्रमेऽविशेषात् पश्चादपि तत्समवायो न स्यात्। तत्सम्बन्धिस्वभाव-वैगुण्यात्, स तस्य प्रागभावे तत्रैव च स्वभावे[5] स्थितस्य स्यादिति दुरन्वयमेतत्।**

---

द्रव्ये पाचकत्वादि। किन्तु प्रागनभिव्यक्तमतो न शब्दज्ञानयोर्निमित्तमित्यत आह। **व्यक्तमिति**। प्रागेवाभिव्यक्तम्भवेदित्यर्थः। **सत्तादिवत्**। यथा सत्ताद्रव्यत्वादि। यावद्द्रव्यभावि। अर्थक्रियायाश्च प्राग[5]व योग्यदेशावस्थितं द्रव्यं।

**अथापी**त्यादिना व्याचष्टे। **सत्यर्थे** जात्याश्रये **तत्समवायस्य** सामान्यसमवा-यस्या**कादाचित्कत्वात्** सर्वकालभावित्वात्। एतदेव द्रढयन्नाह। **यावन्ति** हीत्यादि। **अर्थे** जात्याश्रये। **समवायधर्माणि** सम्बन्धयोग्यानि **तानि** सामान्यानि। **अस्यार्थ**स्य य उत्पादः। **तेन सह समवयन्ति**। अस्मिन् सामान्याश्रय इति विभ[6]क्तिविपरि-णामेन सम्बन्धः। उत्पादसमकालमेव द्रव्येण सह सम्बध्यत इति यावत्। **इति समयः**। सा मा न्य वा दि नः सिद्धान्तः। यदाहो द्यो त क रः (।) "प्राग्गोत्वान्नासौ गौर्नाप्यगौरिति। किङ्कारणम् (।) अभावे तौ विशेषणप्रत्ययौ न च विशेषण-प्रत्ययौ विशेष्यसम्बन्धमन्तरेण भवतो न च प्राग् गोत्वयोगाद् वस्तु विद्यते। न चाविद्यमानं गौरिति वाऽगौरिति वा श[7]क्यते व्यपदेष्टुं। यदैव वस्तूत्पद्यते तदैव गोत्वेनाभिसम्बध्यत इति। तथा न सतस्सत्तासम्बन्धो नासतः। यदैव च वस्तु तदैव सत्तया सम्बध्यत" इति।[1]

116b

अथ सिद्धान्तमतिक्रम्य पश्चाद् भावित्वं सामान्यस्य कल्प्यते। **तदा तद्व्यतिक्रमे** सिद्धान्तव्यतिक्रमे। तस्य सामान्यस्याश्रयस्य द्रव्यस्य **पश्चादप्य**विशेषा**न्न तत्समवायः स्यात्**। तेन सामान्येन समवायो न स्यात्।

यथा फलैकस्वभा[1]वस्यापि रक्तता प्राङ्न भवति। पश्चाच्च भवति। तद्वत्पुरुषस्य पाचकत्वादिसामान्यमित्यत आह। **तत्सम्बन्धी**त्यादि। **तत्सम्बन्धि-स्वभाववैगुण्यात्**। पाचकत्वादिसामान्यसम्बन्धिस्वभाववैगुण्यात्। **स** इति सामान्य-समवायः। **तस्येति** पुंसः। न ह्यविगुणे स्वभावे स्थितस्य तत्सम्बन्धो न भवेत्। **तत्रैव** च सामान्यसमवायविगुणे **स्वभावे स्थितस्य** द्रव्यस्य पश्चात् सामान्य[2]सम-वायो भविष्यतीति **दुरन्वय**न्दुर्बोध**मेतत्**। फलस्याप्याम्रादेः पूर्वं पश्चाच्च यद्येक-स्वभावता। तत्रापि तुल्यं चोद्यं। सामान्यसम्बद्धमेव तदा द्रव्यं क्रियोपकारापेक्षन्तु सामान्यं व्यनक्ति। (१६२-६३)

---

[1] Nyāyavārtika.

**क्रियोपकारापेक्षस्य व्यञ्जकत्वेऽविकारिणः ॥१६३॥**
**नापेक्षाऽतिशयेऽप्यस्य क्षणिकत्वात्क्रिया कुतः ।**

**कर्मोपकार[6]मपेक्ष्य द्रव्यस्य पाचकत्वव्यञ्जकं चेत्, स्वभावाश्रयोऽयमनाधेयातिशयाद् अविशेषाधायिनि काऽपेक्षा ? अतिशये वा कर्मणः क्षणिक[7]त्वात्।** 469a **प्रतिक्षणं स्वभावभूतस्यान्यस्यान्यस्यातिशयस्योत्पत्तेस्तदपि क्षणिकं स्यात्। ततः स्वोत्पत्तिस्थानविनाशिनः कुतः क्रिया, कमपेक्ष्य व्यञ्जकं स्यात्[1]।**

**ननु कथमेकवस्तुत्वाभावे वस्तुनि ज्ञानशब्दौ प्रवर्त्तेते, यथा पाचकादिष्विति तथा ।**

---

सा च प्राङ्नास्तीति न प्राक् सामान्याभिव्यक्तिरित्यत आह। **क्रियोपकारे**त्यादि। पाकादिलक्षणा क्रिया। तत्कृतो य उपकारस्त**दपेक्षस्य** सामान्यं प्रति **व्य[3]ञ्जकत्वे**ऽभ्युपगम्यमाने। तस्य द्रव्यस्याक्षणिकत्वाद**विकारिणोनपेक्षा** सहकारिणं प्रति।

अथ विक्रियेत तदाप्य**तिशयेस्य** द्रव्यस्य क्षणिकत्वमापद्यते। **क्षणिकत्वा**च्चोत्पादानन्तरं ध्वंसिनः **कुतः क्रिया**। येन तदुपकारापेक्षं जातेर्व्यञ्जकं स्यात्।

**कर्मोपकारे**त्यादिना व्याचष्टे। अधिश्रयणादिलक्षणो व्यापारः कर्म। तत्कृत उपकारोतिशयस्त**मपेक्ष्य** स्थिर[4]स्वभावस्य पूर्वस्वभावादचलतोनतिशयात् स्वभावान्तरानुपादानात्। **अविशेषाधायिनि** कर्मणि। **कापेक्षा**। नैव। **अतिशये वा** द्रव्यस्य क्रियाकृतेभ्युपगम्यमानेऽतिशयाधायकस्य कर्मणः **क्षणिकत्वात्** तस्याप्युपकार्यस्य द्रव्यस्य स्वभावभूतेनान्येनातिशयेनोत्पत्तव्यं।

यदि क्रियाकृतोऽतिशयो न स्वभावभूतो **द्रव्यस्य** तदर्थान्तरस्य करणाद् द्रव्यं नैवोप[5]कृतं स्यात्। तस्माद् यथाक्रियाक्षणं प्रतिक्षणं **स्वभावभूतस्यान्यान्यस्यातिशयोत्पत्तेस्तदपि** द्रव्यं देवदत्तादि **क्षणिकं स्यात**। **तत** इति क्षणिकत्वात्। **स्वोत्पत्तिस्थानविनाशिनः** स्वस्मिन्नेवोत्पत्तिदेशे विनाशिनः पुंसः **कुतः** पाकलक्षणा **क्रिया**। यदपेक्षन्तत् क्रियासापेक्षं पाचकादिद्रव्यसामान्यस्य **व्यञ्जकं स्यात**।

ननु च प्रथमादिक्रियाक्षणद्वारेण द्रव्यस्य[6] क्षणिकत्वं क्रियाऽभावे च कथं क्षणिकत्वमिति चेत् (।) न। यतः क्रियासम्बन्धोत्पन्नानां क्षणानामन्यस्याः क्रियायास्सामान्याभिव्यञ्जिकाया अभावादित्यर्थः।

तस्मात् स्थितमेतद् यथा वस्तुभूता जातिर्नास्तीति। (१६३-६४)

**कथन्तर्ही**त्यादि परः।

यथेत्यादि सि द्धा न्त वा दी। **यथा पाचकादिष** पाचकत्वादिसामान्यन्नास्ति तथा

**तत् तेष्विति न वा चेतः, यथा तेष्वपीति[2] यथा तेषु न वृत्तिरिति परीक्षितम् ।**

**किन्तर्हि ते अनिमित्ते न स्याताम् । नानिमित्ते, अथ किमिति चेत् बाह्यतत्त्वं निमित्तेन । यथास्वं[3] यो यो वासनाप्रबोधात् विकल्पोत्पत्तिः, ततः शब्दा भवन्ति । न पुनर्विकल्पाभिधानयोर्वस्तुसत्ताश्रय इत्युक्तप्रायमेतत् । यथास्वं [दर्शन[4] वासनावशात् विरोधिरूपसमावेशेन परापरदर्शनेऽपि तदन्वयिदर्शनात् । न च तत्र तन्निबन्धनस्वभावः क्वचिदप्यस्ति । परस्परविरोधिनोरेकत्र स्थित्यसम्भवात् ।**

**अनियमेन स्याद् । तदनिमित्तं भवद्धि क्वचिद् भवेत् क्वचिच्च न भवेदिति न निश्चेयम् ।**

---

117a प्रसाधितमथ च तत्र प्रवर्त्तेते **अन्वयिनौ[7] ज्ञानशब्दौ** । तथान्यत्राप्यन्तरेण सामान्यन्तौ भिवष्यतः ।

**तद्वदि**त्यादि परः । **तेष्विति** पाचकादिषु सामान्यम्विना कथमन्वयिनोर्ज्ञान-शब्दयोर्वृत्तिरिति । ततोन्वयज्ञानशब्दवृत्तेः पाचकादिष्वपि पाचकत्वादिसामान्य-मस्तीति चिन्तितमेतदनन्तरं । तथा तेषु पाचकत्वादि सामान्यं स न सम्भवतीति ।

यद्यन्वयि रूपन्नास्ति[1] **तत्किमिदानीमनिमित्ते** ते शब्दज्ञाने **स्यातां** । **ने**त्यादि सिद्धान्तवादी । अस्त्येव तयोर्निमित्तं यत् परेणेष्यते तस्य प्रतिक्षेपः । तदेवाह । **किन्तर्ही**त्यादि । वस्तुभूतं सामान्य**म्बाह्यतत्त्वं निमित्ते** ते **न** भवतः । किन्तर्हि तयोर्निमित्तमित्यत आह । **यथास्व**मित्यादि । यो य आत्मीयो **वासनाप्रबो**धस्त-स्मादन्वयिनो विकल्पस्योत्पत्तिः । **ततो विकल्पोत्पत्तेः** सकाशाद् यथाविक[2]ल्पं **शब्दा भवन्ति । न पुनर्विकल्पाभिधानयोर्वस्तुसत्ता**]। अन्वयिपदार्थ**सत्तासमाश्रय इत्युक्तप्रायमेतत** । अवश्यं चैतदेष्टव्यं । तथा हि यथास्वं समवाय**वासनावशात्** सिद्धान्ताश्रयेण ज्ञानवासनानुरोधाद् **विरोधिरूपसमावेशेन** परस्परविरुद्धरूपाध्या-रोपेण प्रधानकार्यमीश्वरकार्यमहेतुकं सम्वृत्तिमात्रं जगदित्येवं सर्वभेदेष्वन्व-यिनो**स्तयो**[3]रिति ज्ञानाभिधानयोः । अ**परापरदर्शने**पीति परस्परभिन्नानामर्थाना-न्दर्शनेपि । **न च तत्रेति** प्रधानादिकार्यत्वेन परस्परविरुद्धेन रूपेण कल्पितेष्वर्थेषु । **तन्निबन्धनः** शब्दज्ञानयोर्निबन्धनः । कस्मान्नास्तीत्याह । **परस्परविरोधि**नोरित्यादि ।

**अनियमेने**त्यादि परः । सर्वं सर्वत्रान्वयि ज्ञानमभिधानं च स्यात् ।

एतदेव साधयन्नाह ।[4] न ह्यनिमित्तमित्यादि ।

ननु यथास्वं वासनाप्रबोधाद् विकल्पोत्पत्तेरित्यादिना तयोरनिमित्तत्वं प्रतिषि-द्धमित्यनवकाशमेव चोद्यं । एवम्मन्यते । आन्तरमेव निमित्तन्तयोरिष्यते तस्य च निमित्तस्य केनचिदासत्तिविप्रकर्षाभावात् । सर्वत्र सर्वविकल्पहेतुत्वं स्यादिति ।

**न ह्यनिमित्तं तद् । वासना[6]विशेषनिमित्तत्वात्, तथाभूतं वाह्यं न प्रकाशितमपीत्युक्तम् । न चासति तस्मिन्न भवितव्यम् । सुप्ततैमिरिकाद्युपलब्धेषु अर्थेषु अभावेषु ग्रंथ[7]वासनारोपितरूपविशेषे तथा विकल्पस्योत्पत्तेः । न च ते तदुत्पत्त्याऽसत्सु सर्वत्र सर्वाकारा भवन्ति । विभागेनैव तथैवोपलब्धानां[1] विकल्पनात् । एकभावेनात्र स्वभावेनापि एकज्ञानकार्यं क्वचिद् भाव एव भेदादिति संक्षेपः ।** 469b

**अन्यच्च—**

**तुल्ये भेदे यया जातिः प्रत्यासत्त्या[2] प्रसर्प्पति ॥१६४॥**
**क्वचिन्नान्यत्र सैवास्तु शब्दज्ञाननिबन्धनम ।**

**—इति संग्रहश्लोकः ।**

---

न ह्यनिमित्ते भवदित्यत्र वाह्यनिमित्ताभावादनिमित्तमिति द्रष्टव्यं ।[5]

**नानिमित्ते** इति सिद्धान्तवादी । अविशिष्टनिमित्ते । न भवत इत्यर्थः । अत एवाह । **वासनाविशेषनिमित्तत्वादिति** । यथाभूतदर्शनद्वारायाता वासना सा तत्रैवाध्यवसिततद्भावम्विकल्पं जनयति । न सर्वत्रेति समुदायार्थः । तथाभूतमित्यन्वयि रूपं । **न चासति तस्मिन्नन्वयि**नि वाह्ये निमित्ते विकल्पेन न भवितव्यम्भवितव्यमे[6]व ।

तदेव **सुप्ते**त्यादिना साधयति । सुप्तश्च **तैमिरिक**श्च ताभ्यामुप**लब्धे**ष्वर्थेषु गवादिषु केशमक्षिकादिषु च यथाक्रमं । **अभावेषु** शशविषाणादिषु । समवाय**वासना** । यथा स्वं सिद्धान्तं संकेतवासना तद्बले**नारोपितरूपविशेषे** प्रधानकार्यादिषु । **तथा** विकल्पोत्पत्तेरन्वयिनो **विकल्पस्योत्प[7]त्तेः** । न ह्येतेषु यथोक्तेषु बाह्यमन्वयिरूपमस्ति । स्वप्नतिमिरोपलब्धानामेवासत्त्वात् । तेषां चासत्त्वं तृतीये परिच्छेदे (३।८५) प्रतिपादयिष्यते । सिद्धान्तसमारोपितस्य तु परस्परविरोधिनोर्युगपदेकत्रेत्यादिना प्रतिपादितमेवासत्त्वं । **न च ते** विकल्पाः स्वप्नाद्युपलब्धे**ष्वसत्सु** वस्तुभूतान्वयिरूपमन्तरेणाप्युत्पद्यंत इति **सर्वत्रा**[1]र्थाः **सर्वाकारा** भवन्त्यपि तु प्रतिनियता एव । नियमहेतुं चाह । **विभागेनैवे**त्यादि । **तथैवोपलब्धाना**मिति विभागेनोपलब्धानां । विभागेनैव **विकल्पनात्** । सुप्ततिमिरावस्थायान्तावद् भ्रान्तज्ञानारूढानामर्थानां विभागेनोपलम्भः । सिद्धान्तारोपितानामपि यथास्वं सिद्धान्तश्रवणकाले । **शशविषाणमि**त्यादिष्वपि । शशविषाणं बन्ध्यासुत इ[2]ति व्यवहारव्युत्पत्तिकालेऽनादित्वाद् व्यवहारवासनायाः । उक्तं चात्रेत्यादि । 117b

"एकप्रत्यमर्शार्थज्ञानाद्येकार्थसाधन" (१।७५) इत्यत्र ।

अपि च यथा धवखदिरादयः परस्परभिन्नास्तथा गवादयः । तत्र **तुल्ये भेदे**

### *ख, सांख्यमतनिरासः*

**न निवृत्तिं विहायास्ति यदि भावान्वयोऽपरः ॥१६५॥**
**एकस्य कार्यमन्यस्य न स्याद[3]त्यन्तभेदतः ।**

**यद्येते भावा निवृत्त्यन्यान्वयिस्वभावेन केनचित् शून्याः, वहवो भावा एककार्यतायां न स्युः । यो हि तज्जननस्वभावः, न हि[4] सोऽन्यस्य । योऽस्ति न स जनकः, व्यतिरेकस्य निःस्वभावत्वात् । यज्जनकं तद् वस्तु, तज्जनकस्यान्यत्रा-**

---

कस्माद् वृक्षत्वं धवादिष्वेव वर्त्तते न गवादिष्विति पृष्टेन परेणैतदेव वक्तव्यं भावशक्तिरेव सा धवादीनां येन त एव वृक्षत्वं प्रति[3] प्रत्यासन्ना न गवादय इति । तदा तुल्ये भेद्ये **यथा प्रत्यासत्त्या** भावशक्तिलक्षणया **जातिः क्वचित्** स्वाश्रयाभिमतेऽर्थराशौ । **प्रसर्प्पति** । व्याप्य वर्त्तते । **सैव** भावशक्तिरन्वयि**शब्दज्ञाननिबन्धनमस्तु** । किं सामान्येन कल्पितेन (।)

तेन यदुच्यते ।

> "विषयेण हि बुद्धीनां विना नोत्पत्तिरिष्यते ।
> विशेषादन्यदिच्छन्ति सामान्यन्तेन तद् ध्रुवं ।
> ता हि[4] तेन विनोत्पन्ना मिथ्या स्युर्विषयादृते ।
> न त्वन्येन विना वृत्तिस्सामान्यस्येह दृष्यती"ति ।

तदपास्तं । न हि यथा सामान्यमन्तरेण केषुचित् सामान्यवृत्तिरिष्यते । तथा सामान्यम्विना सामान्यबुद्धिरिष्यतामिति परोभ्युपगमं कार्यते । येन ता हि तेन विनोत्पन्ना मिथ्या स्युरिति परस्योत्तरं स्यात् । केवलं यथा परस्य सामान्यमन्तरेण के[5]षुचित् पदार्थेषु यया प्रत्यासत्त्या सामान्यवृत्तिः सैव भ्रान्तान्वयिज्ञानशब्दनिमित्तमस्तु किं सामान्येनेत्ययमर्थोत्र विवक्षित इति न कश्चिद्दोषः ।

तस्मात् स्थितमेतद् (।) व्यावृत्तेरेवैकत्वाध्यवसायाद् भावेष्वन्वयो नान्यस्येति । (।१६४–६५।।)

अत्र सांख्यः प्राह । **न निवृत्ति**मित्यादि । **भावान्वयो** भावानामेकरूपत्वं । **अपर** इति वस्तुभूतः । तदे**कस्य** बीजस्य य[6]**त्कार्यन्तदन्यस्य** पृथिव्यादे**र्न स्यात्** । कस्मात् (।) तयोर्बीजपृथिव्यो**रत्यन्तभेदतः** । (।१६५–६६)

**यद्येत** इत्यादिना व्याचष्टे । **एषा**मिति भावानां यथा बीजादेकादीनामेकमंकुराख्यं कार्यं । **यो ही**त्यादिना तदेव साधयति । **यो हि तस्य** बीजस्यांकुर**जनन-**

---

[1] Śloka, Ākṛtī 37, 38

**भावात्, अन्येन न स्यादुत्पन्नम्[5]।**

**यदि तज्जनकस्वभावो यः स एवान्यस्यापि स्यात्, तेन स्वभावेन तत्र ततोऽभिन्नः स्यादित्यस्ति स्वभावान्वयः।**

**यद्येकात्मतयाऽनेकः[6] कार्यस्यैकस्य कारकः ॥१६६॥**
**आत्मैकत्रापि सोस्तीति व्यर्थाः स्युः सहकारिणः।**

**यद्यनेक एकस्वभावत्वात् एकस्य कारकः, तेषामभिन्नः स्वभावः स हि एकसन्निधानेऽप्यस्ति हेत्ववैकल्यात्,[7] एकोऽपि जनकः स्यात्।** 470a

**नापैत्यभिन्नं तद् रूपं विशेषाः खल्वपायिनः ॥१६७॥**

**नहि तस्याभिन्नस्वभावस्य अर्थान्तरेऽपि विशेषोऽस्ति। विशेषे सत्य[1]भेद-**

---

**स्वभावो न हि सोन्यस्य** पृथिव्यादेरस्ति।[7] **योस्ति** बुद्ध्यारोपितो व्यावृत्तिलक्षणो **न स जनकः**। कस्माद्। **व्यतिरेकस्यान्यव्यावृत्तिलक्षणस्य निःस्वभावत्वात्**। तस्माद् बीजस्वलक्षणमेव **जनकं यच्च** जनकरूपन्त**देव वस्तु**। **तज्जनकं चे**त्यङ्कुरजनकं स्वलक्षणं। **अपरत्रे**ति पृथिव्यादौ। अपरं पृथिव्यादिकमंकुरं जनयेत्। **स ही**त्यादि। हि शब्द एवकारार्थः। **तस्येति** बीजस्य। **अ[1]न्यस्य** पृथिव्यादेः (।) स पृथिव्यादिस्ते-नांकुरजननेन बीज**स्वभावेन ततो** बीजाद**भिन्नः स्यात्**। **इत्यस्तिस्वभावान्वयः**। तेन केचित् स्वभावभेदेपि प्रकृत्यैककार्यकारिण इन्द्रियादिवदित्ययुक्तमुक्तमिति। 118a

**यदी**त्यादिना सि द्धा न्त वा दी। **आत्मैकत्रापी**ति। कारणकलापस्य येना-भिन्नेनात्मना जनकत्वमिष्यते। **स** आत्मा तेषां कारणा[2] नाम्मध्ये एकत्रापि कारणे-**स्तीति**। तेनैकेन कार्यं कृतमिति कृत्वा **व्यर्थाः स्युः सहकारिणः**।

ननु व्यावृत्तिवादिनोप्यन्त्यावस्थायां सर्वेषां जनकत्वात् कारणान्तरवैयर्थ्यं।

नैतदस्ति। समुदितानामेव तेषान्तादृशं सामर्थ्यं क्षणिकानां। हेतुप्रत्यया-यत्तसन्निधित्वात्। परस्य तु नित्यवादिनः सदा तद् रूपमस्तीति भवेत्कारणान्तरा-णामानर्थक्यं। अत एवोक्त**मेकत्रापि सोस्ती**ति कारणान्तरविकलावस्थायाम-पीत्यर्थः।

**यदी**त्यादिना व्याचष्टे। **अनेकः** पदार्थो **यद्येकस्वभावत्वादेकस्य** कार्यस्य **कारकः** जनकः स **तेषां** कारणाभिमतानाम**भिन्नो** जनकः **स्वभाव एक**कारण**सन्निधानेप्य-स्ति। ततश्च** सर्वस्यामवस्थाया**मवैकल्यात्** कारणस्य यत्र तत्रावस्थितिरे**को[4]पि जनकः स्यात्**। (।१६६–६७)

एतदेव द्रढयन्नाह। **यस्मा**दित्यादि। एकस्मिन्नपि बीजादौ सन्निहिते **नापै-त्यभिन्नं तत्**कार्यजननं सामान्यरूपं। **विशेषा** व्यक्तिभेदा **अपायिनः**। **न हि तस्या-**

**हानेः। स हि तत्राप्यस्तीति नैकस्य स्थितावपि तस्यापायोऽस्ति। ये विशेषा अवस्थाभेदास्तेषां सहस्थितिनियमाभावात् स्यादपायः।**

**न च ते जनका इष्टाः[2]। सहकारिणां हि एकस्वभावतया जनकत्वाभ्युपगमात्। तस्माद् जनकस्य स्थानात्, अस्थायिनोऽजनकत्वात् एकस्थितावपि कार्योत्पत्तिः स्यात्, न च भवति। ततः—**

**एकापाये फलाभावाद् विशेषेभ्यस्तदुद्भवः।**

**अनेकसहकारिसाधारणं कार्यं एकविशेषापायेऽपि न स्याद्, सर्वविशेषा[4]पायेऽपि स्यात्। नन्वखिलेऽप्यभिन्ने रूपे न भवति। कार्यं हि कुतश्चिद् भावधर्मी न स्यात्, य भवति तत्तस्य वैकल्यात्। न चाभिन्नस्य एकस्य स्थितावपि[5] वैकल्यमस्ति। अविकले तस्मिन् अभवत तस्याजनकतां सूचयति।**

---

**भिन्नस्य** कार्यजननस्वभावस्य बीजादर्थान्तरेपि पृथिव्यादौ **विशेषोस्ति**। किङ्कारणम् (।) **विशेषे सत्यभेदहानेः। स** ह्यभिन्नो जनकाभिमतः स्वभावस्**तत्रा**[5]**पि** बीजेपि केवले**स्तीति। नैकस्य स्थितावपि तस्ये**त्यभिन्नस्य रूपस्य जनकाभिमत**स्यापायो** विनाशोस्ति। त्रैगुण्यस्य सर्वात्मना सर्वत्र सर्वदा सत्त्वात्। **ये विशेषा अवस्थाभेदास्तेषां सहस्थितिनियमाभावात् स्यादपायः।**

एतच्चाभ्युपगम्योक्तं। अन्यथा नित्यादवस्थान्तरव्यतिरिक्तानां विशेषाणामपि कथमपायः। **न च** [6]**ते जनका** इति विशेषाः कस्मान्**नेष्टा** इत्याह। **सहकारिणा**मित्यादि। **तस्मादेक**स्मिन्नपि बीजादौ स्थिते **जनकस्या**त्मनः **स्थानात्। अस्थायिन** इति विशेषस्य। **एकस्थिताव**पीति बीजादेरन्यतमस्य स्थितावपि **कार्योत्पत्तिः स्यात्। न च भवति** कार्योत्पत्तिः। ततः सामान्यस्थितेपि सहकारिणाम्मध्ये। **एकस्य** विशेषस्**यापा**[7]**ये। फलाभावाद् विशेषेभ्यस्तदुद्भवः** कार्योद्भवः। न सामान्यात्। तत्कार्यमङ्कुरादिकं। किं भूतं। **अने**कमित्यादि। अनेकस्य सहकारिणः **साधारणं।** अनेकसहकारिजन्यमित्यर्थः। **एकविशेषापाये**पीति सहकारिणामन्यतमभेदापायेपि। अनेन व्यतिरेकमाह।

118b

**पुनरित्या**दिनान्वयं। तस्माद् विशेषेष्वेवान्वयव्यतिरेकौ कार्यस्य न तु सामा[1]न्ये। तदाह (।) नन्वविकल इति। एकविशेषस्थिताव**विकलेप्यभिन्ने रूपे** तत्कार्य**न्न भवति। कार्यं** हीत्यादिनैतदेव विभजते। **कुतश्चि**द् भाव उत्पादः स एव धर्मः। स यस्यास्ति तत् तद्भावधर्मि। कदाचित् **यत्र भवति तत्तस्य** जनकस्य वैकल्यान्न **चाभिन्नस्य** रूपस्य जनकाभिमतस्य सहकारिणां मध्ये। **एकस्य स्थितावपि वैकल्यमस्ति। अविकले तस्मिन्** सामान्यरूपे[2] कार्य**मभवत् तस्य** सामा-

**यत्साकल्यवैकल्याभ्यां तत एव कार्यस्योत्पत्तिः, तस्मिन् सति भवतो नियमः स्यात्। तदन्यस्मादुत्पत्तिकल्पनायां[6] हि अतिप्रसङ्गात्। तस्माद् विशेषा एव जनका न सामान्यम्। ततस्त एव वस्तु।**

**स पारमार्थिको भावो य एवार्थक्रियाक्षमः ॥१६८॥**

**इदमेव हि वस्त्ववस्तुलक्षणं अर्थ[7]क्रियायोग्यताऽयोग्यते इति वक्ष्यामः।** 470b **अर्थक्रियासमर्थो योग्योऽर्थः।**

**स च नान्वेति योऽन्वेति न तस्मात् कार्यसंभवः।**

**तस्माद् सर्वं सामान्यं अनर्थक्रियायोग्यत्वात् न वस्त्विति वस्तु विशेष एव, तत एव तन्निष्पत्तेः।**

**स्वभावानन्वयात् तर्हि एकस्य जनकं रूपं तदन्यस्य नास्तीति अजनकः स्यात्।**

---

न्यस्याजनकात्मतां **सूचयति**। (।१६७–६८॥)

ननु न सामान्यमेव जनकमिष्यते येनायन्दोषः स्यादपि तु अनेकात्मतया जनक इत्युक्तमित्यत्राह। **यत्साकल्ये**त्यादि। येषां च विशेषाणां **साकल्यवैकल्याभ्यां** कार्यम्भावाभाववत्। **तत एव** विशेषेभ्यः **कार्यस्योत्पत्तिः। तस्मिन् सतीति** हेतुभावयोग्ये विशेषे सति भवतः कार्यस्य। **तदन्यस्मा**[3]दिति। विशेषादन्यस्मात् सामान्या**दतिप्रसंगात्** सर्वः सर्वस्य कारणं स्यात्। यत एवं **तस्माद् विशेषा एव जनकाः। न सामान्यं** जनकं। **ततो**ऽजनकत्वात् **त एव** विशेषा **वस्तु**। परमार्थसन्त इत्यर्थः। किं कारणं (।) यस्मात् पारमार्थिको भावः परमार्थसन्नित्यर्थः। **स एवार्थक्रियाक्षमः।**

इदमेव **ही**त्यादिना व्याचष्टे। **अर्थक्रियायोग्यता वस्तुनो लक्षणं। अ[4]योग्यता** त्ववस्तुनो लक्षणं। **वक्ष्याम** इति सम्बन्धः (।)

अर्थक्रियाक्षमं यत्तदत्र परमार्थसदि (३।३) त्यादिना। सर्वार्थक्रियायोग्योर्थो विशेषात्मको **नान्वेति**। विशेषस्य व्यक्त्यन्तराननुयायित्वात्। **योन्वेति** सामान्यात्मा। **तस्मात्** सामान्यात्मनो **न कार्यस्य सम्भवः।**

**तस्मादि**त्यादिनोपसंहारः। **अनर्थक्रियायोग्यत्वादि**त्यर्थक्रियायामयोग्यत्वादित्यर्थः।[5] **तत एवेति** विशेषादेव **तन्निष्पत्ते**रर्थक्रियाया निष्पत्तेः।

तदेवम्परैः कल्पितस्याजनकत्वं प्रतिपादितं। (१६८–६९)

अधुना यत्परेणोक्तं "एकस्य कार्यमन्यस्य न स्यादत्यन्तभेदत" इति तत्परिहर्तुं तदेव चोद्यमावर्त्तयति। **स्वभावानन्वयात्तर्ही**त्यादिना।

"ज्वरादिशमने कश्चित् सह प्रत्येकमेव वा (१।७६)"

**जनकत्वे भेदा[2]विशेषात् सर्वो जनकः स्यात् ।**

**नैतदस्ति—**

**तेनात्मना हि भेदेऽपि हेतुः कश्चिन्न चापरः ॥१६९॥**

**स्वभावोऽयं एकजनकात्मनो भिद्यमानाः[3] सर्वे समं जनका न वा कश्चिज्जनक इति। यथा तेषु न विशेषभावः, ततो भेदाविशेषेऽपि कुतश्चिदात्मातिशयात् कश्चिज्जनको[4] नापरः, स हि तस्य स्वभावो नापरस्य।**

**न हि वस्तुस्वभावेषु किमग्निर्दहत्युष्णो वा नोदकमिति पर्यनुयोगमर्हति, स्वभावायोऽयमिति यतः इति तन्मात्रं स्यात्। निर्हेतुकत्वेऽनपेक्षिणोऽनियमेनातिप्रसङ्गात्। तस्मात् स्वभावोऽस्य स्वहेतोरित्युच्यते। तस्यापि तज्जननात्मता**

---

इत्यादिना प्रागप्येतत् परिहृतन्तथा[6]प्यधिकविधानार्थः पुनरुपन्यासः। **एकस्य** बीजादेर्य**ज्जनकं रूपन्तदन्यस्य** पृथिव्यादेर्नास्तीति कृत्वाऽन्यः सहकारी **अजनकः स्यात्**। जनकस्वभावाद् भिन्नस्वभावस्य **जनकत्वे** चाभ्युपगम्यमाने **भेदाविशेषात् सर्वो** यवबीजादिरपि शाल्यङ्कुरस्य **जनकः स्यात्**।

**नैत**दित्यादिना परिहरति। शालिबीजस्यैकस्य जनकस्य य आत्मा **तेना[7]त्मना** पृथिव्यादेः यवबीजादेश्चात्यन्त**भेदेपि हेतुः कश्चित्** पृथिव्यादिः शाल्यंकुरस्य **नापरो** यवबीजादिः। **च**शब्दः श्लोकपूरणार्थः। एवकारार्थो वा। किङ्कारणं (।) **स्वभावोयं** भावानां एकस्य यो जनक आत्मा तस्मादात्मनः स्वभावाद् भिद्यमानाः सर्वे **समन्तुल्यं जनकाः** प्राप्नुवन्ति (।) भेदाविशेषान्न वा कश्चिज्जनक इति (।)

119a स्यादेतच्चो[7]द्यं। यद्येषामेकस्माज्जनकादात्मनो भिन्नानान्तदतत्कार्यजननं प्रति नियमलक्षणो विशेषो न सम्भवेत्। किन्तु सम्भवेदेव। **तत** इति विशेषसम्भवात्। **भेदाविशेषेपि कुतश्चिदात्मातिशया**द्विशिष्टकार्यप्रतिनियतलक्षणात् **कश्चिज्जनकः** पृथिव्यादिः शाल्यंकुरस्य **नापरो** यवबीजादिः (।) कस्माच्छाल्यङ्कुरजनना[1]विशेष**स्तस्य** पृथिव्यादेः सहकारिणः **स्वभावो नापरस्य** यवबीजादेः। अयमेव विभागः किंकृत इति चेदाह। **न ही**त्यादि। **किमग्निर्दहत्युष्णो वा नोदक**न्दहत्युष्णं **चेति न पर्यनुयोगमर्हति** प्रत्यक्षादिप्रमाणसिद्धत्वात्। एतावत्तु प्रष्टुं युक्तं स्यात्(।) कुतो हेतोरयं यथोक्तस्वभाव इति। अवश्यं हि स्वभावभेदस्य हेतुना भाव्यं। यतो[2] **निर्हेतुकत्वेऽनपेक्षिणो** देशादि**नियमेनातिप्रसंगात्**। सर्वत्र सर्वदा सर्वात्मना भावप्रसंगात्। **तस्मात् स्वभावोस्य** कारणाभिमतस्य **स्वहेतोः** सकाशाद् भवती**त्युच्यते। तस्यापि** स्वहेतोस्त**ज्जननात्मता** तथाभूतकारणस्वभावजननात्मता **तदन्यस्मात्** स्वहेतोरित्य**नादिर्हेतुपरम्परा**।

**तदन्यस्मात् इत्यनादि[6]हेतुपरम्परा।**

**न हि भिन्नानां कश्चिद्धेतुरपरः, स्वभावादिति न किमपि बाधकम्।**

**स्वभावोऽयमभेदे तु स्यातां नाशोद्भवौ सकृत्।**

**स्वभावेनाभेदात्।[7] स्वात्मवद् नानाविभागोत्पत्तिस्थितिनिरोधा न स्युः। तथाऽभेदेनोपलक्षणात्। भेदाभेदलक्षणे हीमे एका[1]कारस्यापि व्यतिरेकाव्यतिरेके, एकात्मनि विरोधाभावात्।** 471a

**भेदोऽपि तेन नैवं चेत्;**

**न वै सर्वाकारेणाभेदे ब्रूमो येनैवं स्यात्। किन्त्वस्य कश्चिदात्मा[2] भिन्नाभिन्न इति भेदात् न सहजादिः।**

---

**न हि भिन्नाना**म्भावानां हेतुप्रविभागे बाध[3]कं प्रमाणमस्ति। तदेवाह। **भिन्ने**त्यादि। **स्वभावा**दिति वस्तुस्थितेः। एकत्वे तु बाध**कम**स्तीत्याह। **अभेदे** त्वित्यादि। परस्परमभेदादेकस्य नाशे सर्वस्य **युगपन्नाशः** उत्पादे सर्वस्योत्पादः स्यादित्यर्थः।

**अभेदा**दित्यादिना व्याचष्टे। **विश्वस्य** सर्वस्य पदार्थराशेः स्वभावेनाभेदात्। **विभागोत्पत्ती**त्यादि। एकस्योत्पत्तिर[4]न्यस्या**नुत्पत्ति**रेकस्य **स्थिति**रन्यस्य **निरोध** इत्येवम्विभागेनोत्पत्त्यादयो **न** स्युः। **स्वात्मवदिति**। यथैकस्यावस्थाविशेषस्य विभागेन नोत्पत्त्यादयस्तद्वदित्यर्थः। आदिशब्दादेकस्य ग्रहणमन्यस्याग्रहणमित्यादि। सूत्रे तु नाशोत्पादग्रहणमुपलक्षणार्थं। **तथा** तेनैव विभागोत्पत्त्यादिना **उपलक्षणा**न्निश्चयादभेदस्य।[5] अन्यथा भेदाभेदौ केन लक्ष्येते। **एकाकारस्यापी**ति तुल्याकारस्यापि **व्यतिरेको** विभागः पृथगुत्पत्त्यादिमत्त्वं। तद् भेदस्य लक्षणं। **अव्यतिरेको**ऽविभागः पृथगुत्पत्त्यादिमत्त्वाभावः। तदभेदस्य लक्षणं। सत्यपि विभागोत्पत्त्यादिमत्त्वे कस्माद् भेद इत्याह। **विरोधिनो**रित्यादि। विरोधिनोरुत्पादानुत्पादप्रभृ[6]तिकयोर्युगपदेकात्मनि विरोधात्। नाभेद एवार्थानां किन्तु भेदोप्यस्ति। तदुक्तं।

सर्वं हि वस्तुरूपेण भिद्यते न परस्परं।
स्वरूपापेक्षया चैषां परस्परविभिन्नतेति।

तेन कारणेन। नैवं (।) न सकृदुत्पादादिप्रसंग इति चेदाह। **नेत्याद्य**स्यैव व्याख्यानं। **न वै सर्वेणाकारेणा**व्यतिरेक**मभेदं ब्रूमः। ये[7]नैवं स्यात्**। सकृन्नाशोत्पादादि स्यात्। **किन्त्वस्य** बाह्याध्यात्मिकस्य भेदस्य **कश्चिदात्मा** घटाद्यवस्थाविशेषलक्षणो **भिन्नो** नान्यस्त्रैगुण्यात्मकः सुखदुःखमोहात्मताया वस्तुरूपताया द्रव्यरूपताया सत्तारूपतायाश्च सर्वत्रानगमात्। तेनायमर्थोवस्थातद्वतोः 119b

**एवं हि—**

**य एकस्मिन् विनश्यति ॥१७०॥**

**तिष्ठत्यात्मा न तस्यातः;**

**स्थानास्थानयोरेकाश्रयत्वे[3] कोऽन्यो धर्मो भेदकः ? एवं क्वचिदपि नानात्वं न स्यात्। सर्वाकारविवेकिनोरर्थयोरभ्युपगमात्। नाम केवलं नेष्टं स्यात्। वस्तु तु[4] नेत्युक्तं प्राक्।**

**तद् इमे नैकयोगक्षेमाः इमे भावा भिन्ना एव।**

**न स्यात् सामान्यभेदधीः।**

**तद् इदं नार्थान्तरं अनायत्तं, अजन्यत्वात्, अस्य सामान्यं भेदो वेति व्यपदेशं**

---

परस्परमभेदोप्यवस्थानान्तु परस्परम्भेद एव। इति यथोक्तादवस्थादिलक्षणाद् **भेदा[1]त्**। (१६९–७०)

एवं तर्हि सामान्यस्य नित्यत्वात् सर्वत्र स्थानं। विशेषाणान्तु विनाश इत्येतदङ्गीकृतं। ततश्चैकस्मिन् विशेषे विनश्यति सति यस्तिष्ठति सामान्यात्मा न स तस्य विशेषस्य सम्भवः। विरुद्धधर्माध्यासात् सामान्यविशेषयोर्भेद एव स्यात्। अन्यथा **स्थानास्थानयोरेकात्माश्रयत्वे**भ्युपगम्यमाने विरुद्धावपि धर्मावेकात्मन्यङ्गीकृतौ भ[2]वतश्च (।) **कोन्यो धर्मो भेदको** नैव कश्चित्। नैव विरुद्धौ धर्मावेकत्राङ्गीक्रियेते तयोर्लक्षणभेदाद् भिन्नत्वात्। तथा हि विशेषाः पृथगुत्पादादिना सर्वाकारविवेकिनः सामान्यन्तु पृथगुत्पत्त्याद्यभावात् सर्वत्राविवेकीत्यत आह। **सर्वाकारे**त्यादि। **सर्वाकारविवेकाविवेकिनो**र्यथाक्रमम्भेदसामान्ययो**रर्थयोरभ्युपगमात्**। **नाम केवल**मिति[3] भेदसामान्ये भिन्ने इत्येतदभिधानमात्रं **नेष्टं स्या**न्न तु वस्तु। **वस्तु तु** भेदसामान्यात्मकम्परस्परम्भिन्नमेवेष्टं। एतच्चो**क्तं प्राक्**। नामान्तरं वार्थभेदमभ्युपगम्य तथाभिधानादित्यादिना।

**तदिति** तस्मात्। **इमे भावा** इति विशेषाः सामान्यम्वा परस्परंभिन्ना एव। किंभूता **नैकयोगक्षेमा** विरुद्धधर्माध्यासिता इति यावत्। अ[4]तः कारणान्न **स्यात्सामान्यभेदधीः**। सामान्यविशेषयोः परस्परमसम्बध्नन्ती बुद्धिर्न स्यादित्यर्थः। बुद्ध्यभावाच्च व्यपदेशोपि प्रतिक्षिप्त एव। बुद्धिनिबन्धनत्वात्तस्य। तेन।

"अन्योन्यापेक्षिता नित्यं स्यात् सामान्यविशेषयोः।
विशेषाणान्तु सामान्यन्ते च तस्य भवन्ति हि (आकृ० ६)"

—इति निरस्तं। **तदिति** तस्मात्। इदं सामान्यम्भेदेभ्यो[5]र्थान्तरं। भेदेष्वनायत्तं। **कस्मात्** (।) **तैर्भेदैस्तस्य सामान्यस्याजन्यत्वात्**।

**नार्हति ।**

**अन्यापोहेऽपि समान एष प्रसंग इति चेत् । न समानः । तथा—**

**निवृत्तेर्निःस्वभावत्वात् न स्थानास्थानकल्पना ॥१७१॥**

**अन्यापोह[6] इति न कश्चिद् भावः तस्यापि स्वभावानुषंगिणीभिः स्वरूप-स्थितिप्रच्युतिकल्पनाभिः कल्पना न स्यात् ।**

**उपप्लवश्च सामान्यधियस्तेनाप्यदूषणा ।[7]** 471b

**मिथ्याज्ञानं हीदं निर्विषयमेव अनेकत्रैकाकारं तद्विषयस्याभावात्, न स्थिति-रस्थितिर्वा ।**

---

द्वितीयोर्थः (।) **तदिदं** भेदात्मकं वस्तु सामान्यादर्थान्तरन्तस्मिन् सामान्ये **अनायत्तन्तेनाजन्यत्वात्**। नित्यस्यार्थक्रियाऽसामर्थ्यात्। अस्य भेदस्येदं **सामान्य-मिति व्यपदेशं नार्हति। भेदो वास्य** सामान्यस्येति ॥

**अन्यापोहे**पि सामान्ये **एष प्रसंग** इति। य एकस्मिन् विनश्य[6]ति तिष्ठत्या-त्मेत्यादिकः। तथा हि धवे खदिरे वा विनश्यत्यवृक्षव्यावृत्तिस्तिष्ठत्येव वृक्षान्तरे।

**नेत्या**दिना परिहरति। अयमत्रार्थो द्विविधोन्यापोह एको विजातीयव्या-वृत्तौ बाह्यः स्वाकारभेदेनाध्यस्तो विकल्पबुद्ध्या यो विषयीक्रियते शब्देन च। तस्यैवार्थक्रियाकारित्वेन च प्रवृत्तिविषयत्वान्न बुद्धि[7]प्रतिभासमात्रस्यार्थकारित्वा- 120a भावात्। अपरोर्थाद् यत् प्रतीयतेऽन्यनिवृत्तिमात्रं। (१७०–७१)

यच्चैतदन्यनिवृत्तिमात्रन्तस्य निःस्वभावत्वान्नैतच्चोद्यं। आ चा र्ये ण वा यदभिमतन्तस्य निःस्वभावत्वादभावादित्यर्थः। तदाह (।) **निवृत्तेर्निःस्वभावत्वा-दिति न स्थानास्थानकल्पना**।

विशेषे विनश्यति किमन्यापोहस्तिष्ठति। किम्वा निवर्त्तत इति। इयं **स्थाना-स्थान[1]**कल्पना युक्ता। **तस्ये**त्यन्यापोहस्य। स्वभावानुषङ्गिण्यो वस्त्वनुपातिन्यः। विकल्पबुद्ध्यारोपितं यत्सामान्यन्तत्र तर्हि **स्वरूपस्थितिप्रच्युतिकल्पना** भविष्यती-त्यत आह। **उपप्लवश्चे**त्यादि। यः सामान्याकारोऽनेकपदार्थाभिन्नः प्रतिभासते (।) **सामान्यधिय उपप्लवो** भ्रान्तोऽतः सोपि बहिर्नास्त्येव (।) यत एवन्**तेनापि** विप्लवत्वेन कारणेन[2] सामान्यधीः। **अदूषणा**। नास्यां यथोक्तं दूषणमस्तीति विग्रहः।

इदमेकाकारं विकल्पविज्ञानं **निर्विषयं**। यस्मा**न्मिथ्याज्ञानम्**मिथ्यार्थमेव कथमिति चेदाह। **यदि**त्यादि। यस्माद**नेकत्रैकाकारं। तद्विषयस्य** विकल्पविज्ञान-विषयस्य सामान्यस्य **न स्थितिरस्थितिर्वा**। कस्मात् (।) **तस्य** मिथ्याज्ञान-**विषयस्याभावात्**। (१७१–७२)

**यत्पुनरिदं वचनं तज्जनको हि तत्स्वभावः—**

**यत्तस्य जनकं रूपं[1] ततोऽन्यो जनकः कथम् ॥१७२॥**

**इति ब्रूमः, तत्रान्यजनकं रूपं नास्तीति न ब्रूमः। किन्तर्हि ? यदेकस्य तज्जनकं स्वरूपं तदन्यस्य नेति ब्रूमः। अन्योऽपि स्वरूपेणैव जायते न (पर)रूपेण अतत्वात्। तेऽपि यथास्वं भिन्ना जनकाश्च स्वभावेनेति कोत्र विरोधः ? एकरूपविकलः तद्रूपो न स्यात्, नातत्कार्यः[3]। तेनैव तत्कार्य इत्यत्र को न्यायः ?**

**अपि च।**

**भिन्ना विशेषा जनकाः**

**इत्युक्तम्।**

**तेऽपि विशेषास्तेनात्मना नान्योन्यान्वयिनः। यदेकस्य जनकं रूपं[4] तन्नास्ति। न तावताऽजनकाः। यदि तेऽभिन्नाः, तथा सति सत्यम्। विशेषा जनकाः, तेऽपि**

---

समानदोष[3]तामपनीय पुनः प्रकारान्तरेण प्रक्रान्तञ्चोद्यं परिहर्त्तुमाह। **यत्पुनरि**त्यादि। **तज्जनको हि** तस्य शाल्यङ्कुरस्य जनको हि स **तस्य** शालिबीजस्य **स्वभावः**। **यच्च तस्य** शालिबीजस्य शाल्यङ्कुर**जनकं** रूपं। **ततो** जनकाद् रूपा**दन्यः** पृथिव्यादि**र्जनकः कथमिति**। **तत्रे**त्युपन्यासे। तत्र वा चोद्ये प्रतिविधीयते। शालिबीजादन्**यस्य**[4] पृथिव्यादे**स्तज्जनक**मङ्कुरजनकं **रूपं नास्तीति न ब्रूमः**। किन्तर्हि **यदेकस्य** शालिबीजस्य **जनकं रूपन्तदन्यस्य** पृथिव्यादे**र्नेति ब्रूमः**। भावानां परस्परमनन्वयात्। **अन्योपी**ति। पृथिव्यादिः। **न पररूपेणे**ति न शालिबीजरूपेण। किं कारणम् (।) **अतत्वाद**तत्स्वभावत्वात्। न चात्र बाधकं प्रमाणमस्तीत्याह। **ते पृथिव्यादयो यथा**[5]**स्व**मिति (।) यस्य यत्स्वलक्षणं तेन **भिन्नाश्च** परस्परमेकस्य कार्यस्य **जनकाश्च स्वभावेनेति कोत्र विरोधो** न कश्चिद् बाधकप्रमाणाभावात्। न तु शाल्यङ्कुरजनकाभिमतेन शालिबीजरूपेण विकलस्य पृथिव्यादेः शाल्यङ्कुरकार्यत्वम्विरुद्धमित्यत आह। **एकरूपे**त्यादि। **एकस्य** शालिबीजस्य जनकं यद्रूपन्तेन **विकलः** पृथिव्यादिस्त[6]**द्रूपः** शालिबीजादिस्वभावो **न स्यात्। नातत्कार्यः** किन्तु तत्कार्य एव। स शाल्यङ्कुरः कार्यमस्येति विग्रहः। यदि तु बीजस्यैवाङ्कुरजनकत्वं स्यात् स्याद् विरोधस्तच्च नास्ति। तदाह। **तेनैवेत्यादि**। शालिबीजेनैव तत्कार्यमङ्कुराख्यं।

**अपि चेत्या**दिना पूर्वोक्तं स्मारयति।

120b "एकापाये फलाभावाद् विशेषेभ्यस्तदुद्भव" इति (।) प्रमाणबलेन **वि**[7]**शेषा जनका** इत्युक्तं प्राक्। **तेनात्मने**ति तेन जनकरूपेण। **यदेकस्य** बीजस्य **जनकं**

**न विशेषस्वभावाः ।**

**स्यादेतत् । अभिन्ना अपि[5] तदेकशक्तियोगात् जनकाः । तेनाजनकाः प्रोक्ताः । तेन सामान्यरूपेण तेऽजनकाः । तस्यानपायात् । एकत्र स्थितेनाऽपि फलो[6]त्पाद-प्रसंगादित्युक्तम् ।**

**प्रतिभासोऽपि भेदकः ॥१७३॥**

**अनन्यभाक् ;**

**किंच, शब्दा उत्पादस्थितिनिरोधविशेषाः । सर्वार्थाभेदचित्तो यः[7] तस्य** 472a **ह्यर्थेषु बुद्धिप्रतिभासभेदो विरुद्धधर्माध्यासात् न वा स्यात् । सति वा तस्मिन् अभेदे न क्वचित् स्यात् । तथा चैकात्मवद् अयं (प्र)विभागो[1] न स्यात् । तस्मादयं भिन्नप्रतिभासादिर्भेद एव न ।**

---

**रूप**मन्यस्य पृथिव्यादेस्त**न्नास्ति** । **न तावत्**ेति शालिबीजरूपवैकल्यमात्रेणा **जनकः** पृथिव्यादयः । **अप्यभेद** इत्यादि । तेषु भेदेष्वभेदोप्यस्तीत्यर्थः ।

**स्यादेतदि**त्यादिना व्याचष्टे । **तदे**वाभिन्नं रूप**मेका शक्तिस्**तया **योगात्** । **तेने**त्या चा र्यः । **तेना**भिन्नेन[1] रूपेण ते विशेषा **अजनकाः प्रोक्तः** ।

**सत्यपी**त्यादिना व्याचष्टे । **तेन सामान्यरूपेण ते** विशेषा **अजनकाः** (।) किङ्कारणं (।) **तस्य** सामान्यरूपस्य नित्यत्वेना**नपायात्** । एतच्च "नापैत्यभिन्न-न्तद्रूपम्वि**शेषाः खल्वपायिन**" (१।१६७) इत्यादिना प्रागुक्तं । (१७२–७३)

"**स्यातां नाशोद्भवौ** सकृदि"(१।१७०)त्यादिना **विरुद्धधर्माध्यासाद्** भेद-म्प्रसाध्य प्रतिभासभेदेनापि साधयितु[2]माह । **किं चे**त्यादि । किम्विशिष्टः प्रति-भासभेदः (।) **अनन्यभाक्** । प्रतिव्यक्ति भिन्नः । **अपि**शब्दादुत्पत्त्यादिभेदश्च भेदकः । एतच्च पूर्वोक्तमेव समुच्चीयते ।

योपि वे दा न्त वा द्याह । अभावग्रहणनिमित्तको हि भेदग्रहो न चाभावः प्रत्यक्षग्राह्यः । तेन प्रत्यक्षेण सत्तामात्रङ्गृह्यते न भेदः । तदुक्तं ।

"गव्यश्वे वोपजातन्तु प्रत्यक्षं न विशिष्यते" (।)

इत्यत आह[3] । **न्याय**मित्यादि । **तस्ये**त्यभेदवादिनः । **बुद्धिप्रतिभासभेदो** बुद्धेराकारभेदः । विरुद्धधर्माध्यासश्चेति पृथगुत्पत्तिविनाशादिकः । **सति वा तस्मिन्** प्रतिभासादिभेदे भावानाम**भेदे**भ्युपगम्यमाने **न क्वचिद्** भेदः **स्यात्** । लोकप्रतीतश्च भेदः । **तथा चे**त्यभेदे सति **अयं प्रविभाग** इति प्रतिभासादिप्रविभागः । **एकात्मवत्** । यथैकस्मिन् सुखात्म[4]नि न प्रतिभासादिभेदस्तद्वत् । **तस्मादयं** बाह्या-ध्यात्मिको भेदो **विशेष एव** परस्परविलक्षण एव । किंभूतः(।) **भिन्नप्रतिभा-**

**न चात्र अभेदप्रतिभासापरदर्शनं अभूतं, यद्बलेन अभेदज्ञानं जायेत। ततो विशेष एव सोऽर्थः।**

स एवार्थस्तस्य[2] व्यावृत्तयोऽपरे।
तत् कार्यं कारणञ्चोक्तं तत्स्वलक्षणमिष्यते ॥१७४॥
तत्त्यागाप्तिफलाः सर्वाः पुरुषाणां प्रवृत्तयः।

**योऽर्थक्रियाकारी स एव वस्त्वित्युक्तम्। स च विशेष एव। यच्च[3] सामान्यमिति तद्धि तस्यैव व्यावृत्तिः। न हि तस्यार्थत्वे दृश्यस्य रूपानुपलक्षणं युक्तम्। भेदेषु अभेदप्रत्ययस्य तदुपलक्षणकृतत्वात्।**

**अपि[4] च—**

यथा भेदाविशेषेऽपि न सर्वं सर्वसाधनम् ॥१७५॥
तथा भेदाविशेषेऽपि न सर्वं सर्वसाधनम्।

---

**सादिः**। भिन्नः प्रतिभासादिर्यस्येति विग्रहः।

निर्विकल्पकबोधेन द्व्यात्मकस्यापि वस्तुनो ग्रहणादभेदोपीति चेदाह। **न चात्रे**त्यादि। **अत्रेति** भेदेषु। **अपर**मिति द्वितीयं। **यद्बलेना**भिन्नप्रतिभासबलेन। **ततो विशेष[5] एव** भेद एव। न त्वभेदोस्ति। स एव विशेषो वस्तु।

ये त्वपरे सामान्यधर्मा वस्तुत्वादयस्तस्यैव व्यावृत्तयः कल्पिताः। (१७३–७४)

**तत्कार्य**मित्यादि। कार्यादिपदसामानाधिकरण्यान्नपुंसकं। अन्यथा विशेषस्य प्रक्रान्तत्वात्स इति स्यात्। **तदेव** विशेषरूपं **कार्यं कारणं चोक्तन्त**देव स्वलक्षणमुच्यते (।) **तत्त्यागाप्ति**फला इति तस्यैव विशेषस्य हेयस्यो[6]पादेयस्य वा यथाक्रमं त्याग आप्तिश्च फलं यासाम्प्रवृत्तीनान्तास्तथोक्ताः। **स चार्थक्रियाकारी विशेष एव। तस्यैवेति** विशेषस्यापरस्माद् विजातीयाद् भेदो व्यावृत्तिमात्रं। न तु वस्तुभूतं किञ्चित् सामान्यं नाम। (१७४–७५)

यदि हि स्यात् तदुपलब्धिलक्षणप्राप्तम्भेदव्यतिरेकिणोपलभ्येत। हि यस्मात्। **न हि तस्य** सामान्यस्या**र्थत्वे** वस्तुत्वे सति **दृश्यस्य सतः**। **रू[7]पानुपलक्षणं** स्वरूपाग्रहणं **युक्तं**। कस्मात्। **तदुपलक्षणकृतत्वात्** सामान्योपलक्षणकृतत्वाद् **भेदेषु** भेदप्रत्ययस्य। न हि स्वयमगृहीतम्परत्र ज्ञानहेतुः।

121a

एवन्तावत् मीमांसकादिमतेन प्रातिभासिकं सामान्यं निराकृत्यानुमानिकमपि पूर्वोक्तं सांख्यमतेन निराकर्त्तुमाह। **अपि चे**त्यादि। यथा सांख्यस्य भेदाविशेषेपि न **सर्वं सर्वसाधनं। तथा** बौद्ध[1]स्य **भेदाविशेषेपि न सर्वं सर्वसाधनं।** कस्य पुनश्चोद्यस्यायं समाधिरित्याह। **यदुक्त**मित्यादि। **तज्जनकस्वभावा**दिति (।)

**एवं जनकस्वभावात् भेदजनकं स्यात् । जनकत्वेऽपि[5] अविशेषात् सर्वो जनकः स्यादिति यदुक्तम् । अत्र चोद्ये । यदि अविशेषभूतं, तथा च सति यथाऽऽत्मत्वा-भेदवादिनोऽत्र अभेदस्य विशेषाभावे[6]ऽपि न सर्वो सर्वजनकः, तथा विशेषेऽपि भवि-ष्यति ।**

• **अथवा—**

**भेदे हि कारके किञ्चिद् वस्तुधर्म्मतया भवेत् ॥१७६॥**
**अभेदे तु विरुध्येते तस्यैकस्य क्रिया[7]क्रिये ।** 47

**भेदमात्राविशेषेऽपि स्वहेतुप्रत्ययनियमितस्वभावत्वात्, कश्चिदेव कारकः स्यान्नान्ये, अतत्स्वभावलक्षणत्वात् । तथा नात्र कश्चिदपि[1] विरोधः ।**

**एकत्वेऽपि न तत् तस्मादेव एवं कारकत्वाकारकत्वे इति ।**

**एकत्वेऽपि न तस्य तत्रैव तथा कारकत्वाकारकत्वे इति हि विरोधः ।**

**भेदोप्यस्ति क्रियातश्चेत् न कुर्युः सहकारिणः ॥१७७॥**

**अथ सर्वाकारेषु अभेदो नो[2]च्यते भेदस्य भावात् । ततश्च न कारकं किंचिदपि । तथा चेत् केनाऽपि प्रकारेण भेदात् सहकारी हि कारको न स्यात् ।**

**पर्यायेणाथ कर्तृत्वं स किं तस्यैव वस्तुनः ।**

---

शाल्यङ्कुरजननस्वभावाद् भिन्नः पृथिव्यादिः । अस्येत्यङ्कुरस्य । **जनकत्वे** वाभ्यु-पगम्यमाने भेदस्या**विशेषात् सर्वो जनकः** स्यादिति । **अत्र** चोद्ये उक्तमेवोत्तरं । इदन्तु द्वितीयमुच्यते । किं पुनरुक्तमित्याह । **यदी**त्यादि । प्रतिनियत[2]कार्यजनका-जनकत्वलक्षणो विशेषो न स्यात् । (१७५–७६)

स्यादेतच्चोद्यमिति ।

**यथे**त्यादिना श्लोकार्थमाह । **तथा विशेषेपि भविष्यति । न सर्वः सर्वजनक** इति सम्बन्धः । **वस्तुधर्मतये**ति वस्तुशक्त्या । भावाना**मभेदे** त्वभ्युपगम्यमाने । तस्य सर्वत्राभिन्नत्वेनाभ्युपगतस्यैकत्र **क्रियाक्रिये विरुध्येते** । (१७६–७७)

**भेदमात्रे**त्यादिना व्याचष्टे । **हेतु**रुपादानकारणं । **प्रत्यया**[3]स्सहकारिणः (।) **स्वहेतुप्रत्ययाः** स्वहेतुप्रत्ययास्तै**र्नियमितो** विशिष्टकार्यनिर्वर्त्तनसमर्थः कृतः **स्वभावो** येषान्ते तथोक्ताः । तद्भावस्तस्मात् । **नान्य** इत्यकारकाभिमता न **कारका स्युः** । **किङ्कारणम्** (।) अतत्स्वभावत्वात् । अतत्कार्यजननस्वभावत्वात् । **तस्ये**त्येकस्य त्रैगुण्यस्य । **तत्रैवे**त्येकस्मिन्नेव कार्ये । **तथेति** तेनैवाभिन्नेन प्रकारेण । तथापि यदा शा[4]लिबीजं शाल्यङ्कुरं जनयति तदैव न यवबीजं शाल्यङ्कुरं जनयति । यश्च शालिबीजस्यात्मा । स एव यवबीजस्येत्येकत्रैकस्य क्रियाक्रिये प्रसज्येते ।

**अथ च**[3] **न किञ्चिदपि कारकं, अभावः स्यात्। सर्वेषां सर्वत्र पर्यायेणोपयोगात्, तन्निवेशिन्या रूपान्तरेण परिणताया उपयोगात् एकस्य कथं न तस्यैवैकस्य पर्यायस्य**[4] **आश्रयो वा। अभिन्नपरिणामो वा। विशेषे वा कथंचिद् एकत्वहानिरिति न किंचिदपि युक्तम्।**

**किञ्च—**

**अत्यन्तभेदाभेदौ च स्यातां तद्वति वस्तुनि ॥१७८॥**

---

त्रैगुण्यस्य तेन तेन शालिवीजादिसन्निवेशेन भेदोप्यस्ति। अतो भेदात् कस्यचिद् क्रिया चेत्। "भेदश्चेदक्रियाहेतुर्न कुर्युः सहकारिणः।" तेषामपि परस्परं भेदात्।

**ने**त्यादिना व्याचष्टे। सर्वाकारा धियः[5] किन्तस्यैवैकस्य वस्तुनः। नैवेत्यर्थः। भेदाधिष्ठानत्वात्। पर्यायस्येति भावः।

**अथे**त्यादिना व्याचष्टे। **सर्वेषा**म्भेदानां **सर्वत्र** कार्ये **पर्यायेण क्रमेणोपयोगात्**। एतच्च यदा प्र धा न शक्त्याधिष्ठितानामेव भेदानामपरापरपरिणामेन कार्यकर्त्तृत्वमिति दर्शनन्तदोक्तं। यदा त्विदं दर्शनम्प्रधानशक्तिरेवापरापररूपेण परिणामार्थक्रिया[7]यामुपयुज्यते तदेदमुच्यते (।) **शक्ते**र्वेत्यादि। त्रैगुण्यलक्षणायास्त**न्निवेशिन्याः** पूर्वमकारकाभिमतपदार्थनिवेशिन्याः पश्चाद् **रूपान्तरे**ण कारकाभिमतरूपेण **परिणताया** उपयोगान्नैव कश्चिदकारकोस्तीत्यनेन सम्बन्धः। **भेदो** नानात्वमाश्रयो यस्य **पर्यायस्य** स तथोक्तः। एकस्याभेदस्य **कथन्नैव**। शालिबीज**स्यैकस्य** यवबीजादिरूपतया परिणामो न यु[1]क्त इत्यर्थ।

121b

एतेन **स किन्तस्यैव वस्तुन** इत्येतद् विवृतं। (१७७–७८)

**शक्ते**र्वेति यदुक्तन्तत्राह। **परिणामो** वेति। **अव्यतिरेकिण्या** इति निर्विभागायाः शक्तेः परिणामो वावस्थानान्तरप्राप्तिर्वा कथं। अथेष्यतेऽवस्थान्तराणां प्राप्तिरात्मभूतैव त्रैगुण्यस्य। ततो **विशेषे** वा **कथंचिद**भ्युपगम्यते। प्रधान**स्यैकत्वहानिरिति।**

एवन्तावत्परिणामपक्षं निराकृत्याधुनाऽभि[2]न्नम्वा भिन्नाभिन्नम्वा भिन्नम्वा सर्वासु चोत्तरोत्तरावस्थास्वनुयायित्वादूर्द्ध(?ध्र्व)वृत्ति वा। **समं सर्वासु व्यक्तिष्व**नुयायित्वात् तिर्यग्वृत्ति वा सामान्यमभ्युपगम्य सां ख्य मी मां स क नै या यि काद्यभिमतं दूषयितुमाह। किंचेत्यादि।

**तेन** योपि दि ग म्ब रो मन्यते (।) नास्त्याभिर्घटपटादिष्वेकं सामान्यमिष्यते तेषामेकान्तभेदात्। किन्त्वपरापरेण पर्यायेणावस्थासं[3]ज्ञितेन परिणामि द्रव्यमेतदेव च सर्वपर्यायानुयायित्वात् सामान्यमुच्यते। तथा हि सुवर्णात्मकं घटं भङ्क्त्वा

**अन्योन्यं वा तयोर्भेदः सदृशासदृशात्मनोः ।**

---

मौलिनिर्वर्त्तने तदेव सुवर्ण्णद्रव्यं घटरूपतया विनश्य मौलिरूपतयोत्पद्यमानं सुवर्णस्वभावेन तिष्ठतीत्यपरापरावस्थायाः परिणामि। तत्सामान्यमित्युच्यते। परिणामित्वादेव चावस्थातद्वतोरभेदोन्यथावस्थातुः सकाशादवस्था[4]या भेदे परिणामायोगात्। घटात्मतया च सुवर्ण्णद्रव्यस्य विनाशुपटार्थी शोकं प्रतिपद्यते। मौलिरूपतयोत्पादे तदर्थी प्रामोद्यं प्रतिपद्यते (।) सुवर्ण्णतया च विनाशोत्पादाभावे सुवर्ण्णार्थी माध्यस्थ्यं प्रतिपद्यते (।) तेन युगपदुत्पादव्ययध्रौव्ययुक्तं सदिति वस्तुनो लक्षणमिति। तदाह।

"घटमौलिसुवर्ण्णार्थी वि(?)नाशोत्पादस्थितिष्वयं।
शोकप्रमोदमाध्यस्थं जनो याति सहेतुकं।
न नाशेन विना शोको नोत्पादेन विना सुखं।
स्थित्या विना न माध्यस्थन्तस्माद् वस्तु त्रयात्मकं।
पयोव्रतो न दध्यत्ति न पयोत्ति दधिव्रतः।
अगोरसव्रतो नोभे तस्माद् वस्तु त्रयात्मकं।
न सामान्यात्मनोदेति न व्येति व्यक्तमन्वयात्।
वे (व्ये)त्युदेति विशेषेण सहैकत्रोदयादि सदि"ति।

सोप्यत्र निराकृत[6] एव द्रष्टव्यः। **तद्वति** सामान्यविशेषवति वस्तुन्यभ्युपगम्यमाने। **अत्यन्तमभेदाभेदौ** स्यातां। विशेषेभ्यो घटपटादिभ्यः सामान्यस्य त्रैगुण्यादिलक्षणस्याव्यतिरेकात् सामान्यमपि विशेषात्मकमित्यत्यन्तभेदः स्यात्। सामान्यस्याभावात्। सामान्याद् विशेषाणामव्यक्तिरेकादैक्यमित्यन्ताभेदो विशेषाणामभावात्। एकम्भेदसामान्यात्मकं[7] नास्तीति यावत्। 122a

अथ सामान्यविशेषयोः कथंचिद् भेद इष्यते। अत्राप्याह। **अन्योन्य**मित्यादि। **सदृशासदृशात्मनो**स्सामान्यविशेषयोर्यदि कथंचिदन्योन्यम्परस्परम्भेदस्तदैकान्तेन तयोर्भेद एव स्यात्। घटपटवत्। न चार्थान्तरं सामान्यं प्रतीयते। तस्मान्नैकं सामान्यविशेषात्मकं वस्तु विद्यते। दिगम्बरस्यापि तद्वति वस्तुन्यभ्युपगम्यमानेऽत्यन्त[1]भेदाभेदौ स्यातां। यदा घटाद्यवस्थाभेदेभ्यः सुवर्ण्णत्वसामान्यस्याभेदस्तदात्यन्तमेकान्तेन भेदः स्याद् घटमौल्यादेः। सुवर्ण्णत्वसामामान्यस्याभावात्। अथ सुवर्ण्णत्वसामान्याद् घटमौल्याद्यवस्था भेदानामभेदस्तदात्यन्तमभेद एकान्तेनैकत्वं सुवर्ण्णरूपतैव स्यादित्यर्थः। अथावस्थातद्वतोः स्वभावाभेदे सत्यपि लक्षणभेदाद् भेद इष्यते। तथा हि सुवर्ण्णत्व[2] सामान्यस्य स्वरूपं सर्वावस्थानुयायि प्रतीयते(।)

**अथाऽभिन्नेनात्मना स्वात्मभूतेन भिन्नस्वभावाः तदभिन्नस्वभावात्मत्वात् तद्वन्तः स्युः। भेदस्यापि कुतो[6] भेदः परस्परम्।**

**सामान्यस्य च तस्य न तदात्मता। तेनाऽपि तदात्मना तथा भवितुं न युक्तम्।**

473a **तथाभावे हि तद्धर्मा स्यात्। न ह्ययं एकः प्रवृत्तिनिवृत्तिस्वभावो युक्तः[7]।**

**न सर्वात्मनाऽभेद एव।**

---

घटाद्यवस्थानां स्वरूपं व्यावृत्तं प्रतीयते। तेनावस्थातद्वतोर्लक्षणभेदाद् भेदोस्त्येवेत्यत्राह। **अन्योन्य**मित्यादि। **सदृशासदृशात्मनो**रित्यवस्थातद्वतोर्यदि भेदस्तदा तयोरन्योन्यम्भेदः परस्परमेकान्तेन भेदः स्यात्। अनुगतव्यावृत्तिरूपयोः परस्पराऽसंश्लेषात्। न चापरः स्वभावोस्ति येन तयोरभे[3]दः स्यादनन्तधर्मात्मकस्य धर्मिणोऽप्रतीते (:)। **भावाश्चेद् भेदिन** इति सम्बन्धः। **अभिन्नेनात्मना** प्रधानाख्येनान्येन वा। वस्तुत्वादिना सुवर्णत्वेन वा तेषामेव घटादीनाम्भेदानां **स्वात्मभूतेना**व्यतिरिक्तेन **तद्वन्तः** स्यु**रभिन्नस्वभाववन्तः** स्युः। तेषां प्रधानादीनामभिन्नः स्वभावस्तदभिन्नस्वभावः आत्मा रूपं यस्य भेदस्य घटादिलक्षणस्य स **तदभि[4]न्नस्वभावात्मा**। तद्भावस्तस्माद् (।) भेदस्यापि कुतो भेदः परस्परं। नैव। अनेनात्यन्ताभेदो व्याख्यातः।

अथ तस्य भेदस्य घटादिलक्षणस्य समान एक आत्मा न भवति। भेदस्य घटादिरूपेणानेकात्मकत्वात्। तथा सति **तदात्मना** भेदस्वभावेन **तेनापि** सामान्यपदार्थेन त्रैगुण्यादिना **तथेति** सामान्यात्मना **भवितुन्न युक्तं**। भेदादव्यतिरिक्त[5]त्वात् सामान्यस्य समानता न प्राप्नोतीत्यर्थः। एतेनात्यन्तभेदो व्याख्यातः।

**तथाभावे** हीति सामान्यात्मकत्वे प्रधानादेरिष्यमाणे प्रधानाद्यात्माऽ**तद्धर्मा** भेदधर्मा **न स्यात्**। अव्यतिरेकिणावस्थाख्येन धर्मेण तद्वान्न स्यादित्यर्थः। अवस्थातद्वतोः परस्परतो भेदः स्यादिति यावत्। तमेव साधयन्नाह। **न ह्यय**मित्यादि। **अयमेकः** स्व[6]भावः **प्रवृत्तिनिवृत्तिमान्न युक्त** इति सम्बन्धः। **स्थानं** प्रवृत्तिः। **विगमो** निवृत्तिः। तथा हि प्रधानशक्तौ स्थितायां सुवर्णद्रव्यत्वादौ च स्थितेऽवस्थानान्निवृत्तिरिष्यते। **एतेनान्योन्यम्वा तयोर्भेद** इत्यादि व्याख्यातं।

**नेत्या**दिना पराभिप्रायमाशंकते। **न सर्वात्मना** सामान्यविशेषयो**रभेद एव** 122b किन्तु **तयोरपि** भेदसामान्ययो**र्भेदो भवे[7]द्यदि। न ही**त्यादिना व्याचष्टे। क्वचिद् द्रव्ये सामान्यविशेषस्य परस्पर**म्भेदोऽभेदो वैकान्तिको** न हीति सम्बन्धः। किङ्कारणं (।) **विवेकिने**त्यादि। **सामान्यं** शक्तिः सुवर्णत्वन्द्रव्यत्वञ्चाविशेषो **घटादय** इत्येवंभेदेन **व्यवस्थापनात्।**

**तयोरपि भवेद्भेदो यदि;**

न हि क्वचिद् भेदोऽभेदो वैकान्तिकः, सामान्यविशेषेति व्य[1]वस्थापनात्।

**येनात्मना तयोः ॥१७९॥**

**भेदः सामान्यमित्येतद्यदि भेदस्तदात्मना।**

यदि स भेदः सामान्यविशेषयोर्यमात्मनमाश्रित्य सामान्यविशेषेति तेनात्मना भेदस्तदा[2] व्यतिरेक एव। यस्मात् तौ यदि तयोरात्मानौ व्यतिरेकिणौ तदा व्यतिरेक एव, सामान्यविशेषयोर्हि स्वभावभेदात्।

स्वभावो हि भावः। एवं हि—

**भेद एव तथा च[3] स्यान्निःसामान्यविशेषता ॥१८०॥**

**भेदसामान्ययोर्यद्वद् घटादीनां परस्परम्।**

व्यतिरेके च सामान्यविशेषयोर्भेदेऽपि न सामान्यवद परस्परसम्बन्धाभावात्। घटादि[4]वदित्युक्तम्।

अपि च—

---

**येने**त्या चा र्यः। **तयोर्भेद**सामान्ययोरयं **भेद** इदं **सामान्यमित्येतद्ये**नात्मना व्यावर्त्तेनानुगतेन च स्वभावेन भेदो व्यव[1]स्थाप्यते। **यदि तेनात्मना** सामान्य-विशेषयोर्भेदस्तदा **भेद** एवात्यन्तं। (१७६)

**यदी**त्यादिना व्याचष्टे। **यमात्मान**मित्यनुगतं व्यावृत्तञ्च। **तेनात्मना सामान्यविशेषयोर्य**दि भेद इति सम्बन्धः। एतदेव स्फुटयन्नाह। **यस्मा**दित्यादि। तौ भेदव्यवस्थापकावात्मानौ **तयो**रिति सामान्यविशेषयोः। **स्वात्म(ा)नौ** स्वभा-वभूतौ। **तौ चे**दनुगतव्यावृत्तावात्मानौ **व्यतिरे[2]किणौ** परस्परव्यावृत्तौ **तदा व्यति-रेक एव** भेद एव। किङ्कारणं (।) **स्वभावभेदात्**। (१७६–८०)

स्यान्मतम् (।) अवस्थाऽवस्थात्रोर्भेदव्यवस्थापको हि स्वभाव एव भिद्यते न भाव इत्याह। **स्वभावो ही**त्यादि। स्वभाव एव भाव इत्यर्थः। तथा चेति (।) **भेदसामान्ययो**रत्यन्तभेदे सति। भेदस्य **निस्सामान्य**ता। सामान्यस्य च निर्वि-शेषता स्यादिति सम्बन्धः (।) सामान्यस्य भेदवत्त्वं भे[3]दानां च सामान्यवत्त्वं न स्यात् सम्बन्धाभावादिति यावत्। यद्वद् **घटादीनां** भेदानां सम्बन्धाभावात् **पर-स्पर**न्तद्वत्ता नास्ति। (१८१)

**व्यतिरेके चे**त्यादिनार्थमाह। भेदसामान्ययोरजन्यजनकत्वेन **सम्बन्धाभावात्**। भवति च तयोस्सम्बन्धितया प्रतीतिस्तस्माद् भ्रान्तत्वमुक्तमिति "**न स्यात् सामा-न्यभेदधीरि**"**त्यत्रान्तरे** (१।१७१) ।(१८०–८१)

**यमात्मानं पुरस्कृत्य पुरुषोयं प्रवर्त्तते ॥१८१॥**
**तत्साध्यफलवाञ्छावान् भेदाभेदौ तदाश्रयौ ।**
**चिन्त्येते स्वात्मना भेदो व्यावृत्त्या च समानता ॥१८२॥**
**अस्त्येव वस्तु नान्वेति प्रवृत्त्यादिप्रसङ्गतः ।**

**गौरश्वाद् भिन्नोऽभिन्नो वेति व्यतिरेकाव्यतिरेकप्रश्नकरणम् । सर्व एव व्यतिरेको वस्तुनः स्वभाव**[6] **इति अधिकृत्य प्रवर्त्तते ।**

**स एव हि तत्र वचनमिति वाच्यम् । न ह्येतेन द्रव्यत्वादिवचनम् । यथात्मवत्**

---

एवमूर्ध्वसामान्यवादं दि ग म्ब रा द्यभिम[4]तं। तिर्यक्सामान्यवादञ्च सां ख्या द्यभिमतं साधारणदूषणेन निराकृत्य पुनस्तिर्यक्सामान्यवादमेव दूषयितुमाह। **अपि** चेत्यादि।

एतदुक्तम्भवति (।) अर्थक्रियार्थिनः सामान्यविषयभेदाभेदचिन्तया न किञ्चित् प्रयोजनमर्थक्रियारहितत्वात्। किन्तु। **यमात्मान**मर्थक्रियायोग्यं **पुरस्कृत्या**लम्बनीकृत्य। **तत्साध्यफलवाञ्छावान्**। तेनात्मना[5] यत्साध्यम्फलन्तदभिलाषावान्। **अयं पुरुषः प्रवर्त्तते**। **तदाश्रया**वर्थक्रियासमर्थाधिष्ठानौ **भेदाभेदौ** चित्येते। तस्य चार्थक्रियायोग्यस्य **स्वात्मना** स्वेन रूपेण **भेद** आत्यन्तिकोस्त्येव। **व्यावृत्त्या** च विजातीयव्यावृत्तेन रूपेण **समानता**स्त्येवाध्यवसितैकत्वरूपया। इयतैवार्थक्रियार्थिनो भेदाभेदचिन्ता समाप्ता। ततोनर्थक्रियाकारिणः सामान्यस्य किं[6] स्वलक्षणे भेदाभेदचिन्तयेति। (१८१–८२)

ननु चार्थक्रियार्थिनः पुरुषस्य व्यावृत्त्यापि समानतायाः किम्प्रयोजनमर्थक्रियारहितत्वात्।

सत्यं (।) स्वलक्षणान्येव व्यावृत्त्या सामान्यमुच्यते शब्दात्तत्रैकत्वाध्यवसायेन प्रवृत्तिर्यथास्यादित्यदोषः।

अथ स्यात् स्वलक्षणमेव स्वलक्षणान्तरानुयायीति किं परिकल्पितया व्यावृ-
123a त्त्येत्याह। स्वलक्षणानाम्परस्परम्भेदात्[7]। यदि घटरूपम्पटे स्यादुदकाहरणार्थी पटेपि प्रवर्त्तेत। तदाह। **प्रवृत्त्यादी**त्यादि। **आदिशब्दात्** तुल्योत्पत्तिनिरोधादिप्रसङ्गः।

**सर्व एवे**त्यादिना व्याचष्टे। विशेषमेवार्थक्रियायोग्यं स्वभावाख्यमात्मभूतमित्यर्थः। कस्य भावस्य वस्तुनो**धिकृत्य प्रवर्त्तते**। स **एव ही**त्यर्थक्रियाकारी विशेषः। **तथेति**। **गौरि**त्यादिशब्दैः। अर्थक्रियार्थी हि स्व[1]लक्षणप्रतिपादनाभिप्राय एव शब्दं प्रयुङ्क्ते दृश्यविकल्प्ययोरेकीकृत्य। प्रतिपत्तापि तथैव प्रति-

**पृथगभिधानात्। अर्थस्य हि तेनाऽव्यभिचारात् ततः[7] कल्पनात्। निर्लोठितं चैतदाचार्येण।** 473b

**तद् गवादिशब्दप्रत्युपस्थापितमर्थं भिन्नमभिन्नं वा पृच्छन्, अर्थान्तरस्य उपन्यासेन तत्र द्विधा बुद्धिः कुतः क्रियते। तस्माद् योस्यात्मा[1]ऽनन्यसाधारणः तं पुरस्कृत्य विशिष्टार्थक्रियार्थी पुरुषोऽयं प्रवर्त्तते। यथा गोर्वाहदोहादौ नान्यसम्भाविन्यर्थे। यथा युद्ध[2]प्रवेशे यथास्वं शब्देनोच्यते, न द्रव्यत्वादि सामान्यम्।**

---

पद्यते। ततो व्यवहर्त्तॄणामध्यवसायवशाच्छब्दव्यापारापेक्षयैतदुक्तं। शब्दे तु ज्ञान **स्वलक्षणप्रतिभासो** नास्तीति स्वलक्षणमवाच्यमुक्तमित्यदोषः।

द्रव्यादयस्तु न तत्रेति। गौरित्यादिशब्दैर्गवादिचोदनायां। कस्मात् यथास्वं द्रव्यत्वादिशब्दैस्तेषाङ्ग[2]वादेः **पृथगभिधानात्** गोद्रव्यमित्यादिना। कथन्तर्हि गौरित्यादिपदप्रयोगे सत्ताद्रव्यत्वादयः प्रतीयन्त इत्याह। **अर्थस्ये**त्यादि। अर्थस्य गवादेः। **तेन** सत्त्वद्रव्यत्वादिनाऽ**व्यभिचारात्**। ततोर्थाद् गतिः सामान्यानां स्यात्। न तु विशेषशब्दः सामान्ये व्याप्रियते। **निर्लोठितं चैतदाचार्य** दि ङ् ना गे न सा मा न्य प री क्षा दौ यथा न विशेषशब्दानां सा[3]मान्ये वृत्तिरिति।

अत्र चोद्यते। कस्य पुनः सामान्यस्य विशेषेणाव्यभिचारः। यत्तावत् परपरिकल्पितन्नास्त्येव। यच्चान्यव्यावृत्तिलक्षणं प्रसज्यमात्रन्तदपि नास्त्येव। नापि विकल्पबुद्धिप्रतिभासिनो बाह्येनाव्यभिचारोस्ति तस्य स्वतन्त्रत्वात्।

उच्यते। स्वलक्षणमेव सजातीयव्यावृत्तम्विशेषः। तदेव विजातीयव्यावृत्तिमपेक्ष्याभेदे[4]नोपात्तं सामान्यमित्युच्यते। ततः सामान्यविशेषयोर्वस्तुत एकत्वात्। कृतकत्वानित्यत्वयोरिवाव्यभिचारः। शब्दव्यापारभेदात्तु केवलं क्वचिच्छाब्दी प्रतिपत्तिः क्वचिदार्थीत्युच्यते। **तदिति** तस्मादयं पुरुषः। **गवादिशब्दप्रत्युपस्थापितङ्** गवादिशब्दसन्निधापितमर्थमर्थक्रियाश्रयं। **अर्थान्तरस्य** सामान्यस्यो**पन्यासेन** भेदसा[5]मान्याकारतया द्विमुखा बुद्धिर्यस्य स तथोक्तः। **योस्य** गवा**देरात्मा** स्वभावः। **अनन्यभावसाधारण**स्स एव स्वभावः शब्दचोदित इति वक्ष्यमाणेन सम्बन्धः। यमर्थं सास्नादिमन्तं **पुरस्कृत्या**लम्बनीकृत्य विशिष्टार्थक्रियार्थी। तमेवाह। **यथे**त्यादि। यथा गोर्वाहदोहादावर्थी गामधिकृत्य प्रवर्त्तते। **अन्यसम्भविन** इति गोरन्यस्मिन्नश्वे स[6]म्भविनोर्थस्यार्थी गां पुरस्कृत्य न प्रवर्त्तत इति वाक्यार्थः समर्थनीयः। कोर्थोन्यसम्भवीत्याह। **यथा युद्धप्रवेश** इति। यथास्वमिति यस्य यः शब्दो वाचकः। **न द्रव्यत्वादि सामान्यं। चोदित**मिति लिङ्गविपरिणामेन सम्बन्धः। तच्चोदनया गवादीनां गवादिशब्दैश्चोदनया। **तदे**त्यर्थक्रियार्थिनः

**तद्वचनं तदा प्राप्तुमनभिप्रेतत्वात्, गवादिसमावेशात्, तदात्म[3]भूतानां अननुगमात्मतया तत्रानुभयरूपत्वात्।**

**तमेव भावं तत्रैव च प्रकारैः पर्यनुयुंक्ते। तस्य भेदेऽपि द्रव्यत्वाद्यभेदोऽस्या[4]बाधक एव। सर्वत्र व्यावृत्तिलक्षणस्य च सामान्यस्य स्वभावभेदाभ्युपगमात्।**

**स्वभावभूतस्य सामान्यस्याभेद इत्युक्तम। स्वात्मनैवाभेदे तन्निबन्धनक्रियार्थी समं द्वयोरपि प्रवर्त्तेत, एकोऽपि तद्भावत्वात्। तस्य हि अर्थक्रियाकारित्वे तदन्यस्यापि तत् तुल्यमिति सोऽपि किन्न करोति ?**

---

123b प्रवृत्तिकाले। **प्राप्तुमनभिप्रेतत्वाद्** द्रव्यत्वादिसामा[7]न्यस्येति। विभक्तिविपरिणामेन सम्बन्धः। कस्मात् पुनर्गवादिशब्देन द्रव्यत्वादिसामान्यं चोदयितुं नाभिप्रेतमित्याह। **गवादिसमावेशाद्** गवादिशब्दस्य गवादौ लोके संकेतितत्वात्। गवादिस्वभावत्वाद् द्रव्यत्वादिसामान्यस्य गवादिचोदनयाऽभिधानमिति चेदाह। **तदात्मभूतानां** चेति। गवादिस्वभावानां द्रव्यत्वादिसामान्यानां गवादिवदेवानन्वयेन हेतुना[1] **तत्रेति** तस्य गवादिभेदस्य। **अनुभयरूपत्वाद**सामान्यविशेषरूपत्वादेवेति यावत्। ततश्च विशेष एव चोद्यते।

तदेवाह। **तमेवे**त्यादि। तमेव चानन्यसाधारणम्**भावम**र्थक्रियार्थी पुरुषो भेदाभेद**प्रकारैः पर्यनुयुङ्क्ते**। अन्यापोहवादिनोपि व्यावृत्तिलक्षणो द्रव्यत्वाद्यभेदः स्वलक्षणानामिष्टस्ततोऽत्यन्तभेदो विशेषाणां विरुद्ध इत्यत आह[2]। **तस्ये**त्यादि। तस्यार्थक्रियाकारिणोर्थस्य **भेदे** प्रकृत्या स्थिते सति व्यावृत्तिलक्षणो **द्रव्यत्वाद्यभे**दोस्य विशेषस्या**बाधक एव**। तस्य कल्पितत्वात्। तस्मात् पारमार्थिको भेदः। स्वलक्षणानामुपकल्पितमेकत्वमनेन च प्रकारेण भेदाभेदाविशिष्टावस्माकं (।) तदेव दर्शयन्नाह। **सर्वत्रे**त्यादि। **स्वभावेन भेदः** स्वजातीयविजातीयात्। **सामान्यस्य च व्यावृत्तिलक्षणस्याभ्युपगमादिति** सम्बन्धः।

न व्यावृत्तिरूपेण सामान्येनाभेदः किन्तु वस्तुभूतेनैवेति चेदाह। **स्वभावभूतस्ये**त्यादि। वस्तुभूतस्य **सामान्यस्याभेद इति** व्यक्तिभ्योनर्थान्तरत्वे। **उक्त**मिति सामान्यादव्यतिरेकाद् भेदानामैक्यं। भेदवदेव वा सामान्यस्याप्यनेकत्वमित्युक्तं प्राक्। न सामान्यद्वारेण भेदानामैक्यमित्युच्यते। किन्तु योसौ विशेष[4]स्तेनैवाभेद इत्याह। **स्वात्मनैवे**त्यादि। स्वेनैव विशेषरूपेण गवाश्वादीनामभेदे **तद्** गोद्रव्यं **निबन्धनं** यस्या **अर्थक्रियाया** वाहदोहादिलक्षणायास्त**यार्थी** पुरुषः (।) **सम**मित्युभयत्राप्यवसितगवादिभावः। **द्वयोरपी**ति गवि चाश्वे चैव। **यस्मादेकोपि** हि कारणत्वेनाभिमतो गोपदार्थस्तामर्थक्रियाम्वाहदोहादिस्वभावां।

## ग. जैनमतनिरासः

**एतेनैव यदह्रीकाः किमप्यश्लीलमाकुलम् ॥[1]१८३॥**
**प्रलपन्ति प्रतिक्षिप्तं तदप्येकान्तसम्भवात् ।**

**दिगंबराणां इदं च किमप्ययुक्तं अश्लीलमहेयोपादेयमपरिनिष्ठानात् आकुलं "स्यादुष्ट्रो दधि न स्यादि"ति यैरुक्तं तेऽपि एतेनैव प्रक्षिप्ताः । भावेनैव एकान्तभेदात् ।** 474a

**तदन्वये वा—**

---

**तत्स्वभावत्वात्तदर्थ**[5]क्रियाकरणस्वभावत्वादेव करोति । **तदन्यस्यापि** तस्माद् गोद्रव्यादन्यस्याप्यश्वस्य **तद्वाहदोहादिकरणस्वभावत्वन्तुल्यमिति** सोप्यश्वः गोसाध्यामर्थक्रियां **किन्न करोति** ॥०॥ (१८२–८३)

**एतेनैवे**ति सर्वस्यार्थस्य भेदसाधनेन । **अह्रीका** नग्नतया निर्लज्जाः क्ष प ण काः । अयुक्ताभिधानस्य कुत्सितत्वात् किमपीत्याह । **अश्लील**ङ्ग्राम्यं । सर्वः[6] सर्वस्वभावो न च सर्वः सर्वस्वभाव इति यत् **प्रलपन्ति प्रतिक्षिप्तन्तद**पि तस्मा**देकान्तसम्भवात्** । एकस्यैवान्तस्यात्यन्तभेदप्रकारस्य सम्भवात् । (१८३–८४)

ननु दि ग म्ब रा णां सर्वं सर्वात्मकं न सर्वं सर्वात्मकमिति नैतद्दर्शनन्तत्किमर्थमिदमा चा र्ये णो च्यते ।

सत्यं (।) यथा दर्शनन्त्व"त्यन्तभेदाभेदौ च स्यातामि"(१।१७८)त्यादिना पूर्वमेव दूषितं ।

यत्पुनरेतदुक्तं[7] (।)तद्यथा कटकेयूरादिषु सुवर्णप्रत्ययस्यानुयायिनस्सद्भावास्सुवर्णत्वसामान्यं कल्प्यते । तथा घटपटादिषु द्रव्यत्वादिप्रत्ययस्यान्वयिनः सद्भावाद् द्रव्यत्वसामान्यमेकं किन्नेष्यते । न चेष्यतेऽभिन्नप्रत्ययसद्भावेपि तथा कटककेयूरादिषु सामान्यकल्पना माभूदित्येवम्परमेतत् । 124a

**स्यादुष्ट्रो दधि** । द्रव्यादिरूपतयैकत्वात् । स्यान्न दधि उष्ट्रावस्थातो दध्यवस्था[1]या भिन्नत्वात् । अश्लीलमित्यस्य व्याख्यान**मयुक्त**मिति । तस्यायुक्तत्वात् । विद्वज्जनायोग्यतया ग्राम्यमिति भावः । अश्लीलमित्यस्य ग्राम्यपर्यायत्वात् । **अहेयोपादेय**मिति । अत्याज्यमग्राह्यञ्च । कस्मा**दपरिनिष्ठानात्** । यदि हि किंचित्सुखसाधनत्वेन निश्चितमन्यच्च दुःखसाधनत्वेन तदा यथाक्रमं हेयमुपादेयं वा स्यात् । तच्च नास्ति यतः सर्वस्य[2] सर्वस्वभावत्वं (।) न च सर्वस्य सर्वस्वभावत्वं । अत **एवाकुल**मेकस्यापि स्वभावभेदस्य गृहीतुमशक्यत्वात् ।

**सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः ॥१८४॥**
**चोदितो दधि खादेति किमुष्ट्रन्नाभिधावति ।**

**एवं उष्ट्रोऽपि स्याद् दधि । नापि स एव उष्ट्रः, येनाऽन्योऽपि स्यादुष्ट्रः, तथा दध्यपि[2] स्यादुष्ट्रः । नापि तदेव दधि, येनान्यत् स्याद् दधि ।**

**तदनयोरेकस्यापि वा कस्यचित तद्रूपाभावस्य चाभावात्, अतद्भाविनो वा स्वानियतस्य चाभावात् । कस्यचिद् विशेषस्य[3]ाभावेन दधि खादेति चोक्त उष्ट्रमेव भुञ्जीत ।**

**अथास्त्यतिशयः कश्चिद्येन भेदेन वर्त्तते ॥१८५॥**

---

एतदुक्तम्भवति । यदावस्थातद्वतोस्सर्वात्मनाऽभेदोवस्थानात्तु परस्परम्भेदस्त-दायन्दोषस्तदाह । **तदन्वये** वेति । तस्य स्वभावभेदस्य परस्परान्वये वा । दध्या-दिस्वभावस्य द्रव्यस्योष्ट्रादिषु तादात्म्येनानुगमादिति यावत् ।

**सर्वस्यो[3]भयरूपत्वं** । उभयग्रहणमनेकत्वोपलक्षणार्थन्तस्मिन् सति तद्वि-शषस्य उष्ट्र उष्ट्र एव न दधि । दधि दध्येव नोष्ट्र इत्येवं लक्षणस्य निराकृतेः । **दधि खादे**त्येवं चोदितः पुरुषः **किमुष्ट्रं** खादितुं **नाभिधावति** । **उष्ट्रोपि** दध्यभि-न्नाद् द्रव्यत्वाद् अव्यतिरेकात् **स्याद् दधि** । **नापि स एवे**ति । **उष्ट्र** एवोष्ट्र इत्ये-कान्तवादः । **येनान्योपि** दध्यादिकः **स्यादुष्ट्रः[4] तथा दध्यपि स्यादुष्ट्रः** । उष्ट्राभिन्नेन द्रव्यत्वेन दध्नस्तादात्म्येनाभिसम्बन्धात् । **नापि तदेवे**ति दध्येव **दधि** । **येनान्य-दप्युष्ट्रा**दिकं **स्याद् दधि** । एतेन सर्वस्योभयरूपत्वं व्याख्यातं ।

**तद्विशेषनिराकृते**रित्येत**दनयो**रित्यादिना व्याचष्टे । उभयथापि दध्युष्ट्रविशेषः स्यात् । दधिरूपाभावो वोष्ट्रे स्यात् । उष्ट्ररूपं वा दध्यसम्भवि यद्युष्ट्रस्वरूप एव नियत[5]म्भवेत् । एवं दध्नोपि वाच्यं ।

आद्यस्य तावदसम्भव**स्तदि**त्यादिना कथ्यते । तदेवमनेकयोर्दध्युष्ट्रयोर्न **कश्चिद्** विशेष इति सम्बन्धः । **एकस्यापी**ति दध्न उष्ट्रस्य वा **कस्यचित् तद्रुपाभावस्ये**ति । उष्ट्ररूपाभावस्य दधिरूपाभावस्य **चाभावात्** ।

द्वितीयस्यापि प्रकाराभावमाह । **स्वरूपस्ये**त्यापि । **अतद्भाविनो** दध्यभाविन उष्ट्रस्वरूपस्य । उष्ट्राभाविनो[6] वा दधिस्वरूपस्य । **स्वनियतस्य** उष्ट्रस्वभाव-नियतस्य । दधिस्वभावनियतस्य **चाभावात्** (१८४–८५)

**अथास्ति** दध्युष्ट्रयो**रतिशयः कश्चिद् येना**तिशयेन **दधि खादेति** चोदितः पुरुषो **भेदेन वर्त्तते** । उष्ट्रपरिहारेण दध्न्येव प्रवर्तत्ते ।

एतदुक्तम्भवति । यथा दध्युष्ट्रयोः परस्परं स्वरुपम्भिन्नन्तथा द्रव्यपर्यायियो-

**स एव दधि सोऽन्यत्र नास्तीत्यनुभयं परम् ।**

**अथानयोरस्ति कश्चिदतिशय[4]: यदत्र तथा चोदितः क्षीरविकारे दध्न्येव प्रवर्त्तते नान्यत्र। अतिशयोऽर्थक्रियार्थिप्रवृत्तिविषयः, स एव तत्फलविशिष्टोपादान[5]भावेन लक्षितस्वभावो हि दधिस्वभावत्वात्। तादृशस्वभावः स च नान्यत्र, अर्थिनः प्रवृत्त्यभावात्।**

**तस्मात् तत्र उभयस्वभावाभाव इत्येकान्त[6]वादः।**

**अपि च—**

## ५—शब्द-चिन्ता

**सर्वात्मत्वे च सर्वेषां भिन्नौ स्यातां न धीध्वनी ॥१८६॥**

---

लक्षणभेदाद् भेदो यदीष्यते[7] तदा **स एव** स्वरूपातिशयो **दधि**। स **चान्यत्रो**ष्ट्रे **नास्ति**। नापि द्रव्यत्वं दध्यादिव्यतिरिक्तं प्रतिभासते। इत्यनेन द्वारेणा**नुभयं** सामान्यविशेषरहितं सर्वम्वस्तु। **परं** केवलं। एकत्वन्तु कल्पितं। **अनयो**रिति दध्युष्ट्रयोः। **तथा चोदित** इति दधि खादेति चोदितः। **क्षीरविकारो दधि। नान्यत्रे**त्युष्ट्रे। स एवातिशयो दधि। किम्भूतः (।) **अर्थक्रियार्थिप्रवृत्तिविष[1]यः।** दधिसाध्यार्थक्रिया तया योर्थी पुरुषस्तस्य प्रवृत्तिविषयः (।) किङ्कारणं (।) **तत्फ**लेत्यादि। दधिसाध्यं फलं तदेव **विशिष्य**तेन्यस्मादिति विशेषः। तस्**योपादानभावो** हेतुभावस्तेन **लक्षितः स्वभावो** यस्य वस्तुनः। **तदेव दधी**ति कृत्वा। स च **तादृश** इत्यनन्तरोक्तो **दधिस्वभावः**। **अन्यत्रे**त्युष्ट्रे। कस्माद् (।) द**ध्यर्थिन**स्तत्रोष्ट्रे **प्रवृत्त्यभावात्।** (१८५–८६)  124b

**सर्वात्मत्व**[2] इत्येकरूपत्वे सतीत्यर्थः। **भिन्नौ** नियतार्थौ। **धीध्वनी**। ज्ञानं शब्दश्च। **तदभावाद्** भिन्नबुद्धिशब्दाभावात्। भेदानां संहारवादस्य। एकीकरणवाद**स्यासम्भवः**। भेदेन गृहीतयोः श्रुतयोर्वा। एकत्वेनोपसंहारो निर्देशः। **स्यादुष्ट्रो दधी**त्यादि।

**सोयमि**त्यादिना व्याचष्टे। **क्वचिदपि** दध्न्युष्ट्रे वा प्रतिनियतमेकमाकारमपश्यन् कथं बुद्ध्याधिमुच्येता[3]र्थानिति सम्बन्धः। किम्विशिष्टया बुद्ध्येत्याह। **असंसृष्टे**त्यादि। असंसृष्टोन्याकारो यस्मिन्नर्थे स तथोक्तः। स यस्या बुद्धेरस्ति सा संसृष्टान्याकारवती। विभक्तार्थग्राहिण्येवेति यावत्। अभिलपेद्वा कथं। प्रत्यर्थं प्रति(नि)यतसंकेतेन ध्वनिनेत्याकूतं। कस्मान्नाधिमुच्येतेत्याह।

**भेदसंहारवादस्य तदभावादसम्भवः।**

**तदभावाद् सम्भवकल्पनेच्छा कथमिव तद्भावी शब्दो येन प्रत्याख्यायेत।**
474b **वि[7]कल्पानां योऽविषयः, न हि स एव शब्दैः। तेषु शब्दप्रवृत्तिः केन बाध्येत ?**

*(१) आप्तशब्दचिन्ता*

**अवाच्योऽर्थो, न बुद्ध्युपलब्धः। सम्बन्धस्यापि स्वरूपेणानभिधा[1]नमुक्तम्। अभिधाने हि सम्बन्धित्वेन बुद्ध्युपस्थानात् यथाभिप्रायमप्रतीतः।**

**तत् प्रतीयमानोऽपि सम्बन्धिरूप एवेति स्वस्वरूपेण नाभिधीयते। तस्मा[2]-न्नाभाववत् सम्बन्धेऽपि प्रसंगः*।**

**अपि च। अभावाभिधेयवादिनं प्रति प्रतिविदधन् अब्रुवाणः कथं प्रतिविद-ध्यात् ? अत्रापि शब्दे कथमभावोऽनुक्तः[3]?**

**अथाभावमेव नेच्छति तेनावचनम्। तदेवाभावो नास्तीति कथम् ?**

---

**विभागाभावाद् भावानामिति। तत्संहारवाद** इति भेदसंहारवादो न स्यात् (।) स्यादुष्ट्रः स्याद् दधीत्यादिकः।

अथ पुनरसंसृष्टौ दध्युष्ट्रौ प्रतिपद्य संहरेत्। स्यादुष्ट्रः स्याद् दधीति। **तदाप्येकरूपसंसर्गिण्या**। उष्ट्ररूपेणैव दधिरूपेणैव वा संसर्गिण्या बुद्धेरसंसृष्टाकार-ग्राहिण्या क्वचिदुष्ट्रे दधनि च। प्रति[4]नियमात् तत्प्रतिभासभेदकृत एव तयोर्दध्युष्ट्रयोः स्वभावभेदोपि। **एकानेकेत्यादि**। प्रति[5]भासभेदस्यानेकव्यवस्थितिर्विषयः। एकव्यवस्थितिः प्रतिभासभेदस्येति योज्यं। भिन्नप्रतिभासविषयौ च दध्युष्ट्रौ तथा च सति नैक उष्ट्रो दधि वा तदुभयरूपः तदुभयन्दध्युष्ट्रात्मकं रूपं यस्येति विग्रहः। मिथ्यावाद एव स्या द्वा दः ॥०॥ (१८६–८७)

भेदलक्षणमिति व्यावृत्तिलक्षणम्विजातीयव्यावृत्तान्येव स्वलक्षणानि सामान्य-मित्यु[6]च्यन्ते। **प्रकृत्या** स्वभावेन। आदिशब्दादुदकाद्याहरणाद्येकफलाः।

**भवतु नामे**त्यादिना चा चा र्यः पराभिप्रायमाशंकते। भावानाम्वस्तूनां स्वभावभेदः स्वभावे नैवान्यस्माद् व्यावृत्तिः। तत्रेति निरुपाख्येषु (।) कथं स्वभावभेदविषया व्यावृत्तिविषयाः शब्दाः।

1252a नन्‌ निरुपाख्येषु शब्दानां प्रवृत्तिरेव नास्ति तत्किमर्थमिदमाशंकितमि[7]ति कदाचित् परो ब्रूते। तन्निराकरणार्थमाचार्यः प्राह। **तेष्ववश्यं शब्दप्रवृत्या भाव्यं।** ये तु न चान्यापोहवादिना शक्यम्वक्तुन्नैव निरुपाख्येषु शब्दानां प्रवृत्तिरिति। यतस्तेष्ववश्यं शब्दप्रवृत्त्या भाव्यमिति चोदको ब्रूत इति व्याचक्षते। तेषामनेन क्रमेण देशकालनिषेध एव सर्वभावेषु क्रियते। **तथा सम्बन्धस्य स्वरूपणानभिधानमुक्तं।**

---

*Bam.po drug.pa=**षष्ठमाह्निकम्।**

**यत् पुनरर्थनिषेधेऽनर्थकशब्दाप्रयोगात् निर्विषयस्य नञोऽप्रयोग इत्यु[4]त्तरं वक्ष्यते ।**

---

एवं यत्पुनरेतत् नदर्थ[1]निषेधेऽनर्थकशब्दाप्रयोगात्। निर्विषयस्य नञोऽप्रयोग इत्यत्रोत्तरम्वक्ष्यत इत्यादि ग्रन्थो वक्ष्यमाणश्चोदकाभिप्रायेणावाचकः स्यात्।

तस्मादा चा र्य एव निरुपाख्येषु शब्दप्रवृत्तिं समर्थयते "नेष्ववश्यं शब्दप्रवृत्त्या भाव्यमित्या"दिना ग्रन्थेन। कस्मात् (।) कथंचिज्ज्ञानशब्दविषयत्वेनाव्यवस्थापितेषु निरुपाख्येषु सर्वत्रार्थे विधिप्रतिषेधे वा योगात्[2]। यदि क्वचिदसत आकारस्य निषेधे ज्ञानाभिधाने स्यातां। तदा निषिद्धाकारपरिहृतेर्थे विधिः स्यात्। **तथा चे**ति विधिप्रतिषेधाभावे। अन्वयव्यतिरेकौ विधिप्रतिषेधौ आश्रयो यस्य व्यवहारस्य स तथोक्तः। तमेव व्यवहारभावमुष्णेत्यादिनाऽह। उष्णस्वभावोग्निरित्यन्वयाश्रयो व्यवहारः। नानुष्ण इति व्यतिरेकाश्रयः। अयमप्यतिप्रसिद्धो[3] लोकव्यवहारो न स्यादित्यपिशब्देनाह। उष्णव्यवस्था ह्यनुष्णव्यवच्छेदेन (।)

तस्य चानुष्णस्योष्णाभावलक्षणस्य कथञ्चिद् व्यवस्थानात् कथन्तद्व्यवच्छेदेनोष्णं व्यवस्थाप्येत। तदाह। **स्वभावान्तरेत्यादि**। उष्णाभाव एवोष्णस्वभावादन्तरम्विलक्षणन्तद्विरहरूपेणेति स्वभावान्तरमुक्तं। अत एवासत इत्येतद् घटते।

ननु स्वभावविशेषः स्वभावान्त[4]रन्तस्य कथंचिदपि विकल्पबुद्धेः शब्दस्य च विषयत्वेनाव्यवस्थापनात्। सर्वथानुष्णस्याप्रतिपत्तेरनिश्चयात् तद्व्यवच्छेदलक्षणस्याग्निस्वभावस्याप्रतिपत्तिरनिश्चयः। यथाग्निस्वभावस्यैवं सर्वस्य पदार्थस्य। ततो व्यामूढमनिश्चितरूपं जगत् स्यात्।

स्यादेतत् (।) न तत्र वह्न्यादौ कस्यचिदसतो निषेधो येनाभावेप्यवश्यं प्रवृत्त्या भाव्यमिति चोद्यते।[5] किन्त्वनुष्णं स्पर्शाख्यं **सदेव** वस्त्वेव। अग्नेश्चार्थान्तरं निषिध्यत इति।

**कथ**मित्याद्या चा र्यः। **सदेवे**ति वचनात् सत्त्वमिष्टं। निषिध्यत इति वचनादसत्त्वमेकं च कथं सदसन्नाम। नेत्यादिना परः परिहरति। तत्राग्नावनुष्णं नास्तीत्यनेन सर्वत्रानुष्णमसदिति ब्रूमः। एवं ह्युच्यमाने सत्त्वं प्रतिज्ञाय पुनः सर्वत्र सत्त्वनिषेधे सदसत्त्वमेकत्र प्र[6]तिज्ञातम्भवेत्। केवलन्तत्र त्वग्नावनुष्णन्नास्तीति ब्रूमः। ततश्चान्यत्र सतोन्यत्रासत्त्वमविरुद्धं। अयमेव च देश ह (?) इत्याह। इह नास्तीति देशस्य निषेधः। इदानीन्नास्तीति कालस्य। अनेन प्रकारेण नास्तीति धर्मस्य। धर्मिणो निषेधः। कस्मात् (।) **तन्निषेधे** धर्मिणो निषेधे। **तद्विषयस्य** धर्मिविषयस्य शब्दस्य निर्विषयतया प्रवृ[7]त्त्यभावात्। ततश्च धर्मिशब्दाप्रवृत्तेरनिर्दिष्टो विषयो 125b

यस्य नञस्तस्याप्रयोगात्। इदमिह नास्तीत्यवश्यमिदमादिपदैर्विषयः प्रतिषेधस्योपस्थाप्योन्यथा किम्विषयोयं प्रतिषेध इत्येवं स न ज्ञायते। एतच्च सर्वं मु द्यो त क रादीनाम्मतमुपन्यस्तं।

सोपीत्या चा र्यः। **तत्रा**पीत्या चा र्यः। **तत्रापी**त्यादिदेशकालधर्मनिषेधेन देशादीनां निषेधः सत्त्वात्। **आदि**शब्दात् कालस्य प[1]रिग्रहः। व्यक्तिभेदाद् बहुवचनं। नार्थस्येति धर्मस्य। क्वचित् सत्त्वादेव। न त्वर्थशब्देन धर्मिणो निर्देशः। परेणापि धर्मिनिषेधस्यानिष्टत्वात्।

स्यादेतन्न देशादिनिषेधः क्रियते नाप्युष्णस्य निषेधः। किन्त्वनुष्णेन सहाग्नेर्यः सम्बन्धस्स निषिध्यते।

**नत्वि**त्याद्या चा र्यः। **तन्निषेधेपी**ति सम्बन्धनिषेधेपि तुल्यो दोषः। धर्म्मिवत् सम्बन्धस्याप्यनिषेधात्। तदेवास[2] स(?)तीत्यादिना साधयति। असति सम्बन्धे शब्दाप्रवृत्तिः। आदिशब्दादनिर्दिष्टविषयस्य नञोऽप्रयोगात्। अथवा तुल्यो दोषः(।) कथं। निषेधादसति यो निषेधस्तस्य त्वयैव निषेधादिति व्याख्येयं। कथं निषेध इत्याह। **असती**त्यादि। असतो वास्येति सम्बन्धस्य निषेधे। **तद्वत्** सम्बन्धवत्। धर्मिणोपि निषेधः।

नेत्यादि परः। सम्बन्धो नास्तीत्येव स्वशब्देन न वै सम्ब[3]न्धस्य निषेधः।

एतदुक्तम्भवति। यथा सम्बन्धस्य स्वशब्देन स्वरूपेणाभिधानन्नास्ति तथा निषेधेपि। तदेवाह। किन्तर्हि नेह प्रदेशे घटो (।) नेदानीं काल इत्येवं प्रतिषेधोक्तौ सत्यां। नानेन देशेन कालेन वास्य घटस्य सम्बन्धोस्तीति प्रतीतिः। तथा नैवन्नाऽनेन प्रकारेण घटोस्तीत्युक्तौ नैतद्धर्मा घट इति प्रतीतिः। **तथे**त्येवं प्रतीतौ सत्यां।

**तथा**पीत्या चा[4] र्यः। नेदानीमित्यादिनापि कथं सम्बन्धो निषिद्धो यावदस्य पुंसः सम्बन्धो धर्मो वा नास्तीति मतिर्भवति। नेह नेदानीमिति प्रतिषेधे सम्बन्धो नास्तीति मतिः। नैवमिति प्रतिषेधे धर्मो नास्तीति मतिः।

ननु धर्मनिषेधोऽपि सम्बन्धनिषेध एव। धर्मधर्मिणोः सम्बन्धनिषेधात्। सत्यं। संयोगसमवायलक्षणसम्बन्धभेदात्तु सम्बन्धो धर्मो वेति भेदेनोक्तं[5]। न चास्यास्सम्बन्धो नास्तीति मतेः कथंचिद् भावे सम्बन्धादिसत्तायां सम्भवः। कस्मादभा**वेष्वि**त्यादि। तथाशब्दो यथाशब्दार्थमाक्षिपति। यत्तदोर्नित्याभिसम्बन्धात्। सत्सु देशादिषु यथा नास्तीति बुद्धेरभावः। सत्स्वभावबुद्धेर्विरोधात्। तद्वदभावेषु। असति बुद्धिप्रवृत्तेरनभ्युपगमात्। तस्मात् सम्बन्धाभावप्रतीतेः सकाशान्नायमिहेत्याद्या प्रतीतिः[6]। सा तदभावे सम्बन्धाभावप्रतीत्यभावे न स्यात्

यद्वा **से**ति सम्बन्धाभावप्रतीतिः। **तदभाव** इति सम्बन्धाभावे। प्रतीतौ वा **तदभावस्य** सम्बन्धाभावस्य। तादृशी सम्बन्धाभावप्रतीतिस्सा विद्यते यस्य पुंसः। तस्य यथाप्रतीतिमतः। तत्प्रभवास्सम्बन्धाभावप्रतीतिजन्मानस्सम्बन्धाभाव-विषयाः शब्दाः केन वार्यन्ते। विकल्पानाम्वि[7]षयः सम्बन्धाभावो न शब्दा- 126a नामिति चेदाह। **स एव ही**त्यादि। यो न वितर्काणाम्विषयः स एव न शब्दानाम्विषयः। विकल्पविषयस्त्ववश्यं शब्दविषय इत्यर्थः। **ते चेत् प्रवृत्ता** इति वितर्काः।

ननु पुरोवस्थिते नीलादौ नीलमित्यादिविकल्पः। स्वलक्षणविषयो न च स्वलक्षणं शब्दवाच्यमित्याह। न हीत्यादि। अवाच्यमर्थमिति स्वलक्षणं। विकल्पा[1]धिकाराद् विकल्पबुद्धयो गृह्यन्ते। समीहन्त इत्यालम्बन्ते। सामान्याकारैव सदा विकल्पबुद्धिर्यापि सन्निहिते स्वलक्षणे। सविकल्पनिर्विकल्पयोस्तु यौगपद्यादभिमान एष मन्दमतीनां विकल्पः स्वलक्षणाकार इति (।) विचारितं चैतत्. **प्रमाणविनिश्चये** शास्त्रकारेणेति नेह प्रतन्यते।

ननु यदि विकल्पबुद्ध्या विषयीकृतत्वात् सम्बन्धाभावो वाच्यः। एवन्तर्हि सम्बन्धोपि वाच्यः स्याद् विकल्पबुद्ध्या विषयीकृतत्वाद् (।) अथेष्यत एव। कथन्तर्ह्याचार्य दि ङ ना गे न तस्यावाच्यत्वमुक्तमित्याह। **सम्बन्धस्ये**त्यादि। **स्वेन रूपे**णेति सम्बन्धरूपेण (।) सम्बन्धिनं सम्बन्ध इति परस्परापेक्षालक्षणम्भावमात्रमद्रव्यभूतः सम्बन्धस्य स्वभावः। तेन च रूपेण तस्याभिधायकः शब्दो नास्ति। सम्बन्धशब्दो हि तस्याभिधायक[3] एष्टव्यः स च प्रयुक्तः कयोरित्याक्षिपति। तत्र राजपुरुषयोः सम्बन्ध इत्युच्यमाने राजपुरुषयोरित्यस्य व्यतिरेकस्य हेतुः सम्बन्धस्तदा स सम्बन्धः सम्बन्धिरूपेण प्रतीयते। तदाह। **अभिधानेन सम्बन्धित्वे**नेत्यादि। राजपुरुषयोः सम्बन्ध इत्यभिधाने राजपुरुषाभ्यां परस्परसापेक्षाभ्यां निष्कृष्टरूपस्यैव सम्बन्धस्य सम्बन्धित्वेन **बु[4]द्धावुपस्थानात्। यथाभिप्रायमप्रतीतः**। राज्ञः पुरुष इति परस्परापेक्षालक्षणस्सम्बन्धो यथा ज्ञातुमिष्टस्तेन रूपेणाप्रतीतिः। **तदि**ति तस्मादयं सम्बन्धः **प्रतीयमानोपि** सम्बन्धशब्दात्। यथोक्तविधिना **सम्बन्धिरूप एवे**ति न सम्बन्धेन**ाभिधीयते। तस्मान्नाभाववत् सम्बन्धेपि प्रसंग इति** सम्बन्धाभावो यथा बुद्ध्या विषयीक्रियत इ[5]ति **वाच्यः** प्रसक्तो नैवं सम्बन्धेपि वाच्यत्वमित्यर्थः। सम्बन्धाभावो हि **स्वेन रूपेण** बुद्ध्या विषयीक्रियते। शब्देनापि तथैवाभिधीयते। सम्बन्धस्तु स्वरूपेण गृह्यते। नाप्यभिधीयते। सम्बन्धिरूपापन्नस्यैव विषयीकरणादभिधानाच्च। तथा चाह।

असत्त्वभूतस्सम्बन्धो रूपन्तस्य न गृह्यते।

**तस्मादभावेषु शब्दाः सन्ति । तेषु कथमभावभेद इति चेत् । तत्रापि-**

---

नाभिधानं स्वरूपेण सम्बन्धस्य कथञ्चनेति ।[6]

तस्मात् स्थितमेतद् विकल्पविषयोवश्यम्वाच्य इति। ततश्च यदि नास्ति सम्बन्ध इति मतिस्तदा तत्प्रभवोपि शब्दः प्रवर्त्तत एव। तथाचाभावविषयः शब्द आपतित एव।

अथ माभूदयन्दोष इति सम्बन्धस्य नास्तीति बुद्ध्या विषयीकरणं नेष्यते। नेह घट इत्यत्र कस्य निषेधो (।) न तावद् देशादेस्तस्य सत्त्वात् (।) न सम्बन्धस्य 126b तद्भावस्याग्रहणादि[7]ति यत्किञ्चिदेतत्।

**अपि चाभावमभिधेयं यो ब्रूते तं** ब्रुवाणं **प्रति** अयमभावा**नभिधानवादी** अभावो न वाच्य इति **प्रतिविदधन्** प्रतिक्षिप**न्नब्रुवाणः कथं प्रतिविदध्यात्** । न ह्यभाव-शब्दमुच्चारयता अभावस्य वाच्यत्वं शक्यं प्रतिपादयितुं। अथेच्छत्यभावस्य वचनन्तदा वचने वास्याभावस्याभ्युपगम्यमाने **कथमभावोनुक्तः** (।) उक्त एव। अभावो न वाच्य इत्य[1]नेनैवाभावशब्देन तस्योक्तेः। अथ परेणाभावस्य वाच्यत्वं यदुच्यते तदनुवादेन निषेधः क्रियते (।)

नाभावो वाच्यस्तेनादोष इति चेत्।

नन्वनुवादेपि किमभावस्य वाच्यता न भवति येनैवमुच्यते। तस्मादिष्टस्यै-वाभावस्य वाच्यता। स्वभावो नैवास्ति **तेनासत्त्वादवचनम**भावस्येति चेदाह। **अथाभावमेवे**त्यादि। **तेने**त्यभावस्या**सत्त्वेन**।[2] इदानीमित्यभावस्यासत्त्वे **तदेवाभावो नास्तीति वचनं कथं**। अभावो नास्तीत्यस्यैवाभावशब्दस्य प्रयोगो न स्यात् (।) कथञ्च न स्यादभावस्यैवानभ्युपगमात्। अभावो ह्यस्य वाच्यः स च नाभ्यु-पगम्यते। परपरिकल्पितस्याभावस्य प्रतिषेध इति चेदिष्टस्तावदभावविषयः शब्दः। तस्मात् कथंचिदभावव्यवहारं प्रवर्त्तयताऽवश्यमभावविषया ज्ञा[3]नशब्दा एष्टव्याः।

**यत्पुन**रेतदुक्तम् (।) **अर्थनिषेधे** सत्यनर्थ**कशब्दाप्रयोगात्** कारणा**न्निर्विषयस्य नञोप्रयोग इत्यत्रोत्तरम्वक्ष्यते** ।

"अनादिवासनोद्भूतविकल्पपरिनिष्ठत" (१।२०७) इत्यादिना।

**तस्मा**दित्युपसंहारः। इयता च ग्रन्थेन यदुक्तन्तेष्ववश्यं शब्दप्रवृत्त्या भाव्य-मिति तदेवाचार्येण समर्थितं।

अत्र परः प्राह। यद्य**भावेष्वपि शब्दास्सन्ति** तेष्व[4]भावेषु **कथं स्वभावभेदः** शब्दप्रवृत्तिहेतुर्येनापोहविषयत्वमभावप्रतिपादकानां स्यात्।

**तद्भावादसम्भवः ।**
**रूपाभावादभावस्य शब्दा रूपाभिधायिनः ॥१८७॥**
**नाशंक्या एव सिद्धास्ते व्यवच्छेदस्य वाच[5]काः ।**

**शब्दानां वस्तुव्यापारेषु किं रूपमभिधेयमाहोस्विद् भेद इति शङ्का स्यात्, अभावस्तु विवेकलक्षण एव। निर्निमित्तीकर्त्तव्यस्य कस्यचिद् रूपस्य अभावात्, तद्भावेऽभावायो[6]गाद् वा भावस्य तल्लक्षणत्वाद् वा।**

**तेन तस्मिन्नेव वस्तुनि विवेकः। ते हि तथाभावख्यापिनः शब्दाः किं विवेकविषयतया अप्रतिशरणा इत्याशङ्का[7]। तस्मात् सर्वे शब्दा विवेकविषया विकल्पाश्च सिद्धाः। तेन एकवस्त्वनुसारिणोऽपि यथास्वं विशेषभेदैरुपकल्पिता[1] विशेषैर्भे-** 475a

---

अत्रोत्तरमाह्। चा र्यः। **तत्रापीत्यादि**। **रूपाभावादिति** स्वरूपाभावादभावस्य। **रूपाभिधायिनः** स्वभावग्राहकाः **शब्दा नाशंक्या एव**। यतस्ते शब्दा अभावविषया **व्यवच्छेदस्यान्यापोहस्य वाचकाः सिद्धा** एव।

एतदुक्तम्भवति (।) अभावविषया[5]णां **शब्दानां** भावस्वरूपाग्राहकत्वादपोहविषयत्वन्तथा भावविषयाणामपि शब्दानाम्भावस्वरूपाग्राहकत्वादपोहविषयत्वमेव (।) केवलं केचिच्छब्दा भावाध्यवमायाद् भावविषयाः केचिदभावाध्यवसायादभावविषया उच्यन्ते। **वस्तुनि वृत्तिर्व्यापारो** येषां शब्दानान्तेषां **किं रूपमभिधेयं** विधिरूपेण वस्तुग्राह्य**माहोस्विद् भेदो**ऽन्य[6]व्यावृत्तः स्वभावोध्यवसीयत **इति शङ्का स्यात्**। **अभावस्तु विवेकलक्षण** इति स्वभावविरहलक्षणः कस्मा**न्निमित्तीकर्त्तव्यस्य रूपस्य** वस्तुस्वभावस्य। **तद्भावे** तस्य रूपस्य सत्तया ह्य**भावायोगात्**। तस्य रूपस्य भावस्तद्भावः स एव लक्षणं यस्य भावस्य स तथोक्तः। अयमेव स मुख्यो विवेकोन्यापोहः। अन्यस्तु गवादिशब्दविषयो[7]पोहनिमित्तत्वादपोह इत्युपचरितः सर्वभावविरहलक्षणः। तस्य विवेकस्य **तथाभावख्यापिन** इति विवेकरूपाभिधायिनः॥ **विवेकविषया** इत्यन्यापोहविषया विकल्पाश्च **विवेकविषया** इति सम्बन्धः। **ते** शब्दा विकल्पाश्च। एकं व्यावृत्तिसमाश्रयभूतम्वस्तु। **प्रतिस**(?श)**रणम**धिष्ठानं येषां शब्दानां विकल्पानाञ्च। ते तथोक्ताः। तथा ह्यकृतकव्यवच्छेदेन यदेव वस्तु कृतकशब्दस्य विकल्पस्य वाधिष्ठानन्तदेवानित्यानात्मादिशब्दानाम्विकल्पानां च। ते तथाभूता अपि भिन्नविषया एवेति सम्बन्धः। कस्माद् **यथास्वमित्यादि**। या व्यावृत्तिर्यतो व्यवस्थाप्यते सा तस्या अवधिः। **यथा कृतकाख्यस्य व्यवच्छेदस्याकृतकः**। एवमनित्यत्वलक्षणस्य व्यवच्छेदस्य नित्य इत्यादि। तेषां[2] **यथास्वमव**धीनां भेदास्तै**र्भेदैरुपकल्पिता** रचिता अनित्य- 127a

**देष्विव बुद्धौ प्रतिभात्सु विवेकेषु चोपस्थापनात् भेदविषया एव।**

**तेन स्वभावस्यैव साध्यसाधनभावेऽपि न साध्य[2]साधनयोः संसर्गः। ततश्च प्रतिज्ञार्थैकदेशो हेतुः स्यादिति। तन्न। स च।यं हेतावेवोक्तः—**

**उपाधिभेदापेक्षो वा स्वभावः केवलोऽथवा ॥१८८॥**
**उच्यते[3] साध्यसिद्ध्यर्थं नाशे कार्यत्वसत्त्ववत्।**

**स्वभावनिष्पत्तौ अपेक्षितपरव्यापारभावो हि कृतकः। तेनेयं कृतकश्रुतिः**

---

त्वादीनां विवेकिनां भेदाः परस्परं विशेषाः। **तैर्भेदैर्भिन्नेष्विव** विकल्प**बुद्धौ प्रतिभात्सु** प्रतिभासमानेषु धर्मिषु। तेषां शब्दाना**म्विवेकेषु** भेदेषु विकल्पानां **चोपस्थापनात्**। यथाक्रमं वाचकत्वेन ग्राहकत्वेन चोपश्लेषात्।

ननु च कृतकानित्यत्वयोर्नैवावधिभेदोस्त्यकृतकस्येव नित्यरूपत्वात्।[3] ततश्च प्रतिज्ञार्थैकदेश एव हेतुः।

नैष दोषो यस्मादकृतकस्यापि प्रागभावस्यानित्यत्वात्। कृतकस्यापि प्रध्वंसाभावस्य नित्यत्वादस्त्येवावधिभेदः। यद्वा कारणेन कृतः शब्दो न भवतीत्यस्य समारोपस्य व्यवच्छेदेन कृतको द्वितीयादिक्षणे स्थायित्वसमारोपव्यवच्छेदेनानित्य इत्युच्यत इत्यस्त्येवावधिभेदः। **तेनेति** यथोक्ते[4]न व्यावृत्तिभेदेन स्वभावहेतौ **स्वभावस्यैव साध्यसाधनभावेपि न साध्यासाधनयोः संसर्ग** एकत्वं। **ततश्च** यदुक्तं स्वभावे साध्ये **प्रतिज्ञार्थैकदेशो हेतुः स्यादिति** स दोषो नास्तीत्याह।

**तन्नेति** (।) **तदिति** तस्मात्। **स चायं स्वभाव** इति सम्बन्धः। स्वभाव इत्यव्यतिरिक्तो धर्मः। स कदाचित् सत्त्वमन्यो वा। यद्यपि कृतके सत्त्वमस्ति सत्सु च कृतकत्वन्तथा[5]पि हेतुकृतोयं स्वभाव इत्येतावन्मात्रविवाक्षायां कृतको हेतुरुच्यते। न तु सामर्थ्यविवक्षायां। प्रमेयत्वादिवत्। सामर्थ्यमस्त्येतावन्मात्रविवक्षायाञ्च सत्त्वं हेतुरुच्यते तेन तु हेतुकृतत्वविवक्षायां। (१८७–८८)

तेन यदुच्यते (।) "कृतके सत्त्वं विद्यते न च तस्यानित्यत्वे व्यभिचारोस्ति (।) तत्किमित्युपाधिभेदेन विशेष्यत" इति तदपास्तं। कृतकत्वादौ[6] सामर्थ्यस्याविवक्षितत्वादिति। हेतुत्वेनापदिश्यमान उच्यमानः। **उपाधिभेदापेक्षो** विशेषणभेदापेक्षः। **केवलो** वेत्युपाध्यनपेक्षः। **साध्यसिद्ध्यर्थमुच्यते**। अनित्यत्वे साध्ये कृतकत्वमुपाधिभेदापेक्षन्तदनपेक्षन्तु सत्त्वं। अपेक्षितेत्यादिनोपाधिभेदापेक्षत्वं कृत-

127b कत्वस्याह। परस्याहेत्वभिमतस्य जनन[7]शक्तिरेव व्यापारः। अन्वयव्यतिरेकानुविधानमेव चापेक्षा। **स्वभावनिष्पत्तौ** स्वभावनिष्पत्तिनिमित्त**मपेक्षितः परव्यापारो येन भावेन** स कृतकः। संज्ञायां कनो विधानात् संज्ञाशब्दोयं **कृतक** इति। यत

**स्वभावाभिधायिन्यपि परोपाधिमाक्षिपति। एतेन[4] प्रत्ययभेदभिन्नतादयो व्याख्याताः।**

**एवं उपाधिभेदं प्रत्यपेक्षः क्वचित् स्वभावहेतुरिति। क्वचिच्च प्रयोगेऽनपेक्ष उच्यते। यथाऽनित्य[5] एव सत्त्वम्। क्वचित् स्वभावभूतधर्मभेदपरिग्रहद्वारेण, यथा तत्रैवोत्पत्तिः।**

**अनया दिशा स्वभावहेतुविभागान्तरेष्वपि द्रष्टव्यः।**

> **सत्तास्वभावो हेतुश्चेन्न सत्ता साध्यते कथम् ॥१८९॥**
> **अनन्वयो हि भेदानां व्याहतो हेतुसाध्ययोः।**

**यदि सत्ताऽनित्यैव स्वभावहेतुभूता कस्मात् न साधयितु[7]मिष्टा।** 475b

**तत् तथा प्रधानेन विशषीभवति न च विशेषः साधयितं शक्यते, तस्यानन्व-**

---

एवन्तेनेयं **कृतकश्रुतिः स्वभावाभिधायिन्यपि** सती **परोपाधिम**त्यन्तविशेषणमेन स्वभावम**ाक्षिपति। एतेनेति** कृतकत्वस्योपाधिभेदापेक्षत्वप्रतिपादनेन। **प्रत्ययानां** कारणनाम्**भेद**स्तेन भेत्तुं शीलं यस्य स तथोक्तस्तद्भावस्तत्त्वं। स्थानकरणादिभेदाद् भिद्यते शब्दः। आदिशब्दात् प्रयत्नानन्तरीयकत्**वादयो व्याख्याताः**।

एवमित्यादिनोपसंहारः। **क्वचित् प्रयोगे उपाधिभेदंप्रत्यनपेक्षः**। अतएवाह। सामान्येन **अनित्य एव** साध्ये **यथा सत्त्वं। स्वभावभूत**श्चासौ **धर्म**श्च तस्य **परिग्रहेण**[2] क्वचित्स्वभावो हेतुरुच्यते इति प्रकृतं। **यथा तत्रैवे**त्यनित्यत्वे साध्य **उत्पत्तिः**। न चोत्पत्तिरुत्पत्तिमतोन्याभावस्याजन्यत्वेनोत्पत्त्यभावप्रसङ्गात्। केवलमर्थान्तरभूतेवकल्पिताविशेषणत्वेन तेनोत्पत्तेरिन्युत्पत्तिमत्वादित्यर्थः। अयमुपाध्यपेक्ष एव स्वभावो द्रष्टव्यः। कृतकत्वादौ परभूत उपाधिरहितत्वात्मभूत एव धर्मविशेष इत्येता[3]वान् विशेषः।

**अनया दिशे**ति। उपाध्यपेक्षानपेक्षहेतुप्रविभागदिशा। (१८८)

यदि **सत्ताख्यः स्वभावो हेतुः** सत्त्वमिति यावत्। प्रधानादि**सत्ता कथं न साध्यते**। अथ सत्ता सामान्ये साध्ये सिद्धसाध्यता स्यादतः सत्ताविशेषस्साध्यस्तस्मिश्च साध्ये विशेषस्यानन्वयात् साध्यशून्यो दृष्टान्तः स्यादतो न सत्ता **साध्यते**। तदा हेतावपि सत्त्वे विशेषस्यानन्वया[4]त् साधनशून्यो दृष्टान्तः स्यात्। तदाह (।) **अनन्वयो ही**त्यादि। **भेदाना**म्विशेषाणां **व्याहतो** दुष्टो **हेतुसाध्ययोः**। हेतौ साध्ये चेत्यर्थः। अन्यत्र **चे**त्यनात्मादौ। **तदि**ति सत्त्वं। **किल**शब्दोनभिमतार्थे एव प्रसाध्यमानमिति। (१८९–९०)

अस्ति **प्रधानमि**त्यादिना **प्रधान**लक्षणयोगेन **विशेषीभवति न च विशेषः**

यात्। यथाह "प्रमाणविषयाज्ञानाद्" इति। स चायं विशेषः साध्यहेतुः[1] क्वचिन्न व्याहन्यते। किन्तर्हि। हेतावपि तुल्यदोषत्वात्। न हि हेतुरनन्वयः सिद्धेरङ्गम्। तेन संशयभूतत्वात् न सोऽपि दोषः। एवम्—

भावोपादान[2]मात्रे तु साध्यसामान्यधर्म्मिणि ॥१९०॥

न कश्चिदर्थः सिद्धः स्यादनिषिद्धञ्च तादृशम्।

न सर्वथा सत्तासाधने विशेषः साध्यते। भावमात्रविशेषणः कस्मिंश्चिद् धर्मिणि अस्ती[3]ति साधनेऽनिर्दिष्टस्भावविशेषः क्वचित् सत्तामात्राप्रतिषेधात्। नेह सत्तासाधनप्रतिषेधः। किन्तु एवं क्वचिदस्तीति वचनेऽस्य विशेषमपरं क्वचित् अपरामृशन्[4] स्वार्थं कथं पुष्णाति?

तस्मादनेन उपात्तमत एव साध्यं—

उपात्तभेदे साध्येऽस्मिन भवेद्धेतुरनन्वयः ॥१९१॥

---

साधयितुं शक्यते तस्यानन्वयात्। य[5]थाऽहेत्याचार्य दि ग्ना गः। "अस्ति प्रधानमित्यनेन प्रधानस्वलक्षणमेव साध्यन" इति यत्सां ख्ये नोक्तं तत्प्रमाणस्यानुमानस्य विषयाज्ञानात् सामान्यविषयं ह्यनुमानं स्वलक्षणविपयं। व्याहन्यते दुष्यति। किन्तर्हि (।) हेतावपि तुल्यदोषत्वात्। तदेवाह (।) न हि हेतुरित्यादि। न विद्यतेऽन्वयोस्येत्यनन्वयः सिद्धेः साध्यसाधनस्य ना[6]ङ्गं। कुत इत्यसाधारणाद्धेतोः। भावः सत्ता स(ा) उपादानम्विशेषणं यस्य धर्मिणस्तन्मात्रे। तन्मात्रत्वादेव सामान्यरूपे धर्मिणि साध्ये। सां ख्य स्य न कश्चिदर्थः सिद्धः स्यात्। त्रैगुण्यादिलक्षणस्यासिद्धेः। अनिषिद्धञ्च तादृशं। तादृशमिनि सामान्यमात्रं। अनेन सिद्धसा-

128a ध्यतामाह।[7] (१९०–९१)

न सर्वथेत्यादिना व्याचष्टे। सत्तासाधन इति सत्तासिद्धौ। भावमात्रविशेषण इति सत्तामात्रविशेषणः। अनिर्दिष्टः स्वभावविशेषो यस्येति विग्रहः। नेहेति वस्तुमात्रसाधने। सत्तासाधनप्रतिषेधः। किन्तु स वादी तथा सामान्ये नास्ति कश्चिदिति कञ्चनास्य धर्मिणो भेदं विशेषं नित्यत्वादिकमपरामृशन्नसंस्पृशन्। अनेनेति वादिना। उपात्तभे[1]द इत्युपात्तविशेषः। त्रिगुणात्मको नित्य इत्यादि नोपात्तभेदे साध्येस्मिन् प्रधानादिके धर्मिणि। भवेद्धेतुरनन्वयः। नास्य साध्यधर्मविशेषणदृष्टान्तेन्वयोस्तीत्यनन्वयः। यत एवं (।)

सत्तायान्तेन साध्यायाम्विशेषः साधितो भवेत्।

अन्ये तु सत्तायामित्यादि पश्चाद् धर्मादौ व्याख्याय। पूर्वार्द्धमुपात्तभेदमित्यादि पश्चाद् व्याचक्षते।

**सत्तायां तेन साध्यायां विशेषः साधितो भवेत् ।**

**स हि धर्मी[5] प्रधानलक्षण एको नित्यसुखाद्यात्मकोऽन्यो वा यथाकथञ्चिदपि विशेषितः तत्स्वभावः सिद्धः स्यात् । स च तथा नान्वेति ।**

**ननु यः सत्ता[6]मात्रान्वयी सिद्धः न तेन सिद्धेन किमपि । अग्न्यादिषु न एवं प्रसंगः, तत्रापि नाग्निसत्तायां कश्चिद् विवादः । विशिष्टाधारविशेषणाभिमत[7]- स्यानन्वयाद् असिद्धिः ।** 476a

**न वै स आधारो विशेषीकरोति । तदयोगव्यवच्छेदेन विशेषणाद् इत्युक्तं वक्ष्यते च ।**

---

**स ही**[2]त्यादिना व्याचष्टे। **एको** मूलप्रकृतेर्भेदाभावात्। **नित्यो** निरन्वय-विनाशाभावात्। त्रिगुणत्वात्मकत्वान् सुखदुःखमोहा**त्मकः**। **अन्यो** वेनि कर्तृ-त्वादियुक्तः। **यथाकथंचिदपी**ति। यथोक्तैर्द्धर्मैः समस्तैर्व्यस्तैर्वा विशेषितः। **तत्स्वभाव** इति यथोक्तविशेषणविशिष्टस्वभावः (।) **स च** धर्मी **तथे**ति विशिष्टेन स्वभावेन नान्वेति सपक्षे। तथा भूतस्य[3] दृष्टान्तधर्मिणोसिद्धेः। **न तेन सिद्धेने**ति सत्तामात्रेण। सत्तामात्रे विवादाभावात्। (१६१–६२)

**नन्वि**त्यादि परः। **एवं प्रसङ्ग** इति यः सामान्यविशेषविकल्पेन सत्ताया-मुक्तः। तदुक्तं (।)

"विशेषानुगमाभावः सामान्ये सिद्धसाध्यते"ति।

यस्मा**त्तत्राप्यग्न्यादिषु** साध्येषु **नाग्निसात्तायां कश्चिद्विवादो**स्त्यग्निमात्रस्य सिद्धत्वात्। न च तेन सिद्धेन किञ्चित्[4] तस्याप्रवृत्त्यङ्गत्वात्। देशादिविशिष्टो ह्यग्निः प्रवृत्त्यङ्गं नाग्निमात्रं। स एव तर्हि साध्य इत्याह। विशिष्ट आधारो यत्राग्न्यादिकं साध्यते स विशेषणं यस्याग्न्यादिकस्य स **विशिष्टाधारविशेषणं** (।) तस्य। साध्यत्वेना**भिमतस्य**। सपक्षेऽनन्वयादसिद्धिः।

**ने**त्याचार्यः। **न वै स आधारो** विशेषणभावेन गृहीतोपि तमग्नि**म्विशेषी-करोति**।[5] येनान्वयः स्यात्। किं कारणं। **तदयोग** इत्यादि। तस्य धर्मस्य तस्मिन् धर्मिण्ययोगो य आशंकितस्तस्य **व्यवच्छेदेन** विशेषणात्। एतच्च **पक्षधर्म** (१।३) इत्यत्रो**क्तं**। **वक्ष्यते च** चतुर्थे परिच्छेदे (४।१४६)।

ननु च व्याप्तिग्रहणकाले प्रदेशायोगव्यवच्छिन्नो वह्निरसिद्धः। तत्सिद्धौ वा किमर्थोन्वयानुगमः। कथम् (।) असिद्धो यस्मात्। यत्र यत्र धूमस्तत्र त[6]-त्राग्नि-रिति व्याप्तिं प्रतियता सामान्येनाभिमतदेशायोगव्यवच्छिन्नोपि बह्निराक्षिप्त एव। केवलमिदानीमस्मिन्देशे वह्निरित्येवं विशेषप्रतीत्यर्थमन्वयानुगमनमिष्यते।

**तस्मात् तत्र सामान्यस्यैवायोगव्यवच्छेदेन साधनम्। न तथाऽत्र क्वचित् सत्तासिद्धिः। प्रधानादिशब्दवाच्यस्यैवार्थस्याभावात् निर्विशेषेणैव सा सत्ता।**

**कथं स विज्ञातव्योऽभिधा[2]तव्यो निश्चेतव्यश्चेति सोऽपि सिद्ध एव। तत् किमिदानीं ज्ञेयं अस्तीति सिद्धिरस्तु। तथाऽपि किं सिद्धं स्यात् ? अन्यत्र तदेवाग्निसामान्यं तत्र न सिद्धमिति साध्यते।**

**तत्रापि तदयोग[3]विरहिणा सामान्येनान्वयो न सिद्ध एव।**

**न वै कश्चित् तथाभूतेनार्थेनान्वयं करोति। तस्मात् परं प्रतिपादयता यत्र धमस्तत्राग्निरिति धूमोऽग्निनान्तरीयको[4]ऽग्न्यविनाभावी दर्शनीयः, स तथाऽग्निमात्रेण व्याप्तः सिद्धो यत्रैव स्वयं दृश्यते तत्रैवाग्निबुद्धिं जनयति। तत्र साध्यनिर्दे-**

---

**तस्मा**दित्युपसंहारः। **तत्रे**ति प्रदेशादौ। तदयोगव्यवच्छेदेनेति तस्मिन् प्रदेशादौ धर्मिणि साध्यधर्मस्या**योगव्यवच्छेदेन** सामान्यस्याग्निमात्रस्य साधनात्[7] नास्त्यन्वयदोषः। नापि सिद्धसाध्यता प्रदेशायोगव्यवच्छेदस्यासिद्धत्वात्। प्रधानादिके धर्मिण्ययोगव्यवच्छेदेन सत्तामात्रं साध्यमिति चेदाह। न **तथे**त्यादि। क्वचिदिति प्रधानादिके धर्मिणि। कस्मात् (।) **प्रधानादिशब्दवाच्यस्यैवार्थस्य** त्रैगुण्यादिलक्षणस्यैवा**भावात्। निर्विशेषेणैव सा** सत्ता। विशेषणभूतस्याधारस्या**भावात्** (।)

128b

**कथमि**त्यादि परः। सोपि ध[1]र्मी **कथं विज्ञातव्यः**। ज्ञात्वा च शब्दे**नाभि**धातव्यः। अभिहितः प्रमाणेन **निश्चेतव्यः**। तस्माज्ज्ञेयत्वादिभिः सोपि सिद्ध **एव**। तस्मिन् सत्ता सामान्यं साध्यते। **तत्किमि**दानीं **ज्ञेय**न्निर्विशेषण**मस्तीत्ये**तावता प्र धा न स्य **सिद्धिरस्तु**। ज्ञेयाद्यर्थो हि प्रधानार्थः शब्दार्थरूपः स्यान्न नित्यादिगुणोपेतः। प्रधानन्तावत्सिद्धम्भवत्यन्ये च धर्मा अन्यैः प्रमाणैः से[2]त्स्यंते इति चेदाह। **तथापि** ज्ञेयत्वादिना **किं सिद्धं स्यात्** (।) नैवाभिमतस्य प्रधानस्य स्वलक्षणस्य सिद्धिः स्यात्। अस्य शब्दार्थरूपत्वात्। अग्न्यनुमानेपि तर्ह्यग्निमात्रं सिद्धमित्यसाध्यं स्यादित्याह। **अन्यत्र** तु **तदेवाग्निसामान्य**नियताधारमसिद्धन्तत्र देशे न **सिद्धमिति साध्यते।**

ननु **तत्रापि तदयोगविरहिणेति** तेन प्रदेशेनायोगस्तदयो[3]गस्तेन विरहः प्रदेशेन योग इत्यर्थः। सोस्ति यस्य सामान्यस्य तत्तथोक्तं। तेना**न्वयो न सिद्धः**।

**नेत्या**दिना परिहरति। **न वै कश्चि**न्न्यायज्ञः **तथाभूतेन** प्रदेशसम्बन्धिनाऽग्निसामान्येन व्याप्तिं **करोति**। **तस्मात् परं** प्रतिवादिनं **प्रतिपादयता धूमो**ग्निनान्तरीयकोन्यविनाभावी दर्शनीयः। **यत्र धूमस्तत्राग्नि**रित्येवं। **स** धूम**स्तथे**ति स[4]र्वोपसंहारव्याप्तिप्रदर्शनेना**ग्निमात्रेण व्याप्तः सिद्धो यत्रैव** प्रदेशे

शेन न किञ्चित् प्रयोजनम्। तत्र दर्शनात् सम्बन्धाख्यानमात्राच्चे[5]ष्टस्य सिद्धेः। तदनिर्देशे च कथं तद्विशिष्टेऽन्वयः ? तद् अयं अग्न्यविनाभावितया सिद्धः। अर्थात् अग्निरेव प्रदेशेनायोगं व्यवच्छिनत्ति। तस्मात् स एव तथा[6] साध्य उच्यत इति।

न पुनस्तथोपन्यासपूर्वकोऽन्वयः। साध्योक्तेरिहानङ्गत्वात्। तत्पर्वगामिनि प्रतिज्ञासाधनेन कश्चिदपनयेत्[7]। तथा चाह— 476b

"अन्यत्रा व्यभिचारेऽपिधर्महेतुं हि दर्शयेत्।
तत्र तेन प्रसिद्धिमत् धर्मिणं गमयिष्यति॥"

तस्मात् यथाग्निसाधनं नैव सत्तासाधनमपि प्राप्तम्।
निश्चिताव्यभिचारं च लिंगं तत्र प्रसिद्धिमत्
तेन व्यापकधर्मेण धर्मिणं गमयिष्य।

---

धर्मिणि स्वयं स्वेन रूपेण दृश्यते तत्रैवाग्निबुद्धिञ्जनयति। तत्रैतस्यां सामर्थ्यादनुमेयप्रतीतौ साध्यनिर्देशेन न किञ्चित् प्रयोजनन्तेन विनापि साध्यसिद्धेः एतदेवाह। तत्रेत्यादि। तत्र साध्यधर्मिणि लिङ्गस्य दर्शनात् सम्बन्धाख्यानमात्राच्चेष्टस्य साध्यस्य सिद्धेः[5]। यतश्च न साध्यस्य धर्मधर्मिसमुदायस्य निर्देशस्तदा तदनिर्देशे च कथन्तद्विशिष्टे साध्यधर्मेणान्वयः(।) नैव (।) यतोनन्वयदोषः स्यात्। तदिति तस्मादयन्धूमोग्न्यविनाभावितया सिद्धः सामर्थ्यादेव तेन प्रदेशेनायोगम्व्यवच्छिनत्ति। तस्मात् समुदायः साध्य उच्यते।

यदि हि तत्र नाग्निः स्यान्नैव धूमो भवेदिति सामर्थ्यं। अन्वय[6]स्तु केवलेनैव साध्यधर्मेण दर्शनीयो न साध्यधर्मधर्मिसमुदायेन। तस्य दृष्टान्तेऽसिद्धत्वात्। समुदायेन च व्याप्तिप्रदर्शने प्रयोजनाभावात्। अत एवाह। न पुनरस्यास्तथेति प्रदेशविशिष्टस्योपन्यासपूर्वकोन्वयः। किं कारणं (।) साध्योक्तेरिहान्वयप्रदर्शनकालेऽनङ्गत्वात्। साध्यनिर्देशपूर्वकाले वान्वयस्येष्यमाणे नैव सा[7]धनवाक्यात् कश्चित् प्रतिज्ञावाक्यमपनयेत्। 129a

तस्मात् स्थितमेतत् (।) पक्षमनुप्रदर्श्यैव साध्यधर्मेण लिङ्गस्य व्याप्तिः कथनीयेति। तथा चाह आचार्य दि ग्ना गः। "लिंगस्य धूमादेः साध्येनाव्यभिचारोन्यत्र सामान्ये न धर्ममात्रे दर्शयितव्यः। निश्चिताव्यभिचारं च लिङ्गन्तत्रे"ति साध्यधर्मिणि प्रसिद्धं सत्। तेन व्यापकधर्मेण युक्तं साध्यधर्मिणं गमयिष्यति।[1]

तस्मादित्यादिनोपसंहारः। यथाग्निसाधनम्विशेषपरिग्रहादनवद्यं नैव सत्तासाधनमनवद्यं विशेषासिद्धेः। तदेवं सिद्धसाध्यताप्रसंगादनन्वयाच्च न प्र धा ना देः सत्ता साध्या।

**अपरामृष्टतद्भेदे वस्तुमात्र तु साधने ॥१९२॥**
**तन्मात्रव्यापिनः साध्यस्यान्वयो न विहन्यते ।**

**स्वभावविशेषापरिग्रहेण** साधनसत्तायामपि **वस्तुमात्रव्यापि[2]नि साध्यधर्मे नान्वयव्याघातः ।**

**न हि तत्रावश्यं** विशेषपरिग्रहक्रिया । **सत्तामात्राश्रयेऽपि साधने सामर्थ्यात्** साध्यत्वमेव **वैफल्यात्**[3]।

**अपि च—**

**नासिद्धे भावधर्म्मोस्ति व्यभिचार्युभयाश्रयः ॥१९३॥**
**धर्मो विरुद्धोऽभावस्य सा सत्ता साध्यते कथम् ।**

**सत्तासाध्ये तद्धेतुः सर्वत्र प्रत्ययः त्रयीं दोषजातिं असिद्धव्यभिचारविरुद्धं**

---

साधनं पुनः सर्वमत्रमनुद्दिष्टमिति प्रतिपादयितुमाह । **अपरामृष्टेत्यादि ।** अपरामृष्टोनुपात्तस्**तद्भेदः** । यस्मिन् **वस्तुमात्रे** सत्तामात्रे । तस्मिन् **सा[2]धने** क्रियमाणेन्वयो न विहन्यते । कस्य (।) **तन्मात्रव्यापिनः** सत्तामात्रव्यापिनस्**साध्यस्य** । तदेव विवृण्वन्नाह । **वस्तुमात्रव्यापिनि साध्यधर्मे । स्वभावविशेषापरिग्रहेण** पुनस्सत्त्वे क्रियमाणे **नान्वयव्याघातः** । न साध्यशून्यो दृष्टान्त इत्यर्थः ।

**न हि तत्रेति** । सत्त्वे **साधने** । कस्मात् (।) **सन्मात्राश्रयेपि** सत्त्वमात्रस्य हेतुत्वेनाश्रयणेपीत्यर्थः । न पुनः[3] साध्यत्वे सत्ताया विशेषानाश्रयः (।) कस्माद् (।) **वैफल्यात्** ( १९२–९३ )

सत्तायां साध्यायां पुनर्दोषान्तरन्दातुमाह । **अपि चेति** । **असिद्धे** प्रधानादौ धर्मिणि **न भावधर्मोस्तीत्य**सिद्धो हेतुः । यस्तु भावाभावो**भयाश्रयो धर्मः** स सत्त्वे साध्ये **व्यभिचार्य**नैकान्तिको योप्य**भावस्य धर्मः** स सत्त्वे साध्ये **विरुद्धो** सत्त्वस्यैव साधनात् । यस्यां प्रधानादिसत्तायां साध्यायां हेतु[4]र्यः कश्चिदुपादीयते स सर्वो दोषत्रयं नातिवर्त्तते (।) **सा सत्ता साध्यते कथं** । इह च हेतोः सिद्धत्वमभ्युपगम्य विरुद्धानैकान्तिकान्तिकत्वे उक्ते हेत्वसिद्धावनयोरसम्भकात् । ( १९२–९३ )

ननु सर्वज्ञादिसत्तायामपि साध्यायां हेतोरसिद्धतादिदोषस्य तुल्यत्वात् कथन्तत्सत्तासिद्धिः ।

नैष दोषः । यद्यदुपदिश्यते तज्ज्ञानपूर्वकमेव यथाऽन्यत् किञ्चित् । उप[5]दिश्यते च चतुरार्यसत्यं । तस्मात्तदपि ज्ञानपूर्वकमेव यस्य तज्ज्ञानं सोस्माभिः सर्वज्ञोभ्युपगम्यत इति । न कश(?काचित्) क्षतिः । **तद्धेतुरि**ति सत्ताहेतुः । **त्रयीमिति** त्र्यवयवान्दोषजातिन्दोषप्रकारान्**नाभिवर्त्तते** । तामाह । **असिद्धमित्यादि** । **विरोध-**

**नातिवर्त्तते। तत्र भावधर्मो हेतुरादिष्टोऽपि कथमसिद्धसत्ताके स्यात्।**

**यो हि तत्र भावधर्ममिच्छति स कथं भावं नेच्छेत्? कदाचिदस्वभावस्यै-वा[5]पेक्षया धर्मिणि व्यतिरेकीव धर्मो निर्दिश्यते। धर्मधर्मिवचनशब्दानां वाच्यार्थे निश्चयज्ञानविषय एव न कश्चिदपि विशेष इत्युक्तम्। यथा उभावपि धर्म इति वचने नहि वस्तुनि अनाश्रितेऽविरोधेन प्रतिषेधमात्रस्याभावेऽपि अविरोधात्। यथा न भवति मूर्त्तमिति अमूर्त्तत्वं निरुपाख्येऽपि[7] स्यात्।** 477a

**यदि निरुपाख्याभावान्न प्रतिषेधविषयत्वम्। ततः किं विधिविषयोऽस्ति। तदपि नेति चेत्। कथं न स प्रतिषेधविषयः[1]? विधिनिवृत्तिरूपत्वात् प्रतिषेधस्य।**

---

मिति विरुद्धतां। **तत्र भावधर्मो हेतुरसिद्धसत्ताके कथं सिध्येत्।**

स्यादेतद् (।) भावधर्मः प्र[6]धा ना देस्मिद्धो न तु भाव इत्याह। **यो ही-**त्यादि। **यो हि** प्रधानादि**भावधर्म्म**हेतुन्तत्र प्रधानादा**विच्छति स कथं** वादी प्रधा-नादिकम्**भावं** सिद्धं **नेच्छेत्**। तस्माद् भाव एव धर्मः। कथन्तर्हि भावस्यायं धर्म इति कथ्यत इति चेदाह। **कदाचिद**पेक्षयेति भेदान्तरप्रतिक्षेपलक्षणया **व्यतिरे-कीव** भिन्नरूप इव **धर्मिणः** सकाशाद् **धर्मो निर्दिश्य[7]ते**। **यथा** कृतकत्वमस्ये-त्यकृतकव्यावृत्त एव भाव उच्यते। तत्वन्य एव धर्मो धर्मशब्देनोच्यतेऽन्यश्च धर्मी धर्मिशब्देनेत्याह। **न ही**त्यादि। यस्मादन्यव्यावृत्तिनिरपेक्षः पुमान् यदा शब्दस्याकृतकादेवैकस्माद् व्यावृत्तिं जिज्ञासते। तदा कृतकत्वमस्येत्युच्यते। यदान्यव्यावृत्तिमाकांक्षोऽकृतकत्वादेवैकस्माद् व्यावृत्तिं जिज्ञासते तदा कृतकः शब्द इत्यु[1]च्यत इति। एतच्च प्रागेवोक्तम् (।) भेदान्तरप्रतिक्षेपाप्रतिक्षेपेत्या-दिना। 129b

अथ पुनरुभयोर्भावाभावयोर्द्धर्मं हेतुम्ब्रूयात्। कथं पुनरेको धर्मो भावाभावयो-र्भवति (।) धर्मो हि स्वभावो यश्च भावस्य स्वभावः कथमभावस्य स्यादित्याह। अनाश्रितेत्यादि (।) **अनाश्रित**म्वस्तु यस्मिन् व्यतिरेकमात्रे तस्य व्यतिरेक-मात्रस्य **प्रतिषेधमात्रस्य** धर्मत्वेन कल्पि[2]त**स्याभावेप्यविरोधात्**। व्यतिरेकमात्रमेव कथम्भवतीत्याह। अपर्युदासेन प्रसज्यप्रतिषेधेन। प्रसज्योपसर्जनो विधिः **पर्युदासः** स चेह नाश्रितः। **यथा न भवति मूर्त्त इत्यमूर्त्तत्वं** मूर्त्तत्वनिवृत्तिमात्रं भावेपि विज्ञाने **निरूपाख्ये**प्यभावे**पि स्यात्**।

परः प्रतिबद्धुमाह। **निरुपाख्याभावान्न प्रतिषेधविषयत्वं**। यदधिकरणादि-श[3]क्तियुक्तन्तत्कस्यचिद्विषयः स्यात्। निरुपाख्यं च सर्वशक्तिरहितन्तत्कथम्विषयः स्यात। **संप्रति** प्रतिषेधविषयत्वे प्रतिषिद्धे **किम्विधिविषयोस्ति** निरुपाख्यं। **तदपि**

**तद् अव्यवच्छेदमात्रं द्वयोरपि भावाभावयोः विपक्षवृत्तिशङ्काव्यवच्छेदेन गमकत्वं लभ्यं कथमात्म**[2]**सात् कुर्यात्। स च स्ववाचा उभयधर्मतां ब्रुवाणः सतोऽन्यत्रापि अस्य वृत्तिं भाषते सत्तायामव्यभिचारवचनं इति कथं न व्यभिचारः? सत्तायां अभावधर्मस्तु भावमात्रव्या**[3]**पिनोऽर्थस्य व्यवच्छेदस्य हेतुवचनमत्र विरुद्धहेतौ स्यात्। तस्य च वस्तुनः क्वचिदभावाद् अभावे भावव्यवच्छेदस्य सत्त्वात्। तस्मादयं त्रिप्रकारोऽपि धर्मः**[4] **सत्तायाः साधनेन हेतुलक्षणाश्रयं विना न चान्या गतिः। तस्मान्न सत्ता साध्यते। तन्मात्रव्यापिनि भावधर्मस्यात्र सामान्यसाधनत्वेऽपि सिद्धसत्ताके धर्मिणि नासिद्धिः।**

**तेन च साध्यधर्मेण व्याप्तिः कथंचिद् वा यदि निश्चीयते विरुद्धव्यभिचार-**

---

विधिविषयत्वन्निरुपाख्यस्य **नेति चेत्। कथमिदानीमभावो न प्रतिषेधविषयः।** विधिविषयत्वनिषेधादेव हि प्रतिषेधविषयत्वं। किं कारणम् (।) **विधिनिवृत्तिरूपत्वात् प्रतिषे**[4]**धस्य। तदिति** तस्मादेतदनन्तरोक्तम**व्यवच्छेदमात्रं द्वयोरपि** भावाभावयोः सम्भवत् सत्त्वे साध्ये गमकत्वं कथमात्मसात् कुर्यात्। किम्बिशिष्टं गमकत्वं। **विपक्षे**त्यादि। **विपक्षे** प्रयोगे **वृत्तिर्हे**तोस्तस्य **शङ्का** तस्या अपि **व्यवच्छेदेन** न **लभ्यन्न** चोभयधर्मस्य व्यवच्छेदमात्रस्य विपक्षाद् व्यावृत्तिरस्तीति **कथन्तद्** गमकत्वम**ात्मसात् कुर्यात्। स च** वा[5]दी **स्ववाचा**न्यवचनेन। सत्तासाधनस्य हेतो**रुभयधर्मतां ब्रुवाणस्सतः** साध्याद**न्यत्राप्य**सति अस्योभयधर्मस्य हेतो**र्वृत्तिम्भाषते** (।) स एव च **सत्तायां** साध्यायाम**व्यभिचारनिबन्धनत्वाद्** गमकत्वस्येत्यव्यभिचारम्भा(?)एत इति हेतोः **कथं नो**न्मत्तः।

**अभावधर्मन्तु** हेतुं **सत्तायाम्**वदतोस्य वादिनो विरुद्धः स्यात्। सत्त्वविपरीतस्यासत्त्वस्य साधनात्।[6] कः पुनरस्यैव अभावस्यैव धर्म इत्याह। व्यवच्छेदं कीदृश**म्भावमात्रव्यापी सामर्थ्य**लक्षणस्तस्य **व्यवच्छेदो** नियमेनाभावस्यैव भवति (।) न तु मूर्त्तत्वादेर्व्यवच्छेदस्तस्यैवोभयधर्मत्वात्। कस्माद्विरुद्ध इत्याह। **तस्य** भावमात्रव्याप्यर्थव्यवच्छेदस्य **भावे क्वचिदभावादभावे** च सर्वत्र भावाद् विरुद्धत्वं। **तस्मादयं त्रिप्रकारोपि** भावाभावोभयसम्बन्धी धर्मः **सत्ता**[7]**यास्साधनेन हेतुलक्षणमुक्तः।** न च त्रिप्रकारादधर्मा**दन्या गति**रन्यः प्रकारोस्ति यत**स्तस्मान्न सत्ता साध्यते।** साधनत्वे लिङ्गत्वेऽस्यास्सत्तायाः **सामान्ये**नानुपात्तविशेषणत्वेन। **सिद्धसत्ताके धर्मिणि नासिद्धिः।** अनित्यत्वादिके **वस्तुधर्म**साध्ये। किम्विशिष्टे **तन्मात्रव्यापिनि। तेन च साध्यधर्मेण** लिंगस्य **व्याप्तिः। कथंचि**दित्यन्वय[1]मखेन

130a

**योरभाव इति**[6] **नायं प्रसंगः। व्याप्तौ धर्मिसमाश्रये वाऽनिश्चिते सति तत्स्वभावतया गमको न स कश्चिदपि गमकः स्यात्। अतएव स्वधर्मेण व्याप्तः सिद्धः**[7] 477b **स्वभावो गमको वाच्यः।**

**न हि प्रकाशतया प्रदीपो हि प्रकाशकः, तद्रूपाप्रतिपत्तौ स्वामर्थक्रियां करोति।**

**सिद्धः स्वभावो गमको व्यापकस्तस्य निश्चितः ॥१९४॥**

**तद्धर्मनिश्चयादेव**[1]**।**

**व्यापित्वनिश्चये हि तद्धर्मिणो धर्मः गम्यस्वभावः। अयं निवृत्तावपि तन्निवर्त्तकः। तस्यायं व्यापको धर्मः स्वयं निवर्त्तमानो व्याप्यस्य तस्य धर्मस्य निवर्त्तकः। यद्यस्याभावे**[2] **न भवेत्, एवं ह्यस्य व्यापकः सिद्धो भवति।**

**तस्माद् एतेन गमकलक्षणेन द्विविधस्यापि साधनप्रयोगस्य गमकलक्षणं**

---

व्यतिरेकमुखेण (?न) **वा यदि निश्चीयते**। न विरोधव्यभिचारौ। न विरुद्धत्व-**मनैकान्तिकत्वम्वा** (।) इति हेतो**र्नायं प्रसंगो**सिद्धि (?द्ध) विरुद्धानैकान्तिकलक्षणः। अनिश्चितायान्तु साध्यधर्मेण लिङ्गस्या**व्याप्तौ**। **धर्मिसमाश्रये वा** पक्षधर्मत्वे **वाऽनिश्चिते सति तत्स्वभावतया** निश्चितत्रैरूप्यस्वभावतया यो **गमको**ऽभिमतो **हेतुर्न स कश्चिद् गमकः**। **अत**[2] **एव** कारणात् **स्वधर्मेण** स्वेन साध्यरूपेण **व्याप्तः** साध्यधर्मिणि **सिद्धो** निश्चितो हेतु**स्वभावो वाच्यः**।

एतदेव द्रढयन्नाह। **न ही**त्यादि। **प्रकाशतया** प्रभास्वरतया घटादीनप्रकाशयन् यदा कदाचिद् घटाद्युदरान्तर्वर्त्ती भवति तदा **तद्रूपाप्रतिपत्तौ** प्रभास्वरताऽप्रतिपत्तौ सत्यां **स्वामर्थक्रियां** घटादिप्रकाशनलक्षणां **न हि करोति**।

ग[3]मकस्वरूपमभिधायाधुना गम्यस्वरूपमाह। **व्यापकस्तस्ये**ति। योसौ गमको व्याप्यः स्वभावस्तस्य **व्यापकः** स्वभावः निश्चितो गम्यः।

**तद्धर्मे**त्यादिना व्याचष्टे। धर्मिणो **धर्मो** गम्यः (।) कीदृशस्तस्य गमकत्वेनाभिमतस्य **व्यापकत्वेन निश्चितः**। कथं पुनर्व्यापकत्वेन निश्चित इत्याह। **तद्धर्मनिश्चयादेव** व्याप्यधर्मनिश्चयादेव।

इयता गम्य[4]गमकयोः स्वरूपन्दर्शितं।

निवर्त्त्यनिवर्त्तकयोरपि स्वरूपमाह। **तस्ये**त्यादि। अयमिति व्यापको धर्मः स्वयं **निवृत्तौ** सत्यां **तस्य** व्याप्यस्य **निवर्त्तकः**।

**तस्ये**त्यादिना व्याचष्टे। **अयं व्यापको धर्मः स्वयन्निवर्त्तमान**स्तस्य **व्याप्यस्य निवर्त्तक** इति सम्बन्धः। किङ्कारणं। यस्मा**देवं ह्यस्यायं** साध्यो **धर्मो व्यापकः सिद्धो भवति**। **यद्यस्य** व्यापकस्या**भा**[5]**वे** व्याप्यो **न भवेत्**। **त**दिति वाक्योपन्यासे।

**उक्तं वेदितव्यम्।**

**द्विविधो हि प्रयोगः साधर्म्यवानेव वैध[3]र्म्यवान् च। यदन्ये अन्वयी व्यतिरेकी चेत्याहुः। नानयोः अन्यत्र संयोगभेदात् अर्थतः कश्चिद् अपि भेदः। साधर्म्येणापि प्रयोगेऽर्थाद् वैध[4]र्म्यवतो गतिः। असति तस्मिन् साध्यहेत्वोरन्वयाभावात्। एवं साधर्म्यवतोऽन्वयगतिः स्यात्। तस्मिंश्चासति साध्याभावश्चेत् हेत्वभावे शंका[5] स्यादिति विस्तरेण वक्ष्यामः। उदाहरणं—**

*(१) निर्हेतुकविनाशः*

**अनित्यत्वे यथा कार्यमकार्यं वाऽविनाशिनि ॥१९५॥**

**एतेन च अनयोर्द्वयोरुदाहरणमुक्तम्। तत्रान्वयी "यश्च कश्चित् कृतकः स सर्वोऽप्यनित्यः।" यथा घटा[6]दिः। शब्दश्च कृतकः। एवं कृतकत्वमनित्यत्वेन**

---

अनेनानन्तरोक्तेनानुवर्त्यानुवर्त्तकभावस्य निवर्त्त्यनिवर्त्तकभावस्य च प्रदर्शनेन **द्विविधस्यापि** साधर्म्यवतो वैधर्म्यवतश्च **साधनप्रयोगस्य गमकलक्षणं** साध्यसाधकत्वलक्षणमुक्तम्वेदितव्यं।

तद्व्याचष्टे। **द्विविधो** हीत्यादि। **यथाहुरेके** इति नै या यि काः। **साधर्म्यवानेव** हि प्रयोगोन्वयी[6]। **वैधर्म्यवानेव** च व्यतिरेकी।

ननु साधर्म्यप्रयोगे पक्षधर्मत्वमन्वयश्चेति (।) तथा वैधर्म्यप्रयोगेपि पक्षधर्मत्वं व्यतिरेकश्चेति द्विरूपन्तर्हि लिङ्गम्प्राप्तमित्याह। **नानयो**रित्यादि। अनयोरित्यन्वयव्यतिरेकिणोर्हेत्वोर्वस्तुतः**परमार्थतो न कश्चिद् भेदः**। द्वयोरप्यन्व**यव्यतिरेकवत्त्वात्**।

130b अन्यत्र संयोगभेदात्[7]। तस्मात्तावेवान्वयव्यतिरेकौ कदाचित्साधर्म्यप्रयोगेण प्रतिपाद्येते कदाचिद् वैधर्म्यप्रयोगेणेति प्रयोगमात्रम्भिद्यते न त्वर्थः। किं कारणं (।) यस्मात् **साधर्म्येणापि हि प्रयोगेऽर्थात** सामर्थ्यात्। साध्यविपक्षाद्धेतोर्व्यावृत्तिर्वैधर्म्यन्तस्य गतिः।

तदेव सामर्थ्यमाह। **असती**त्यादि। **तस्मिन्निति** वैधर्म्ये। एवं हि साध्येनान्वितो **हे[1]तुः** स्याद् यदि **साध्याभावे न भवेत्**। तथा वैधर्म्य इति वैधर्म्यप्रयोगे। तस्मिन्नित्यन्वये यदि हि साध्येन हेतोरन्वयः स्यात् तदायं साध्यनिवृत्तौ निवर्त्तेत। **एतच्च** व्य ति रे क चि न्ता **याम्वक्ष्यामः**। (१९४–९५)

**अनित्यत्वे यथा कार्यं**। **अनित्य एव कृतकत्वं**। एतच्चान्वयिन उदाहरणं। अकार्यम्वा। अविनाशिनीति व्यतिरेकिण उदाहरणं। तेनायमर्थो भवति (।) **अविनाशिनि[2]** विनाशाभावे सति। अकार्यं कृतकत्वन्न भवति। तदेवाह (।) **अनेने**त्यादि। **अनयो**रित्यन्वयव्यतिरेकिणोः। यत्किञ्चिदिति **सर्वोपसंहारेण**

**व्याप्तं कथितमिति शब्दोऽपि कृतकत्ववचनसामर्थ्यादेवानित्यः शब्द इति भवति। तस्मान्नावश्यं पक्षो निर्देश्यः**[7]**। अयं हि अन्वयी प्रयोगः।** 478a

**व्यतिरेकेऽपि इति अनित्यत्वाभावे कृतकत्वस्याभावः। शब्दः कृतक इति तत्स्वभावसिद्धः। तदभावे न भवतः कृतकत्वस्य शब्दे च भाव**[1]**ख्यातौ तदात्मनो भावः, सामर्थ्यात् सिद्धः पूर्वत् प्रतिज्ञावचनं अकृतक इति।**

**अन्वयस्तु अर्थापत्त्या सिद्धः। तदात्मनियतस्य तन्निवृत्तौ तन्निवृत्तेः। नियमं**[2] **प्रसाध्य निवृत्तिर्वक्तव्या।**

**सा चेत् सिद्धा, तदात्मनियमं अर्थादाक्षिपतीति सिद्धोऽन्वयः।**

---

व्याप्तिकथनेनार्थान्नित्याद् व्यावृत्तिः कृतकत्वस्योक्तेति व्यतिरेकमतिः। **शब्दश्च कृतक** इति पक्षधर्मकथनं। पक्षः कस्मान्नोच्यत इत्याह। **कृतक**स्येत्यादि। **अनित्यत्वेन व्याप्तं कृतकत्वं** यदा शब्देन **कथित**न्तदा[3] नियमेन स्वं व्यापकं सन्निधापयतीति **सामर्थ्यादेवानित्यः शब्द** इति भवति। **तस्मान्नावश्य**मित्यादि। **इहे**ति साधर्म्यप्रयोगे (।)

वैधर्म्यवन्तं प्रयोगमाह। **व्यतिरेके**पीत्यादि। एतच्चाकार्यम्वा ऽविनाशीत्येतस्य विवरणं। इहापि न प्रतिज्ञावचनं। यस्मात् सिद्धस्वभावतया निश्चितया नित्यस्वभावतया हेतुभूतया। **तदभाव** इत्यनित्यत्वाभावे सति **न भ**[4]**वतः कृतकत्वस्य शब्दे च भावख्यातौ** सद्भावकथने कृते सति **तदात्मनः** सत इत्यनित्यस्वभावस्य सतः कृतकत्वस्य शब्दे **भाव** इति। **सामर्थ्याद**नित्यः शब्द इति सिद्धेः। **पूर्ववदि**ति साधर्म्यप्रयोगवत्।

नन्वत्र वैधर्म्यप्रयोगेऽन्वयो नोक्त इत्याह (।) **अन्वयस्त्व**त्यादि। **अन्वय**मन्तरेण वैधर्म्यस्यानुपपत्तिर**र्थापत्तिः**। किङ्कारणं (।) **न ही**त्यादि। य[5]स्मा**दतदात्मनियतस्या**नित्यस्वभावेऽप्रतिबद्धस्य। **तन्निवृत्ता**वनित्यत्वनिवृत्तौ **निवृत्ति**र्युक्ता। यत एवन्तस्मात् स्वयन्तादात्म्यतदुत्पत्तिभ्यां हेतोः साध्ये **नियमं** प्रमाणेन **प्रसाध्य** साध्यनिवृत्त्या मूढं प्रति हेतो**र्निवृत्तिर्वक्तव्या**।

तेन यदुच्यते (।) "प्रमाणेन चेन्नियमः प्रसाधितः किन्निष्फलेन निवृत्तिवचनेन। कथं वा नियमं न प्रतिपद्यते।[6] न तु तन्निवृत्तौ निवृत्तिमि"ति तदपास्तं।

अन्ये त्वन्यथा व्याचक्षते। प्रसाध्य शब्दार्थादाक्षेपवचनस्तेनायमर्थो नियमं प्रसाध्य नियममर्थादाक्षिप्य निवृत्तिर्वक्तव्येति। तथाभूतेन वचनेन निवृत्तिर्वक्तव्या। निवृत्त्युक्तिः सामर्थ्यान्नियममाक्षिपतीति। अत एवाह। **सा चे**त्यादि। **से**ति नियमस्याक्षेपिका निवृत्तिः सिध्यति परम्प्रति। यदि तथा[7]भूतेन वचनेन प्रकाशते। **तदा-** 131a

**कथमिदानीं कृतकोऽवश्यमनित्य इति येन उच्यत[3] इति। एवं—**

**अहेतुत्वाद्विनाशस्य स्वभावादनुबन्धिता।**

**न हि विनश्वरं वस्तु तद्भावे हेतुमपेक्षते। स्वहेतोरेव विनश्वराणां भावात्। तस्माद् यः क[4]श्चित् कृतकः स स्वभावेनैव नश्वरः।**

**तथा हि वस्तु—**

---

**त्मनियमं** साध्यात्मनियम**मर्थादु**क्तिसामर्थ्या**दाक्षिपति। इति** हेतोः **सिद्धोन्वयः।**

**कथमि**त्यादि परः। **इदानी**मिति निश्चिते व्याप्यव्यापकभावे गमको हेतुरित्यभ्युपगमे सतीत्यर्थः। कथं केन प्रमाणेन **कृतकोवश्यमनित्य इति** प्रत्येतव्यो निश्चेतव्यो **येन** त्वयैवमुच्यते। कृतकः शब्दोऽनित्यः। यत्कृतकन्तदनित्य[1]मित्येवं पृष्टो व्याप्तिविषयं बाधकं प्रमाणन्दर्शयितुमाह। **यस्मादि**त्यादि। यस्माद् विनाशस्य निवृत्तिधर्मकत्वलक्षणस्य स्वभावात् स्वरूपमात्रादनुबन्धिता। यद्वा भवत्यस्मादिति भावः (।) स्वो भावः स्वभावः स्वहेतुरित्यर्थः। तस्मादेवानुबन्धिता विनाशस्य वस्तुनि सद्भावस्तस्मात् कृतकोऽनित्यः। कुत एव तदहे**तुत्वाद्** यतो न जनकाद्धेतोरन्यो **विनाश[2]स्य** हेतुः (।) तस्मात् **स्वभावादनुबन्धः।**

तदयमत्र समुदायार्थः। मुद्गरव्यापारानन्तरं द्वयं प्रतीयते घटनिवृत्तिः। कपालं च (।) तथैते विनाशरूपतया प्रतीयेते। तत्र घटनिवृत्तेर्नीरूपत्वेनाकार्यत्वादिति वक्ष्यति। तत्कार्यत्वेन तु प्रतीतिभ्रान्तिरेव। कार्यत्वे वास्या न घटनिवृत्तिरूपत्वं स्यात्। घटसम्बन्धित्वेन कृतकत्वात्। विनाशरूप[3]तया च न प्रतीतिः स्यात् घटस्य सत्त्वात्। कपालस्यापि मुद्गरकार्यत्वे सत्यपि विनाशरूपता। घटस्यानिवृत्तत्वादिति च वक्ष्यति। ततश्च कथमस्य विनाशरूपतया प्रतीतिः। निर्हेतुके तु विनाशे स्वरसतो निवर्त्तमान एव घटो मुद्गरादिसहकारी कपालजनकत्वेन सदृशक्षणानारम्भकत्वात् मुद्गरव्यापारानन्तरं घटनिवृत्तेः कपालस्य[4] च सद्भावात्तयोर्विनाशरूपतया विनाशस्य च सहेतुकत्वेन मन्दमतीनामवसायो युज्यत एव।

मुद्गरव्यापारानन्तरं सन्तानविच्छेदात्। तत्कथं **निर्हेतुक**विनाशाभ्युपगमवादिनां प्रतीतिबाधा चोद्यत इति। एतमेवार्थमाह। **न ही**त्यादि। नश्यन्त इति येषान्तावत् कृतकानां नाशो दृश्यते ते विनश्यन्तः। **तद्भावे विनश्वरस्वभावे** स्वरूप[5]जनकादन्यत्र **हेतुमपेक्षते**। कुतः। **स्वहेतोरेव विनश्वराणां** निवृत्तिधर्माणां **भावात्**। यतश्च नश्वरस्वभावं प्रत्यनपेक्षता भावानान्**तस्माद् यः कश्चिद् कृतकः स स्वभावेनैव नश्वरः**। (१९५–९६)

**सापेक्षाणां हि भावानां नावश्यंभावतेक्ष्यते ॥१९६॥**

**भावनाशोऽपि निरपेक्ष एव। सापेक्षत्वे[4] हि घटादीनां केषां चिन्नित्यताऽपि स्यात्। येन—**

**बाहुल्येपि हि तद्धेतोर्भवेत् कचिदसंभवः।**

**क्वचिद असम्भवः स्यात्। यदि विनाशहेतोर्बाहुल्यं तेषामपि स्वप्रत्ययाधीन[6]-सन्निधानत्वात् नावश्यं सन्निधानमिति कश्चिन्न नश्येदपि। न हि हेतवोऽवश्यं फलवन्तः वैकल्यप्रतिबन्धभावात्, तेनान्यफलाभावात्।[7]** 478b

**एतेन व्यभिचारित्वमुक्तं[7] कार्याव्यवस्थितेः ॥१९७॥**

**सर्वेषां नाशहेतूनां हेतुमन्नाशवादिनाम्।**

**इत्यन्तरश्लोकः।**

**तदयं भावोऽनपेक्षस्तद्भावम्प्रति तद्भावनियतः। तद्यथा सकलकारण-**

---

यदि सहेतुको विनाशस्तदावश्यंभावी न स्यादित्याह। **सापेक्षाणा**मित्यादि। **ही**ति यस्मात् (।) सापेक्षाणाम्भावानां **नावश्यम्भाविता** (।) तस्मात् **निरपेक्षो-**भावो वि[6]नाशे विनश्वरे स्वभावो हेतु**सापेक्षत्वे हि घटादीना**म्मध्ये **केषाञ्चिन्नि-त्यतापि स्यात्**। येषां नाशकारणमसन्निहितं। **बाहुल्या**त् विनाशकारणानां न क्वचिदसन्निधानमिति चेदाह। **येने**त्यादि। **तद्धेतोरि**ति विनाशहेतो**स्तेषा-मपि** विनाशकारणानां **नावश्यं सन्निधान**मिति सम्बन्धः। कस्मात् (।) **स्वप्रत्य-याधीनसन्निधित्वात्** स्वकारणाय[7]तसन्निधित्वात्। न च विनाशकारणान्तं 131b कारणानि सर्वत्र सन्निहितानि। ततश्च विनाशहेतोरसन्निधानात् **कश्चिन्न नश्ये-दपि**। सत्यपि विनाशहेतुसन्निधाने न नियतो विनाशः (।) यतो न **ह्यवश्यं हेतवः फलवन्तः** विनाशाख्यकार्यवन्तः। कस्मात् (।) सहकार्यसन्निधानं **वैकल्यं**। विरुद्धोपनिपातः **प्रतिबन्धः**। एतेन सापेक्षस्य नावश्यम्भावित्वेन व्यभिचा[1]रित्व-मुक्तं। (१९५–९६)

सर्वेषां नाशहेतूनां नाशस्य लिङ्गत्वेन ये हेतव उपादीयन्ते तेषां। कस्मात् (।) **कार्याव्यवस्थितेः**। नाशलक्षणकार्योत्पत्तिनियमाभावात्। **हेतुमन्नाशवादिनां** हेतुमन्तन्नाशं ये वदन्ति तेषां। यतश्चाहेतुको विनाशः। **तत्तस्मादयम्भावः** कृतको**नपेक्षस्तद्भावम्प्रति** विनश्वरस्वभावम्प्रति। **तद्भावनियतो** निवृत्तिधर्म-कतायां नियतः। दृष्टा[2]न्तमाह (।) **असम्भवे**त्यादि। न सम्भवति प्रतिबद्धो यस्यां सा कारणसामग्री। **सकले**ति सहकारिप्रत्ययेन सन्तानपरिणामेन च[5] परि-पूर्णेत्यर्थः। प्रयोगस्तु। ये यद्भावं प्रत्यनपेक्षास्ते तदभावनियताः। **तद्यथा**

**सामग्री[1] कार्योत्पादने ऽसम्भवत्प्रतिबन्धा ।**

**ननु क्वचित् अनपेक्षाणामपि केषांचित् नावश्यं तद्भाव इति भूमिबीजोदकसामग्रीणामपि अंकुरानुत्पत्ते[2]रिति चेत् । न । तत्रापि हेतुभूतस्य सापेक्षत्वात् । नैवं भावस्य काचिदपेक्षा । तत्रापि अन्त्यायां हेतुसामग्र्यां कार्योत्पादने याऽव्यवहिता सा फलवत्येवेति[3] । सैव तु तासां मध्येऽङ्कुरहेतुः । अन्यास्तु पूर्वपरिणामस्तदर्थं एव ।**

**न च तां तत्र कश्चित् प्रतिबद्धुं समर्थः । एकत्र अविकारानुत्पत्तेः, उत्पत्तौ वा**

---

**ऽसम्भवत्प्रतिबन्धा कारणसामग्री कार्योत्पादने**। अन्यानपेक्षश्च कृतको भावो विनाश इति स्वभावहेतुः। (१९६–९७)

**नन्वि**त्यादिना नैकान्तिकत्वमा[3]शंकते । **क्वचित्** कार्येऽ**नपेक्षाणामपि केषांचित्** कारणानां **नावश्यन्तद्भाव** इत्याह। **भूमी**त्यादि। सा हि कार्यजननेऽपेक्षा सामग्री। तस्यामसत्यामपि **कदाचित्** प्रतिबन्धकालेऽ**ङ्कुरानुत्पत्तेः**। एतच्च सन्तानस्यैकत्वमध्यवसायोक्तं।

**ने**त्यादिना परिहरति। **तत्र** यथोक्तायां सामग्र्यां सन्तानस्य परिणामः स्वभावान्तरोत्पत्तिलक्षणस्तत्र **सापेक्षत्वा[4]त्**। ततोऽनपेक्षत्वादित्यस्य हेतोस्तत्रावृत्तिः। कृतकस्याप्यस्ति विनाशं प्रति कालान्तरापेक्षा ततो हेतुरसिद्ध इत्याह। **नैवं**मित्यादि। कृतकस्य **भावस्य** नाशे **काचित्** कालान्त**रापेक्षेति** वक्ष्यति।

स्यादेतद् (।) एकस्वभावा एव भूमिबीजादयः कुतस्तेषां सन्तानपरिणामापेक्षत्वं (।) अतो व्यभिचार एव हेतोरित्याह। **तत्रापी**त्यादि।

एतदुक्तम्भ[5]वति। न भूमिबीजादय एकस्वभावाः पश्चादिव प्रागपि कार्योत्पादनप्रसङ्गात्। किन्तूत्तरोत्तरपरिणामेन भिन्नाः। तत्रेति तस्यां सन्तानपरिणामेन भिन्नायां **सामग्र्यामन्त्या या** सामग्री। कार्योत्पादने लक्षणान्तरेणा**व्यवहिता** सा **फलवत्येवेति** कुतो हेतोरनैकान्तिकत्वं।

स्यादेतत् (।) पूर्वा सामग्री जनिकापि सती न नियतेत्याह। **सैवे**त्यन्त्या साम[6]ग्री तत्र **तासु मध्येऽङ्कुरहेतु**र्नान्या काचित्। किमर्थन्तर्ह्यङ्कुरार्थिभिः पूर्वा सामग्र्युपादीयत इत्याह। **अन्यास्त्वि**त्यादि। पूर्वः परिणामः पूर्वावस्थाविशेष**स्तदर्थ एवा**ङ्कुरजननसमर्थान्त्यसामग्र्यर्थं एव। तेनार्थिभिरुपादीयते सामग्री रूपतया चाध्यवसीयते।

स्यादेतद् (।) अन्त्याया अपि सामग्र्याः प्रतिबन्धः सम्भवति। तेन कार्योत्पादनि[7]यमाभावात् साध्यशून्यो दृष्टान्त इत्याह **न चे**त्यादि। **तामन्त्यां**

**एकत्वहाने:[4] तदात्मनो हेत्वप्रच्युतौ तदुत्पादने प्रतिबन्धहेतोर्वैगुण्यमकुर्वाणस्य अभावात्। न हि यवबीजादयः सापेक्षाः शाल्यंकुरजनने। तदुत्पत्ति[5]प्रत्ययानां कदाचित् तत्रापि सन्निधानात् चेत् कथं निरपेक्षाः ? कथमेषां यत् शालिबीजं तदेव उत्पादनस्वभावः। तदभावात् तत्स्वभावापेक्षा।**

**एवं तर्हि[6] कृतकानां च केषांचित् सतां वा यो नश्वरः स एव नास्ति। तस्मात् तत्स्वभावापेक्षत्वाद् न विनश्वराः।**

**शालिबीजादीनां स्वभावो हि स्वहेतोरिव[7] यो न तद्धेतुः स न तत्स्वभावः स्यात्।** 479a

---

सामग्रीन्तत्र कार्ये जन्ये। **एकत्र भाव** इत्यन्त्ये क्षणे। विकारस्यो**त्पत्तौ वा** तस्यान्त्यस्य क्षणस्यै**कत्वहानेः** पूर्वस्य प्रच्युतेर्विकाराख्यस्य च द्वितीयस्योत्पत्तेः। ततश्च नासावन्त्यः स्यात्।

अथ न तस्यान्त्यस्य जनकस्वभावात् प्रच्युतिरिष्यते। तदा **तदात्मनो** जनकात्मनः। स्वभावाद**प्रच्युतस्य त[1]दुत्पादनं** कार्योत्पादनं **प्रति वैगुण्यमकुर्वाणस्य प्रतिबन्धहेतोर**प्रतिबन्धकत्वाद् विघातकरणात्।

पुनरपि व्यभिचारमाशंकते। **यवबीजादयो न सापेक्षाः** (।) कस्मिन् (।) **शाल्यङ्कुरे** कार्ये जन्ये। कस्मात् (।) **तदुत्पत्तिप्रत्ययानां कदाचित् तत्रापि** यवबीजादौ **सन्निधानात्**। ते **निरपेक्षा** अपि न शाल्यंकुरं जनयन्तीत्यनैकान्तिक एवेति।

**कथमिति** सिद्धान्तवादी।[2] सापेक्षा एवेत्यर्थः। **एषामिति** यवबीजादीनां **शालिबीजस्य** यस्त**दुत्पादनः** शाल्यङ्कुरोत्पादनः स्वभावः स एवैषां नास्तीतिसम्बन्धः। **तत्स्वभावापेक्षा** इति शाल्यंकुरोत्पादनस्वभावापेक्षाः।

कदा च कथं निरपेक्षत्वं स्या**देवन्तर्ही**ति परः। **कृतकानां च केषांचित् सताम्वा** केषांचित्। **स एव** स्वभावो **नास्ति यो नश्वरः**। **तस्मात् तत्स्वभावापेक्षत्वाद्** विनश्व[3]रस्वभावापेक्षत्वान्न **विनश्वरा** इत्यसिद्धत्वं हेतोरिति।

एतन्निराकर्त्तुम्प्रक्रमते। **शालिबीजे**त्यादि। **आदि**शब्दाद् यवबीजादीनां। स **स्वभाव** इत्यभिमतेतरकार्य जननाजननस्वभावः **स्वहेतो**रिति कृत्वा। **यो** यवबीजादि**र्न तद्धेतुः**। **स** शालिबीजहेतुर्यस्य हेतु**र्नभवती**त्यर्थः। सोऽतत्स्वभाव इत्यशाल्यंकुरजननस्वभावः।

नन्वतद्धेतुश्च स्या[4]त् तत्स्वभावश्चेत्याह। ***नियतशक्ति**श्चेत्यादि। नियता* प्रतिनियता शक्तिर्यस्य स तथा (।) **स हेतुरिति** शालियवबीजजननस्वभावः। **स्वरूपेण विभक्तेनैव स्वभावेन प्रतीतः** प्रत्यक्षतः।

**नियतशक्तिश्च स हेतुः स्वरूपेण प्रतीत एव। न च स्वभावनिश्चयोऽपि अर्थेषु आकस्मिकः। अनपेक्षस्य हि देशकालद्रव्यनिश्चयायोगात्। तथाऽत्रापि नियमहेतुर्वक्तव्यः। यतः केचिन्नश्वरात्मानो जाताः। न चात्र नियामकः[2] स्वभावस्य हेतुरस्ति।**

**यदि सर्वजन्मिनां अनित्यतासिद्धेः, जन्मिनामेव स्वभावो विनाशी। न वै जन्म नाशस्वभावहेतु। न चाहेतोः स्वभा[3]वनियमः। तस्मान्नात्र हेतोः क्वचित् स्वभावप्रविभागः। तदभावात् फलस्य सतो वा नास्तीत्यसमानम्। सेयं विनाशस्य निरपेक्षता क्वचित् कदाचित्[4] भावविरोधिनी तदभावं सत्तया साधयति। यो हि**

---

स्यादेतत् (।) न हेतुकृतः स्वभावभेदो भावानां किन्तु स्वभाव एव कस्यचित् (।) तादृशस्वभावोन्यस्य चान्यादृश इत्याह। **न चे**त्यादि। **आकस्मिक** इति निर्हेतुकः। **अनपेक्षस्या**हेतोः[5] क्वचि**द्देशे**। क्वचित्**काले**। क्वचिच्च शालिबीजादौ **द्रव्ये** शाल्यंकुरोत्पादनस्य स्वभावस्य **नियमो** न स्यात्। किन्तु सर्व्वस्य सर्वदा सर्वत्र भवेदपेक्षाभावात्। तस्माद् देशादिकमपेक्ष्य भवन्नियमो हेतुमानिति गम्यते। यथा शालिबीजादीनां स्वभावनियमस्**तथात्रापि** कृतकेषु, सत्सु वा **नियमहेतुर्वक्तव्यो यतो** नियामकाद्धेतोः कृतकास्सन्तो वा **केचि[6]न्नश्वरात्मानो जाता** नान्ये।

स्यादेतद् (।) यदि नाम नियामको हेतुर्न शक्यते दर्शयितुन्तथापि सम्भाव्यत इत्याह। **न चात्र** लोके नश्वरस्य स्वभावस्य **नियामको हेतुरस्ति**। न सम्भाव्यत एवेति यावत्। सर्वेषां जन्मवतां नाशस्य सिद्धेर्दृष्टत्वात्। अनियतहेतुको विनाश इति यावत्।

132b यदि **सर्वजन्मिनां विनाशसिद्धि**रेवन्तर्हि सत्त्वादिति हेतु[7]रनैकान्तिकः स्यात्तदाह। **जन्मी**त्यादि। जन्मवता**मेव स्वभावो नाशी** नाजन्मवतां। नाकाशादीनां सतामपीति परो मन्यते। आ चा र्य आह। **न वै जन्मे**ति। न हि जन्मवशाद् भावस्य स्वभाव उत्पद्यते। तस्मान्न जन्म **नाशस्य हेतुः**। नाप्याकाशादौ सत्त्वमस्तीत्याह। **न चे**त्यादि। **अहेतो**राकाशादेः **स्वभावनियमः** स्वरूपनियमोऽहेतोर्देशकालप्रकृतिनियमा[1]योगात्। यतश्च सर्वजन्मिनां विनाशसिद्धिराकाशादीनां चासत्त्वं। **तस्मान्नात्र** कृतकेषु सत्सु वा **हेतो**र्नश्वरानश्वरजनकत्वेन **स्वभावप्रविभागः**। **तद्भावाद्धे**तुप्रविभागाभावात् **फलस्य** कृतकस्य **सतो वा** नश्वरानश्वरप्रविभागो **नास्तीत्यसमानं** यवबीजादिना। **सेयम्विनाशस्य निरपेक्षता क्वचिद्** वस्तुनि। **कदाचित्** काले विनाशस्य यो **भा[2]व**स्तेन **विरोधिनी** करोति **तदभावं**। **तस्य क्वचित**

**स्वभावनिरपेक्षः तस्य क्वचित् कदाचिच्च सत्तायां तत्कालद्रव्यापेक्षः तदपेक्षत्वात् इति निरपेक्ष एव न[5] स्यादित्युक्तम्। अथ विनाशस्य स्वभावः स तदनपेक्षत्वात् निर्हेतुकः स्यात्।**

**सत्ताहेतुभावादेव तथोत्पत्तेः। सत्ता हि भवतः तादृशस्यैव भावस्याभावात्। नावश्यं[6] सतः कुतश्चिद् भाव इति चेत्, अथ सत्तैव आकस्मिकीति नेयं कस्यचित्**

---

**कदाचिच्च** विनाशस्याभावं **स्वभावेन** सत्तया **साधयति**। सर्वत्र सर्वकालम्भावं साधयतीति यावत्। किं कारणं। **यो** हीत्यादि। **तत्कालद्रव्यापेक्ष** इति यस्मिन् काले भवति यत्र वा द्रव्ये। तं कालं द्रव्यञ्चापेक्षत इति **निरपेक्ष एव न स्यादित्युक्तं** प्राक्।

ननु विनाशकहेत्वनपेक्षत्वेन विनाशस्यानपे[3]क्षत्वं, न तु कालाद्यनपेक्षत्वेन (।) तत्कथमुच्यते तत्कालद्रव्यापेक्ष इति निरपेक्ष एव विनाशो न स्यादिति। यदि च कालानपेक्षो विनाशः द्वितीयेपि क्षणे विनाशो न स्यात् तत्कालापेक्षत्वात्। द्रव्यानपेक्षत्वे च कस्य तर्हि विनाशः स्यात्।

एवम्मन्यते (।) जातस्य तद्भावेऽन्योनपेक्षणादिति वचनात्। द्वितीय एव क्षणे विनाशो भवति नान्यस्मिन् क्षणे।[4] तथा सर्वस्य जातस्य भवति न द्रव्यविशेषस्य। तेन द्रव्याऽनपेक्षत्वे कस्य तर्हि विनाशो भवतु (।)

इति निरस्तं। कालान्तरे द्रव्यविशेषे च नाशस्य भावे कालान्तरस्य द्रव्यविशेषस्य च विनाशकत्वमेव स्यात्। **विनाशस्य तद्भाव** एव भावात्। **तस्मात्** तत्कालद्रव्यापेक्षत्वे **निरपेक्ष** एव न स्यादित्युच्यते।

**तर्ही**ति परः। नेत्याचार्यः। **सत्ताया** यो हे**तुर्भावस्तस्मा**[5]**देव तथोत्पत्ते**-र्नश्वरस्वभावस्योत्पत्तेः। एतदेव स्पष्टयति। **सतो हि भवत** इति सत्तां प्रतिपद्यमानस्य **तादृशस्यैव** नश्वरस्वभावस्यैव(।)**भावात्। नावश्यं सतः** पदार्थस्य **कुतश्चित्** कारणाद् **भाव** उत्पादन **इति चेत्**। केचिद्धि सन्तोपि नोत्पत्तिमन्तो यथाकाशादय इति परो मन्यते। **आकस्मिकी**त्यहेतुका। **नेयं** सत्ता **कस्य**चिदर्थस्य **कदाचित्** काले क्वचिद् द्रव्ये[6] **विरमेत**।

ननु च घटादीनां स्वहेतुतः सत्तानियमे कथमाकाशादिसत्ताप्रसङ्गः।

सत्यं (।) किन्तु न कस्यचिद् विरमेतेत्यस्यायमर्थः। न स कश्चिद् भावो यत्स्वभावोसावाकाशादिर्न स्यात् सर्वात्मकः प्रसज्यत इत्येके। तदयुक्तं (।) यदि हि घटादिरूपमाकाशे स्यादहेतुकं स्यात् तस्य मृत्पिण्डादिकमन्तरेण भावात्। **तस्मान्नेयमा**काशादेस्सत्ता। **कस्यचि**[7]दात्मादेः **कदाचित्** काले **क्वचिद्** देशे 133a

479b **कदाचित् क्वचित् विरमेत। तस्मान्नेयं कस्यचित् कदाचित्। यस्य[7] यत्र किंचित् न प्रतिबद्धम्। सेयं सत्ता क्वचिदप्रतिबन्धिनी चेत् न नियमवती स्यात्। तस्मान्नेयं सत्ताऽऽकस्मिकी क्वचित्।**

**अथ कथमहेतुको विनाश उक्त इति चेत्। जातस्य तद्भावेऽन्यस्यानपेक्षणत्वात्। न चात्र विनाशो नाम कश्चिद्, भाव एव हि नाशः।**

**स एव हि क्षणस्थायी जातः। तस्माद् मन्दाः तत्स्वभावं[2] तदूर्ध्वं व्यवस्यन्ति न प्राक्, दर्शनेऽपि पाटवस्याभावात् इत्युक्तम्। तत्सामर्थ्यात् अविद्या तद्दर्शनाविद्याहतदृष्टे नाशवत् पश्चाद् विनाश्यः। तदयं विनाशः[3] सत्ताव्यतिरेकेण**

---

विरमेत। देशकालद्रव्यनियता न भवेदित्यर्थः।

एतदेव द्रढयन्नाह। तद्धीत्यादि। तद्धि वस्तु। किंचिदुपलीयेताश्रयेत्। **यस्य यत्र किंचिदु**त्पादादिकं प्रतिबद्धमायत्तं। न चोपलीयेत यस्य यत्राप्रतिबद्धं। **सेयं सत्ता क्वचिदप्रतिबन्धिनी चेत्।** द्रव्यकालापेक्षया **न नियमवती स्यात्।** तथा चाकाशस्येयं सत्ता नात्मनः। आ[1]त्मनस्सत्ता न कालस्येत्यादि न स्यात्। यतश्चैवन्त**स्मान्नेयं सत्ताकस्मिकी क्वचि**न्नित्याभिमतेष्वपि।

**यदि** सत्ताहेतोरेव विनश्वरस्योत्पादः **कथमिदानीमहेतुको विनाश उक्त** इति व्याघातमाह।

**जातस्ये**त्यादिना परिहरति। **जातस्य** निष्पन्नस्य **तद्भावे** विनश्वरताभावे जनकाद्धेतो**रन्यस्यानपेक्षणात्।**

अहेतुको विनाश उक्तः। उक्तं **चात्र** प्राक् यथा[2] **न विनाशो नामान्य एव कश्चिद** भावात् किन्तु **भाव एव हि नाशः।**

ननु च प्रध्वंसाभावो नाशः स कथम्भावस्वभावो भवतीत्याह।

**स एव ही**त्यादि। यस्मात् स्वहेतोरेव **क्षणस्थायी जातस्तस्माद्** भाव एव नाश उक्तः। य एव सत्ताकालो भावस्य तमेवैकं क्षणं स्थातुं शीलं यस्य स तथा। न पुनरुत्पद्य क्षणमपि तिष्ठति। यदि तिष्ठेन्न कदाचिन्न निवर्त्तेतेति वक्ष्याम[3]:। यद्येकक्षणस्थायी भावो विनाशः कस्मात् प्रवाहविच्छेदात् प्रागपि तथा न निश्चीयतेऽनिश्चयाच्चाक्षणिकः स इत्याह। **तमस्ये**त्यादि। **तं** नाश**स्वभावमस्य** घटादेरासंसारमविद्यानुबन्धात् **मन्दा उर्ध्वं** प्रवाहविच्छेदकाले **व्यवस्यन्ति न प्राक्** सत्ताकाले। **दर्शनेपीति** नश्वरस्वभावस्य सत्यपि **दर्शने**। न दर्शनकालेऽध्यवसायोस्ति। अविद्या(साम)**र्थ्या**[4]त्सदृशापरोत्पत्त्या च दर्शनपाटवस्याभावात्। **यतश्च** सन्तानविच्छेदकाले नाशस्वभावस्य निश्चय**स्तस्मात् तद्दर्शन** निश्चय-

**नान्यमपेक्षत ति तद्व्यापी। विनाशकारणानपेक्षोऽयं कथं पतिपद्येतेति चेत् तद्धेतोरसामर्थ्यात्। अभावकारिणः क्रियायाः प्रतिषेधाच्च शब्दः किमु। कथंहि सामर्थ्याभाव इति चेत्। सिद्धे हि भावे कारको न तं करोति। अन्यक्रियां तस्य न किञ्चिदिति तदतद्रूपस्य अकिंचित्करत्वात्, तदतद्भावोऽकिंचि[5]त्करोऽपि नापेक्षते।**

**क्रियाप्रतिषेधस्तु कथमिति चेत्। विनाश इति हि भावस्याभावन्ते मन्यन्ते। तद् अयं विनाशहेतुरभावं करोतीति प्राप्तम्। तत्र यद्यभावो नाम[6] कश्चित् कार्य-स्वभावः स्यात्। स एव भाव इति नाभावः स्यात्। तस्मादभावं करोतीति भावं**

---

वशेन। **पश्चादिति** यस्मिन् काले नाशस्वभावस्य निश्चयस्तत्कालोपाधिरेव स भावस्य विनाशस्वभावो व्यवस्थाप्यते (।) दृष्टान्तमाह। **विकारेत्यादि**। यथा विषद्रव्यं गृहीतमपि भ्रान्तिसद्भावात् प्रागनवधारितमज्ञैः पुरुषैः पश्चाद् विषकृ[5]तस्य विकारस्य लालास्रुत्यादेर्दर्शनेन विषं व्यवस्थाप्यते तद्वत्। एताव-न्मात्रेणायं दृष्टान्तो न तु मारणशक्तिर्गृहीता पश्चादवधार्यत इति दृष्टान्तः। **तदिति** तस्माद् **अयम्विनाश** इति सम्बन्धः। वस्तुनो या **सत्ता** तद्व्य**तिरेकेण न** किंचिद् विनाशकारण**मपेक्षत इति तद्व्यापी** सत्ताव्यापी।

**कथमित्यादि** परः। **असामर्थ्याच्चेति** प्रतिवचनं। **तद्धेतोरिति** नाशहे[6]तोः। चकारादकारकत्वाच्च। एतदेव विवृण्वन्नाह। अभावकारिण इत्यभावकारि-तयाभिमतस्य **क्रियायाः** कारकत्वस्य **प्रतिषेधाच्चेति**। अवस्तुकारी योभिमतः सोकारक एव भवति। असामर्थ्यन्दर्शयितुमाह। **सिद्धे हीत्यादि**। नाशहेतुर्भावा-दभिन्नम्वा विनाशं कुर्यात्ततोन्यम्वा। न तावदाद्यः पक्षः सिद्धे हि **भावे** कारको नाशहेतुस्तम्भावं **न करो[7]ति** सिद्धत्वादेव। नापि द्वितीयः पक्षः। यतो **नाप्यन्य-क्रियान्तस्य** भावस्य **न किञ्चित्**। तदवस्थत्वात्। **तदतद्रूपेत्यादि**। भाव**रूपस्य** ततोन्यस्य च विनाशस्य **कारणाच्चाकिञ्चित्**करो विनाशहेतुरतो नापेक्ष्यत इति सिद्धमसामर्थ्यं।

133b

**क्रियाप्रतिषेधस्तु कथ**मित्याह। **विनाश इति हि भावस्याभावन्ते** हेतुमन्ना-शवादिनो **मन्यन्ते**। अस्माभिर्भावस्वभाव एव विनाश इत्यु[1]क्तं। **तदिति** तस्मा-**दयं विनाशहेतु**र्विनाशं करोत्य**भावं करोतीति प्राप्तं**। **तत्रै**तस्मिन् प्राप्ते सति **यद्य-भावो नाम कश्चित् स्वभावः कार्यः स्यात्**। तदा कार्यत्वादंकुरादिवत् **स एव भाव इति नाभावः स्यात्**। अथ यथा घटो घटरूपेण कार्यः पटश्च पटरूपेण कार्यो न तु कार्यत्वाद् घटः पटो भवति। तथा भावो भावरूपेण कार्योऽभावोप्यभावरूपेण कार्यः[2] स्यात्। न तु भाव एव भवतीति। तदयुक्तम्भवतीति हि भावो न भवतीति

480a **न करोतीति क्रियाप्रतिषेधोऽस्य कृतः स्यात्। तथाऽपि अयमकिंचित्करः किमिति[7] निवर्त्त्यते। सिद्धा विनाशं प्रत्यनपेक्षा भावस्य। तस्मात्—**

**असामर्थ्याच्च तद्धेतोर्भवत्येव स्वभावतः ॥१९८॥**

---

चाभावस्तेनाभावो भावविरोधी। न चाभावरूपतया तस्य प्रतिभासनादभावरूपता। भवनधर्मत्वेनाभावरूपतया प्रतिभास एव न स्यादितीदमेव चोद्यते। न च परस्परविविक्तरूपतयाऽभावानां प्रतिभासः। यतश्चाभावस्य नीरूपत्वादकार्यत्वन्तस्**मादभावं करोतीति भावं[3] न करोतीति** वाक्यार्थः स्यात्। तेन **क्रियाप्रतिषेधोस्य** नाशहेतोः **कृतः स्यात्। तथापि** क्रियाप्रतिषेधेप्ययं विनाशहेतु**रकिञ्चित्करः। किमिति** नाशेऽपेक्ष्यते भावेनेति **सिद्धा विनाशं प्रत्यनपेक्षा भावस्य**।

ननु निर्हेतुकेपि विनाशे कथम्विनाशं प्रत्यनपेक्षा भावस्य। स्वभावो हि स तस्येत्थं येनापेक्ष्य निवर्त्तते विरोधिनं (।) यथाऽन्येषां प्रवाहो मुद्गरा[4]दिकं। तेन पूर्वम्विरोधिनोऽभावे नानिवृत्तेः कथं क्षणिकत्वमिति।

तदयुक्तं। यतो विरोध्यपेक्षस्वभावत्वं यदि वस्तुनो न पूर्वमपि तदास्य पूर्वोत्तररूपयोर्भेदाद् नित्यत्वमेव। अथ पूर्वमपि स स्वभावोस्ति तदा पूर्वमप्यस्य निवृत्तिः स्यात्। अथ तदा विरोध्यभावान्न निवर्त्तते। कथन्तर्हि विरोध्यपेक्षस्वभावत्वं। सत्येव विरोधिनि। विरोध्यपेक्षस्वभाव[5]त्वस्य भावान्नान्यदा। यदि विरोधी वस्तुनो नोपकारकः कथन्तन्तदपेक्षते। उपकारे वा विरोधिसन्निधानेप्यपरस्य भावस्योत्पत्तिरिति पूर्वको भावस्तदवस्थो दृश्येत। विरोधे सन्निधानाभावेनानिवृत्तेः। अथ निवर्त्तते। न तर्हि विरोध्यपेक्षया भावस्य निवृत्तिः (।) यदि च न भावम्विनाशयति कथम्विरोधी। न च क्षणिकवादिनां विरोधिसन्निधाने सत्ता[6] नो निवर्त्तते। किन्तर्हि नोत्पद्यते। तथा हि निरोधमुपगच्छन्नेव घटो मुद्गरादिसहकार्यपेक्षः कपालजनकत्वेन सदृशक्षणानारम्भको भवतीति सन्तानानुत्पत्तिर्न तु विरोधिनमपेक्ष्य प्रवाहो निवर्त्तते। यतश्च पूर्वसन्तानेनोत्पित्सोर्भावस्य विरोधिसन्निधाने सन्तानानुत्पत्तिरत एव मन्दमतीनां सहेतुकनाशाध्यवसायो
134a मुद्गरादौ च विरो[7]धित्वावसाय इति सर्वं सुस्थं। तस्मान्निरपेक्षत्वादेव यत्र नाम क्वचिद् भवद्दृष्टो विनाशस्तत्रैष स्वभावत एव भवति।

नन्वहेतुकेपि नाशे यदैव घटादेर्नाशः प्रतीयते तदैवाहेतुकः स्यान्न पूर्वमप्रतीतेरथैकक्षणस्थायित्वेन घटादेरुत्पत्तेः पूर्वमपि नाशः (।) ननु यथैकक्षणस्थायित्वे नोत्पत्तिः स्वहेतुभ्यस्तथा ऽनेकक्षणस्थायित्वेनाप्यु[1]त्पत्तिः स्यात्। विचित्रशक्तयो हि सामग्र्यो दृश्यन्ते। तत्र काचित् स्यादपि याऽनश्वरात्मानं जनयेदित्याह।

**यत्र नाम भवत्यस्मादन्यत्रापि स्वभावतः ।**

**सोऽयं क्वचित्[1] सत्तादर्शननिरपेक्षत्वात् स्वभावः स्यात् । तथाऽन्यत्रापि स्वभावभावी विशेषाभात् ।**

---

**अस्मादि**त्यादि । अस्माच्च स्वभावमात्रभावादन्**यत्रापि** देशादिव्यवधानेनादृष्टे । तथा दृष्टे (।) विरोधि सन्निधानात् पूर्वमपि **स्वभावत** एव विनाशो भवति ।

एवम्मन्यते । येषान्तावद्विनाशो दृश्यते तेषां यदि न प्रतिक्षणं विनाशः स्यात् तदा विना[2]शप्रतीतिरेव न स्यात् । तथा हि यदि द्वितीये क्षणे भावस्य स्थितिस्तदासौ सर्वदैव तिष्ठेत् । द्वितीयेपि क्षणे क्षणद्वयस्थायी स्वभावत्वात् । तदा च तेनापरक्षणद्वयं स्थातव्यं । अपरस्मिन्नपि क्षणे क्षणद्वयस्थायिस्वभावत्वादपरस्मिन् क्षणेऽवस्थानं स्यादेवमुत्तरोत्तरे क्षणे द्रष्टव्यमित्यासंसारम्भावस्य स्थितिः स्यात् ।

अथ प्रथमे क्षणे भाव[3]स्य क्षणद्वयस्थायी स्वभावो द्वितीये क्षण एकक्षणस्थायी । तथापि तयोः स्वभावयोर्भेदात् क्षणिकत्वं स्यात् । न त्वेवमपि प्रथमे क्षणे भावस्यानेकक्षणावस्थायिस्वभावादक्षणिकत्वं स्यान्नासंसारं स्थितिप्रसङ्गादित्युक्तत्वात् ।

ननु द्वितीयेपि क्षणे भावस्योत्तरक्षणानवस्थानेपि पूर्वक्षणस्थायी रूपाभेदेन पूर्वमपि स्थानात् क्षणद्वय[4]स्थायित्वमस्त्येवेति चेत् (।)

न । पूर्वम्भावस्य ह्येष स्वभावो यदेकस्मिन् क्षणे तिष्ठत्यन्यस्मिन् क्षणे स्थास्यति । स एव चेत्स्वभावो द्वितीये क्षणे तदाप्येकस्मिन् क्षणे तिष्ठत्यन्यस्मिन् क्षणे द्वयं स्थास्यतीत्येवमुत्तरोत्तरक्षणेपि द्रष्टव्यमिति न विनाशो भावस्य स्यात् । दृश्यते च (।) तस्माद् विनाशप्रतीत्यन्यथानुपपत्त्या प्रतिक्षणविनाशानुमानं ।

अदृष्टेषु तर्हि कृतकेषु कथं प्र[5]तिक्षणविनाशित्वानुमानं विनाशस्यैवादर्शनात् ।

नैष दोषो यस्मात् तेषामपि प्रथमे क्षणे य एव स्वभावः स एव चेत् द्वितीयादिक्षणे तदाऽभूत्वा भवनमेव प्रथमक्षणवत् । अथ प्रथमे क्षणे तस्य जन्मैव न स्थितिर्द्वितीये च क्षणे स्थितिरेव न जन्म । एवमपि क्षणिकत्वं स्यात् । जन्मजन्मिनोः स्थितिस्थितिमतोश्चाभेदात् । न च द्वि[6]तीये क्षणे जन्म विना स्थितिर्युक्ता । जन्म चेन्न तदास्थितिस्तस्या द्वितीयादिक्षणभावित्वात् । द्वितीयादौ क्षणेप्येवमिति सर्वत्रोत्पत्तिरेव न स्थितिरिति क्षणिकत्वं । किं च परस्परभिन्नस्यापरापरकालसम्बन्धित्वस्य कृतकाद् भावादभिन्नत्वात् क्षणिकत्वमेव ।

**सोयमि**त्यादिना कारिकार्थमाह । **अयमि**ति विनाशः । **क्वचिद्** घटादौ मुद्गरादिसन्निधाने[7] **तथान्यत्रा**पीति मुद्गरसन्निधानात् पूर्वमपि । एवन्देशादि- 134b

**या काचिद् भावविषया द्विधैवानुमितिस्ततः[2] ॥१९९॥**
**स्वसाध्ये कार्यभावाभ्यां संबन्धनियमात्तयोः ।**

**तस्मात् भावविषयानुमानं द्विविधमेव कार्यलिङ्गकं स्वभावलिङ्गकं च । यथास्वं विशेषक(व्यापि)साध्ये लिंगिनि तयोरेव प्रतिबन्धात् यथोक्तपूर्वम् ।**

## ( ३ ) अनुपलब्धिचिन्ता

### क. *अनुपलब्धेः प्रामाण्यम्*

**प्रवृत्तेर्बुद्धिपूर्वत्वात् तद्भावानुपलम्भने ॥२००॥**
**प्रवर्तितव्यं नेत्युक्तानुपलब्धेः प्रमाणता ।**

**तृतीय[4]स्तु हेतुरनुपलब्धेरविशेषेण क्वचिदर्थे गमक इत्युच्यते । सत्तानिश्चय-ध्वनिव्यवहारप्रतिषेधे हि सर्वैव लिङ्गम् ।**

---

व्यवधानेपि । (१९८-९९)

यत्पूर्वमुपन्यस्तन्तत्र द्वौ वस्तुसाधनाविति तदुपसंहरन्नाह । **तत** इति तस्माद् **या काचिद् भावविषया** कार्यस्वभावाभ्यां लिङ्गाभ्यां **द्विधैवानुमितिः** । कस्मात्तयोः कार्यस्वभावयोरेव **स्वसाध्ये सम्बन्धनियमात्** । **कार्यं लिङ्गं** यस्या अनुमितेः । एवं **स्वभावो लिङ्गं** यस्या इति विग्रहः[1] । **यथास्वं व्यापिनि' साध्य** इति कार्यस्य कारणं व्यापकं साध्यं(।)स्वभावस्यापि स्वभावो व्यापकः साध्यस्तस्मिन् साध्ये **लिङ्गिनि तयोरेव** कार्यस्वभावयोर्लिङ्गयोः **प्रतिबन्धात्** । (१९८-९९)

अनुपलब्धिमधिकृत्याह । **प्रवृत्तेरि**त्यादि । प्रवृत्तेः । सन्निश्चयशब्दव्यवहार-लक्षणयोः **बुद्धिपूर्वत्वात्** प्रमाणपूर्वत्वात् । **तद्भावानुपलम्भने** तस्य प्रवृत्तिविषयस्य भाव[2]स्य प्रत्यक्षानुमानाभ्यामनुपलम्भने प्रेक्षावता **प्रवर्त्तितव्यं नेतीयता** लेशेनादृश्य-विषयाया अप्य**नुपलब्धेरुक्ता प्रमाणता** । **तृतीयस्तु हेतुरनुपलब्धिगमक इत्युच्यत** इति सम्बन्धः । **अविशेषेणे**ति दृश्यविषयेत्यमुम्विशेषन्त्यक्त्वा सामान्येन **क्वचिदर्थे** साध्ये । **सन्निश्चये**त्यादिना तमेवार्थन्दर्शयति । प्रमाणपृष्ठभावी सदिति[3] विकल्पः **सन्निश्चयः** । तत्पृष्ठभाव्येव सदिति **ध्वनिः** सच्छब्दः । तथैव सदित्यनुष्ठानं **सद्व्यवहारः** । तेषां **प्रतिषेधे हि सर्वैव** दृश्यविषयाऽदृश्यविषया च ।

ननु का रि का यां प्रवृत्तिरित्युक्तन्तत्कथं वृत्तौ **सन्निश्चये**त्यादि व्याख्यायत इत्याह । **सन्निश्चयादी**त्यादि । यस्मात् सतां विद्यमानानां निश्चयाच्छ**ब्दव्यवहाराः**

**सन्निश्चयाद्धि शब्द[5]व्यवहाराः प्रवर्त्तन्ते। तस्मात् ते प्रवृत्तिरित्युक्तम्। तथा ह्यनुपलब्धिरेवासतामसत्त्वमित्युक्तम्। तच्च प्रतिपत्तृवशादुक्तं, न वस्तुवशात्। याव[6]दत्राप्रतिपत्तिः तावदत्र स्वभावोऽस्य नास्ति। सताऽपि तेन तदर्थाकरणात्। वस्तुतस्तु अनुपलभ्यमानो न सन्नासन्। सतामपि स्वभावा[7]दिविप्रकर्षादनुपलम्भात् तस्यासत्त्वपि तुल्यत्वात्। तत् प्रतिपत्तुः प्रमाणाभावात् उपलब्धिलक्षणमेतत् सत्त्वं तन्निवृत्तं स्वनिमित्तान् शब्दव्यव[1]हारान् निवर्त्तयति।** 480b

**तेन यापीयमनुपलब्धिरुपलब्धिलक्षणप्राप्तानां साऽपि वस्तुतोप्यसत्त्वरूपाऽप्रवृत्तियोग्यत्वात्। तस्या अपि अत्र विषये तुल्यं प्रामाण्यम्। असन्निश्च[2]यफलाऽपि सा।**

---

**प्रवर्त्तन्ते त[4]स्मात्ते** सन्निश्चयशब्दव्यवहारास्त्रयोपि प्रवृत्त्यङ्गत्वात् पुरुषप्रवृत्तेर्निमित्तत्वात् **प्रवृत्तिरित्युक्तः**। तस्मान्न सूत्रवृत्त्योर्व्याघात इति।

किम्पुनः कारणमुपलम्भनिवृत्तौ सद्व्यवहारो निवर्त्तते। **तथा ह्यनुपलब्धिरेव** द्विप्रकाराप्यविशेषेणा**सत्त्वमित्युक्तं** प्राक। **तच्चा**सत्त्वम्विप्रकृष्टायामनुपलब्धौ **प्रतिपत्तृवशादुक्तं**। प्रतिपत्ता ह्यनुप[5]लभ्यमानन्नास्तीत्यध्यवस्यति। **न वस्तुवशात्**। तथा हि विप्रकृष्टेर्थे सत्त्वमसत्त्वञ्च सन्दिग्धं। तस्मात् **तावद्धि स** विप्रकृष्टो **भावोस्य** प्रतिपत्तु**र्नास्ति यावदत्राप्रतिपत्तिः**। कस्मात् (।) **सतापि तेन** विप्रकृष्टेनार्थेनानुपलब्धेन **तदर्थाकरणात्**। तस्य पुंसोर्थाकरणात्। सन्नप्यसत्कल्पः। **वस्तुतस्त्वनुपलभ्यमानो न सन्नासन्**। कस्मात् (।) **सतामपि** कदाचि[6]त् **स्वभावादिविप्रकर्षादनुपलम्भान्ना**सत्त्वनिश्चयः। **क्वापि** सत्तानिश्चयस्तस्यास्यानुपलम्भस्या**सत्स्वपि तुल्यत्वात्**। **तदिति** तस्मात्। **एतत् सत्त्वमिति** सम्बन्धः। किम्भूतमनु**पलब्धिलक्षण**न्देशादिविप्रकृष्टं **प्रतिपत्तुः प्रमाणाभावात्**। प्रत्यक्षानुमानाभावा**न्निवृत्तन्न** वस्तुवशात्। किं करोति (।) **स्वनिमित्तान् शब्द[7]व्यवहारान् निवर्त्तयति**। 135a

**उपलब्धिलक्षण**मित्यन्ये पठन्ति। उपलब्धिरेव सत्त्वमुपचारात् तथाभूतं सत्त्वं निवृत्तमित्यर्थः।

येनैवन्**तेन** कारणेन **यापीयमनुपलब्धिः** (।) केषाम् (।) **अनुपलब्धिलक्षणप्राप्तानां**। या **वस्तुतोप्यसत्त्वरूपा** (।) अपिशब्दात् प्रतिपत्तृवशादपि। किं कारणम् (।) **अप्रवृत्तियोग्यत्वाद**सद्व्यवहारयोग्यत्वात्। तस्या अप्यनुपलब्धेरेतत्सद्व्यवहारप्रतिषेधकत्वेन **तुल्यं प्रामाण्यं**। **अत्र विषये** सद्व्यवहारप्रतिषेधे।

येयमनुपलब्धिलक्षणप्राप्तानु पलब्धि**रसन्निश्चयफलापि सा**। **असन्निश्चयः**

**असत्तायां तल्लक्षणो यदुपलब्धियोग्यः सकलेष्वन्येषु कारणेषु सन् नोपलभ्येत। न पुनः पूर्वाऽसत्तासाधनी।**

**शास्त्राधिकारासम्बद्धा[3] बह्वोऽर्था अतीन्द्रियाः ॥२०१॥**

**अलिङ्गाश्च कथन्तेषां सभावोऽनुपलब्धितः।**

**तदभावसाधनेऽनुपलब्धिमात्रेण सर्वार्थानां प्रमाणत्रयनिवृत्त्या सिद्धं स्यात् (इति) तस्य शास्त्र[4]स्य निवृत्तिर्हि न ह्यभावसाधनी तस्य क्वचिदधिकारे प्रवृत्तेः। शास्त्रप्रवृत्तौ हि पुरुषार्थसाधनोपायं कमप्यर्थमाश्रित्य प्रवृत्तौ। अन्यथाऽसंबद्ध[5]प्रलापस्य अप्रामाण्यात्।**

**तत्र प्रकरणेऽपि वह्वोऽर्था नावश्यं निर्देश्या यथा प्रत्यात्मनियता पुरुषचेतसः कस्यचिदनियतनिमित्तभावि[6]वृत्तयः। देशकालविप्रकृष्टेषु उपधानद्रव्यभेदवत्।**

---

फलं यस्या इति विग्रहः। (२००–२०१)

**असत्ताया**मित्यादिना व्याचष्टे। असत्तायामप्यनिश्चयेपि यस्मान्न ह्यस्ति सम्भवो **यदुपलब्धियोग्यो** भावः **सकलेष्वन्येषू**पलम्भ**कारणेषु सन्** विद्यमानो **नोपलभ्येत**[2]। **न पुनः पूर्वा** विप्रकृष्टविषयानुपलब्धि**रसत्तासाधनी**। तथा हि (।) प्रत्यक्षानुमानागमनिवृत्तिलक्षणैवानुपलब्धिः। तत्र **शास्त्रस्याधिका**रोस्मिन् प्रकरणे तत्रा**सम्बद्धा** अनान्तरीयका **बह्वोर्थाः** स्वभावादिविप्रकर्षिणः शास्त्रे नाधिक्रियन्त इति यावत्। प्रत्यक्षस्यापि न ते विषया इत्याहा**तीन्द्रियाः**। नाप्यनुमानस्य यस्मादलिङ्गाः।[3] नैषां लिङ्गमस्तीत्य**लिङ्गाः**। तेषामतीन्द्रियाणामर्थानां प्रमाणत्रयानिवृत्तिलक्षणाया **अनुपलब्धितः** कथमभावः (।) नैव। (२००–१)

**सोय**मिति वादी। **सर्वार्थाना**मिति देशकालस्वभावविप्रकर्षिणां **प्रमाणत्रयनिवृत्त्येति** प्रत्यक्षानुमानागमनिवृत्त्या। **तस्येति शास्त्रस्य क्वचित्** पुरुषार्थानुपयोगिन्यर्थे**ऽनधिकारे** विनियोगाभावे **प्र**[4]**वृत्तेः**। **यस्माच्छास्त्रं ही**त्यादि। **अन्यथेति पुरुषार्थानुपयोगिनमर्थमाश्रित्य शास्त्रप्रवृत्तौ**। **अबद्धप्रलापस्या**सम्बद्धाभिधायिनः शास्त्रस्या**प्रामाण्यात्**।

स्यादेतत् (।) सर्व एवार्थाः पुरुषार्थोपयोगिन इत्यत्राह। **तत्रे**त्यादि। **तत्र प्रकरण** इति पुरुषार्थचिन्ताप्रस्तावे। **प्रत्यात्मनियता** इति प्रतिपुरुषनियताः। एतेन [5]पुरुषाणामानन्त्यादानन्त्यं चेतोवृत्तीनामाह। **अनियता**न्निमित्ताद् भवितुं शीलं यासामिति विग्रहः। अनेनैकस्मिन्नपि पुंसि निमित्तभेदाद् बहुत्वं। एवं भूताश्चेतोवृत्तयो **नावश्यं** साकल्येन प्रतिपदं **निर्देश्या** अशक्यत्वात्। कालदेशव्यवहिता वा पुरुषार्थानुपयोगिनो **द्रव्यविशेषा नावश्यं निर्देश्या**स्ततो **न तच्छा-**

**न तच्छास्त्रं विषयीकरोति। न च तथा विप्रकृष्टे स्वसामर्थ्योपधानात् ज्ञानोत्पादनशक्तिर्नास्ति[7]।** 481a

**स चावश्यं कार्योपलम्भस्य चाप्यभावे येनानुमिनोति, न च ते प्रमाणत्रयनिवृत्ता अपीति न निश्चयसामर्थ्यम्। तस्मात् सर्वाऽनुपलब्धिर्हि न निवृत्तिनिश्चयस्य साधनी। तद् इयं हि—**

---

**स्त्रम्विषयीकरो[6]ति**। ताश्च चेतोवृत्तयस्ते च विशेषास्तानिति पुल्लिंगेनोक्ताः। "पुमान् स्त्रिये"ति[1] पुंसः शेषं कृत्वा।

नापि प्रत्यक्षस्य विषया इत्याह। **न चे**त्यादि। **तथा विप्रकृष्टे**ष्विति देशादिविप्रकृष्टेषु **स्वसामर्थ्योपधानात्**। स्वरूपसन्निधानात्। **ज्ञानोत्पादनशक्तिर्नास्ति**। एतेना**तीन्द्रिया** इत्येतद् व्याख्यातं।

अनुमानस्यापि न ते विषया इत्याह।[7] **स चावश्य**मित्यादि। **एषा**मिति 135b देशादिव्यवहितानां। **येनेति** कार्योपलम्भेन। **न च त** इति विप्रकर्षिणः। **सर्वे**त्यदृश्यानुपलब्धिरपि। **निवृत्तिनिश्चयस्या**भावनिश्चयस्य। यत एवन्त**दिति** तस्मात्। **इय**मित्यदृश्यानुपलब्धिस्सदसन्निश्चयफला नेति (।) **सन्निश्चयफला न** भवति सद्व्यवहारनिमित्ता। न चाप्यसन्निश्चयफला सन्देहात्। **इति** हेतो[1](:) **स्याद्वानुपलब्धेरप्रमाणता**। **व्यवसायफलत्वादि**ति निश्चयफलत्वात् **प्रमाणानां**। प्रत्यक्षमपि हि प्रमाणं सर्वाकारग्रहेपि येष्वाकारेषु निश्चयमावहति तेष्वेव।

ननु प्रवृत्तिनिषेधप्रमाणं स्यादित्याह। **न ही**त्यादि। **इय**मित्यनुपलब्धिः। **निःशंकपरिच्छेद**मिति निःशंकः परिच्छेदो यस्य चेतस इति विग्रहः। संशये सति न प्रवर्त्तितव्यम[2] वश्यमित्येवं निश्चितं चेतो न करोतित्यर्थः। **संशयादपि क्वचित्** कृषीवलादेर्लोकस्य **प्रवृत्तेः**। कथन्तर्ह्यप्रवृत्तिफलत्वेनास्याः प्रामाण्यमुक्तमित्यत आह। **तथात्वे त**दित्यादि। तथा तेन रूपेणै**तद**प्रवृत्तिकारणमनुपलम्भाख्यं **निरवद्यं** निर्दोषं यदि **निश्चयपूर्वं व्यवहरेत्** कश्चित्। प्रमाणपूर्वं सद्व्यवहारादि प्रवर्तयेत्। **इत्यनेन** द्वारेण से[3]यमदृश्यानुपलब्धि**रप्रवृत्तिफला प्रोक्ता** निश्चितसद्व्यवहारादिप्रतिषेधफला प्रोक्ता (।) सन्दिग्धस्तु सद्व्यवहारादिर्न निषिध्यत इति पुरुषस्य प्रवृत्तिर्भवत्यपि।

**लिङ्गातिशयभाविनीति** लिङ्गमनुपलब्धिस्तस्या अतिशयो विशेष उपलब्धिलक्षणप्राप्तत्वन्तस्य भावस्सद्भावस्स यस्यामस्ति सा तथोक्ता। **लिङ्गविशेष-**

---

[1] Pāṇini 1.2.67

**सदसन्निश्चयफला नेति स्याद् वाऽप्रमाणता ॥२०२॥**

**न चेयं अनुपलब्धिः प्रमाणम्। व्यवसायफलत्वात् प्रमाणानाम्।**

**इदं प्रवृत्तिनिषेधमपि[2] न निःशंकपरिच्छेदं चेतः। संशयादपि क्वचित् प्रवृत्तेः। तथात्वे तदेव निरवद्यं निश्चयपूर्वं व्यवहरेद् इति अप्रवृत्तिफला[3] प्रोक्ता।**

**प्रमाणमपि काचित् स्यात् लिङ्गातिशयभाविनो।**

**अत्र सर्वाऽनुपलब्धिरसमग्रा लिङ्गविशेषवती प्रमाणमपि। यथोदाहृता प्राग्। यस्या[4]ऽपि अनुपलम्भे न प्रमाणं इति वादी—**

**स्वभावज्ञापकाज्ञानस्यायं न्याय उदाहृतः ॥२०३॥**

**यस्य कस्यचित् स्वरूपविषयादिना प्रकर्षादननुपलम्भमात्रेणा[5]सन् नाम। यथोक्तं प्राग्। योऽपि ज्ञापकस्य लिङ्गस्याभावात् अतीन्द्रियार्थः स्वभावविशेषो वा प्रतिक्षिप्यते। यथा नास्ति विरक्तं चेतः, देवताविशेषभावो वा। दानहिंसादि-**

---

**वतीत्यर्थः**। उपलब्धिलक्ष[4]णप्राप्तानुपलब्धिरिति यावत्।

**अत्रे**त्यादिना व्याचष्टे। **अत्रे**ति निवृत्तिनिश्चये। **यथोदाहृता प्रागिति**। (२०२–३)

"असज्ज्ञानफला काचिद्धेतुभेदव्यपेक्षये"त्यादिना (।)।

यत्पुनरुक्तम् (।) अप्रमाणमनुपलब्धिरिति तन्नाविशेषेण बोद्धव्यं किन्तु स्वभावेत्यादि। देशादिविप्रकृष्टः स्वभावः (।) ज्ञापकं लिङ्गं। तयोरज्ञानं।

"स्वभावज्ञापकाज्ज्ञानस्यायं न्याय उदाहृतः।[5]" (१।२०३)

असत्त्वे साध्ये नास्ति प्रामाण्यमिति। स्वभावाज्ञानं प्रत्यक्षनिवृत्तिः। ज्ञापकाज्ञानमनुमाननिवृत्तिः। अदृश्यविषयायाः प्रत्यक्षानुमाननिवृत्तेरयं न्याय उदाहृत इति समुदायार्थः।

**यस्ये**त्यादिना व्याचष्टे। **यस्य कस्यचित्** पिशाचादेः। स इति स्वभावः। **तदनुपलम्भमात्रेणे**ति तेन तद्विषयानुपलम्भमात्रेण प्रत्यक्षनिवृत्ति[6]रूपे**णासन्नाम**। **यथोक्तं प्रागिति**। "सतामपि कदाचिदनुपलम्भादि"त्यादिना। स्वभावाज्ञानमनेन व्याख्यातं।

ज्ञापकाज्ञानम्व्याख्यातुमाह। **योपी**त्यादि। **ज्ञापकस्ये**त्यस्य विवरणं लिङ्गस्येति। **अतीन्द्रियः प्रतिक्षिप्यतेऽर्थः**। **यथा नास्ति विरक्तं चेत** इत्यादि। तथा ज्ञापकस्य लिङ्गस्याभावात् स्वभावविशेषो वा[7] प्रतिक्षिप्यते। अत्र विशेषः प्रतिक्षिप्यते न धर्मिमात्रं। यथा **नास्ति दाने**त्यादि। दानं च हिंसा विरतिश्चेति द्वन्द्वः। तद्विषयाश्चेतनाः। **दान**चेतनानां **हिंसाविरतिचेतनानां** चेत्यर्थः।

136a

**विरतिचेतनानां चाभ्युदयनिःश्रेयस हेतुता नास्तीति च प्रत्यक्षेऽप्यर्थे तस्य फलस्यानन्तर्याभावात्। अतत्फला[7] साधर्म्यात् विपर्यस्तोऽपवदेतापि। न तावता व्यवहितानां फलानां हेतोः फलाभिमुत्पत्तिदर्शनात् तदभावः। मूषिकस्य चोन्मत्तकुक्कुरस्य विषविकार इव, तद्भावे विरोधाभावात्, अत्रानुपलब्धिमात्रमप्रमाणम्।** 481b

**यदि भावे यत् प्रमाणं नैवास्ति, अत एव संशयो युक्तः। प्रमाणसंभवादेव प्रतिक्षेपः।**

---

**अभ्युदयहेतुना** स्वर्गादिफलहेतुना। अत्र चेतनानां न स्वरूपं प्रतिक्षिप्यते तासां प्रत्यक्षत्वात्। किन्त्वभ्युदयहेतुत्वं स्वभावो विशेषो नास्तीत्युच्यते।

ननु चेतनानां प्रत्यक्षत्वा[1]दभ्युदयहेतुतापि तदात्मभूतत्वात्। प्रत्यक्षस्यैवेति कुतो भ्रान्तिरित्यादि।

प्रत्यक्षेप्यर्थे **विपर्यस्तोऽपवदेतापीति** सम्बन्धः। कथम्विपर्यस्त इत्याह। **अतत्फले**त्यादि। अतत्फला अनभ्युदयफला ये दृष्टाश्चेतना विशेषा अव्याकृताः। तैस्सा**धर्म्यात्**। साधर्म्यमेव कथमित्याह। **फलस्यानन्तर्याभावा**दिति या अन्या अतत्फलाश्चेतनाः। याश्च तत्फला उभयत्र तत्फ[2]लस्यानन्तर्यन्न दृश्यते। **न तावतेति** फलस्यानन्तर्यादर्शनमात्रेण। **तदभावः** फलाभावः। कस्माद् (।) **व्यवहितानां**मित्यादि। हेतोः सकाशात् कालान्तरेणोत्तरोत्तरावस्थापरिणामलक्षणेन **व्यवहितानां फलानान्दर्शन**ात्। **मूषिकस्या**लर्क्कस्य **चोन्मत्तकुक्कुरस्य विषविकार इव** स हि न विषसंचारकाल एव भवति किन्तु सहकारिणः कालविशेषस्य सन्निधौ-[3]निष्पद्यते। न तु हेत्वन्तरमेव तद्वत्।

स्यादेतत् (।) मूषिकादिविषविकारस्य कालान्तरे दृष्टत्वात् सद्भावो युक्त एव। दानादिफलन्तु न कदाचनापि दृष्टमिति कथन्तस्य सद्भाव इत्याह। तदित्यादि। **तद्भाव** इति। तयोर्दानादिफलातीन्द्रियवस्तुनोर्भावे **विरोधाभावात्**। **अत्र** दानादिफलेऽतीन्द्रियभावे **वानुपलब्धिमात्रमप्रमाणं**।

**यदि** बाधकं प्रमाणं नास्ती[4]त्यप्रतिक्षेपो **भावे**ऽस्तित्वे किं **प्रमाणन्नैवास्ति प्रमाण**मतः सत्तानिश्चयो न युक्त इति परः।

**अत एवे**त्या चा र्यः। अत्यन्तमतीन्द्रियस्यार्थस्य साधकबाधकप्रमाणाभावात् प्रेक्षावतः **संशयो** युक्तः। यदि वा यद् वस्तु निराकर्त्तुन्न शक्यते न च तस्य साधकं प्रमाणं प्रतिभाति। तस्यैवं सम्भावना युक्ता भवेदस्य कदाचित् साधकं प्रमाणं

**तदत्र केषांचिदर्थानां स्वभावानां च दर्शनपाटवाभावात् च[2] कारणानां फलोत्पादनियमाभावात् ज्ञापकस्यासिद्धिः ।**

**नेयता तदभावः, पुनरपि केषांचित् पर्यायेण अभिव्यक्तेः ।**

**कार्ये तु कारकाज्ञानमभावस्यैव साध[3]कम् ।**

---

कस्यचित् प्रतिभावतः[5]। तस्मादर्थसंशयात् प्रमाणसंशयाद्वाऽप्रतिक्षेपः।

अन्ये तु विरक्तचित्तेऽभ्युदयहेतुत्वे चात एवेति साधकबाधकप्रमाणाभावात् संशयोस्त्विवति व्याख्याय। विरक्तं चित्तं सर्वज्ञत्वे भवेद्वा प्रमाणमित्यप्रतिक्षेपः। तच्च प्रमाणं द्वितीये परिच्छेदेऽभिधास्यत इति व्याचक्षते।

यत एव व्यवहितस्यापि कार्योत्पत्तिः। **तत्तस्मादत्र** एवातीन्द्रियेषु मध्ये **केषांचिदर्थानां स्वभावानां चेति** यद्यपि पाठक्रमः। तथापि यथायोगं सम्बन्धः।

केषांचित् स्वभावनामभ्युदयहेत्वादीनां भवेज्ज्ञापकासिद्धिः। कथं (।) **दर्शनपाटवाभावात्**। तद्विषयस्यानुभवस्य यथागहीतस्वरूपनिश्चयोत्पादने सामर्थ्याभावात् केषांचिदर्थानां विरक्तचित्तत्वादीनां। प्रत्यक्षानुमानलक्षणं कार्यं ज्ञापकन्तस्याभावात्।[7]

136b तथाभूतस्य कार्यस्य कस्मादभाव इत्याह। **कारणानामि**त्यादि। न हि कारणैरवश्यमात्मज्ञापकङ्कार्यं सर्वपुरुषग्राह्यमारब्धव्यमिति नियमः।

अन्ये त्वन्यथा व्याचक्षते। केषां चित् स्वभावानामभ्युदयहेतुवादिनां। अर्थानां **च** विरक्तचित्तादीनाम्भवेज्**ज्ञापकस्य** निश्चायकस्य प्रमाणस्या**सिद्धिः**। कुतः (।) **दर्शनपाटवाभावात्** ।

एतदुक्त[4]म्भवति। दर्शनमे[1]व ज्ञापकं कस्यचिदर्थस्य तच्चापटुत्वात् सर्वाकारनिश्चयन्नोत्पादयति। कारणानां च कार्योत्पादननियमाभावस्तेनानन्तरकार्यादर्शनात्। कार्यद्वारेणाप्यभ्युदयहेतुत्वन्न शक्यं निषेद्धुं। तथातीन्द्रियाणामर्थानां दर्शनस्य मनोविज्ञानलक्षणस्यापाटवात् प्रत्यक्षेणाग्रहणं। न हि कार्यद्वारेणैषां निश्चयः कारणानां च कार्योत्पाद[2]ननियमाभावात्। न हि कारणैरवश्यमात्मज्ञापकं कार्यं सन्तानान्तरे जनयितव्यमिति नियमः। तस्मान्न प्रत्यक्षं नानुमानं तेषामस्ति।

**नेयतेति** यथोक्तज्ञापकाभावमात्रेण **तदभावो**तीन्द्रियाणामभावः। यस्मात् प्रत्यक्षानुमानाभ्यामनुपलब्धानामपि **केषांचि**दर्थानां **पुनरपि पर्यायेण** क्रमेण कुड्यविवरावस्थितानामर्थानां प्रत्यक्षेणानु[3]मानेना**भिव्यक्तेः** प्रतीतेः। तदेवं विप्रकृष्टे स्वभावानपलम्भो नासत्तासाधनं। नापि कार्यानपलम्भः।

**स्वभा स्याभावे साध्येऽनुपलम्भ वाप्रमाणमुच्यते। कारणानुपलम्भस्तु प्रमाणमेव।**

**न हि येषां बहूनां कारणानां कार्यस्य सम्भवः।**

**ननु कारणविनाशेऽपि न कार्यस्थितिदर्शनम्[4]।**

**कारणस्थितिकालभावि कार्यं न ब्रूमः।**

**न च तथा स्थायी भावस्तदुपादानः पारम्पर्येण सन्तानोपकारात् तत्कार्यव्यपदेशः। हेत्वभावे भावोत्पादे नहि सत्तेत्युक्तम्[5]। यद्यस्य कथंचिदभावः सिध्येत तदा तत्फलं तस्य नास्तीति निश्चीयते।**

---

कारणानुपलम्भस्तु तत्राप्यभावसाधनमित्याह। **कार्ये** त्वित्यादि। कार्ये तु स्वभावादिविप्रकर्षिण्यपि कारकाज्ञानं कारणानुपलब्धिरभावस्य साधनमेव।

**स्वभावे**त्यादिना व्याचष्टे। विप्रकृष्टविषयस्य **स्वभावस्याभावे साध्ये** स्वभावा**नुप[4]लम्भ एवाप्रमाणमुच्यते। कारणानुपलम्भस्तु प्रमाणमेव**।

ननु विप्रकृष्टविषये कारणानुपलम्भ एव निश्चेतुमशक्यस्तत्कथं कार्याभावं साधयेत्। सत्यम् (।) एतावद् वक्तुं शक्यते (।) कारणमन्तरेणानुद्दिष्टविषये कार्यमवश्यं न भवतीतीयता लेशेनास्योपन्यासः। अत एव सामान्येनाह। **न ह्यस्ती**त्यादि।

**नन्वि**त्यादि परः। अग्ने**र्विनाशेपि**[5] वासग्रहादौ धूमस्य दर्शनात्। तथा चासत्यपि कारणे कार्यं दृष्टमिति व्यभिचारः। असति कारणे कार्यन्न स्यादित्यनेन वाक्येन **कारणस्थितिकालभावि कार्यं**। यावत् कारणसत्ता तावत् कार्यसत्तेत्ये**वन्न ब्रूमो** येन कारणनाशेपीत्यादिकः प्रसंगः स्यात्। किन्तर्ह्यनेन वाक्येनोच्यत इत्याह। **हेतुरहिते**त्यादि।

एवन्तावत् स्थिरतामभ्युपग[6]म्योक्तं। क्षणिकत्वे तु कारणे विनष्टे कार्यस्थानमेव नास्तीति कुतो व्यभिचाराशंका। तथा हि योग्निजन्यो धूमक्षणस्तस्याग्निविनाशे नास्त्येवावस्थानं। क्षणिकत्वेन विनाशात्। यश्च पश्चात् स्थायी धूमः स धूमहेतुक एव नाग्निहेतुकः। तदेव दर्शयन्नाह। **न च तथे**त्यादि। **तथा स्थायी**ति नष्टेप्याद्ये कारणे कालान्तरस्थायी। **तदुपा[7]दानः** पूर्वनिरुद्धहेतूपादानः। 137a

कथन्तर्हि पाश्चात्योपि धूमोग्निहेतुक इत्युच्यत इत्याह। **पारम्पर्ये**त्यादि। आद्यन्तावद् धूमक्षणम्वह्निरेव जनयति (।) स धूमक्षणोऽपरं सोप्यपरमित्येवं पारम्पर्येण। एतदेव स्फुटयन्नाह। **सन्तानोपकारा**दिति। प्रबन्धस्य प्रथमतो जननात् **तत्कार्यव्यपदेशः**। तस्माद् यस्य कारणस्य पाश्चात्यमपि कार्यमित्येवं[1] व्यप-

**स्वभावानुपलम्भश्च स्वभावेऽर्थस्य लिङ्गिनि ॥२०४॥**

**स्वभावाभावे स्वभावस्यैव लिङ्गिनि स्वभावा[6]नुपलम्भः कश्चिदपि प्रमाणमेव।**

यदि व्यापकानुपलम्भ एव तत्स्वभावः सिध्येत् यथा शिंशपाया वृक्षत्वम्।

482a **तदभावः प्रतीयेत हेतुना यदि केनचित्[7]।**

**यदि अस्य व्यापकस्य च स्वभावस्याभावः कुतश्चिद् गमकाद्धेतोः सिध्येत्। तदभावेनैव स्वकार्ये न व्याप्ये निवर्त्तेत तदभावासिद्धौ[1] निवृत्तावपि संशयात्,**

*ख. स्वभावानुपलब्धिः*

**कथं भावस्य स्वयमनुपलब्धेरभावसिद्धिः ?**

**दृश्यस्य दर्शनाभावकारणासम्भवे सति ॥२०५॥**

**भावस्यानुपलब्धस्य भावाभावः प्रतीयते।**

---

देशः। **यद्यस्य** हेतोः **कथंचित्**प्रमाणेना**भावः सिध्येत्** तदा **तत्फलन्तस्य** हेतोः **फलञ्चास्तीति निश्चीयते।**

एतच्चोद्दिष्टविषयस्याभावस्य साधनमभिप्रेत्योक्तम् (।) अनुद्दिष्टविषये तु नैतत्प्रमाणं प्रतिबन्धफलत्वात्।

**स्वभावे**त्यादि। **अर्थस्ये**ति व्यापकस्य स्वभावेऽव्यतिरिक्ते **लिङ्गि**न्यसत्त्वेन साध्ये **स्वभावानुपलम्भश्च** व्यापकानुपलम्भश्चा[2]भावस्य साधनमिति प्रकृतं। (२०३–४)

**स्वभावाभावे**त्यादिना व्याचष्टे। **कश्चिदि**ति व्यापकानुपलम्भः। यद्यनुपलभ्यमानो व्यापकः स्वभावोस्य व्याप्यस्य सिद्धः स्यात् तदा भवेत् प्रमाणं। कारणव्यापकानुपलम्भश्च भवेत् प्रमाणं यदि तदभावस्तयोः कारणव्यापकयोरभावः प्रतीयेत हेतुना केनचित्। स्वभावानुपलम्भाख्येन।

**यदी**त्यादिना कारि[3]कार्थमाह। **यद्यस्य** कारकस्या**भावः सिद्ध्येदि**ति सम्बन्धः। **व्यापकस्य च स्वभावस्याभावः। कुतश्चिद् गमकाद्धेतो**रित्युपलब्धिलक्षणप्राप्तानुपलम्भात्। सोयं कारको व्यापको वाऽसन्नेव सिद्धो यथाक्रमं कार्यं व्याप्यञ्च निवर्त्तयति। **तदभावासिद्धौ** कारकव्यापकयोरभावासिद्धौ **निवर्त्त्येपि**

**भावो हि यथास्वं ग्राहकेण यदि उपलभ्य एव भवेत्। स दर्शनप्रतिबन्धिषु व्यवधानादिषु असत्सु उपलब्धिरेव। अनुपलब्धस्त्वसन्निति निश्चीयते। उपलम्भाव्यभिचारात्। अयमेव हेतुर्हेतुव्यापकयोरभावेऽपि वेदितव्यः।**

### ग. अनुपलब्धिरेवाभावः

**विरुद्धस्य च भावस्य भावे तद्भावबाधनात् ॥२०६॥**
**तद्विरुद्धोपलब्धौ स्यादसत्ताया[1] विनिश्चयः।**

---

कार्ये व्याप्ये **च संशयात्**। (२०४–५)

यदि स्वभावाभावे साध्ये तद[4]नुपलम्भ एवाप्रमाणमुच्यते। **कथमिदानीम्भावस्य** घटादेः **स्वयमनुपलब्धेरभावसिद्धिः**।

उत्तरमाह। **दृश्यस्ये**त्यादि। विप्रकृष्टे विषये स्वभावानुपलम्भे प्रमाणमुक्तं। न तु दृश्यविषय इत्यर्थः। **दृश्यस्ये**ति स्वभावाद्यविप्रकृष्टस्य **भावस्यानुपलब्धस्य** सतः। **भावस्य** सत्ताया **अभावः प्रतीयते**। कदा **दर्शनाभावकारणासम्भवे सति**। द[5]र्शनाभावस्य कारणं कारणान्तराणां वैकल्यन्तस्यासम्भवे सति। उपलम्भप्रत्ययान्तरसाकल्ये सतीत्यर्थः।

**भावो ही**त्यादि विरणं। स्वभावाद्यविप्रकृष्टो भावो **यदि भवेत्**। **यथास्व ग्राहकेण करणे**नेति यस्य यद् ग्राहकमिन्द्रियन्ते**नोपलभ्य** एव भवेत् **स** इति यथोक्तो भावः। **दर्शनप्रपिबन्धिषु व्यवधानादिषु** (।) आदिशब्दाद् वैकल्यप्रतिबन्धादिष्व**सत्सु**। उ[6]पलम्भप्रत्ययेषु सत्स्विति यावत्। (२०५–६)

तथा भूतो**नुपलब्धस्त्वसन्निति निश्चीयते**। किङ्कारणं (।) **तादृशः सत** उपलब्धिलक्षणप्राप्तस्य सतः। **उपलम्भाव्यभिचारात्**। य एवायं स्वभावस्याभावनिश्चये दृश्यस्य दर्शनेत्यादिनोक्तो**ऽयमेव हेतुर्वेदितव्यः**। कस्मिन् साध्ये (।) **हेतुव्यापकयोरभावेपि** साध्ये।

**विरुद्धस्य चेत्यादि**।[7] यस्याभावस्साध्यस्तेन यो **विरुद्धस्तस्योपलब्धौ च** 137b
**स्यादसत्तायाः** प्रतिषेध्याभावस्य **निश्चयः**। किङ्कारणम् (।) **विरुद्धस्य भावस्य भावे** सत्तायान्**तद्भावबाधनात्**। तस्य निषेध्याभिमतस्य सत्ताबाधनात्।

**यो ही**त्यादि विवरणं। कस्मान्नावतिष्ठत इत्याह। **तदि**त्यादि। तयोर्विरुद्धयोर्ये **उपादाने** तयोरन्योन्यं **परस्परं** यद् **वैगुण्यन्तस्याश्रयत्वेन**। यथा शीतोपादानमुष्णोपादानवैगुण्यस्याश्रय इतरश्चेतरस्येत्यर्थः। तेन कारणेन विरुद्ध-

**यो हि भावो येन सह युगपद् नावतिष्ठते, तदुपादाने परस्परवैगुण्याश्रयत्वेनारम्भविरोधात्। तयोर्विरुद्धयोरेकस्य भावे[5]ऽप्यन्याभावे गतिर्भवति। यथोक्तं प्राक्। तत एवानुपलब्धेर्नैव भेदो व्यवस्थाप्यः। तत एव विरोधगतेः, विरोधाच्चाभावसाधनाद्।**

**भवतु नामैवंविधाया अनुपलब्धेरभावगतिः। कथं न स्यात्। दृष्टान्तापेक्षाभावात्। न ह्यस्यां काचिदपि सत्ता। किन्न व्योमकुसुमा[7]द्यनुपाख्यमिति अदृष्टान्तः। तदसदिति कथं अवगन्तव्यं येनैवं स्यात्। अनुपलब्धेरेव चेत्। तत्रापि कथमदृष्टान्तिकाऽसत्तासिद्धिः, सदृष्टान्त[1]त्वे वाऽनवस्थाप्रसंगः। तथा**

482b

---

योरेकत्र युगपदारम्भ**विरोधात**। **तयोर्विरुद्धयोरेकस्य भावेप्यन्याभावगतिर्भवति**। **यथोक्तं प्राग**नुपलब्धिप्रभेदे। "न शीतस्पर्शोत्राग्नेरि"त्यादि। यद्यप्यत्रानुपलब्धिरिति न श्रूयते तथापीदं स्वभावविरुद्धाख्यं लिङ्गमनुपलब्धेस्सकाशान्न[2] पृथगुच्यते (।) किङ्कारणं (।) **तत एवा**नुपलम्भाद् **विरोधगतेः**। **विरोधाच्चाभावसाधना**दित्युक्तं।

**भवतु नामैवम्विधाया** दृश्या**नुपलब्धेः** सकाशाद् **भावगतिः**। सा पुनः कथमनुमानं (।) नैवानुमानं किन्तु प्रमाणान्तरमेवेति भावः।

**कथन्न स्या**दित्या चा र्यः।

**दृष्टान्ते**त्यादि परः। **दृष्टान्तापेक्षं** ह्यनुमानमन्वयव्यतिरेकवत्त्वात्। दृष्टान्तापेक्षणमेवा[3]ह। **न हीति**। **अस्या**मित्यनुपलब्धौ।

**किन्ने**त्याचा र्यः।

**त**दित्यादि परः। तद् **व्योमकुसुमादि**। अस**दिति कथं** केन प्रमाणेना**वगन्तव्यं येनैवं स्या**ददृष्टान्तः स्यात्। **अनपलब्धेरेव** लिङ्गाद् व्योमकुसुमाद्यसदवगन्तव्यमिति **चेत्**। **तत्रे**ति व्योमकुसुमादौ। **कथमदृष्टान्तिका** दृष्टान्तरहिताऽ**सत्तासिद्धिः**। **सदृष्टान्तत्वे वानवस्थाप्रसंग** इति तत्रा[4]प्य(प)रोपीति कृत्वा। **तथा चे**त्यनवस्थायां सत्यां साध्यस्या**प्रतिपत्तिः**। यतश्च दृष्टान्तत्वेनवस्थादोषः। **तस्मान्निरुपाख्याभावसिद्धिर**दृष्टान्तिका कर्त्तव्या। **तद्वदन्यत्रापि** (।) नेह घटोनुपलब्धिलक्षणप्राप्तस्यानुपलब्धेरित्यादावपि प्रयोगे **दृष्टान्तानपेक्षणादननुमानमनुपलब्धिः** (।)

**शृण्वन्न**पीत्या चा र्यः। असकृदुक्तमेतत्। य[5]था स्वभावानुपलब्धौ नाभावः साध्यते किन्त्वभावव्यवहार इति शृण्वन्नपि **देवानां** मूर्खाणां **प्रियो नावधारण-**

**चाप्रतिपत्तिः। तस्माद् अनुपाख्यासिद्धिवदन्यत्रापि दृष्टान्तानपेक्षणादननुमानम्।**

**शृण्वन्नपि[2] देवानां प्रियः नावधारणपरः। असच्छब्दव्यवहाराणां निमित्तं सोपलब्धिर्हि स्वसन्निधानात्, स्वनिमित्तसामग्रीयोगसन्निधानः सर्वो[3]ऽत्र दृष्टान्तः। असत्तैवात्र अनुपलब्धिः। अत एवेयं कारणात् कार्यानुमानलक्षणेति, ततः स्वहेतावन्तर्भवतीति वक्ष्यामः[4]।**

**सच्छब्दव्यवहारनिषेधेऽपि प्रमाणनिवृत्त्या निमित्तवैकल्येन अंकुरादयोऽपि**

---

**पटुर्येन** सत्यपि दृष्टान्ते तदसिद्धिश्चोद्यते। दृष्टान्तमेव दर्शयितुमुपक्रमते। **निमित्तं** हीत्यादि। उपलभ्यानुपलब्धिर्दृश्यानुपलब्धिर्या **निमित्तं** कारणमसद्व्यवहाराणां। सेत्यनुपलब्धिः **स्वसन्निधाना**दात्मसन्नि[2]धानात्। **स्वनिमित्तान्** स्वमनुपलब्धिरूपं निमित्तं येषान्तानेतान**सद्व्यवहारान्** साधयतीति कृत्वा **सर्वोत्र दृष्टान्तः**। किंभूतः (।) **स्वनिमित्तसामग्रीयोग्यसन्निधानः**। स्वकारणानां सामग्री तस्यां योग्यं सन्निधानं यस्याङ्कुरादेस्स तथोक्तः (।) प्रयोगः पुनः। यस्य यत्र निमित्तं सकलमप्रतिबद्धमस्ति तत्र तेन भवितव्यन्तद्यथाङ्कुरादि।[7] अस्ति 384a /चोपलब्धिलक्षणप्राप्तस्यानुपलब्धावसद्व्यवहाराणां निमित्तत्वमिति स्वभावहेतुः। कस्माद् (।) अत्राभावव्यवहार एव साध्यते न पुनरभाव एवेत्याह। **असत्ते**त्यादि। **अत्र** दृश्यानुपलब्धाव**नुपलब्धिरेव** सत्ता। यथोक्तं प्राक्। **तस्माद**भावो **न** (?) साध्यते। यत एवात्राभावव्यवहारः साध्यतेऽत **एवेयम**नुपलब्धिः स्वभावहेतावन्तर्भवतीति[1] सम्बन्धः। **कारणाद्** दृश्यानुपलम्भात् **कार्यस्या**सद्व्यवहारस्या**नुमानं** तदेव **लक्षणं** यस्येति सामान्येनान्यपदार्थमुपदर्श्य पश्चाद् भावप्रत्ययः। समग्रात् **कारणात् कार्यानुमाने** च योग्यतानुमानमिति स्वभावहेतावन्तर्भावः (।) वक्ष्यामश्चतुर्थे परिच्छेदे ( )।

दृश्यानुपलब्धौ भवतु दृष्टान्तोऽदृश्यानुपलब्धौ तु कथमित्याह। **सच्छब्दे**त्यादि देशादिविप्रकृष्टेषु[2] **प्रमाणनिवृत्त्या सद्व्यवहारनिषेधे** साध्ये कारणाभावात् कार्यस्याभावः साध्यस्तेनात्र न केवलन्निरुपाख्यं दृष्टान्तः किन्तु **निमित्तस्य** कारणस्य **वैकल्येना**भाविनो**ऽङ्कुरादयोपि दृष्टान्तः**। प्रयोगस्तु (।) यद्विकलकारणन्तन्न भवति यथा बीजरहितोङ्कुरः। विकलकारणश्चादृश्यानुपलब्धौ सद्व्यवहार इति कारणानुपलब्धिः।

यत्पुनरुक्तं (।) तदसन्निरुपा[3]ख्यं कथं प्रतिपत्तव्यमिति तत्रापि **निरुपाख्ये दृष्टान्ते**। **इयमेवमज्ञानव्यवहारलक्षणा प्रवृत्तिर्निषिध्यते**। अनुपलब्धितो न त्वभावः साध्यते। किङ्कारणम् (।) **अनुपलब्धी**त्यादि। विषाणादिविविक्तशश-

**दृष्टान्तः। न हि निरुपाख्यं केवलम्। निरुपाख्येऽपि इयमेव प्रवृत्तिर्निषिध्यते. अनुपलब्धि[5]लक्षणाया असत्तैव सिद्धा। निमितदभावमभ्युपगम्य प्रवृत्तिं निवृत्तिं च विलोमयन् तत्र यथाभ्युपगमं निरुपाख्यं अन्यद् वा[6] प्रतिपाद्यते।**

---

मस्तकाद्युपलब्धिरेवानुपलब्धिः पर्युदासवृत्त्या। सैव लक्षणं यस्याः शशविषाणासत्तायाः सा **सिद्धैव**।

स्यादेतद् (।) अदृश्यानुपलब्धावसत्त्वे[4] विषयभूते सिद्धे। तन्निमित्तोप्यसद्व्यवहारः सिद्ध एवेति किन्तेनासद्व्यवहारेण। अदृश्यानुपलब्धावपि सद्व्यवहारनिमित्तस्याभावाद् व्यवहाराप्रवृत्तिः सिद्धैवेति सद्व्यवहारनिषेधेनापि साधितेन किं।

तथा पूर्वप्रसिद्धविषयोपदर्शनलक्षणेन दृष्टान्तेनाप्यनुपलब्धौ न किंचित् प्रयोजनमित्यत आह। **सोयमित्यादि**। मूढं प्रत्येतत् साध्यत इति यावत्।[5]

क्वचिदप्यसद्व्यवहार**निमित्तं** दृश्या**नुपलम्भमभ्युपगम्या**सद्व्यवहार**प्रवृत्तिम्विलोमयन्**नकुर्वन्। अदृश्यानुपलब्धौ तदभावं च सद्व्यवहारनिमित्तस्य प्रमाणस्याभावं चाभ्युपगम्य सद्व्यवहार**निवृत्तिं च विलोमयन्न**कुर्वन्। **यथाभ्युपगमं प्रतिपाद्यत इति** दृश्यानुपलम्भेन निमित्तेन त्वयाऽसद्व्यवहारोन्यत्र कृतस्तदिहाप्यस्ति (।) तस्मा[6]दसद्व्यवहारङ् कुर्विति प्रतिपाद्यते। तथा प्रमाणेन निमित्तेन त्वया क्वचित् सद्व्यवहारः कृतस्तदिहाप्यनिरुपाख्ये नास्ति। तस्माद् सद्व्यवाहारम्मा कुर्विति प्रतिपाद्यते। किमिव **निरुपाख्यवत्**। यथा शशविषाणादावसद्व्यवहारनिमित्तस्य दृश्यानुपलम्भस्य भावादसद्व्यवहारस्तथेहापीति।

138b **अन्यद्वेति** (।) यथा सन्निहितनिमित्तस्याऽङ्कुरादेः प्र[7]तिपत्तिरेव सद्व्यवहारस्यापीति। यथा च निरुपाख्ये प्रमाणाभावात् सद्व्यवहारस्य निवृत्तिः। **अन्यस्मिन्** वा कारणविकले कार्ये निवृत्तिस्तद्वद् विप्रकृष्टेषु सद्व्यवहारस्य निवृत्तिरिति **प्रतिपाद्यते**।

**स एव तावदुपलब्ध्यभावो**नुपलब्ध्याख्यः **कथं** केन प्रमाणेन **सिद्धः** (।) न प्रत्यक्षेणाभावविषयत्वविरोधात्। नाप्यनुमानेन प्रत्यक्षपूर्वकत्वादस्य[1]। नापि प्रदेशसम्बन्ध्यनुपलम्भोऽभावस्य नीरूपत्वेन सम्बन्धित्वायोगात्। प्रदेशस्यानुपलम्भे च धर्म्मसिद्धेराश्रयासिद्धो हेतुरित्यनुपलब्धेर्न पक्षधर्मत्वमित्युद्यो त क र प्रभृतय ः।

अत्राह। **एतदुत्तरत्र वक्ष्यामस्तद्विशिष्टोपलम्भोऽतस्तस्याप्यनुपलम्भनन्त-**

**स एव तावदुपलब्ध्यभावः कथं सिद्ध इति चेत्। एतदुत्तरत्र वक्ष्यामः।**

**अन्यत्रापि अनुमाने साध्यधर्मेण व्यापके इच्छन् किमिति भावः प्रत्याय्यः। व्याप्य[7]स्य निर्देशादेव व्याप्नुवतः सिद्धेः।** 483a

**निश्चितार्थसम्बन्धस्यापि दृष्टान्तेन स्मृत्यर्थश्चेत् तदेतदत्रापि तुल्यम्। सोऽयमन्यत्रापि अनुपलब्धिमात्रेण अभावव्यवहारकल्पना मूढं[1] प्रति स्मृतिजननमत्र।**

**कथं च यद् "न सन्ति प्रधानादयोऽनुपलब्धेः"। तत्र कथं अभावव्यवहारसिद्धिर्वा सत्ताव्यवहारनिषेधे कथं स्यात्। तदर्थनिषेधे धर्मिवाचिनोऽभिधानस्याप्रयोगात्, निर्विषयस्य प्रतिषेधस्य चायोगात्।[1]**

---

स्मादनुपलम्भोयं प्रत्यक्षेणैव सिध्यतीति। यत्पुनरुक्तमनुपलब्धौ किन्दृष्टान्तोप[2]-दर्शनेनेत्याह। **अन्यत्रापीत्यादि**। विधिसाधनेप्यनुमाने **साध्यधर्मेण व्यापकेन** व्याप्यधर्मं कृतकत्वादिकं साधन**मिच्छन्** प्रतिपाद्यः **किमिति** दृष्टान्तेन **प्रत्याय्यः**। किङ्कारणं (।) यथास्वं साध्येन **व्याप्यस्य** हेतो**र्निर्देशादेव व्याप्नुवतः** साध्यधर्मस्य **सिद्धेः**। **निश्चितार्थस्सम्बन्ध**लक्षणो येन **तस्य** व्यामूढम्प्रति **स्मृत्यर्थः**। तदेतद् **दृष्टान्तेन मूढं प्रति स्मृतिजननमत्रा**नुपलब्धौ। एतदेवाह। **सोय**मित्यादि। **अन्यत्रापी**ति शशविषाणादौ (।२०५–६)

अथ यदिदमाचार्य दि ग्ना ग प्रभृतिभिरुक्तं। "न सन्ति प्रधानादयोनुपलब्धे"रिति तत्र प्रयोगे। आ चा र्य आह। **कथं च न स्या**दिति।

चोदकः स्वाभिप्रायेणाह। **तदर्थे**त्यादि। तदर्थस्य प्रधानार्थस्य **निषेधे** सति प्रधानादिध**र्मिवाचिनोभिधान**[4]**स्याप्रयोगात्**। न हि वाच्यमन्तरेण वाचकस्य प्रयोगोस्ति। यदा च प्रधानादिशब्दानामप्रयोगस्तदा न सन्तीति प्रतिषेधवाच्येव शब्दोवशिष्यते। तस्य च प्रतिषेध्यासंकीर्त्तने **निर्विषयस्य प्रतिषे**धस्येति प्रतिषेधवाचिनः शब्दस्या**प्रयोगात्**। तथा च न सन्ति प्रधानादय इति द्वयोरपि प्रतिज्ञापदयोरप्रयोगात्। कुत्र किं साध्यत[5] इति व्यर्थानुपलब्धेः साधनयोगः। प्रधानादीनां च पक्षभूतानामभावाद् पक्षधर्मो हेतुः स्यात्। प्रतिज्ञापदयोर्वा परस्परं विरोधस्तथा हि प्रधानादय इति प्रयोगात् तदर्थसन्निधानं। पुनर्न सन्तीति वचनात् तेषामसन्निधानं। एते च सन्निधानासन्निधाने युगपदेकत्र विरुध्येते। (२०६–७)

---

[1]Ruṅ. baḥi-phyir.

**नैष दोषः, एवं—**

**अनादिवासनोद्भूतविकल्पपरिनिष्ठितः ॥२०७॥**
**शब्दार्थस्त्रिविधो धर्म्मी भावाभावोभयाश्रयः ।**
**तस्मिन्भावानुपादाने साध्येऽस्यानुपलम्भनम् ॥२०८॥**
**तथा हेतुर्न तस्यैवाभावः शब्दप्रयोगतः ।**

**निवेदितं तावत् यथा एते शब्दा न स्वलक्षणविषयाः । अनादि[4]कालीनवासना-प्रभवे विकल्पे प्रतिभासिनमर्थं विषयत्वेनात्मसात् कुर्वन्ति ।।**

**वक्तुस्तु तद्विकल्पभाजः श्रोतुश्च यथा प्रतिभासि वस्तु प्रतिपादन[5]समीहया प्रयोगात् । तदाकारविकल्पजननात् ।**

**न चोपादानकार्यप्रत्ययेऽप्रतिभासिरूपविषयत्वेन तत् शक्यं निश्चेतुम् ।**

---

**नैष दोष** इति परिहारः । यस्माद**नादेर्वासना**[6]यास्स**मुद्भूते विकल्पे परिनि-ष्ठितस्**समारुढः **शब्दार्थः** स च **भावाभावोभयाश्रित**त्वात् **त्रिविधो** धर्म्मः । **तस्मिन्** शब्देर्थे वाह्यप्रधानादिको भावोनुपादानमस्येति तस्मिन् **भावानुपादाने साध्ये**। **अस्ये**ति बुद्धिपरिर्वात्तिनः प्रधानादिधर्मिणः । **तथे**ति बाह्यप्रधानाद्युपादानत्वे-**नानुपलम्भनं हेतुः**। वासनोपादानत्वेनोपलम्भन[7]मेवात्रानुपलम्भनं । **न तस्यैव** विकल्पप्रतिनिष्ठितस्य धर्मिणो**ऽभाव**स्साध्यते। कस्मात् (।) प्रधानादि**शब्दानां प्रयोगतः**। तन्निषेधे हि निर्विषयत्वाच्छब्दप्रयोग एव न स्यात् ।

139a

**निवेदित**मित्यादिना व्याचष्टे । यदि हि स्वलक्षणमभिधेयं स्यात् तदा स्वलक्षण-प्रतिषेधे शब्दार्थस्य प्रतिषेधात् तद्वाचिनः शब्दस्याप्रयोगः स्यात् । यावता निवेदित-मेतद् **यथैते शब्दा न स्वलक्ष[1]णविषया** इति। किन्त्व**नादिवासनायाः प्रभव** उत्पादो यस्य **विकल्पस्य** तस्मिन् **प्रतिभासी** योर्थस्**तम्विषयत्वेनात्मसात्कुर्वन्ति**।

कुत एतद् विकल्पविषयमेवार्थांम्विषयीकुर्वन्तीत्याह। **वक्तुस्तद्विकल्पभाज** इति भावाभावोभयाश्रयसामान्याकारविकल्पभाजः (।) कारणमाह। **यथे**त्यादि। **यथाप्रतिभासि वस्तु**। प्रतिभासिवस्त्वनतिक्रमेण या **प्र[2]तिपादनसमीहा** तया शब्द**प्रयोगात्**। तस्माद् विकल्पप्रतिभासिन एवार्थान् शब्दा विषयीकुर्वन्ति।

तथा श्रोतुश्च तद्विकल्पभाज इति सम्बन्धः। किं कारणं (।) **तदाकारविक-ल्पजननात्**। भावाभावोभयाश्रयसामान्याकारविकल्पजननाच्च विकल्पप्रतिभासिन एवार्थान् शब्दा विषयीकुर्वन्ति ।

स्यादेतद् (।) यदि नामैवन्तथापि कथन्न स्वलक्षणविषया श[3]ब्दाः स्वलक्ष-णप्रतीतेरित्याह। **न चे**त्यादि। **उपादानं** च **कार्यं** च ते एव **प्रत्ययो** ज्ञानन्तत्रा-

**स तु विकल्पः सदसदुभया[6]कारप्रत्ययाहितवासनाप्रभवत्वात्, तत्प्रतिभास्याकाराध्यवसायवशेन च भाव(ाभाव)ोभयधर्म इत्युच्यते ।**

**तद् अत्र धर्मिणि आश्रित्य कथं प्रधानशब्दात् प्रतिभासमानोऽ[7]यमर्थो न भावोपादान इति सदसत्त्वं चिन्तयन्ति । तस्य भावानुपादानत्वे साध्ये स एव प्रत्यात्मवेद्यत्वात् अप्रतिक्षेपार्हो धर्मी[1] ।** 483b

**न च स एव स्वलक्षणमिति शक्यं वक्तुम् । असंप्राप्ते निरुद्धे चार्थे तस्यानपा-**

---

**प्रतिभासि यद्रूपन्तद्विषयत्वेन तन्न** शक्य**न्निश्चेतुं**। तत्रोपादानप्रत्ययो वक्तुः प्रतिपादनसमीहारूपो विकल्पः शब्दस्य कारणत्वात् । कार्यप्रत्ययः शब्दोत्थः श्रोतुर्विकल्पः । न हि स शब्दार्थो यः शब्दे प्रत्यये न प्रतिभासते । न च तत्र स्वलक्ष[4]णं प्रतिभासते । स्पष्टाकारविवेकात् ।

ननु कथं विकल्पाभावाश्रयोऽर्थजन्यत्वेनाविकल्पकत्वप्रसंगात् । कथञ्चाभावाश्रयोऽभावस्याकारणत्वात् । कथञ्चैक उभयाश्रयोऽहेतुकत्वप्रसङ्गादित्यत आह । **स** **त्वित्यादि** । सदसदुभयाकारो **विकल्पः सदसदुभयप्रत्ययस्तेनाहिता वासना ततः प्रभव** उत्पादो यस्य स तथोक्तः । **इति** हेतोर्भावाभावो[5]भयधर्म इत्युच्यते ।

द्वितीयं कारणमाह । **तदित्यादि** । **त**स्मिन्नेव विकल्पे **प्रतिभासी** य **आकार**स्तस्य सदसदुभयरूपतया**ध्यवसायस्तद्वशेन च** । **भावाभावोभयधर्म इत्युच्यते ।** (२०६)

एतदुक्तम्भवति । सत्प्रत्ययाहितवासनाप्रभवस्सदाकाराध्यवसायीव भावधर्म इत्युच्यते । एवमभावोभयधर्मयोरपि द्रष्टव्यं पूर्वपूर्वसदादिप्रत्य[6]याहितवासनाप्रभवत्वादेव सदादिविकल्पानामनादित्वम् (।) अतो न भावादिजन्यत्वं । यतश्च शब्दार्थस्त्रिविधः । **तत्त**स्माद**त्र** शब्दार्थे **धर्मिणि** व्यवस्थिता विवा**दाश्रयत्वेन** स्थिताः पुरुषा**स्सदसत्त्वं** प्रधानादे**श्चिन्तयन्ति** । **कथं** चिन्तयन्तीत्याह । **किमयं प्रधानशब्दा**दुच्चरिताद् विकल्प**प्रतिभासमानोर्थो** बाह्यप्रधाननिबन्धनो भवति न वेति । **तस्य** प्र[7]धानादिविकल्पप्रतिभासस्य **भावानुपादानत्वे** धर्मे **साध्ये स एव** विकल्पप्रतिभासो बुद्धिस्वभावतया **प्रत्यात्मवेद्यत्वात्** स्वसम्वेदनप्रत्यक्षसिद्धत्वाद**प्रतिक्षेपार्होर्थो धर्मी** । 139b

ननु च स एव विकल्पग्राह्यार्थः स्वलक्षणं स्वलक्षणरूपतयाध्यवसायात् । ततश्च प्रत्यक्षसिद्ध एव प्रधानादिः शब्दश्च स्वलक्षणविषय इत्याह । **न च स एवेत्यादि** ।[1] स एव विकल्पप्रतिभास्यर्थो बाह्यं **स्वलक्षणमिति शक्यम्वक्तुं** । किं

**यात्। वस्तुनि विपरीताकाराभिनिवेशेषु तीर्थान्तरीयप्रत्ययेषु च[2] भावात्।**

**परमार्थैकतानत्वे शब्दानामनिबन्धना ॥२०९॥**
**न स्यात् प्रवृत्तिरर्थेषु दर्शनान्तरभेदिषु।**
**अतीताजातयोर्वाऽपि न च स्यादनृतार्थता ॥२१०॥**
**वाचः कस्याश्चिदित्येषा बौद्धार्थविषया मता।**

**—इति संग्रहश्लोकौ।**

**तस्य च यथा समीहितरूपानुपादाने साध्ये तथाऽत्रानुपलम्भधर्मत्वात्, न साध्य[1] धर्मा[4]सिद्धिः।**

**न पुनरत्र शब्दप्रतिभास्यर्थोऽपह्नूयते। तस्य बुद्धौ उपस्थापन [2]शब्दप्रयोगात्। तदभावे हि तदयोगात्।**

**अपि च।**

---

कारणम् (।) **असंप्राप्ते**ऽनुत्पन्ने स्वलक्षणे **निरुद्धे** च **तस्य** विकल्पप्रतिभासस्यान**पायात्**। किं च **वस्तुनि** घटादौ **विपरीताकारः** परस्परविरोधिनो नित्यानित्यादयः। नान**भिनिवेष्टुं** शीलं येषान्तीर्**थान्तरीयप्रत्ययानान्तेष भावाच्छ**ब्दार्थप्रतिभासस्य। न च स एवार्थः स्व[2] लक्षणमिति प्रकृतेन सम्बन्धः॥ (२०९–१०)

अमुमेवार्थं संग्रहीतुमाह। **परमार्थः स्वलक्षण**न्तस्मिन्नेकस्थानः प्रवृत्तिर्येषान्तद्भावस्तत्त्वन्तस्मिन्सति **शब्दानामनिबन्धना** परमार्थनिबन्धनरहिता **प्रवृत्तिर्न स्यात्**। **दर्शनान्तरभिन्ने**ष्व**र्थेषु**। सिद्धान्तभेदभिन्नेषु। **अतीताजातयोर्वापी**ति अतीतानागते चार्थे शब्दानाम्प्रवृत्ति**र्न स्यात्**। तथा **कस्या[3]श्चिद् वाचो**(ऽ) **भूतार्थता** मृषार्थता न स्यात्। **इति** यथोक्ताद्धेतोरेषा वाक्। **बौद्धार्थविषया**। विकल्पप्रतिभास्यर्थविषया मता। (२१०–११)

**तस्य** चेति प्रधानादिविकल्पप्रतिभासस्य। **यथासमीहितं रूपं** यथापरिकल्पितम्वाह्यप्रधानादिरूपन्तद**नुपादानत्वे साध्ये**। **तथानुपलम्भ** इति यथा समीहितरूपोपादानत्वेनानुपलम्भोस्तीति कृत्वा [4] न साधन**धर्मा**सिद्धिर्नापक्षधर्मो हेतुरित्यर्थः।

**न पुनरत्र** प्रयोगेऽयमेव **शब्दे**त्यादि। **शब्दा**दुत्पद्यते यो विकल्पस्तत्प्रति**भास्यर्थोपहनूयते**। किं कारणं (।) **तस्य** विकल्पप्रतिभास्यर्थस्य श्रोतृ**बुद्धा**वुप-

---

[1]Bsgrub-par.bya-baḥi-chos. [2]Bskyed. paḥi-phyir.

**शब्दार्थापह्नवे साध्ये धर्माधारनिराकृतेः ॥२११॥**
**न साध्यः समुदायः स्यात् सिद्धो धर्मश्च केवलः ।**

यदि शब्दार्थस्यैवापलापे प्रधानशब्दवाच्यस्य धर्मिणो हि निराकृतेः साध्यधर्माश्रयाभावः स्यात्[6]। तद् अयं आधारव्यवच्छेदानपेक्षो न विवादास्पदमिति नोपन्यसनीय एव।

अपि च।

**सदसत्पक्षभेदेन शब्दार्थानपवादिभिः ॥२१२॥**
**वस्त्वेव[7] चिन्त्यते ह्यत्र प्रतिबद्धः फलोदयः ।** 48.a
**अर्थक्रियाऽसमर्थस्य विचारैः किं तदर्थिनाम् ॥२१३॥**
**षण्ढस्य रूपवैरूप्ये कामिन्याः किं परीक्षया ।**

न हि शब्दार्थोऽसन् कंचित्[1] पुरुषार्थमुपरुणद्धि, सन् वा समादधाति। यथाभिनिवेशं तस्याऽसत्त्वात्। यथातत्त्वं वाऽनवस्थितत्वात्[1]।

---

स्थापनाय **शब्दप्रयोगात्**। **तदभावे** विकल्पप्रतिभास्यर्थाभावे। **तदयोगाच्छब्द**प्रयोगायोगात्।

**अपि च** यदि **शब्दार्थस्य वापह्नवः सा[5]ध्यते**। तदा शब्दार्थापह्नवे साध्ये तस्य साध्य**धर्मस्य** नास्तित्वस्य य **आधारो** धर्मी शब्दार्थलक्षणस्तस्य **निराकृतेर्न साध्यः** धर्मिधर्मात्मकः **समुदायः स्यात्**। **केवलश्च** साध्य**धर्मस्सिद्ध** एव। नास्तित्वमात्रस्य क्वचित् सिद्धत्वात्।

**यदी**त्यादि विवरणं। **तदि**ति तस्मादयं साध्यधर्मः आधारेण यो **व्यवच्छेदो** विशेषणमस्येदं नास्तित्वन्त**दनपेक्षः**। **इ[6]ति** हेतो**र्नोपन्यसनीय एव** विवादकाले। (२११–१२)

**सदसत्पक्षभेदे**नेति सदसत्प्रतिज्ञाभेदेन **वस्त्वेव चिन्त्यते**। **शब्दार्थानपवादिभि**रथक्रियार्थिभिः प्रेक्षावद्भिः। यस्मादत्र वस्तुनि **प्रतिबद्धः फलोदयः**। (२१२–१३)

यदि नामैवन्तथापि किन्न शब्दार्थो विचारणीय इत्याह (।) अर्थेत्यादि। **अर्थक्रियां** प्रत्य**समर्थस्य** शब्दार्थस्य **विचारैः** सदसत्त्वविचारैः **किन्तद[7]र्थिनाम**र्थक्रियार्थिनां (।) निदर्शनमाह **षण्डस्ये**त्यादि। पुंस्त्वरहितस्य यद् **रूपवैरूप्य**न्तस्मिन् विषये **कामिन्या** मैथुनाभिलाषिण्याः **किम्परीक्षया**। (२१३–१४) 140a

**न ही**त्यादि विवरणं। न हि **शब्दार्थोऽसन् कंचित् पुरुषार्थमुपरुणद्धि** निवर्त्तयति। **सन् वा समादधाति** करोतीति यथायोगं सम्बन्धनीयं। किं कारणं (।) **यथाभिनिवेशं** पुरुषस्तं[1] शब्दार्थम्बाह्यतयाऽभिनिविशतेऽध्यवस्यति तथा **तस्या-**

**तस्मादयं प्रवर्त्तमानः सर्वदा[2] भावाभावविचारेऽवधीरितविकल्पप्रतिभासोऽनपेक्षितो यत्रायं पुरुषार्थः प्रतिबद्धः (तद्) एव वस्तु अधिष्ठानीकरोति। यथाऽग्नौ शीतप्रतिघात इति।**

**न हि अत्र शब्दार्थशक्ति[3]रस्ति। तदनुभवाप्तावपि तदभावात्। तदयमर्थक्रियार्थी तदसमर्थं प्रति दत्तानुयोगो न युक्तः। न हि वृषस्यन्ती षण्ढस्य रूपवैरूप्य[4]परीक्षायामवधत्ते।**

### घ. *कल्पितस्यानुपलब्धिः*

यत् पुनरेतदुक्तं निरूपणानुपलम्भो धर्म इति।

**शब्दार्थः कल्पनाज्ञानविषयत्वेन कल्पितः ॥२१४॥**

**धर्म्मो वस्त्वाश्रयासिद्धि[5]रस्योक्ता न्यायवादिना।**

**कल्पनाविषयत्वाच्छब्दार्थ एव कल्पितः। तस्य हि वस्त्वाश्रयणानुपलम्भधर्म इत्यभिप्रायः।**

---

**सत्त्वाद**विद्यमानत्वात्। **यथातत्त्वं** वा समीहितत्वात्।

यथार्थस्वलक्षणं ज्ञानस्वलक्षणम्वा स्थितन्तथा शब्देनाविषयीकृतत्वात्। यत एवन्**तस्मादयं** पुरुषस्सदसच्चिन्तायां **प्रवर्त्तमानः सर्वदाऽवधीरितविकल्पप्रतिभासो**ऽनपेक्षितविकल्पप्रतिभासो **वस्त्वेवाधिष्ठानीकरो[2]ति** विषयीकरोति **यत्र** वस्तुन्**ययं पुरुषार्थः प्रतिबद्धः**। **अग्नावि**त्यग्निस्वलक्षणे। **आदि**ग्रहणाद् दाहपाकादि।

स्यादेतद् (।) ईदृशोर्थः शब्दार्थेनापि साध्यत इत्याह। **न ही**त्यादि। **अत्रे**ति शीतप्रतिघातादौ। कस्मात् **तदनुभवाप्तावपि**। तस्य शब्दार्थस्यानुभवाप्तावपि। **तदभावात्** तस्य शीतप्रतीकारादेरभावात्। **तत्** तस्मा**दयमर्थक्रियार्थी[3]** पुरुषः। **तदसमर्थ**न्तस्यामर्थक्रियायामसमर्थं शब्दार्थं **प्रति दत्तानुयोगो** दत्तावधानो भवितुम्न **युक्तः**। **न हि वृषस्यन्ती** मैथुनमिच्छन्ती **षण्ढस्य** परिचरितुमशक्तस्य **रूपवैरूप्यपरीक्षायामवधत्ते**ऽवधानवती भवति।

उ द्यो त क रा द्युक्तदूषणनिरासार्थं पृच्छति। **यत्पुनरेतदुक्त**माचार्य दि ग्ना गेन (।) **कल्पितस्ये**त्यादि। तस्य[4] कोर्थः।

उत्तरमाह। **शब्दार्थ** इत्यादि। **कल्पनाज्ञानविषयत्वाच्छब्दार्थः** प्रधानादिशब्दार्थः। **कल्पितो वस्तुनो** बाह्यस्य प्रधानलक्षणस्या**श्रयण**न्तेना**सिद्धि**रनुपलब्धि**रस्य** प्रधानादिशब्दार्थस्य धर्म **उक्तो** लिङ्गभूतो भावानुपादानत्वे साध्ये। **न्यायवादिनाचार्य** दि ग्ना गे न।

## ६. आगम-चिन्ता

**यदुक्तं प्रमाणत्रयनिवृत्तावपि न हि[6] वस्त्वभावासिद्धिरिति तदन्यप्रमाण-निवृत्तौ न स्यात्। तयोर्हि सकलविषयित्वाभावात्। अत्रागमो न किञ्चिद् व्याप्नोति। तन्निवृत्तिः यथा[7] न गमिकेति चेत्। उक्तमत्र आगमेषु सर्वार्थानुपयोग इति अप्रकरणापन्नत्वात्।** 484b

**अपि च।**

**नान्तरीयकताऽभावाच्छब्दानां वस्तुभिस्सह ॥२१५॥**
**नार्थसिद्धिस्त[1]तस्ते हि वक्त्रभिप्रायसूचकाः।**

**यथाभावं न हि शब्दानां प्रवृत्तिः। यतस्तेभ्योऽर्थप्रकृतिर्निश्चीयेत। ते हि**

---

तेन यदुच्यते उ द्यो त क रा दिभिः। यदि प्रमाणेन प्रधानं सत्त्वेन क[5]ल्पितं कथमस्यानुपलब्धिर्द्धर्मः प्रतीयते। अथासत्त्वेन कल्पितं प्रधानन्तथापि कथमस्यानुपलब्धिर्धर्मोऽसत्त्वादिति (।)

तदपास्तं। यस्मात् **कल्पनाज्ञानविषयत्वाच्छब्दार्थ एव कल्पितः।** न तु प्रमाणेन बाह्यं प्रधानं सत्त्वेन कल्पितं। **तस्येति** प्रधानशब्दार्थस्य बाह्यप्रधान-**वस्त्वाश्रयणानुलम्भ** इत्ययमभिप्राय आचार्य दि ग्ना ग स्य। (२१४–१५)

**यदुक्त**मित्यादि परः। प्र[6]माणत्रयं प्रत्यक्षानुमानागमलक्षणं। **अन्यप्रमाण-निवृत्ताविति** प्रत्यक्षानुमाननिवृत्तौ निवृत्तिर्देशादिविप्रकृष्टानां। **तयो**रिति प्रत्यक्षानुमानयोः। **न किञ्चद् व्याप्नोति** सर्वमेव विषयीकरोति। तन्निनिवृत्तिरागमनिवृत्तिः।

**उक्तमत्रे**ति सि द्धा न्त वा दी। **अप्रकरणापन्नत्वादिति** पुरुषार्थचिन्ताप्रप्रस्तावानुपयोगित्वात्। "**शास्त्राधिकारास**[7]म्बन्धा बहवोर्था" इत्यत्रान्तरे (१।२०१) 140b उक्तत्वात्।

एतच्च बाह्येषु आगमस्य प्रामाण्यमभ्युपगम्योक्तम् (।)

अधुना नैव बाह्येर्थस्य प्रामाण्यमित्याह। **अपि चे**त्यादि। **वस्तुभिस्स्वलक्षणैस्सह।** शब्दा**नान्तरीयकताया** अविनाभावस्याभावात् तेभ्यः शब्देभ्यो **नार्थसिद्धिर्न** बाह्यवस्तुनिश्चयः। यस्मा**त्ते हि वक्त्रभिप्रायसूचकाः।**

यद्यपि घटविवक्षातः पटशब्दस्योत्पत्ति[1]स्तथापि स्थानकरणाभिघातादेरेव साक्षात् करणात् तदुत्पत्तेर्व्यभिचाराभावान्नाहेतुकत्वं (।) यश्च घटविवक्षाजन्यं घटशब्दमवधारयति। तस्य पटशब्दात् पटविवक्षानुमानन्तदवधारणं च प्रकरणादिना लोकस्य विद्यत एवेति विवक्षानुमानेऽव्यभिचार एव।

**वक्तुर्विवक्षावृत्तित्वात् तन्नान्त[2]रीयकतया तयैव गमका स्युः। पुरुषस्य सर्वोऽप्यभीष्टोर्थः न तथा भूतोऽस्ति चेत् तत्रानाश्रितस्वभावस्य हि नान्यो गमकः।**

**अथ[3] "आप्तवादाविसंवादसामान्यादनुमानता" इति आगमस्य अनुमानतैवोक्ता सा कथमिति चेत्। नायं पुरुष आगमप्रामाण्यमनाश्रित्य असितुं समर्थः। अत्यक्षफलानां प्रवृत्तिनिवृत्त्योर्महानुशंसापापयोः श्रवणात्, तद्भावे विरोधादर्शनाच्च।**

**तस्मात् सति प्रवर्त्तितव्ये एवं प्रवृत्त इति परीक्षया प्रामाण्य[5]माह। तच्च।**

---

**यथाभावं** यथास्वलक्षणं। **यत** इति यथाभावं प्रवृत्तेः शब्देभ्योर्थ**प्रकृतिरर्थ**स्वभावो **नि[2]श्चीयेत**। **ते हीति** शब्दाः। विवक्षया वृत्तिर्येषान्ते तथोक्ताः। **तत्रान्तरीयका** विवक्षानान्तरीयकाः। **तामेव** विवक्षां। सैव विवक्षा स्वलक्षणमन्तरेण न भवति (।) अतोस्त्येव शब्दानामर्थाव्यभिचार इत्याह। **न चेत्यादि**। **यथार्थं** यथावस्तु भवितुं शीलं यासान्तास्तथोक्ताः। क्षीणदोषस्य कृपालोर्यथार्थभाविनी सर्वा इत्याह। अर्थेऽप्रतिबद्धोपि शब्दार्थं गम[3]यिष्यतीति चेदाह। **न चेत्यादि**। तस्मिन् वस्तुन्यप्रतिबद्धः स्वभावो यस्य शब्दलक्षणस्य। अन्यं यत्रासौ न प्रतिबद्धः।

यदि बाह्ये वस्तुनि शब्दस्य नास्ति प्रामाण्यं यत्तर्हीद**माप्तवादाविसम्वादसामान्यात्**। यो य आप्तवादः सोऽ**विसम्वादी**। यथा "क्षणिकाः सर्वे संस्कारा" इत्यादिकः। आप्तवादश्चायमत्यन्तपरोक्षेप्यर्थे तस्मादयमप्यवि[4]सम्वादीत्येवमाप्तवादस्याविसम्वादसामान्यादविसम्वादित्वादनुमानतेत्यागमस्य बाह्येर्थेनुमानत्व**मु**क्तमाचार्य दि ग्ना गे न।

**तत्कथ**मित्यनेनाभ्युपेतबाधामाह। **नाय**मित्यादिना परिहरति। एतत् कथयति (।) नाचार्येण भाविकं प्रामाण्यं कथयता अनुमानत्वमागमस्योक्तमपि तु पुरुषप्रवृत्तिमपेक्ष्य। यस्मा**न्नायम्पुरुषः** प्रवृत्तिकामः[5] **आगमप्रामाण्यमनाश्रित्यासितुं समर्थः**। किङ्कारणं। **प्रत्यक्षं** परोक्षं फलं येषान्तेषां केषांचित् **प्रवृत्तिनिवृत्त्योरिति** यथायोगं सम्बन्धः। हिंसादिचेतनाविषयाणां निवृत्तेः स्वर्गादिफलत्वेन **महानुशंसाश्रवणात्**। हिंसाचेतनाविशेषाणां प्रवृत्तेर्नरकादिफलत्वेन महा**पापश्रवणत्वात्**। न चात्र वस्तुबलप्रवृत्तमन्यत्प्रमाणं साधकम[6]स्ति येनागममनपेक्ष्यान्यतः प्रमाणम्प्रवर्त्तेत।

नापि बाधकमस्ति यतो निवर्त्तेत। बाधकाभावमेवाह। **तद्भाव** इति यथोक्ताभ्यां प्रवृत्तिनिवृत्तिभ्यामिष्टानिष्टस्य फलस्य भावे **विरोधादर्शनाच्च** इच्छति चायमागमवशेन प्रवर्त्तितुं तत् **सति प्रवर्त्तितव्ये**। (२१५–१६) ?

**सम्बद्धानुगुणोपायं पुरुषार्थाभिधायकम् ॥२१६॥**
**परीक्षाधिकृतं वाक्यं अतोऽनाधिकृतम्परम् ।**

**सम्बन्धो हि वाक्यानामेकस्मिन्नर्थ उपसंहारेणोपकारः । अन्यथा**[6] **वक्तुर्वैगुण्यमुद्भावयेत् ।** दश दाडिमादिवद् **असम्बद्धमेव । अशक्योपायफलानि** शास्त्राणि **न हि फलार्थी आद्रियेत् विचारयितुम् । अपुरुषार्थफलानि च । विषशमनार्थं तक्षक-चूडामण्यलंकरणोपदेशवत् । काकदन्तपरीक्षावच्च ।**

**तद्विपर्ययेणोपसंहारवत् शक्योपायं**[1], **पुरुषार्थवचनं शास्त्रं हि परीक्षयते । अन्यत्र अवधानस्यैव अन्याय्यत्वात् ।** तत् **परीक्षायां तस्मिन् अविसंवादभाजि** 485a

---

वर**मेवमागमम्परीक्ष्य प्रवृत्त** इत्यागमस्य **परीक्षया प्रामाण्यमाहा** चार्यः[7] । 141a
न च सर्वं शास्त्रं परीक्षयाधिकृतं । किन्तु **तच्चे**त्यादि शास्त्रं । पदार्थानाम्परस्पर**सम्बन्धात्** सम्बद्धं । अ**नुगुणः** साधयितुं शक्यः फलसाधनो**पायो** यस्मिंस्तदनुगुणोपायं सम्बद्धं च तदनुगुणोपायं चेति विशेषणसमासः । एवं भूतमपि यदि पुरु**षार्थाभिधायकन्तदा परीक्षाधिकृतं वाक्यं ।** अतो यथोक्तस्वभावादपरमन्यद्वाक्य**मनधि**[1]**कृतम्**परीक्षायां ।

**सम्बन्ध** इत्यादिना व्याचष्टे । **वाक्यानाम**ङ्गाङ्गिभावे**नैकस्मिन्नर्थे** विधेयप्रतिषेध्यलक्षणे **उपसंहारो** मीलनन्ते**नोपकारः** परस्परं वाक्यानां सम्बन्धः । अनुपकारकः पुनः केषामित्याह । **दश दाडि**मेत्यादि दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललमित्येवमादीनि वाक्यानि । न ह्येषामेकार्थोपसंहारोस्ति परस्परम[2]सम्बन्धात् । **अन्यथे**त्यसम्बद्धत्वे **वक्तुः** शास्त्रकारस्य **वैगुण्य**मसम्बद्धाभिधायित्व**मुद्भावयेत्** । अशक्योपायो येषां फलानन्तान्यशक्योपायानि । एवं भूतानि फलानि येषां शास्त्राणान्तानि । **फलार्थी** पुमान्नाद्रियेत **विचारयितुं** । एतच्चानुगुणोपायमित्येतस्य वैधर्म्येण विवरणं ।

पुरुषार्थः फलं येषां शास्त्राणां तानि तथोक्तानि । ततोन्यान्य**पुरु**[3]**षार्थफलानि** । तानि **च** नाद्रियेत विचारयितुं ।

अशक्योपायफलस्योदाहरणं । **विषे**त्यादि । एवं ह्यस्य विषं शाम्यति यदि **तक्षक**नागराजस्य कर्णावस्थितेन रत्नेनालङ्कारः क्रियत इति । एतच्चाशक्य**साधनं** ।

अपुरुषार्थफलस्योदाहरणं । **काकदन्तपरीक्षावच्चेति ।**

**तद्विपर्ययेण** तेषां यथोक्तानान्त्रयाणां विपर्ययेण**ोपसंहारवत्** । ए[4]तेन **सम्बद्ध**मित्येतद् व्याख्यातं । **शक्योपायमि**त्यनेनानुगुणोपायमिति । **अन्यत्रे**ति सम्बन्धादि-

**प्रवर्त्तमानः शोभते ।**[2]

**कः पुनरस्याविसंवादः ?—**

**प्रत्यक्षेणानुमानेन द्विविधेनाप्यबाधनं ॥२१७॥**

**दृष्टादृष्टार्थयोरस्याविसंवादः तदर्थयोः ।**

**प्रत्यक्षाभिमतानां अर्थानां तथाभावः प्रत्यक्षेणाबाधनम्**[3]।

**यथा नीलादिसुखदुःखनिमित्तोपलक्षणरागादीनां बुद्धीनां । अतथाभूतानां चाप्रत्यक्षता । यथा शब्दा**[4]**दिरूपसन्निवेशिनां सुखादीनां च । द्रव्यकर्मसामान्यादिवत् । तथा नागमापेक्षानुमानस्य विषयाभिमतानां तथा स्यात् । यथा चत्वारि**

---

त्रयरहिते। **अवधानस्यैवे**त्यादरस्य। **तदि**ति यथोक्तगुणत्रययुक्तं शास्त्रं **परीक्षायां** सत्यां न विसम्वादभाग् भवति। **तस्मिन्नविसम्वादभाजि** शास्त्रे **प्रवर्त्तमानः** पुरुषः **शोभते**।

**कः पुनरस्य** शास्त्रस्या**विसम्वाद** इत्याह। **प्रत्यक्षे**णेत्यादि प्रथमोर्थः श[5]ब्दो वस्तुवचनः। द्वितीयो विषयवचनः। तेनायमर्थः। दृष्टादृष्टयोर्वस्तुनोस्तदर्थयोः प्रत्यक्षानुमानविषययोर्यथाक्रमं प्रत्यक्षेणानुमानेन च द्विविधेन वस्तुबलप्रवृत्तेनागमाश्रितेन चाबाधनमस्य शास्त्रस्याविसम्वादः। (२१६–१७)।

**प्रत्यक्षे**त्यादिना व्याचष्टे। शास्त्रे **प्रत्यक्षाभिमताना**म्प्रत्यक्षत्वेनोपगतानाम**र्थानान्तथाभावः** प्रत्यक्षभा[6]वः **प्रत्यक्षेणाबाधनं**।

**यथे**त्यादिना स्वसिद्धान्ते प्रत्यक्षाभिमतमर्थं पञ्च**स्कन्ध**संगृहीतन्दर्शयति। **नीलादी**त्यनेन रूपादीन् पञ्च विषयानाह। अनेन च रूपस्कन्ध उक्तः। **सुखदुःखे** इति वे द ना स्कन्धः। **निमित्तस्य** स्त्रीपुरुषादिचिह्नस्यो**पलक्षणं** निमित्तोपलक्षणं। अनेन सं ज्ञा स्कन्धः। **रागादि**ग्रहणेन सं स्का र स्कन्धः। आदिशब्दाद् द्वेष[7]मोहादिपरिग्रहः। **बुद्धि**ग्रहणेन वि ज्ञा न स्कन्धः। नीलादि च सुखदुःखे च निमित्तोपलक्षणं च रागादि च बुद्धिश्चेति द्वन्द्वः। एवं शास्त्रे प्रत्यक्षाभिमतानां प्रत्यक्षत्वमेव। नीलादीनां चक्षुर्विज्ञानादिप्रत्यक्षत्वात् (।) सुखादीनां स्वसम्वेदनप्रत्यक्षत्वात्। **अतथाभिमतानां** चाप्रत्यक्षाभिमता(नां) चार्थाना**मप्रत्यक्षता** (।) प्रत्यक्षेणावधानमिति प्रकृतेन सम्बन्धः[1]। **यथे**ति विषयोपदर्शनं। शब्दादिरूपेण सन्निवेष्टुं शीलं येषां सुखादीनान्तेषामप्रत्यक्षता। शब्दादिस्वभावानां सुखदुःखमोहानां प्रत्यक्षेणाप्रतीतेः

एतत् सां ख्य दर्शनप्रतिक्षेपेणोक्तं।

वै शे षि का दि दर्शनप्रतिक्षेपेणाह। **द्रव्यं** द्विविधं। अद्रव्यं द्रव्यं यथाका-

141b

**आर्यसत्यानि**[5]। **तेषां अननुमेयानां तथाभावः, यथात्मादीनाम्। आगमापेक्षमनुमानमपि। रागादिरूपं तत्प्रभवं चाभ्युपगम्य तत्प्रहाणा**[6]**य स्नानाग्निहोत्रादेरनुपदेशवत्।**

**सेयं शब्दपरिच्छेदस्य अशेषस्य विषयस्य विशुद्धिः अविसंवादः।**

**आप्तवादाविसंवादसामान्यादनुमानता ॥२१८॥**

**बुद्धेर**[7]**गत्याभिहिता परोक्षेऽप्यस्य गोचरे। 485b**

**तस्यास्य एवंभूतस्य दोषक्षयस्य अविसंवादसामान्याद्, दृष्टव्यभिचारस्य**

---

शादि। अनेकद्रव्यं च द्रव्यं। यथावयवि द्रव्यं। **कर्मो**त्क्षेपणादिकं। **सामा**[2]**न्यं** सत्ता गोत्वादिकं (।) **आदि**शब्दाद् विभागादिपरिग्रहः।

न हि नीलादिविषयं पंच व्यतिरेकेणान्यस्य प्रत्यक्षतास्ति। तद्वयतिरेकेणानुपलब्धेः। **वस्तुबलप्रवृत्तमनुमानमनागमापेक्षानुमानं**। तस्य **विषयत्वेनाभिमतानान्तथा**भावोनुमानविषयभावोनुमानेनाबाधकं। **चत्वारि चा र्य सत्यानि**। उत्तरत्र प्रतिपादयिष्यते। **अननुमेयानान्त**[3]**थाभावो**ऽननुमेयत्वमनुमानेनाबाधनं। **यथात्मादीनाम्** (।) आदिशब्दात् प्रधानेश्वरादिपरिग्रहः। न ह्येषां किञ्चिल्लिङ्गमस्ति येनानुमेयाः स्युः। एतदपि प्रतिपादयिष्यति। विशुद्धे विषयद्वये ( ) ऽत्यन्तपरोक्षे चागमविषये पौर्वापर्यविरोधेन यस्मिन् चिन्तां प्रवर्त्तयति तस्मि**न्नागमापेक्षमनुमानमपि**। अबाधनमिति प्रकृतं।

कीदृशन्तदबाध[4]नमित्याह। **रागादिरूपं** रागद्वेषमोहस्वभाव**मधर्ममभ्युपगम्य तत्प्रभवं** रागादिसमुत्थापितं कायवाक्कर्म चाधर्ममभ्युपगम्य। **तत्प्रहाणाय** तस्याधर्मस्यापगमाय **स्नानाग्निहोत्रादेः**। तीर्थस्नानेन पापक्षयो भवति। यमुद्दिश्याग्नौ घृतादिकं हूयते तस्य पापक्षयो भवतीत्येवमादे**रनुपदेशः**। आदिशब्दादुपवासादिपरिग्रह[5]ः। तथा हि न स्नानादि पापमपनयति (।) पापनिदानेन रागादिना विरोधाभावात्।

**सेयम**नन्तरोक्ताप्रत्यक्षेणानुमानेन द्विविधेन **शक्यपरिच्छेदस्य** शक्यनिश्चय**स्याशेषस्य विषयस्य** बाधालक्षणा। तस्यास्तावदस्या विसम्वादाद् **सामान्यात्**। यथा शक्यपरिच्छेदेर्थे **आप्तवादस्याविसम्वाद**स्तथात्यन्तपरोक्षेपि आप्तवादत्वादेव। ततश्चाप्तवादलक्षणा[6]ल्लिङ्गादुत्पन्नाया अविसम्वाद**बुद्धेरनुमानता**चार्य दि ग्ना गे ना **भिहिता** (२१७–१८)

**परोक्षेप्यर्थस्य गोचर** इत्यत्यन्तपरोक्षेप्यस्य शास्त्रस्य गोचरे विषये। सा **चागत्या**भिहितान्येन प्रकारेणात्यन्तपरोक्षे प्रवृत्त्यसम्भवात्। सत्यां प्रवृत्तौ वरमेवं

**प्रत्यक्षानुमानगम्येऽर्थे प्रतिपत्तेः; तदाश्रयत्वात्,[1] तदन्यप्रतिपत्तिवत् अविसंवादेऽनुमेयम्।**

**ततः शब्दप्रभवाऽपि शाब्दवत् नाभिप्रायमेव निवेदयति। अविसंवादाद् अनु[2]मानमपि।**

**अथवा प्रकारान्तरेण क्लेशप्रहाणाविसंवादात् अनुमानमेव वक्तव्यम्।**

**हेयोपादेयतत्त्वस्य सोपायस्य प्रसिद्धितः ॥२१९॥**
**प्रधानार्थाविसंवादादनुमानं[3] परत्र वा।**

---

प्रवृत्त इति।

142a **तस्ये**त्यादि विवरणं। तस्यागमस्याचार्य दि ग्ना गे न निर्दिष्टानुमानभाव[7]स्य। **अस्ये**त्यस्माभि**स्सम्बन्धादनुगुणोपाय**मित्यादिना विचारितस्य। अत एवाह (।) **एवंभूतस्येति** सम्बन्धादिगुणयुक्तस्येत्यर्थः। प्रत्यक्षानुमानगम्ये तस्मिन् वस्तु**न्यविसम्वादसामान्याद**विसम्वादत्वात् कारणाद् **दृष्टव्यभिचारस्या**पवादस्य **प्रत्यक्षानुमानागम्येर्थे** विषये। आप्तवादादनुत्पन्नायाः **प्रतिपत्ते**र्बुद्धेरविसम्वादोनुमीयते। क[1]स्मात् (।) **तदाश्रयत्वा**दाप्तवादाश्रयत्वं चाचार्यपारम्पर्योपदेशात् सिद्धं। **तदन्यप्रतिपत्तिवत्**। अत्यन्तपरोक्षादन्यस्मिन् विषये प्रत्यक्षानुमानविषये प्रतिपत्तिवत्। **ततो** यथोक्तादाप्तवादा (द) त्यन्तपरोक्षेर्थे यथोक्तागमाश्रिता बुद्धिः **शब्दप्रभवापि** सती शब्दादुत्पन्नापि। **शाब्दवदिति** यथान्यः शाब्दः प्रत्ययोभिप्रायमात्रं[2] निवेदयति। **तथा** नेयं बुद्धि**रभिप्रायमेव निवेदयति**। एवकारस्य भिन्नक्रमत्वात्।

किन्तर्हीं[4]ष्टस्य प्रत्यक्षानुमानागम्यस्यार्थस्यानन्तरोक्तेन न्याये**नाविसम्वादादनुमानमपि** प्रवृत्तिकामस्य पुंसोभिप्रायवशात्। वस्तुतस्त्वननुमानं शब्दानामर्थैस्सह सम्बन्धाभावात्।

अस्यैवार्थस्य ख्यापनार्थोऽपिशब्दः प्रकारान्तरेणाप्त[3]वादाविसम्वादं दर्शयन्नाह। **अथवे**त्यादि। हेयं सर्वन्दुःखं। उपादेयं सर्व**क्लेशप्रहाण**न्निर्वाणं। तयोस्तत्त्वमविपरीतं रूपन्दुःखसत्यस्य निरोधसत्यस्य च। सह उपायेन यद् वर्त्तते हेयोपादेयतत्त्वन्तस्योपायं। **हेय**स्योपायः स मु द य सत्त्यं। उपादेयस्योपादेय (? यो) मार्गसत्यं। अस्य **हेयोपादेयतत्त्वस्य सोपायस्य** भ ग [4]व द्दर्शितस्य वस्तुबलायातेन प्रमाणेन **प्रसिद्धितो** निश्चयतः कारणात्। भगवद्वचने सत्त्यचतुष्टयलक्षणस्य प्रधानस्यार्थस्याविसम्वाद : (।) सत्त्यचतुष्टयलक्षणोर्थः प्रधानन्तदधिगमेन निर्वाणप्राप्तेः। तस्मात् **प्रधानार्थाविसम्वादात्**। भगवद्वचनादुत्पन्नं ज्ञानं **परत्राप्य-**

**हेयोपादेयोपायानां तदुपदिष्टानां वैपरीत्यमविसंवादः। यथा चतुर्णाम् आर्यसत्यानां वक्ष्यमाणया नीत्या। तस्यास्य पुरुषार्थोपयोगिनोऽभियोगार्हस्य**[4] **अविसंवादाद् विषयान्तरेऽपि तथात्वोपगमो न विप्रलम्भाय, अनुपरोधात्, वक्तुर्निष्प्रयोजनाभिधानवैफल्यात्।**

• **तच्च तदुभयथाऽपि अनवकाशं**[5] **आगमस्यानुमानत्वमेवोपवर्णितम्। आगमात् प्रवृत्तौ प्रवर्त्तितव्यम्। तथा चेद् न खल्वेवमनुमानमनपायम्। अर्थेषु "नान्तरीयकताभावाच्छब्दानां" इत्युक्तम्।**

**पुरुषातिश**[6]**यापेक्षं यथार्थमपरे विदुः ॥२२०॥**
**इष्टोयमर्थः शक्येत ज्ञातुं**[7] **सोतिशयो यदि।** 486a

**यथार्थदर्शनगुणयुक्तः पुरुषो निःक्लेशः, तेन प्रणयनं हि अविसंवाद इत्यन्ये। सर्व एव प्रेक्षापूर्वकारी प्रवृत्तिकामः आगमं अनागमं वाऽन्विष्यति न तु**

---

त्यन्तपरोक्षेप्यर्थे**नुमानम्वा** शब्दः पूर्वप्रकारापेक्ष[5] या विकल्पार्थः।

**तयोर्हेयोपादेययोरुपायौ तदुपायौ।** हेयं चोपादेयं च तदुपायौ चेति द्वन्द्वः। **तेषान्तदुपदिष्टानान्तेनाप्तेनोपदिष्टानाम्वैपरीत्यम**नुमानेन निरूप्यमाणानामवितथत्वम**विसम्वादः। यथा चतुर्ण्णा**न्दुःखादीना**मार्यसत्यानां** द्वितीये परिच्छेदे। **वक्ष्यमाणया नीत्या** विचारेण। **तस्यास्येति** भगवता[6] पूर्वनिर्दिष्टस्याधुना विभक्तत्वादस्य स त्य च तु ष्टयलक्षणस्य। किंभूतस्य **पुरुषार्थोपयोगिनः।** पुरुषार्थो निर्वाणं तत्रोपयोगः कारणत्वं स यस्यास्ति तथा। अत एवा**भियोगा**र्हस्याभ्यासार्हस्या**विसम्वादाद् विषयान्तरेपि** प्रत्यक्षानुमानागम्ये।[7] **तथात्वोपगम** इत्यविसम्वादोपगमो न विप्रलम्भाय। न विस[7]म्वादाय भवति। किं कारणम् (।) **अनुपरोधात्।** प्रमाणेनाबाधनात्। प्रधाने च सत्यचतुष्टयलक्षणेर्थे पुरुषमविसम्वाद्य पुनस्तृतीये स्थाने **वक्तुर्निष्प्रयोजनं** यद्वितथा**भिधान**न्तस्य **वैफल्यात्।** 142b

कदाचित् तत्राज्ञानादपि तथाभिधानं स्यादिति चेदाह। **तदित्यादि।उभयथा**पीति श्लोकद्वयनिर्दिष्टेन प्रकारेण। तदेत**दागमस्यानुमान**[1]**त्वम**गत्यो**पवर्ण्णितमिति** सम्बन्धः। अनुमानकारणत्वादनुमानमिति द्रष्टव्यं। **आगमात् प्रवृत्तौ** सत्याम्वरमेवंयुक्तादागमात् प्रवृत्तो न तु प्रमाणगम्य एवार्थे विसम्वादकादिति।

**न खल्वेव**मुक्तेनापि प्रकारेणागमाश्रये ज्ञान**मनुमानमनपायं** निर्दोषं। कस्माद् (।) अनान्तरीयकत्वादसम्वादत्वा**दर्थेषु** शब्दानामिति निवेदितमेत**न्नान्तरी**[2]**यकताभावाच्छब्दानाम्वस्तुभिः सहे** (१।२१३) त्यादिना (।) **पुरुषस्यातिशयाः**

**व्यसनेन। अपि नाम अतोऽनुष्ठेयं ज्ञात्वा प्रवृत्तः सन् अर्थवान् इति एवं शक्यदर्शनाविसंवादप्रत्ययत्वात्, तदन्यत्राऽपि प्रवर्त्तेत एवंप्रायत्वात् लोकव्यवहारस्य।**

## (१) पौरुषेयत्वे

### क. पुरुषातिशयप्रणीतं वचनं प्रमाणम्

**पुरुषपरीक्षया पुनः प्रवृत्तौ प्रवृत्तिरेव न स्यात्। तस्य तथाभू[2]तस्य ज्ञातुमशक्यत्वात् नानिष्टेः। तादृशां अवितथाभिधानात्।**

**तथा हि—**

**(अयमेवं) न वेत्यन्यो दोषानिर्दोषतापि वा ॥२२१॥**
**दुर्लभत्वा[3]त्प्रमाणानां दुर्बोधेत्यपरे विदुः।**

---

क्षीणदोषादिकत्वन्तमपेक्ष्यते यद्वचनन्तद् **यथार्थमपरे** वादिनो **विदु**र्जानीयुः। **यथार्थं** यथावस्तु व्यवस्थितन्तथैव दर्शनं ज्ञानं **यथार्थदर्शनं**। तदादिर्यस्य कृपावैराग्यादेस्त**द्यथार्थदर्शनादि**। स एव **गुण**स्तेन युक्तः **पुरुष** आप्तस्ते**न प्रणयन**न्तेनाप्तवच[3]नमागमस्या**विसम्वाद इत्यन्ये**। (२२०-२१)

**इष्ट** इत्यादि **सिद्धान्तवादी**। **योय**मनन्तरोक्तोर्थः स इष्टोस्माकं। किन्तु **शक्येत ज्ञातुं** पुरुषनैयम्येन **योतिशयो** यथा दर्शनादिलक्षणस्य तु शक्यः।

**सर्व एवेत्या**दिना व्याचष्टे। **सर्व एव प्रेक्षापूर्वकारी। आगममनागमम्वान्वेषते** निरूपयति। अनागमन्त्यक्त्वागमद्वारेण **प्रवृत्तिकामः**।[4] **न व्यसने**नासक्तिमात्रेण। प्रवृत्तिकामता**मपि नेत्या**दिनाह। **अपिनामे**ति कथन्नाम। **अत** इत्यागमा**दनुष्ठेयं** साक्षात् कर्त्तव्यमर्थं **ज्ञात्वा प्रवृत्तः सन्नर्थवान्** फलवान् **स्याम्भवेयमिति**। सोन्वेषमाणः पुरुषः **शक्यं दर्शनं** निश्चयो यस्मिन्नर्थे प्रत्यक्षानुमानगम्ये तस्या**विसम्वादः** प्रत्यक्षानुमानाभ्यामवधानं। स एव प्रत्ययोव[5]लम्बनन्तेना**न्यत्रापि** प्रत्यक्षानुमानागम्येप्यर्थे **प्रवर्त्तेत**। किं कारणम् (।) एवं**प्रायत्वाल्लोकव्यवहारस्य** (।) एवमित्येकदेशाविसम्वाददर्शनेनान्यत्र प्रवर्त्तनं। **प्रायो** बाहुल्येन यस्मिन् लोकव्यवहारे स तथोक्तः।

पुरुषपरीक्षया पुनः प्रवृत्तावभ्युपगम्यमानायां **प्रवृत्तिरेव न स्यात्**। किं कारणं (।)तस्य पुंस**स्तथाभूतस्य** यथार्थदर्शना[6] दिगुणयुक्तस्य। **नानिष्टे**रप्रवृत्तिरेव स्यादिति सम्बध्यते। तेनायमर्थो न पुनर्यथार्थदर्शनादिगुणयुक्तानां पुंसामवितथाभिधायित्वेनानिष्टेरप्रवृत्तिरेव स्यात्। किं कारणम्(।) **तादृशां** यथार्थदर्शनादिगुणयुक्तानाम**वितथाभिधानात्**। यथावस्थितवस्तुप्रकाशकवात्।

143a किं पुन कारणन्तथाभूतः पुमान् ज्ञातुमशक्य इत्याह।[7] **तथा ही**त्यादि। **अयं** पुमाने**वन्दोषवान्। न वा**। एवन्दोषवान्। किन्तु निर्दोष **इत्येवमन्यदोषानिर्दोषतापि**

**चैतसेभ्यो गुणदेशेभ्यो ये पुरुषाः (सम्यङ्मिथ्या)[१] प्रवृत्तयस्ते चातीन्द्रियाः स्वप्रभवकायवाग्व्यवहारानुमेयाः[२] स्युः। व्यवहा(रा)श्च प्रायशो बुद्धिपूर्वमन्यथापि कर्त्तुं शक्यन्ते (।) पुरुषेच्छावृत्तित्वात्(।)तेषां च चित्राभिसन्धित्वात् (।) तदयं लिङ्गसंस्कारात् कथमनिश्चिन्वन् प्रपद्येत।**

**अथ किन्नैवमेतादृशः पुरुषोस्ति यो निर्दोषः॥**

**सर्वेषां सविपक्षत्वान्निर्ह्रासातिशयाश्रिता॥ (२२२॥)**

---

**वा दुर्बोधेत्यपरे विदुः।** निर्दोषतेत्येतदपेक्षया दुर्बोधेत्येकवचनेन स्त्रीलिंगेन च निर्देशः। अन्यदोषा इत्येतदपेक्षया तु दुर्बोधा इति पुल्लिङ्गबहुवचनाभ्यां विपरिणामः कर्त्तव्यः। कस्माद् (।) दुर्बोधत्वाद् दुःप्राप्यत्वादन्य[1]गुणदोषनिश्चायकानां **प्रमाणानां** (।)

**चैतसेभ्य** इत्यादिना व्याचष्टे। **सम्यग् मिथ्या** च प्रवृत्तिः कायवाक्कर्मलक्षणा येषां पुसान्ते तथा। चेतसि भवाः चैतसा गुणदोषाः। चैतसेभ्यो गुणेभ्यः कृपावैराग्यबोधादिभ्यो हेतुभ्यः **सम्यक्प्रवृत्तयः** यथार्थप्रवृत्तयः। चैतसेभ्यो दोषेभ्यो रागादिभ्यो मिथ्याप्रवृत्तायो विपरीतप्रवृत्त[2] यो भवन्ति। **ते चे**ति परेषां चैतसा गुणदोषाश्चेतोधर्मत्वेना**तीन्द्रियाः**। ततो न प्रत्यक्षगम्याः। नाप्यनुमानगम्या अतीन्द्रियत्वादेव स्वभावलिङ्गस्यासिद्धेः। किन्तु **स्वस्माद्** गुणदोषरूपात् **प्रभव** उत्पादो यस्य **कायवाक्कर्मणः**। तेन कार्यलिङ्गेना**नुमेयाः**। तच्च नास्ति। यस्माद् **व्यवहाराश्च** कायवाक्कर्मलक्षणाः **प्रायशो** वा[3] बहुल्येन। **बुद्धिपूर्व**मिति कृत्वा प्रतिसंख्यानेना**न्यथापि कर्त्तुं शक्यन्ते**। तथा हि सरागा अपि वीतरागवद् आत्मानन्दर्शयन्ति। वीतरागाश्च सरागवत्। किं कारणं (।) **पुरुषेच्छावृत्तित्वाद्** व्यवहाराणां पुरुषेच्छया **वृत्तिः** प्रवृत्तिर्येषामिति विग्रहः।

यदि नाम पुरुषेच्छावृत्तयो व्यवहारास्तथापि किमित्यन्यथा क्रियन्त इत्याह। **तेषां चे**ति पुंसां **चित्राभि[4]सन्धित्वा**च्चित्राभिप्रायत्वात् ततो यथेष्टं व्यवहाराः प्रवर्त्तन्त इति नास्ति गुणदोषप्रभवाणां व्यवहाराणाम्विवेकनिश्चयः (।) **तदि**ति तस्माद**य**मनुमाता पुमान् **लिङ्गसंकरा**ल्लिङ्गव्यभिचारा**दनिश्चिन्वन्** क्षीणदोषः **कथ**मागमस्य कर्त्तारं **प्रतिपद्येत** नैवेति निगमनीयं।

**अथ किमि**त्यादि। **यो निर्दोषो** रागादिदोषरहितस्ता**दृशः पुरुषः किन्नैवा[5]स्ति**। अस्तीति प्रतिपादयन्नाह। **सर्वेषामि**त्यादि। प्रतिपक्षसम्मुखीभावे निर्ह्रासमपचयं

---

[1]The restored text from first page up to here.

[2] Bya-ba-dañ. smras-pao = **क्रिया-वचन**०

**सात्मीभावात्तदभ्यासाद्धीयेरन्नास्रवाः क्वचित्।**

**स तु प्रहीणाश्र(?स्र)वो दुर्ज्ञानः। दोषा हि निर्ह्रा[1]सातिशयधर्माणो विपक्षाभि(भ)वोत्कर्षापकर्षं साधयन्ति ज्वालादिवत्। ते हि विकल्पप्रभवाः सत्यप्युपादाने कस्यचिन्मनोगुणस्याभ्यासादपकर्षिणः। तत्पाटवे निरन्वयविनाशधर्माणः स्युः (।)**

---

प्रतिपक्षासम्मुखीभावे चातिशयमुपचयं श्रयन्ते ये रागादयस्ते **निर्ह्रासातिशयाश्रिताः**। तेषां **सर्वेषां विपक्षत्वात्**। यस्य च सम्मुखीभावासम्मुखीभावाभ्यां निर्ह्रासातिशयम्भजन्ते स एव तेषां विपक्षो बाधकस्तेन सह वर्त्तत इति सवि[6]पक्षः। तद्भावस्तत्त्वन्तस्मात्। स बाधकत्वादिति यावत्। येन च बाधकेन दोषाणां सविपक्षत्वन्तस्य **बाधकस्याभ्यासात्** पुनः पुनर्नैरन्तर्येणोत्पादनाद् य **सात्मीभावस्त**-दौर्ज्जित्यन्तन्मयता। **तस्माद्** बाधकसात्मीभावा**द्धीयेरन्**। क्षीयरेन्। **आस्रवा** 143b रागागदयः **क्वचित्** सन्ताने सात्मीभूतदोषप्रतिपक्षे दोषाणां च बाधकं नैरात्म्यज्ञानमिति प्रतिपादयिष्यति। तस्मान्न तथाभूतः पुरुषो नेष्यते एतावत्तु ब्रूमः **स तु क्षीणास्रवो दुर्ज्ञान** इति।

**दोषो ही**त्यादि विवरणं। **दोषा हि** रागादयः। किंभूता (।) **निर्ह्रासातिशयधर्माणः**। अपकर्षोत्कर्षस्वभावाः सन्तो **विपक्षाभिभवोत्कर्षं** विपक्षकृतो योभिभव[1]स्तिरस्कारस्तस्योत्कर्षापकर्षं **साधयन्ति** गमयन्ति। तेनायमर्थः (।) निर्ह्रासधर्माणः विपक्षाभिभवोत्कर्षं साधयन्ति **बाधकाभिभवो**त्कर्षेण दोषाणां निर्ह्रासात् अतिशयधर्माणो बाधकाभिभवापकर्षं साधयन्ति। बाधकाभिभवमान्द्येन तेषामतिशयधर्मत्वात्। **ज्वालादिवत्**। आदिशब्दाच्छीतोष्णस्पर्शादिपरिग्रहः। यथा ज्वालादयो बाधकस्योदकादेरुत्कर्षापकर्षे सति निर्ह्रासातिशयधर्माणो यथाक्रममुदकाद्यभिभवोत्कर्षं साधयन्ति तद्वत्।

ननु च बाह्यार्थप्रतिबद्धा रागादयः बाह्यं च वस्तु नित्यं सन्निहितमेव (।) तत्कथं रागादीनामुच्छेद इत्यत आह। ते हीत्यादि। हिशब्दो यस्मादर्थः। **ते** रागादयो **विकल्पप्रभवाः**। विकल्पादयोनिशोमनस्कारलक्षणात् प्रभव उत्पाद एषामिति विग्रहः। तथा ह्ययोनिशोमनस्कारमन्तरेण **सत्यपि** बाह्येर्थे नोत्पद्यन्ते रागादयः तत्सम्मुखीभावे च विनाप्यर्थेनोत्पद्यन्त इति विकल्पप्रभवा रागादयः। ततः सत्य**प्युपादाने** यथोक्तलक्षणे। अनादरविवक्षायां चेयं सप्तमी। **कस्यचित् मनोगुणस्य** नैरात्म्यदर्शनलक्षणस्या**भ्यासात्**। **अ[4]पकर्षिणः** अपचयवन्तो भवन्तीत्यर्थः।

एतदुक्तम्भवति। यद्यपि तावद् दोषनिदानस्य सर्वदा नोच्छेदः प्रतिपक्षस्यात्यन्तपाटवाभावात् (।) तथापि प्रतिपक्षाभ्यासात् मन्दीकृतसामर्थ्यादुपादानाद् अपकर्षिणः क्षामक्षामतरा दोषा भवन्तीत्यनेन च हेतुरुक्तः। यदा तु यथोक्तस्य

**ज्वालादिवत्** (।) **तेन स्यादपि नि(र्)दोषः** (। २२४)

**कथं निर्दोषो नाम** (।) **यावता दोषविपक्षसात्मत्वेपि दोषसात्मनो विपक्षोत्पत्तिवत्। यथा प्रत्ययं दोषोत्पत्तिरपि** (।) **नायं दोषः** (।) **यस्मात्** (।)

**नि[2]रुपद्रवभूतार्थस्वभावस्य विपर्ययै** (:॥२२३॥)

**न बाधा यत्नवत्त्वेपि बुद्धेस्तत्पक्षपाततः।**

---

मनोगुणस्य भावनाप्रकर्षपर्यन्तवर्त्तितया पाट[5]वं जातन्तदा **तत्पाटवे**। तस्य मनोगुणस्य पाटवे सति। अन्वयः क्लेशबीजमन्वेत्युत्पद्यतेऽस्माद्दोष इति कृत्वा (।) निर्गतोन्वयो यस्मिन् विनाशे स निरन्वयविनाशः (।) स धर्मो येषान्दोषाणान्ते **निरन्वयविनाशधर्माणः**। वासनया सह विनाशधर्माण इत्यर्थः। **ज्वालादिवत्**। यथा ज्वालादयः प्रतिपक्षस्योदकादेरुत्कर्षे सत्यत्यन्तविनाशधर्माणस्तद्वत्। प्रयोगः पुनः (।) ये यदुपधानादपकर्षिणस्ते तदत्यन्तवृद्धौ तदभिभवान्निरन्वयविनाशधर्माणः। तद्यथा ज्वालादयः सलिलाभिभववृद्धौ। नैरात्म्यदर्शनोपधानाच्चापकर्षधर्माणो दोषा इति स्वभावहेतुः।

यत एवन्तेन कारणेन **स्यादपि** कश्चि**न्निर्दोषः**। **कथमित्यादि** परः। **यावतेत्ययन्निपातो य[7]देत्यस्मिन्नर्थे वर्त्तते। **दोषसात्म**नो **विपक्षोत्पत्तिव**दिति 144a चानादिकालाभ्यासात्। दोषसात्मनः पुंसः विपक्षोत्पत्तिर्नैरात्म्यदर्शनोत्पतिः। एव**न्दोषविपक्ष**स्य नैरात्म्यदर्शनस्य **सात्मत्वेपि यथाप्रत्ययं**। **यथा**कारणसन्निधान**न्दोषोत्पत्तिरपि** स्यात्।

**नायमि**त्या चा र्यः। सर्वसांसारिकोपद्रव[1]रहितत्वान्निरुपद्रवः। भूतं विपरीतमनित्यादिस्वलक्षणमर्थो विषयोस्येति भूतार्थः। भूतार्थग्रहणादेव च मार्गश्चित्तस्वभावः। निरुपद्रवश्चासौ भूतार्थश्चेति **निरुपद्रवभूतार्थ**स्तथाभूतश्चासौ **स्वभाव**श्चेति कर्मधारयगर्भ एव कर्मधारयसमासः निरुपद्रवस्य भूतार्थस्य भूतार्थत्वेनाभ्यासात् सात्मीभावगते (।) अनेन च चित्त**स्वभाव[2]स्य** दोषप्रतिपक्षस्य **विपर्ययै**र्यथोक्तात् त्रयाद् विलक्षणैः सोपद्रवैरभूतार्थैरस्वभावैश्च दोषै**र्न बाधनं**। सात्मीभूतं मार्गमभिभूय न दोषाणामुत्पत्तिरित्यर्थः। किङ्कारणं (।) **यत्नवत्त्वेपीत्यादि**। एतदाह। सात्मीभूतस्य मार्गस्य दोषोत्पादनाय यत्न एव न सम्भवति।

तथाप्यभ्युपगम्योच्यते (।) दोषोत्पादने यत्नवत्त्वे **बुद्धेस्तत्पक्षपाततः।** तस्मि[3]न् दोषप्रतिपक्षभूते गुणवति नैरात्म्यमार्गे। पक्षपातेन बहुमानतः। दोषो-

---

[1] Bam-po bdun-pa-**सप्तममान्हिकम्**।

**न हि स्वभावोऽयं तेन विना निवर्त्तयितुं शक्यः। श्रोत्रियकापालिकघृणावत्। यत्नश्च प्राप्यनिवृत्तयोः स्वभावयोर्गुणदोषदर्शनेन क्रियेत। तच्च विपक्षसात्मनः पुरुषस्य दोषेषु न संभवति। तस्य निरुपद्रवत्वाद् (।)**

**अशेषदोषहानेः। पर्यवस्थानजन्मप्रति[3]बद्धदुःखप्रविवेकात् प्रशमसुखरसस्यानुद्वेजनाच्चाभूतार्थं खल्वप्युपादानबलभाविसन्तानस्य विपर्ययोपादानान्न स्यात् न भूतार्थं (।) वस्तुबलोत्पत्तेः (।)**

---

त्पादने यत्नन्निवर्त्त्यं। गुणपक्षपातेन दोषप्रतिपक्ष एव यत्नाधानादिति यावत्।

स्वभावपदमेव तावदादौ व्याचष्टे। **न हि स्वभावो** नैरात्म्यदर्शनलक्षणः प्रतिपक्षसात्मनि व्यवस्थितेन पुरुषेण। **अयन्तेन** प्रयत्नेन **विना निवर्त्तयितुं शक्यः श्रोत्रि[4]यकापालिकघृणावदि**ति। यः श्रोत्रियः सन् कापालिको भवति तस्य श्रोत्रियावस्थायां या घृणा सा यथा यत्नमन्तरेण न शक्यते निवर्त्तयितुन्तद्वत्। मार्गस्वभावनिवर्त्तनाय **यत्नश्च** क्रियमाणः। **प्राप्य**स्य रागादिस्वभावस्य **गुण**दर्शनेन **निवर्त्त्य**स्य विपश्यनास्वभावस्य **दोषदर्शनेन क्रियेत**। **तच्च** दोषदर्शनं **विपक्षसात्मनः** दोषप्रति[5]पक्षसात्मनः **पुंसो** दोषप्रतिपक्षे**न सम्भव**ति। तथा तच्च गुणदर्शनम्विपक्षसात्मनो **दोषेषु** न सम्भवति।

कस्मात् पुनः प्रतिपक्षे दोषदर्शनन्न सम्भवतीत्याह। तस्येत्यादि। **तस्य** प्रतिपक्षस्य **निरुपद्रवत्वात्**। त्रिविधो ह्युपद्रवो यस्याभावान्निरुप्रद्रवो मार्गः। तथा हि चित्तम्विबद्धं हेतुर्दोषोपद्रवो यैश्चित्तम्विवद्धम्भूतार्थदर्शने न प्रवर्त्तते।[6] कायचित्तव्यथाहेतुर्दुःखदौर्मनस्योपद्रवः। सास्रवसुखस्याप्रशान्ततया तदुपभोगे **वै**रस्योद्वेगश्च।

तत्र प्रथमस्योपद्रवस्याभावमाह। **सर्वदोषहाने**रिति। सर्वस्य रागादिदोषस्य हानेर्विगमात्।

**पर्यवस्था**नेत्यादिना द्वितीयस्याभावमाह। रागादिसम्मुखीभावः पर्यवस्थानं च जन्म च **पर्यवस्थानजन्म**नी।[7] तयोर्यत्**प्रतिवद्धन्दुःख**न्तस्य **विवेकात्**। रागाद्युत्पत्तिकाले यद् दुःखं कायचित्तपरिदाहलक्षणन्तत्पर्यवस्थानप्रतिबद्धजातिजराव्याध्यादिदुःखन्तु जन्मप्रतिबद्धं।

144b

ततीयस्योपद्रवस्याभावमाह। प्रशमेत्यादि **प्रशमो** रागादिविरहलक्षणं निर्वाणं। तस्मिन् यत्**सुख**मनास्रवन्तस्य **रस** अस्वादस्तस्**यानुद्वेजनात्**। अवैमुख्यकरणात्। **अभूतार्थ**मभ[1]तविषयं **खल्वपि** रागादि। न स्यादिति सम्बन्धः।

यद्यभूतार्थं कथन्तर्हि तस्योत्पत्तिरित्याह। **उपादानबलभावी**ति वितथविकल्प-

**अभूतार्थश्च दोषा न प्रतिपक्षसात्म्यवाचिनः। तस्मात् पुनर्न दोषोत्पत्ति(र्) यत्नेपि बुद्धेर्गुणपक्षपाते (न) प्रतिपक्ष एव यत्नाधानात् परीक्षावतो विशेषेणादुष्टात्मनः।**

*ख. सत्कायदर्शनं दोषकारणम्*

**कः पुनरेषां दोषाणां प्रभवो यत्प्र[4]तिपक्षाभ्यासात् प्रहीयन्ते॥**

**सर्व्वासां दोषजातीनां जातिः सत्कायदर्शनात्। (।२२४॥)**
**साविद्या तत्र तत्स्नेहस्तस्माद् द्वेषादिसम्भवः।**

**न हि नाहं न ममे ति पश्यतः परिग्रहमन्तरेण क्वचित् स्नेहः। न चाननुरा-**

---

वासनाबलभावि। तदेवंभूतरागादिबीजाश्रयस्य विज्ञान**सन्तानस्य विपर्ययोपादानात्** रागादिविपर्ययलक्षणस्य प्रतिपक्षस्य परिग्रहान्न स्यान्नोत्पद्येत। न तु **भूतार्थम**विपरीतविषयं **न** भवेत्। किन्तु भवे[2]देव। किं कारणम् (।) **वस्तुबलप्रवृत्तेः**। यथावस्थितवस्तुसामर्थ्येनोत्पत्तेः। दोषसात्म्येपि तावत् स्थितस्य। प्रमाणान्यनित्यादिभताकारग्राहीणि। प्रतिपक्षमार्गमावहन्ति। (२२२–२३)

किं पुनर्विपश्यना सात्मनि स्थितस्य। अ**भूतार्थश्च** दोषा रागादयः। आत्मात्मीयाध्यारोपितेर्थे प्रवृत्तेः। ते **प्रतिपक्षस्य** भूतार्थस्य यत् **सात्म्यं** स्वभावत्वन्तस्य **वा[3]चि**नो न भवन्ति। यत एवन्**तस्मान्न पुनः** प्रहीणदोषाणां **दोषोत्पत्तिः**। दोषोत्पादन**यत्नेपि बुद्धेर्गुणपक्षपातेन** कारणेन रागादि**प्रतिपक्ष एव यत्नाधानात्** प्रयत्नस्य करणात्। कस्य **परीक्षावतो** युक्तया विचारकस्य दोषसात्म्येपि तावत् स्थितस्य। **विशेषेणा**तिशयेन गुणेष्वेव यत्नाधान**मदुष्टात्मनः** प्रतिपक्षसात्मनि स्थितस्य[4]।

**कः पुनरेषान्दोषाणां प्रभव** उत्पत्तिकारणं। प्रभवत्युत्पद्यतेस्मादिति कृत्वा। **यस्य** दोषहेतोः **प्रतिपक्षाभ्यासेन प्रहीयंते**।

उत्तरमाह। **सर्वासामि**त्यादि। **दोषजातीना**न्दोषप्रकाराणां **जाति**रुत्पत्तिः **सत्कायदर्शनात्**। आत्मात्मीयाभिनिवेशात्।

ननु चाविद्याहेतुकाः क्लेशा आगमे उक्तास्तत्कथं न व्याघात इत्याह। **साऽविद्ये**ति सैव[5] **सत्कायदृष्टि**रविद्या। ततो नास्ति विरोधः। केन पुनः क्रमेण दोषाणां सत्कायदर्शनादुत्पत्तिरित्याह। तत्रेत्यादि। **तत्रा**त्मात्मीयत्वेनाभिनि(वि)ष्टे विषये। **तत्स्नेहः**। आत्मात्मीयस्नेहः। **तस्मा**दात्मात्मीयस्नेहात् **द्वेषादिसम्भव** इति क्रम :।

**न ही**त्यादिना व्याचष्टे। **नाह**मित्यात्माकारप्रतिषेधः। **न ममे**त्यात्मीयाकारस्य। अनात्माकारेण नात्मीयाकारेण च **पश्यतः** पुरुषस्य। **परिग्रहमन्तरेणे**ति।

**गिणः क्वचिद् द्वेषः। आत्मात्मीयानुपरोधिन्युपरोधप्रतिघातिनि च तदभावात्। तस्मात् समानजातीयाभ्यासजमात्मदर्शनमात्मीयग्रहं प्रसू[5]ते। तौ च तत्स्नेहं स द्वेषादीनिति। सत्कायदर्शनजाः सर्वदोषाः। तदेवाज्ञानमित्युच्यते।**

**मोहो निदानं दोषाणामत एवाभिधीयते ॥ (२२५॥)**
**सत्कायदृष्टिरन्यत्र तत्प्रहाणे प्रहाणतः।**

**मोहं दोषनिदानमाह (।) अमूढस्य दोषानुत्पत्तेः। पुनरन्यत्र सत्कायदृष्टिः। तच्च तत् प्रधाननिर्देशे सति स्यादनेकजन्मता दोषाणां[6] एकोत्पत्तिविरो(धा)त्। न**

---

आत्मात्मीयत्वेन तदनुग्राहकत्वेन परिकल्प्य ग्रहः तेन विना **न क्वचित्** विषये **स्नेहः**। **न चाननुरागिणः** आत्मात्मीयादिस्नेहरहितस्य **क्वचिद् द्वेषः**। अनुनय-मन्तरेण तस्याभावात्। किङ्कारणम् (।)आ[7]**त्मात्मीये**त्यादि। **आत्मात्मीययो-रनुपरोधिन्य**प्रतिकूलवर्त्तिनि। उदासीनपक्षे। **तदभावात्** तस्य द्वेषस्याभावात्। उपरोध**प्रतिघातिनि** चेति। आत्मात्मीयत्वेन गृहीतस्य य उपरोधः पीडा। तत्**प्रतिघातिनि** तत्प्रतिषेधं कुर्वति। मित्रपक्षे **तदभावात्**। द्वेषाभावात्। किंत्वा-त्मात्मीयस्नेहविषयभूतविरोधेन। यः स्थितः प्र[1]तिकूलवर्त्ती। तत्रैव द्वेषः। **तस्मा-**न्नात्मात्मीयस्नेहमन्तरेण द्वेष इति। **तस्मा**दित्यादिना निगमनं। यत एवन्त**स्मात्तौ चे**ति। **आत्मदर्शना**त्मीयग्रहौ। **स्नेहं प्रसुवाते** इति वचनविपरिणामेन सम्बन्धः। **स** च स्नेहो **द्वेषादीन् प्रसूते** जनयति।

(145a)

तयोस्तर्ह्यात्मदर्शनात्मीयग्रहयोः को हेतुरित्याह। **समाने**त्यादि। **समान-जातीय**न्त[2]देवात्मदर्शनन्तस्या**भ्यासः** पौनःपुन्येनादिकालमुत्पत्तिः। तद्वासना च। तस्माज्जा**तमात्मदर्शन**मात्मीयग्रहं प्रसूते। तस्मात् **सत्कायदर्शनजाः सर्वे क्लेशाः**। (२२३–२४)

**तदेव** च सत्कायदर्शनम**ज्ञान**मविद्येत्युच्यते सिद्धान्ते।

येनैव सत्कायदर्शनमेवाऽविद्याऽ**त एव** कारणात् **मोहोनिदानं** प्रधानकारण-**न्दोषाणां** रागादीना**मभिधीयते**[3] सूत्रान्तरे[1]—"अविद्याहेतुकाः सर्वक्लेशा" इति **सत्कायदृष्टि**र्दोषाणां निदान**मन्यत्र** सूत्रान्तरेभि धीयते। कस्मात्। **तत्प्रहाणे** सत्कायदृष्टेः प्रहाणे दोषाणां **प्रहाणतः**। "**मोहन्दोषनिदानं**" दोष कारणमाहुर्बुद्धा भगवन्तः। कस्माद् (।) **अमूढस्या**ज्ञानरहितत्य **दोषानुत्पत्तेः पुनरन्यत्र** प्रदेशे **सत्कायदृष्टि**न्दोषनिदानमाहुः। **तच्चैत**[4]**त्का**रणत्वं मोहस्य सत्कायदृष्टेश्च **प्रधान-**

---

[1] **बुद्धवचने**

**च द्वयोः प्राधान्ये एकैकनिर्देशः परभागभाक्। उभयथाप्येकस्य निर्देशे न विरोधः। प्राधान्यं पुनस्तदुपादानत्वेन। तत्प्रहाणे दोषाणां प्रहाणात्। तस्मात् सम्भवति सत्कायदर्शनजन्मनां दोषाणां तत्प्रतिपक्षनैरात्म्यदर्शनाभ्यासात् प्रहाणं।**

## ७—अपौरुषेय-चिन्ता

### (१) सामान्येन निरासः

**गिराम्मिथ्यात्वहेतूनां दोषाणां पुरुषाश्रयात्॥ (२२६॥)**
**अपौरुषेयं सत्यार्थमिति केचित् प्रचक्षते।**

---

हेतु**निर्देशे सति स्यान्न** हेतुमात्रनिर्देशे। किं कारणम् (।) **अनेक**स्मादिन्द्रियविषयोऽयोनिशोमनस्कारकलापाज्जन्म येषान्दोषाणान्तेषा**मेक**स्मात् मोहात् सत्कायदृष्टे**श्चोत्पत्तिविरोधात्**। तस्मादन्यकारणसम्भवेपि प्राधान्यं गृहीत्वा मोहसत्कायदृष्टयोः कारणत्वमुक्तमिति गम्यते।

यदि चान्यो मो[5]होन्या च सत्कायदृष्टिस्तयोश्च प्राधान्यन्तदा **न च द्वयो**र्मोहसत्कायदृष्टयोः **प्राधान्ये** सत्ये**कैकनिर्देशः**। क्वचित् मोहस्यैव निर्देशः क्वचित् सत्कायदृष्टेरेवेत्यर्थः। न **परभागभाक्** शोभाभाक् वक्तुरकौशलमेवावहतीति यावत्। यदा पुनरनयोर्न स्वभावभेदः। तदा मोहशब्देन सत्कायदृष्टिशब्देन **चोभयथाप्येकस्यार्थ**स्य पर्यायेण **निर्दे[6]शेन न विरोधः** प्राधान्यस्य। **प्राधान्यं पुन**स्सत्कार्यदर्शनस्य **तदुपादानत्वेन** दोषाणामुपादानत्वेन(।) तच्चानन्तरमेव प्रतिपादितं। प्रतिपादयिष्यते च द्वितीये परिच्छेदे।

**तस्य** च सत्कायदर्शनस्य **प्रहाणे** सति **दोषाणां प्रहाणतः** प्राधान्यं। यत एवन्**तस्मात् सम्भव**ति **सत्कायदर्शनाज्जन्म** येषान्**दोषाणा**न्तेषां तस्य सत्कायदर्शनस्य **प्रति[7]पक्षो नैरात्म्यदर्श**नन्तस्या**भ्यासात् प्रहाणं**। 145b

**स च क्षीणदोषः** पुमानौद्देशिको **दुरन्वयो** दुर्बोधो **यदुपदेशाद्** यस्य क्षीणदोषस्योपदेशा**दयं** प्रवृत्तिकामः **प्रतिपद्येत**। तेनोपदिष्टमर्थमनुतिष्ठेत् ॥०॥ (२५) .

**मा भूत् पुरुषाश्रयं** पुरुषहेतुकम्**वचनमागमः**। किं कारणम (।) अनन्तरोक्तेन न्यायेनागम**प्रणेतुर्दुरन्वयत्वात्**। दुर्बोधत्वात्।

**गिराम्**वचसां **मिथ्यात्वस्य** मृषार्थत्वस्य ये **हेतवो दोषा** रागादयस्**तेषां**(।) कर्त्तरि चेयं षष्ठी। आश्रयणमाश्रयः। **पुरुषस्याश्रय** इति समासः। पुरुषशब्दाच्च कर्मणि षष्ठी। न चोभयप्राप्तौ कर्मणीति नियमः। शेष विभा[8]षेति विकल्पनात्।

**स तु क्षीणदोषो दुरन्वयो यदुपदेशाद[7]यं प्रतिपद्यते। मा भूत् पुरुषाश्रयं वचनमागमः प्रणेतुर्दुरन्वयात्।**

---

तेनायमर्थो(।) मिथ्याहेतुभिर्दोषैः पुरुषपरिगृहीतत्वादिति।

अथवा दोषाणा[2]मिति कर्मणि षष्ठी दोषाणां पुरुषेणाश्रयात् परिग्रहात्।

**अपौरुषेयम्वचस्सत्यार्थम्मिथ्यात्वहेतोर्दोषस्याभावादिति केचित्** मी मां स का **श्चाचक्षते।**

एतदुक्तम्भवति। त्रिविधमप्यप्रामाण्यम्मिथ्यात्वाज्ञानसङ्शयलक्षणे वादे नास्त्येव। यतः शब्दानां द्विविधः स्वभावो निसर्गसिद्ध औपाधिकश्च तत्र निसर्गसिद्धो यो यथार्थप्रतिपादकत्वम् (।) अयथार्थप्रतिपादकत्वं पुन[3]रौपाधिकः। स्वभावः पुरुषाधीनत्वात्। तदाह।

"शब्ददोषोद्भवस्तावद् वक्त्र्यधीन इति स्थितं।
तदभावः क्वचित् तावद् गुणवद्वक्त्रृकत्वतः। (६२)
तद्गुणैरपकृष्टानां शब्दे संक्रान्त्यसम्भवात्।
यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रया" इति[1] (६३)

तेन वे दे पुरुषनिवृत्तौ मिथ्यात्वनिवृत्तिः। नाप्यनुत्पतिलक्षणमप्रामाण्यम्वेदादर्थावगतेः। नापि सं[4]शयलक्षणमप्रामाण्यं वेदादर्थगतौ संशयस्याप्रतिभासनात्। तदाह।

"एवंभूतस्य वेदस्य ज्ञानोत्पत्तिं च कुर्वतः।
स्वरूपविपरीतत्वसंशयौ भाष्यवारिताविʼʼति ॥[2]

यतश्चाप्रामाण्यं त्रयन्निवृत्तं। निसर्गसिद्धश्च ययार्थप्रतिपादनलक्षणः स्वभावो वेदस्यास्ति तस्मात् स्वत एवास्य प्रामाण्यमर्थप्रतिपादकत्वात। यतश्च शब्दे व[5]क्तृदोषेण बाधदुष्टकारणत्वलक्षणस्य दोषस्य सम्भवस्तेन वेदे पुरुषनिवृत्तौ दोषनिवृत्तेः स्वतः। प्रामाण्यापवादकयोर्बाधकारणदुष्टत्वज्ञानयोर्निवृत्तेर्नाप्रामाण्याशङ्का। तदाह।

[1] "तत्रापवादनिर्मुक्तिर्वक्त्र्यभावाल्लघीयसी।
वेदे तेनाप्रमाणत्वं नाशङ्कामपि गच्छति। (६८)
प्रामाण्यं पौरुषेये तु प्रमाणान्तरभावतः।

---

1. Ślokavārtika, Choda. 2. Ibid.

**न खलु सर्व एवागमः संभाव्यविप्रलम्भो विप्रलम्भहेतूनां दोषाणां पुरुषाश्र-याद् (।) अपौरुषेयं सत्यार्थमित्येके। कारणाभावो हि कार्यभावं साधयतीति। एवंवादिनः तानेव**[8] **प्रति।**

१. पूर्वपक्षनिरास :—

**गिरां सत्यार्थहेतूनां गुणानां पुरुषाश्रयाद् ॥ (२२७॥)**

**अपौरुषेयं मिथ्यार्थं किन्नेत्यन्ये प्रचक्षते।**

---

तदभावे तु तद्दृष्येद् वैदिकं न कदाचन।
तेनेतरप्रमाणैर्या चोदनानामसंगतिः।
तयैव स्यात् प्रमाणत्वमनुवादत्वमन्यथा।
चोदनार्थान्यथाभावं कुर्वतश्चानुमानतः।
तज्ज्ञानेनैव यो बाधः स कथं विनिवार्यते। (८६)
तन्मिथ्यात्वादबाधश्चेत् प्राप्तमन्योन्यसंश्रयं।
नानुमानादतोन्यद्धि बाधकं किंचद[7]स्ति ते।" (६०) 146a

न चान्याप्रमाणैर्वेदार्थस्याग्रहेऽभावो रसादिवत्। अथ रसादेरपरया रसबुद्धया ग्रहात् पूर्विकाया रसबुद्धेः प्रामाण्यम्वेदार्थेप्येवम्भविष्यति। तदाह॥

"न चान्यैरग्रहेर्थस्य स्यादभावो रसादिवत्।
तद्धियैवार्थबोधश्चेत्तादृग्धर्मे भविष्यति।
ममासिद्धमितीदं चेद् वेदाज्जातेऽवबोधने।
वक्तुन्न द्वेषमात्रेण युज्यते सत्यवादिने"ति। (६१,६२)

**न खल्वित्यादिना** कारिकार्थमाचष्टे। **सर्व एवेति** पौरुषेयो[1]ऽपौरुषेयश्च। **सम्भाव्यविप्रलम्भः** सम्भाव्य अशंकनीयो विप्रलम्भो विसम्वादोस्येति। किन्तु पौरुषेय एव सम्भाव्यविप्रलम्भः। **विप्रलम्भहेतूनां** विसम्वादहेतूनान्**दोषाणां पुरुषाश्रयात्**। (२२७)

यत्पुन**रपौरुषेयन्तत्सत्यार्थमित्येके**। यस्माद् वेदेषु मिथ्यात्व**कारण**ानां पुरुषा-**णामभावः कार्यस्य** मिथ्यात्वस्या**भावं** साधयतीत्यपौरुषेयं सत्यार्थमिति[2] (।)

य **एवम्वादिन**स्तानेव मीमांसकान् **प्रत्यन्ये प्रचक्षते**। परमुखेन (? न) शास्त्रकार एवाह। **गिरां सत्त्यत्वस्य ये हेतवो गुणास्तेषां पुरुषाश्रयाद**पौरुषेयेषु वाक्येषु पुरुषनिवृत्त्या सत्त्यत्वकारणस्य गुणस्य निवृत्तेः कार्यस्यापि सत्त्यत्वस्य निवृत्तिरित्य**पौरुषेयम्वाक्यं मिथ्यात्वं किन्न** भवति।

(१) एतदुक्तम्भवति। शब्दे सत्यत्त्वमिथ्यात्वयोः पुरुषायत्तत्वा[3]द् यदि

पुरुषनिवृत्तौ सत्यार्थत्वमिष्यते मिथ्यार्थत्वं किन्नेष्यत इत्युच्यते। परमार्थतस्तु पुरुषनिवृत्त्या सत्यार्थत्वमिथ्यार्थयोर्निवृत्तेरानर्थक्यादनुत्पत्तिलक्षणमेवाप्रामाण्यं। तेन (।)

"ममासिद्धमितीदं चेद् वेदाज्जातेवबोधने।
वक्तुन्न द्वेषमात्रेण युज्यते सत्यवादिने"ति। (६२,६३)
निरस्तं। वेदात् स्वभावतोर्थावबोधस्यानुत्पत्तेः।

(२) किञ्च (।) वर्णानामवाचक[4]रूपत्वं प्रत्येक समस्तानां चावाचकत्वाद् वर्णरूपश्च वेद इति कथमतोर्थज्ञानं।

नन्वगृहीतसमयस्यापि वाक्यादुच्चारितात् कोप्यर्थोनेनोक्त इति सन्देहो दृश्यते।

स चैवं स्याद यद्यर्थप्रतिपादने शब्दस्य स्वभावेन शक्तिः स्यात्। एवन्तर्हि सन्देहलक्षणमस्याप्रामाण्यं स्यात्। इष्टेनिष्टेचार्थे प्रकाशनशक्तिसम्भवात्। यदि चास्य स्वभाव[5]त एव सा शक्तिः किं संकेतेन। यथा दीपस्यार्थप्रकाशने शक्तस्येन्द्रियापेक्षा तथा शब्दस्यापि संकेतापेक्षेति चेत्। न। प्रदीपेन्द्रिययोः प्रत्येकमभावेप्यर्थप्रकाशकत्वाभावात्। तत्रान्योन्यापेक्षत्वं युक्तं। नैवं शब्दशक्ति-संकेतयोः। संकेतमात्रेणैवार्थप्रतीतेरुत्पत्तेः। तस्मान्न स्वभावतः शब्दोर्थप्रतिपादन-समर्थ इत्यु[6]त्पत्तिलक्षणमप्रामाण्यम्।

(३) नन्वग्निहोत्रञ्जुहुयात् स्वर्गकाम इत्यादि वाक्येष्वग्निहोत्रादेः स्वर्गादिसाधनोपायत्वं प्रतीयत एवेति कथमनुत्पत्तिलक्षणमप्रामाण्यं।

सत्यमेतत् (।) केवलं प्रतीतिर्ह्यप्रतीतेर्बाधिका। न तु मिथ्यात्वस्य। तस्यापि प्रतीते:। तेन किमेभिर्वाक्यैरग्निहोत्रादिः स्वर्गसाधनानुपाय एवोपायतया 146b प्रद[7]र्श्यतेऽथोपाय एवेति मिथ्यात्वाशंका न निवर्त्तत एव। बाधकप्रमाणाभावा-दपौरुषेयत्वस्य मिथ्यार्थत्वेन सह विरोधाभावच्च। दृष्टश्चापौरुषेयाणाम्वितथ-ज्ञानहेतुत्वं। तद्यथा ज्योत्स्नादीनां शुक्लवस्त्रादौ पीतज्ञानहेतुत्वं। तेन चोदनार्था-न्यथाभावोनुमानतः क्रियत इति कथन्तज्ज्ञानेन बाधा। रसादिज्ञानानान्तु तृप्त्यादि-कार्याविसम्वादा[1]देव प्रथमं प्रामाण्यनिश्चयादन्यदा त्वभ्यासादिना स्वत एव प्रामाण्यनिश्चयो युक्त इति न मिथ्यात्वाशङ्का। वेदे तु नैव कदाचिदप्यविसम्वादः प्रतिपन्न इति कथमन्यदापि स्वतः प्रामाण्यनिश्चयः। तेन सत्यपि विज्ञाने प्रति-भादेर्यथैव हि स्वातन्त्र्यान्न प्रमाणत्वं तथा वेदेपि दृश्यतां।

(४) किंच (।) चोदनार्थज्ञानस्याविद्यमानोपलम्भन[2]रूपत्वात् मिथ्यात्वं। तथा

**यथा रागादिपरीतः पुरुषो मृषावादी दृष्टस्तथा दयाधर्मतादियुक्तः सत्यवाक्। तद्यथा वचनस्य पुरुषाश्रयात् मिथ्यार्थता। तथा सत्यार्थतापीति। स निवर्त्तमान-स्तामपि निवर्त्तयतीत्यानर्थक्यं स्यात्। विपर्ययो वा। न हि शब्दाः प्रकृत्यार्थवन्तः समयात् ततोर्थख्यातेः। कायसं[1]ज्ञादिवत्। अप्रातिकूल्यन्तु योग्यता (।) समये तदिच्छाप्रणयनात्। निसर्गसिद्धेष्विच्छावशात् प्रतिपादनाऽयोगात्। तेऽन(र्थ)काः**

---

हि कार्येर्थे वेदस्य प्रामाण्यमिष्यते। कार्यश्चार्थानुष्ठेय एव, स च भावित्वेनाविद्य-मानत्वान्न चोदनाज्ञानकालभावीति। तत्कथमविद्यमानविषयत्वाच्चोदनाज्ञानस्य न मिथ्यात्वं। सर्वविकल्पानां च पूर्वमवस्तुविषयत्वस्य प्रतिपादितत्वात् तेनापि चोदनाज्ञानस्य मिथ्यात्वमेव। किं च। लोकवेदयोर्वर्णाः पदानि चाभि[3]न्नान्येव वाक्यभेदस्तु केवलमिष्यते। लोके च पदानामर्थः संकेतवशात्। लौकिकपदार्थश्च वैदिकानां पदानान्तेन पौरुषेय एवार्थसम्बन्धः। लौकिकपदार्थद्वारेण च वैदिक-वाक्यार्थावगमो भवतीति पौरुषेय एवासौ लौकिकवाक्य इव। लोके च पदान्यने-कार्थानीति वैदिकवाक्यस्याप्यनेकार्थतासम्भवाद् विपरीतार्था[4] शंका न निवर्त्तत इति संशयलक्षणमप्रमाण्यं वेदस्येति।

**यथे**त्यादिना कारिकार्थं व्याचष्टे। **रागादिपरीतो** रागादियुक्तः। **दये**ति करुणा। सैव सात्मीभूता **धर्मता**। **आदि**शब्दात् प्रज्ञाश्रद्धादि। तै**र्युक्तः**। **त**त्तस्माद् **यथा वचनस्य पुरुषाश्रयात् मिथ्यार्थता। तथा सत्त्यार्थतापि**। **स** इति पुरुषः। **तामपि** सत्त्यार्थतान्**निवर्त्तयति**। न केव[5]लं मिथ्यार्थतां। इति पुरुषनिवृत्तौ तद्धर्मयोः सत्त्यार्थत्वमिथ्यार्थत्वयोर्निवृत्ता**वानर्थक्यं** वेदे **स्यात्**।

अथ पुरुषनिवृत्तावपि सत्त्यार्थतेष्यते। तदा सत्त्यार्थता**विपर्ययो** मिथ्यार्थता **वा** स्यात्।

(५) स्यान्मतं (।) न पुरुषापेक्षया शब्दानामर्थवत्ता किन्तु स्वभावत एवे-त्याह। **न ही**त्यादि। **प्रकृत्या** स्वभावे**नार्थवन्तः** (।) किं कारणं (।) **समयात्** सं[6]केतात्। **ततः** शब्देभ्यो**र्थख्याते**रर्थप्रतीतेः। **कायसंज्ञादिवत्**। हस्तविकाराक्षिनि-कोचादयः कायसंज्ञा। यथा तत्र समयात् क्वचिदर्थप्रतिपत्तिस्तद्वत्। यदि पुनः स्वभावत एव शब्दा अर्थप्रकाशकाः स्युस्तदा न संकेतमपेक्षेरन्। तस्मान्न स्वतोर्थप्रकाशनयोग्यता शब्दानां (।) किन्त**र्ह्यप्रातिकूल्यन्तु** यथासंकेतं प्रवृ[7]त्ति-रेव शब्दानां **योग्यता**। किं कारणं (।) **समये** संकेतकाले **तस्य** संकेतकर्त्तुर्यत्र नियोक्तु**मिच्छा** तया यथेष्टं शब्दानां **प्रणयनात्** प्रवृत्तेः। यदि पुर्नानिसर्गसिद्धाः स्वभावसिद्धाः क्वचिदर्थे शब्दाः स्युस्तदा **निसर्गसिद्धेषु** पुरुषे**च्छावशाद्** यथेष्टं 147a

**पुरुषसंस्कारादर्थवन्तः स्युः। तत्संस्कार्यतैव चैषां पौरुषेयता युक्ता नोत्पत्तिः। तत एवार्थविप्रलंभात्। उत्पन्नोप्यन्यथा समितो नोपरोधी तदन्यपुरुषधर्मवत्। तदयं निवर्त्तमानः स्वकृतसमयसं[2]भवामर्थप्रतिभां निवर्त्तयति। तत्कुतस्तन्निवृत्या सत्यार्थता।**

**अथ पुनः (।) उत्पत्तिरेव पौरुषेयता न समयाख्यानं (।) विपर्य (? एवमपि)**

**अर्थज्ञापनहेतुर्हि संकेतः पुरुषाश्रयः ॥(२२८॥)**

---

संकेतेनार्थ**प्रतिपादनायोगात्।**

तस्मादन**र्थकाः** स्वतः शब्दास्तेनर्थकास्सन्तः **पुरुषसंस्कारात्** पुरुषसंकेता**दर्थवन्तः**[1]। अथ माभूदनर्थकत्वमिति पुरुषसंस्कारापेक्षयार्थवत्त्वन्तेषामिष्यते। तदा पौरुषेयतयैव स्यात्। यस्मात् **तत्संस्कार्यतैव** पुरुषसंस्कार्यतैव **चैषां** शब्दानां **पौरुषेयता युक्ता। न** पुरुषा**दुत्पत्तिः**। किं कारणं (।) **तत एव** पुरुषसमयादे**वार्थविप्रलम्भाद्** विसम्वादात्। न पुरुषादुत्पत्तेर्विप्रलम्भः। यस्मा**दुत्पन्नोपि** पुरुषाच्छब्दो**न्यथा समित** इति मि[1]थ्यार्थताविरोधेन यथाभावं **समितः** संकेतितः। **नोपरोधी** न विप्रलम्भकः। **तदन्य** इति शब्दादन्यः **पुरुषधर्म** उन्मेषनिमेषादिः स्वतोनर्थकोपि यथाभावं पुरुषेण समितो न विप्रलम्भकस्तद्वत्।

उपसंहरन्नाह। **तदिति**। तस्मा**दयं** पुरुषो **निवर्त्तमानः स्वकृतसमयात् सम्भव** उत्पादो यस्या **अर्थप्रतिभायाः** अर्थबुद्धेस्**तामपि नि**[3]**वर्त्तयति। तदिति** तस्मात्। **कुतास्तन्निवृत्त्या** तस्य पुरुषस्य निवृत्त्या **सत्यार्थता** किन्त्वानर्थक्यमेव स्यात्।

एतेन यदुच्यते।

> यत्पूर्वापरयोः कोटयोः परैः साधनमुच्यते।
> तन्निराकरणं कृत्वा कृतार्था वेदवादिनः॥
> पूर्वा वेदस्य या कोटिः पौरुषेयत्वलक्षणा (।)
> परा विनाशरूपा च तदभावो हि नित्यतेति।[1]

तदपास्तं सत्यपौरुषेयत्वे नित्य[4]त्वे च वेदस्यानर्थक्येनाकृतार्थत्वात्। (६) **अथ पुनरुत्पत्तिरेव पौरुषेयता न समयाख्यानन्न** संकेतकरणं पौरुषेयता' तेनापौरुषेयत्वादेव यथार्थो वेद इति भावः।

एवमप्य**र्थज्ञापनहेतु**रर्थाभिव्यक्तिहेतुः **संकेतः पुरुषाश्रय** पुरुषेच्छानुरोधी

---

[1] Ślokavārtika.

**गिरामपौरुषेयत्वेऽप्यतो मिथ्यात्वसम्भवः।**

**किं ह्यस्यापौरुषेयतया (।) यतो हि समयावर्थप्रतिपत्तिः। स पौरुषेयो वितथोपि स्यात्। शीलं साधनं स्वर्गवचनम् (।) अन्यथा समयेन विपर्या[3]सयेत् (।) तेनायथार्थमपि प्रकाशनसंभवात्।**

**स एव दोषः (।)**

---

न यथार्थमवश्यम्वर्त्तत इति **गिरामपौरुषेयत्वे**भ्युपगम्यमाने। अ[5]**तः** पुरुषेच्छानुरोधिनः संकेतात् **मिथ्यात्वसम्भवः।**

(७) **किमि**त्यादि विवरणं। **अस्ये**ति वेदस्य **यतो हि समयात्** संकेतादर्थ**प्रतीतिर**र्थप्रकाशनं **स** समयः **पौरुषेय**स्ततो **वितथो**प्यलीकोपि **स्यात्**। स्वातन्त्र्यात्। ततश्च **शीलं साधनं** हेतुर्यस्य **स्वर्ग**स्य। तथाभूतश्चासौ स्वर्गश्च सुमेरुपृष्ठलक्षणस्तस्य यद्वेदे **वचनन्त**द**न्यथा समये**[6] '**न विपर्यासयेत्**। निरतिशया प्रीतिः स्वर्ग इत्येवम्विपरीतार्थं कुर्यादग्निहोत्रादिसाधनेन च विपरीतार्थं कुर्या**त्तेन** कारण**ेनायथार्थमपि प्रकाशनसम्भवात्** (।)

**स एव दोषो** यः पौरुषेयेषूक्तः (।) पुरुषदोषात् सम्भाव्यविप्रलम्भः पौरुषेय इति। (२२८)

(८) नन्वपौरुषेय एव शब्दार्थयोः सम्बन्धः। तथा हि यथेदानीन्तना वृद्धाः[7] 147b पूर्वप्रसिद्धमेव शब्दार्थसम्बन्धमुपदिशन्ति। तथा पूर्वपूर्ववृद्धा अपीत्यनादित्वादपौरुषेय एव सम्बन्धः। तदुक्तं।

"शब्दार्थानादितां मुक्त्वा सम्बन्धानादिकारणं।
अस्ति नान्यदतो वेदे सम्बन्धादिर्न विद्यत" इति[1]

स च सम्बन्धस्त्रिप्रमाणकः। तथा हि (।) श्रोतुरर्थप्रतिपत्तये केनचिद् वृद्धेन शब्दे प्रयुक्तेऽन्यः पार्श्वस्थः प्रतिपत्ता प्रयोक्तारम्वाच्यं वाचकं प्रत्यक्षे[1]ण प्रतिपद्यते। श्रोतुश्च प्रतिपन्नत्वं प्रवृत्तिद्वारेणावगच्छति। अर्थप्रतिपत्त्यन्यथानुपपत्त्या च शब्दार्थाश्रिता वाच्यवाचकशक्तिं चावगच्छतीति त्रिप्रमाणक एव सम्बन्धः। तदुक्तं ।।

"शब्द (ान्) वृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ।।
अन्यथानुपपत्त्या च बुद्ध्येच्छक्ति द्वयाश्रितां
अर्थापत्त्या च बुध्यन्ते सम्बन्धन्त्रि[2] प्रमाणकमिति।"

---

[1] Ślokavartika.

### क. अपौरुषेयत्वेऽप्यप्रामाण्यम्

**सम्बन्धापौरुषेयत्वे स्यात् प्रतीतिरसंविदः ॥२२९॥**

**स्यादेतद् (।) अकार्यसम्बन्धा एव शब्दा न तेर्थेषु पुरुषैरन्यथा विपर्यास्यन्ते। तेनादोष इति किमिदानीं संकेतेन। स हि सम्बन्धो यतोर्थप्रतीतिः।**

**नायं समयमपेक्षेत (।) अप्रतीत्याश्रयाः कथं सम्बन्धाः (।)**

**संकेतात्तदभिव्यक्तावसमर्थान्यकल्पना।**

**न वै सम्बन्धो विद्यमानोप्यनभिव्यक्तिः प्रतीतिहेतुः (।) संकेत(: ख)ल्वेनमभिव्यक्तिमेर्तहि सिद्धोपस्थायी किमकारणं पोष्यते।**

---

तत्राह। **सम्बन्धापौरुषेयत्व** इत्यादि। शब्दार्थयोस्स**सम्बन्धापौरुषयत्वे**भ्युपगम्यमाने **स्यात् प्रतीति**रर्थप्रतिपत्तिर**सम्विदः**। संकेतज्ञानं सम्वित्। सा न विद्यते यस्य तस्य। **अकार्यः** पुरुषैरजन्यः **सम्बन्धो** येषान्ते तथा। **ते शब्दा अर्थेषु** वाच्येषु **पुरुषै**र्यथार्थप्रकाशकत्वात्। स्वभावा**दन्यथा विपर्यस्यन्ते** वितथज्ञा[3]नहेतवो न क्रियन्ते। **तेना**विपर्यासेना**दोषो** विसम्वादलक्षणो दोषो नास्ति। **इदानीमिति** सम्बन्धापौरुषेयत्वे **किं संकेतेन** प्रयोजनं। **यस्मात् स हि** शब्दार्थयो**स्सम्बन्धः** स चेद**र्थप्रतीति**हेतुः सम्बन्धोपौरुषेयस्तदा **नायं** पुरुषो निसर्गसिद्धसम्बन्धत्वाच्छब्दादर्थं प्रतिपद्यमानः **समयमपेक्षेत**। प्रदीपादिवत्। अपेक्षते च संकेतन्तस्मा[4]न्न शब्दानामर्थेन सहापौरुषेयः सम्बन्धो राजचिह्नादिवत्।

(६) स्यान्मतम् (।) अपौरुषेय एव सम्बन्धः स तु संकेतनिरपेक्षो प्रतीत्याश्रय इत्याह। **अप्रतीत्याश्रयोर्थ**प्रतीतेरेवाश्रयो वा **कथं सम्बन्धः** (।) नैव। प्रतीत्यन्यथानुपपत्त्या सम्बन्धकल्पनात्। प्रतीत्यभावे कथं सम्बन्धः। अथ (।)

> "ज्ञापकत्वाद्धि सम्बन्धः स्वात्मज्ञानमपेक्षते।
> तेनासौ[5] विद्यमानोपि नागृहीतः प्रकाशकः।
> सर्वेषामनभिव्यक्तानां पूर्वपूर्वप्रयोक्तृतः (।)
> सिद्धः सम्बन्ध इत्येवं सम्बन्धादिर्न विद्यत.इति।"

तत्राह। **संकेते**त्यादि। **संकेतेन तस्य** सम्बन्धस्या**भिव्यक्तौ**। **असमर्था** निष्फला संकेता**दन्यस्य** सम्बन्धस्य **कल्पना**।

एतदुक्तम्भवति। संकेते सत्यर्थप्रतीतेरुत्पत्तिरसति चानुत्पत्तिरित्यन्वयव्यतिरेका[6]भ्यां संकेत एवार्थप्रतीतेः कारणमिति किं सम्बन्धेनान्येन।

**ने**त्यादिना व्याचष्टे। **अनभिव्यक्तो** प्रकाशितोर्थ**प्रतीतिहेतुः**। **एनमिति सम्बन्धं स तर्ही**ति सम्बन्धः। संकेतादेवार्थप्रतिपादने **सिद्धे** सति **उपस्थातुं शीलं** यस्य स

**नन्वियानसम्बन्धोस्य व्यापारो यदर्थे प्रतीतिजननं तत् समयेनैव कृत[5]मिति। नायोग्ये समयः समर्थ इति। योग्यता सम्बन्धश्चेत् तत्किं वै शब्दः सम्बन्धोस्तु। समर्थं हि रूपं शब्दस्य योग्यता। कार्यकरणयोग्यतावत्। सा चेदर्थान्तरं किं शब्दस्येति सम्बन्धो वाच्यः। योग्यतोपकार इति चेत् (।) न (।) नित्यायान्निरतिशयत्वात् तत्राप्यतिप्रसंगात्। उपकारासिद्धेः। योग्यतायां च स्वतो योग्यत्वेऽर्थ एव किन्नेष्यते।**

---

सम्बन्धः **किमकारणं** कस्मान्निष्फलं पोष्यते।

(१०) नैष्फल्यमेवाह। **नन्वित्यादि**। **इयाने**तावन्मात्र एव। **यदर्थे** वाच्ये प्र[7]**तीते**र्ज्ञानस्य **जननं**। तत्प्रतीतिजननं **समयेन कृतमिति** निष्फलस्सम्बन्धः। **नायोग्ये समयस्समर्थः**। किन्तर्हि य एवार्थप्रतिपत्यन्यथानुपपत्या प्रतिपादकेन समर्थः प्रतिपन्नः शब्दस्तत्रैव संकेतः समर्थ इति **योग्यता सम्बन्धश्चेत्**। तदुक्तं। 148a

> "शक्तिरेव हि सम्बन्धो भेदश्चास्या न दृश्यते।
> सा हि कार्यानुमेयत्वात् तद्भेदमनुवर्त्तते" इति ॥ (संबं० २८)

अत्राह। **तत्किमित्यादि**।

एवम्मन्यते। नैका शक्तिः शब्दार्थयोः स्थिता किन्तु शब्दस्था हि वाचकशक्तिरन्यार्थे स्थातुं वाच्यशक्तिरन्यैव। यदा तु शब्दशक्तिः सम्बन्धस्तदा य एव सम्बन्धस्स एव सम्बन्धी प्राप्त इति पृच्छति (।) **तत्किम्वै शब्दः सम्बन्धोस्तु**।

नन्वन्या हि योग्यताऽन्यश्च शब्दस्तत्कथं शब्दस्सम्बन्ध इत्यत आह।

यस्मात् **समर्थं हि रूपं शब्दस्या**र्थप्रतिपादनं प्रति **योग्यता**। **कार्यकारणयोग्यता[2]वत्**। कार्यकरणाय योग्यता कार्यकरणयोग्यता। यथा कारणस्यात्मभता। तद्वत्। **सा चे**दिति योग्यता ततः शब्दाद**र्थान्तरं** तदा **किं शब्दस्य** भवतीति शब्दयोग्यतयो**स्सम्बन्धो वाच्यः**। अन्यथा शब्दस्येयं योग्यतेति न सिध्येत्। यार्थान्तरभूता **योग्यता** तस्यां शब्दस्यो**पकार इति चेत्**। शब्देन योग्यताया उपकारः क्रियत इति यावत्। तेन शब्दजन्यत्वा[3]च्छब्दस्य योग्यतेत्युच्यत इति भावः। **न** शब्देनोपकारो योग्यतायाः (।) कुतः (।) **नित्याया** योग्यताया **निरतिशयत्वात्**। अथ योग्यताया अपि शब्देन* व्यतिरिक्त एवोपकारः क्रियते। तदा तस्य शब्दकृतस्योपकारस्य योग्यतया कः सम्बन्ध इति वाच्यं। अथ तत्राप्युपकारे योग्यतयान्य उपकारः क्रियते तदा **तत्राप्यु**पकारे यथोक्तविधिनाऽपरापरस्योपका[4]रस्य कल्पनाया**मतिप्रसङ्गात्**। ततोनवस्थाया**मुपकारासिद्धेः** सैव योग्यतया सह शब्दस्य सम्बन्धासिद्धिः। किञ्च व्यतिरिक्तां योग्यतामुपकुर्वाणः शब्दः स्वरूपेणैवोपकरोति न पररूपेण। शब्दस्या-

**नामिश्राणां सिद्धानां कश्चित सम्ब[6]न्धोऽभेदप्रसंगात्। अनपेक्षणाच्च।**

२. सिद्धान्तः—

**समयस्तर्हि कथं (।) शब्दार्थसम्बन्धः पुरुषेषु वृत्तेः।**

**तदाख्यानं समय (:।) ततः प्रत्यायकत्वसिद्धेः सम्बन्धाख्यानात्। न तु सम्बन्धः (।)**

**अर्थविशेषसमीहाप्रेरिता वाग्, अत इदमिति विदुषः स्वनिदानावभासिनमर्थं सूचयतीति। बुद्धिरूपवाग्विज्ञप्त्योर्जन्यजनकभावः सम्बन्धः। ततः शब्दात् प्रतिपत्तिरविनाभावात् (।)**

---

नुपकारकत्वप्रसंगात्। तदा **योग्यतायां च स्वतः** स्वरूपेण शब्दस्य **योग्यत्वेऽर्थ एव** शब्दस्वभावः प्रतीतिजननयोग्यः **किमपेष्यते**। किं पा[5]रम्पर्येणेति यावत्। तस्मान्न योग्यता सम्बन्धो न च सार्थप्रतीतिहेतुः। समवायादेवार्थप्रतीतेः।

बौद्धस्यापि **तर्हि समयः कथं शब्दार्थयोस्सम्बन्धः** (।) कथं च न स्यात् **पुरुषेषु वृत्तेः**। अस्यार्थस्यायं वाचक इत्यर्थकथनं स म यः। स च पुरुषेषु वर्त्तते न शब्दार्थयोः। न चान्यधर्मोन्यस्य धर्मोऽश्वधर्म इव गोः।

(१) आ चा र्य स्तु न केवलं समयो न[6] सम्बन्धोन्योपि भाविकः सम्बन्धो नास्तीत्याह। **नेत्यादि**। तथा हि भावानां रूपश्लेषो वा सम्बन्धः स्यात्। पारतन्त्र्यं वा परस्परापेक्षणं वा। त**त्रामिश्राणा**म्परस्परभिन्नानां न कश्चिद् रूपश्लेषलक्षणस्सम्बन्धः। तेषामभेदप्रसङ्गात्। एकत्वापत्तेः। तथा **सिद्धानां** निष्पन्नानां रूपाणां न **कश्चित्** पारतन्त्र्यलक्षणः **सम्बन्धः** (।) सिद्धे पारतन्त्र्या-

148b योगात्।[7] परस्परापेक्षालक्षणोपि सम्बन्धो नास्तीत्याह। **अनपेक्षणाच्चे**ति। सिद्धस्य सर्वनिरपेक्षत्वात्।

(२) क. यदि तर्हि शब्दार्थयोर्नास्ति सम्बन्धः कथन्तर्हि शब्दार्थप्रतीतिः। कथं च शाब्दं ज्ञानमनुमानेऽन्तर्भाव्यते। समयो वा तदा किंप्रयोजन इति (।)

आह। **अर्थविशेषे**त्यादि (।) **अर्थविशेषो** यः प्रतिपादनाभिप्रायेण विषयीकृतः। **तस्य समीहा** प्रतिपादनेच्छा। तया[1] **प्रेरिता** जनिता वाक् सूचयति प्रकाशयति **स्वनिदानप्रतिभासनमर्थं**। वाचः **स्व**निदानं प्रतिपादनाभिप्रायः। तत्प्रकाशिनं कस्य **सूचयति। अत इदमिति** विदुषः। **अतः** प्रतिपादनाभिप्रायात् सकाशा**दिदम्**वचन-मागतमिति यो **विद्वान् तस्य**। इति एवं **बुद्धिरूप**स्याभिप्रायलक्षणस्य **वाग्विज्ञप्तेश्च जन्यजनक**लक्षण**स्सम्बन्धः। ततः शब्दात् प्र[2]तिपत्तिरविनाभावादिति** (।) ततो जन्यजनकभावाद् वाक्यादर्थप्रतिपत्तिः।

तेन यदुक्तं (।) पदादर्थमतिर्यद्यप्यनुमानं वाक्यात्त्वर्थप्रतीतिः प्रमाणान्तरं

सम्बन्धाग्रहात् (।) न चात्राविनाभाव उपयोगीति (।)

तदपास्तं। अविनाभावमन्तरेण वाच्यवाचकभावस्याभावात्।

यदप्युक्तं (।) कथं शब्दादर्थप्रतिपत्तिः। कथं च शाब्दं ज्ञानमनुमानेन्तर्भवतीति। तत्परिहृतं[3] (।)

ख. इदानीं समयप्रयोजनमाह। **तदाख्यान**मित्यादि। **तदाख्यान**मविनाभावाख्यानं **समयः**। आख्यायतेनेनेति कृत्वा। **तत** इति समयात् **प्रत्यायक**स्यार्थप्रतिपादनाङ्गस्याविनाभावलक्षणस्य **सिद्धेः** प्रतीतेः। उपचारेण समयस्य **सम्बन्धाख्यानात्** सम्बन्धव्यपदेशः। न तु पुनः स एव समयो मुख्यः सम्बन्धः।

तेन यदुच्यते।

"समयः प्रति[4]मर्त्यम्वा प्रत्युच्चारणमेव वा।

क्रियते जगदादौ वा सकृदेकेन केनचिदि"ति (।) निरस्तं।

ग. ननु यद्यविनाभावेन शब्दार्थप्रतीतिस्तदा शब्दस्यार्थप्रतिपादनं वाचकत्वेन न स्यात्। धूमस्येवाग्निप्रतिपादनं। यदि च शब्दार्थयोस्समयेन विना भावाख्यानात् समयस्सम्बन्ध उच्यते। अग्निधूमयोरपि समयः स्यादिति।

नैष दोषो यस्मात्।[5] इममर्थमकृतसमयेनापि शब्देन प्रतिपादयामीत्येवमर्थस्य वाच्यत्वं शब्दस्य च वाचकत्वमारोप्यार्थप्रतिपादनाभिप्राये सति यदा शब्दं प्रयुङ्क्ते तदा शब्दस्य वाचकरूपस्यैवोत्पत्तिः।

घ. नन्वर्थप्रतिपादनाभिप्रायेण वर्णा एव जन्यन्ते न च वाचका वर्णा इष्यन्ते तत्कथमुच्यतेऽभिप्रायाद् वाचकस्य शब्दस्योत्पत्तिरिति।

सत्त्यं (।) केवलम्वक्तृश्रो[6]त्रोर्वर्णेष्वेव वाचकाभिमानाद् वाचकस्यैवोत्पत्तिरुच्यते। तस्मादस्यैव वाच्यवाचकभावलक्षणस्याविनाभावस्य शब्दार्थसम्बन्धस्य मूढं प्रति आख्यानं समयस्सम्बन्ध उच्यते। न तु सर्वमेव कार्यकारणभावाख्यानं समयः (।) तेन न धूमादौ सम्बन्धः समय उच्यते। यद्यपि संकेतव्यवहारकालयोः शब्दार्थसम्बन्धस्य भेदस्तथापि सादृश्यादेकत्वाध्य[7]वसायेन लोकस्य प्रवृत्तिः। 149a अत एव च यमेव शब्दार्थसम्बन्धं पूर्वप्रतिपन्नं वक्ता कथयति तमेव श्रोता प्रतिपद्यते। तेन यदुच्यते॥

"प्रत्येकं स च सम्बन्धो भिद्यतैकोऽथवा भवेत्।
एकत्वे कृतको न स्याद् भिन्नश्चेद् भेदधीर्भवेत्।(संबंध० १८)
वक्तृश्रोतृधियो भेदाद् व्यवहारश्च (न) दुष्यति।
वक्तुरन्यो हि सम्बन्धो बुद्धौ श्रोतुस्तथापरः।

**अस्तु वाऽन्य एव नित्यः सम्बन्धः (।) तेन (।)**

**गिरामेकार्थनियमे[7] न स्यादर्थान्तरे गतिः ॥ (२३०) ॥**

**न हि तेन सम्बन्धेनासम्बद्धेर्थेप्रतीतिर्युक्ता। तस्य वैफल्यप्रसंगात्। दृष्ट-श्चेच्छावशात् कृतसमयः सर्वः सर्वस्य दीपकः।**

**अनेकार्थाभिसम्बन्धे विरुद्धव्यक्तिसम्भवः।**

**अथ मा भूद् दृष्टविरोध इति सर्वे सर्वस्य वाचकाः। तथा न सर्वं (:) सर्वसाधनो संकरात् कार्यकारणतायास्तत्र प्रतिनियतसाधनेऽभिमतेऽर्थे**

---

श्रोतुः कर्तुञ्च सम्बन्धम्वक्ता कं[1] प्रतिपद्यते।
पूर्वदृष्टो हि यस्तेन तं श्रोतुर्न करोत्यसौ।
यं करोति नवं सोपि न दृष्टः प्रतिपादक" इति (।)

तदपास्तं। सर्वत्र वाच्यवाचकसम्बन्धानाम्भिन्नानामप्येकत्वाध्यवसायेन लोकस्य प्रवृत्तेः (।) न चाप्यनादिता तेषां प्रत्यभिज्ञाया अप्रमाणत्वादिति। (२२६)

ङ. **अस्तु** वाऽविनाभावसम्बन्धाद**न्य एव नित्यः** शब्दार्थयो**स्सम्बन्धः। तेन** सम्बन्धेन **गिरां** शब्दाना**मे[2]कार्थनियमे** सति पुनः समयवशा**न्न स्यादर्थान्तरे** यत्रासौ शब्दो न नियमितस्तत्र **गतिः** प्रतिपत्तिः। किं कारणं। **न हि तेनै**कार्थनियतेन **सम्बन्धेनासम्बद्धेर्थे प्रतीतिर्युक्ता।** कस्मात् (।) **तस्य** सम्बन्धस्य **वैफल्यप्रसङ्गात्।** न भवत्येव तत्र प्रतीतिरिति (।)

आह। **दृष्टश्चे**त्यादि। पुरुषे**च्छावशात् कृतः समयो**स्येति **दीपकः** प्रकाशकः।

**अनेके**त्या[3]दि। **अनेकार्थे**न शब्दस्या**भिसम्बन्धे**भ्युपगम्यमाने यद्येकार्थनियमेन समयकारोभिव्यक्तिं करोति। तदाभिमत एवार्थे करोति न त्वन्यस्मिन्नेव विरुद्धे इति नास्ति नियमस्ततो **विरुद्धव्यक्तिसम्भवः।** अभीष्टाद् विरुद्धस्याप्यर्थस्याभि-व्यक्तिः सम्भाव्यते।

**अथे**त्यादिना व्याचष्टे। एकार्थप्रतिनियमे समयवशादनेकार्थप्रतिपा[4]दनं दृष्टं विरुध्यते (।) तस्मात्तस्य दृष्टस्य विरोधो **मा भू**दिति **सर्वे** शब्दाः **सर्वस्या**र्थस्य **वाचकाः।**

च. **तथे**त्यादिना विरुद्धव्यक्तिप्रतिपादनं। यथा सर्वे सर्वस्य वाचका इष्यन्ते **तथे**दमप्यवश्यमेष्टव्यं (।) **न च सर्वा**र्थः **सर्वस्य** कार्यस्य **साधक** इति न्याय-प्राप्तत्वात्। न्यायं चाह। **संकरा**दिति। प्रतिनियतत्वात् **कार्यकारणतायाः। तत्रै**तस्मिन् न्या[5]ये सति **प्रतिनियत**म्विशिष्टमेव वस्तु साधनं कारणं यस्या**भिमत-स्यार्थस्य साध्यस्य** स्वर्गादेः। **तस्मिन्** विषयभूते। शब्दस्य किम्विशिष्टस्य (।)

**[1]सर्वेषां साधनानां[2] साधारणस्य दृष्टव्यक्तिमेव समयकारः करोतीति कुत एतत्[2]।** 489a

**सोऽनियतो नियमं पुरुषात् प्रतिपद्यते[3] ।**

**अपौरुषेयतायाञ्च व्यर्था स्यात् परिकल्पना ।।२३१।।**

**अपि नाम असंकीर्णमेवार्थं जानीयामिति पुरुषहेतुकः संकरो व्यक्तः ।**

**· तत्र यादृशा[3]: पुरुषैः क्वचित् प्रयुक्ताः संकीर्यन्ते, तादृशा अपि सर्वसाधारणास्सन्तः क्वचिदर्थे तैः विनियमिताः। तत्त्वापरिज्ञानात् भावेनैव[4] (? प्रकृत्यैव) वैदिका नियता इति चेत् नोपदेशमपेक्षेरन्, अन्यथा संकेतेन च न प्रकाशयेयुः, व्याख्याविकल्पश्च न स्यात् । उपदेशस्य शक्यविकल्पे उपदेशो**

---

सर्वेत्यादि। **सर्वेषां साध्यानां** कार्याणां यथास्वं यानि साधनानि कारणानि तेषां वाचकत्वेन **साधारणस्य** तस्य **शब्दस्येष्टव्यक्तिमेव** विशिष्टसाध्यसाध्यकत्वेनाभिमत एवार्थेभिव्यक्तिं **समय[6]कारः करोतीति कुत एतत्**।

एतदुक्तम्भवति। य एवार्थो वस्तुस्थित्या स्वर्गसाधनः किन्तत्रैव समयकारेणाग्निहोत्रादिशब्दोभिव्यक्तः किम्वान्यस्मिन्नेव स्वर्गसाधनविरुद्धेर्थे बुद्धिमान्द्यादिति सन्देह एव।

**स** इति शब्दः सर्वस्मिन् वाचकत्वेना**नियतो नियमं** क्वचिदर्थे **पुरुषात्** पुरुषसंकेतात् **प्रतिपद्यते**। स च पुरुषोऽ[7]विरुद्धेप्यर्थे संकेतं कुर्यात्। तथा च न केवलं विरुद्धव्यक्तिसम्भवो यापीयम**पौरुषेयता** वेदस्येष्टा तस्या **व्यर्था स्यात् परिकल्पना**। **अपि नामे**ति। कथन्नाम। **असंकीर्ण्णम**निष्टेनासंसृष्टं। **इष्टमेवार्थ**मपौरुषेयेभ्यः शब्देभ्यो **जानीयामिति** कृत्वा संकरस्येष्टानिष्टव्यतिकरस्य हेतुः **पुरुषोपाकीर्ण्णो** वहिस्कृ(?ष्कृ)तो वैदिकेभ्यः शब्देभ्यः। **त[1]त्रैव**मवस्थिते **यादृशाः** शब्दाः पौरुषेयाभिमताः **पुरुषैः क्वचिद्** विवक्षितेर्थे **प्रयुक्तास्संकीर्यन्ते**ऽनिष्टाभिधायकत्वसम्भावनया । **तादृशा** एवापौरुषेयाभिमता **अपि** शब्दाः **सर्वार्थसाधारणास्सन्तः क्वचिदर्थे तैः** पुरुषैः समयेन यथेष्टं **विनियमिताः**। किं कारणं (।) **तेषां** पुंसान्**तत्त्वापरिज्ञानात्**। **प्रकृत्यैव** स्वभावेनैव **वैदि[2]काः** शब्दा **नियता** अभिमतेर्थे (।) ततो न पुरुषसंस्कारकृतो दोष **इति चेत्**। एवं सत्यर्थ**प्रकाशने** नोपदेशमपेक्षेरन्। अपेक्षन्ते च। स्वतस्तेभ्योर्थप्रतीतेरभावात्। यदि च ते स्वभावत एव प्रतिनियताः स्युस्तदा यत्र क्वचिदर्थे एकदा समिताः पुनः कथंचित् ततोन्यथासंकेतेनार्थान्तरं **न प्रकाशयेयुः**। प्रकाशयन्ति च। ततो न प्रकृ[3]त्यै-

---

[1] Restored from Tibetan. [2] Bsgrub. par. byed. pa. [3] Mthoñ-bar-hgyur-pa = दृश्यते ? Rtogs-par-hgyur-pa. [4] Ṅo-bo-ñid-kyis.

149b

**च्छा[5]ऽविसंवाद इति व्यर्थैवापौरुषेयता ।**

**वाच्यश्च हेतुर्भिन्नानां सम्बन्धस्य व्यवस्थितेः ।**

**बाह्या अर्थाः शब्दस्य न रूपं, नापि शब्दोऽर्थानाम् । येनाभिन्नात्मतया[6] व्यवस्थाभेदेऽपि कृतकानित्यवत् अविनाभाविता स्यात् ।**

489b **नापि शब्दाविवक्षाजन्मानो नाप्यजन्मानो विवक्षा[7]व्यंग्याः, नार्थायत्ताः ।**

---

कार्थनियता इति । स्वभावतश्चैकार्थनियमे । योयम्वैदिकेषु वाक्येषु व्याख्यातृणां **व्याख्याविकल्पश्चापरापरव्याख्याभेदश्च न स्यात्** । एकार्थप्रतिनियमात् । भवति च । तस्मात् पौरुषेयवाक्यवन्नैकार्थनियता वैदिकाः शब्दा इति ।

छ. अथ स्यात् (।) नियत एवार्थे तेषामुपदेश इत्यत आह । **उपदेशस्येत्यादि** । व्याख्याभेदेन शक्योर्थना[4]नात्वविकल्पो यस्मिन् वैदिके वाक्ये तत्तथोक्तन्तस्मिन् **शक्यविकल्पे** वैदिके वाक्ये । व्याख्यातृणां य **उपदेशस्तस्येष्टसम्वादो** नास्त्ययमपि कदाचित् स्याद् अस्यार्थो(यम)न्यो वेति नियमाभावात् । **इति** हेतो**र्व्यर्थैवापौरुषेयता** । तामपि कल्पयित्वा व्यभिचाराशंकाया अनिवृत्तेः ।

ज. यश्च शब्दार्थयोः सम्बन्धमिच्छति तेन **वाच्यश्च हेतुः सम्बन्धस्य व्यवस्थि[5]तेः** । सम्बन्धव्यवस्थायाः । केषाम् (।) **भिन्नानां** परस्परभिन्नानां शब्दार्थानां । (१) न तावच्छब्दार्थयोस्तादात्म्यलक्षणः सम्बन्धः । यस्मादर्था हि **बाह्या** घटपटादयः **शब्दस्य न रूपं** न स्वभावः । शब्दरूपत्वे हि घटादीनामभावः स्यात् । **नापि शब्दोर्थानां** रूपमर्थरूपत्वे हि शब्दरूपताहानिप्रसङ्गात् । **येनाभिन्नात्मतयान्तरीयकता स्यात्** । **अ[6]विनाभाविता स्यात्** । **व्यवस्थाभेदे**पीति व्यावृत्तिभेदसमाश्रयेण साध्यसाधनभेदेपि । किमिव । **कृतकत्वाऽनित्यत्ववत्** । यथा कृतकत्वानित्यत्वयोर्व्यावृत्तिभेदेप्येकात्मतया नान्तरीयकता । तद्वत् ।

(२) तदुत्पत्तिलक्षणोपि सम्बन्धो नास्तीत्याह । **नापीत्यादि** । एतदाह ।

150a तदुत्पत्तिलक्षणो हि **शब्दानां** सम्बन्धो भवन् विवक्षाप्रतिष्ठिते[7]न चार्थेन स्याद् बाह्येन वा ।

(क). न तावदाद्यः पक्षः । यस्मान्नाप्येते वैदिका ध्वनयो **विवक्षाजन्मान** इष्यन्ते । विवक्षातो जन्म येषामिति विग्रहः । नित्यत्वाभ्युपगमात् । **अजन्मानो वा** अनुत्पन्ना वा सन्तो नापि **विवक्षाव्यङ्ग्याः** । नित्यत्वहानिप्रसंगात् । व्यङ्ग्यानामुत्पाद्यत्वादित्युक्तं प्राक् ।

(ख) नापि द्वितीयः पक्ष इत्याह । **नार्थायत्ता** इति । नापि बाह्यार्थायत्ताः । नित्यत्वादेव ।[1]

अन्ये त्वेकमेव ग्रन्थं कृत्वा व्याचक्षते । यस्मान्न विवक्षाजन्मानो नापि

**ततः प्रतिनियमसंसाध्यं तदन्वयं कथं साधयेयुः। न चायत्ततायास्तस्याः साधकम्।**

**असंस्कार्यतया पुंभिः सर्व्वथा स्यान्निरर्थता ॥२३२॥**

**संस्कारोपगमे मुख्यं गजस्नाननिभं भवेत्।**

**इति संग्रहश्लोकः।**

**अपि च शब्दार्थसम्बन्धो नित्योऽनित्यो वा स्यात्। यदि अनित्यः[2], पुरुषेच्छाया वृत्तिः अवृत्तिर्वा। अपुरुषायत्तत्वे पुरुषाणां यथाभिप्रायं देशादीनामन्यथात्वे तत्र प्रतिपादनन्न स्यात्। इच्छायामपि अनायत्तस्य पर्वता[3]दिवत् कदाचिदयोगात्।**

---

तद्व्यङ्ग्याः। तस्मादुभयथापि नार्थायत्ता न बाह्ये वस्तुनि प्रतिबद्धा वैदिकाः शब्दाः। यतश्च नार्थायत्तास्ततः तस्मात्। **इदानीमि**ति सम्बन्धाभावे। **तदन्वयं** तस्यार्थस्यान्वयं सद्भावं ते शब्दाः **कथं साधयेयुः**। नैव साधयेयुः। किम्भूतं (।) तत्प्रतिनियमसंसाध्यं। तस्मिन् बाह्येर्थे तादात्म्य[2]तदुत्पत्तिभ्यां यः प्रतिनियमः शब्दानां तेन संसाध्यं। बाह्येर्थेऽप्रतिबन्धेन नियमाभावात्। (२३२)

३. उक्तमेवार्थं श्लोकेन संगृह्णाति। **असंस्कार्यतये**त्यादि। (१) **सर्वथे**ति। यदि पुरुषैरर्थाभिप्रायेण शब्दा न क्रियन्ते नापि संकेत्यन्ते। तदा पुम्भिरसंस्कार्यतया हेतुभूतया वैदिकानां शब्दाना**न्निरर्थता स्यात्**। यस्मात् पुरुषसंस्कारप्रबद्धे शब्दानां सत्यार्थत्वमिथ्यार्थत्वे[3]। तेन तदभावान्निरर्थतैव स्यात्। (२) निरर्थतापरिहारार्थं पुनः पुरुष**संस्कारोपगमे** क्रियमाणे मिथ्यार्थतापि स्यादिति **मुख्यं गजस्नान**मिदम्**भवेत्**। गजो हि पङ्कापनयनाय स्नात्वा पुनः पङ्केनात्मानमवकिरतीति। **नित्योऽनित्यो वा स्यादिति** वस्तुनो गत्यन्तराभावात्। (३) **पुरुषेच्छावृत्तिः** पुरुषेच्छावशादुत्पन्नः स्यादाकुञ्चनादिवत्। **अवृत्तिर्वा**। नास्य पुरु[4]षेच्छया वृत्तिः। अङ्कुरादिवत्। तत्रानित्या पुरुषाधीनत्वपक्षे देशादिपरावृत्त्या। **देशादीनामन्यथात्वेन** आदिशब्दात् कालावस्थाग्रहणं। **पुरुषाणां यथाभिप्रायमिति** येन पुरुषेण यथा प्रतिपादयितुमिष्टन्तथा तेन शब्देन **प्रतिपादनन्न स्यादिति** सम्बन्धः। किं कारणं (।) पुरुषप्रतिपादन**ेच्छायां** सत्या**मप्यनायत्तस्य** शब्दस्य **कदाचिदयोगात्** पुरुषेण नियो[5]क्तुङ्कदाचिदप्यशक्यत्वादित्यर्थः। **पर्वतादिवत्**। यथा पर्वतादयः पुरुषानायत्ताः सत्यामपीच्छायां न यथेष्टं नियोक्तुम्पार्यन्ते (।) तद्वत्। दृष्टश्च देशादिपरावृत्त्या यथाभिप्रायं प्रतिपादनं। तस्मात् पुरुषेष्वनायत्तः सम्बन्ध इति।

*ख. सम्बन्धचिन्ता*

**अयमेव नित्यत्वेऽपि दोषः, तस्य स्थिरभावस्य अन्यथाऽयोगात्। समं सर्वस्मिन्नवस्थान इष्टे प्रतिनियमा[4]भावात्। ततो विशेषप्रतीतिर्न स्यादिति पूर्ववत् प्रसंगः। इच्छावृत्तौ च पौरुषेयत्वमिति विप्रलम्भनशंका।**

**अपि च-।**

**सम्बन्धिना[5]मनित्यत्वान्न सम्बन्धेस्ति नित्यता ॥२३३॥**

**पराश्रये सम्बन्धिनि अनायत्ततायां तयोः सम्बन्धिताया अयोगात्। स चाश्रयोऽनित्यः। अपायेऽस्य सम्बन्धस्याप्यपायः[6] स्यात्। अन्यथा नापैति। तदाश्रयार्थश्च वक्तव्यः।**

---

अनित्यस्य सम्बन्धस्यापुरुषाधीनत्वे योयमनन्तरोक्तो दोषोऽयमेव सम्बन्धस्या-**नित्यत्वेपि दोषः**। किं कारणं (।) **तस्य** सम्बन्धस्य **स्थिरस्वभावस्य** देशादि-परावृत्त्या परावृत्त्यायोगा**दन्यथा** त्वस्या**योगात्**। आकाशवत्।

४. क. अथ सर्वेष्वेवार्थेषु सम्बद्धः शब्दः (।) तत्राप्याह। **सममित्यादि**। **समम**ेककालं **सर्वस्मिन्**नर्थे सम्बन्धस्या**वस्थाने**पि कल्प्यमान **इष्टो** योर्थस्तस्मिन् **प्रतिनियामाभावात्** (।) ततः सर्वार्थसाधारणादर्थ**विशेष**स्याभिमतस्य **प्रतीतिर्न-स्यादिति** कृत्वा[7] अनेकार्थसम्बद्धोपि शब्दः पुरुषसंस्काराद् इष्टार्थनियमं प्रतिपद्यत इत्यङ्गीकर्त्तव्यन्तत्र च **पूर्ववत् प्रसंगः**। "अनेकार्थाभिसम्बन्धे विरुद्धव्यक्तिसम्भवे" (१।२३१) इत्यादिना य उक्तः। एवन्तावन्नित्यत्वे सम्बन्धस्यानित्यत्वेप्य-पुरुषाधीनत्वे दोष उक्तः। **पुरुषेच्छावृत्तौ च** सम्बन्धस्य **पौरुषेयत्वमिति** कृत्वा **विप्रलम्भनशङ्का**। विसम्वादहेतोः पुरुषस्याभ्युपगमात्।

150b

ख. **अपि चे**त्यादि[1] तत्रैव दूषणान्तरमाह। द्विविधो हि शब्दानां विषयः साक्षाज्जातिस्तल्लक्षिता च व्यक्तिरिति। (१) तत्र यदि व्यक्त्या सह सम्बन्ध-स्तत्राह। **सम्बन्धिनां** वाच्यानामर्थाना**मनित्यत्वात्**। तेषु विनश्यत्सु सम्बन्ध-स्यापि तदाश्रितस्य विनाश इति **न सम्बन्धेस्ति नित्यता**। **पराश्रय** इति परस्सम्बन्धी आश्रयोस्येति कृत्वा। **सम्बन्धिनि** सम्बन्धस्याप्रतिबन्धे सति **तयोः** सम्बन्धि-नो[2]**स्सम्बन्धिताया अयोगात्**। न ह्यप्रतिबद्धेन केनचित् कश्चित् तद्वान् भवति गौरिवाश्वेन। **स चाश्रयः** शब्दार्थसम्बन्धस्यानित्योर्थानामनित्यत्वात्। **अपाये** विना**शेस्याश्रयस्य** **सम्बन्धस्याप्या**श्रितस्या**पायः**। प्रदीपापाये प्रभाया इव तदाश्रितायाः। **अन्यथा** यद्याश्रयापायेप्याश्रितो **नापैती**तीष्यते तदाश्रयाभिमते सम्बन्धो नाश्रितः स्यात[3]। तत आश्रयविनाशेविनाशान्न नित्यः सम्बन्धः।

**नित्यस्यानुपकार्यत्वादकुर्वाणश्च नाश्रयः ।**

**यदि जाते**[7]**र्वाच्यत्वाददोष इति चेत् । न । तद्वचने प्रयोजनाभावादिति निर्लोठितमेतद् । सर्वत्र च जातेरसम्भवात् अयोगो यादृच्छिकेषु व्यक्तिवाचिषु**[1] **अयोगः, सर्वदा जातिचोदने विशेषान्तरव्युदासेन प्रवृत्त्ययोगाच्च । तस्मादन्वयव्यतिरेकिणोः भावाभाववतो भावस्य एव सम्बन्धः ।** 490a

**अथैरतः स शब्दानां संस्कार्यः पुरुषै**[2]**र्धिया ॥२३४॥**

---

**तदाश्रयार्थश्च वक्तव्यः** । तस्य सम्बन्धस्य सम्बन्धिनौ केनार्थेनाश्रयादित्याश्रयार्थो वाच्यः । उपकारार्थो ह्याश्रयार्थः । स चेह नास्ति (।) किं कारणं (।) **नित्यस्य** सम्बन्धस्या**नुपकार्य**त्वादनाधेयातिशयत्वाद**नुपकुर्वाणश्चा**श्रयाभिमतो **नाश्रयः स्यात्** ।

(२) स्यादेतद् (।) **यदि** व्यक्तिर्वाच्या तदा स्यादनन्तरोक्तो दोषः । या[4]वता नित्याया **जातेर्वाच्यत्वाददोषः** सम्बन्धिनामपायेन सम्बन्धस्यानित्यतादोषो नास्तीति **चेत्** ।

**ने**त्यादिना प्रतिवचनं । **तद्वचने** जातिवचने **प्रयोजनाभावादिति निर्लोठित**मेतदन्यापो ह चि न्ता याम् (३।५५)

अपि प्रवर्त्तेत पुमान् विज्ञायार्थक्रियाक्षमान् (।) इत्यत्रान्तरे । **सर्वत्र** चाभिधाने **जातेरसम्भवात्** कारणात् । जातिचोदनाया **अयोगः** । यथा **यादृच्छिकेषु व्यक्तिवाचिषु**[5] बाह्यं निमित्तमन्तरेण शब्दप्रयोगेच्छा यदृच्छा । तस्यां भवा यादृच्छिकाः । तेषु देवदत्तादिशब्देषु व्यक्तिवाचिषु । (२३४)

५. चतुष्टयी शब्दानां प्रवृत्तिरिति केषांचिद्दर्शनं । जातिशब्दा गुणशब्दाः क्रियाशब्दा यदृच्छाशब्दा इति । तेषां मतेनैतदुक्तं । अथ देवदत्तादिशब्दोप्यवस्थाभेदेन जातिवाचक इष्यते । तदा **सर्वदा जातिचोदने**भ्युपगम्यमाने **विशेषान्त**[6]**रव्युदासेन** व्यक्त्यन्तरपरित्यागेन क्वचिदभिमते व्यक्त्यन्तरं **प्रवृत्त्ययोगाच्च** न जात्यभिधानं । दृष्टा च गोस्वामिना गामानयेत्युक्तेऽन्यस्वामिकगोव्युदासेन विनियता एव॰ गोरानयनार्थम्प्रवृत्तिः सा चैवं स्यात् । यदि प्रकरणादिना गोशब्दो विशेषवृत्तिः स्यात् । न च गोर्थस्यानयनमस्तीति वाक्यार्थप्रतीतिरपि न स्यात् । **तस्मान्न सर्वत्र जा**[7]**तिश्चोद्यते** । यत एवं वास्तवः सम्बन्धो न संगच्छते प्रकृतिभिन्नानां । **तस्मादन्वयव्यतिरेकिण** इति **भावाभाववतो भावस्य** कार्योभिमतस्य (।) कारणाभिमतभावाभावद्वारेण यौ **भावाभावौ** स एव **सम्बन्धः** जन्यजनकभाव 151a

**तावेव भावाभावावाश्रित्य असंसृष्टावपि व्यवहारभावनातः संसृष्टपुरुषस्य भात इति पौरुषेयो भावानां संश्लेषः।**

**किं च, आश्रयविनाशे[3] सम्बन्धविनाशाद्, स वा शब्दः पूर्वेण न योज्यतेऽसम्बन्धिनो यतः। तत्र उत्पन्नोत्पन्नाश्च भावा अवाच्याः स्युः असम्बन्धिनो यतः, स्थितसम्बन्धाभावा[4]त्। तत्रापि--**

**अर्थैरेव सहोत्पादे;**

**अकल्प्यमाने।**

**न स्वभावो विपर्ययः।**

**शब्देषु युक्तः;**

**अथ सम्बन्धिविनाशेऽर्थान्तरेऽभावो अर्थानामवाच्यता वा मा भूदिति कृत्वा**

---

एवा[1] भिन्नानां सम्बन्ध इति यावत्।

यत एवमतः कारणा**दर्थैः** कारणभूतैस्सह कार्यात्मनां **शब्दानां** सम्बन्धः **पुरुषैः** कर्तृभि**र्द्धिया** बुद्ध्[1]या **संस्कार्यो** व्यवस्थाप्यः। अर्थे सति शब्दस्य प्रयोगादसति चाप्रयोगात्। अथ **भावाभावद्वारेण** शब्दस्य यौ **भावाभावौ** तावाश्रित्य बुद्ध्या शब्दार्थयोः सम्बन्धो व्यवस्थाप्यते इति वाक्यार्थः।

६. एतदेव व्याचष्टे। **तावेवे**त्यादि। अर्थद्वारेण शब्दस्य यौ **भावाभावौ** ता**वाश्रित्य** स्वभावेन**ासंसृष्टावपि** शब्दार्थावसम्बन्धिनौ **संसृष्टौ** सम्बद्धौ **पुरुषस्य** **प्रति**[2]**भातः**। विकल्पबुद्धौ प्रतिभासेते। कुतः (।) **व्यवहारभावनातः**। अनादिकालीनैव्यवहाराभ्यासतः। **इति** हेतोः **पौरुषेयो भावानां** शब्दार्थानां **संश्लेषः** सम्बन्धः। व्यवहारवासनाबलेनावस्थाप्यमानत्वात।

७. वस्तुभूतसम्बन्धाभ्युपगमेऽयमपरो दोष इत्याह। **किंचे**त्यादि। वाच्यत्वेनाभिमतस्या**श्रयस्य विनाशा**दविनष्टे सम्बन्धे। स तस्य **वा**[3]चकत्वेनाभिमतः शाब्दो सम्बन्धः। नास्य सम्बन्धोस्तीति कृत्वा तदभावस्तस्मादसम्बन्धात् पुनर**पूर्वेण** वाच्येन **न योज्येत**। ततश्चो**त्पन्नोत्पन्नाश्च भावा अवाच्याः** स्यु**रसम्बन्धिनो यतः**। असम्बन्धिन एव कुतः (।) **स्थितसम्बन्धाभावात्**। ये यं उत्पद्यन्ते तेषु तेषु न तावदुत्पादात् पूर्वं सम्बन्धः स्थितो द्विष्ठस्य तस्य सम्बन्धिनमन्तरेण स्थानायोगात्।[4] **तत्रापी**त्यादि। तत्राप्युत्पन्नोत्पन्नेष्वर्थेषु **तैरेवार्थैस्सह** सम्बन्धस्यो**त्पादे**

---

[1] In the margin.

**उत्पन्नोत्पन्नोऽर्थः सम्बन्धवान् यद्युत्पद्यते, सम्बन्ध उत्पन्नोऽपि न शब्दे स्यात्। तेन असम्बन्धिस्वभावस्य स्वभावविपर्ययमन्तरेण तद्भावायोगात्। अर्थेन[6] सहोत्पन्नस्य अन्यतः सिद्धस्यानुपकारिणि शब्देऽसमाश्रयत्वाच्च।**

**तस्यापि तदुत्पत्तिसहकारित्वे समर्थस्य नित्योत्पादनप्रसंगः। अनपेक्षत्वात्, नित्यस्यानुप[7]कारात्। असामर्थ्येऽपि पश्चाद् अशक्तिः स्वभावात्यागात्।** 490b

**सम्बन्धे नायं दोषो विकल्प्यते ॥२३५॥**

**न हि भावश्लेषापेक्षी पुरुषभावनाप्रतिभासी तदपेक्षालक्षणः सम्बन्धः।**

---

**कल्प्यमाने। न स्वभावविपर्ययः शब्देषु युक्तः।** योसौ पश्चादर्थेन सम्बन्ध उत्पद्यते। तत्सम्बन्धिस्वभावता पूर्वन्नास्ति सम्बन्धाभावात् पश्चात्तु भवतीति स्वभावविपर्ययः शब्दानां स्यात्। स च नित्यत्वान्न युज्यते।

**अर्थे**त्यादि व्याख्यानं। पूर्व**सम्बन्धिविनाशे** विन[6]ष्टः सम्बन्धो यस्य शब्दस्य तस्या**र्थान्तरे** पश्चादुत्पन्ने वैगुण्यं सम्बन्धवैकल्यं तस्माच्चा**र्था**नाम्पश्चादुत्पन्नानामवाच्यता मा भूदिति कृत्वो**त्पन्नोत्पन्नोर्थः सम्बन्धवान्** अगृहीतसम्बन्ध एव **यद्युत्पद्येत।** तथापि **सम्बन्ध उत्पन्नोपि न शब्दे स्यात्।** शब्दस्तेन सम्बन्धेन तद्वान्न स्यात्। किङ्कारणं (।) तस्य शब्दस्य **तेन** पश्चादुत्पन्नेन **सम्बन्धेनासम्बन्धि[6]स्वभावस्य तद्भावायोगात्।** तेन सम्बन्धेन सम्बन्धिस्वभावायोगात्। कदा (।) **स्वभावविपर्ययमन्तरेण।** पूर्वासम्बन्धिस्वभावत्यागमन्तरेण दोषान्तरमप्याह। **अर्थेन सहोत्पन्नस्य** च सम्बन्धस्य शब्दा**दन्यतः सिद्धस्यानुपकारिणि शब्दे** तस्या**समाश्रयत्वाच्च।** तद्भावायोग एव। (२३४)

अथ **तस्यापि** शब्दस्य **तदुत्पत्तिसहकारित्वे** सम्बन्धो[7](त्प)त्तिं प्रति सहकारित्वे कल्प्यमाने। **समर्थस्य** शब्दस्य **नित्योत्पादनप्रसंगः।** सर्वकालं सम्बन्धजननप्रसंगः। किं कारणं (।) **सहकार्यनपेक्षत्वात्।** अनपेक्षत्वं पुन**र्नित्यस्य** शब्दस्य सहकारिभि**रनुपकारात्।** अथासमर्थः सहकार्यपेक्षया जनयेत्। तदा प्राक्सम्बन्धजननं प्रत्य**सामर्थ्येपि पश्चाद**प्यर्थे सन्निधिकालेप्य**शक्तिः।** किं कारणं (।) पूर्वासमर्थ**स्वभावात्यागात्।** वस्तुभू[1]ते **सम्बन्धे** यो **दोषोयम्विकल्पिते** बुद्धिसन्दर्शिते सम्बन्धे **नास्ति।** 15

**न ही**त्यादि व्याख्यानं। तद**पेक्षा** तेषाम्भावानां परस्परापेक्षा कुतश्चिन्निमित्ताद् बुद्धिपरिकल्पितात्। **तल्लक्षणस्सम्बन्धः पुरुषभावनाप्रतिभासी** (।) **पुरुषस्य भावना**भ्यासवती विकल्पबुद्धिस्तत्र **प्रतिभासि**तुं शीलमस्येति कृत्वा। स **चैवं** पौरुषेयस्सम्बन्धो न भावश्लेषापेक्षी। भावश्लेषो मिश्रता तदपेक्षी न भवति[2]

**सोऽयं नित्यानामपि स्वभावमपरावर्त्तयन् कुतश्चित् स्वयमुत्प्रेक्ष्य घटयेदिति न च तावता ते च्यवनधर्माणः।**

**यदुक्तं प्राग्, आश्रयोपायेन आश्रितसम्बन्धस्य[2] विनाशात् अनित्य इति। तत्र—**

**नित्यत्वादाश्रयापायेप्यनाशो यदि सम्मतः।**
**नित्येष्वाश्रयसामर्थ्यं किं येनेष्टः स आश्रयः॥२३६॥**

**श्रूयते जात्याश्रययोर्नित्यत्वे[3] आश्रयस्य सहविनाशोऽपि नेति। अथ नित्येषु आश्रयसामर्थ्यन्न पश्यामो, येन अस्य आश्रयः स्यात्। कृतस्य करणाभावात्, कारकस्य चानपेक्षत्वात्[4]।**

**आश्रयाद् जातेः सम्बन्धस्य च व्यक्तिः उपकाराश्रय इति चेत्।**

**ज्ञानोत्पादनहेतूनां संबन्धात् सहकारिणाम्।**

---

सर्वेषाम्भावानां प्रकृतिभेदेन स्वस्वरूपावस्थानात्। केवलं **सोयं** पुरुषो **नित्याना-मपि स्वभावमात्मीयमपरावर्त्तयन्न** सम्बन्धिस्वभावं स्थिरमपनीयान्यं सम्बन्धि-स्वभावमनादधत्। **कुतश्चिदिति** तद्भावे कस्यचिद् भावदर्शनात्। अन्तस्तथाभूत-व्यवहारवासनापरिपाकाद्वा। **स्वयमुत्प्रेक्ष्ये**दमिह सम्बन्धमिति **घटयेदिति।** पुरुष-व्यवहाराभ्यासात्तेपि नित्याभि[3]मतास्तथा स्युः। पुरुषोपकल्पितसम्बन्धवन्तः स्युः। **न च तावता ते** पूर्वव्यवस्थितादसम्बन्धिस्वभावा (च्) **च्यवनधर्माणः।**

एतदुक्तम्भवति। बुद्धिपरिकल्पितः सम्बन्धस्त्वत्परिकल्पितः सम्बन्धस्त्वत्प-रिकल्पितेष्वपि नित्येषु न विरुध्यते। तस्मात् स एवाश्रयितुं युक्तो न वास्तव इति। **यदुक्तं प्रागाश्रयस्यापायेन** कारणेना**श्रितस्य सम्बन्धस्य विनाशादनित्यः** सम्बन्ध इति। **तत्रै**तस्मिन् दूषणे **नित्यत्वात्** स[4]म्बन्धस्या**श्रयापायेप्यनाशो यदि** जातिवदि-त्युच्यते। यथा जातेर्नित्यत्वादाश्रयनाशेप्यनाशस्तद्वत् सम्बन्धस्येति। (२३५)

अत्राप्याह। **नित्येष्वाश्र**याभिमतेषु जात्यादिष्वपि कायषु किमा**श्रयस्य सामर्थ्य**न्नैव। **येनेष्टः सो**किञ्चित्कर आश्रयः। **श्रूयत** इत्यादि विवरणं। श्रूयत इत्यनेन प्रसिद्धिमात्रमेतन्निर्वस्तुकमित्येतदाह (।) व्यक्त्याश्रिता। केवल**न्नित्येषु** जात्यादि[5]**ष्वाश्रयसामर्थ्य**माश्रयकृतमुपकारन्न **पश्यामो** येनासावाश्रयाभिमत **आश्रयः स्यात्।** किं कारणं (।) **कृतस्य** सिद्धस्वभावस्य **कारणाभावात्। अकारकस्य** चाश्रयस्या**नपेक्षत्वात्।** (२३६)

आश्रयात् सकाशाज्जातेः **सम्बन्धस्य च व्यक्ति**रभिव्यक्तिरूपस्य म्भ (?तु) योग्यता भवति। सैव चाश्रयकृत **उपकार**स्तेन कारणेन पदार्थ **आश्रय इति चेत्।**

उत्तरमाह। **ज्ञानेत्या**[6]दि। **सहकारिणां ज्ञानोत्पादनहेतूनां** प्रदीपादीनां

**तदुत्पादनयोग्यत्वेनोत्पत्तिर्व्यक्तिरिष्यते ॥२३७॥**
**घटादि[5]ष्वपि युक्तिज्ञैरविशेषेऽविकारिणाम् ।**
**व्यञ्जकैः स्वैः कुतः कोर्थो व्यक्तास्तैस्ते यतो मताः ॥२३८॥**

**सहकारिणः सकाशाद् उपादानापेक्षत्वात् ज्ञानजननंप्रति क्षणा[6]न्तरस्योत्पत्तिरेव घटादीनामभिव्यक्तिः । अन्यथाऽनपेक्ष्य तदुपकारं ज्ञानजननप्रसङ्गात् ।**

**सामर्थ्यकारिणश्च जनकत्वात्[7], तस्य तदात्मकत्वात् । अर्थान्तरत्वेऽनुपकारप्रसंगात् । सामर्थ्याच्च ज्ञानोत्पत्तेः घटादीनां नित्य[1]मग्रहणं स्यात् । आलोक-** 491a

---

**सम्बन्धाद्** योग्यदेशावस्थानात् सकाशात् **तदुत्पादनयोग्यत्वेन** स्वानुरूपज्ञानोत्पादनसामर्थ्येन **घटादिष्वपि** व्यंग्येषु **योत्पत्तिः** सैव **युक्तिज्ञै**र्न्यायविद्भि**र्व्यक्तिरिष्यते** । जात्यादीनान्तु व्यङ्ग्यानान्नित्यत्वाद**विकारिणां** व्यञ्जकात्सकाशाद**विशेषे** । ज्ञानोत्पादनयोग्यतानुत्पत्तौ । **स्वैर्व्यञ्जकै**स्तेषां जा[7]त्यादीनां **कोर्थः** क उपकारः **कुतः** (।) नैव कश्चित् । **यत**स्ते जात्यादय**स्तै**र्व्यञ्जकै**र्व्यक्ता मताः** । (२३७) 152a

**सहकारिण** इत्यादिना व्याचष्टे । सहकारिणः प्रदीपादेः **सकाशात्** किम्भूताद**ुपादानापेक्षात्** पूर्वको (ज्ञानजननासमर्थो)[11] घटादिलक्षण उपादानकारणं समर्थस्य घटादिलक्षणस्य घटापेक्षत्वात् ।[2] स्वविषय**ज्ञानजननं** प्रति योग्यस्य **क्षणान्तरस्योत्पत्तिरेव घटादीनामभिव्यक्तिः** । **अन्यथा** यदि प्रदीपादेस्सकाशात् ज्ञानोत्पादनयोग्यतां न लभन्ते घटादयस्तदा**नपेक्ष्य तदुपकारं** प्रदीपोपकारं घटादीनां **ज्ञानजननप्रसङ्गात्** ।

अथ प्रदीपादिः प्रागसमर्थस्य व्यंग्यस्य सामर्थ्यं करोतीतीष्यते । तदा **सामर्थ्यकारिणश्च** प्रदीपादेर्घटादीन्प्रति **जनकत्वात्** । किं कारणं (।) **तस्य** सामर्थ्यस्य **तदात्मकत्वाद**व्यं[2]ग्यात्मकत्वात् । तस्य जनने घटादिरेव जनितः स्यात् ।

अथ माभूदेष दोष इति प्रदीपादिकृतस्य सामर्थ्यस्य व्यंग्यादर्थान्तरत्वमिष्यते । तदा**र्थान्तरत्वे च** सामर्थ्यस्याभ्युपगम्यमाने । भावस्य घटादेः प्रदीपादिभि**रनुपकारप्रसङ्गात्** । न ह्यन्यस्मिन् कृतेन्य उपकृतो भवत्यतिप्रसंगात् । यच्च प्रदीपादिकृतं **सामर्थ्य**मर्थान्तरन्तस्मा**च्च** घटादि**ज्ञानो**[3]**त्पत्ते**स्सामर्थ्यमेव सर्वकालं गृह्येतेति स्वविषयज्ञानाजननानां **घटादीनां नित्यमग्रहण**प्रसङ्गात् । इष्यते च घटादीनां ग्रहणात् । तदाप्यनालोकापेक्षग्रहणप्रसंगात् । **आलोकमनपेक्ष्य** घटादीनाङ्**ग्रहणम्प्रसज्येते**त्यर्थः । आलोकानपेक्षैव कथमिति चेदाह । **अनपे-**

---

[1] In the margin. [2] "**तदपेक्षत्वात**" is missing.

**मनपेक्ष्य ग्रहणं प्रसज्येतेति । अनपेक्षाऽऽत्मानुपकारात् । तद् इमे स्वविषयविज्ञान-जनने परं[2] अपेक्षमाणाः, ततः स्वभावातिशयं स्वीकुर्वन्ति । तेनास्य ते जन्या एव । ज्ञेयरूपासादनात्तु ज्ञानवशेन कार्यातिशयवाचिना शब्देन विशेषख्या-त्यर्थं[3] व्यंग्यमित्युच्यते । नैवं जातिसम्बन्धादयः कथंचिदनुपकार्यत्वात् । अनुप-कारिणा नैव व्यक्ता युज्यन्ते ।**

**सम्बन्धस्य च वस्तुत्वे[4] स्याद्भेदाद् बुद्धिचित्रता ।**

**स चायं सम्बन्धो वस्तु भवन्नियमेन शब्दार्थाभ्यां भेदाभेदौ नातिवर्त्तते । रूपं हि तस्य स्वभावस्यातत्त्वमेव अन्यत्त्वमित्युक्तं प्राक् ।**

**स[5] चायं चक्षुर्ग्राह्यः सन् स्वबुद्धौ तदन्यविवेकेन रूपेणाप्रतिभासमानः कथ-**

---

क्षेत्यादि । येयं घटादीनामालोकानपेक्षा प्रसक्ता सा **आत्मानुपकारा**[4]**त्** प्रदीपा-दिभिर्घटाद्यात्मनोनुपकाराद् व्यतिरिक्तस्य हि सामर्थ्यस्य करणेन घटादीनां कश्चि-दुपकारः । **तदिति** तस्माद् **इमे** व्यंग्याः **स्वविषयज्ञानजनने** । **परम्**प्रदीपादिक**म-पेक्षमाणाः** । **तत** इति परस्मात् **स्वभावातिशयं** ज्ञानजननयोग्यं स्वरूपं **स्वीकु-र्वन्ति** (।) **तेन** कारणे**नास्य** प्रदीपादे**स्ते** व्यंग्याभिमता **जन्या एव** । यदि जन्या[5]: कस्माद् व्यङ्ग्या इत्येवम्व्यपदिश्यन्त इत्याह । **ज्ञेयरूपे**त्यादि । व्यञ्जकात् प्रदीपादेस्सकाशाज्ज्ञेयरूपस्य ग्राह्यरूपस्या**सादना**ल्लाभा**त्तु** कारणादवश्यं तद्विषयं ज्ञानम्भवति (।)अतो **ज्ञानवशेन** । **कार्यातिशयवाचिना** । अगृहीतज्ञानं कार्य कार्या-तिशयस्तद्वाचिना व्यंग्यादि**शब्देन** । अनागृहीतज्ञानेभ्यः कार्येभ्यो **विशेषख्यात्यर्थं** । यदावश्यकेणो[6] (?नो)पात्तज्ञानन्तदेव जन्यमपि सद् **व्यङ्ग्यमित्युच्यते** । यत्तु नैवंभूतन्तत्कार्यमेवेत्युच्यत इत्येवं प्रसिद्ध्यर्थं व्य(ङ)ग्याः ख्याप्यन्त इत्यर्थः । **नैवं जातिसम्बन्धादय** इति । जातिश्च सम्बन्धश्च तावादी येषां । आदिशब्दादन्यस्यापि नित्याभिमतस्याश्रितस्य परिग्रहः । **कथंचिदा**श्रयाभिमतेन।**नुपकार्यत्वात्** । **तेनानु-**

152b **पकारिणा नैव व्यक्ता युज्यन्त** इति स[7]म्बन्धः ।

न च सम्बन्धस्त्रिप्रमाणक इति दर्शयितुमाह । **सम्बन्धस्य च वस्तुत्वे** सम्ब-न्धिभ्यां सम्बन्धस्य **भेदात्** तृतीयः सम्बन्धाख्यो भावो जातः । स च यद्युपलब्धि-लक्षणप्राप्तस्तदा पदार्थत्रयालम्बनत्वेन **स्याद् बुद्धिचित्रता** । **स चायं** शब्दार्थयो-**स्सम्बन्धो वस्तु भवन्नियमेन शब्दार्थाभ्यां भेदाभेदौ नातिवर्त्तते** क्रामति । भेदा-भेदव्यतिरिक्तः प्रकारो भविष्यतीति चेदाह ।[1] **रूपं हीति** यतो रूपं स्वभावो वस्तु **तस्य स्वभावस्यातत्त्वमे**वातद्भाव **एवान्यत्त्वमित्युक्तं** प्राक् । "रूपस्यातद्-

**न्तथा स्यात् । अविवेकादर्शनयोर्विवेकसत्ता विपर्ययाश्रय[6]त्वात् । अन्यथा तत्स्थितेरभावप्रसङ्गः । ते च अतीन्द्रियत्वात् अप्रतिभासमानेऽपि न दोष इन्द्रियादिवदिति चेत् ।**

**. न । ततोऽप्रतिपत्ति[7]प्रसंगात्, अप्रसिद्धस्य च अज्ञापकत्वात् । सन्निधिमात्रेण ज्ञापनेऽव्युत्पन्नानामपि स्यात् ।** 491b

**नानुमानात् प्रतिपत्तिः, लिङ्गाभावात् दृष्टान्तासिद्धेः[1] । तत्राऽपि इन्द्रियत्वेन**

---

भूतस्यान्यत्त्वाव्यतिक्रमादि''त्यत्रान्तरे ।[1]

**स चायं** सम्बन्ध ऐन्द्रियः सन् **स्वबुद्धौ** सम्बन्धालम्बनायां बुद्धौ । **तदन्यविवेके**-नेति । **तस्मात्सम्बन्धादन्यस्सम्बन्धी** ततो **विवेके**नार्थान्तरेण **रूपेणाप्रतिभासमानः कथन्तथा स्यात्** तदन्यविवेकि रूपं कथं स्यात् । किं[2] कारणं (।) दृश्यस्य प्रत्यक्षादर्थादविवेकोऽपृथग्भावः (।) यच्चादर्शनन्तयोर्दृश्या**विवेकादर्शनयो**र्यथाक्रमं **विवेकसत्ता विपर्ययाश्रयत्वात्** । विवेकविपर्ययो विवेकाभावस्तस्य दृश्याविवेक आश्रयः । सत्ताविपर्ययोसत्त्वन्तस्य दृश्यादर्शनमाश्रयः । तेनायमर्थः (।) यद्यतो भेदेन नोपलभ्यते तत्ततो नान्यत् । यद्यत्[2] दृश्यं सन्नोपलभ्यते तन्नास्तीति या[3]वत् ।

**अन्यथेति** । यद्यतोर्थान्तरमभ्युपगतं दृश्यं च तस्य तस्मादविवेके सत्यदर्शने च यदि विवेकः सत्ता च कल्प्यते । तदा **तत्स्थिते**रविवेकाभावयोर्व्यवस्थिते**रभावप्रसङ्गः** । तथा हि दृश्याविवेकादर्शने अस्या व्यवस्थाया निमित्ते । **ते चेति**[2] विवेकाभावयोर्न साधनमिष्टे तदा तद्व्यवस्थोच्छिद्यते । **अतीन्द्रियत्वात्** सम्बन्धस्य विवेकेन बुद्धाव**वप्रतिभास[4]नेपि न यथोक्तदोष इन्द्रियादिवदिति चेत्** । यथेन्द्रियञ्चक्षुरादि रूपादिभ्यो विवेकेन बुद्धौ न प्रतिभासतेऽथ च व्यतिरिक्तमस्ति । तद्वत् सम्बन्धो भविष्यतीत्यर्थः

**नेत्या** चा र्यः । नातीन्द्रियस्सम्बन्धः । **ततो**तीन्द्रियात् सम्बन्धादर्थस्या**प्रतिपत्तिप्रसङ्गात्** । किं कारणं । **अप्रसिद्धस्य** स्वेन रूपेणानिश्चितस्या**ज्ञापकत्वात्** । न हि येन सह यस्य सम्बन्धो[5] न गृह्यते तद्द्वारेण तस्य प्रतीतिर्युक्ता ।

अथाज्ञात एव सम्बन्धोर्थं ज्ञापयतीन्द्रियवदित्याह । सन्निधिमात्रेणेत्यादि । सम्बन्धस्य **सन्निधिमात्रेण** सत्तामात्रेणार्थ**ज्ञापने**भ्युपगम्यमाने शब्दार्थसम्बन्धम्प्रत्य**व्युत्पन्नानाम**[8]प्यस्यार्थस्यायम्वाचक इति प्रतिपत्तिः **स्यात्** ।

स्यान्मतम् (।) अस्त्येव सम्बन्धस्य विवेकेनोपलब्धिः । सा तु न प्रत्यक्षात्

---

[1] B. **यच्च** । [2] B. **ते चेद्** । [3] B. **प्राप्य** ।

**साधनापेक्षणात् ।**

**इन्द्रियादिषु तुल्यमिति चेत् । न । तेषामन्यथानुमानात् । ज्ञानं केषुचित् सत्सु अन्वयवत् व्यतिरेकवच्च तन्मात्रादसम्भवं तद्व्यतिरेकापेक्षां च साधयति ।**

**ततः कार्यद्वारेणेन्द्रियसिद्धिः । नैवं सम्बन्धस्य ।**

**तस्यैवासिद्धौ तत्कार्यस्यैव ज्ञानाभावात्[3] । न हि शब्दरूपमर्थो वा लिंगम् । तयोः सर्वत्र योग्यत्वात् । अर्थविशेषप्रतीतिसमाश्रयस्य अप्रत्यायनात् न प्रतीतिः ।**

---

किन्तर्ह्यनुमानादित्यत आह । **नानुमा[6]नात् प्रतिपत्तिस्सम्बन्धस्य** । कुतो **लिङ्गाभावात्** । न हि सम्बन्धसाधनं किञ्चिल्लिङ्गमस्ति । अर्थप्रतीतिरपि न लिङ्गं **दृष्टान्तासिद्धेः** । न हि क्वचिद् दृष्टान्ते सम्बन्धकार्याऽर्थप्रतीतिः प्रतिपन्ना । किङ्कारणं (।) **तत्रापि** दृष्टान्तत्वेनोपनीते सम्बन्धस्या**तीन्द्रियत्वेन** कारणेन **साधनापेक्षणात्** । न चास्ति साधनं (।) तत्रापि दृष्टान्तासिद्धेः ।

153a तदेतद् दृष्टान्तरहितत्व**मिन्द्रियादि**ष्वतीन्द्रिये[7]षु सत्तासाधकेनुमाने क्रियमाणे **तुल्यमिति चेत्** । **न** तुल्यं । कुतः । **तेषा**मिन्द्रियादीना**मन्यथानुमानात्** । नप्रत्यक्षाणामिन्द्रियादीनामिदन्तया किंचिद् रूपं प्रसाध्यते । येन तुल्यो दोषः स्यात् । किन्तु **ज्ञानं** कार्यभूतं प्रत्यक्षं **केषुचि**दालोकादिषु **सत्सु** व्यतिरेका**न्वयवत्** । निमीलितलोचनाद्यवस्थासु **व्यतिरेकवत्** । उन्मीलित[1]लोचनाद्यवस्थासमन्वयवत् । तदेवंभूतं ज्ञा[1]नं कार्यन्तन्मात्रासम्भवं । येषु सत्स्वप्यभवद् दृष्टन्**तन्मात्रादसम्भवम**नुत्पत्तिमात्मनः साधयति । **तद्व्यतिरिक्तापेक्षां च** । यथा सन्निहितकारणाद् व्यतिरिक्तकारणापेक्षाञ्च **साधयति** ।

अस्ति किमपि कारणान्तरमिति । **ततो** यथोक्तान्वयात्[2] **कार्यद्वारेणेन्द्रियसिद्धिः** । कारणान्तरवैकल्यासम्भविनश्चांकुरादयोत्र दृष्टान्तः । **नैवं सम्बन्धस्य** चक्षुरादिव[2]त्कार्यव्यतिरेकेणानुमानं । विशेषानुमानात् । तथा हि सम्बन्धोस्तीति यदनुमानन्तद्विशेषस्यैवानुमानं ।

तच्चायुक्तं । किं कारणं । **तस्यैव** सम्बन्धस्या**सिद्धौ** सत्यान्**तत्कार्यस्यैव** सम्बन्धकार्यस्यैव **ज्ञानस्याभावात्** । शब्दार्थौ लिङ्गमिति चेदाह । **न हीत्यादि** । न हि **तत्र** सम्बन्धविशेषे **शब्दरूपमर्थो वा लिङ्गं** । किं कारणं (।) **तयोः** शब्दार्थयो**स्सर्वत्र योग्यत्वात्** । सर्वस्य शब्दस्य सर्वस्मिन्नर्थे वाचकत्वेन योग्यत्वात् सर्वस्य चार्थस्य सर्वस्मिन् शब्दे वाच्यत्वेन योग्यत्वात् ।[3] अर्थविशेषप्रतीतेश्च कारणं सम्बन्धविशेषस्तस्य चा**र्थविशेषप्रतीतिसमाश्रयस्य** सम्बन्धस्यानियताभ्यां शब्दार्था-

---

[1] B. **कार्यतन्मात्रा०** । [2] B. **०क्तान्यायात्** । [3] B. **सर्वस्य चार्थस्य सर्वस्मिन् शब्दे वाच्यत्वेन योग्यत्वात्**—added

**न ह्यसत्यां सम्बन्धविशेषेण सा युक्ता। तस्यां वा अनिमित्तायां तद्विशेषः प्रतीतिनियमवत् प्रतिपादनमप्यनिमित्तं शब्दानां किन्नेष्यते? ततस्तल्लिङ्गं सदृशं अविशेषेण सम्बन्धं गमयेत्। तस्माद[5]विशेषेणैव सर्वस्यार्थस्य प्रतीतिः स्यात्। तस्मात् सम्बन्धसिद्ध्याऽर्थप्रतीतेर्न कश्चित् सम्प्रदायं अपेक्षेत।**

**सम्प्रदायसहितस्य लिङ्गत्वमिति चेत्। तत् किमनया परम्परया? स एव सम्प्रदायापेक्षोऽर्थज्ञापनं किन्न करोति?**

---

भ्याम**प्रत्यायनात्**। प्रत्यायने वा विशेषाभावे न सर्वसम्बन्धप्रतीतः सर्वार्थगतिः स्यात्। न चैवम् (।) तस्मादनियता[4]भ्यां शब्दार्थाभ्यामप्रतीतिरस्य सम्बन्धस्य।

यदि च शब्दार्थानां सम्बन्धेन सह सम्बन्धविशेषः सिद्धः स्यात् क्वचित्तदा सम्बन्धविशेषप्रतीतिः स्यात्। **न ह्यसत्यां सम्बन्धविशेषेण** शब्दानां सम्बन्धसिद्धौ **सा** सम्बन्धविशेषप्रतीति**र्युक्ता**।

अथ पुनस्सम्बन्धमन्तरेण शब्दात् सम्बन्धविशेषप्रतीतिरिष्यते **तस्याम्वा** सम्बन्धप्रतीता**वनिमित्तायामि**ष्यमाणाया[5]न्**तद्विशेषः प्रतीतिनियमवत्** सम्बन्धविशेषप्रतीतिप्रतिनियमवद्[1] **अर्थप्रतिपादनमप्यनिमित्तं शब्दानां किन्नेष्यते**। **तच्छ**ब्दार्थस्वभावं **लिङ्गं सदृश**न्तुल्यं **सर्वसम्बन्धे**[2] (।) **तत**श्चा**विशेषेण** शब्दः **सर्वं सम्बन्धङ्गमयेत् तदाऽविशेषेणैव सर्वस्यार्थस्य प्रतीतिः स्यात्**। सर्वस्य पुरुषस्य गृहीतसमयस्यागृहीतसमयस्य[3] सर्वार्थप्रतीतिः स्यात्। **तस्माद्** यथोक्ते[6]न न्यायेन **सम्बन्धसिद्ध्याऽर्थप्रतीतेः** कारणा**न्न कश्चित्** पुरुषोर्थप्रतीतौ **संप्रदायं** परोपदेश**मपेक्षेत**।

न केवलस्य शब्दस्य सम्बन्धसिद्धौ लिङ्गत्वं किन्तु **संप्रदायसहितस्य लिङ्गत्वमिति चेत्**। **तत्किमिदानीमनया परम्परया**। सम्प्रदायस्ततः शब्दस्य लिङ्गत्वन्तस्मात् सम्बन्धप्रतीतिस्ततोर्थस्य प्रत्यायनमिति किमनया परम्परया।[7] **स एव** शब्दः केवलो वस्तुभूतसम्बन्धरहितस्**सम्प्रदायापेक्षोर्थज्ञापनं किन्न करोति** येन सम्बन्धोपरः कल्प्यते। 153b

अत एवार्थप्रतीत्यन्यथानुपपत्त्यापि शक्तिसम्बन्धकल्पना निरस्ता। शक्तिमन्तरेण संकेतबलादेवार्थप्रतीतिसम्भवात्।[4] तेन "सम्बन्धस्त्रिप्रमाणक" इति यदुच्यते तदपास्तं।

---

[1] B. तद्विशेषप्रतीतिप्रतिनियतवत्। [2] B. तुल्यं सम्बन्धः।

[3] B. च—added. [4] B. सदभावात।

4922 **स च शब्दो यदभिप्रायैः प्रयुज्यमानो दृष्टोऽन्यथा न दृष्टः। दर्शना[7]दर्शनाभ्यां धूमादिवत् प्रतीतिं जनयतीति अविनाभावाख्यः सम्बन्धः। न चात्र अन्यस्य सामर्थ्यं पश्यामः[1]।**

**अथापि शब्दार्थयोः सम्बन्धो नान्यस्य—**

ताभ्यामभेदे तावेव नातोऽन्या वस्तुनो गतिः ॥२३९॥

**रूपभेदनिबन्धनत्वात् व्यवस्थान्तरस्य। तद्रूपं तु तदेव स्यात्।[2] धर्मभेदस्तु स्यात् पूर्वोक्तेन क्रमेण। स चाविरुद्ध एव, न तु वस्तुभेदः। न भेदाभेदौ मुक्त्वा वस्तुनोऽन्या गतिः।**

**तस्य वस्तुनो लक्षण[3]त्वात्। रूपस्य चैतद् विकल्पानतिवृत्तेः। किञ्च।**

---

**स च शब्दो यदभिप्रायै**र्यदर्थप्रतिपादनाभिप्रायैः पुरुषैः **प्र[1]युज्यमानो दृष्टः** समयकाले**ऽन्यथा न दृष्ट इति** विवक्षितार्थविपर्ययेण प्रयुज्यमानो न दृष्टः। एतेनान्वयव्यतिरेकावुक्तौ। (२३८)

इति यथोक्ताभ्यान्**दर्शनादर्शनाभ्या**न्तस्यार्थस्य **प्रतीतिञ्जनयति धूमादिवत्**। स एव दर्शनादर्शनशब्दाभ्यां सूचितः शब्दार्थयोर**विनाभावाख्यः सम्बन्धः**। **न चात्रा**प्रतीतिजनने यथोक्तमविनाभावं मुक्त्वा**न्यस्य** वस्तुभूतस्य[2] सम्बन्धस्य **सामर्थ्यम्पश्यामः**। नापि तस्य सम्बन्धस्य सिद्ध्युपायं सिद्धिनिमित्तं किंचित् पश्यामः।

एवन्तावत् सम्बन्धिभ्यां सम्बन्धभेदाभ्युपगमे दोषमुक्त्वाऽभेदाभ्युपगमेपि दोषमाह। **अथे**त्यादि। **ताभ्या**मिति सम्बन्धिभ्यां सम्बन्धस्या**भेदे** सति। **तावेव** सम्बन्धिनावेव शब्दार्थौ केवलमिति न सम्बन्धो नाम कश्चित्। तत्त्वान्यत्त्वरहितस्तर्हि सम्बन्धो भवि[3]ष्यतीति चेदाह। **नात** इत्यादि। अतस्तत्त्वान्यत्वविकल्पाद**न्या** नास्ति **वस्तुनो गतिः**।

**रूपे**त्यादि विरणं।[१] **रूपभेदः** स्वभावभेदः। तन्नि**बन्धनत्वाद्** व्यवस्थान्तरस्येति स्वभावान्तरव्यवस्थानस्य। यत्तु न भिन्नरूपं किन्तु तद्रूपं सम्बन्धिरूपमेवेष्टं सम्बन्धाख्यम्वस्तु। तत्तदेव स्यात्। सम्बन्धिस्वभावमेव स्यान्नान्यत्। कथन्तर्ह्यनयोः सम्बन्ध इति[4] प्रतीतिरित्याह। **धर्मभेदस्तु** परिकल्पितः **स्यात्**। **पूर्वोक्तेन क्रमेणा**न्यापोहविहितेन व्यावृत्तिभेदसमाश्रयेण। **स च** व्यावृत्तिभेदः। कल्पनाकृत एकस्मिन्नप्य**विरुद्धः**। **न तु वस्तुभेद** एकत्राविरुद्धः किन्तु **विरुद्ध एव**। एकस्य परमार्थेन नानात्वायोगात् **न भेदाभेदौ मुक्त्वा वस्तुनोन्या गतिः**।

---

[१] B. **वचनं**।

**भिन्नत्वाद्वस्तुरूपस्य सम्बन्धः कल्पनाकृतः ।**

**इत्युक्तं प्राक् । न हि श्लेषलक्षणः सम्बन्धिनो[4]रश्लिष्टेषु पदार्थेषु सम्भवति । न च तयोः सम्बन्धस्य अर्थान्तरमपि भवति । एवम्—**

**सद् द्रव्यं स्यात् पराधीनं सम्बन्धोऽन्यस्य वा कथम् ॥२४०॥**

**न हि सिद्धं सत् परमपेक्षते[5] । अनपेक्षत्वेन स्वतन्त्रश्च न सम्बन्धः । द्रव्यमिति स्वभाव उच्यते । स कथं परभावस्य श्लेषः स्यात् । न स्वभावान्तरस्य सत्तयाऽन्यः श्लिष्टो नाम[6] । अश्लिष्ठेन माभूत्, श्लिष्टेन तु स्यादिति चेत् । न । यस्तौ श्लेषयेत्, तस्यैव ताभ्यां श्लेषासिद्धेः । तदिमौ यद्यर्थान्तरेण[7] श्लिष्यतः** 492b

---

कुतस्तस्य **वस्तुनो** रूपलक्षणत्वात् स्वभा[5]वलक्षणत्वात् । **रूपस्य चैतद् विकल्पानतिवृत्तेः** । भेदाभेदविकल्पानतिवृत्तेः । **भिन्नत्वाद् वस्तुरूपस्य** शब्दार्थस्वरूपस्य । न रूपश्लेषलक्षणस्**सम्बन्धो** भाविकः किन्तु **कल्पनाकृत एवेत्युक्तं प्राक्** । "पुरुषस्य व्यवहाराभ्यासादसंसृष्टावपि संसृष्टौ तौ भासेते तद्वशात्सम्बन्धव्यवस्थेत्या" दिना । **न हि श्लेषलक्षणस्सम्बन्धिनोः** परस्परम्मिश्र[6]तालक्षणः सम्बन्धो**ऽश्लिष्टेष्व**संसृष्टेषु **पदार्थेषु सम्भवति** । शब्दार्थानां रूपश्लेषादर्थान्तरमेव तृतीयम्वस्तु सम्बन्ध इत्याह । **न चे**त्यादि । (२३९)

यस्मान्निष्पन्नं **सत्** तदर्थान्तरम्**पराधीनं** कथं । सम्बन्धाधीनं कथम्भवेत् । सम्बन्धाधीनश्च सम्बन्ध इष्यते द्विष्ठत्वात् । नापि तदर्थान्तरम्परश्लेषरूपत्वात्सम्बन्धो युज्यत इत्याह । **द्रव्य**म्पदार्थान्तरञ्च[7] **कथमन्यस्य** सम्बन्धिनः **सम्बन्धः स्यात्** । 154a

एतेनार्थान्तरत्वे सम्बन्धस्य सम्बन्ध्याश्रितत्वम्परश्लेषरूपत्वञ्च यत्परेणेष्टन्तदुभयं निरस्तं ।

यदि नामार्थान्तरं कस्मात् पराधीनं न भवतीत्याह । **न ही**त्यादि । यस्मा**न्न हि सिद्धं सत् परमपेक्षते** । निष्पन्नस्य सर्वनिराशंसत्वात् । **अनपेक्षत्वेन स्वतन्त्रश्चा**न्यस्य **न सम्बन्धः** । [1]न चार्थान्तरं सम्बन्धो युज्यते (।) यस्माद् **द्रव्यमिति स्वभाव उच्यते** पदार्थान्तरमेवोच्यते (।) **स कथं परभावस्य** सम्बन्धिनोः **श्लेषः स्यात्** । नैव स्यात् । नापि श्लेषहेतुर्भवति । किं कारणं । यस्मा**न्न स्वभावान्तरस्य** तृतीयस्य **सत्तयान्यः** सम्बन्धिनोः स्वभावः **श्लिष्टो नामाभूवश्लिष्टे**नासम्बद्धेन सम्बन्धाख्येन श्लिष्टो भावः । **श्लिष्टेन तु** श्लिष्टः **स्यादिति[2] चेत्** ।

**नैतदेवं** । किं कारणं (।) **तस्यैव** सम्बन्धाख्यस्य **ताभ्यां** सम्बन्धिभ्यां **श्लेषा-**

**तदाऽतिप्रसंगः विशेषाभावात्।**

**किञ्च—**

**वर्णा निरर्थकाः सन्तः पदादिपरिकल्पिताः।**
**अवस्तुनि कथं वृत्तिः सम्बन्धस्यास्य वस्तुनः॥२४१॥**

**वाचको हि वचनांगेन तद्वान् स्यात्। सन्तोऽपि वर्णा अवाचकाः। तद् न तेषु वाच्यवाचकभावसम्बन्धो वर्त्तते। तद्वृत्तौ स्वरूपहानिप्रसंगात्[2]। क्रमविशेषेण वर्णा एव वाचका इति चेत्।**

---

**सिद्धेः।** **यस्सम्बन्धः** सृष्टः सन् **तौ** सम्बन्धिनौ श्लेषयेत्। **तदय**मित्यादि। **यद्यर्थान्तरेण** तृतीयेन सम्बन्धिनौ श्लिष्यतस्तदातिप्रसंगः। सर्वो येन केनचित् तृतीयेन श्लिष्टः स्यात्। **विशेषाभावात्।** न हि सम्बन्धाभिमतस्यान्यस्य च पदार्थान्तरेण सम्बद्धत्वे कश्चिद् विशेषोस्ति। (२४०)

**किञ्च।**[3] **वर्णा** ये **सन्तो** वस्तुसन्तस्ते तावन्निरर्थकास्ततो न ते वाचकास्तेन न तत्र वाच्यवाचकसम्बन्धस्य वृत्तिः। पदादेस्तर्हि सार्थकत्वात् तत्र सम्बन्धवृत्तिर्भविष्यतीत्याह। **पदादिपरिकल्पित**मादिशब्दाद् वाक्यम्वाचकम्भवेत्। तस्मिंश्च परिकल्पिते पदे वाक्ये वाऽवस्तुन्यवस्तुस्वभावे। कथं **सम्बन्धस्य** वाच्यवाचकत्वलक्षणस्य **वस्तुनो** वस्तुस्वभावस्य **कथम्प्रवृ**[4]**त्ति**र्नैव।

**वाचको** हीत्यादि विवरणं। वाचको हि **वचनांगेनो**क्तिनिमित्तेन सम्बन्धाख्येन **तद्वान्** सम्बन्धवान् **स्यात्।** **सन्तोपि** विद्यमाना अपि **वर्णाः** प्रत्येकमर्थाप्रतिपादकत्वात्। साहित्याभावात्। नानाप्रयोक्तृप्रयुक्तेभ्यश्चार्थप्रतिपत्त्यदर्शना**दवाचकाः।**

**तदि**ति तस्मान्न **तेषु** वर्णेषु **वाच्यवाचकभावसम्बन्धो वर्त्तते।** **तद्वृत्तौ** तेषु वाच[5]केषु वर्णेषु सम्बन्धस्य वृत्तौ सत्यां सम्बन्धस्य यद्वाचकत्वाङ्गत्वन्तस्य हानिप्रसङ्गात्।

**क्रमविशेषेणा**नुपूर्वी विशेषेणैकप्रयोक्तृप्रयुक्ता **वर्णा एव वाचका**स्ततो न यथोक्तदोष **इति चेत्।** तदुक्तं।

"यावन्तो यादृशा ये च यदर्थप्रतिपादने।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः॥" (स्फोट० ६९)

**एतदेव स्पष्टयति।**

**"तेषान्तु गुणभूतानामर्थ[6]प्रत्यायनं प्रति।**
**साहित्यमेककर्त्रादिक्रमश्चापि विवक्षितः॥ (स्फोट० ७०)**

**न। क्रमस्यानर्थान्तरत्वेन अभेदकत्वाद्। तद्रूपस्य क्रमान्तरेऽपि अविशेषात् तुल्या[3] प्रतिपत्तिः।**

**अर्थान्तरत्वमपि क्रमस्य पश्चात् निषेत्स्यमानत्वात्।**

---

कर्त्रेकत्वनिमित्ते च क्रमे सति नियामकं।
प्रयुञ्जानस्य यत्पूर्वम्वृद्धेभ्यः क्रमदर्शनं॥ (स्फोट० ७१)
युगपद् दृष्टसामर्थ्यान्नैव[1] शक्ताः क्रमे यथा।
भावास्तथा क्रमे शक्ता यौगपद्ये न शक्नुयुः॥" ( ,, ७३)

किञ्चार्थप्रत्यायनं प्रति।

"अवश्यम्भाविनी नित्यं प्रत्यासत्तिश्च[7] कस्यचित्। 154b
न तावता व्यपेतत्वादितरेषामनङ्गता॥ ( ,, ८३)
यथा विसर्जनीयस्य व्यवधाने न शक्तता।
तथैव शक्तिरन्येषामानन्तर्ये न विद्यते॥ ( ,, ८५)
न च यत्रैकशोऽशक्तिस्तत्र सर्वेषाम[2]शक्तता।
रथाङ्गानि हि दृश्यन्ते शक्तानि[3] वहनादिष्वि"ति॥ ( ,, ८६)

नेत्यादिना परिहारमाह। नैतदेवं। यस्माद् वर्णेभ्यः क्रमस्यानर्थान्तरत्वं स्यादर्थान्तरत्वम्वा[4]। तत्र प्रथमे पक्षे **क्रमस्यान[1]र्थान्तरत्वेन** कारणेना**भेदकत्वाद**विशेषकत्वात्। न हि यद्यतोनर्थान्तरन्तत्तत्स्वभावस्य भेदकम्भवति। ततश्च **तद्रूपस्य** वर्णात्मकस्य क्रमस्य। रस इत्यत्र यद्रूपन्ततः **क्रमान्तरे** सा इत्येतस्मि**न्नपि** वर्णवद**विशेषात् तुल्या** स्यादर्थ**प्रतिपतिः**।

व्यतिरिक्तस्तर्हि वर्णेभ्य : क्रम इत्यत आह **अर्थान्तरत्वम**पीति। वर्णेभ्योर्थान्तरत्वमपि **क्रमस्य[2] पश्चात् निषेत्स्यमानत्वात्**। यतो न युगपदुत्पन्नानाम्वर्णानां[5] क्रमः सम्भवत्यप्रतीतेः। अयुगपदुत्पन्नानामपि नार्थान्तरभूतः क्रमोऽयुगपदुत्पादस्यैव क्रमरूपत्वात्। तथा हि लौकिकाः क्रमं कथयन्तोऽयुगपदुत्पादमेव कथयन्ति। **तस्मा**दयुगपदुत्पाद एव क्रमः। नापि क्रमोऽयुगपदुत्पन्नयोरेकस्य धर्मं एकप्रतीतौ क्रमस्याप्रती[3]तेः। नाप्युभयधर्मः। एककालमुभयस्यासत्वादसतश्च कथं धर्मः। तस्मात् पूर्वापरयोर्भावयोः स्वरूपमेव क्रम उच्यते इति वक्ष्यति। पूर्वापररूपे च क्रमे तथापि न वर्णाः क्रमेणार्थाधिगमनिमित्तम्भवंति। प्रत्येकमर्थाप्रतिपादकत्वात्। साहित्याभावात्। नियतक्रमवर्त्तिनामयौगपद्येन सम्भूय कारित्वानुपपत्तेश्च।

---

[1]B. सामर्थ्या नैव। [2]B. सर्वेष्वशक्तता।
[3]B. शक्तानि दृश्यन्ते। [4]B. च [5]B. नास्ति वर्णानां।

---

स्यादेतद् (।) यथा के[4]वलस्य बीजस्यांकुरं प्रत्यकारकत्वेपि सहकारिसन्निधाने विशिष्टत्वात् कारकत्वं। तथा वर्णाः प्रत्येकमसमर्था (अ)प्यानुपूर्वीविशेषेण विशिष्टा अर्थप्रतीतिहेतव इति।

तदयुक्तं। अन्त्यस्य हि वर्णस्य वर्णान्तरसहितस्य केवलस्य चोच्चारणे को विशेषो यत्कृतावर्थप्रतीतिभावाभावौ स्यातां।

नन्वयमेव विशेषो ये सहितासहित[5] ते।

सत्त्य। कार्यकरणे हि खलु तेषां साहित्यं। न च ते यदा सन्तस्तदा व्याप्रियन्तेर्थप्रतीतौ। प्रत्येकमसमर्थत्वात्। नाप्यन्यवर्णकालेऽसत्त्वात्।

एष तर्हि विशेषो येयं क्वचित् प्रवृत्ता पूर्ववर्णोपलब्धिः क्वचिन्नेति।

नैतदपि सारं। न हि प्रवृत्तापूर्ववर्णोपलब्धिरन्त्यम्वर्णम्भेत्तुमर्हत्यसत्त्वात्। अविशेषे च यत्र कार्ये वर्णानां प्रत्येकमशक्तिस्तत्र[6] सहितानामप्यविशेषात्। अन्धानामिवादित्यदर्शने।

तेन न च यत्रैकशो शक्तिरित्यादि निरस्तं। रथाङ्गानां हि विशेषोत्पत्तौ सत्यां साहित्यावस्थायाम्वहनादौ सामर्थ्यमन्यथा प्रत्येकवत् साहित्येपि सामर्थ्यन्न स्यात्। न च परस्परम्वर्णानां कार्यकारणभावो येन पूर्वे वर्णाः पारम्पर्येणार्थप्रतीतौ 155a शक्ताः स्युः।[7] नापि पूर्ववर्णजनितसंस्कारसहितस्यान्त्यस्य वर्णस्यार्थप्रतीतिहेतुत्वात् पूर्ववर्णानां पारम्पर्येण सामर्थ्यं। वर्णानुभवाहितसंस्कारस्य वर्णेष्वेव स्मृतिहेतुत्वान्नार्थे। न हि गवानुभवाहितसंस्कारोऽश्वे स्मरणमुपकल्पयति। न च पूर्ववर्णाहितसंस्कारसहितान्त्यवर्णदर्शने सत्यर्थप्रतीतेर्दृष्टवात् तद्धेतुत्वं। संकेताभावेर्थप्रतीतेरभा[1]वात्। संकेतश्च सामान्यविषयो न वर्णस्वलक्षणविषय इति कथम्वर्णाः क्रमविशेषेण वाचकाः।

किञ्च (।) केवलस्य वर्णस्यार्थाप्रतिपादकत्वे संस्कारसहितस्यापि न तत् स्यात्। विशेषानुत्पत्तेः (।) तत्कथं कश्चिद्वर्णः साक्षादर्थप्रतिपादने समर्थः कश्चित् पारम्पर्येणेत्युच्यते। यदप्युच्यते।

"इत्थं क्रमगृहीतानां युगपद् याथवा स्थितिः।[2]
ततः सा कारणं नः स्यान्नित्यमर्थधियम्प्रति॥"[1]

एवं क्रमप्रतिपन्नानाम्वर्णानां नित्यत्वाद् व्यापित्वाच्चाकाशदेशे या युगपत् स्थितिरवस्थानन्तदेव निमित्तमर्थप्रतीतिं प्रतीति।

तदयुक्तं। प्रतीयमानो हि शब्दार्थं प्रतिपादयति न सन्निधानमात्रेण। सर्व-

---

[1] Śloka, Sphot. 108.

पदार्थप्रतिपादनप्रसङ्गात्। न चैककर्त्तृकाणां यौगपद्यं प्रतिभासते। नापि नित्य[3]-त्वं व्यापित्वं च युज्यत इति वक्ष्यतीत्यसारमेतत्।

यच्चाप्युच्यते।

"यद्वा प्रत्यक्षतः पूर्वं क्रमज्ञातेषु यत्परं।
समस्तवर्ण्णविज्ञानन्तदर्थज्ञानकारणं॥
तत्र ज्ञाने च वर्ण्णानां यौगपद्यं प्रतीयते।
नावश्यं यौगपद्येन प्रत्यक्षस्थेन तद् भवेत्॥"[1]

यत्परमित्युत्तरं पूर्वापरपरामर्शेन (?ण) समस्तवर्ण्णविषयं विज्ञानन्तदर्थप्रतीति-निमित्तं। त[4]द् भवेदित्यर्थप्रतिपादनम्भवेदन्येनापि यौगपद्यज्ञानेनार्थप्रतिपादनम्भवे-दित्यर्थ इति।

एतदप्ययुक्तं। क्रमो हि प्रयोक्तृप्रयुक्तो न यौगपद्यं। प्रयोक्तृप्रयुक्ताव-स्थेभ्यश्च वर्ण्णेभ्योर्थप्रतीतिरिति न यौगपद्यादर्थप्रतीतिः स्यात्। सक्रमाणाञ्च वर्ण्णानां यौगपद्येन ग्रहणे भ्रान्तत्वप्रसंगात्। न च तेषां यौगपद्यमस्ति नित्यत्वा[5]-योगादिति।

"चित्ररूपां च तां बुद्धिं सदसद्वर्ण्णगोचरां।
केचिदाहुर्यया वर्ण्णो गृह्यतेऽन्त्यः पदे पदे॥" (स्फोट० ११)

प्रतिपदमन्त्यो वर्ण्णो यया बुद्धया गृह्यते सा सन्निहितासन्निहितवर्ण्णविषयत्वेन स्मरणप्रत्यक्षरूपाभ्यामुभयरूपेति केचिदाहुः।

तदप्ययुक्तम् (।) एकस्य ज्ञानस्य प्रत्यक्षाप्रत्यक्षरूपविरोधात्। न च प्रत्यक्ष-मेवै[6]कं सदसद्वर्णविषयं। अभावविषयत्वविरोधात्। नापि स्मृतिरूपं सन्निहित-विषयत्वेनानिष्टत्वात्। अत एव च पदादिग्राहकज्ञानं कल्पितविषयं स्यादिति।

अन्ये त्वन्त्यवर्ण्णपरिज्ञाने सति पूर्ववर्ण्णानुभवाहितसंस्कारप्रबोधकारितं स्मरणं सर्ववर्णेष्वर्थप्रत्यायकमाचक्षते। तदाह।

अन्त्यवर्ण्णे हि विज्ञाने सर्वसंस्कार[7]कारितं स्मरणं यौगपद्येन सर्वेष्वन्ये 155b प्रचक्षते॥ कथं क्रमेणानुभूतानां युगपत्स्मरणमिति चेदाह।

"सर्वेषु चैवमर्थेषु मानसं सर्ववादिनां।
इष्टं समुच्चयज्ञानं क्रमज्ञानषु सत्स्वपि॥ (स्फो० ११३)
तेन श्रोत्रमनोभ्यां च क्रमाद् वर्ण्णेषु यद्यपि।
पूर्वं ज्ञानं परस्तात्तु युगपत् स्मरणम्भवेत्॥

[1] Śloka, Sphot. 109-10

**वर्णानां न वाचकत्वे पदादि वाचकं स्यात्।**

(वैयाकरणपक्षनिरासः—)

**तदसति वर्णानां वाचकत्वे पदादि वाचकं स्यात्। तच्च न किंचित्। व्यतिरेकाव्यतिरेकयो[4]विरोधात्।**

**तस्माद् इन्द्रियविज्ञानविशेषानुबन्धि सभागवासनोपादानविकल्पप्रतिभासविभ्रमं पदं[5] एकावभासि मिथ्यैव। एकानेकत्वयोरयोगात्। अनेकया बुद्धया**

---

तदारुढास्ततो वर्णा न दूरेर्थावबोधनात्।
शब्दादर्थमतिस्तेन लौ[1]किकैरभिधीयत" इति ॥[2]

एतदप्ययुक्तं। एककर्त्तृप्रयुक्तानामेवार्थप्रतिपादकत्वेनायुगपद्वर्त्तिनामेवार्थप्रतिपादकत्वात्। न च स्मरणविषयाणां वर्णानां यौगपद्यमध्यवसीयते। नियतक्रमाणामेव स्मर्यमाणत्वात्। नापि स्मृत्या वर्णस्वलक्षणग्रहणम्प्रत्यक्षवत् स्पष्टप्रतिभासाभावात्। एकस्य च स्पष्टास्पष्टानेकाकारायोगाच्च। केवलं स्मरणेनास्पष्टस्वभावा[2]नाम्वर्णानां स्वाकाररूपाणां बाह्यवर्णाभेदेनाध्यवसायात् बाह्यवर्णानामेव वाचकत्वमुच्यते। अवाह्येषु च वर्णेषु बाह्यवर्णाध्यवसायेन पदादिपरिकल्पितमस्माभिरिष्यते।

एवं मीमांसकपक्षे वर्णानां वाचकत्वे निरस्ते पदाद्यपि निरस्तमेव। वर्णादिव्यतिरेकेण पदादेरभावात्। तदुक्तं।

न वर्णव्यतिरेकेण पदमन्यद्धि विद्यते।
वाक्यम्वर्णपदाभ्यां च व्यतिरि[3]क्तन्न किञ्चनेति ॥

संप्रति वैयाकरणानां वर्णादिव्यतिरिक्तम्पदादि निराकर्त्तुमाह। **तदसतीति**। तदित्युपन्यासे। तस्मादर्थे वा। **असति वर्णानाम्वाचकत्वे पदादि वाचकं स्यात्तच्च** पदादि **न किञ्चित्**। किं कारणम् (।) वर्णेभ्यस्तस्य पदादे**र्व्यतिरेकाव्यतिरेकयोर्विरोधात्**। व्यतिरेके भेदेनोपलम्भः स्याद् दृश्यस्य। अदृश्यत्वेप्यवाचकत्वमगृहीतस्य ज्ञापकत्वायोगात्।[4] अव्यतिरेकेपि वर्णवदेवावाचकत्वप्रसंगः।

यत एवन्**तस्मात्**। **इन्द्रियविज्ञानविशेषः** क्रमवर्णग्राहिपटीयः श्रोत्रविज्ञानन्तदन**बन्धी** तदनुभवद्वारायातः। सभागवासना सजातीयविकल्पशक्तिरुपादानं यस्य विकल्पस्य स तथोक्तः। **सभागवासनोपादानश्चासौ विकल्पश्च तस्य प्रति**भासविभ्रमः। प्रतिभास**भ्रान्तिरेव पदं** वाक्यं **चैकावभासि[5] मिथ्यैव**।

---

[1] Rigs-pa—? Rims-pa—क्रम: [2] Ślokavārtika Ślok (Sphot.)

**क्रमेण[1] ग्रहणायोगात्। न तदेकया ग्राह्यं, वर्णानुक्रमेण ग्रहणात्[6]।**

**एकवर्णग्रहणेऽपि अनेकबुद्धिव्यतिक्रमात्। क्षणिकत्वाद् बुद्धीनाम्। क्षणस्य**

---

एतदुक्तम्भवति। क्रमवर्णानुभवपृष्ठभावि मनोविज्ञानन्तान् वर्णान् पदादि-रूपतयैकस्वभावानध्यवस्यतीति पदादिपरिकल्पितं मिथ्यैव।

ननु वर्णानाम्भिन्नानामेवानुभवात् कथमेकपदाद्यवभासी विकल्प उत्पद्यते। उत्पद्यते च। तस्माद् वर्णेष्वेकपदाद्यनुभवेन भाव्यमिति।

नैष दोषः। प्रतिपादको हि संकेतकाले वर्णक्रममेकपदादिरूप[6]तया प्रति-पन्नमेव परं प्रत्येकमिदं पदादीति संकेतयति। तदा च परस्यापि तत्र वर्णक्रमे एकपदाध्यारोपिका बुद्धिरुत्पद्यते। तस्य चैकपदाद्यध्यारोपितैकाकारानुभवाहित-संस्कारस्य पुंसो व्यवहारकालेपि वर्णक्रमश्रवणादेकमिदं पदम्वाक्यम्वेत्येकाकारस्य विकल्पस्योत्पत्तिर्भवति। एवं पूर्वपूर्वश्रोतृणां पूर्वपूर्ववक्तृभ्यो[7] वर्णक्रमेष्वेकत्वारो-पेण प्रतीतिर्भवतीत्यनादित्वं पदादिव्यवहारस्य। 156a

अत एवोच्यते। अनादिसभागवासनो विकल्पप्रतिभासविभ्रमः पदं वाक्यं चैकावभासि मिथ्यैवेति। मिथ्यात्वं च भिन्नानाम्वर्णानामेकपदादिरूपतया स्म-रणज्ञाने प्रतिभासनात्। तावतश्चैकानेकत्वयोर्विरोधेनायोगात्।[1]

अथ स्यादेकमेव पदादि प्रत्यक्षग्राह्यन्तत्कथं मिथ्येति।

तदयुक्तं। यस्मान्न ह्येकं पदादि। किं कारणं। **अनेकया** वर्णक्रमग्राहिण्या **बुद्ध्या** क्रमेण **ग्रहणायोगात्**। एकत्वे ह्येकयैव बुद्ध्या सकृद् गृह्येत। न त्वेकयैव बुद्ध्या पदादेर्ग्रहणमिति चेदाह। **न तदेकये**त्यादि। **तत्** पदादि। **नैकया** बुद्ध्या **ग्राह्यं**। किं कारणं। **वर्णानुक्रमेण** वर्णपरिपाट्या पदवाक्ययोर्**ग्रहणा**[2]**त्**।

एकवर्णरूपन्तर्हि पदमेकबुद्धिग्राह्यम्भविष्यतीत्यत आह। **एकवर्णे**त्यादि। एकवर्णनिष्पत्तिकालेप्य**नेकबुद्धिव्यतिक्रमा**न्नैकवर्णः। तथा हि भागित्युक्तेऽर्द्धमा-त्राकालो निरच्को गकारः प्रतीयते। साच्कस्तु मात्राकालः प्रतीयत इति कथमे-कवर्णरूपं पदम्विद्यते यदेकबुद्धिग्राह्यं स्यात्। तेन यदुच्यते। सकलमेव गृह्णाति।

"अल्पीयसापि यत्नेन श[3]ब्दमुच्चरितम्मतिः।
यदि वा नैव गृह्णाति वर्णम्वा सकलं स्फुटं।
पृथक् च नोपलभ्यन्ते वर्णस्यावयवाः क्वचिदि"ति (।)[1]

तदपास्तं। यथोक्तेन न्यायेन सावयवत्वाद् वर्णस्य। न चैकया बुद्ध्या क्रमवतां **वर्णभागानां ग्रहणं क्षणिकत्वाद् बुद्धीनां**।

---

[1] Śloka, Sphoṭ. 10, 11 [2] Ibid.

493a **च एकपरमाण्वतिक्रमकालत्वात्। आधिक्ये विभागवतः पर्यवसानायो[7]गात्। अनेकाणुव्यत्ययनिमेषकालत्वात् निष्कृष्टस्य वर्णस्य निष्पत्तेः। स्मृतिरपि तत्कालैव। यथानुभवं स्मरणात्[1], अनुभवस्मरणानुक्रमयोर्विशेषानुपलक्षणाच्च नैकं पदादि। अभेदप्रतिभासत्वाद्[1] बुद्धेः। तदनेकत्वस्य निषेत्स्यमानत्वाच्च। तद् न वस्तु[2],**

---

स्यादेतद् (।) यावता कालेन वर्णनिष्पत्तिस्तावत्काल एकः क्षणस्तत एकया बुद्धया पदस्य ग्रहणम्भविष्यतीत्यत आह। **क्षण[4]स्ये**त्यादि। यावता कालेनैकः परमाणुः परमाण्वन्तरमतिक्रामति तावत्कालत्वात् क्षणस्य। विभागरहितः कालः स **चैकपरमाण्वतिक्रमकाल** एव युज्यते। यथोक्तात्कालादा**धिक्ये** क्षणस्याभ्युपगम्यमाने। **विभागवतः** शक्यविभागस्य क्षणस्य कालप**र्यवसानायोगात्**। तेनैकस्याप्यतिनिष्कृष्टस्य वर्णस्यानेकक्षणेन **निष्पत्तिः**। किं कारणं। **अनेके**त्यादि। **अनेक[5]स्याणो**र्व्यत्ययो व्यतिक्रमो यस्मिन्निमेषे सो**नेकाणुव्यत्ययो निमेषः**। तेन तुल्य**कालत्वा**दन्त्यस्य **निष्कृष्टस्या**प्याकारादे**र्वर्णस्य** परिसमाप्तेः। तस्मान्नैकवर्णरूपं पदमेकबुद्धिग्राह्यं। नाप्यनेकात्मकमेकपदं स्मृतिग्राह्यं। किं कारणं(।) **यथानुभवं स्मरणात्**। यथानुभवो वर्णानामनुक्रमेण तथा स्मृतिरपि तत्र क्रमभाविन्येवेति **स्मृतिरपि तत्कालैव**। स एवा[6]नुभवक्रमकालोस्या इति कृत्वा। एतच्चान्यां प्रवृत्तिमधिकृत्योक्तमभ्यासवत्यान्तु प्रवृत्तौ क्रमेणानुभूतानामपि वर्णानां यद्यपि युगपत्स्मरणम्भवति तथाप्यनु**भवस्मरणानुक्रमयोर्विशेषानुपलक्षणाच्च नैकम्पदादि**। तेनायमर्थः (।) अनुभवे योयम्वर्णानामनुक्रमः प्रतिभासते 156b स्मरणे च यो वर्णानुक्रमः प्रतिभासते तयोर्विशेषो भेदो नोप[7]लक्ष्यतेऽतः कथमेकं पदाद्येकबुद्धिग्राह्यमुच्यते।

नाप्यनेकमेव पदादि। किं कारणम् (।) **अभेदप्रतिभासत्वात् बुद्धेः**। अभेदेनैकत्वेन प्रतिभासनाद् बुद्धेः पदवाक्याकारायाः तथा हि पदे वाक्ये चोच्चारिते एकमिदं पदं वाक्यं चेति लोकस्य मतिर्भवति।

तेन यदुच्यते।

"शैघ्र्यादल्पान्तरत्वाच्च गोशब्दे सा भवेदपि।

देवदत्तादिशब्देषु स्फुटो भेदः प्रतीयते" इति (स्फोट० १२१)

तदपास्तं।[1] वर्णानुभवोत्तरकालमेकपदाध्यारोपिकाया बुद्धेरुत्पत्तेः। **तदनेकत्वस्य** पदाद्यनेकत्वस्योत्तरत्र **निषेत्स्यमानत्वाच्च**।

---

[1] Yaṅ-baḥi-phyir=? Snaṅ-baḥi-phyir

**एतद्विकल्पानतिक्रमात्। वस्तु च सम्बन्धः स कथं तदाश्रयः स्यात्? आश्रयणीयस्यायोगात्। एवमनाश्रितः स्यात्। तथा चासम्बन्धः स्यात्[3]।**

**तस्मान्न स्वाभाविकः शब्दार्थयोः सम्बन्धः। तदभिप्रायस्य प्रयोगादुत्पन्नोऽभिव्यक्तो वा शब्दः तदव्यभिचारीति तत्त्वमस्य सम्बन्धः। सा चोत्पत्तिरभिव्यक्ति[4]र्वा अव्यभिचाराश्रयः पौरुषेयीति पौरुषेय एव सम्बन्धः। तद्द्वारेण च अर्थप्रत्यायने शब्दानां न नियम इत्यपौरुषेयत्वेऽपि स एव[5] विप्रलम्भः।**

---

नानेकमेव पदादि। **तदिति** तस्माद् (।) एकानेकत्वेन प्रतिभासनादेकानेकयोर्विरोधेनायोगात् पदादि **न वस्तु**। यद्वा तत्पदादि न वस्तु। एकानेकत्वायोगादिति भावः। किं कारणं(।)तस्य वस्तुनः **एतद्विकल्पानतिक्रमात्**। यस्माद् वस्त्वेकरूपं[2] वा स्यादनेकरूपं वा कदाचित् स्यान्न तूभयरूपं विरोधात्। **वस्तु च** शब्दार्थ**सम्बन्धः** परेणेष्टः **स कथन्तदाश्रयः स्यात्**। अवस्तुभूतपदवाक्याश्रयः स्यात्। तत्पदवाक्यमाश्रयोस्येति विग्रहः। किं कारणं। असत्त्वेन पदादेरा**श्रयणीयस्यायोगात्**। एवमित्याश्रयणीयाभावे**ऽनाश्रितः** सम्बन्धः **स्यात्। तथा चा**नाश्रितत्वाद**सम्बन्धः** सम्बन्धः **स्यात्**। सम्बन्धिपा[3]रतन्त्र्याभावात्।

यत एवन्**तस्मान्न स्वाभाविको**पौरुषेयः **शब्दार्थयोस्सम्बन्धः**। किन्तु पौरुषेय एव सम्बन्धः। यस्मात्। **तदभिप्रायस्या**र्थप्रतिपादनाभिप्रायस्य यः **प्रयोगान्तः** परिस्पन्दादिः। तस्मा**दुत्पन्नः** शब्द एतत् स्वदर्शनेनोक्तं। **अभिव्यक्तो वा शब्द** एतत्पराभिप्रायेणोक्तं। **तदव्यभिचारी**। अर्थप्रतिपादनाव्यभिचारीति कृत्वा **तत्त्व**मर्थप्रतिपाद[4]नाभिप्रायकार्यत्व**मस्य** शब्दस्य **सम्बन्धः**। अर्थप्रतिपादनाभिप्रायेण शब्दप्रयोगात्। **सा चोत्पत्तिरभिव्यक्तिर्वा** शब्दस्यार्थप्रतिपादनम्प्रत्य**व्यभिचाराश्रयो**ऽव्यभिचारस्य निमित्तं **पौरुषेयी** पुरुषकृता। **इति**। एवं **पौरुषेय एव सम्बन्धः** शब्दार्थयोः। **तद्द्वारेण च** यथोक्तसम्बन्धद्वारेणा**र्थप्रत्यायने शब्दानान्न नियम इत्यपौरुषेयत्वे**पि शब्दानां **स[5] एव विप्रलम्भो** विसम्वादः। तथा चापौरुषेयत्वकल्पना व्यर्थैवेति भावः। (२४१–२४२)

**अपौरुषेयतापि** वेदवाक्यानां मीमांसकैरिष्टा। **कर्त्तॄणां** वेदस्य प्रणेतॄणा**मस्मृतेर्लिङ्गात्**। **किल** शब्दश्चायुक्तताख्यापनाय।

**यापीत्यादि** व्याख्यानं। बहूनामर्थानां कर्त्ता न स्मर्यते। न च ते तावताऽकृतकाः। **तद्यथा** जीर्णकूपादयः। एवं हेतोर्व्यभिचारादयुक्त**रूपा[6]पीयमपौरुषेयता। वेदवाक्यानां कर्त्तुरस्मरणाद् वर्ण्यते** जैमिनिना। अस्यैवम्विधस्य वस्तुनः **सन्त्य-**

*ग. नापौरुषेयता*

**अपौरुषेयतापीष्टा कर्तॄणामस्मृतेः किल।**

याऽपीयं वैदिकवाक्यानां अपौरुषेयता वर्ण्यते कर्त्तुरस्मरणाद्—

**सन्त्यस्याप्यनुवक्तार इति धिग् व्यापकं तमः ॥२४२॥**

**तस्यैव तावदीदृशं प्रज्ञास्खलितं कथं वृत्तमिति सविस्मयानुकम्पं नः चेतः। 493b तत्रापरेऽपि अनुवदन्तीति निर्दयं[7] आक्रान्तं भुवनं तमसा व्याप्तम्। कः प्राणिनो हितेप्साविप्रलब्धस्यापराधः ?**

**तथा हि सौगता मन्त्राणां कर्त्तॄन् अष्टकादीन्, काणादाश्च हिरण्यगर्भं[1]। स्मरन्ति। तेषां च स मिथ्यावाद इति चेत्। क इदानीं तथाऽपौरुषेयत्वं यः पौरु-**

---

द्यत्वेप्यनुवक्तार इति। किमत्र वक्तव्यं केवलं **धिग्व्यापकन्तमः**। तथा हि (।) यः कर्त्तुरस्मरणादपौरुषेयतामाह जै मि निः। **तस्यैव तावदीदृशमतिस्थलं प्रज्ञा-** 157a **स्खलितं कथं वृत्तं** जात**मिति[7]** कृत्वा सह विस्मयेनानुकम्पया वर्त्तत इति **सविस्मया-नुकम्पं नोस्माकं चेतः**। श्रुतवतोप्येवमविद्याविलसितमिति सविस्मयं। गाढे-नाविद्याबन्धेन सत्त्वाः पीड्यन्त इति कृत्वा सानुकम्पं। तदत्र**परेपी**दानीन्तन्मता-नुसारिणः कु मा रि ल प्रभृतयः परीक्षकंमन्या एवमेतद**नुवदन्तीति निर्दयं** निष्कृ-**पमाक्रान्तं भुवनं** जगद् येन **तमसा** तत्तथोक्तं धि[1]ग्व्यापकन्तमः। अज्ञानस्यैवात्र धिग्वादो युक्तो न प्राणिनः। यस्मात् **कः प्राणिन** एवं वादिनोपि **हितेप्साविप्रलब्ध-स्य** हितप्राप्तीच्छया विप्रलब्धस्य विसम्वादितस्या**पराधः**। किन्त्वज्ञानस्यैवाय-न्दोषः। किं पुनस्तस्यैवम्वदतः प्रज्ञास्खलितं।

यस्मादिदं साधनमसिद्धमनैकान्तिकञ्च। (२४२)

तत्रासिद्धमधिकृत्याह। **तथा** **ही**त्यादि। स्मरन्ति सौ ग ता वेद[4]स्य **कर्त्तॄ-न ष्ट का दीन्**। आदिशब्दाद् वा म क वा म दे व वि श्वा मि त्र प्रभृतीन्। **हिर-ण्यगर्भं** ब्र ह्मा णं वेदस्य कर्त्तारं **स्मरन्ति का णा दा वैशेषिकाः**। ततश्चासिद्धं कर्त्तु-रस्मरणं। **तेषां सौगतानाञ्च स** वेदस्य कर्त्तृस्मरणवादो **मिथ्यावाद**स्ततः। सिद्धिहेतोरिति **चेत्। क इदानीम्वेदादन्योपि पौरुषेयः** शब्दः। न कश्चित् पौरु-षेय इत्यर्थः[3]। **एवमिति** कर्त्तुः स्मरणवादस्य मिथ्यात्वे। एतदेव स्पष्टयन्नाह। कु मा र स म्भ वे त्या दिष्वित्यादि। **कुमारसम्भवादिषु ग्रन्थेषु** का लि दा सा दय **आत्मानमन्यम्वा प्रणेतारं** कर्त्तारं **व्यपदिशन्तो यदेवम्प्रतिव्यूहेरन्**। प्रतिक्षि-

**षेयो भवति ? एवं कुमारसम्भवादिषु आत्मानं वा अन्यं वा प्रणेतारं व्यपदिशन्तो यदेवं प्रतिव्यू[2]ह्येरन्। तत्र प्रतिव्यूहनेऽभ्युपेतबाधेति चेत्। नन्विदमेव अभ्युपगमेऽङ्गं इति केन बाधा? तत् परस्यापि तुल्यमेव। तस्येष्टत्वाददोष[3] इति चेत्। कुतोऽस्येयमिष्टिरप्रामाणिकाऽऽदित आसीत्। तदा अकस्माद् ग्राही चायं किं क्वचित् साधनं अपेक्षते, येन पौरुषापौरुषेयचिन्तया[4]ऽऽत्मानं वा दुःखयति।**

**तत एव इष्टेरनभ्युपेतबाधायामिष्यमाणायां तदन्यस्यापि तुल्यमित्यनुपालम्भः।**

---

प्येरन्। मिथ्यावादो युष्माकं न यूयं प्रणेतार इति। **तत्र** कुमारसम्भवादौ कर्त्तुः **प्रतिवहनेभ्युपेतबाधा।**[4] कुमारसम्भवादीनां पौरुषेयत्वेनाभ्युपगतत्वा**दिति-चेत्। नन्विदमेव** कर्त्तुरस्मरणमपौरुषेया**भ्युपगमेङ्गं** साधनं। तच्च कुमारसम्भवादावस्तीति यथोक्तेन न्यायेनेति कथमनेन पौरुषेयः कुमारसम्भवादिरिष्ट इति कस्य **केन बाधा।** अथ तुल्येपि न्याये कुमारसम्भवादौ कर्त्तुः प्रतिवहनेभ्युपेतबाधनमिष्यते। **तदेतद**[5]भ्युपेतबाधनम्**परस्यापि** वेदवादिनोपि वेदवाक्येषु प्रणेतृप्रतिवहने **तुल्यमेव। तस्य** वेदवादिनो वेदापौरुषेयत्वमिष्टमतो पौरुषेयत्वस्येष्टत्वात् कर्त्तुः प्रतिवहनेप्य**दोषः।** अभ्युपेतवाधादोषो नास्तीति **चेत् कुतोस्य** वेदवादिनः आगमोपादाननिमित्ततायाः परीक्षायाः प्रागियमपौरुषेयो वेद इत्**येव मिष्टिर**भ्यु[6]पगतिः। **अप्रमाणिका** प्रमाणरहिता आसीत्। तथा हि वेदस्यापौरुषेयत्वाभ्युपगमे कर्त्तुरस्मरणं प्रमाणमुक्तं। तत्र चानन्तरमुक्तो दोष इत्य**प्रभाणिकेयमिष्टिः।**

अथ प्रमाणमन्तरेण वेदस्यापौरुषेयत्वमङ्गीकृतवान् वेदवादी। तदा**ऽकस्माद् ग्राही** युक्त्या विना ग्राहक**श्चायं** मी मां स कः **किम्पुनः क्वचित्** पौरुषेयापौरु[7]षेयत्वादौ **साधनं** प्रमाण**मपेक्षते।** यदिति **पौरुषेयापौरुषेयचिन्तये**ति पौरुषेयापौरुषयत्वसाधनोपन्यासेना**त्मानमा**सादयति। यो ह्ययुक्तिग्राही स सर्वत्र तथैव प्रवर्त्ततां। किमिति क्वचित् प्रमाणावतारणे**ना**त्मानं **दुःखयती**ति समुदायार्थः। 175b

**तत एवा**प्रमणिकाया वेदस्यापौरुषेय**त्वेष्टे**र्हेतोर्वेदवादिनो वेदस्य कर्त्तुः प्रति[1]वहनेप्य**नभ्युपेतबाधायामिष्यमाणायान्तदन्यस्यापि** तस्मात् मी मां स कादन्यस्यापि पुंसः कु मा र स म्भ वादिमपौरुषेयमिच्छतस्तत्प्रणेतृप्रतिवहनेप्यनभ्युपेतबाधनं **तुल्यमित्यनुपालम्भः।** तत्र प्रतिवहनेभ्युपेतबाधेत्ययमुपालम्भो नास्तीत्यर्थः।

**किं चानतिशयदर्शीत्यादि। एवंप्रकाराणां** कर्त्तुरस्मरणादित्येवमादीना**मपौरुषयत्वसा**[2]**धनानां** वाक्येषु पौरुषेयापौरुषेयत्वाभिमतेष्वनतिशयदर्शीति सम्बन्धः। तथा हि यथा पौरुषेयाणामनेकेषां चिरकालातीतकर्त्तृकाणां कर्तुरस्मरणमस्ति।

**किं च, अनतिशयदर्शी अयं एवंप्रकाराणां अपौ[5]रुषेयत्वसाधनानां वा कार्य-धर्माणां वाक्येषु क्वचिदतिशयं अभ्युपेतीत्यप्रत्ययैवास्य वृत्तिः।**

**दृश्यन्ते च विच्छिन्नक्रियांगसम्प्रदायाः कृतकाश्च। यत्नवन्तः उपलभन्त इति चेत्। न। नियमाभावात्।**

494a **अन्यत्रापि उपलम्भानुपलम्भस्य परोपदेशादप्रत्ययाद् अनुपलम्भस्यानिश्चया[7] हेतुत्वात्। स्वयं कृतानामपि अपह्नोतृदर्शनात्, निष्ठागमनस्य अशक्यत्वात्।**

---

तथा वेदवाक्येष्वेवं कर्त्तुरस्मरणादिसाधनस्यानतिशयदर्शी विशेषदर्शी सन् मी मां स कः। पुरुषकार्याणां वा शब्दानां धर्माः कार्यधर्माः पुरुषान्वयव्यतिरेकानुवि-धायित्वादय[3]स्तेषां **कार्यधर्माणाम्वाक्येषु** लौकिकवैदिकेष्वनतिशयदर्शी सन् **क्वचिद्** वैदिके शब्दे**तिशयं** विशेषमपौरुषेयत्वलक्षण**मभ्युपेति** नान्यत्रेति न किञ्चिदभ्युपगमे साधनमस्तीत्य**प्रत्ययेवा**युक्तेवा**स्य** वेदवादिनो **वृत्तिः**।

तदेवं यथोक्तविधिना कर्त्तुरस्मरणादित्यसिद्धो हेतुः। अनैकान्तिकत्वमप्याह। **दृश्यन्ते च**त्यादि। उपदेशपारम्प[4]र्यं स म्प्र दा यः। विच्छिन्नः क्रियासंप्रदायः पुरुषकृतत्वसंप्रदायो येषां वटे वटे वै श्र व णादि शब्दानान्ते तथा। अनेनास्मर्यमाण-कर्त्तृत्वमाह। कृतकाश्च पौरुषेयाश्च। ततः पौरुषेयेपि वाक्ये कर्त्तुरस्मरणम्वर्त्तत इत्यनैकान्तिकोयं हेतुः। **तानिति विच्छिन्नक्रियासम्प्रदायान्। कृतकान्** शब्दान्। **यत्नवन्तः** पुमांस**मुपलभन्ते**ऽनेन कृ[5]ता **इति**। **नैतदेवं**। किङ्कारणं। यत्नवतोपि कर्त्तुः स्मरणे **नियमाभावात्**। नावश्यं कर्त्तारमुपलभते यत्नवानपीति सन्देह एव।

किञ्च (।) **अन्यत्रापौरुषेयाभिमतेपि** शब्देस्य कर्त्ता नोपलभ्यत इत्यनुप-लम्भस्य। उपलभ्यते वास्यापौरुषेयस्य कर्त्तेत्युपलम्भस्य न प्रमाणात् कुतश्चिन्नि-श्चयः। किन्तु **परोपदेशात्** किंभूताद**प्रत्ययाद**प्र[6]माणकात्। एवंभूताच्चोपदेशात् कर्त्तु**रुपलम्भानुपलम्भस्यानिश्चयार्हत्वात्**। मया वेदवाक्यानि कृतानीत्येवंवादिनो-नुपलम्भाद् वेदवाक्येषु कर्त्तुरभावो निश्चीयत इत्येतदपि नास्ति। **स्वयंकृतानामपि** शब्दानाम**पह्नोतृदर्शनात्**। स्वयंकृत्वापि शब्दा न मयैते कृता इत्यपलपितारो 158a दृश्यन्ते। तत्र च किमनेनैते कृताः किम्वान्येने[7]ति **निष्ठागमनस्य** निश्चयगमन-**स्याशक्यत्वात्**। (२४२)

तदेवं कर्त्तुरस्मरणादिति हेतुन्निराकृत्यान्यदपि साधनं।

"वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकं (।)

वेदाध्ययनवाच्यत्वादधुनाध्ययनं यथा (।)

## घ. न नित्यता

### (क) गुर्वध्ययनपूर्वकत्वादपि न

**यथाऽयमन्यताऽश्रुत्वा नेमं वर्णपदक्रमम् ।**
**वक्तुं[1] समर्थः पुरुषस्तथान्योपीति कश्चन ॥२४३॥**

**यदपौरुषेयत्वेऽपि पौरुषेयमित्यादि तदेवोत्तरं स्यात् । तथा हि—**

**अन्यो वा रचितो ग्रन्थः सम्प्रदायादृते परैः ।[2]**
**दृष्टः कोऽभिहितो येन सोप्येवं नानुमीयते ॥२४४॥**

**न खलु किञ्चिदपौरुषेयत्वाश्रयोऽन्यत्रेदानीन्तनानामुपदेशेन अशक्तेः[3] । सा चान्यत्रापि एकेन रचिते ग्रन्थेऽन्यस्य तुल्या । तदनुसारिणा सर्वस्तथाऽनुमेयः,**

---

[1] इति दूषयितुमुपन्यस्यति । **यथे**त्यादि । यथायमिदानीन्तनो वेदस्याध्येता**न्यतः** सकाशाद् **श्रुत्वा** इमम्वैदिकम्वर्णक्रमं । **वर्णपदयोः क्रमं वक्तु**मध्येतुं **न सम[1]र्थः । तथान्योपि** वेदस्य कर्तृत्वेनाभिमतः सोप्यन्यत उपदेशमपेक्षते सोप्यन्यत इत्यनादित्वात् सिद्धमपौरुषेयत्वमिति एवं **कश्चनाह । तस्याप्येवम्वादिनस्तदेवोत्तरं यत्** कर्त्तुरस्मरणादित्यत्रोक्तं । **एवमनन्तरोक्तप्रकारेणापौरुषेयत्वेपि किमि**दानीम्**पौरुषेय**म्वाक्यं सर्वमपौरुषेयं **स्यात्** । अन्यस्यापि कु मा र स म्भ वाध्ययनस्याध्यय[2]नपूर्वकत्वेनानादित्वप्रसाधनात् । तत्र प्रसाधनेभ्युपेतबाधेति चेत् । नन्विदमेवाभ्युपगमाङ्गमित्यादि सर्वम्वाच्यं । अस्यैव संग्रहायादिशब्दः प्रयुक्तः । (२४२–२४३)

अतिप्रसंगमेव दर्शयन्नाह । **तथा ही**त्यादि । **अन्यो वा** पुरुष**रचितः** कुमारसम्भवादिको **ग्रन्थः । संप्रदायादृते** । परोपदेशमन्तरेण **परैः कोभिहितो दृष्टो** नैव कश्चिद् दृष्टः । **येन** कार[3]णेन **सोपि** वेदादन्यो ग्रन्थः । एवमित्यपौरुषेयः कि**न्नानुमीयते ।**

**न खल्वि**त्यादिना व्याचष्टे । **न खलु किञ्चिदपौरुषेयत्वाश्रयो** पौरुषेयत्वस्य सिद्धिनिमित्त**मन्यत्रेदानीन्तनानामनुपदेशेन** यः पाठस्त**त्राशक्तेः** । न हि परोपदेशमन्तरेण वेदं पठितुं शक्त इत्यपौरुषेयत्वम्वेदवाक्यानामिष्टं । **सा चा**नुपदेशपाठाशक्ति**रन्यत्रापि**[4] पौरुषेयाभिमते । **एकेन** केनचित् पुरुषेण **रचिते**न्यस्याध्येतुस्तु-

[1] Ślokavārtika, Vākya, 366

**न वा कश्चिद्, तस्य तथाऽनिष्टत्वा[4]दित्यादौ "इष्टस्तदाश्रयत्वादि"त्यादि चोक्तम्।**

**अपि च।**

**यज्जातीयो यतः सिद्धः सोऽविशिष्टोग्निकाष्ठवत्।**
**अदृष्टहेतुरप्यन्य(ोऽविशिष्टः)[5] संप्रतीयते ॥२४५॥**

**न हेतोरदर्शनान्नाहेतुको नाम। अदृष्टहेतवोऽपि भावाः तदन्यैः स्वभावाभेदमनुभवन्तः तथा[6] विधाः समनुमीयन्ते।[1]**

**अथ हेतुरूपस्य निवृत्तावपि तद्रूपं न निवृत्तं (तदा) कार्यधर्मव्यतिक्रमः।**

---

ल्या। **तदनुसारिणेति**। अनुपदेशपाठाशक्तिमपौरुषेयत्वसाधकत्वेन योनुसरति तेन **सर्वो** लौकिकवैदिकः शब्दस्तथा पौरुषेयत्वेनानुमेयः। **न वा कश्चिद्** वैदिको विशेषाभावात्। **तस्य** लौकिकस्य वाक्यस्य **तथे**त्यपौरुषेयत्वेनानिष्टत्वादित्यादौ।[5] आदिशब्देनाभ्युपेतबाधापरिग्रहस्तत्रोक्तमनन्तरमेव "**इष्टेस्तदाश्रयत्वा**दपौरुषेयत्वसाधनाश्रयत्वा **दि"त्यादि**[२]। (२४३–२४४)

**अपि च। यज्जातीयो** यद्द्रव्यसमानजातीयः। **यतो** हेतोः **सिद्धो**न्वयव्यतिरेकाभ्यां। स तज्जातीयत्वेना**विशिष्टो**न्योप्यदृष्टहेतुरपि तस्माद्धेतोर्न[३] भवतीत्येवं **संप्रतीयते**। किमिव (।) **अग्निकाष्ठवत्**। यथेन्धनादेको[6] वह्निर्दृष्टस्तत्समानस्वभावो(ऽ)**परोपि** तत्समानहेतुरेवा**दृष्टहेतुरपि** सम्प्रतीयते। अनेन **वेदस्या**पौरुषयत्वसाधने प्रतिज्ञाया अनुमानबाधामाह।

**ने**त्यादिना व्याचष्टे। **हेतोरदर्शनान्नाहेतुको नाम**। यस्माददृष्टहेतवोपि। **न दृष्टो** हेतुरेषामिति विग्रहः। त एवं भता अपि, **भावास्त**दन्यैर्दृष्टहेतुभिः **स्वभा-**
158b **वाभेद**[7]**मनुभवन्त**स्तुल्यरूपा इत्यर्थः। **तथाविधा** इति तत्समानहेतव**स्समुन्नीयन्ते**। अयमत्र समुदायार्थः। लौकिकेन शब्देन समानधर्मो वैदिकोपि शब्दो लौकिकवत् पुरुषहेतुकः स्यान्ना वा कश्चिदपीति।

**अथ हेतुरूपस्य** हेतुस्वभावस्य **निवृत्तावपि तद्रूपं** पुरुषहेतुशब्दसमानं रूपं (न) **निवृत्तं** वैदिकस्य शब्दस्येष्यते। तदा **कार्यधर्मव्यतिक्रमः**। अयं हि कार्यस्य[1] धर्मो यत्कारणनिवृत्तौ निवृत्तिः। यदा तु निवृत्तेपि पुरुषे वैदिकेषु 'शब्देषु पौरुषेयं रूपं स्यात् तदा तेन कार्यधर्मो व्यतिवृत्तः स्यात्। ततः कार्यधर्मव्यतिक्रमात्

---

[1] Yaṅ-dag-par-rjes-su-dpog-par-ḥgyur-ro.

[२] B. **साधनस्वादित्यादि।** [३] B. **०तोर्भवती०**

ततो न स्यादिति न कश्चित् तथा वचनीयः स्यात् ।[7] रूपविशेषो वा दर्शनीयः, 494b
य एनं हेतुमनुविदध्यात्, येनेष्टस्यानिष्टस्य च इष्टविपर्ययो न स्यात् ।

हेतुस्वभावस्य निवृत्तेरपि वस्तूनां अभेदे स भेद आकस्मिकः स्यादिति न क्वचित् निवर्त्तेत । तस्माद् यत्स्वभावजन्मा यो दृष्टः सोऽन्यत्राप्यविभज्यमानो यतो दृष्टस्तत्कार्यतां[2] अग्नीन्धनवत् स्वात्मना नातिवर्त्तते ।

---

ततः पुरुषान्न किञ्चिद्वाक्यं स्यादिति न कश्चिच्छब्दो लौकिकस्तथेति पौरुषेयत्वेन वचनीयः स्यात् । रूपविशेषो वा पौरुषेयाणां वैदिकाद् भिन्नो दर्शनीयो यो रूपविशेष एनं पुरुषाख्यं[2] हेतुमनुविदध्यात् । येन विशेषेणेष्टस्यापौरुषेयत्वेन वेदस्य अनिष्टस्य च लौकिकस्य । इष्टविपर्ययो न स्यात् । यथाक्रमं पौरुषयत्वमपौरुषेयत्वम्वा स्यात् ।[1] न च लौकिकवैदिकानां कश्चित् स्वभावभेदोस्तीत्युक्तं ।

किं च पुरुषाख्यस्य हेतोर्यः स्वभावस्तस्य निवृतेर्निवृत्तावपि षष्ठीसप्तम्योरभेदात् । यथा वृक्षे शाखा वृक्षस्यशाखेति ।[3] वैदिकानां वाक्यानां पौरुषेयैर्वाक्यैरभेदेन तुल्यरूपत्वेभ्युपगम्यमाने । स तेषां लौकिकानाम्वाक्यानाम्भेदः पुरुषकृतो विशेष आकस्मिकः स्यादहेतुकः स्यात् । पुरुषमन्तरेणापि वैदिकेषु वाक्येषु तस्य विशेषस्य भावात् । तथा च न क्वचिन्निवर्त्तेताकाशादौ । न चैवन्तस्माद् यः स्वभावो यज्जन्मा । यस्माज्जन्म यस्ये[2]ति विग्रहः । सोन्यत्रा[4]प्यदृष्टहेतावप्यविभज्यमानः । दृष्टहेतुना कार्येणापृथक्क्रियमाणस्तत्कार्यतां यातो भवन् दृष्टस्तस्कार्यतां स्वात्मना स्वेन रूपेण नातिवर्त्तते । किमिव (।) अग्नीन्धनवत् । अग्निश्चेन्धनं चेत्यग्नीन्धनन्तेन तुल्यन्तद्वत् । दृष्टेनेन्धनकारणेनाग्निना भेदमनुभवन्नदृष्टकारणोप्यग्निर्यथेन्धनकार्यतां नातिवर्त्तते तद्वत् । (२४४–२४५)

तत्रैतस्मिन् न्याये स्थिते । लौ[5]किकवैदिकयोर्वाक्ययोर्भेदमप्रदर्श्य अपौरुषेयत्वसाधनाय ये हेतवः प्रवितन्यन्ते । विस्तरेणाभिधीयन्ते । तद्यथा "कर्त्तुरस्मरणात् ।"

> वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् (।)
> वेदाध्ययनवाच्यत्वात् अधुनाध्ययनं यथा । (वाक्य० ३६६)
> अतीतानागतौ कालौ वेदकारवियोगिनौ ।
> कालत्वात् तद्यथा कालो वर्त्तमानस्समीक्ष्यते ॥

---

[1] B. न स्यात् । [2] B. जन्माऽस्येति ।

**तत्राप्रदर्श्य ये भेदं कार्यसामान्यदर्शनात्।**
**हेतवः प्रवितन्यन्ते सर्वे ते व्यभिचारिणः ॥२४६॥**

**यथाऽऽन्योऽपि पथिककृताग्निः पथिककृता**[3]**ग्नित्वात् ज्वालान्तरपूर्वको न काष्ठनिर्मथनपूर्वकः अनन्तराग्निवत्।**

**कथं पथिककृतदहनस्य व्यभिचारः ? ज्वालोद्भवसामर्थ्यं ह्याश्रित्य**[4] हेत्वन्तरं **प्रतिक्षिप्यते। यदि ह्यग्निर्विनाऽपि स्यात्, अन्येष्वपि स्यादिति तत्र ज्वालेतर-जन्मनोर्बाध्यबाधकाभावे ज्वालाप्रभवत्वं अन्यथापि स्याद्। एवं धर्मयो**[5]**रेकत्रार्थे**

---

ब्रह्मादयो न वेदा[6]नां कर्त्तार इति गम्यतां।
पुरुषत्वादिहेतुभ्यस्तद्यथा प्राकृता नरा"[1] इति।

**सर्वे** ते हेतवो **व्यभिचारिणो**ऽनेकान्तिका एव।[2] **कार्यसामान्यदर्शनात्।** पुरुषकार्यैः शब्दैः सामान्यस्य तुल्य[3]स्य वैदिकेषु शब्देषु दर्शनात्।

किम्वदनैकान्तिका इत्याह। **यथे**त्यादि।

159a यद्वा **तत्रे**ति। यद्वेदाध्ययनन्तद्वेदाध्ययनपूर्वकमित्यत्र प्रयोगे। अप्रदर्श्य[7] भेदमिति वेदक्रियाप्रतिभारहितात् पुरुषाद् विशेषमप्रदर्श्य। इदानीं वेदाध्ययनं वेदाध्ययनपूर्वकन्तथान्यदापीत्येवं वेदाध्ययनत्वलक्षणस्य कार्यसामान्यस्य दर्शना-देवंप्रकारा हेतवः प्रवितन्यते सर्वे ते व्यभिचारिणः। **यथाऽन्योपि पथिककृताग्नि-**रदृष्टहेतुत्वात्। **ज्वालान्तरपूर्वको न काष्ठनिर्मथनपूर्वकः।** कुतः (।) पथि-काग्निवत्। किमिव (।) अ[1]**नन्तराग्निवदिति** ज्वालान्तरसंभतदृश्यमानाग्नि-वत्।

**कथ**मित्यादि। यस्माज्ज्वालो**द्भवसामर्थ्यं ह्याश्रित्ये**ति ज्वालायाः सकाशा-दुद्भवसामर्थ्यमाश्रित्य **पथिककृतदहनस्य** हेत्वन्तरमरणिनिर्मथनं **प्रतिक्षिप्यते।** किं कारणं (।) **यदि ह्ययमग्निर्विना** ज्वालया **स्याद**त्रापीति ज्वालापूर्वकपथि-काग्निस्थानेपि ज्वालामन्तरेणैव **स्यादिति। तत्रै**तस्मिन् साधनेऽनैकान्तिकत्व-मु[2]च्यते। कथं **ज्वालेतरजन्मनोर्ज्वालाया योत्पत्तिः।** इतरस्मादरणिनिर्मथ-नाद् योत्पत्तिस्तयोरुत्पत्योरग्निसामान्ये परस्परमबाध्य**बाधकत्वात्।** को **ह्यत्र-**विरोधोग्निश्च स्यान्न च ज्वालान्तरपूर्वक इति। एवं सति **ज्वालाप्रभवत्व-**

---

[1] Ślokavārtika. [2] B. **किं कारणं**—added.

[3] B. **तुल्यस्वात्**

**सम्भवात् पथिकाग्निरन्यो वाऽर्थ एकप्रतिनियतो न स्यादित्याशंक्यते व्यभिचारः।**

**सोऽप्यन्योन्यव्यतिरेकिधर्मावतारो वस्तुसामान्येऽविरुद्ध**[6] **इत्युच्यते नावस्थाभेदिनि विशेषे वा। निष्कलस्यात्मनो तदतत्त्वविरोधात्। न च ज्वालेतरजन्मनोः पथिकाग्नौ बाध्यबाधकता**[7]**। तस्य ज्वालाप्रभवव्यतिरेकासंभवाभावात्। एवं पथिकाग्निर्ज्वालाप्रभव इति स्यान्न सर्वः। तत्र विशेषप्रतिक्षेपस्य कर्त्तुमशक्यत्वात्**[1]**,** 495

---

म्वह्ने रूपमन्यथापि [स्यादरणि[1] निर्मथनादपि स्यात्। इति[2] **एवंधर्मयो**र्ज्वलितरसम्भविनोर्द्वयोरे**कत्रार्थे** वह्निसामान्ये **सम्भ**[3]**वात्** कारणात् स **पथिकाग्निरन्यो** वा वेद[3]ध्ययनादिः। **एकप्रतिनियत** इति ज्वालापूर्वक एव। वेदाध्ययनं। वा वेदाध्ययनपूर्वकमेवेत्येत**न्न स्यादित्याशंक्यते व्यभिचारः**(।) वेदाध्ययनं च स्यात्। न च वेदाध्ययनपूर्वकं। तथा पथिकाग्निश्च स्यान्न न च ज्वालापूर्वक इति। विरोधाभावात्।

ननु यज्ज्वालाप्रभवम्वह्ने[4]र्न तदरणिनिर्मथनप्रभवमिति क[4]थं न विरोध इत्याह। **सोपी**त्यादि। **सोप्यन्योन्यव्यतिरेकी** परस्परविरुद्धो **धर्म**द्वयस्य ज्वालाप्रभवत्वारणिनिर्मथनप्रभवत्वलक्षणस्या**वतारो**वकाशो **वस्तुसामान्ये**[5]**ऽविरुद्ध इत्युच्यते। नावस्थाभेदिनि** वह्नि**विशेषे** ज्वालाजन्मन्यरणिनिर्मथनजन्मनि वाऽविरुद्ध उच्यते। किन्तु विरुद्ध एव। किं कारणं (।) **निष्कलस्यात्मनो** निर्विभागस्य स्व[5]भावस्य **तदतत्त्वविरोधात्**। ज्वालाजन्मनो हि ज्वालापूर्वकत्वमतत्पूर्वकत्वं च विरुध्यते। अरणिजन्मनश्चारणिपू[6]र्वकत्वमतत्पूर्वकत्वं च विरुध्यते पथिकाग्निसामान्येपि द्वयम्विरुध्यत इत्याह[7]। **न चे**त्यादि। **ज्वालेतरजन्मनोः** ज्वालोत्पादस्यारणिःनिर्मथनोत्पादस्य च **पथिकाग्नौ** पथिकाग्निसामान्ये **बाध्यबाधकता**[8]। किं कारणं (।) **तस्य** पथिकाग्नि[6]सामान्यस्य **ज्वालाप्रभवव्यतिरेकेण** ज्वालोत्पत्तिव्यतिरेकेण[9] **योऽसम्भवस्तस्याभावात्**[10]। ज्वालोत्पत्तिव्यतिरेकेणारणिनिर्मथनादपि[11] भावादित्यर्थः। यादृशस्तु **ज्वालाप्रभव इति स्यान्न सर्वो** वह्निरविशेषेण।

---

[1] B. **स्यादिति। अरणि०।** [2] B. **त्यक्तः।** [3] B. **वेदाध्ययनादिः।**

[4] B. **रूपं. वन्हे०।** [5] B. **अग्निसामान्य**—added.

[6] B. **रणि०।** [7] B. **इत्यत आह।**

[8] B. **भावता।** [9] B. **ज्वालो**—Omitted.

[10] B. **योऽसम्भवस्तस्याभावादरणिनिर्मथनादपि**—added.

[11] B. **दृष्ट एवंभूतोऽन्योपि ज्वालाप्रभव**—added.

**सम्भवत्तादवस्थ्यानियमाच्च ।**

**यदि विनाऽपि ज्वालया स्यादन्यत्रापि स्यादिति ।**

**यया सामग्रया स सम्भवति सा यदि स्यात्, तदा स्यादेव[2] । तद्भावं प्रदर्श्य तदभावं कथयेत्, तत्र वा ज्वालां तदभावं वा दर्शयेत् ।**

**तस्मान्नैकस्य परपूर्वकमध्ययनं सर्वस्य तथाभावं साधयति । तस्यान्यथा[3] सम्भवाभावात् । तत्क्रियाप्रतिभया रहितस्य एवंभूतस्य तथा स्यादिति तथाभूतमेव वाच्यं स्यात्, नाविशेषेण सम्भवद्विशेषमुच्यमानं सुलभम् ।[4]**

**कथं विशेषस्य सम्भवः, यावता तेषामपि पुरुषाणां अशक्तिरेव । इदानीन्तन-**

---

किं कारणं (।) **तत्र** हेतुभेदभिन्ने वह्नौ **विशेषप्रतिक्षेपस्या**रणिनिर्मथनकृतविशेषापह्लव[7]स्य **कर्त्तुमशक्यत्वात् । सम्भवत्य**रणिकृतो विशेषो यस्य वह्नेस्तस्य च **तादवस्थ्यानियमात् ।** ज्वालाप्रभवत्वलक्षणायामवस्थायान्नियमाभावात् ।

159b

यदप्युक्तम् (।) आद्यः पथिकाग्नि**र्विना ज्वालया** यदि **स्यादन्यत्रा**पि ज्वालारहितेपि प्रदेशे **स्यादिति ।**

अत्रोच्यते (।) भवत्येव[1] । **यया**रणिनिर्मथनलक्षणया **सामग्रया स** पथिकाग्निः **सम्भवति सा** सामग्री **यदि स्यात्**[1] । यदि पुनरस्याः सामग्र्याः **सम्भवं प्रदर्श्य तदभाव**म्वह्न्यभावं **कथयेत् । तत्र वा** यथोक्तसामग्रीसम्भविनि देशे **ज्वाला**न्**दर्शयेत्** (।) **तदा स्यादेव** ज्वालापूर्वकत्वमेव वह्नेर्न चैवं । तस्मान्न सर्वः पथिकाग्निर्ज्वालापूर्वक इति व्यभिचारः ।

यत एव**न्तस्मान्नैकस्य** वेदक्रियाशक्तिरहितस्य **परपूर्वक**मुपदेष्टृपूर्वक**मध्ययन**न्दृष्टं **सर्वस्य** हि र ण्य गर्भा[2]देरप्यध्ययनस्य **तथाभावं** परपूर्वकत्वं **साधयति ।** किं कारणं । **तस्या**ध्ययनस्या**न्यथा** परपूर्वकत्वमन्तरेण यो **सम्भवस्तस्याभावात् ।** स्वयमुपरचय्याध्ययनं न सम्भवेदित्यर्थः । हिरण्यगर्भादीनाम्वेदरचनायां शक्तिसम्भवात् । यस्तु शक्तिविकल इदानीन्तनस्तस्य तथाविधस्य स्वयं कृत्वा वेदमध्येतुमसमर्थस्य । **तत्क्रिया** वेद[3]क्रिया तस्यां या **प्रतिभा** तया **रहितस्य** वेदकरणसमर्थया बुद्ध्या रहितस्येत्यर्थः । **एवंभूतस्य** पुरुषस्य यदध्ययनन्त**त्तथा** स्यादध्ययनान्तरपूर्वकं स्यादिति कृत्वा । **तथाभूतमिति** वेदक्रियाशक्तिरहितस्य यदध्ययनन्**तदेव** । एवं वाक्यं स्यादध्ययनान्तरपूर्वकं **वाच्यं स्यान्नाविशेषेण** । यत्पुनरध्ययनं

---

[1] B. अत्रोच्यते । अन्यत्र ज्वालारहितेपि प्रदेशे पथिकाग्निर्भवत्येव ।

[2] B. तद—added.

**पुरुषवत्। (अत्र) शक्त्योर्न किञ्चिद् विरोधदर्शनमस्ति तस्मान्नाविरुद्धविध्य-नुपलब्धिप्रयोगो गमकः**[5] **। न ह्यतीन्द्रियेषु विरोधस्य प्रतीतिरित्युक्तम्। न चायं प्रयोगः पूर्वस्माद् भिद्यते।**

**यदि पुरुषाः शक्ताः स्युस्तदेदानीन्तना अपि स्युरिति।**

**'विशेषासम्भवे सत्येतत् स्यात्। स च दुस्साध्यः। यत्र एकस्याशक्तिस्तत्र सर्वपुरुषाणामपि अशक्तिरित्यपि पूर्ववद् व्यभिचारि। भारतादिष्वपि इदानीन्तनानां**

---

पुरुषातिशयसम्भवेन[4] स्वयं कृत्वाध्ययनात् **सम्भवद्विशेषं। अविशेषेण** सर्वम-ध्ययनमध्ययनान्तरपूर्वकमित्**युच्यमानं** व्याप्त्यसिद्ध्या व्यभिचारित्वान्न **छायां पुष्णाति।** विवक्षितसाध्यासाधनात्।

**कथमित्यादि** परः। **विशेषस्य** स्वयं कृत्वा वेदबाह्यानामध्ययनस्य **सम्भवः** कथं। **यावतेति** यदेत्यर्थः। **तेषामपि पुरुषाणां** वेदस्य कर्त्तृत्वेनाभिमतानाम्वेद-र[5]चनाया**मशक्तिः** पुरुषत्वा**दिदानीन्तनपुरुषवत्।**

**अत्रापीत्या** चा र्यः। अत्रापि प्रयोगे। न **शक्ति**पुरुषयोरिति। वेदकर-णस्य शक्तेः पुरुषस्य च परस्परं। **न किञ्चिद् विरोधदर्शनमस्ति। ततश्च** ब्र ह्मा दिषु पुरुषत्वं हेतुत्वेनोक्त**मविरुद्धत्वान्न** वेदकरणशक्तिमपनयति। **तस्मान्ना-विरुद्धविधिः** । अविरुद्धस्य विधिर्यस्मिन्ननु[6]पलब्धिप्रयोगे स एवंभूतो**नुपलब्धि-प्रयोगो न गमकः**। विरोधाभाव एव कथमित्याह। **न ह्यीत्यादि। अतीन्द्रियेष्व-**त्यन्तपरोक्षेषु ब्रह्मादिषु वेदकरणशक्त्या सह। सहानवस्थानलक्षणस्य **विरोधस्य प्रतीतिः।** अतीन्द्रियत्वादेव। नापि परस्परपरिहारस्थितिलक्षणस्य विरोधस्य प्रतीतिः। शक्त्यशक्त्योः पुरुषापुरुष[7]त्वयोश्च परस्परम्विरोधात्। न शक्ति- 160a पुरुषयोर्यः पुरुषः स वेदकरणं प्रत्यशक्तो यथेदानीन्तनः पुरुष इति। **न चायं प्रयोगः** पूर्वप्रयोगादिति। यद्वेदाध्ययनन्तद्वेदाध्ययनपूर्वकमिदानीन्तनवेदाध्ययनवदित्येतस्मात् **पर्वप्रयोगाद् भिद्यते।** तस्मादुभयोरुपादानं व्यर्थमेवेत्यभिप्रायः।

यत्पुनरुच्यते। **यदि पुरुषाः** प्राक्तना वेदं कृत्वा स्वय[1]मध्येतुं **शक्ताः स्युस्त-देदानीन्तना अपि स्युरिति।**

अत्रोच्यते। पुरुषाणाम्**विशेषासम्भवे सत्येतद**नन्तरोक्तं **स्यात्। स च** पुरुषाणां विशेषासम्भवा(द्) **दुस्साध्य**शक्यसाधनः। बाधकाभावात्। तस्माद् **यत्रैकस्य** पुरुषस्या**शक्तिस्तत्र सर्वपुरुषाणामशक्तिः**(।) पुरुषत्वादित्यस्मिन्नपि साधने **पूर्ववद**ध्यनत्वादिवत् पुरुषत्वं लिङ्गं **व्यभिचारि।** किं कारणं। **भा र ता दिष्वपि**[2] पौरुषेयाभिमतेष्विदा**नीन्तनानां** पुरुषाणाम**शक्तावपि कस्यचिद्** व्या सा देः पुरुषा-

495b **अशक्तावपि[7] कस्यचित् शक्तिसिद्धेः ।**

**तस्मात् कारणानि विवेचयता अर्थेषु तदतत्प्रतिभवेषु स्वभावभेदो दर्शनीयः । तदभावे सर्वस्तदात्मा भवेत् न वा कश्चित् ।[1]**

**न चात्र लौकिकवैदिकयोर्वाक्ययोः स्वभावनानात्वं पश्यामः । असति तस्मिन् तयोः सामान्यस्यैव दर्शनाद् एकस्य कंचिद् धर्मं विवेचयन् तत्स्वभावसम्भविना आशंक्य व्यभिचार[2]वादः क्रियते ।**

**ननु वेदावेदयोस्तत्त्वलक्षणोऽस्ति विशेषः ?**

**सत्यम् । न केवलं तयोरेव । डिण्डिकपुराणेतरयोरपि[3] अस्ति । न च तावता स्वप्रक्रियाभेददीपनो नामभेदः बाधते । अन्यत्रापि प्रसङ्गात् ।**

---

तिशयस्य **शक्तिसिद्धेः ।**

यत एवन्**तस्मात् कारणानि विवेचयता** वैदिकानां वाक्यानां ताल्वादिव्यापारं कारणमपनयता । **अर्थेषु** लौकिकवैदिकेषु शब्देषु (।) किम्भूतेषु । **तदतत्प्रतिभवेषु** ताल्वादिकारणेष्वतत्कारणेषु **स्वभावभेदो दर्शनीयः ।** ताल्वादिकारणानामी[3] दृशः स्वभावो तत्कारणानामन्यादृशः स्वभाव इत्येवं स्वभावनानात्वं दर्शनीयं । येन तदतत्प्रभवत्वम्विभागेन जायते । **तदभावे** स्वभावभेदाभावे **सर्वस्तदात्मा भवेत्** । सर्वः शब्दः पौरुषेयः स्यान्न **वा कश्चि**ल्लौकिकोपि ।

अथ स्याद् (।) अस्त्येव तयोः स्वभावभेद इत्याह । **न चात्रे**त्यादि । अत्र जगति **लौकिकवैदिकयोर्वाक्ययोः स्वभावनानात्वं प[4]श्यामः । असति तस्मिन्** स्वरूपभेदे **तयो**र्लौकिकवैदिकवाक्ययो**स्सामान्यस्यैव** तुल्यरूपस्यैव वर्णानुक्रमलक्षणस्य **दर्शनादेकस्य** लौकिकवैदिकस्य वाक्यस्य **कंचिद् धर्म्मं विवेचयन्** पौरुषेयत्वमपौरुषेयत्वम्वा विभागेन व्यवस्थापयन् पुरुष **आशंक्य व्यभिचारवादः क्रियते** । **आशंक्य** व्यभिचारो वादो यस्य पुरुषस्य स तथोच्य[5]ते । केन क्रियते । **तत्स्वभावसम्भविना** तेन । लौकिकवैदिकवाक्यसम्भविना तेन वर्णपदरचनालक्षणेन सामान्येन । पौरुषेयतुल्यधर्मकस्य वेदस्यापौरुषेयत्वम्वदन् व्यभिचार्यते इति यावत् ।

ननु **वेदावेदयोस्तत्त्वा**न्यत्त्व**लक्षणो** वेदावेदलक्षणो **विशेषो**स्त्येव । ततो विशेषाल्लौकिकवैदिकयोर्यथाक्रमं पौरुषेयत्वमपौरुषेय[6]त्वम्भविष्यतीति परो मन्यते ।

**सत्य**मित्या चा र्यः । नन्वीदृशो विशेष**स्तयोः** पौरुषेयत्वापौरुषेयत्वसाधको यस्मान्न **केवलमनयोरेव** लौकिकवैदिकयोर्विशेषः । किन्तर्हि (।) **डि ण्डि क पुराणेतरयोरपि** । डि ण्डि कै र्नग्नाचार्यैः कृतस्य पुराणस्येतरस्य च पुराणस्य । ईदृशो

**यदि तु तादृशीं रचनां पुरुषाः कर्तुं न शक्नुयुः[4], कृतां वा अकृतसंकेतो विवेचयेत्। तदा व्यक्तमपौरुषेयो वेदः स्यात्।**

**ननु पुरुषाणामेव मन्त्रकरणशक्तिः। एतदुत्तरत्र विचारयिष्यामः। अपि च, न मन्त्रो नामान्यदेव किञ्चित्। किन्तर्हि। सत्यतपःप्रभाववतां समीहितार्थ-साधनवचनम्। तद् अद्यत्वेऽपि पुरुषेषु दृश्यत एव। यथास्वं सत्याधिष्ठानबलाद् विषदहनादेः स्तम्भनकरणात्। शबराणां च केषांचित् मन्त्रकरणात्। अवैदिका-नाञ्च बौद्धादीनां मन्त्रकल्पानां दर्शनात्।[7] तेषां च पुरुषकृतेः।** 496a

**तत्रापि अपौरुषेयत्वे कथमपौरुषेयं अवितथम्? तथा हि बौद्धेतरमन्त्रकल्पे**

---

विशेषोस्ति। **न च तावता स्वयं**[7] व्यवहारार्थं **स्वप्रक्रियाभेददीपनः** समयपरिकल्पितो 160b **नामभेदः** संज्ञाभेदः पुरुषकृति**म्बाधते** वेदस्य। किं कारणम् (।) **अन्यत्रापि** पुराणेऽपौरुषेयत्व**प्रसंगात्।** डिण्डिकेतरपुराणानां नामभेदस्य विद्यमानत्वात्।

**यदि तु** या वेदवाक्ये वर्णपदरचना दृश्यते **तादृशीं रचनां पुरुषाः कर्त्तुं न शक्नुयुः। कृताम्वा** निष्पादिताम्वा वर्णपदरचना[1]**मकृतसंकेतः** श्रवणमात्राद् **विवेचये**दियं पुरुषपूर्विकेति। **तदा व्यक्तमपौरुषेयो वेदः स्यात्** (।) न विवे-चयति तां रचनान्ततकथमपौरुषेयो वेदः स्यात्।

**नन्वित्या**दि परः। म न्त्रा अपि पुरुषकृता **एवेत्येतदुत्तरत्र विचारयिष्यामः। अपि च न मन्त्रो नामान्यदेव किञ्चित्।** किन्तर्हि (।) **सत्ये**त्यादि। यथाभूता-ख्यानं सत्यं। इन्द्रियमनसोर्दमनन्तपः। तयोः प्रभावो[2] विषस्तम्भनादिसामर्थ्यं स विद्यते येषां पुंसान्ते तथा। तेषां **सत्यतपःप्रभाववतां** पुंसां **समीहितार्थस्य साधनन्तदेव** मन्त्रः। **तद्व**चनं मन्त्रलक्षणम**द्यत्वेपि पुरुषेषु दृश्यत एव।** कि कारणं। **यथास्वं सत्याधिष्ठानबलाद् विषदहनादे**(:) **स्तम्भन**स्य सामर्थ्योपघातस्य दर्शनात्। तथा **श ब रा णां च केषांचित्** स्वनियमस्थानामद्यापि विषाद्यप-नयनशक्तियु[3]क्तस्य कारणाच्छक्नुवन्त्येव पुरुषा मन्त्रान् कर्त्तुं। **अवैदिकानाञ्च** वेदादन्येषां **बौ द्धा दी ना**मिति (।) आदिशब्दाद् आ र्ह त गा रु ड मा हे-श्व रा दीनां **मन्त्रकल्पानां।** मन्त्राणां मन्त्रकल्पाना**ञ्च दर्शनात्।** विद्याक्षराणि मन्त्राः। तत्साधनविधानोपदेशा मन्त्रकल्पाः। **तेषां च** बौद्धादीना म्मन्त्रकल्पानां **पुरुषकृतेः** पुरुषैः करणात्।

तस्मान्न लौकिभ्यो वैदिकानां स्वभावभेदः।[4]

**तत्रे**त्यादि परः। तत्रापि बौद्धादिमन्त्रकल्पे**ष्यपौरुषेयत्वे** कल्प्यमाने। **कथ-मिदानीमपौरुषेयं** वाक्यं सर्व**मवितथं**। किन्तु मिथ्यार्थमपि स्यात्। **तथा ही**त्या-

**हिंसा[1]मैथुनात्मदर्शनादयोऽनभ्युदयहेतवोऽन्यथा वा वर्ण्यन्ते। तत् कथं विरुद्धाभिधायि द्वयमेकत्र सत्त्यं स्यात्?**

**तत्र अर्थान्तरस्य कल्पने तद् अन्यत्रापि तुल्यम्। तथा[2] चार्थनिश्चयात् काचिदपि व्यक्तिर्न स्यात्। तथा च अपौरुषेयत्वग्रहणमपि अनुपयोगमेव।**

**बौद्धादीनां मन्त्रत्वमेव नास्तीति चेद्, तदन्यत्रापि कोशपानं[3] करणीयम्। विषादिकर्मकृतो बौद्धा अपि दृश्यन्ते तत्रापि मन्त्रत्वं न प्रतिषिद्धम्।**

**मुद्रामंडलध्यानैरनक्षरैः कर्माणि क्रियन्ते।[4] न च तानि अपौरुषेयकल्पानि युज्यन्ते।**

---

दिनैतदेव बोधयति। **बौद्धमन्त्रकल्पे हिंसामैथुनात्मदर्शनादयः** आदिशब्दादनृतवचनादय **अनभ्युदयहेतवो** दुःखहेतवो **वर्ण्यन्ते**। इतरस्मिंस्त्वबौद्धमन्त्रकल्पे त एव हिंसादयोन्य[5]था चाभ्युदयहेतवो वर्ण्यन्ते। यदि च सर्वे मन्त्रकल्पा अपौरुषेयाः स्युस्तदा चैतद् **विरुद्धाभिधायि** वाक्य**द्वयमेकत्रा**पौरुषेये **कथं सत्त्यं स्यात्**।

स्यादेतद् (।) बौद्धमन्त्रकल्पे हिंसादिशब्दानामन्य एवाप्रसिद्धोर्थो यो वैदिकेन मन्त्रकल्पेनाविरुद्ध इति (।) अत आह। **तत्रे**त्यादि। तत्र बौद्धे मन्त्रकल्पे प्रसिद्धादर्थादन्यस्या**र्थान्तरस्य कल्पने** क्रियमाणे। **तद**र्थान्तर[6]कल्प**नमन्यत्रा**बौद्धे वैदिके मन्त्रकल्पे **तुल्यमि**ति कृत्वा सर्वत्र मन्त्रकल्पेष्वर्थान्तरकल्पनासम्भवेनार्थानिर्णयात्। तत्प्रतिपादितेर्थे क्वचित् प्रतिपत्तिरनुष्ठानं न स्यात्। **तथा चे**त्य**र्थानिश्चये**नानुष्ठानाभावे सदप्य**पौरुषेयम्**वाक्यं पुरुषार्थं प्रत्य**नुपयोगं**।

**बौद्धादीनां मन्त्रत्वमेव नास्तीति चेदाह**। **बौद्धादीनाममन्त्रत्व** इति। 161a **तदन्यत्रापि** तस्माद् बौद्धा[7]दिमन्त्रादन्यत्रापि वैदिके मन्त्रे मन्त्रत्वप्रतिपादनाय **कोशपानं करणीयं**। न हि काचिद् व्यक्तिरस्तीत्यभिप्रायः। दृष्टविरुद्धं चैतद् बौद्धादयो न मन्त्रा इति। तथा हि **विषादिकर्मकृतो** विषकर्मादीन् कुर्वन्तो **बौद्धा अपि** मन्त्रा **दृश्यन्ते**। तेन **तत्र** बौद्धादिषु मन्त्रकल्पेष्व**मन्त्रत्वमपि** विप्रतिषिद्धं। विषकर्मादिकरणद्वारेण वैदिकानामपि मन्त्रत्वव्यवस्थापनात्। न च[1] विषस्तम्भनादिसामर्थ्ययोगात् वेदवाक्यं लौकिवाक्यादतिशयवदित्येवापौरुषेयं युक्तं।

तथा हि पाण्यङ्गुलसन्निवेशो **मुद्रा**। **मण्डलं** देवतादिरचनाविशेषः। **ध्यान**न्देवतादिरूपचिन्तनं। **तैरनक्षरै**रशब्दस्वभावैः स्व**कर्माणि** विषाद्यपनयनादिलक्षणानि **क्रियन्ते। न च तानि** मुद्रामण्डलध्याना**न्यपौरुषेयाणि** युज्यन्ते[2] (।)

स्यादेतत् (।) मुद्रादिष्वेव पुंसां करणसामर्थ्यन्न वर्णक्रमेषु मन्त्रेष्विति।

**तेषां क्रियासम्भवे अक्षररचनायां कः प्रतिघातः? तस्मान्न किञ्चिदशक्यक्रियमेषाम्।**

**तौ च सत्त्यप्रभवौ[5] मन्त्रकल्पौ कथं परस्परविरुद्धौ? न वै सर्वत्र तौ सत्त्यप्रभवौ। प्रभावयुक्तपुरुषप्रतिज्ञालक्षणावपि स्तः। स प्रभावो गतिसिद्धिविशेषा[6]भ्यामपि स्यात्।**

**यदि पौरुषेया मन्त्रास्तदा सर्वे पुरुषाः किन्न मन्त्रकारिणः? तत्क्रियासाधनवैकल्यात्।**

**यदि पुनस्तादृशैः सत्त्यतपःप्रभृतिभिर्युक्ताः[7] स्युः।** 496b

**अपि च काव्यानि पुरुषः करोतीति सर्वः पुरुषः काव्यकृत् स्यात्। अकरणे**

---

तन्न। यस्मात् **तेषां** मुद्रादीनां **क्रियासम्भवे सत्यक्षररचनायां** सत्त्यादिमतां पुंसां **कः प्रतिघातो** विशेषाभावात्। **तस्मान्न किञ्चिदशक्यक्रियमेषां** पुंसां। येन पुरुषेणाकृतमतिशयमुपलभ्य लौकिकेभ्यो वैदिकानां स्वभावभेदः कल्प्येत।

यदि बौद्धेतरौ मन्त्रकल्पौ[3] द्वावपि पौरुषेयो **तौ च सत्त्यप्रभवौ**। अवितथाभिधायिपुरुषादुत्पन्नौ। **तत्कथ**मिदानीन्तावेव सत्त्यप्रभवौ **मन्त्रकल्पौ** बौद्धेतरौ**परस्परविरुद्धौ** युज्येते। एकत्र हिंसादीनामनभ्युदयहेतुत्वेन दर्शनादन्यत्राभ्युदयहेतुत्वेन।

**नेत्या**दिना परिहरति। **न वै सर्वत्र तौ** मन्त्रकल्पौ **सत्त्यप्रभवौ** येनायं विरोधः। किन्तु **प्रभावयुक्त[4]पुरुषप्रतिज्ञालक्षणावपि तौ** मन्त्रकल्पौ **स्तः**। प्रभाववता पुरुषेण "य इमां वर्ण्णपदरचनामभ्यस्यति तद्विधिं चानुतिष्ठति तस्याहं यथाप्रतिज्ञातमर्थं सम्पादयिष्यामी"ति या प्रतिज्ञा तल्लक्षणावपि मन्त्रकल्पौ भवतः। ततोन्यथावाद्यपि प्रभावयुक्तौ मन्त्रकल्पौ कुर्यादिवेत्यविरोधः। स एव सत्त्याभावात् प्रभावः कुत इति चेदाह। **स प्र[5]भावो गतिसिद्धिविशेषाभ्यामपि स्यात्**। पुण्येन गतिविशेष एव स तादृशो लब्धो देवतादिसङ्गृहीतो मन्त्रसिद्धिविशेषो येन स तादृशः प्रभावो भवतीति।

**यदि पौरुषेया मन्त्रास्तदा** पुरुषत्वात् **सर्वे पुरुषाः किन्न मन्त्रकारिणः** (।) न च कुर्वन्ति। तस्मादभिमता अपि पुरुषा न मन्त्रानकार्षुरित्यभिप्रायः।

**तदि**त्यादि सि द्धा न्त वा दी।[6] तेषाम्मन्त्राणां यत् **क्रियासाधनं** सत्त्यतपःप्रभावादि तेन **वैकल्यान्न** सर्वे पुरुषा मन्त्रकारिणः।

**यदि पुनस्तादृशैः सत्त्यतपःप्रभृतिभि**र्मन्त्रहेतुभिः पुरुषा **युक्ताः स्यु**स्तदा ते मन्त्रान् कुर्वन्त्येव।

**वा कश्चिदपि नैव कुर्यात्, तद्वदित्यपूर्वेषा वाचो युक्तिः !**

**सत्यम्। मन्त्रक्रियासाधनेन विकला मन्त्रान् न कुर्वते। तदेव साकल्यं कस्यचित् न पश्यामः। सर्वपुरुषाणां समानधर्मत्वात्।**

**उक्तमत्र, न मन्त्रो नाम सत्त्यादिमत्प्रतिज्ञावचनात्[2] अन्यदेव किंचित्। तानि च क्वचिदेव पुरुषेषु दृश्यन्ते।**

**सर्वपुरुषास्तद्रहिता इत्यपि अनिर्णयः, तत्सम्भवस्य विरोधाभावात्। न च अत्यक्षस्वभावेषु अनुपलब्धिरभावनिश्चयस्य** हेतुः। **न च स्मृतिमतिप्रतिवेधसत्त्यशक्तयः सर्वत्र भाविन्यो भवन्ति।**

---

**अपि च काव्यानि** तत्क्रियाप्रतिभायुक्तः **पुरुषः करोतीति** कृत्वा तत्क्रिया-

1.61b प्रतिभारहितोपि **सर्वः पुरुषः** पुरुषत्वसाम्यात् **काव्यकृत् स्यात्। अकर[7]णे वा कस्यचिदन्योपि नैव कुर्यात्। तद्वत्।** काव्यकरणासमर्थपुरुषवत्। **इत्यपूर्वेषा वाचो युक्तिः।** व्यभिचारिणीत्यर्थः।

**सत्यमि**त्यादि परः। **मन्त्रक्रियासाधनेन विकलाः** पुरुषा **मन्त्रान्न कुर्वते।** केवलन्**तदे**वात्र मन्त्रक्रियासाधनस्य सत्त्यादेः **साकल्यं कस्यचित्** पुरुषस्य **न पश्यामः। सर्वपुरुषाणां समानधर्मत्वात्।**

**उक्तमि**ति सि द्धा न्त वा दी। अ[1]**त्र** चोद्य उक्तमुत्तरं। किमुक्तं। **न मन्त्रो नामे**त्यादि। वचनं च समयश्चेति द्वन्द्वः। **सत्त्यादिमतां** पुरुषाणां समीहितार्थसाधनाद्**वचनात्।** तथा सत्त्यादियुक्तपुरुष**प्रतिज्ञा**लक्षणाच्च समयान्न मन्त्रोनामा**न्यदेव किंचित्। तानि च** सत्त्यतपोगतिसिद्धिविशेषलक्षणानि मन्त्रक्रियासाधनानि **क्वचिदेव पुरुषेषु दृश्यन्ते।**

स्यादेतद् (।) यो यः पुरुपस्य[2] मन्त्रक्रियासाधनरहितस्तद्यथा रथ्यापुरुषः। पुरुषश्चायं मन्त्रकर्त्तृत्वेनाभिमतः पुरुष इति। तत्रापि **सर्वपुरुषास्तद्रहिता-स्तेन** मन्त्रक्रियासाधनेन रहिता **इत्यपि तत्सम्भवस्य** मन्त्रक्रियासाधनसम्भवस्य पुरुषत्वेन सह **विरोधाभावात्। अनिर्णयो**ऽनिश्चयः। मन्त्रक्रियासाधनस्य स्वभावानुपलम्भादेव पुरुषे स्वभावनिश्चय इति चेदाह। **न च[3]**त्यादि। **अत्यक्षस्वभावेषु** अक्षातिक्रान्तः स्वभावो येषान्तेष्वत्यन्तपरोक्षेष्वित्यर्थः। **अनुपलब्धिर्नाभावनिश्चयस्य हेतुः।** आत्मनि मन्त्रक्रियासाधनानां स्मृत्यादीनामनुपलम्भेन परत्राप्यभावो निश्चीयत इति चेदाह। **न चे**त्यादि। अतिक्रान्तजन्मादिस्मरणं स्मृ तिः। परचित्तावबोधो म तिः। अदृष्टेषु पदार्थतत्त्वदर्शनं **प्रतिवेधः। सत्त्य-**मनन्यथावा[4]दित्वं। **शक्तिः** प्रभावः। ता मन्त्रहेतवः सर्वभाविन्यः। **सर्वपुरुष-**

**तत्साधनसम्प्रदायभेदवद् गुणान्तरसाधनान्यपि[4] स्युः। नापि सन्नपि सर्वैर्द्रष्टुं शक्यः। अत एव अदृष्टस्य अनपह्नवः। नापि पुरुषेषु कस्यचिदपि उत्पित्सोर्मनोगुणस्य प्रतिरोद्धाऽस्ति। बाध्यस्यादृष्टेः[5] बाध्यबाधकभावासिद्धेः।**

**• एतेन सर्वज्ञादिप्रतिषेधादयो निर्वर्णितोत्तराः। तत्रापि अतत्साधनसम्प्रदायोऽयं कथमिव अन्येषामपि तथाभावो[6] एवंभूतो नेति न न्याय्यः। नादृष्टज्ञापक इत्यपि।**

---

**सन्तानभाविन्यो भवन्ति।** येन ता आत्मनि न दृष्टा इत्यन्यत्रापि प्रतिक्षिप्येरन्।

इदानीं स्मृत्यादीनां क्वचिदेव पुरुषे सम्भवमाह। **तत्साधन**मित्यादि। तेषां स्मृत्यादीनां यथोक्तानां यत्साधनमुत्पत्तिकारणन्तस्य **संप्रदाय उपदेश**स्तस्य **भेदो** विशेषः क्वचिदेवागमे सम्भवो न सर्वत्र[5]। **तद्वद् गुणान्तरसाधनान्यपि स्युः।** क्वचिदेव पुरुषे भवेयुः। सिद्धिः साधनं। स्मृत्यादिकारणानां कार्यभूतानि यानि गुणान्तराणि स्मृत्यादिरूपाणि। तेषां साधनानि निष्पत्तयोपि क्वचिदेव पुरुषे स्युः स्मृत्यादिकारणानुष्ठानात्। यदि स्मृत्यादि साधनं स्यात् किन्न दृश्यत इति चेदाह। **नापी**त्यादि। **सन्नपि** विद्यमानोपि सन्तानान्तरस्थो मनोगुणो **द्र[6]ष्टुं** पुरुषमात्रेण **न शक्यः।** **अत एव** कारणा**ददृष्टस्य** सन्तानान्तरस्य मनोगुणस्या**नपह्नवो**प्रतिक्षेपः। **नापि पुरुषेषु** मनोगुण**स्योत्पित्सो**रुत्पत्तिमिच्छोः **प्रतिरोद्धा** बाधकोस्ति येन तदन्यगुणातिशायी मनोगुणः **कस्यचिदपि** नास्तीति स्यात्। पुरुषत्वादिक एव धर्मो बाधक इति चेत् (।) न। किं कारणं। तस्यान्यसन्तानभाविनो **बाध्यस्य[7]** 'गुणस्य पुरुषमात्रेणा**दृष्टेः।** पुरुषत्वादिना धर्मेण **बाध्यबाधकभावासिद्धेः।** अबाधकाच्चाप्रतिक्षेपः। 162a

**एतेना**न्तरोक्तेन **सर्व**स्यार्थस्य यज्**ज्ञा**नन्तस्य **प्रतिषेधः।** आ**दि**शब्दाद् वीतरागादि**प्रतिषेधादयो निर्वर्ण्णितोत्तराः।**

यथा न वक्तृत्वादिलिंगेन सर्वज्ञत्वादीनां प्रतिक्षेप इति। **तत्रापि** वीतरागत्वादिप्रतिक्षेप **एवंभूतः** पुरुषो वीतरागत्वा[1]दिगुणयुक्तो नेति न्यायो युक्तः। किंभूतः। यादृशोयमसम्भवन्तत्साधनसंप्रदायः। असम्भव**न्तत्साधनसंप्रदायो** वीतरागत्वादिसाधनसंप्रदायो यस्येति विग्रहः। वीतरागत्वादिसाधनेनोपायेन विकलस्स वीतरागादिर्न **भवत्येवं न्याय इति** यावत्। **न दृष्टज्ञापको**तत्स्वभाव **इत्यपि।** अदृष्टं ज्ञापकं वीतरागत्वादि लिङ्गं यस्य। स ज्ञापको दर्शनमा[2]त्रेणातत्स्वभावो वीतरागत्वादिगुणवियुक्तस्वभावो भवतीत्यपि न युक्तम्वक्तुं। न हि ज्ञापकानुपलम्भमात्रेण ज्ञाप्यस्याभावो न्याय्यः। किं कारणं। **सतामपि** केषांचिदर्थानां लिंगभूतस्य **कार्यस्यानारम्भसम्भवात्।** आरब्धन्नाम तैरतीन्द्रियैः कार्यन्तथापि **स्वभावविप्र-**

**सतामपि कार्यस्यानारम्भसम्भवात्, स्वभावविप्रकर्षेण द्रष्टुमशक्यत्वाच्च ।**[7]

497a **तस्मादध्ययनं अध्ययनान्तरपूर्वकमिति अध्ययनादिति व्यभिचारि। भारताध्ययने भावात्।**

**वेदेन**[1] **विशेषणाददोष इति चेत्। कः पुनरतिशयो वेदाध्ययनस्य, येन अन्यथाऽध्ययनं न शक्यते ? न हि विशेषणं अविरुद्धं विपक्षेण सह अस्माद्धेतुं**[2] **निवर्त्तयति। अविरुद्धयोरेकत्र सम्भवात्। इदानीन्तनानां अनध्ययनादिति चेत्। उक्तोत्तरमेतत्। अदर्शनादिति चेत्। इदमपि प्राक् प्रत्यढम्। नाप्यदर्शनमात्रमभावं गमयतीति व्यभिचार एव। तस्माद् विशेषणं अतिशयभाग् न भवतीति अनुपात्तसमम्।**

**यत् किञ्चिद् वेदाध्ययनं सर्वं तद् वेदा**[4]**ध्ययनान्तरपूर्वकमिति व्याप्तिर्न**

---

**कर्षेणा**मीषामिदं कार्यमिति **द्रष्टुमशक्यत्वाच्च** । तस्मान्मन्त्रक्रियासाधनवैकल्यं[3] यथैकस्य तथा सर्वस्येत्येतदशक्यनिश्चयमिति स्थितं।

यत एवन्तस्मादध्ययनमध्ययनान्तरवद् अध्ययनान्तरपूर्वकमिति साध्ये अध्ययनादिति लिङ्गं **व्यभिचारि। भा र ता ध्ययने** पौरुषेयाध्ययनत्वस्य **भावात्।**

**वेदेन विशेषणाददोषः।** अध्ययनमात्रस्य हि व्यभिचारो न वेदेन विशिष्टस्याध्ययननस्येत्यभिप्रायः। **कः पुनरि**त्यादि सिद्धान्तवादी। **को**[4]**तिशयो वेदाध्ययनस्य येन** तद्वेदाध्ययन**मन्यथे**ति स्वयं कृत्वाध्येतुं **न शक्यते**। नैव कश्चिदतिशयः (।) ततो वेदाध्ययनं च स्यान्न चाध्ययनपूर्वकमिति विरोधाभावात् स एव व्यभिचारः। यस्मा**न्न हि विशेषणं** वेदत्व**मविरुद्धं विपक्षेणा**नध्ययनान्तरपूर्वकत्वेन **सह। अस्माद्** विपक्षा**द्धेतुन्निवर्त्तयति**। किं कारणं। **अविरुद्धयो**र्वेदत्वानध्य[5]यनान्तरपूर्वकत्वयो**रेकत्र** वेदवाक्ये **सम्भवात्**। को ह्यत्र विरोधो यद् वेदाध्ययनं च स्यान्न चाध्ययनान्तरपूर्वकमिति। **इदानीन्तनानां** पुरुषाणाम**नध्ययनात्**। अध्ययनान्तरपूर्वकत्वेनैवाध्ययनात् । **उक्तोत्तरमेतत्**। भा र ता ध्ययनेपि प्रसङ्गात्। तदपि हीदानीन्तनाः परोपदेशेनैवाधीयत इति। तस्याप्याद्याभिमतमध्ययनमध्यय[6]नान्तरपूर्वकत्वेन वेदवदपौरुषेयं स्यात्। वेदाध्ययनपूर्वकमेव वेदाध्ययनं कर्त्तु**रदर्शनादिति चेत्। इदमपि प्राक् प्रत्यूढं** प्रतिक्षिप्तं। दृश्यन्ते हि विच्छिन्नक्रियासंप्रदायाः। **कृतकाश्चे**त्यादिना। **नाप्यदर्शनमात्रमभावं गमयतीति** कृत्वा **व्यभिचार एव** वेदाध्ययनत्वादित्यस्य हेतोः। **तस्मात्** वेदत्वं **विशेषण**-

162b मध्ययनस्य हेतोर**तिशय**[7]**भाग् न भवति** विशेषाधायकन्न भवति। विपक्षविरोधाभावेन विपक्षादव्यावर्त्तनात्। उपात्तमपि **विशेषणमनुपात्तसमं**।

किञ्च। **यत्किञ्चिद वेदाध्ययनं सर्वन्तदध्ययनान्तरपूर्वकमिति वेदेन**

**सिध्यति। सर्वस्य तथाभावासिद्धेः। यादृशं तु तन्निमित्तं दृष्टं तत्तथैवेति स्यात्। तन्निमित्ततया दृष्टे विशेषे त[5]त्त्यागेन सामान्यग्रहणं हि हुताशनसिद्धौ पाण्डुद्रव्यवद् व्यभिचार्येव।**

**एतेन रागादिसाधने वचनादयः प्रत्युक्ताः।**

**अस्तु वाऽध्ययनं एतद[6]ध्ययनपूर्वकम्।**

**सर्वथानादितः सिद्ध्येदेवं नापुरुषाश्रयः।**
**तस्मादपौरुषेयत्वे स्यादन्यो(प्यनरा)श्रयः ॥२४७॥**

**पुरुष एव हि स्वयं अभ्यूह्य[7] अधीयते परतो वा। तेषामव्यापृतकरणानां** 497b **स्वयं शब्दा न ध्वनयन्ति, येन अपौरुषेयाः स्युः।**

---

विशेषितेपि हेतौ **व्याप्तिर्न सिध्यति।** विपर्यये बाधकप्रमाणाभावेन **सर्वस्य** वेदाध्ययनस्य **तथाभाव**सिद्धेरध्ययनान्तरपूर्वकत्व**ासिद्धेः। यादृशं** त्वध्ययनं स्वयं[1] कर्त्तुमशक्तस्य **तन्निमित्त**मध्ययनान्तरनिमित्तं **दृष्टं तत्तथे**त्यध्ययनान्तरपूर्वकमे**वेति स्यात्।** स्वयं कृत्वाध्येतुमशक्तस्य यदध्ययनन्तस्य दृष्टे विशेषजाड्यादिलक्षणे तन्निमित्ततया परपूर्वाध्ययननिमित्ततया। तत्त्यागेन तस्य जाड्यादिनिमित्तस्याध्ययनस्य यथा परिदृष्टे विशेषस्य त्यागेन। यद्वा **तन्निमित्ततया** शक्तिनिमित्ततया। **दृष्टे**ऽवगते **विशेषे**स्वयं कृत्वाध्ययनलक्षणे[2] **तत्त्यागेन** तस्य विशेषस्य त्यागेन वेदाध्ययनत्वसा**मान्यस्य ग्रहणं** शक्तस्याशक्तस्य वा सर्वं वेदाध्ययनमध्ययनान्तरपूर्वकम्वेदाध्ययनत्वसामान्यादिति क्रियमाणं **व्यभिचार्येव।** किमिव (।) **हुताशनसिद्धौ।** अग्निसिद्धौ **पाण्डुद्रव्यत्ववत्।** अग्निसाध्ये धूमे यः पाण्डुविशेषो दृष्टस्तत्त्यागेन पाण्डुद्रव्यसामान्यमुपादीयमानमग्निसिद्धौ यथा व्यभिचा[3]रि तद्वदित्यर्थः।

**एते**नानन्तरोक्तेन व्यभिचारित्वप्रतिपादनेन **वचनादयः।** आदिशब्दात् पुरुषत्वादयः **प्रत्युक्ताः।** यथा तेपि व्यभिचारिण इति।

कस्मिन् साध्ये (।) **रागादिसाधने।** रागादिसिद्धौ। यादृशो रागादिप्रभवो वचनविशेषो दृष्टस्तत्त्यागेन वक्तृत्वसामान्यस्य व्यभिचारात्।

**अस्तु वे**त्यभ्युपगम्याप्याह। **सर्वथाप्येवं**कृत्वा वेदस्या**नादिता सिध्ये**[4]दादिरहितत्वमात्रं सिध्येत्।° **नापुरुषाश्रयः।** अपौरुषेयत्वन्तु न सिध्येत्।

अथ **तस्मादपौरुषेय**मात्रादेवापौरुषेयत्वमिष्यते। तदा **स्यादन्यो**पि लोकव्यवहारोनादिप्रवृत्तत्वादन**राश्रयो**पौरुषेयः। **पुरुष एव हि स्वयमभ्युह्यो**पकल्प्या**धीयते। परतो** वा श्रुत्वाधीयते **तेषां** पंसा**मव्यापतकरणाना**मव्यापततात्वादीनां **स्वयं**

**अपि स्युरपौरुषेया यदि पुरुषाणामादिः स्यात्**[1]**। तदाऽपि अन्यपूर्वकं न सिध्यति। अध्यापयितुरभावात्।**[1]

34a **तत्प्रथमोध्येता कर्त्तैव स्यात। तदयमनादिः पूर्वप्रदर्शनप्रवृत्तो डिम्भकपांसुक्रीडादिवत् पुरुषव्यवहार इति स्यान्नापौरुषेय एव।**

**अनादित्वादपौरुषेयत्वे बहुतरमिदानीमपौरुषेयं। तथा च।**

**म्लेच्छादिव्यवहाराणां नास्तिक्यवचसामपि।**
**अनादित्वात् तथाभावः पूर्वसंस्कारसन्ततेः॥ २४८॥**

**म्लेच्छव्यवहारा अपि केचित् मातृविवाहादयो मदनोत्सवादयश्चानादयः।**

---

**शब्दा ध्व**[5]**नयन्ति**। स्वरूपं प्रकाशयन्ति। **येन** स्वयं ध्वननेनापौरुषेयाः **स्युः**। किन्तु पुरुषव्यापारेणैषां वैदिकानां शब्दानां ध्वननाल्लौकिकवाक्यवत् पौरुषेयत्वमेव।

**अपि स्युरपौरुषेया**स्सम्भाव्यत एषामपौरुषेयत्वं **यदि पुरुषाणामादिः स्यात्**। अध्ययनं चानादिस्तदाप्याद्यस्य पुरुषस्याध्ययन**मन्यपूर्वक**मध्ययनान्तरपूर्वकं **न सिध्यति**। किङ्कार[6]णम् (।) **अध्यापयितुर**न्यस्य पुरुषस्या**भावात्**। **तत्प्रथमोध्येता** तस्य वेदस्य प्रथमोध्येता स्वयमभ्युह्य वेदमधीत इति **कर्त्तैव स्याद्** वेदस्य। **तदिति** तस्माद**यं** वेदाध्ययनलक्षणो व्यवहार एकस्मादधीत्यापरमध्यापयति। सोप्यन्यमिति पूर्वपूर्वदर्शनप्रवृत्तो**नादिः** पुरुषव्यवहार इति पुरुषैरेवायं

163a रचितो व्यवहार इति स्यान्नापौरु[7]षेय एव। किमिव (।) **डिम्भकपांसुक्रीडावत्**। डिम्भका बालास्तेषां पांसुक्रीडा यथा **पूर्ववत्दर्शनप्रवृ**त्तत्वादनादिः **पुरुषव्यवहार**स्तद्वत्। आदिशब्दाद् भोजनादिव्यवहारः।

**अनादित्वा**दित्यादि। **अनादित्वाद्** वेदस्या**पौरुषेयत्वे**भ्युपगम्यमाने **म्लेच्छादिव्यवहाराणा**मिति स्वकुलक्रमागतानां मातृविवाहादिलक्षणानामनादित्वात् तथाभावो वेद[1]वदपौरुषेयत्वं स्यात्। आदिशब्दादार्यव्यवहारस्यानादेः परिग्रहः। तथा **नास्तिक्यवचसामपि** धर्माधर्मपरलोकापवादप्रवृत्ताना**मनादित्वात्तथाभावः**। अपौरुषेयत्वं स्यात्। अनादित्वमेव तेषां कथमिति चेदाह। **पूर्वसंस्कारसन्ततेः** पूर्वसंस्कारवशात् सन्तानेन प्रवृत्तेरित्यर्थः। **म्लेच्छव्यवहा**रा अनादयः। के पुनस्त इत्याह। मृते[2] पितरि पुत्रेण **मातृविवाहः** कार्य इति। म्लेच्छानां केषांचिद् व्यवहारः। आदिशब्दाद् वृद्धानाम्मारणं संसारमोचनार्थमित्यादिव्यवहारपरिग्रहः। आदिशब्दोपात्तमाह। **मदने**त्यादि। म द न त्र यो दश्याम्पर्वणि **मदनोत्सवः**। अत्राप्यादिशब्दात् पुत्रजन्मोत्सवादयोप्यनादयः। **नास्तिका**नां लौ का य

---

[1] Restored.

**नास्तिक्यवचांसि चापूर्वप[1]रलोकाद्यपवादीनि।**

**न हि तान्यनाहितसंस्कारैः परैः प्रवर्त्तयंति। स्वप्रतिभारचितसमयानामपि यथाश्रुतार्थविकल्पसंहारेणैव प्रवृत्तेः। तत्किंचित् कुतश्चिदागतमित्येकस्योपदेष्टुः प्रबन्धेनाभावात् अपरपूर्वकमित्युच्यते। प्रागेव यथादर्शनप्रवृत्तयः सम्यग्मिथ्याप्रवृत्तयो लोकव्यवहाराः।**

**नन्वादिकल्पिकेष्वदृष्ट(।) एव व्यवहाराः पश्चात् प्रवृत्ता इष्यन्ते। न (।) तेषामप्यन्यसंस्काराहि[2]तानां यथाप्रत्ययम्प्रबोधात्।**

---

ति का नाम्**वचांसि** च। किंभूतान्य**पूर्वपरलोका**[3]**द्यपवादीनि**। अपूर्वस्य धर्माधर्मस्य परलोकस्य चापवादीनि प्रतिक्षेपकाणि। तान्यप्यनादीनीति। लिंगविपरिणामेन सम्बन्धः। (२४८)

कथं पुनर्म्लेच्छादिव्यवहारादीनामनादित्वमित्याह। **न ही**त्यादि। ते च व्यवहारास्**तानि** च नास्तिक्यवचांसीति "नपुंसकमनपुंसकेनैकवच्चान्यतरस्यामि"-[1]ति नपुंसकस्यैकशेषः। तेनायमर्थः(।) तान् व्यवहारां[4]स्तानि च नास्तिक्यवचांसि **परै**रन्यैः पुरुषैर**नाहितसंस्कारा** अव्युत्पन्नबुद्धय इदानीन्तना **न प्रवर्त्तयन्ति**। किन्तु व्युत्पादितबुद्धय एव। तेप्यपरैस्तेप्यपरैरिति सिद्धमनादित्वं।

येप्यपूर्वं काव्यादिकं कुर्वन्ति। तेषामप्यन्यकृतेनैव संस्कारेण प्रवृत्तेस्तत्कृतोपि व्यवहारोनादिरिति कथयन्नाह। **स्वप्रतिभे**त्यादि। **स्वप्रतिभया** स्वबुद्ध्या **रचित**[5]**स्समयः** काव्यादिलक्षणो यैस्**तेषामपि** नावत् पुरुषाणां **यथाश्रुतः** परस्मात् समस्तो व्यस्तो वा **योर्थः**। तत्र ये **विकल्पा**स्तेषां **संहार** एकत्रोपादानम्वर्गीकरणमिति यावत्। ते**नैव** प्रकारेण **प्रवृत्ते**र्ग्रन्थादीनां करणात्। स्वप्रतिभारचितोपि ग्रन्थो वस्तुतः परपूर्वक एव। कथन्तर्हि स्वकृत इत्युच्यते इत्याह। **तत्**काव्यादिक**मपरपूर्वक**[6]**मित्युच्यत** इति सम्बन्धः। केनचित् स्वयं कृतमित्युच्यते। किं कारणं (।) **कुतश्चिदु**पदेष्टुः किञ्चिदर्थजातमा**गतमि**ति कृत्वा। **एकस्योपदेष्टुः प्रबन्धेनाभावात्**। तदेवं स्वप्रतिभारचितोपि तावद् ग्रन्थः परमार्थतः परपूर्वक एव। **प्रागेव** किम्पुन**र्यथादर्शनप्रवृत्तयः**। परेभ्यो यथादर्शनमेव प्रवृत्तिर्निवृत्तिर्येषां ते तथोक्ताः[7]। 163b **सम्यग्मिथ्याप्रवृत्तयः**। सम्यग् मिथ्या च प्रवृत्तिराचरणं येषां **लोकव्यवहाराणान्ते** तथोक्ताः। तत्र सम्यक्प्रवृत्तयः पूज्यपूजादयः। मिथ्याप्रवृत्तयः कामोपसंहितादयः। एते च स्फुटमेव परपूर्वकाः।

अत्र व्यभिचारमाशंकते। **नन्वि**त्यादि। प्रथमकल्पे भवा **आदिकल्पिकाः**।

---

[1] Pāṇini 1.2.69

**भवतु सर्वेषामपौरुषेयत्वमिति चेत् (।)**

**तादृशेऽपौरुषेयत्वे कः सिद्धेपि गुणो भवेत् ।**

**काममविसम्वादकमित्यपौरुषेयत्वमिष्टं। तद्विसम्वादकानामपि केषाञ्चिदनादित्वादस्तीति किमपौरुषेयत्वेन।**

(ख) अनादित्वेऽर्थसंस्कारभेदेन संशयः

**सति वा वेदवाक्यानामेवापौरुषेयत्वे।**

**अर्थसंस्कारभेदानां दर्शनात्संशयः पुनः ॥२४९॥**

**यद्य[3]पौरुषेयत्वेपि प्रतिनियतामेव तदर्थप्रतिभां जनयेदाश्वासनं स्याद् (।)**

---

तेष्व**दृष्टा व्यवहाराः दृश्यन्ते**। न हि तैः पूर्वेभ्यो[1] व्यवहारा उपलब्धास्तेषामेव प्रथमत्वात्।

**तेषामपी**त्यादिना परिहरति। **तेषाम**प्यादिकल्पिकानाम्पुंसा**मन्यसंस्काराहितानां पूर्व**जन्मप्रसरेषु पूर्वदृष्टव्यवहारेणाहितसंस्काराणां पश्चाद् **यथाप्रत्ययं**। यथा सहकारिसन्निधानं **प्रबोधात्** प्रवृत्तेः। तेपि नापरपूर्वकाः। (२४८ a.b.)

**भवत्व**नादित्वात् **सर्वेषां** म्लेच्छादिव्यवहाराणाम**पौरुषेयत्व[1]मिति चेत्**। **तादृशे**नादित्वमात्रेण सर्वव्यवहाराणा**मपौरुषेयत्वे सिद्धेपि को गुणो भवेत्** (।) नैव कश्चित्। तथा हि **कामं भवेदविसम्वादकमित्यपौरुषेयत्वमिष्टं**। **तच्चा**पौरुषेयत्वं **विसम्वादकानामपि केषांचि**ल्लोकव्यवहारणा**मस्तीति** नापौरुषेयत्वमवितथत्वस्य साधकं व्यभिचारादिति **किन्तेनापौरुषेयत्वेन** कल्पितेन।

अथ[3] वेदवाक्यानामेवापौरुषेयत्वमिष्यते। तदा **वेदवाक्यानामेवापौरुषेयत्वे सत्य**पि तद्वाच्येष्वर्थेषु **संशय** एव **पुन**रिति भूयः। अपौरुषेयत्वमपि कल्पयित्वा भूयः संशय एव प्राप्त इत्यर्थः। किं कारणम् (।) अर्थ**भेदानां** वेदार्थव्याख्यानविकल्पानामाचार्यभेदेन **दर्शनात्**।

**यदी**त्यादिना व्याचष्टे।

**अपौरुषेयत्वेपि यदि** वेदवाक्यं यथा[4]स्वं **प्रतिनियतामेव**। **तदर्थप्रतिभां**। वेदवाच्यार्थालम्बनाम्बुद्धिप्रवृत्तिकामस्य यदि **जनये**त्तदा विपरीतार्थसमारोपाभावादा**श्वासनं स्या**ल्लब्धाश्वासः पुरुषो भवेत्। तत्तु नास्ति।. यस्माद्। **यथेष्टन्तु समारोपापवादाभ्या**मधिकशब्दप्रक्षेपेण शब्दान्तरापह्नवेन वेत्य**र्थः**। विरुद्धशास्त्रव्यवहारिणो **न र ताः**। **आदिशब्दाद्** वै या क र णा दि[5]परिग्रहः। **वेदवाक्यानि विशसन्तो** नानार्थान् कुर्वन्तो **दृश्यन्ते**। न **च ते** परस्परविरोधिनो व्याख्याभेदोपनीता **अर्थास्तेषाम्वे**दवाक्याना**म् संघटन्त** एव सम्भवन्त्येवेत्य**र्थः**।

**यथेष्टन्तु समारोपापवादाभ्यां नै रु क्त मी मां स कादयो वेदवाक्यानि विशसन्तो दृश्यन्ते (।) न च तेर्थाः तेषां न घटन्ते (।) समयप्राधान्यादर्थनिवेशस्यैकस्य वाक्यस्यानेक (र्थ) विकल्पसंभवात् (।) प्रकृतिप्रत्ययानामनेकार्थपाठाद् (।) रूढेरप्येकान्तेनाननुमतेररूढश[4]ब्दबाहुल्यात् (।) तदर्थस्य पुरुषोपदेशापेक्षणात्। तदुपदेशस्य तदिच्छावृत्तेरनिर्णय एव वाक्यार्थेषु।**

(ग) वर्णवाक्यनित्यत्वनिरासः

**अपि चायमपौरुषेयत्वं साधयन् वर्णानाम्वा साधयेद् वाक्यस्य वा। तत्र (।) अन्याविशेषाद् वर्णानां साधने किं फलं भवेत्।**

**न हि लोकवेदयोर्नाना वर्णाः भेदेपि च प्रत्यभिज्ञानाविशेषात् तत एकत्वा-**

---

किं कारणम् (।) **अर्थनिवेश**स्यार्थवाचकत्वेन प्रवर्त्तनस्य **समयप्राधान्यात्।** संकेतप्रतिबद्धत्वात्। **एकस्यापि वाक्यस्य** यथासमय**मनेकार्थविकल्पसम्भवात्** संशय एव। प्रकृतिप्रत्ययानुसारेण च वेदवाक्यानां व्याख्यानात्। तेषां च नियतार्थत्वान्न वेदवाक्येष्वनेकार्थविकल्पसम्भव इत्यपि मिथ्या। किं कारणं (।) **प्रकृतिप्रत्ययानामनेकार्थपाठ**सम्भवात्। एकापि हि प्रकृतिरनेकेष्वर्थेषु पठ्यते। तथा प्रत्ययोपीति (।) तदवस्थ एव यथाभिप्रायमर्थसंस्कारभेदात् संशयः।

स्यादेत[7]द् (।) रुढिमाश्रित्य वेदार्थव्याख्यानात् प्रकृतिप्रत्ययानामनेकार्थ- 164a पाठेपि न संशय इत्यप्यसत्। किं कारणं (।) **रुढेरप्येकान्तेन** स्वयमेवा**ननुमते**रनङ्गीकरणात्। एतदेव कुतः। **अरूढशब्दबाहुल्यात्।** अरूढा एव ये लोके शब्दास्ते वेदे बाहुल्येन दृश्यन्ते। तद्यथा जर्भुराण[1]प्रभृतयः। ततो न तत्र रूढिशब्दान्निर्णयः। तत्र **तदर्थस्या**रूढशब्दार्थ[1]स्य निर्णये व्याख्यातृ**पुरुषोपदेशापेक्षणात्। तदुपदेशस्य** च पुरुषोपदेशस्य च। **तदिच्छानुवृत्तेः** पुरुषेच्छानवृत्तेर**निर्णय एव** वेद**वाक्यार्थेषु**। (२४९)

**अपि चायं** वे द वा द्य**पौरुषेत्वं साधयन्** वर्णानाम्वा **साधयेद् वाक्यस्य वा।** वाक्यविकल्पेनैव पदस्याप्यभिधानं द्रष्टव्यं।

(१) वर्णविकल्पमधिकृत्याह। **तत्रे**त्यादि। **अन्याविशे**षादिति (।) लौकिके[2]भ्यो वर्णेभ्यो वैदिकानामविशेषात्। **वर्णाना**मपौरुषेयत्व**साधने किम्फलम्भेत्** (।) नैव किञ्चित्।

**न ही**त्यादिना व्याचष्टे। यस्मान्न हि **लौकिकवैदिकवाक्ययोर्नाना वर्णाः।**

---

[1] In the Vedic mantras.

**सिद्धिप्रसंगात्। भेदानुपलक्षणाच्च वै[5]दिकवर्णासिद्धिः प्रत्यभिज्ञानादप्रतिपत्ति-प्रसंगादनभ्युपगमाच्च। तेषां चापौरुषेयत्वप्रसाधने ते तुल्याः सर्वत्रेति किमनेन परिशेषितं। तथा च सर्वो व्यवहारो पौरुषेयो न च सर्वोऽवितथ इति व्यर्थः परिश्रमः।**

**अथ वाक्यमपौरुषेयमिष्टं (।)**

**वाक्यन्न भिन्नं वर्णेभ्यो विद्यतेऽनुपलंभनात् ॥२५०॥**

**न हि वयं देवदत्तादिपदवाक्येषु दका[6]रादिप्रतिभासं मुक्त्वान्यं प्रतिभासं बुद्धेः पश्यामो द्वितीयवर्णप्रतिभासवत्। न च प्रतिभासमानं ग्रहणे ग्राह्यतयेष्ट-**

---

किन्तर्हि (।) यथा वैदिका अकारादयोऽभिन्नास्तथा लौकिका अपि। एकत्वेन प्रत्यभिज्ञायमानत्वात्। सत्यपि प्रत्यभिज्ञाने यदि लौकिकेभ्यो वैदिकानां वर्णानां भे[3]द इष्यते। तदा **भेदेपि**। **ततः** प्रत्यभिज्ञानाद् वैदिकानामकारादीनां प्रत्यु-च्चारणं यदे**कत्वन्तस्यासिद्धिप्रसंगात्**। किं कारणं (।) **प्रत्यभिज्ञाविशेषात्**। लौकिकवैदिकवर्णभेदे दृष्टस्य प्रत्यभिज्ञानस्य वैदिकेषु वर्णेष्वविशेषात्। एक-त्वव्यभिचारिणः प्रत्यभिज्ञानात् कथम्वैदिकानामेकत्वं सिध्यतीत्यर्थः। **भेदानु-पलक्षणाच्च वैदिकवर्णासिद्धिः**। लौकिकवैदिकयोर्भेदानुपलक्षणात्।

अथ स्याद् वैदिकेषु वर्णेष्वेकत्वनिमित्तत्वात् प्रत्यभिज्ञानं प्रमाणमेवान्यत्र तु सादृश्येन भ्रान्तत्वादप्रमाणमित्यत आह। **प्रत्यभिज्ञानादप्रतीतिप्रसङ्गा**दिति। यद्यन्यत्राप्रमाणं घटादावपि तर्हि प्रत्यभिज्ञानाद् क्षणिकत्वाप्रतिपत्तिप्रसङ्गात्। अन्यत्त्वादेव। भवद्भि र्मी मां स कैर्लौकि[5]कवैदिकवर्णभेदा**नभ्युपगमाच्च**। **तेषाञ्च** वर्णानाम**पौरुषेयत्वसाधने**भ्युपगम्यमाने **ते** वर्णाः **सर्वत्र** लोके वेदे च **तुल्या इति किमनेन** मी मां स के नैवमपौरुषेयत्वं साधयता **परिशेषितं** परि-त्यक्तम्वर्णजातं यत् पौरुषेयं स्यात्। **तथा** वै लौकिकवैदिकवर्णानामपौरुषेयत्वे सति **सर्वः** शाब्दो **व्यवहारो** लौकिको वै[6]दिकश्**चापौरुषेयो न च सर्वोऽवितथो** न च सर्वः सत्यार्थः। अपौरुषेयत्वेपि वितथार्थस्य सम्भवात्। **इति** हेतो**र्व्यर्थः परिश्रमो**ऽपौरुषेयत्वकल्पनायाः

(२) **अथे**त्यादिना द्वितीयपक्षोपन्यासः। **अथ वाक्यमपौरुषेयमिष्टं**। तदसत्। तथा हि **वाक्यन्न भिन्नम्वर्णेभ्यो विद्यते**। किं कारणं। दृश्यस्या**नु-पलम्भनात्**।

164b **न ही**त्यादिना व्या[7]चष्टे। **न हि वयन्देवदत्तादिपदवाक्येषु**। देवदत्तादिपदेषु वाक्येषु च **दकारा-दीनां** वर्णानां यः **प्रतिभासस्तं** मुक्त्वाऽन्यवर्णात्मकं पद-

**मस्त्यन्यद्वेति स (? श) क्यमवसातुम्** (।) **आकारान्तरवद्** (।) **अन्यासंभवि कार्यं गमकमिति चेत्** (।) **स्याद् यदि तेषु वर्ण्णेषु सत्स्वपि तत्कार्यं न स्यात्।**

**न भवति। तेषामविशेषेपि पदवाक्यान्तरे अभावादिति चेत्** (।) **न** (।) **तेषामविशेषासिद्धेः** (।) **अविशेषः प्रत्यभिज्ञानात् सिद्ध इति**[7] **चेत्** (।) **न** (।)

---

वाक्यप्रतिभासं **बुद्धेः पश्यामः। द्वितीयवर्ण्णप्रतिभासवत्।** यथा दकारे प्रतिभासमाने तत्समानकालमेव द्वितीयो वर्ण्णो न प्रतिभासते। तद्वन्न पदवाक्यं प्रतिभासते। **न चाप्रतिभासमानं** ग्रहणे बुद्धौ **ग्राह्य**[1]**तयेष्टम्**उपलब्धिलक्षणप्राप्तं **सदस्तीति** शक्यमवसातुं। तथा **वर्ण्णेभ्योन्यद् वेति शक्यमवसातुं।** न चेति सम्बन्धः। अस्तित्वे निषिद्धेन्यत्त्वमपि निषिद्धमेव। तथापि द्वयोरुपादानमत्यन्तसत्त्वप्रतिपादनार्थं। **आकारान्तवत्।** यथैकस्मिन्नाकारे भासमाने तत्राप्रतिभासमानं दृश्यमाकारान्तरमन्यन्नास्ति तद्वत्।

**अन्यासम्भवीत्यादि**[2] (।) अन्येषु वर्ण्णेष्वसम्भवि। अर्थप्रत्यायन**कार्यं**लक्षणं **कार्य**व्यतिरिक्तस्य पदवाक्यस्य **गमकमिति चेत्।** तथा ह्यप्रतिपत्तिर्देवदत्तादिपदवाक्येषु दृष्टा। न चेयम्वर्ण्णेभ्यस्तेषां प्रत्येकमनर्थकत्वात्। एकवर्ण्णकालेऽपरवर्ण्णाभावेन सामस्त्याभावाच्चातोवगम्यतेऽस्ति तत्पदवाक्यं यत इयमर्थप्रतीतिर्भवतीति।

**स्यादित्यादिना** प्रतिविधत्ते। **स्याद्** वर्ण्णेभ्यो[3]र्थान्तरं पदादि। **यदि** तेषु **वर्ण्णेषु सत्स्वपि तदर्थ**प्रतीतिलक्षणं **कार्यन्न स्यात्।** यावान् वर्ण्णसमुदायोर्थप्रतिपादनाय संकेतितस्तावतो यद्यर्थप्रतीतिर्न स्यात् स्यादेतत्। यावता भवत्येव। तदुक्तं (।)

नान्यथानुपपत्तिस्तु भवत्यर्थमतिं प्रति।
तदेवास्यानिमित्तं स्याज्जायते यदनन्तरमिति। (स्फोट० ६५)

**न भवतीत्यादि** परः। **न भवति** वर्ण्णेभ्योर्थप्रतीतिः। [4] किं कारणं (।) **तेषाम्**वर्ण्णाना**मविशेषेपि पदवाक्यान्तरे**र्थप्रतीते**रसम्भवात्।** यदि हि वर्ण्णेभ्योर्थप्रतीतिः स्यात् तदा सर इत्यस्मिन् पदे यादृश्यर्थप्रतीतिस्तादृश्येव रस इत्यत्रापि स्याद् उभयत्र वर्ण्णानान्तुल्यत्वात्। एवं वाक्येपि सदृशवर्ण्णे बोद्धव्यं। न च भवति। तस्मान्न वर्ण्णेभ्योर्थप्रतीतिलक्षणं कार्यमिति।

**नेत्यादिना** परिहरति। **तेषाम्**वर्ण्णा[5]नां वाक्यान्तरेष्व**विशेषासिद्धेः।** तथा हि य एकत्र वाक्ये वर्ण्णा न त एव वाक्यान्तरेषु पुरुषप्रयत्नभेदेन वर्ण्णानां प्रतिवाक्यम्भिन्नानामेवोत्पत्तेः।

**तस्य व्यभिचारादनिदर्शनाच्च। वर्णाविशेषेपि वाक्याभेदात् प्रतिपत्तिभेदः कार्यभेदः स्यात् वाक्यात् (।) तच्चातीन्द्रियमिति कुतः स्यात्। सन्निधिमात्रेण जननेऽव्युत्पन्नस्यापि स्यात्। तस्मान्न वाक्यं नाम किञ्चिदर्थान्तरं वर्णेभ्यो**

---

स एवायम्वर्ण इति **प्रत्यभिज्ञानात्** प्रतिवाक्यं वर्णानाम**विशेषो**ऽभेदः **सिद्ध इति चेत्**।

**नैत**देवं । किं कारणं। **तस्य** प्रत्यभिज्ञानस्य **व्यभिचारित्वात्**। दृश्यते हि लूनपुनर्जातेषु केशेषु भिन्नेष्वपि[6] सादृश्यग्रहणाद् विप्रलब्धस्य प्रत्यभिज्ञानं। सादृश्यग्रहणं च सदृशस्य स्वरूपग्रहणं न त्वन्यसदृश इति ग्रहणं। **अनिदर्शनत्वा**-च्चादृष्टान्तत्वाच्च प्रत्यभिज्ञानस्यालिंगस्य। न ह्येकः प्रत्यभिज्ञायमानो वादि-प्रतिवादिसिद्धो दृष्टान्तोस्ति। नापि प्रतिपदं वर्णैकत्वग्राहकं प्रत्यक्षं प्रत्यभिज्ञानं

165a सम्भवति। पूर्वकालसम्बन्धित्वस्येदानीमसन्नि[7]हितत्वेनाग्रहणात्। ग्रहणे वा श्रोत्र-ज्ञानवत् स्पष्टप्रतिभासः स्यात् (।) न च भवति (।) तस्मान्न पूर्वकालवर्णग्रा-हकं। दृश्यमानस्य चेदानीन्तनकालत्वाद् यश्चेदानीन्तनकालसम्बन्धी स्वभावः स कथं पूर्वकालसम्बन्धी। पूर्वापरकालयोः परस्परविरोधात् कथं प्रत्यक्षेण तत्त्व-ग्रहण उच्यते। सन्निहितविषयं च प्रत्यक्षमिष्यते (।) न च वर्णस्य सन्निधानं स[1]म्भवति सांशत्वात्। अन्त्यवर्णभागकाले च पूर्व्ववर्णभागानामसत्त्वात्। तेन न वर्णेषु प्रतिपदमेकत्वग्राहकं प्रत्यक्षं प्रत्यभिज्ञानं सम्भवति।

तस्मात् स्थितमेतत् प्रतिवाक्यं भिन्ना एव वर्णास्तेषामेव भेदार्थप्रतीते-र्भेद इति।

ननु वर्णा निरर्थका इत्युक्तन्तत्कथन्तेषामेव भेदादर्थप्रतीतेर्भेद इत्युच्यते।

सत्यं। सन्तो वर्णा निरर्थका वि[2]कल्पविषयास्तु सामान्यरूपा एव प्रति-वाक्यं भिन्ना वर्णा वर्णस्वलक्षणा भेदेनाध्यस्ता वाचका इष्यन्ते। तेन वर्णाना-मेव भेदादर्थप्रतीतेर्भेद इत्युच्यते। यदि तु वर्णभेदादयमर्थप्रतीतिभेदो नेष्यते किन्तु **वर्णाविशेषेपि** (।) ततो व्यतिरिक्तस्य **वाक्यस्य भेदादर्थप्रतिपत्तिभेदः** (।) स एव **कार्यभेदः स्यात्**। सा चार्थप्रतीति**र्वाक्याद्** भवेत्। **तच्च**[3] वाक्यम-**तीन्द्रिय**म्वर्णव्यतिरेकेणेन्द्रियबुद्धावप्रतिभासनात्। **इति** एवं **कुतः स्यात्**। वाक्यात् स प्रतीतिर्न स्यात्। सम्बन्धस्यागृहीतत्वात्।

स्यादेतद् (।) अदृश्यमपि तद्वाक्यमिन्द्रियवत् सन्निधिमात्रेण प्रतीतिं जन-यति। प्रतीत्यन्यथानुपपत्या च वाक्यकल्पनेत्यत आह।

**सन्निधिमात्रेण** वाक्यस्य प्रतीति**जनने**ऽभ्युपगम्यमाने। इन्द्रिया[4]दिव**दव्युत्प-**

**यस्यापौरुषेयत्वं साध्येत् (?त)। तदभावाद् वेदाविशिष्टवर्णापौरुषेयत्वमपि प्रथमपक्षे प्रत्युक्तं।**

**अपि चास्त्वर्थान्तरं वाक्यं तदनेका[8]वयवात्मकं वा स्यादनवयवं वा।** 34b

**अनेकांगिकतात्मत्व पृथक् तेषां निरर्थता।**

**तेपि तस्य बह्वोवयवाः पृथक् (प्र)कृत्या यद्यनर्थकाः।**

**अतद्रूपे च ताद्रूप्यं कल्पितं सिंहतादिवत् ॥२५१॥**

**अर्थवानेवात्मा वाक्यं। ते चावयवाः स्वयमनर्थकाः। तेषु स आत्मा कल्पनासमारोपितः स्यात् सिंहतादिवत् माणवकादिष्विति। पौरुषेय एव।**

**अथ माभू(देष) दोष इति—**

**प्रत्ये[1]कं सार्थकत्वेपि मिथ्यानेकत्वकल्पना।**

---

**अस्याप्य**कृतसंकेतस्यापि पुंसोर्थप्रतीतिर्वाक्यात् **स्यात्**(।) न च भवति। तस्माद् वर्णेभ्यः संकेतबलादेवार्थप्रतीतेर्भावात् कथमन्यथानुपपत्त्या वाक्यकल्पना। **तस्मान्न वाक्यन्नाम किञ्चिदर्थान्तरम्वर्णेभ्यो यस्यान्यस्यापौरुषेयत्वं साध्येत। तदभावाद्** वाक्याभावाद् **वर्णा** एव केवलमवशिष्यन्ते। ते चाविशिष्टाः सर्वत्र तेषा**मपौरुषेयत्व**सा[5]धने।

**वेदनाविशिष्ट**रूपाणां लौकिकानामपि **वर्णा**नाम**पौरुषेयत्वं** साधयितव्यम् (।) अत्र च **प्रथमपक्षे** वर्णापौरुषेयत्वसाधनपक्षे **प्रत्युक्तं**। व्यर्थः परिश्रम इति। (२४९-२५०)

**अपि चे**त्यादि। **अनेकावयवात्मत्वे** वाक्यस्य कल्प्यमाने **तेषामवयवानां पृथक्** प्रत्येकं **निरर्थका** यदि।

**तेपी**त्यादिना व्याचष्टे। **तस्य** वाक्यस्य **बह्वोवयवाः पृथक् प्र**[6]**कृत्या** स्वभावेन **यद्यनर्थका**स्तदा वाक्यमप्यनेकावयवसमुदायात्मकं तद्वदेवानर्थकं। ततश्**चातद्रूप** इत्यनर्थकत्वेनावाचकरूपेऽवयवसङ्घाते **ताद्रूप्यं** वाचकवाक्यरूपमर्थवत्त्वमिति यावत्। **कल्पितं** समारोपितम्भवेत्। **सिंहतादिवत्**। यथा सिंहो माणवक इत्यादिषुपचारेषु। माणवकादिष्वतद्रूपेषु सिंहादिकमारो[7]पितन्तद्वत्। 165b

**अर्थवानि**त्यादिना व्याचष्टे। **अर्थवानेवात्मा**। वाचक एव स्वभावो **वाक्यं**। **ते चावयवा** वाक्यस्य **स्वयमनर्थकाः**। **तेषु च** स्वयमनर्थकेष्ववयवेषु सोर्थवान् वाक्यात्मा **कल्पनासमारोपितः स्यात्**। **सिंहतादिवत् माणवकादिषु**। **इति** हेतोस्स वाचक आत्मा कल्पनारचितत्वात् **पौरुषेय एव**। (२५१)

**अथ माभूदेष दोष इति प्रत्येकं** वाक्य[1]स्या**वयवाः** वाक्यार्थेन **सार्थका इष्यन्ते**।

**एकावयवगत्या च वाक्यार्थप्रतिपद्भवेत् ॥२५२॥**

**परिसमाप्तार्थं हि शब्दरूपं वाक्यं(।)ते चावयवास्तथाविधाः पृथक् पृथगिति प्रत्येकं ते वाक्यं। तथा च नानेकावयवं वाक्यमेकावयवप्रतिपत्त्या च वाक्यार्थप्रतिपत्तेरवयवान्तरा(ऽप्रत्य)पेक्षा कालक्षेपश्च न स्यात्। तस्य निष्कलात्मनः क्षणेन प्रतिपत्तेरेकज्ञानोत्पत्तौ च निःसे (?शे)षावगमात्।**

---

तदा **प्रत्येकमवयवानां सार्थकत्वे मिथ्यानेकत्वकल्पना** एकस्याप्यवयवस्य परिसमाप्तार्थत्वादवयवान्तरापेक्षा वाक्यस्य न युज्यत इत्यर्थः। यदा **चैकावयवगत्या च**। एकस्यापि वाक्यावयवस्य ग्रहणे **वाक्यार्थप्रतिपत्**प्रतीतिर्**भवेत्**।

अथ स्याद् (।) एकावयवगत्यापि सामान्येन [2] वाक्यार्थप्रतीतिर्भवत्येव। यदाह। भ र्तृ ह रिः। "सर्वेषाम्पृथगर्थवत्ता सर्वेषु प्रतिशब्दं कृत्स्नार्थपरिसमाप्तेः। तथा यदेव प्रथमं पदमुपादीयते तस्मिन् सर्वरूपार्थोपग्राहिणि नियमानुवादनिबन्धनानि पदान्तराणि विज्ञायन्त"[1] इति। तत्कथमुच्यते **वृथानेकत्वकल्पने**ति।

नैष दोषो यस्मात्। विवक्षितार्थविशेषापेक्षयैतदुच्यते।

प्रत्येकं सा[3]र्थकत्वेपि मिथ्यानेकत्वकल्पना।

एकावयवगत्या च वाक्यार्थप्रतिपद् भवेदिति।

नापि कश्चिदवयवः कारकविशेषस्याभिधायकोन्यश्च क्रियाविशेषस्याभिधायक इति वाक्यावयवानां प्रत्येकं सार्थकत्वात् साफल्यं युक्तं। क्रियाविशेषान्वितस्य कारकविशेषस्याभिधातुमशक्यत्वात्। तदन्वितस्य त्वभिधाने मिथ्यानेकत्वकल्पनेत्यादिदोष[4]स्तदवस्थ एवेति।

**परिसमाप्तार्थे**त्यादिना व्याचष्टे। **परिसमाप्तोर्थो** यस्य **शब्दरूप**स्य तत्तथा। **ते चावयवा** वाक्यगतास्त**थाविधा** इति परिसमाप्तार्थरूपाः **पृथक् प्रत्येकं**। इति हेतोः प्रत्येकन्तेऽवयवा **वाक्यं** प्रसक्ताः (।) **तथा** च **नानेकावयवं वाक्यं**। अनेकेनावयवेन युक्तमेकम्वाक्यं न स्यादित्यर्थः। प्रत्येकं चावयवानां सा[5]र्थकत्वे **एकावयवप्रतिपत्त्या** समस्तवाक्यार्थप्रतिपत्त्या समस्त**वाक्यार्थप्रतिपत्तेरवयवान्तरं प्रति अपेक्षा** श्रोतुर्न स्यात्। **कालक्षेपश्च न स्यात्**। कालहरणेन वाक्यार्थप्रतीतिर्न स्यादित्यर्थः। किङ्कारणं (।) **तस्य** वाक्यार्थस्य **निष्कलात्मनो** निर्विभागस्य **क्षणेनै**केन **प्रतिपत्तेः**। एतदेव कुत (:।) **एकज्ञानोत्पत्तौ** तस्य वाक्यार्थस्य **निःशेषागमात्**।

---

[1] Bhāgavṛtti (?)

**अन्यथा चैक[2]त्वविरोधात् ॥**

**सकृच्छ्रुतौ च सर्वेषां कालभेदो न युज्यते ।**

**मा भूदवयवान्तराप्रतीक्षणेनेकस्मादेवावयवाद् वाक्यार्थसिद्धेरनेकावयवत्वहानिर्वाक्यस्येति। सकृत् सर्वावयवानां श्रवणमिष्येत। तदापि कालक्षेपो न युज्यत एव (।) एकावयवप्रतिपत्तिकाले एव सर्वेषां श्रवणात्। क्रमश्रवणे च पृथगर्थवतां एकस्मादेव तदर्थसिद्धेर[3]न्यस्य वैयर्थ्यात् (।) सकृच्छ्रुतौ च पृथगर्थेष्वदृष्टसामर्थ्यानामर्थवत्ता न सिध्यति। सहितेष्वर्थदर्शनाददोषः (।)न (।) पृथगसतो रूपस्य संहातेप्य (?संहतेष्व) संभवादर्थान्तरानुत्पत्तेश्च। शब्दोत्प-**

---

अन्ये त्वन्यथा व्याचक्षते। एका[6]वयवप्रतिपत्त्या च वाक्यार्थप्रतिपत्तौ तस्यावयवस्य कालक्षेपश्च न स्यात्। किङ्कारणं। तस्यावयवस्य निःकलात्मनः क्षणेनैकेन प्रतिपत्तेः। किं कारणम् (।) एकज्ञानोत्पत्तौ तस्य निर्भागस्यावयवस्य निःशेषावगमात्।

**अन्यथेति** यद्येकज्ञानक्षणेन सर्वस्य ग्रहणं न स्यात् तदा गृहीतागृहीतस्वभावयोरे**कत्वविरोधात्**। विरुद्धयोरेक[7]त्वायोगात्। (२५२) 166a

अथ मा भूदयन्दोष इति **सकृच्छ्रुति**रिष्यते। तदा **सकृच्छ्रुतौ च सर्वेषा**मवयवानां कल्प्यमानायां **कालक्षेपो न युज्यते**। (२५२)

**मा भू**दित्यादिना व्याचष्टे। **अवयवान्तराणामप्रतीक्षणेनैकस्मादेवावयवाद् वाक्यार्थसिद्धे**र्वाक्यार्थनिश्चयात् कारणाद् अ**नेकावयवत्वहानिर्वाक्यस्येति** कृत्वा **सर्वे**षाम्वाक्या**वयवानां सकृच्छ्र**वणमिष्यते। **तदापि कालक्षेपो न युक्त एव**। [1] किं कारणम् (।) **एकावयवप्रतिपत्तिकाल एव सर्वेषाम**वयवानां **श्रवणात्**। क्रमेण च श्रवणं दृष्टं। **क्रमश्रवणे चा**वयवानां पृथक् **पृथगर्थवतां** सता**मेकस्माद**वावयवा**त्तदर्थसिद्धे**र्वाक्यार्थसिद्धेर**न्यस्या**वयवस्य **वैयर्थ्यात्**। एतच्चानन्तरमेवोक्तं।

सकृत्सर्वावयवश्रवणे परन्दोषन्दर्शयन्नाह। **सकृच्छ्रुतौ** सर्वावयवानां युगपद्ग्रहणेभ्युप[2]गम्यमाने **पृथक्** प्रत्ये**कमर्थेषु** वाच्येष्व**दृष्टसामर्थ्या**नामवयवानां सहितानामप्य**र्थवत्ता च न सिध्यति**।

स्यादेतत् (।) **सहिते**ष्ववयवेष्व**र्थदर्शनाद**र्थप्रतीतेः पृथगप्यवयवानामर्थप्रतीतिजननसामर्थ्यमस्त्यतोय**मदोष** इति।

**तन्न**। किं कारणम् (।) **पृथक्** प्रत्येकं तेष्ववयवेष्**वसतो रूपस्या**र्थप्रतिपादनस्वभावस्य **संहतेष्वसम्भवा**त्।

केव[3]लानामवयवानां यद्रूपन्ततोन्यदेव समुदितानामर्थप्रतिपादनसमर्थं रूपमु-

**त्तिवादिनस्तावदयमदोष एव (।) पृथगसमर्थानामप्यवयवानामुपकारविशेषादतिशयवतां कार्यविशेषोपयोगात्। प्रत्येकमवयवे[4]षु समर्थेषु व्यर्था स्यात् अन्यकल्पना।**

**अथ पुनः (।) एकमेवानवयवं वाक्यं। तत्र (।)**

**एकत्वेपि ह्य[3]भिन्नस्य क्रमशो गत्यसम्भवात्।**

**कालभेद एव न युज्यते। न ह्येकस्य क्रमेण प्रतिपत्तिर्युक्ता। गृहीतागृहीतयोरभेदात्। गृहीतागृहीताभावात्। क्रमेण च वाक्यप्रतिपत्तिर्दृष्टा। सर्ववाक्याध्याहारश्रवणस्मरणकालस्यानेकक्ष[5]णनिमेषानुक्रमपरिसमाप्तेः। वर्णरूपासंस्पर्शिनश्चैकबुद्धिप्रतिभासिनः शब्दात्मनोऽप्रतिभासनात्। वर्णानुक्रमप्रतीतेः**

---

पपद्यत इत्यत आह। **अर्थान्तरानुत्पत्तेश्च**। पूर्वकादसमर्थरूपादर्थान्तरस्य समर्थस्य रूपस्यानुत्पत्तेश्च। नित्यत्वाद्वर्णानामिति भावः।

अनित्यवादिनोप्ययन्दोषः किन्नेत्याह। **शब्दोत्पत्ती**त्यादि। **शब्दोत्पत्तिवादिनस्तावदय**मनन्तरोक्तो **न दोष एव**। किङ्कारणं[4] (।) तस्य वादिनः **पृथगसमर्थानामप्य**समर्थानां पुनः पुरुषप्रयत्नकृता**दुपकारविशेषात्** सहितावस्थायामर्थप्रतिपादनसामर्थ्यलक्षणेनातिशयेना**तिशयव**तामर्थप्रतीतिलक्षणे **कार्यविशेष उपयोगात्**। नित्यवादिनस्तु **प्रत्येकमवयवेषु समर्थे**ष्वेकस्मादप्यवयवादर्थप्रतीते**र्व्यर्था स्यादन्य**स्यावयवस्य **कल्पना**।

एवन्ता[5]वत्सावयववाक्यपक्षे दोष उक्तः।

**अथ पुनरेकमेवानवयवम्वाक्यं स्यात्। तत्रैकत्वेपि हि** वाक्यस्याभ्युपगम्यमाने। तस्या**भिन्नस्य** निर्भागस्य **क्रमशः** क्रमेण **गत्यसम्भवात्**। ग्रहणासम्भवात् **कालभेद एव न युज्यते**। यतो **न ह्येकस्य क्रमेण प्रतिपत्तिर्युक्ता**। किं कारणं (।) **गृहीतागृहीतयोरभेदात्**। न हि तस्य गृहीतात् स्वभावादगृहीतोन्यः [6] स्वभावोस्ति यस्य क्रमेण ग्रहणं स्यात्। भवत्वक्रमेण वाक्यस्य ग्रहणमिति चेदाह। **क्रमेण चे**त्यादि। किं कारणं। **सर्व**स्य **वाक्य**स्य यो व्यवहारकालो वक्तुः श्रोतुश्च **श्रवण**कालः **स्मरणकाल**श्च। तस्या**नेकक्षणनिमेषानुक्रमसमाप्तेः**। अनेकः क्षणो यस्मिन्नक्षिनिमेषे सोनेकक्षणनिमेषः तस्यानुक्रमः परिपाटिस्तेनानुक्रमणोत्पत्तेः

166b कारणात्[7]।

वर्णानामिदं क्रमेण ग्रहणं वाक्यस्य त्वक्रमेणैवेति चेदाह। **वर्णे**त्यादि। **वर्णरूपासंस्पर्शिनो** वर्णरूपव्यतिरिक्तस्यै**कबुद्धि**क्षण**प्रतिभासिनः शब्दात्मनोप्रतिभासनात्**। एतदेव कुतः। वर्णानुक्रमप्रतीतेः **वर्णानुक्रमे**णैव वाक्यस्य **प्रती-**

**(।) तदविशेषेप्यनुक्रमकृतत्वाद् वाक्यस्यानुक्रमवती वाक्यप्रतीतिः। वर्णानुक्रमोपकारानपेक्षणे तैर्यथाकथञ्चित् प्रयुक्तैरपि यत्किंचिद् वाक्यं प्रतीयेत। विनापि वा वर्णैरनुक्रमवद्भिर[6]क्रमस्योपयोगात्। अक्रमेण च व्याहर्त्तुमशक्यत्वात्। गत्यन्तराभावाच्च। नैव वाक्ये वर्णा (:) सन्ति तदेकशब्दरूपं व्यंजकानुक्रमवशादनुक्रमवद् वर्णविभागवच्च प्रतिभातीति चेदन्न (न) क्रमवता**

---

**तेः** । न हि क्रमप्रतिभासं वर्णकृतं मुक्त्वाऽपरो क्रम प्रतिभासस्सम्पद्यते श्रोत्रज्ञाने। इतश्च नाक्रमस्य वाक्यस्य प्रति[1]भासः। यतस्**तदविशेषेपि** त्वन्मते न तेषां वर्णानामविशेषेपि वर्णा**नुक्रमकृतत्वाद्** वाक्यभेदस्**यानुक्रमवती वाक्यप्रतीतिर्न** युगपद्भाविनी। **वर्णानुक्रमोपकारानपेक्षणे**। वर्णानुक्रमकृतमुपकारं वाक्यं यदि नापेक्षेत। तदा **तै**र्वर्णै**र्यथाकथंचित्** तत्क्रमैरन्यक्रमै**रपि प्रयुक्तैर्यत्किञ्चिद् वाक्यं प्रतीयेत**। सरोस्तीति प्रयुक्ते रसोस्तीति प्रतीयेत। व[2]र्णोपकारानपेक्षत्वाद् विनापि वा वर्णैर्वाक्यं प्रतीयेत। न च वर्णोपकारापेक्षया वाक्यप्रतीतिः। किं कारणं। **तैर्वर्णैरनुक्रमवद्भिरस्य** वाक्यस्योपकारा**योगात्**। क्रमवद्भिः क्रमवानेवोपकारः कर्त्तव्यस्तथा चोपकार्यस्य क्रमवत्त्वं स्यात् (।) न चैवमिष्यते।

अक्रमा एव वर्णा वाक्यस्योपकारका भविष्यन्तीति चेदाह। **अक्रमेण** **चे**त्यादि। **अक्रमेण** वर्णानां[3] **व्याहर्त्तु**मुच्चारयितु**मशक्यत्वात्**। न च क्रमाक्रमोपकारव्यतिरेकेणान्यः प्रकारोस्तीति **गत्यन्तराभावा**न्नोपकारका वर्णा वाक्यस्येति स्थितं। **नैव वाक्ये वर्णाः सन्ति**। नैव वर्णात्मकं वाक्यं। किन्तर्हि वर्णेभ्योर्थान्तर**मेक**मेव **शब्दरूपं** वाक्यं। **व्यञ्जका** ध्वनयो**नुक्रमवन्तो** विशिष्टेनानुक्रमेण व्यञ्जयन्ति न व्युत्क्रमेण। तदुक्तं।

"यथानुपूर्वीनियमो विकारे[4] क्षीरबीजयोः।
तथैव प्रतिपत्तॄणान्नियतो बुद्धिषु क्रमः"(।)[1]
तेन यथाकथञ्चित् प्रयुक्तैरित्यादिरदोष इति।

**व्यञ्जकानुक्रमवशात्** तदेकमपि वाक्यं व्यक्त्यनुक्रमाद**नुक्रमवत्**। स्फोटरूपाविभागेन वर्णानां नादरूपाणां ग्रहणाद् **वर्णविभागवच्च** पुरुषस्य **प्रतिभाति** (।) परमार्थतोनुक्रमवर्णविभागाभ्यां रहितमपि। तदुक्तं।

"नादस्य क्रमजन्यत्वान्न पू[5]र्वो नापरश्च सः।
अक्रमः क्रमरूपेण भेदवानिव जायते॥

---

[1] Kumārila.

**व्यञ्जकेनाक्रमस्य व्यक्तिः प्रत्युक्ता । व्यक्ताव्यक्तविरोधात् । अवर्णभागेव वाक्येऽसकलश्राविणो वाक्यगतिर्न स्यात् (।) एकस्य स(?श)कलाभावात् सक**[7]-

---

तस्मादभिन्नकालेषु वर्णवाक्यपदादिषु ।

शब्दकालस्वभावश्च नादभेदाद् विभिद्यत" इति ।।[1]

अत्रोत्तरमाह । अनु**क्रमवते**त्यादि । एवम्मन्यते । अवधारणरूपा वाभि**व्यक्ति**रनवधारणरूपा वा (।) तदावधारणरूपाभिव्यक्तिर**क्रमस्य** वाक्यस्यानुक्रमवता **व्यञ्जकेन प्रत्युक्ता** प्रतिक्षिप्ता ।[6] किं कारणं (।) **व्यक्ताव्यक्त**रूपयोरवधृतानवधृतरूपयोरेकत्र **विरोधात्** । न ह्यवधृतरूपादन्यदनवधृतं रूपान्तरमेकस्यास्ति येन तत्पश्चाद् व्यज्येत । तेन यदुच्यते । "प्रथमेन वर्णेनाभिव्यक्तस्यानवधारणादवधारणार्थमन्येषाम्वर्णानां व्यापार" इति तदपास्तं । प्रथ-
.167a मेनैव वर्णेनावधारणरूपया व्यक्तेर्निष्पादितत्वात् । अनवधारण[7]रूपायां व्यक्तौ समस्तवर्णेत्यादिनोत्तरम्वक्ष्यति ।

अथ स्याद् (।) वर्णेभ्यो भिन्नमेव वाक्यं प्रतिभासते न तु ध्वनिसंसृष्टं । तदुक्तं (।)

कैश्चिद् ध्वनिरसम्वेद्यः स्वतन्त्रोन्यैः प्रकल्पित इति ।

अत्राप्याह । **अवर्णे**त्यादि । अविद्यमाना **वर्ण**रूपा **भागा** यस्मिन् **वाक्ये** तस्मिन्नभ्युपगम्यमाने पुरुषस्या**सकलश्राविणो** समस्तवर्णानुक्रमश्राविणः खण्डशः श्रोतुरित्यर्थः । कदाचिदप्यस[1]कलस्य **वाक्यस्य गतिः** श्रु**तिर्न स्यात्** । किं कारणं (।) वर्णव्यतिरिक्तस्**यैकस्य** वाक्यस्य **शकलाभावाद्** भागाभावात् । भवति च लोके कतिपयवर्णश्रवणे पूर्ववाक्यभागश्रवणप्रतीतिः । अथ वर्णभागवतो वाक्यस्याभ्युपगमात् । कतिपयवर्णश्रवणे पूर्ववाक्यभागश्रवणमिष्यते ।

तदयुक्तम् (।) एकत्वाद् वाक्यस्य यदि पूर्वभागश्रवणन्तदा **सकलश्रुतिः** सर्वात्म[2]ना वाक्यस्य श्रवणं स्यात् । पूर्वभागाव्यतिरेकात् । अथ न सकलश्रुतिस्तदा **न वा कस्य**चिछ्रुतिः स्यात् । पूर्वस्यापि भागस्य श्रुतिर्न स्याद् वाक्यव्यतिरिक्तत्वादिति ।

तेन यदुच्यते म ण्ड ने न । "व्यञ्जकसादृश्याच्च वाक्ये 'तदात्मग्रहणाभिमानस्तेन नाश्रवणं सकलश्रवणं वेति" (।)

तदपास्तं । सकलासकलवर्णभागप्रतिपत्तिकाले निष्कलस्य वाक्यस्याश्रव[3]-

---

[1] Kumārila.

**लश्रुतिर्न्न वा कस्यचित्** (।) **समस्तवर्णसंस्कारवत्याऽन्त्यया बुद्ध्या वाक्यावधारणमित्यपि मिथ्या। तस्यावर्णरूपसंस्पर्शिनः कस्यचित कदाचिदप्रतिपत्तेः।**

---

णात्। न हि व्यङ्ग्यव्यञ्जकयोः सादृश्यम्वर्णावर्णात्मकत्वेन विसदृशत्वात् तत्कथं वाक्ये वर्णात्मग्रहणाभिमान इति यत्किञ्चिदेतत्।

अन्ये त्वन्यथा व्याचक्षते। अथोपकार्योपकाराभावेनायुक्तमपि क्रमवद् व्यञ्जकानुविधानमक्रमस्य वाक्यस्याभ्युपगम्यते। ततश्चासकलश्रुतिरित्यत आह। **सकले**त्यादि। खण्डशः श्रोतुरपि **सकलस्य** निष्कलस्य[4] वाक्यस्य **श्रुतिः स्यात्**। अथ नेष्यते तदा **न वा कस्यचित्** पुंसः स्यात्। सकलवर्णाश्राविणोपि **न** वा निष्कलस्य वाक्यस्य श्रुतिः स्यात्। अन्त्यावस्थायामपि युगपद् वर्णानामश्रवणेन भागस्यैव श्रवणात्।

अथ स्याद् (।) यथा श्लोक एकदा प्रकाशितो नावधारितोन्यदा प्रकाशने त्ववधारणसहो भवति। पुनः पुनः प्रकाशने त्ववधार्यते। तथा वाक्यं पूर्वध्वनिभा[5]वानभिव्यक्तमपि नावधारितं। तेन पूर्वपूर्ववाक्याभिव्यक्त्याहितैस्तु संस्कारैर्वाक्यावधारणंप्रति प्रत्ययभूतैरन्त्यवर्णश्रवणकाले तदवधार्यते। तस्माद् वर्णेनानुक्रमवताऽक्रमस्य वाक्यस्य व्यक्तिर्युज्यत एव। तदुक्तं।

> "यथानुवाकः श्लोको वा सोढत्वमुपगच्छति।
> आवृत्त्या न तु स ग्रन्थप्रत्यावृत्तिर्निरुच्यते॥
> प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्त[6]था।
> ध्वनिः प्रकाशिते शब्दे स्वरूपमवधार्यते॥
> नादैराहितबीजायामन्त्येन ध्वनिना सह।
> आवृत्तपरिपाकायाम्बुद्धौ शब्दोवधार्यत" इति॥[1]

एतदेवाह। **समस्ते**त्यादि। समस्तैर्वर्णैः प्रत्येकं वाक्याभिव्यक्तिपूर्वका ये कृताः संस्कारा विद्यन्ते यस्या बुद्धेस्सा तथा। तया **समस्तवर्णसंस्कारवत्यान्त्यया** ऽन्त्यवर्णविषयया **बुद्ध्या** निष्कलस्य **वाक्यस्यावधारणमि[7]त्यपि** कल्पना **मिथ्या**। 167b किं कारणं (।) **तस्य** वाक्यस्या**वर्णरूपसंस्पर्शिनः**। वर्णरूपसंस्पर्शरहितस्य श्रोत्रज्ञाने **कस्यचित्** पुरुषस्य **कदाचिदप्यप्रतिपत्तेः** प्रतिवर्णोच्चारणं प्रतिभासाभाव इत्यर्थः श्लोकस्य तूच्चारणं प्रतिभासोस्ति।

अथ स्याद् (।) वर्णात्मकमेव वाक्यन्तेनेन्द्रियज्ञानविषयमेवेत्यत आह।

---

[1] Kumārila.

**वर्णानां चाक्रमेणाप्रतिपत्तेः कुतोऽक्रममेकबुद्धिग्राह्यं नाम। न चान्त्यवर्णप्रतिपत्ते-रूर्ध्वमन्यमशकलं शब्दात्मानमुपलक्षयामः (।)**

**[1](नापि स्वयमयं वक्ता विभावयति। समाप्तफलः शब्दोन्त्यायां बुद्धौ भातीत्येवं यदि स्यात्। साधु स्यादित्येवं कल्याणकामतया मूढमतिः स्व[7]प्नायते।**

500b **नहि स्मर्यमाणयोरपि पदवाक्ययोः वर्णाः क्रमविशेषेण विभाव्यन्ते। अक्रमायां बुद्धौ पौर्वापर्याभावाद्। पदवाक्यभेदानां च तत्कृतो भेदो न स्यात्।**

**नापि[1] वर्णाक्रमं शब्दरूपं पश्याम इत्युक्तम्।**

---

**वर्णानां चाक्रमेणाप्रतिपत्तेः** क्रमेणैव प्रतिपत्तेः कारणात् **कुतोक्र[1]ममेकबुद्धिग्राह्य-**म्वाक्यन्**नाम**।

अथ स्याद् (।) **अन्त्यवर्णप्रतिपत्तेरुर्ध्वं** मानसेन ज्ञानेन निरवयवस्य वाक्य-स्यावधारणमस्त्येवेति चेदाह। **न चे**त्यादि। अन्त्यवर्णप्रतिपत्तेरूर्ध्व**मन्यम्**वर्ण-व्यतिरिक्त**मशकल**मखण्डं निर्विभागमित्यर्थः। **शब्दात्मानं न चोपलक्षयामः**।

**नापि स्वयमयम्वक्ता** यथोक्तं शब्दात्मान**म्विभावयति**। तथा हि तदापि वाक्यमवधारय[2]न् वर्णानुक्रममेव बाह्यरूपतयावधारयति (।) न तु वर्णव्य-तिरिक्तन्निर्विभागम्वाक्यमवधारयति। केवलमयं वक्ता यथा मयोक्तं **समाप्त-फलः शब्दोन्त्यायाम्बुद्धौ भातीत्येवं यदि स्यात्**। साधु मे स्यादिति या **कल्याण-काम**ताभिप्रेतार्थाशंसा। **तया मूढमतिः स्वप्नायते**। अस्वपन्नपि स्वप्ने व्यव-स्थितमिवात्मानमाचरति। अधिकरणाच्चे[1]ति वक्तव्यमिति स[3]प्तम्यन्तादपि। क्यज्। क्यज् विधानेप्येतद्वक्तव्यं स्मर्यत इत्येके। अन्ये त्वाहुः (।) स्वप्नवाने-वाभेदोपचरात्। अथवा मत्वर्थीयस्यार्श आदिदर्शनेन विधानात्। स्वप्नशब्दे-नोक्तः। तेन कर्त्तुरेवोपमानात् क्यज् प्रत्ययः। सुप्त इवाचरति स्वप्नायत इति यावत्। अनेनोपहसति।

स्मरणज्ञानेन तर्हि पदवाक्यमक्रमं गृह्यत इति चेदाह। **न ही**त्यादि। **न हि[4] स्मर्यमाणयोरपि पदवाक्ययोः** सम्बन्धिनो **वर्णाः** पदवाक्ययोर्भेदव्यवस्थापकाः **क्रमविशेष**मन्तरेणाक्रमायामेकस्यां बुद्धौ न हि **विभाव्यन्ते** किन्त्वनुभवक्रमवत् स्मरणमपि क्रमेणैवेति यावत्। यदि त्वक्रमायामन्त्यायां बुद्धौ पदवाक्ययोर्वर्णाः क्रमविशेषमन्तरेण विभाव्यन्ते। तदा तस्या**मक्रमायां बुद्धौ पौर्वापर्याभावाद्** वर्णा युगपदेव वि[5]भाव्यन्त इति कृत्वा तेषां **पदवाक्यभेदानां** पदभेदानां वाक्यभेदानां **च तत्कृतो** वर्णपौर्वापर्यप्रतिभासकृतो **भेदो** विशेषो **न स्यात्**। **वर्णानां क्रम-**

---

[1] Restored.

**सति वा तद् अनित्यं वा स्यात् नित्यं वा।**

**अनित्यं यत्नसम्भूतं पौरुषेयं कथन्न तत्।**

**अवश्यं हि अनित्यं कुतश्चिद्[2] हेतुमद् भवति। तद्वत्ताया आकस्मिकत्वे देशादिनियमे न स्यादित्युक्तम्।**

**तच्च प्रयत्नप्रेरितान्यविगुणकरणानां दृष्टं[3] अन्यथा वा न दृष्टम्। तथा कारणधर्मदर्शनात् पुरुषव्यापार एव कारणमतः पौरुषेयं स्यात्।**

**नित्योपलब्धिर्नित्यत्वेऽप्यनावरणसम्भवात् ॥२५४॥**

**अथ तच्छब्दरूपं नित्यं स्यादुपलभ्यस्वभावं च। स स्वभावस्तस्य कदाचिन्नापैतीति नित्यमुपलभ्येत। यदि न कुतश्चिदपि सामर्थ्यात् प्रच्यवेत्। एवं स हि नित्यः स्याद्। तस्य ज्ञानजननसामर्थ्यस्य जनना[5]त्मकत्वात्। अर्थान्तरत्वस्य प्रागेव निषिद्धत्वात्।**

---

विशेषप्रतिभासादेव पदवाक्यानाम्परस्परम्भेदस्तदभावे स न स्यादिति यावत्।

**नाप्यक्रम**मित्यादि। न विद्यते वर्णक्रमो यस्मिन् शब्दरूपे तदक्रमं **शब्दरूपम्वर्णेभ्योन्यन्न पश्याम इत्युक्तं**।[6] तस्यावर्णरूपसंस्पर्शिनः कस्यचिदप्यप्रतिपत्तेरित्युक्तत्वात्।

जातिस्फोटस्तु जात्यभावादेव निरस्तः (।) **सति वा** तस्मिन्नवर्णक्रमे शब्दरूपे। **तच्छब्दरूपमनित्यम्वा स्यात् नित्यम्वा।** वस्तुनो गत्यन्तराभावात्। **यद्यनित्यन्तदा** पुरुषप्रयत्न**सम्भूतं पौरुषेयं कथं न** तद्वाक्यं। पौरुषेयमेव स्यात्। **अवश्यं ह्यनित्य**मुत्पत्तिमदिति **कुतश्चित्** स्वहेतोर्भव[7]ति। तथा **ह्याकस्मिकत्वे** 168a हेतुरहितत्वे **सत्व**(?शब्द)स्याभ्युपगम्यमाने **देशादिनियमः**। आदिशब्दात् कालवस्तुनियमो न **स्यादित्युक्तं**।

**तच्च** वाक्यं पुरुष**प्रयत्नेन प्रेरितान्यविगुणानि करणानि येषां** पुंसान्तेषामभवद् **दृष्टं** पुनर**न्यथा** वक्तुकामताभावे करणवैगुण्ये वा नेति। **न दृष्ट**मिति पुरुषव्यापारान्वयव्यतिरेकलक्षणस्य **कारणधर्मस्य** वाक्यं प्रति **दर्शनात पु[1]रुषव्यापार एव** वाक्यस्य **कारणमतः** कारणात् **पौरुषेय**मपि वाक्यं। (२५३)

अथ नित्यन्तद् वाक्यं तदास्य **नित्यत्वे**भ्युपगम्यमाने **नित्योपलब्धि**र्वाक्यस्य **स्यात्**। किं कारणं (।) तस्य नित्यस्य सतो **नावरणसम्भवात्**। आवरणाभावात्।

**अथे**त्यादि व्याख्यानं। अथ **तच्छब्दरूप**म्वाक्यात्मकन्नित्यं **स्यादुपलभ्यस्वभावं च**। उपलभ्यः स्वभावोस्येति विग्रहः। (।)[2] **स** उपलभ्यः **स्वभावस्तस्य** वाक्यस्य **कदाचिन्नापैति** न हीयत **इति** कृत्वा **नित्यमुपलभ्येत**। यस्मादेवं

**नापि तस्योपलभ्यात्मनः किञ्चिदुपलम्भावरणं सम्भवति। तस्य सतोऽपि तदात्मानमखंडयतः सामर्थ्यतिरस्कारायोगात्। न हि तत्र अतिशयोत्पादनासमर्थः किञ्चित्करो नाम। अकिंचित्करश्चावरणं अन्यद्वेति विचारितप्रायमेतत्।** 501a **कुड्यादयो घटादीनां[7] कं अतिशयं उत्पादयन्ति कं वा खण्डयन्ति येनावरण-मिष्यते।**

**न ब्रूमः ते किञ्चिद् अतिशाययन्तीति। अपि तु न सर्वे घटक्षणाः[1] सर्वस्य इन्द्रियज्ञानहेतवः। परस्परसहितास्तु विषयेन्द्रियालोकाः, एकेन विशिष्टक्षणा-न्तरोत्पादात् विज्ञानहेतवः। अनुपकार्यस्य[2] अनपेक्षायोगात्। शक्तस्वभावस्य नित्यं जननं अजननं वाऽन्यस्य सर्वदा स्यादित्युक्तम्। ते च प्रतिघातिनाऽन्येना-**

---

हि स नित्यः **स्याद् न कुतश्चिदपि** ज्ञानजननलक्षणादपि **सामर्थ्यात् प्रच्यवेत्।** किं कारणम्(।)**तस्य ज्ञानजननसामर्थ्यस्य** तदात्मकत्वान्नित्यशब्दस्वभावात्। नापि शब्दाज्ज्ञानजननसामर्थ्यमर्थान्तरं यस्मादर्थान्तरत्वस्य **प्रागेव निषिद्धत्वात्।**[3] "भावानुपकारकत्वप्रसङ्गा"दित्यत्रान्तरे।

स्तिमितेन वायुनावरणान्नित्यं नोपलभ्यन्त इति चेदाह। **नापी**त्यादि। **तस्य** बाह्यस्यो**पलभ्यात्मनो** दृश्यस्य **किञ्चिदुपलम्भावरणं सम्भवति।** तत्सिद्धौ प्रमाणाभावात्। **सतोपि वा** विद्यमानस्यापि चावरणस्य **तदात्मानमखण्डतयो** नित्यशब्दात्मानमप्रच्यावयतः। **सामर्थ्यतिरस्कारा[4]योगात्।** ज्ञानजननशक्त्यभि-भवायोगात्। यस्मा**न्न हि तत्र** शब्दात्मन्य**तिशयम**नुत्पादयन्नावरणाभिमतः **किञ्चित्करो** नाम। **अकिंचित्करश्चा**र्थः कः कस्या**वरणं** ज्ञानविबन्धक**मन्यद्वेति** प्रकारान्तरेणोपघातकं नैवेति यावत्। निर्लोठितप्रायमेतत्। **विचारितप्रायमेतत्** प्राक्। अकिञ्चित्करस्यावरणत्वन्दृष्टमिति कथयन्नाह परः। **कु[5]ड्यादय** इत्या-दि। **कुड्यादयो घटादीनां कमतिशयमुत्पादयन्ति। कम्वा** सामर्थ्यातिशयं **खण्ड-यन्ति येनावरणमिष्यन्ते।** तस्माद् यथा तेऽतिशयमनुत्पादयन्तो घटादीनामा-वरणमिष्यन्ते। तथा नित्यस्यापि शब्दस्य किंचिदावरणम्भविष्यतीत्यभिप्रायः।

**न ब्रूम** इत्यादिना परिहरति। **ते** कुड्यादयः **कञ्चिद्** घटादिकम**तिशाय-**यन्ति वि[6]शिष्टं स्वभावं कुर्वन्तीति न ब्रूमः। कथन्तर्ह्यावरणमुच्यन्त इत्याह। **अपि तु न सर्व** इत्यादि। न सर्वघटक्षणा**स्सर्वस्य** पुरुषस्ये**न्द्रियज्ञानहेतवः** (।) किन्तर्हि (।) **परस्परसहितास्तु विषयेन्द्रियालोकाः** । परस्परतो **विशिष्ट-क्षणान्तरोत्पादात्** कारणाद् **विज्ञानहेतवः।** किं कारणम् (।) **अनुपकार्यस्य** 168b परैरनाधेयातिशयस्य परम्प्रत्य**नपेक्षा[7]योगात।** परैश्चानाधेयातिशयः शक्तस्वभावो

ऽव्यवहिताऽन्योन्यस्योपकारिणः[3]। **अव्यवधानदेशयोग्यतासहकारित्वात् तेषां अन्योन्यातिशयोत्पत्तेः। व्यवधाने सति हेतोरभावात् समर्थक्षणानन्तरानुत्पत्तेः वि[4]ज्ञानानुत्पत्तिः। तस्मात् पूर्वोत्पन्नस्य समर्थस्य निरोधात्। सति च कुड्येऽन्यस्योत्पित्सोः कारणाभावेनानुत्पत्तेः कार्यकारणज्ञानानुत्पत्तिरिति कुड्यादय आवरणं[5] ज्ञेयाः। न पुनः प्राक् प्रतिबन्धात्।**

**अथवा भावानां क्षणिकानामन्योन्योपकारोऽचिन्त्यत्वाद् हेतुप्रत्यय[6]सामर्थ्यस्यासर्वविदा।**

**तेन यदिन्द्रियविषययोर्मध्ये स्थितमावरणं विज्ञानोत्पत्तिवैगुण्यतारतम्येन तद् अतिशाययेदपि[7]।** 501b

---

वा स्यादशक्तस्वभावो वा। तत्र **शक्तस्वभावस्य नित्यं कार्यजननं** स्यादजननमन्यस्येत्यशक्तस्वभावस्य **स्यादित्युक्तं प्राक्। ते च** विषयेन्द्रियादयः। तेन **प्रतिघातिना** कुड्यादिनाऽव्यवहिता यदा भवन्ति तदान्योन्यस्योपकारिणः (।) किं कारणम् (।) **अव्यवधाने**त्यादि। न विद्यते व्यवधानं यस्य देशस्य[1] **सोव्यवधानदेशस्तस्य योग्यता** सामर्थ्यन्तत्**सहकारित्वात् तेषां** विषयादीनामन्योन्यातिशयोत्पत्तेः। तेषां पुनरालोकादीनां कुड्यादिकृते **व्यवधाने सति**। अव्यवधानदेशयोग्यतालक्षणस्य **हेतोरभावात् समर्थक्षणान्तरानुत्पत्तेः** कारणाद् घटादि**ज्ञानानुत्पत्तिः**। यत एवं क्षणिकेषु न सर्वकालमेकस्वरूपानुवृत्तिस्**तस्मात् प[2]र्वोत्पन्नस्य समर्थस्ये**न्द्रियादिक्षणस्य स्वरसत एव **निरोधात्। सति च** व्यवधायके **कुड्येन्यस्योत्पित्सोः** समर्थस्य क्षणस्य यथोक्त**कारणाभावेनानुत्पत्ते**र्ज्ञानकारणवैकल्यमतः कारणवैकल्यात्। घटादिषु कुड्यादिव्यवहितेषु **ज्ञानानुत्पत्तिरिति** कृत्वा **कुड्यादय** आवरणमुच्यते। **न पुनः प्राग्** विज्ञानजननयोग्यस्य घटा[3]देः **प्रतिबन्धात्**। किङ्कारणम्(।) तस्य घटादेर्योग्यस्वभावे स्थितस्य कुड्यादिसन्निधानेपि स्वभावादप्रच्युतेः। यस्समर्थः स समर्थ एव। न तस्यान्यथात्वं कर्त्तुं शक्यते। तदेवं क्षणिकेषु पदार्थेषु यथोक्तविधिनातिशयमकुर्वदप्यावरणमुच्यते।

अधुनातिशयकरणेनैवावरणमित्याह। **अथवे**त्यादि। सम्भवत्यपि **भावानां[4]** घटादीनां **क्षणिकानामन्योन्योपकारः** कुड्यादिकृतोप्युकारः सहकारिकृते उपकारे विवादाभावात्। न त्वावरणमिन्द्रियविषयाभ्यां दूरवर्ति। तत् कथमिन्द्रियविषयावुपकरोतीत्याह। **अचिन्त्यत्वा**दित्यादि। नैवं चिन्तयितुं शक्यं दूरदेशवर्त्यावरणं कथं विषयस्योपकारकं। दूरवर्त्तिनाप्ययस्कान्तेनायसः समाकर्षणात्।[5] **हेतु**रुपादानकारणं। **प्रत्ययः** सहकारिकारणन्तयोः **सामर्थ्यस्याचिन्त्यत्वादसर्वविदा**ऽसर्वज्ञेन।

**आवरणभेदेन शब्दादौ श्रुतिमान्द्यपाटवदर्शनात्। अन्यथाऽकिञ्चित्करस्य सन्निधानस्याप्यसन्निधानतुल्यत्वात्। तस्येदमित्यु[1]पसंहारो विकल्पनिर्मित एव स्यान्न वस्त्वाश्रयः।**

**न च समारोपानुविधायिन्योऽर्थक्रियाः, न हि माणवको दहनोपचारात् पाक आधीयते[2]। तस्मात् सत्यामपि कल्पनायामतत्परावृत्तयो भावा यथास्वभावस्थिता एव स्युः।**

---

यत्र एवन्तेन कारणेन **यदिन्द्रियविषययोर्मध्ये स्थितमावरणं। तत्ताविन्द्रियविषयावतिशाययेदपि।** केन प्रकारेण (।) **विज्ञानोत्पत्तिवैगुण्यतारतम्येन।** अपि-शब्दः सम्भावनायां सम्भाव्यतेयमर्थो न ह्यत्र किञ्चिद् बाधकमस्तीति।[6]

ननु सन्निहितेनावरणेन द्वितीयादिक्षणे तद् द्रव्यं ज्ञानजननासमर्थञ्जन्यते (।) न तु सम्पर्क्कक्षण एवानुपकारात्। ततश्च प्रथमे क्षणे तद् द्रव्यमावरणसन्निधानेपि दृश्यं स्यात्। ज्ञानजननसामर्थ्यस्याप्रतिबन्धात्।

नैष दोषः(।)यो ह्यावरणक्षणस्य जनको दृष्टः स आव्रियमाणस्यापि क्षण-
169a स्यासमर्थस्यैव जनको दृष्टो यथा द्विती[7]यादिषु क्षणेषु (।) तेनादावप्यावरणक्षणजनक आव्रियमाणक्षणमसमर्थं जनयेद् (।) अत एवोच्यते (।) अचिन्त्यत्वाद्धेतुप्रत्ययसामर्थ्यस्येति। तेन कुतः प्रथमक्षणे द्रव्यस्यावरणसन्निधाने दर्शनं स्यात्। तारतम्यग्रहणे चायमर्थं उपदर्शितः(।)वैगुण्यमादावर्थस्यावरणकारणेत्रापि कृतं। द्वितीयादिक्षणेषु तदावरणमतिशयमाध[1]त्त इति।

स्यादेतद् (।) आवरणस्य वैगुण्याधाने सामर्थ्यमन्वयव्यतिरेकाभ्यामनु गन्तव्यं (।) न चान्वयव्यतिरेकौ विद्येते इत्याह। **आवरण**भेदेनेत्यादि। कर्प्पटपटकुड्यादि व्यवधानभेदेन **शब्दादौ** शब्दगन्धस्पर्शेषु। श्रुतिग्रहणमुपलक्षणार्थं। तेन श्रवणदर्शनादीनां **मान्द्यतत्पाटवयोर्दर्शनादा**वावरणसामर्थ्यमनुगम्यते[2]। **अन्यथा** यद्यावरणेन विशेषो नाधीयते। तदा तस्यावरणस्या**किंचित्करस्य** यतसन्निधानन्तस्य **सन्निधानस्याप्यसन्निधानतुल्यत्वात्**। **तस्य** शब्दस्ये**दमा**वरण**मित्युपसंहारः** सम्बन्धो **विकल्पनिर्मित एव स्यान्न वस्त्वाश्रयः।**

विकल्पारोपितार्थक्रियाश्रयो भविष्यतीति चेदाह। **न चे**त्यादि। **न च समारोपानुविधायिन्यो** न विक[3]ल्पसमारोपितार्थाश्रया **अर्थक्रिया**स्तासाम्वस्त्वाश्रयत्वात्। यस्मा**न्न हि माणवको दहनोपचारा**दग्निर्माणवक इत्युपचारात् **पाके** साध्ये **आधीयते** नियुज्यते। यत एवन्त**स्मात् सत्यामपि कल्पनायामतत्परावृत्तयो भावाः**। तया कल्पनया परावृत्तिर्येषान्ते तथा। तदभावादतत्परा वृत्तयः किन्तु **यथास्वभाववृत्तय एव**[4] **स्युः**। यथास्वभावं वृत्तिर्येषामिति विग्रहः।

तत् सत्यप्यावरणे ज्ञापयेयुरिन्द्रियादयः। न[3] चैवम्। तस्मात् तेनाधेयविशेषास्तथा ज्ञायेरन्।

स्यादेतत्। एवं नित्यानां शब्दानां क्वचित् सत्त्वेऽपि न खल्वेवं नित्यानां शब्दानां कस्मिंश्चिद् सति अतिशयहानिः।

• तद्, यदि तेषां ज्ञानजननः स्वभावः। सर्वस्य[4] सर्वदा स्वविषयाणि ज्ञानानि सकृद् जनयेयुः, न वा कदाचित् किञ्चिदपि जनयेयुरित्येकान्त एषः।

**अश्रुतिर्विकलत्वाच्च कस्यचित् सहकारिणः[5]।**

स्यादेतत्। नावरणेन नित्यानां शब्दानामश्रुतिः। अपि तु किञ्चिद् एषां प्रतिपत्तौ सहकारिप्रतिनियतम्। तत् कदाचिद कस्यचिद् भवतीति तत्कृतं तेषां[6] कदाचित् क्वचित् श्रवणमिति चेत्।

**काममन्य(प्रतीक्षाऽस्तु) नियमस्तु विरुद्धयते ॥२५५॥**

न वै वयं कारणानां सहकारीणि प्रतिक्षिपामः। किन्तु अपेक्षन्त एव कार-

---

तदिति तस्मात्। यद्यावरणेन न विशेष आधीयते तदा सत्यप्यावरणे ज्ञापयेयुर्ज्ञानं जनयेयुरेवेन्द्रियादयः। न चैवं (।) तस्मात् तेनावरणेनाधेयविशेषा जन्मविशेषा इन्द्रियादय इति गम्यन्ते।

न खल्वेवन्नित्यानां शब्दानां कस्मिंश्चिदावरणविशेषे सत्यतिशयहानिरुत्प[5]त्तिर्वातिशयस्य।

तदिति तस्मात्। यदि तेषां नित्यानां शब्दानां ज्ञानजननः स्वभावः। सर्वस्य पुरुषस्य सर्वदा सर्वाणि स्वविषयाणि ज्ञानानि सकृज्जनयेयुः। नो चेद् विज्ञानजननस्वभावस्तदा न कदाचित् कस्य(चि)त्पुरुषस्य किञ्चिद् विज्ञानं जनयेयुरित्येकान्त एषः। कस्यचित् सहकारिणो विकलत्वान्नित्यस्यापि शब्दस्य[6] सर्वकालमश्रुतिरिति चेत्।

स्यादेतदित्यादिना व्याचष्टे। अपि तु किंचिदेषां नित्यानां शब्दानां प्रतिपत्तौ प्रतिपत्तिनिमित्तं सहकारि प्रतिनियतं। कस्यचित् किञ्चिदेव वस्तु स्थित्या नियतमस्ति। तत्सहकारि। कदाचित्काले कस्यचिच्छब्दस्य भवतीति यत्कृतं सहकारिकृतमेषां शब्दानां कदाचित् क्वचित् प्रदेशे श्रवणमिति। (२५४)

काम[7]मित्यादि सि द्धा न्त वा दी। काममेवमित्यर्थः। अन्यस्य सहकारिणः प्रतीक्षा प्रतीक्षणमस्तु न निवार्यते। केवलं नियमस्तु विरुध्यते। पूर्वस्वभाव एव शब्दः। स्थित इत्ययं नियमो न स्यादुपकारकस्यापेक्षणीयत्वात्। 169b

न वै वमयमित्यादिनैतदेव व्याचष्टे। न वै कारणानां सहकारीणि प्रतिक्षि-

502a **णानि तदवस्थोपकारिणं[7] सहकारिणम्। ततो लभ्यस्य कार्ये उपयोगात्। संकुला प्रतिपत्तिः स्यात्। वक्ष्यते चात्र प्रतिषेधः।**

**तथा शब्दोऽपि यदि किञ्चिद् अपेक्ष्य कार्यं कुर्यात्, पूर्वस्वभावनियत इत्येतन्न स्यात्। तस्य अपेक्षाच्च सहकारिणः स्वभावान्तरस्य प्रतिलम्भात्। अतिशय-प्रतिलम्भाभावेऽपेक्षायोगाद् इत्युक्तं प्राक्।**

**अथार्थान्तरभूतमुपकारं लभते, तस्येति सम्बन्धाद्यभावोऽप्युक्तः। तस्य चाज्ञेयत्वं उपकाराज् ज्ञानोत्पत्तेः।**

**तस्माद् एष शब्दो नेन्द्रियं न सन्निकर्षं नात्मानं अन्यविज्ञानोत्पत्तिसमाश्रयं किंचित् स्वज्ञानजननेऽपेक्षते।**

**अपि च।**

**सर्वत्रानुपलम्भः स्यात् तेषामव्यापिता यदि।**

**तेषां शब्दानां व्यापिताऽव्यापिता वा स्यात्। यद्यव्यापिता तेषां तदा सर्वत्रानुपलम्भः स्यात्। कथं एकदेशवर्त्तिनं तच्छून्यदेशस्थित उपलभेत।**

---

पामः। किन्त्वपेक्षन्त एव **कारणानि सहकारिणं किं** भूतं तद[1]**वस्थोपकारिणं**। यथाभिमतकार्यजननस्वभावावस्थोपकारिणं (।) किं कारणं (।) ततः सहकारिणः सकाशाल्लभ्यस्यातिशयस्य **कार्ये** जन्ये उपयोगाद् व्यापारात्। **तथा शब्दोपि** वैदिको **यदि किञ्चित्** सहकारिणमपेक्ष्य **कार्य**मात्मविषयं ज्ञानं **कुर्यात्**। करोतु कः प्रतिषेद्धा (।) केवलं **पूर्वस्वभावनियत इति** पूर्वस्मिन्नेव स्वभावे स्थित **इत्येतन्न स्यात्**। किं कारणं (।) तस्य पूर्व[2]स्वभावस्य प्रच्युतेः। **अपेक्षाच्च सहकारिणस्**सकाशात् **स्वभावान्तरस्या**पूर्वकस्य **प्रतिलम्भात्**। **अतिशयप्रतिलम्भाभावेऽपेक्षायोगात्**। यस्मान्न ह्यनुपर्यपेक्षत **इति**। **उक्त-मेतत्प्राक्**।

**अथ** सहकारिणः सकाशाच्छ**ब्दोर्थान्तरभूतमुपकारं लभते**। तदोपकारस्य चार्थान्तरत्वे। **तस्यायमुपकार इति सम्बन्धा[द्य]भावोप्युक्तः**। आदिशब्दाद् यदि सम्बन्ध[3]सिद्धयर्थं सहकारिकृत उपकारे शब्दकृत उपकारः कल्प्यते तदा तत्राप्य-परस्तत्राप्यपर इत्यनवस्थादोषादयोप्युक्ताः। **तस्य च** शब्दस्या**ज्ञेयत्वं** प्रसक्तं। किं कारणं (।) **सहकारिकृतादेवोपकाराद**र्थान्तरभूता**ज्ज्ञानोत्पत्तेः**।

यत एवन्त**स्मात्**। **एष शब्दो नेन्द्रियं** श्रोत्राख्यं (।) **नेन्द्रियार्थयोस्सन्निकर्षं**। **नात्मानं**। एतच्च परप्रसिद्धयोक्तं। **अन्यच्चेति** प्रयत्नादि[4]कं। किम्भूतम् (।)

**अप्राप्तग्रहणपक्षेऽयमदोष इति चेत् न। तत्रापि योग्यदेशस्थितिविशेषापेक्षणाद् अयस्कान्तादिवत्। अन्यथा स्पष्टास्पष्टश्रुतिभेदो न स्यात्। सति चोपलम्भप्रत्यये सर्वदेशे तुल्यमुपलभ्येरन्। तस्मात् नाव्यापिनः।**

---

**यिज्ञानोत्पत्तिसमाश्रयम्**विज्ञानोत्पत्तिसहकारिणं **स्वज्ञानजननेऽपेक्षते**। किं कारणं (।) सर्वस्य तत्र नित्ये शब्देनुपयोगात्।

**अपि** चेत्यादि (।) **यद्यव्यापिता** तदा **सर्वत्र** देशे **तेषां शब्दानामनुपलम्भः स्यात्**। **तथा हि कथमेकदेशवर्त्तिनं** शब्दं **तच्छून्यदेशस्थितः** पुरुष **उपलभेत**। **अप्राप्तग्रहणपक्षेऽयमदोष इति चेत्**। अप्राप्त एव श्रोत्रदे[5]शं शब्दः श्रोत्रेन्द्रियेण गृह्यते ततः शब्दशून्यदेशावस्थितोपि शब्दं गृह्णीयादतस्सर्वत्रानुपलम्भदोषो न भवतीति।

**नैतदेवं**। किं कारणं (।) **तत्राप्यप्राप्त**ग्रहणपक्षेपि न व्यवहितस्य ग्रहणं सम्भवति। किं कारणं (।) तस्य शब्दस्य **योग्यदे**शे यावत् **स्थिति**स्तस्यास्तारतम्यस्या**पेक्षणा**दिन्द्रियस्य। किमिव (।) **अयस्कान्तादिवत्**। यथायस्कान्तस्याप्राप्ताकर्षकत्वेपि नायो[6]ग्यदेशावस्थितलोहाकर्षणन्तद्वत्। आदिशब्दाद् आशीविषादिर्दीपाद्युपघातं कुर्वन् गृह्यते। **अन्यथेति** यदि शब्दस्य योग्यदेशावस्थानन्तद्ग्राहकमिन्द्रियं नोपेक्षत। तदा योग्यदेशावस्थानतारतम्यभेदेन **स्पष्टास्पष्ट**प्रतीति**भेदो न स्यात्**। भवति च (।) तस्मात् योग्यदेशापेक्षत्वं। योग्यदेशावस्थितस्याप्राप्तस्य शब्दस्य ग्रहणेपि स्पष्टास्पष्टप्रति[7]भासभेदो न स्यादित्याह। **सति चोपलम्भप्रत्यये** ताल्वादिव्यापारलक्षणे **सर्वदेशे** समीपे दूरे च शब्दास्**तुल्यमुपलभ्येरन्**। न चैवं (।) **तस्मात् नाव्यापिनः**। न तु बौद्धै रिन्द्रियदेशमप्राप्तस्यैव शब्दस्येन्द्रियेण ग्रहणमिष्यते कथन्तस्य स्पष्टास्पष्टश्रुतिभेदः। तदुक्तं। 170a

> "येषामप्राप्त एवायं शब्दः श्रोत्रेण गृह्यते।[1]
> तेषामप्राप्तितुल्यत्वं दूरव्यवहितादिषु॥
> तत्र दूरसमीपस्थग्रहणाग्रहणे समे (।)
> स्यातान्न च क्रमो नापि तीव्रमन्दादिसम्भव "इति।[1]

एवम्मन्यते। यस्य स्पष्टास्पष्टप्रतिभासानि सर्वाण्येव विज्ञानान्यभ्रान्तानि तस्यायन्दोषो न बौद्ध स्यास्पष्टप्रतिभासस्य ज्ञानस्य भ्रान्तत्वाभ्युपगमात्। अपरापरदेशोत्पत्त्या चागच्छतः शब्दस्य ग्रहणात् क्रमो गृह्यते कर्णदे[2]शे च तीव्रस्य

---

[1] Kumārila.

**सर्वेषामुपलम्भः स्याद् युगपद् व्यापिता यदि ॥२५६॥**

**सर्वत्र व्यापिता यदि युगपदुपलम्भः स्यात्, [न हि] शब्दः क्वचित्[7] नास्ति** 502b **इति सर्वे सर्वदेशावस्थितैश्च युगपदुपलभ्येरन्, योग्येन्द्रियत्वात्, विषयसन्निहि-तत्वादनुपलम्भकत्वाच्च।**

**संस्कृतस्योपलम्भे च कः संस्कर्त्ता विकारिणः।**

---

शब्दस्य मन्दस्य चोत्पत्तेस्तीव्रमन्दादिसम्भव इति न काचित् क्षतिः।

स्यादेतद् (।) यथा दूरे रूपं रजोनीहारादिसंसृष्टं गृह्यते समीपे तु तदभा-वात् स्पष्टं। तथा शब्दोपि (।)

दूरासन्नादिभेदेन स्पष्टास्पष्टः प्रतीयत इति।

तदयुक्तं। यतो रूप(स्य) रजोनीहारादेस्संसृष्टताग्रहणं यदि तावत्तयोः पृथक् पृथग् ग्रहणन्तदा दूरासन्नवर्त्तिनोः[3] पुरुषयोस्तुल्यो रूपप्रतिभासः स्याद् यथावस्थितेन स्वरूपेण ग्रहणात्। अथैकत्वेन तयोर्ग्रहणं संसृष्टताग्रहणं कथमस्पष्ट-प्रतिभासं ज्ञानं भ्रान्तन्न स्यात्। भिन्नानामेकत्वे ग्रहणात् कथं चैक रूपस्यानेकाकारः प्रतिभासः। तदुक्तं।

"जातो नामाश्रयोन्यान्यश्चेतसां तस्य वस्तुन (ः।)
एकस्यैव कुतो रूपम्भिन्नाकारावभासि तदि"ति।[1]
ननु देशकालाव्यापि[4]नः शब्दाः।
"यस्माच्छब्दस्य नित्यत्वं श्रोत्रजप्रत्यभिज्ञया।
विभुत्वं च स्थितन्तस्य कोप्यवस्येद् विपर्ययं॥
देशभेदेन भिन्नत्वमित्येतच्चानुमानिकं
प्रत्यक्षस्तु स एवेति प्रत्ययस्तस्य बाधकः।
पर्यायेण यथा लोके भिन्नान्देशान् व्रजन्नपि।
देवदत्तो न भिद्येत तथा शब्दो न भिद्यते।
तस्माद्या सर्वकालेषु सर्वदेशेषु चैकता।
प्रत्यक्षप्रत्यभिज्ञानप्रसिद्धा सास्य बाधि[5]का।"[2]

तस्माद् व्यापिनः शब्दा इति।

अत्राप्याह। सर्वेषां पुंसां **युगपत्सर्वशब्दोपलम्भः** स्यात्, तेषां शब्दानां **व्या-पिता यदि। न हि** कश्चिच्छ**ब्दः क्वचिद्**देशे **नास्ति** किन्तु सर्वः शब्दः सर्वत्रास्ति

---

[1] Kumārila. [2] Ibid.

**स्यादेतत् । सन्नपि न सर्वः शब्द उपलभ्यते, संस्कृतस्य संस्कृतेनैवोपलम्भा दिति तत्र न संस्कृतस्योपलम्भः अनाधेयविकारस्य संस्कारायोगात् ।**

**इन्द्रियस्य तु संस्कारः शृणुयात् निखिलं च तत् ॥२५७॥**

**तत्र यदि संस्कृतेनैवोपलम्भ इति असंस्कृतेन्द्रियो नोपलभते । यस्येन्द्रिय-संस्कारः स सर्वान् शब्दान् युगपद् शृणुयादिति प्रसंगोऽनिवृत्त एव ।**

**संस्कारभेदभिन्नत्वादेकार्थनियमो यदि ।**
**अनेकशब्दसंघाते श्रुतिः कलकले कथम् ॥२५८॥**

**अथापि शब्दानां संस्काराः प्रतिनियताः, तत्र संस्कारप्रतिनियमे केनचित्**

---

व्यापित्वात्। इति हेतोः। **सर्व**शब्दा **युगपदुपलभ्येरन् सर्वदेशावस्थितैश्च** पुरु-षैरुपलभ्येरन्। किं कारणं (।) **योग्येन्द्रियत्वात्** पुंसां। **विषयस्य** शब्दलक्षणस्य **नित्यस्य**[6] सतो व्यापित्वेन सदा सर्वत्र **सन्निहितत्वात्**। नित्यत्वादेव चानाधेया-तिशयस्य प्रबन्धाच्च।

**संस्कृतस्ये**त्यादि। कर्मणि कर्त्तरि वा षष्ठी। तेनायमर्थः (।) प्रयत्ना-भिहतवायुना संस्कृतस्य शब्दस्य संस्कृतेनैवेन्द्रियेणो**पलम्भे** चाभ्युपगम्यमाने। न यथोक्तदोष इति।

उत्तरमाह। **कः संस्कर्त्ता विकारिणः** शब्दस्य। नैव कश्चित्।

स्यादेतदित्यादिना व्याचष्टे। स[7]र्वकालं **सन्नपि न सर्वः शब्द उपलभ्यते** 170b सर्वेण पुरुषेण। किं कारणं (।) **संस्कृतस्य** शब्दस्य प्रयत्नाभिहतेन वायुना **संस्कृते-नैवे**न्द्रिये**णोपलम्भादिति**। **तत्र** तयोर्मध्ये **न** तावत् **संस्कृतस्य** शब्दस्यो**पलम्भः**। किं कारणम् (।) **अनाधेयविकारस्य** शब्दस्य **संस्कारयोगात्**। **इन्द्रियस्य** त्वनि-त्यत्वादाधेयविशेषस्य प्रयत्नाभिहतेन वायुना **स्यात् संस्कारः**। यदाह (।)

प्रयत्नाभि[1]हतो वायुः कोष्ठ्यो यातीत्यसंशयं (श्लो० शब्द० १२२)
कर्णव्योमनि संप्राप्तः शक्तिं श्रोत्रे नियच्छति ( ,, १२४)

शब्दरूपप्रतिपत्त्यन्यथानुपत्त्या चेन्द्रियस्य शक्तिः कल्प्यते। शक्ति**रूपश्च** संस्कार इष्यत इति।

तत्राह। **तदपि** संस्कृतमिन्द्रियं **शृणुयान्निखिलं** निरवशेषं शब्दं।

**तत्रे**त्यादिना व्याचष्टे। **यदि संस्कृतेनैवे**न्द्रियेण शब्द**स्योपलम्भ इति** कृत्वा **ऽसंस्कृतेन्द्रियः** पुरुषो **नोपलभते**। तदा **यस्येन्द्रियसंस्का**रः[2] कृतः **स सर्वशब्दान् युगपच्छृणुयादिति** पूर्वः **प्रसङ्गोऽनिवृत्त एव**।

अथ स्याद् (।) यथा शब्दप्रतिपत्त्यन्यथानुपपत्त्यैन्द्रियस्य संस्कारकल्पना

**संस्कृतमिन्द्रियं कस्यचिदेव ग्राहकमिति न युगपत् सर्वश्रुतिरिति। संस्कारविशेषात् श्रुतिनियम इन्द्रियाणां अभ्युपगम्यमाने अनेकशब्दसंघातस्य कलकलशब्दस्य श्रुतिर्न स्यात्। न ह्येकः शब्दः कलकलो नाम, भिन्नस्वभावानां युगपच्छ्रवणात्, स्वभावभेदाश्रयत्वाच्च भेदव्यवस्थितेः।**

लघुवृत्तेः **सकृच्छ्रुतिर्भ्रान्तिरिति चेत्, वंशादिस्वरधारागमकावयवानामपि**
503a **संहारात्[7]।**

---

(।) तथा शब्दविशेषप्रतिपत्त्यन्यथानुपपत्त्या संस्कारविशेषकल्पना। यदाह।

तथैव तद्विशेषोपि विशिष्टश्रवणाद् भवेदिति।

तस्मात् संस्कारभेदात् प्रतिविषयम्भिन्नत्वादिन्द्रियस्यैकार्थनियमः। एकस्यैव शब्दस्य ग्र[3]हणं यदि। (२५८)

एवं सत्यनेकशब्दसंघाते। विचित्रशब्दमूहात्मके कलकलशब्दे श्रुतिः कथं नैव स्यात्। दृष्टा च।

**अथापी**त्यादिना व्याचष्टे। इन्द्रियस्य ये **संस्कारास्ते शब्दानां प्रतिनियता**स्तत्रैतस्मिन् **संस्कारप्रतिनियमे केनचित् संस्कृतमिन्द्रियं कस्यचिदेव** शब्दस्य **ग्राहकमिति न युगपत् सर्वशब्दश्रुतिरिति**। एवं **संस्कारविशेषाच्छ्रुतिनियम इन्द्रियाणाम**[4]भ्युपगम्यमाने **अनेकशब्दसङ्घातस्य कलकलशब्दस्य श्रुतिर्न स्यात्**। यस्मान्न **ह्येकः शब्दः कलकलो नाम**। किं कारणम् (।) **भिन्नस्वभावानां** वेणुमृदङ्गकाव्यपाठगीतशब्दानां कलकले **युगपच्छ्रवणात्**। नापि भिन्नस्वभावग्रहणेप्यभेदो यतः **स्वभावभेदाश्रयत्वाच्च भेदव्यवस्थितेः**।

ननु यदानेकः शब्दः श्रूयते। तदानेकशब्दश्रवणान्यथानु[5]पपत्त्यापीन्द्रियस्यानेकः संस्कारः कल्प्यते ततोनेकशब्दश्रवणमविरुद्धमेव।

एवम्मन्यते। ये प्रयत्नाभिहतैर्वायुभिः संस्कारा आधीयन्ते। ते यदीन्द्रियादभिन्नास्तदा संस्कारवहुत्वं कुतः। इन्द्रियस्यैकत्वाद्(।)अथ भिन्नाः कथं तर्हीन्द्रियं संस्कृतं। तस्य च संस्कारा इति **सम्बन्धश्च न सिध्यति** ये च निष्पन्ने भवन्ति ते कथन्तत्स्वभावा विरुद्धधर्माध्यासात्। ते[6]न भिन्नाभिन्ना अपि संस्कारा न युज्यन्त इति यत्किञ्चिदेतत्। न कलकले युगपदनेकशब्दग्रहणं किन्तु क्रमेणैव तत्रैकैकः शब्दः श्रूयते। तानि च श्रवणज्ञानानि लघुवृत्तीनि। ततो **लघुवृत्तेः** कारणात् तेषु क्रमेण गृह्यमाणेष्वपि **सकृच्छ्रुतिर्भ्रान्तिरिति चेत्**। तदा
171a **वंशादिस्वरधारायां** ये **गमकाः** स्वरविशेषास्तेषां येऽ**वयवास्तेषामपि** लघुवृत्तित्वे[7]न **संहारादे**कीकरणात् **संकुला प्रतिपत्तिः स्यात्**। न त्वसंसृष्टगमकावयवानुक्रमवती

तस्माद् गतौ शक्तिप्रतिनियमादिन्द्रियस्यानेकात्मा कलकलो न श्रूयते[1]।

ध्वनयः केवलं तत्र श्रूयन्ते चेन्न वाचकाः।

न कलकले वर्णपदवाक्यानि श्रूयन्ते। ध्वनीनां केवलानां श्रवणात्। वाचके च प्रतिनियतशक्तीन्द्रियं न तु ध्वनिषु।

तत्र।

ध्वनिभ्यो भिन्नमस्तीति श्रद्धेयमविवक्षितम् ॥२५९॥

न वयं ध्वनिं शब्दं च वाचकं पृथग्रूपमुपलक्षयामः। एकदा वर्णानुक्रमश्रवण एकमेव शब्दा[3]त्मानं व्यवस्यामः। तत् कथं व्यवहारं व्यवसाय पूर्वकं परिच्छिन्दन्तः प्रवर्तयामः। तस्माद् ध्वनिविशेष एव वर्णाख्य इति।

अपि च।

स्थितेष्वन्ये[4]षु शब्देषु श्रूयते वाचकः कथम्।

न ध्वनिरतो भिन्नो रूपं सह पृथग् वा। न हि प्रत्यक्षेऽर्थे परोपदेशो गरीयान्।

---

स्यात्। वक्ष्यते चात्र प्रतिषेधस्तृतीये परिच्छेदे। "ह्रस्वद्वयोच्चारणे स्यादि" स्यादिना (३।४६३)।

यत एवन्तस्मादेकशब्दगतौ शक्तिप्रतिनियमादिन्द्रियस्यानेकात्मा। अनेकशब्दस्वभावः कलकलो न श्रूयते। श्रूयते च (।) तस्मान्नेन्द्रियसंस्कारोऽपि तु तात्वादिना शब्दकरणं। तेन याव[1]न्तः शब्दाः कृतास्तावन्त एव श्रूयन्त इति कलकलग्रहणं। ध्वनयः केवलन्तत्र श्रूयन्ते न वाचकाः शब्दा यदि।

नेत्यादिना व्याचष्टे। न कलकले वाचकानि वर्णपदवाक्यानि श्रूयन्ते। किङ्कारणं (।) ध्वनीनां केवलानामवाचकानान्तत्र श्रवणात्। (२५८)

एकगतिशक्तिप्रतिनियमे ध्वनीनामपि कथं युगपच्छ्रवणमिति चेदाह। वाचकेत्यादि। वाचके च शब्दे प्र[2]तिनियतशक्तीन्द्रियमस्माभिरुच्यते। न तु ध्वनिष्ववाचकेषु।

तत्रेत्यादिना प्रतिविधत्ते। ध्वनय एव हि विशिष्टा वर्णरूपा वाचकाः। तेभ्यो भिन्नमर्थान्तरवाचकं शब्दरूपमस्तीत्येतत्सत्ताग्राहकप्रमाणाभावाद् अतिबह्वियं श्रद्धेयं।' किं कारणं।

यतो न वयमवाचकं ध्वनिं शब्दं च वाचकं पृथग्रूपमिति ध्वनिभ्यो भिन्नस्वभावमुपलक्षयामः। किन्त्वेकदैक[3]स्मिन् वर्णानुक्रमश्रवणकाले एकमेव शब्दात्मानम्वर्णानुक्रमलक्षणं व्यवस्यामः। तत्कथं पुनर्ध्वनिव्यतिरिक्तं शब्दात्मानमध्यवस्यन्तो परिच्छिन्दन्तः। व्यवसायपूर्वकं निश्चयपूर्वकं ध्वनिभ्यो

**तद् अयं स्थितेष्वन्येषु व्याहर्तृषु[5] केवलमेव शब्दं शृण्वन् तदुपलम्भप्रत्ययानां सामर्थ्याभावं प्रत्येति तदन्यनिष्पादने। यदि समर्थाः स्युस्तदा तत्साधितं तैरुपलभ्येत।**

**तत्स्वभावा[6] एव प्रत्ययाः कलकले अर्थान्तरे[1] कथमारभेरन् ? न हि कारणाभेदे कार्यभेदो युक्तः। तस्याहेतुकत्वप्रसंगादित्युक्तं प्राक्।**

503b **न कलकले वाचको[7] न श्रूयते पदवाक्यविच्छेदानामुपलक्षणात्।**

---

**भिन्नं** शब्दरूपमनिबन्धनं कथम्प्रवर्त्तयामः। **तस्माद् ध्वनिविशेष** एवाकारादिरूपेण स्थितः **वर्णाख्यः** वर्णादिरित्याख्या यस्येति विग्रहः। आदि[4]ग्रहणात् पदवाक्यादिपरिग्रहः।

**अपि च** (।) यदि कलकले ध्वनयः श्रूयन्ते न **वाचका**। यदा तर्हि तत्र बहूनां व्याहर्त्तृणान्तूष्णीमवस्थानात्। **स्थितेष्वन्येषु शब्देष्वेकः** पुरुषो व्याहरति तस्यैकस्य **श्रवणे वाचकः कथं**।

**अथ** स्यात् (।) तदा ध्वनिरपि प्रतीयत इत्यत आह। **न ध्वनिरतो** वाचका-द् **भिन्नो रूपन्तेन** वाचकेन सह **पृथग्** वा श्रूयते। ध्वनिभ्यः श्रूय[5]त एवेति चेदाह। **न हि प्रत्यक्षेर्थे परोपदेशो गरीयान्**। येन स्वयम्विवेकेनाश्रृण्वन्नपि त्वद्वचनमात्राद् ध्वनेः श्रवणं व्यतिरिक्तस्य प्रतिपद्यते। **त**दिति तस्मादयं श्रोता **स्थितेष्वन्येषु व्यवहर्त्तृष्वेकस्यैव** व्याहरतः। **केवलमेवा**र्थान्तरध्वनिविविक्तमेव **शब्दं शृण्वंस्तदुपलम्भप्रत्ययानां** व्यवहर्त्तृगतानां करणसाङ्गुल्यादीनां शब्दोपलम्भ[6]प्रत्ययानां **सामर्थ्याभावं प्रत्येति**। कस्मिन् कर्त्तव्ये। **तदन्यनिष्पादने** श्रूयमाणाच्छब्दादन्यस्य ध्वनेर्निष्पादने। किं कारणं (।) **यदि** तदुपलम्भप्रत्ययास्तदन्यनिष्पादने **समर्थाः स्युस्तदा तत्** साधितन्तैः शब्दोपलम्भप्रत्ययैः साधितं ध्वनिरूप**मुपलभ्येत**। न चोपलभ्यते।

अथ स्यात् (।) कलकले ते ध्वन्यारम्भका इत्याह। **तत्स्वभावा** इत्यादि।

171b ध्वनिरहि[7]तशब्दजननस्वभावा **एव** पुनः शब्दोपलम्भ**प्रत्यया** व्याहरत्स्वपि **बहुषु कलकले** स्वकार्यं शब्दं मुक्त्वा **कार्यान्तरं** ध्वनिं **कथमारभेरन्**। नैवारभेरन्। यस्मा**न्न हि कारणाभेदे कार्यभेदो युक्तः**। तस्मिन्नेव कारणे कार्यभेदः शब्दध्वनिलक्षणो न युक्तः। किं कारणं (।) कारणभेदानपेक्षिणः कार्यभेदस्या**हेतुकत्वप्रसङ्गादित्युक्तं प्राक्**। तस्मात् कलकले वाचका एव श्रूय[1]न्ते **न ध्वनयः**।

ननु यदि कलकले वाचका एव सन्तीत्यभ्युपगम्यते। कथन्तर्हि दूरवर्त्तिनां ध्वनिमात्रश्रवणं समीपवर्त्तिनां वाचकानां ध्वनीनां श्रवणमिति।

---

[1] Don-gshon-du.

**कथं वा शक्तिनियमाद् भिन्नध्वनिगतिर्भवेत् ॥२६०॥**

**तानि प्रतिनियतशक्तीन्यपीन्द्रियाणि प्रतिशब्दनियतान् नाना रूपान्[1] न त्वेव शृण्वन्तीति शब्देष्वेषां निर्वेदाः। वाचकेभ्यो भेदेन कदाचित् श्रवणात्। न हि वाचके प्रतिनियतशक्तीन्यपीन्द्रियाणि[2] ध्वनिषु तद्भिन्ना इत्यत्र अल्पीयान् भागः। इयं हि गतिर्ध्वनिभ्यः समस्ताभ्यः। न हि ध्वनिभागं समेति वाक्यानवस्थानात्[3]। सिद्धमक्रमसत्त्वं शब्दरूपस्येति।**

---

सत्यं। य एव वाचकाः प्रयत्ननिष्पन्नास्त एव परस्परसंहर्षेण ध्वन्यारम्भकाः(।)तेन कलकले केषांचिद् ध्वनिमात्रस्य प्रतीतिरन्येषामुभयप्रतीतिरित्यदोषः। (२५६)

यदप्युक्तं समीपवर्तिनापि कलकले[2] ध्वनय एव केवलं श्रूयन्ते न वाचकाः शब्दा इति।

तदप्ययुक्तं। यस्मान्न **च कलकले वाचको न श्रूयते**। किन्तु श्रूयत एव। किं कारणं। **पदवाक्यविच्छेदानामुपलक्षणात्**। अपि च **कथं** चेन्द्रियस्यैकश**क्ति**प्रति**नियमाद् भिन्नध्वनिगतिर्भवेत्**। बहूनां ध्वनीनां ग्रहणम्भवेत्। नैव भवेत्।

**तानीत्यादिना** व्याचष्टे। **तानि प्रतिनियतशक्तीन्यपीन्द्रियाणि** युगप[3]न्ना**नारूपान्** ध्वनीन् शृण्वन्ति। कीदृशान् (।) **प्रतिशब्दनियतान्**। शब्दं शब्दं प्रति व्यञ्जकत्वेन नियतान्। **न त्वेव** शब्दान् युगपच्छृ**ण्वन्तीति** कः **शब्देष्वेषा**मिन्द्रियाणां **निर्वेदो** वैमुख्यं येन तान् न शृण्वन्ति। न च भावशक्तिरीदृशीति शक्यम्वक्तुं (।) **कदाचिद्** बहूनामपि **वाचकानां श्रवणात्** (२६०)

**यदुक्त**मित्यादि परः। यदुक्तम्बौद्धेन **वाचकेभ्यः** वर्णपदवाक्येभ्यो **भेदेन** ध्व[4]नयो न सिद्धा इति। कथन्न सिद्धाः (।) सिद्धा एव। किं कारणं। वचनादर्थप्रतीतेः। शब्दादुच्चरितादर्थस्य वाच्यस्य गतेः। **न चेयमर्थगतिर्ध्वनिभ्यः सम्भवति**। किं कारणं (।) **न हि ध्वनिभागाद**ल्पीयसो वर्णव्यञ्जकादर्थ**प्रतीतिः**। वर्णोप्येकस्तावत् प्रायेणानर्थकः (।) प्रागेव व्यञ्जकोल्पीयान् ध्वनिभागः। सहिता प्रतिपादका इति चेदाह। **न च सोन्यं स**[5]**मेति** (।) सोल्पीयान् ध्वनिभागः क्षणिकत्वादन्यमुत्तरकालभाविनं ध्वनिभागं समेति संश्लिष्यति। **त**दिति तस्मादियमर्थप्रतीतिः॰समस्तानि परिपूर्णानि पदवाक्यरूपाणि यस्मिन् वाचके तत्तथा। **तेन साध्या** ध्वनिषु न सम्भवति। कीदृशेषु। **असमस्ता** असंश्लिष्टा भागा उत्पन्नोत्पन्नध्वनिभागस्य क्षणिकत्वेन द्वितीयध्व**निभागानवस्थानाद्** येषान्ते[6]षु। **इति एवमर्थप्रतिपत्त्यन्यथानुपपत्त्या सिद्धमक्रमसत्त्वं**। अक्रमं सत्त्वं यस्य **शब्दरूपस्य** तत्तथा। निर्विभागमिति यावत्। **क्रमवद्** विभागश्च वाचकव्यतिरिक्तो ध्वनिः

**तन्न। क्रमवद् व्यतिरेकिणा क्रमस्य प्रागेव निषिद्धत्वात्। तथाऽतिप्रसंगात्। पर्वेण कर्मविभागे[4]नापरस्याप्रतिसन्धानात् एकांशाच्चाप्रतीतेः। तद्व्यतिरेकि-हस्तसंज्ञादिषु प्रतीतिहेतुः समस्तरूपकर्मात्माशब्दवदे[5]वाभ्युपगन्तव्यः स्यात्। यथास्वं करणप्रयोगाद् भिन्ना वर्णभागाः, कर्मभागा वा क्रमभाविनः। ते क्रमेण विकल्पविषयाद् यथासंकेतमेवा[6]र्थप्रतीतिं जनयन्तीति न्याय्यम्।**

---

(।) क्रमवन्तो भागा यस्येति विग्रहः।

**तन्ने**त्यादिना प्रतिषेधति। तदेतदनन्तरोक्तं न सम्भवति। कस्मात्। **क्रम-**

172a **वन्तो** ये वर्णास्तद्व्यतिरेकिणा **क्रमस्य** शब्दस्य। "न हि वयन्देवदत्ता[7]दि पदवाक्येषु दकारादिप्रतिभासं मुक्त्वा परं प्रतिभासमुपलक्षयाम" इत्यादिना **प्रागेव निषिद्धत्वात्।**

यदि चासमस्तभागेषु ध्वनिष्वर्थप्रतीतेरसम्भवादक्रमसत्त्वं शब्दरूपं कल्प्यते। तदातिप्रसङ्गश्चैवं कल्प्यमाने। **तथा** हि हस्तादीनां यथा संकेतगमनागमनादि-सूचकानि यानि कर्माणि तेषां ये भागास्तेषां क्षणिकत्वात् **पूर्वेण कर्मभागेनापर-स्योत्तर**[1]**स्य कर्मभागस्याप्रतिसन्धानाद**घटनात्। **एकांशाच्चाप्रतीतेः**। एकस्मा-च्चाल्पीयसः कर्मभागाद् यथा संकेतस्य गमनागमनादिलक्षणस्यार्थस्याप्रतिपत्तेः। **तद्व्यतिरेकी**। कर्मभागेभ्योन्यः। **यथासंकेतं हस्तसंज्ञादयः**। आदिशब्दादर्थप्रतीतौ शिरःकम्पादयो गृह्यन्ते। तेष्वर्थप्रतीतिहेतुः **समस्तरूपकर्मात्माभ्युपगन्तव्यः स्यात्। शब्द**[2]**वदेव**। ध्वनिव्यतिरिक्तशब्दकल्पनावत्।

यत्पुनरुक्तम्म ण्ड ने न। "यदा त्रैविद्यवृद्धा हस्तसंज्ञादिविषयानुत्क्षेपणत्वादि-शब्दनिर्देश्यान् सामान्यविशेषानभ्युपगच्छन्ति तदा कोयं प्रसङ्गः। एकः कर्मात्मा-भ्युपगन्तव्य"[1] इति।

तदयुक्तं। यतो यद्येकमुत्क्षेपणरूपङ्कर्म सिद्धम्भवेत्। तथा परापरमपि-यदि सिद्धं स्यात् तदा तेषु बहुषूत्क्षेप[3]णेषु प्रत्येकमुत्क्षेपणत्वसामान्यम्वर्त्तेत। तदेव तु न सिद्धं पूर्वापरकर्मभागानामनन्वयात्। न च विशेषाभावे सामान्यसद्-भावः। नापि कर्मभागेषु प्रत्येकमुत्क्षेपणादिरूपतया प्रतीतिः (।) किन्तर्हि (।) तद्भागरूपतया (।) तत्कथन्तेषु भागेषूत्क्षेपणत्वसामान्यमभ्युपगम्येत (।) अभ्युपगमे वा एकस्मादपि कर्मभागाद् गमनादिलक्षणस्यार्थस्य[4] 'प्रतिपत्तिः स्या-दर्थाभिधायकस्य सामान्यस्य भावादिति यत्किञ्चिदेतत्। यथा च न कर्मभागेषु व्यतिरिक्तं कर्मात्मा तथा ध्वनिभागेष्वपि न व्यतिरिक्तः शब्दात्मा। कथन्तर्ह्यर्थ-

---

[1] Sphoṭasiddhi 33 (pp. 253–54)

**किं च ।**

**ध्वनयः संमता यैस्ते दोषैः कैरप्यवाचकाः ।**
**ध्वनिभिर्व्यज्यमानेस्मिन् वाचकेऽपि कथं न ते ॥२६१॥**

**क्रमो[7]त्पादिभिर्ध्वनिभागैर्व्यक्तः प्रकाशितो वाचको वक्ति । तमपि ते न** 504a

---

प्रतीतिरित्याह । **क्रमभाविन एवेत्यादि । यथास्वं** यस्य यत्करणन्तात्वादि । तस्य **प्रयोगो** व्यापारस्तस्माद् **भिन्ना वर्ण्णभागाः । कर्मभागा वा यथास्वं करण-प्रयोगात् ।** कर्म[5]हेतोः प्रयोगात् **क्रमभाविनो** भिन्ना इत्यत्रापि सम्बन्धनीयं । **ते यथोक्ता** वर्ण्णभागाः कर्मभागा वा **क्रमेण** विकल्पविषयादत्यनुभवज्ञानानुक्रमानु-सारिणां विकल्पानां क्रमेण विषयमुपगता **यथासंकेतमेवार्थप्रतीतिं जनयन्तीति न्याय्यं ।** युक्त्यपेतत्वात् ।

**किं चेति** दोषान्तरमप्याह । यैः कैरपि दोषैः पूर्वपूर्वस्य ध्वनिभागस्योत्तरो-[6]त्तरेण ध्वनिभागेनाप्रतिसन्धानादित्यादिकैः करणभूतैस्ते **ध्वनयो** वै या क र णा दीनामवाचकास्**सम्मताः** । दृष्टाः (।) तैः क्रमभाविभि**र्ध्वनिभिर्व्यज्यमानेस्मिन्**-ध्वनिव्यतिरिक्तेपि **वाचके कथन्न ते ।** ध्वनिभाविनो दोषा न सन्ति भवन्त्येव ।

ननु ध्वनयः प्रत्येकं समुदिता वा पूर्वोक्तेन न्यायेन नार्थस्य प्रतिपादकाः । वाचकस्य तु ते प्रत्येकमभि[7]व्यञ्जका इष्यन्ते । एकेन ध्वनिनाभिव्यक्तस्य वाच- 172b कस्यानवधृतत्वादन्यान्यैरभिव्यक्तस्य संस्काराधानतारतम्यप्रबोधेनावधारणमिति ध्वनिभिर्व्यज्यमाने वाचकेपि कुतस्ते दोषा इति । तदुक्तम्म ण्ड ने न ।

"नानेकावयवं वाक्यं पदं वा स्फोटवादिनां ।
एकत्वेपि ह्यभिन्नस्य क्रमशो दर्शिता गतिरि"ति ।

तदयुक्तम् (।) अभिव्यक्तिर्हि ज्ञानं (।) न च शब्दानुगमेन विना[1] ज्ञान-मिष्यते भवद्भिः । तेनाभिव्यक्तिरिति निश्चय एवोच्यते । न च प्रथमध्वन्य-नन्तरम्वाचकनिश्चयः । प्रतिभासत इति (।) तत्कथमस्याभिव्यक्तिः ।

तस्मात् स्थितमेतद् यथा ध्वनयः प्रत्येकं समस्ता वार्थप्रतिपादनेऽशक्तास्तथा वाचकाभिव्यक्ताविति ।

क्रमेत्यादि विवरणं (।) **क्रमोत्पादिभिर्ध्वनिभागैर्व्यक्तः प्रकाशितः** किला-क्रमः शब्दात्मा **वाचको**[2] **थंम्वक्ति ।** न सन्निधानमात्रेण (२६१)

**तमपि** ध्वनिव्यतिरिक्तं शब्दात्मानं **ते** ध्वनयो **न सकृत् प्रकाशयन्ति ।** किं कारणं (।) तेषां ध्वनिभागानां **क्रमभावात् । नाप्येक एव** ध्वनिभागः शब्दं व्य-

---

[1] Sphoṭasiddhi (by Maṇḍana) 29

सकृत् प्रकाशयन्ति, क्रमाभावात् । नाप्येक एव भागः । तदन्यस्य वैयर्थ्यप्रसंगात्, एक वर्णभागकाले च समस्तस्य अनुपलक्षणात् ।

तद्, अयं अप्रतिसंहतसकलोपालम्भ उपलम्भसाकल्यसाध्यमर्थं[2] ध्वनिवत् कथं साधयेत् । को हि उपलम्भसाध्येष्वर्थेषु सदसतोरत्यन्तानुपलम्भे विशेषः ? न च सन्निधिमात्रेण साधनम्[3]। व्यक्तिव्यपेक्षणात् । सदसतोः क्रमेण भवन्ती तुल्योपयोगेति ध्वनिभिरशक्यसाधनम् । तत्रापि तथा ।[4] तथा सत्यलमन्येन ।

तस्मान्न वर्णेष्वपौरुषेयता ।

## (घ) वर्णानुपूर्वि-चिन्ता

**वर्णानुपूर्वी वाक्यं चेन्न वर्णानामभेदतः ।**

---

**नक्ति** । निश्चाययति । किं कारणं (।) **तदन्यस्य** व्यञ्जकत्वेनाभिमतस्य ध्वनिभागस्य **वैयर्थ्यप्रसङ्गात्** । इतश्चैको ध्वनिभागो न समस्तस्य शब्दस्य व्यञ्जको यस्मादेकवर्ण[3]**भागकाले च समस्तस्य** वाचकरूपस्या**नुपलक्षणात्** ।

**तदिति** तस्मादयं शब्दात्मा। ध्वनिभागैः क्रमभाविभिः क्रमेण व्यज्यमानत्वात् । **अप्रतिसंहितो** न संघटितस्सकलोपलम्भो यस्य शब्दात्मनः स एवम्भूतः शब्दात्मा। **उपलम्भसाकल्यसाध्यमर्थं** स्वाभिधेयं प्रकाशनलक्षणं **कथं साधयेत्** (।) नैव साधयेत् । किमिव (।) **ध्वनिवत्** । यथा ध्वनि[4]भागास्त्वन्मतेन पूर्वापरेणाप्रतिसन्धानादर्थन्न प्रकाशयेयुस्तद्वत् ।

**को हीत्यादि**नैतदेव समर्थयते। **उपलम्भसाध्येष्वर्थेषु को हि सदसतोरत्यन्तानुपलम्भे** सति **विशेषो** नैव कश्चित् । यथा हि क्षणिका ध्वनिभागा उत्तरोत्तरभागावस्थायामसत्त्वादसमस्तोपलम्भनान्न समर्थास्तथैवाक्रमोपि शब्दात्मा सन्नप्यस्वीकृतस[5]मस्तोपलम्भनो न समर्थ एवेति। **न चायं** शब्दात्मा। उपलम्भनिरपेक्षः **सन्निधिमात्रेणा**र्थप्रतीति**साधनः** । किं कारण (।) तस्या **व्यपेक्षणात्** । सा चेयं व्यक्तिः क्रमभाविनी सदसतोः (।) सतः शब्दात्मनः । असतश्च ध्वनिभागस्य **क्रमेण भवन्ती तुल्योपयोगा**। तुल्यफलेति कृत्वा **ध्वनिभिरशक्यसाधनं** साधयितुमशक्यं यत् कार्यमर्थ[6]प्रतीतिलक्षणं। **तत्रापि तथा**। ध्वनिभिर्व्यज्यमानेपि शब्दात्मनि तथा। अशक्यसाधनमेवेत्य**लमन्येन** शब्देन ध्वनिव्यतिरिक्तेन कल्पितेन।

**तस्मान्न वर्णेष्वपौरुषेयता**। नापि वाक्य इत्युपसंहारः।

न वर्णव्यतिरिक्तम्वाक्यं किन्तु **वर्णानुपूर्वी वाक्यं** (।) **तच्चापौरुषेय**मिति **चेत** ।

**न अर्थान्तरभूतमेव शब्दरूपं[5] वाक्यं अपौरुषेयं चेत्। किन्तर्हि। वर्णानुक्रमलक्षणं हि नो वाक्यं, तदपौरुषेयं साध्यमिति चेत्।**

**न। वर्णानामानुपूर्व्या[6] अभेदात्। नेयमर्थान्तरं वर्णेभ्यः। दृश्यायां भेदेनोपलम्भप्रसंगात्। अदृश्यायां, ततोऽप्रतिपत्तिप्रसंगात्, अनिरूपणाच्च।[7] भेदवत्याश्चानुपूर्व्या अभावे वर्णमात्रमवशिष्टमिति पूर्ववत् प्रसंगः।** 504b

**तेषां च न व्यवस्थानं क्रमान्तरविरोधिनः।**

**यदि वर्णानामानुपूर्वी अकृतका[1], ते च न बहवः समानजातीया येन केनचिद् व्यवस्थितक्रमाः स्युः, अन्ये यथेष्टपरावृत्तयः। किंर्ताह। त्रैलोक्य एक[2] एवाकार-**

---

**तन्न।** किं कारणं (।) **वर्ण्णानामानुपूर्व्याः** सकाशा**दभेदतः**[7] (।) 173a

**न** वर्ण्णेभ्योर्थान्तर**मेव शब्दरूपम्वाक्यमपौरुषेयं।** किन्तर्हि (।) **वर्ण्णानुक्रमलक्षणं हि नो**स्माकं मी मां स का नाम्**वाक्यं। तदपौरुषेयं साध्यमिति चेत्।**

**न। वर्ण्णानामानुपूर्व्याः** सकाशा**दभेदात्। नेयम**ानुपूर्वी **अर्थान्तरम्वर्ण्णेभ्यः।** किं कारणं। **दृश्याया**मनुपलब्धिलक्षणप्राप्तायान्तस्यामानुपूर्व्यामङ्गीक्रियमाणायां वर्ण्णेभ्यो विभागेन **भेदो नोपलम्भप्रसङ्गात्**।[1] न चोपलभ्यत इत्यभावसिद्धौ स्वभावानुपलब्धिर्वाच्या। **अथादृश्या**नुपूर्वी (।) तदाप्यदृश्यायामानुपूर्व्यां। तत अनुपूर्व्या अर्था**प्रतिपत्तिप्रसङ्गात्** (।) न च दृश्याया आनुपूर्व्या ग्राहकं प्रत्यक्षमदृश्यत्वादेव। नाप्यनुमानं लिङ्गाभावात्। वर्ण्णेभ्यो **भेदवत्याश्चानुपूर्व्या** अभावे **वर्ण्णमात्रमविशिष्टं** सर्वत्र लौकिकवैदिकवाक्येष्विति **पूर्ववत् प्रसङ्गः**[2] यः किमनेन परिशोषितं स्यादित्यादिनोक्तः।

अथ स्याद् (।) क्रमो वर्ण्णानां धर्ममात्रन्न वस्त्वन्तरं तेनादोषः। तदुक्तं (।)

"**धर्ममात्र**मसौ तेषान्न वस्त्वन्तरमिष्यते।
क्रमेण ज्ञायमानाः स्युर्वर्ण्णास्तेनावबोधकाः।
न च क्रमस्य कार्यत्वं पूर्वसिद्धपरिग्रहात्।
वक्ता न हि क्रमं कश्चित् स्वातन्त्र्येण प्रपद्यते।
यथैवास्य परैरुक्तस्तथैवैनं विवक्षति।
परोप्ये[3]वं सतश्चास्य सम्बन्धवदनादिता।"[1]

तेन पूर्वपूर्ववृद्धदर्शनायातोनादिवर्ण्णक्रमो पौरुषेय एवेत्यत्राह।

**तेषां च न व्यवस्थानं** (।) तेषां वर्ण्णानां न व्यवस्थितक्रमत्वं। किं कारणं (।) व्यवस्थितादेकस्मात् **क्रमान्तरस्य विरोधतः।**

---

[1] Kumārila.

**स्तथा गकारोऽपि। तदाऽग्निरित्येव स्यात् न गगनमिति। अकारगकारयोः पूर्वापरभावस्य व्यवस्थितत्वात्।**

**कृतकानामपि हेतुपरिमाणनियमवतां[3] अशक्यः क्रमविपर्ययः कर्त्तुम्। यथा बीजांकुरकाण्डादीनां ऋतुसंवत्सरादीनां च। किं पुनरचलितावस्थास्वभावानां अकृतकानां कथंचिद् व्यवस्थितानां पूर्वा[4]वस्थायाः त्यागमन्तरेण अन्यथा भावायोगात्। त्यागे वा विनाशप्रसंगात्, विशेषेण नित्यायामानुपूर्व्यां अपि। प्रतिपदं**

---

**यदी**त्यादिना व्याचष्टे। **वर्ण्णानामानुपूर्वी** यदि **कृतका ते** च वर्ण्णा **न बहवस्समानजातीया येन केन[4]चिद्** वर्ण्णा **व्यवस्थितक्रमाः स्युर्वैदिकाः**। **अन्ये** पुनर्लौकिका **यथेष्टपरावृत्तयः**। यथेष्टं परावृत्तिः क्रमान्तरेण प्रयोगो येषामिति विग्रहः। **किन्तर्हि त्रैलोक्य एक एवाकारस्तथा गकारः**। तदुक्तं।

"देशकालप्रयोक्तॄणाम्भेदेपि च न भेदवान्।
गादिवर्ण्णो यतस्तत्र प्रत्यभिज्ञा परिस्फुटे"ति।[1]

यदा **चैवन्तदा** व्यवस्थितक्रमत्वे वर्ण्णाना**म[5]ग्निरित्येव स्यान्न गगनमिति**। किंकारणम् (।) **अकारगकारयोः पूर्वापरभावस्य व्यवस्थितत्वात्**। अकारो गकारात् पूर्वमेवाकाराच्च गकारः परेणैव व्यवस्थित इत्यर्थः। गगनमित्यत्र गकारात्परेणाकारः स्यादिति क्रमान्तरन्न स्यात्।

एतदेव द्रढयन्नाह। **कृतकानाम**पीत्यादि। आस्तान्तावदकृतकानामियञ्चिन्ता। येषामन्यथाभा[6]वः कथञ्चिदपि कर्त्तुं न शक्यते। कृतकानामपि तावद् भावानां कीदृशं **हेतुपरिणामनियमवतां** हेतोः परिणामः। उत्तरोत्तरावस्थाप्रतिलम्भः। तस्मान्नियमः कार्यस्य हेत्वनन्तरं सत्ता। स येषां विद्यते। ते तथोच्यन्ते। तेषाम**प्यशक्यः क्रमविपर्ययः कर्त्तुं। यथा बीजाङ्कुरादीनां**। बी-

173b जात् पश्चादङ्कुरोऽङ्कुरात् काण्डं यत्र पुष्पादी[7]नि न विपर्ययः। तथा **ऋतुसम्वत्सरादीनां** व्यवस्थितक्रमत्वं। ऋतूनां हेमन्तादिलक्षणानां। सम्वत्सराणाञ्च शौ क्र बा र्ह स्पत्यादीनां। आदिशब्दाद् ग्रहनक्षत्रप्रभृतीनां। **किं पुनरचलितावस्थास्वभावानामकृतकाना**म्वर्ण्णानां। अचलिताक्रमाद्यवस्था स्वभावश्च येषामकृतकानामिति विग्रहः। **कथंचिद् व्यवस्थितानां**। विनियतेन क्रमेण[1]। **पूर्वावस्थायास्त्यागमन्तरेणान्यथाभावायोगात्** क्रमान्तरेणावस्थानस्यायोगात्। पूर्वावस्था**त्यागे वा** वर्ण्णानामभ्युपगम्यमाने तेषा**म्विनाशप्रसङ्गात्**। वर्ण्णानामपि तावन्न पूर्वावस्थात्यागमन्तरेण क्रमविपर्ययो **विशेषेण नित्यायामानुपूर्व्यां**।

---

[1] Kumārila.

**वर्णान्यत्वे अपूर्वाणामुत्पादाद् वा वर्ण[5] बाहुल्यम्। तच्चैतत् नाभिमतम्।**

**अपि च।**

**वर्णानुपूर्वी वाक्यं चेन्न वर्णानामभेदतः ॥२६२॥**
**देशकालक्रमाभावो व्याप्तिनित्यत्ववर्णनात्।**

**सा चेयं वर्णानामानुपूर्वी देशकृता वा स्यात् यथा पिपीलिकानां पंक्तिः, काल-[6] कृता वा, यथा बीजांकुरादीनाम्।**

**सेयं द्विधाऽपि वर्णेषु न सम्भवति। अन्योन्यदेशपरिहारेण वृत्तिर्हि देशपौर्वा-पर्यम्। सर्वस्य[7] सर्वेण तुल्यत्वात्। तद् वर्णेषु न सम्भवति। वातातपवत्,** 505a **आत्मादिवच्च। तथाऽन्योन्यं कालपरिहारेण वृत्तिः कालपौर्वापर्यम्। यदा[1] एको नास्ति तदान्यस्य भावात्। तदपि नित्यादिषु न सम्भवति, सर्वदा सर्वस्य भावात्। न चान्या गतिः। तत् कथं वर्णपौर्वापर्यं वाक्यं अपौरुषेयं साध्येत।**

---

तदेतत् क्रमान्यत्वं **प्रतिपदम्वर्ण्णान्यत्वे** स्यान्नित्या अपि वर्ण्णाः प्रतिपदम्भि[2]न्ना इति कृत्वा। **अपूर्वेषाम्वर्ण्णानाम्प्रतिपदमुत्पादाद् वर्ण्णबाहुल्यं**। तस्माद्वा क्रमान्यत्वं स्यात्। **तच्चैतदुभयमपि नाभिमतं** मी मां स का ना मेकत्वान्नित्यत्वाच्च वर्ण्णानां। (२६२.)

**अपि चे**त्यादिना दूषणान्तरमाह। **देशकालाभ्यां** यः कृतः **क्रम**स्तस्य वर्ण्णे-**ष्वभावः** कथं। **व्याप्तिनित्यत्ववर्ण्णनात्**। तदुक्तं।

"किञ्च शब्दस्य नित्यत्वं श्रोत्रजप्रत्यभिज्ञ[3]या।
विभुत्वं च स्थितं तस्य को व्यवस्येद्विपर्ययमिति"।[1]

वर्ण्णानामाकाशवद् व्याप्तिवर्ण्णनान्न देशकृतः क्रमः। नित्यवर्ण्णनान्न कालकृतः। **सा चेय**मित्यादिना व्याचष्टे। **सा चेयम्वर्ण्णानामानुपूर्वी। देशकृता वा स्यात्। यथा**न्योन्यदेशपरिहारेण स्थितानां **पिपीलिकादीनाम्पङ्क्तौ। कालकृता वा** स्यादानुपूर्वी। **यथा बीजाङ्कुरादीनां।** यदा[4] बीजं न तदांकुरो यदांकुरो न तदा पत्रादय इति **सेयमानुपूर्वी द्विधा**। देशकालकृता **वर्ण्णेषु न सम्भवति।** कुतः (।) व्याप्तेर्न्नित्यत्वाच्च। तत्र **न** तावद्देशकृतानुपूर्वी **वर्ण्णानां सम्भवति। यस्मादन्योन्यदेशपरिहारेण** भावानां **वृत्तिर्हि देशपौर्वापर्यं**। तदित्थम्भूतं पौर्वा-**पर्यम्वर्ण्णेषु न सम्भवति**। किं कारणं (।) व्यापित्वेन **सर्वस्य** वर्णस्य **सर्वेण** वर्ण्णेन[5] **तुल्यदेशत्वात्। वातातपवत्**। लौकिको दृष्टान्तः। शास्त्रीयमाह। **आत्मादि-वच्चे**ति। आदिशब्दादाकाशादिपरिग्रहः। **तथा** कालकृतानुपूर्वी वर्ण्णानान्न

---

[1]Kumārila.

**अनित्या[2]ऽव्याप्तितायां च दोषः प्रागेव कीर्तितः ॥२६३॥**

**अथ माभूदेष दोष इत्यनित्यानव्यापिनश्च वर्णानिच्छेद्। तावपि पक्षौ प्रागेव निराकृतावित्यपरिहारः।**

**व्यक्तिक्रमोपि वाक्यं न नित्य[3]व्यक्तिनिराकृतेः।**

---

सम्भवति। यस्मादन्योन्यं **कालपरिहारेण वृत्तिः कालपौर्वापर्यं।** एतदेव कुतः। **यदे**त्यादि। यस्मिन् काले **एको नास्ति तदान्यस्य भावात्** कारणात्। **तदपि** काल-पौर्वापर्य**न्नि[6]त्येषु** वर्ण्णेषु न **सम्भवति। सर्वदा सर्वस्य** वर्ण्णस्य **भावात्। न च** देशकालकृतात् क्रमा**दन्या** वर्ण्णानुपूर्वी **गतिः** प्रकारोस्ति। **तत्कथम्वर्ण्णपौर्वापर्यं वाक्यं** यद्भवद्भि**रपौरुषेयं साध्ये**तेति।

न च ध्वनिकृतो युगपद्भाविनाम्वर्ण्णानां क्रमो युक्तोऽनित्यत्वप्रसंगात्। तदुक्तम् (।)

"अनित्यध्वनिकार्यत्वात् क्रमस्यातो विनाशिता।

174a पुरुषाधीनता चास्य तद्विवक्षावशा[7]द् भवेदि"ति।[1]

तेनायमर्थो भवति (।) व्यापित्वाद् वर्ण्णानां यौगपद्यमतो व्यापित्वविरोधी क्रमः (।) क्रमविरोधि च व्यापित्वं। क्रमश्चेद् वर्ण्णानामिष्यते व्यापित्वग्राहि प्रत्यभिज्ञानं भ्रान्तं स्यात् (।) तथा च देशकालप्रयोक्तृभेदेन वर्ण्णानाम्भिन्नत्वात् कार्यत्वमिति कथमनादित्वं क्रमस्य।

तेन यदुच्यते।

"न च क्रमस्य कार्यत्वं पूर्वसिद्धपरिग्रहात्।

वक्ता न हि क्रमं कश्चित्स्वातन्त्र्येण प्रपद्यते।[1]

यथैवास्य परैरुक्तस्तथैवैनम्विवक्षति।

परोप्येवमतश्चास्य सम्बन्धवदनादिते"ति (।)

तदपास्तं। क्रमे सति वर्ण्णैकत्वप्रत्यभिज्ञानस्याप्रामाण्येन प्रत्युच्चारणं वर्ण्णानां कार्यत्वात् क्रमस्य च तेभ्योनर्थान्तरत्वात्। न च क्रमः क्रमिणान्धर्मः (।) धर्मस्यापि धर्मिणस्सकाशाद् भेदात् भेदेन श्रोत्रज्ञानेऽवभासः स्यात्। न च भवति। तस्मादयुगपदुत्पन्ना एव[2] भावाः क्रमः तेन प्रत्युच्चारणम्वर्ण्णानामुत्पत्तिभेदात् क्रमभेदेपि। पूर्वदृष्ट एवायं क्रम इति प्रत्यभिज्ञानं सादृश्यनिबन्धनं। न प्रत्य-भिज्ञानं सादृश्यनिबन्धनं। न प्रत्यभिज्ञानं प्रमाणमिति प्रतिपादयिष्यते च। तत्कथं क्रमस्यानादित्वादपौरुषेयत्वमिति। (२६३)

---

[1] Kumārila.

**न वर्णानां रूपानुपूर्वी वाक्यम्। किन्तर्हि। तद् व्यक्तेः। सा यथा स्ववर्णाभिव्यक्तिप्रत्ययानां क्रमाद् भवन्ती क्रमयोगिनीति तदा[4]नुपूर्वी वाक्यमित्यपि मिथ्या। तस्या नित्येषु प्रागेव निषिद्धत्वात्। कार्यता साक्षाच्छक्त्युपधानेन ज्ञानजननकार्यविशेष एव)[1] समर्था व्यक्तिरित्याख्यातमेतत्।**

**व्यापारादेव[5] तत्सिद्धेः करणानाञ्च कार्यता ॥२६४॥** 35a

**यत् खलु रूपं यत एवोपलभ्यते (।) तस्य तदुपलब्धिनान्तरीयकामुपलब्धिमेवाश्रित्य लोकः कार्यतां प्रज्ञापयति (।) सा वर्णेष्वस्ति। सैव चान्यत्रापि (।) तदाश्रयो न विशेषस्तत्कथं तुल्येऽभ्युपगमनिबन्ध[1]ने न वर्णाः कार्याः। न चैतदुपलब्ध्याश्रया कार्यतास्थितिः (।) किन्तर्हि (।) यत्सत्येव भवतीति। सत्ता-**

---

अथ माभूदेष दोष इत्यनित्यान् व्यापिनश्च वर्णानिच्छेत् वे द वा दी। तदाऽ**नित्याव्यापितायान्दोषः प्रागेव कीर्तितः।**

अथेत्यादि[3]ना व्याचष्टे। **माभूदेष** वर्णानुपूर्व्यभाव**दोष इत्यनित्यानव्यापिनश्च वर्णानिच्छेद्** वे द वा दी। अनित्यत्वात् कालकृतपौर्वापर्यमव्यापित्वाद् देशकृतमिदमिति मन्यमानः। **तावप्यनित्याव्यापिपक्षौ प्रागेव**। "अनित्यं यत्नसम्भूतम्पौरुषेयं कथं न तद्।" ( . . . . ) इत्यादिना। **सर्वत्रानुपलम्भः स्यादित्यादिना** च यथाक्रमन्निराकृतावित्यपरिहारः। (२६४)

वर्णानां व्यक्तिर[4]**भिव्यक्तिस्तस्याः क्रमोपि वाक्यञ्च** भवति। यदा कर्मस्था क्रियाभिव्यक्तिस्तदा वर्णानां व्यक्तिविषयत्वक्रमो वाक्यमित्यपि न भवतीत्यर्थः। कस्मात् (।) **नित्यव्यक्तिनिराकृतेः।**

**ने**त्यादिना व्याचष्टे। **न वर्णानां रूपानुपूर्वी** स्वरूपानुपूर्वी **वाक्यं** येनायन्दोषः (।) **किन्तर्हि** (।) **तद्व्यक्तेः**। वर्णरूपव्यक्तेर्व्यक्तत्वलक्षणाया यानुपूर्वी तद् वाक्यं। तामेव दर्शयन्नाह।[5] **ने**त्यादि। **सा** व्यक्ति**र्यथा स्ववर्णाभिव्यक्तिप्रत्ययानां**। येन यस्य वर्णाभिव्यक्तिप्रत्ययास्ताल्वादिव्यापारास्तेषां **क्रमाद् भवन्ती क्रमयोगिनीति** कृत्वा **तदानुपूर्वी** तेषां व्यक्तानां वर्णानामानुपूर्वी **वाक्यम्** (।) **इत्यपि मिथ्या**। किं कारणं(।)**तस्या** व्यक्ते**र्नित्येषु प्रागेव** सा मा न्य व्य क्ति चि न्तास्थाने **निषिद्धत्वात्**। तदेव स्मारयन्नाह। **कार्यते**त्यादि। व्यञ्जककृतेन[6] **साक्षाज्जननशक्त्युपधानेन। ज्ञानजननासमर्थानां** घटादीनां **कार्यविशेष एव व्यक्तिरित्याख्यातमेतत्**। किञ्च **करणाना**न्ताल्वादीनां **व्यापारादेव तस्माद्धेतोस्ते**षाम्वर्णानामुपलब्धेस्तेषाम्वर्णानां **कार्यता** प्राप्ता (।) यस्मात्।

---

[1] Restored up to here.

35a **श्रया। सा सत्ता कुतः सिद्धा येन कार्यतां साधयेत् (।) न ह्यसिद्धायामस्यामेवं भवतीति। तस्मात् सत्तासिद्धिस्तत्साधनी। सा चोपलब्धिरेव।**

**सत्यम् (।) एवं यदि तस्य प्राङ्न सत्ता सिद्धा स्यात्। सा हि सत्तासिद्धिः कार्याऽसिद्धिपूर्विका।**

---

**यत् खलु रूपं यत एवोपलभ्यते तस्य** रूपस्य **लोकः कार्यतां प्रज्ञापयतीति** सम्बन्धः। यत एवोपलभ्यत इति यच्छब्देन यो निर्दि[7]ष्टस्तस्योपलब्धिस्**तदुपलब्धिस्त**न्नान्तरीयिका**मेवोपलब्धिमाश्रित्येति** भिन्नक्रम एवकारः। **सा** यथोक्तोपलब्धि**र्वर्णेष्वप्यस्ति** (।) प्रयत्नव्यापारोपलब्धिनान्तरीयकत्वादेव वर्णोपलब्धेः। **सा चोपलब्धिरन्यत्रापि** कार्यत्वेन प्रसिद्धे वस्तुनि (।) **तदाश्रयः** कार्यताप्रज्ञप्तेराश्रयः। **नातो**धिको **विशेषः** (।) **तत्कथन्तुल्ये** कार्यता**भ्युपगमनिबन्धने न वर्णाः कार्याः**।

174b

**नेत्यादि** परः।[5] **न चैतदुपलब्ध्याश्रया**। एकोपलब्धिनान्तरीयिका याऽपरस्योपलब्धिस्तदाश्रया **कार्यतास्थितिः** (।) **किन्तर्हि** (।) **यत्सत्येव भवति**। यस्मिन् सत्येव यद् भवति। **इति** एवं **सत्ताश्रया** कार्यतास्थितिः। न च वर्णानां करणेभ्यः सत्ता भवति किन्तूपलब्धिरेवेति मन्यते।

**सा सत्तेत्याचार्यः**। सत्ताश्रयस्यैव कार्यता प्रज्ञप्तिरित्यसत्यमेतत्। केवलं **सा सत्ता कुतः** प्रमाणात् **सिद्धा येने**यं **कार्यतां साध**[2]**येत्**। **न ह्यसिद्धायामस्यां** सत्ताया**मेवम्भवति**। सत्येवास्मिन्निदं भवतीत्येवम्भवति। **तस्मात् सत्तासिद्धिस्तत्साधनी**। तस्याः कार्यतायाः साधनी। **सा** सिद्धि**रुपलब्धिरेव** सिद्धेर्ज्ञानस्वभावत्वात्। ततश्च यन्नान्तरीयिकैव यत्सत्तोपलब्धिस्तत्तस्य कार्यमित्येतावत् स्थितं (।) तच्च वर्णेष्वपि तुल्यमिति कथं न वर्णाः कार्याः।

**सत्यमित्यादि** परः। **सत्यमेवं** करणव्या[3]पारादेव शब्दोपलब्धौ तत्कार्यता स्यात्। **यदि तस्य** शब्दस्य तात्वादिव्यापारात् **सत्ता न सिद्धा स्यात्**। किन्तु सिद्धैव प्रमाणेन। तथा हि पूर्वं गोशब्दं श्रुतवतः पुंसोन्यदा गोशब्दश्रवणे स एवायं गोशब्द इति तत्त्वग्राहिणी प्रत्यभिज्ञोत्पद्यते। तत्त्वग्रहणमेवान्यथा न स्यात्। यदि पूर्वोत्तरश्रवणकालयोरन्तराले शब्दो न स्यादित्यर्थापत्त्या प्राक्छब्दस्य[4] सत्ता सिद्धैव। न च सिद्धिपूर्विका सिद्धिः कार्यतासाधनी। किन्तु **सा हि सत्तासिद्धिः** कार्यत्वप्रज्ञप्तेर्निमित्तं **या सिद्धिपूर्विका**। यथा घटस्य प्रागसतः कुलालादिव्यापारादेव पश्चात् सिद्धिः।

**नन्वित्यादि** सि द्धा न्त वा दी। एतत् कथयति (।) न तावत् प्रत्यभिज्ञा प्रमाणमिति प्रतिपादयिष्यते तत्कथं सत्ता सिद्धा। भवतु नाम प्राक्छब्दस्य सत्ता सिद्धा। तथा[5]पि शब्दस्य **तद्रूपमसिद्धं**। कतरत् तद् रूपमित्याह। **यत् तथा-**

**ननु तद्रूपमसिद्धमेव यत्तथाभूतविज्ञानाव्यवधानोपयोगि। सिद्धमेव तद[2]न्य-वैकल्यान्नोपयुक्तमिति चेत् (।) कथमिदानीमुपयुक्तानु(प)युक्तयोरभेदः ।**

**नापि भेदः स्वभावासंस्पर्शी तस्यैवातिशयस्योपयोगसिद्धेः। तस्याकरणत्व-प्रसंगात्। यस्यैव भावे साध्यसिद्धिः तदेव हि तत्रोपयोगि युक्तं। तदतिशयो-पयोगेप्यस्य तद्वत्प्रसंगः। तस्मादतिशेत एवाव्यवहितसामर्थ्योपयोगोवस्था[3]-भेदस्तदन्यविकल्पान्नोपयुक्तमिति चेत् प्रागेव निषिद्धा। स च करणव्यापारा-देव सिद्ध इति सर्वकार्यतुल्यधर्मा। तस्य तादृशस्य व्यक्तौ सर्वं व्यङ्ग्यं। न वा किंचिदप्यविशेषात्। तथा हि।**

**स्वज्ञानेनान्यधीहेतुः सिद्धेर्थे व्यञ्जको मतः ॥**

---

**विधेत्यादि। तथाविधस्य** शब्दस्वलक्षणप्रतिभासिज्ञानस्य **व्यवधाने**नोपयुक्तं शीलं यस्येति विग्रहः। यदि हि तथाभूतं रूपं प्राक् सिद्धं स्यात् तदा नित्यं शब्दो-पलम्भः स्यात्।

**सिद्धमेव तच्छ**ब्दस्य यथोक्तं रूपं केवल**मन्यस्य** सहकारिणो **वैकल्या**च्छ्रोत्र-विज्ञाने कारणत्वेन **नोपयुक्तमिति चेत्**।[6]

यद्येवं सहकारिसन्निधाने या पश्चात् स्वज्ञाने उपयुक्ता। या प्रयत्नात् प्रागनुपयुक्तावस्था । ते परस्परविरुद्धे। **कथमिदानीमुपयुक्तानुपयुक्तयो**रवस्थ-योर्विरुद्धयो**रभेदः** (।) अपि तु भेद एव ततश्च नानात्वात् स तादृशः शब्दस्य स्वभावः कृत इति कार्य एव शब्दः स्यात्।

अथापि स्याद् (।) योसावतिशयो भवति न स शब्दस्यात्मभूतोपि त्वर्थान्तर-मिति पूर्वक[7]स्वभावादप्रच्युत एवासावित्याह। 175a

**नापि भेदो**ऽकारकावस्थातः कारकावस्थालक्षणोतिशयः शब्द**स्वभावा-संस्पर्शी** शब्दस्वभावान्न व्यतिरिक्त इति यावत्। व्यतिरेके हि **तस्यैवातिशयस्य** शब्दज्ञाने **उपयोगसिद्धेः** कारणत्वसिद्धेस्**तस्य** शब्द**स्याकारणत्वप्रसंगात्**। तथा हि **यस्यैव भावे साध्यसिद्धिस्तदेव तत्र** साध्य **उपयोगि युक्त**न्नापरं। अतिशयो ज्ञान[1] उपयुज्यते (।) साक्षादतिशये तु शब्द उपयुज्यत इति पारम्पर्येण शब्दोपि ज्ञाने उपयुक्त एवेत्यत आह।

**तदतिशये**त्यादि। **तस्मिन्नतिशये**ऽ**स्य** शब्दस्यो**पयोगेपि** कल्प्यमाने। **तद्वत्प्र-सङ्गः**। ज्ञानवत्प्रसङ्गः। यथा विज्ञाने कर्त्तव्येर्थान्तरभूते नातिशयेन शब्द उपयु-ज्यते। तद्वदतिशयेपि कर्त्तव्येर्थान्तरभूतोतिशयः कल्पनीयः। तथा चानवस्था स्याद[2]तोतिशयः शब्दादभिन्नः (।) यतश्चाभिन्नः। **तस्मात्** तदन्यं स्वविषय-ज्ञानजननं शब्दस्वभावम**तिशेत एव**। स्वरूपभेदेन। को**ऽव्यवहितसामर्थ्यो-**

**यथा दीपोन्यथा वापि को विशेषोस्य कारकात्। (२६५)**

**स्वप्रतिपत्तिद्वारेणान्यप्रतिपत्ति[4]हेतुर्लोके व्यञ्जकः सिद्धो दीपादिवत्। स चेत् प्राक्सिद्धः स्यात्। समानजातीयोपादानलक्षणसिद्धेर्न तस्यैवातिशयस्य ज्ञानहेतोस्तस्य तत्सामग्रीप्रत्ययत्वात्। ये पुनरसिद्धोपलंभनाः कारका एव कुला(ला)दिवद् घटादौ। प्रत्यभिज्ञानादयोपि सिद्धिहेतवो न हेतुलक्षणं पुष्णन्ति।**

---

**पयोगोवस्थाभेदो**ऽव्यवहितसामर्थ्य उपयोगो यस्यावस्थाभेदस्येति विग्रहः।

अथ स्यात् (।) नैव विज्ञानजनिकावस्थोत्पद्यते नित्यत्वात् (।) किन्तु ताल्वादिकमपेक्ष्यासौ ज्ञानं जनयतीति (।)

अत आह। **अतिशय[3]स्येत्यादि**। नास्य सहकारिकृतोतिशयोस्तीत्यनतिशयस्य सहकारिणं प्रत्यपेक्षा प्रागेव निरस्ता (।) **स च** जनकः शब्दस्वभावः **करणव्यापारादेव सिद्ध इति** कृत्वा **सर्वकार्यतुल्यधर्मा**। सर्वे कार्ये तुल्यधर्मा यस्येति विग्रहः। **तस्य तादृशस्य** कार्यतुल्यधर्मणः शब्दस्य **व्यक्ता**विष्यमाणायां **सर्वम**ङ्कुराद्यपि **व्यङ्ग्यं** स्यात्। **न वा किंचिद्** व्यङ्ग्यं।[4] शब्दोपि कार्यः स्याद् **विशेषाभावात्**।

तथा हि (।) **स्वज्ञानेन** करणेना**न्यधीहेतुरर्थो व्यञ्जको मतः**। कदा (।) **सिद्धेर्थे**। यद्यसौ व्यङ्ग्यः कारणाल्लब्धसत्ताको भवति। यथा दीपः कुलालादिसिद्धे घटे तज्ज्ञानहेतुर्व्यञ्जकः। अन्यथा वापि यदि व्यङ्ग्यः प्रागसिद्धः स्यात्। तदा को विशेषोस्य व्यञ्जकस्य कारकाद्धेतोः (।)

**स्वप्रतिपत्ती**त्यादिना व्याचष्टे। **स्व[5]प्रतिपत्तिरेव द्वार**मुपायस्तेन करणेनान्यस्य घटादेः **प्रतिपत्तिहेतुर्लोके व्यञ्जकः सिद्धः। दीपादिवत्। स चेद्** व्यङ्ग्यः व्यञ्जकव्यापारात् **प्राक् सिद्धः स्यात्**।

ननु च प्रदीपादिरप्युपलब्धियोग्यं घटक्षणं प्रागसिद्धमेव जनयति। तत्किमुच्यते स चेत् प्राक् सिद्ध इति (।)

अत आह। **समानजातीये**त्यादि। अनुपलम्भयोग्यः पूर्वको घटादिक्ष[6]णः **समानजातीय उपादानक्षणस्**तस्य व्यञ्जकव्यापारात् प्राक् **सिद्धेः** कारणात् स चेत् प्राक् सिद्धः स्यादित्युच्यते। **न तस्यैव** व्यञ्जकाल्लभ्यस्य **ज्ञानहेतोरतिशयस्य** प्राक् सिद्धेः सिद्ध उच्यते। किं कारणं (।) **तस्य** यथोक्तस्यातिशयस्य। **तत्सामग्रीप्रत्ययत्वात्**। सा व्यञ्जकसामग्री प्रत्ययः कारणं यस्येति विग्रहः। **ये पुनः** स्वव्यापारात् प्राग् **असिद्धस्यो[7]पलम्भकाः कारका एव** ते। किमिव (।) **कुलालादिवद् घटादौ** शब्दस्याप्युपलम्भहेतवः कुलालादितुल्या इति। शब्दोपि घटादिवत् कार्य एवं।

नन्वेकदा श्रुतस्य शब्दस्यान्यदा श्रवणे च स एवायमिति तत्त्वं प्रत्यक्षप्रत्यभि-

175b

**यदपि किंचिदुत्तराकारप्रतीतिः** (।) अ[5]**प्रतीतेः। पूर्वाभिन्नविषया तद्व-दित्यादि। तदपि न स्वलक्षणयोरभेदसाधने समर्थं। तत्स्वभावासिद्धेः। सामान्येन**

---

ज्ञया प्रतीयते। तत्त्वप्रतिपत्त्यन्यथानुपपत्त्या च ताल्वादिव्यापारात् प्राक् सत्त्वं शब्दस्यापि निश्चितमिति कथन्ताल्वादयो सिद्धोपलम्भनाः (।) तेन व्यञ्ज[1]का एव युक्ताः।

एवम्मन्यते। प्रथमे क्षणे शब्दग्रहणं द्वितीयक्षणे पूर्वगृहीतशब्दाहितसंस्कार-प्रबोधस्ततोन्यस्मिन् क्षणे शब्दस्मरणं। ततश्चतुर्थे क्षणे तिरोहिते तस्मिन् स एवायं घटशब्द इति प्रत्यभिज्ञानं कथं प्रत्यक्षं स्यादसन्निहितविषयत्वात्।

नापि प्राक्प्रबुद्धसंस्कारस्य पुंसो वर्णग्राहकं प्रत्यभिज्ञानं सम्भवति। वर्णस्य सांशत्वादित्युक्तं। अन्त्यव[2]र्णभागकाले च पूर्ववर्णभागानामसत्त्वेनान्त्यस्यापि वर्णस्यासन्निहितत्वात्। अत एव पदवाक्ययोरपि ग्राहकं प्रत्यक्षं प्रत्यभिज्ञानं न सम्भवति वर्णसमुदायत्वात् पदादेरन्त्यवर्णकाले च पूर्वपूर्ववर्णानामसत्त्वात् सन्निहितविषयञ्च प्रत्यक्षमिष्यते। तस्मान्न प्रत्यक्षं प्रत्यभिज्ञानम्वर्णपदवाक्येषु तत्त्वग्राहकं सम्भवति (।) अत एव चा चा र्ये ण नो[3]पन्यस्तं (।)

भवतु वा तेषु प्रत्यभिज्ञानं प्रत्यक्षन्तथापि तत्त्वग्रहणान्यथानुपपत्त्या न ताल्वा-दिव्यापारात् प्राक्छब्दस्य सत्त्वकल्पना युक्ता। सदृशापरग्रहणेनापि तत्त्वग्रहणस्य सम्भवात् सदृशापरग्रहणमेवाव्याप्यसिद्धमिति चेत्।

नन्वेकत्वमपि नैव सिद्धं। तत्त्वग्रहणात् सिद्धमिति चेन्न (।) भिन्नेष्वपि लूनपुनर्जातेषु केशेषु तत्त्वग्रहणस्य दर्शनात् संशय एवातः। कथम[4]र्थापत्त्या प्राक् सत्त्वकल्पना।

अथ प्रत्यभिज्ञायमानत्वाच्छब्दस्य नित्यत्वम् (।) अनित्यत्वे ह्यनेकत्वात् प्रत्यभिज्ञानमेव न स्यात्। तथा। यः परार्थम्प्रयुज्यते स प्रयोगात् प्राग् विद्य-मानो यथा वास्यादिच्छिदायां। प्रयुज्यते च शब्दः परप्रत्यायनाय। तस्मात् सोपि प्राग् विद्यत एव चेति (।)

अत आह। **प्रत्यभिज्ञाने**त्यादि। शब्दस्य सदा सत्तासिद्धिहेतवः। **तेपि न हेतुलक्षणं पुष्णन्ति**। तथा[5] ह्यनित्येपि प्रदीपादौ प्रत्यभिज्ञानन्दृष्टं। तस्मादनै-कान्तिकमेतत् (।) तथा क्षणिकेपि कर्मणि प्रयोगे दृश्यते। तेन प्रयुज्यमानत्वा-दित्यपि हेतुरनैकान्तिक एव।

**यदपि किञ्चि**ल्लिङ्गं शब्दस्यैकत्वसाधनायोपादीयते। **उत्तरा** पश्चाद्भाविन्य-**कारप्रतीतिर्या** सा पूर्वाभिन्नविषया। पूर्वया अकारप्रतीत्या एकविषया।

एतेन शब्दानामेकत्वसाधनान्नित्यत्वं[6] साधितमिति मन्यते। अकार**प्रतीति**रिति

**वचने भिन्नविषयत्वस्याप्यविरोधः। एकविषययोश्च प्रतीत्योः पूर्वापरभावायोगात्। सन्निहितासन्निहितकारणत्वेनोत्पादानुत्पादात्। सन्निधानेप्यनुत्पन्नस्यातत्कारणत्वात्। त[6]योर्भिन्नाखिलकारणत्वं। तत्रैकाभेदेपि शक्तस्याप्रतीक्षणात्। युक्तिविरुद्धं पूर्वपरयोः प्रतीत्योरेकविषयत्वं (।) प्रतीतिप्रतिभासस्व-**

---

हेतुः। **तद्वदिति** पूर्वाकारप्रतीतिवदि**त्यादि**। आदिशब्दाद् द्रुतमध्यविलम्बितावस्थायामेक एव गकारादिवर्ण्णस्स एवायं गकारादिवर्णो द्रुतादिभेदभिन्न इति प्रतीतेः (।) प्रयोगस्तु या या अकारप्रतीतिः सा पूर्वाकारप्रतीत्यभिन्नविषया। तद्यथा पूर्वं अकारप्रतीतिः। अकारप्रतीतिश्चोत्तराप्यकारप्रतीतिरि[7]ति स्वभावहेतुप्रतिरूपकः। **तदपि** साधनं पूर्वापरयोरकार**स्वलक्षणयोरभेदसाधने** न **समर्थं**। तथा ह्यकारप्रतीतेरित्ययं हेतुर्विशेषेण वा स्यात् पूर्वाकारप्रतीतिरूपत्वादिति। सामान्येन वा स्यादकारप्रतीतिमात्रत्वादिति। आद्ये पक्षे हेतुरसिद्धः। किं कारणं (।) **तत्स्वभावत्वासिद्धेः** पूर्वाकारप्रतीतित्वासिद्धेः। यद्वा विशेषेण वा हेतुरुत्तराकारप्रतीतिरूपत्वादिति।

त[1]दपि न साधनं। किङ्कारणं (।) तत्स्वभावत्वासिद्धेः साध्यस्वभावत्वासिद्धेः। अनैकान्तिकत्वं व्याप्तेरसिद्धत्वादित्यर्थः।

अथ **सामान्येन** लिङ्गस्य **वचने भिन्नविषयत्वस्याप्यविरोधः**। अकारप्रतीतिश्च स्यात् पूर्वाकारप्रतीतिविषयाद् भिन्नविषया चेति को विरोधः।

अन्ये त्वकारप्रतीतित्वं सामान्यं यथा तयोः प्रतीत्योरेवम[2]कारविषयत्वमविरुद्धमिति व्याचक्षते।

किञ्च। **एकविषययोश्च प्रतीत्योः** पूर्वव्यवस्थितैकाकारविषययोः पूर्वोत्तरकालभाविन्योः प्रतीत्योः **पूर्वापरभावः** प्राक् पश्चाद्भावे **विरुध्यते**। किं कारणं (।) **सन्निहितासन्निहितकारणत्वेन** यथाक्रमं कार्यस्यो**त्पादानुत्पादात्**। सन्निहितकारणत्वे च तयोर्युगपद् भावः स्यात्। अथ सन्निहितेपि कार[3]णे पूर्वैवाकारप्रतीतिरुत्पद्यते नोत्तरा। तदा पश्चादपि सा न स्यात्। किं कारणं। पूर्वापरप्रतीतिकारण**सन्निधानेप्यनुत्पन्नस्यो**त्तराकारप्रतीतिविशेष**स्यातत्कारणत्वात्**। पूर्वाकारप्रतीतिकारणं नास्य कारणमित्यर्थः। तस्मात् **तयोः** पूर्वापरभाविन्योः प्रतीत्यो**र्भिन्नाखिलकारणत्वं**। भिन्नमखिलं कारणन्तयोरिति विग्रहः।

स्यान्मतं (।) तयो[4]रकारप्रतीत्योः शब्द एवैकः कारणं केवलं सहकारिसन्निधानक्रमादुत्पत्तिक्रम इति (।)

अत आह। तत्रेत्यादि। **तत्र** तस्मिन् पूर्वोत्तराकारप्रतीत्युत्पत्तिकाले। **एकस्य** कारणस्य स्वरूपेणा**भेदेपि** प्रतीत्योर्युगपद् भाव एव स्यात्। किं कारणं (।)

तस्यैकस्य **शक्तस्य** कारणस्य सहकार्य**प्रतीक्षणात्**। ततश्च **युक्तिविरुद्धं पूर्वापरयोः प्रतीत्योरेक[5]विषयत्वं**।

एतेन च सर्वेणोत्तराकारप्रतीते पूर्वाकारप्रतीत्यभिन्नविषयत्वे साध्येनुमानबाधितत्वं प्रतिज्ञाया उक्तं। अनुमानन्त्वीदृशं। यत् क्रमभावि तन्नैकविषयं। यथा क्रमेण भवच्चक्षुःश्रोत्रविज्ञानं (।) क्रमभाविन्यौ च पूर्वोत्तरे अकारप्रतीती। एकविषयत्वमक्रमभावित्वेन व्याप्तन्तद्विरुद्धं च क्रमभावित्वमिति व्यापकविरुद्धमेव।

नन्व[6]त्र प्रत्यक्षप्रत्यभिज्ञाबाधितत्वात् प्रतिज्ञाया अनुमानस्योत्थानमेव नास्तीति चेत् (।)

न। स एवायमिति ज्ञानस्य पूर्वापरकालसम्बन्धिविषयत्वेन भेदविषयत्वात्। अन्यदेव हि पूर्वकालसम्बन्धित्वमन्यदेव चापरकालसम्बन्धित्वं। अन्यथा पूर्वकालसम्बन्धित्वाद्वाऽपरकालसम्बन्धित्वस्याभेदेधुना भावाद् भावस्य प्रतिभासो न स्यात्। स एवेति च[7] ज्ञानस्योत्पत्तिः स्यात् (।) न स एवायमिति। अपरकालसम्बन्धित्वाद्वा पूर्वकालसम्बन्धित्वस्याभेदे पूर्वमस्य प्रतिभासो न स्याद् (।) अयमेवेति च ज्ञानस्योत्पत्तिः स्यात् (।) न स एवायमिति। 176b

तस्माद् यत्पूर्वकालसम्बन्धित्वन्तदपरकालसम्बन्धित्वन्न भवति। यच्चापरकालसम्बन्धित्वन्तत्पूर्वकालसम्बन्धित्वं न भवतीति पूर्वापरकालसम्बन्धिविषयत्वेन भेदविषयत्वात् क[1]थम्प्रत्यभिज्ञातः प्रतिज्ञाबाधा।

उम्बेकस्त्वाह। "यदि स एवायमित्येकानुभवस्तथाप्ययमतीतज्ञानकर्मताऽपरोक्षते एकाधिकरणे गृह्णन् सम्वेद्यते। अथापि प्रत्ययद्वयमिदं ग्रहणस्मरणरूपं। तथापि घटस्मरणपटग्रहणयोर्निरन्तरोत्पन्नयोर्विलक्षणमिदम्परस्परविषयत्वेन प्रतिभासनात्। अपरोक्ष एव ह्यर्थोतीतज्ञानविशिष्टत[2]या स्मृतौ प्रतिभासते। अतीतज्ञानविषयश्चापरोक्षतया प्रत्यक्षे। तदहं स्मराम्येतदिति प्रतिभासनात्। तस्मादनिमिषि(त)दृष्टेः पुरुषस्य यदुत्पत्तिविनाशरहितानुवृत्तावसायः स एव बाधकः क्षणभङ्गसाधकस्यानुमानस्ये"ति।

तदयुक्तम् (।) उत्तरोत्तरप्रत्यक्षाणां यथाक्रममुत्तरोत्तरवस्त्ववस्थाभेदविषयत्वेन स एवायमिति तत्त्वारोप[3]स्य भ्रान्तत्वात्। तथा हि प्रथमदर्शिनः प्रत्यक्षे यथाऽपरोक्षावस्था प्रतिभासते नातीतज्ञानविषयावस्था। तथा भूयो दर्शिनोपि। इदानीन्तनेन च रूपेण वस्त्ववस्थितन्न प्राक्तनेन। अवस्थिते च रूपे प्राक्तनरूपस्यानवस्थानमेव विनाशः। यथा वृद्धावस्थायाम्बालरूपस्य प्राक्तनञ्च रूपमतीतज्ञानकर्म। इदानीन्तनं च रूपम[4]परोक्षमथ च बालाद्यवस्थायां दृष्टः

पुरुषो वृद्धाद्यवस्थायां प्रत्यभिज्ञायत इति कथमतीतज्ञानकर्मताऽपरोक्षते एकाधिकरणे प्रतिभासेते। कथं वाऽपरोक्ष एवार्थोतीतज्ञानविशिष्टतया स्मृतौ प्रतिभासत इत्याद्युच्यते।

यत्राप्यनिमिषदृष्टेश्चिरतरकालं पश्यतोनुवृत्तावसायस्तत्रापीदानीन्तनप्रत्यक्षज्ञानसम्बन्धेनार्थ[5]स्यापरोक्षतोत्पद्यते (।) अतीतज्ञानाभावेनातीतज्ञानकर्म्मतायाश्चेदानीमभाव एव विनाश इति कथमुच्यते (।) उत्पत्तिविनाशरहितानुवृत्तावसाय एव बाधकः क्षणिकत्वानुमानस्येति।

यदप्युच्यते (।) यः प्रतिक्षणमन्यत्वम्वदति तस्य चायम्बाधः प्रत्यभिज्ञानमात्रेणानन्यत्त्वे तु विनष्टस्यापि तत्त्वावगमात्। मृतप्रत्यभिज्ञायामि[6]वेति (।)

तदपि निरस्तं। अनन्यत्वस्यैवाभावात्। नापि विनष्टाविनष्टयोरनन्यत्वं विरोधात्। न च तत्त्वावगमान्यथानुपपत्यानन्यत्वं सादृश्येनापि तत्त्वावगमस्य सम्भवात्। स इत्यङ्कशश्च न प्रत्यक्षोऽसन्निहितविषयत्वात्। स्मरणरूपत्वे चास्य न पूर्वदृष्टार्थग्राहित्वं स्पष्टप्रतिभासाभावात्। दृष्टार्थाध्यवसायकत्वेन 177a तु स्मृति[7]रूपत्वे भ्रान्तत्वं (।) स्व(ा)काराभेदेन दृष्टार्थाध्यवसायात्। अयमिति चांशः प्रत्यक्ष इष्यते (।) स्मरणप्रत्यक्षयोश्चैकत्वम्विरुध्यते। तस्मात् पूर्वविज्ञानविषयत्वरहिते पुरोवस्थितेर्थे सादृश्येन पूर्वज्ञानविषयत्वमारोप्य स एवायमिति मानसं ज्ञानं गृह्णाति। आरोपबलेन चातीतज्ञानकर्मताऽपरोक्षते एकाधिकरणे प्रतिभासेते। मरीचिकायां जलप्रत्यभि[1]ज्ञान इव। आरोपाभावे त्वेते भिन्नाधिकरणे एव प्रतिभासेते। जलस्मरणमरीचिकाग्रहणयोरिव।

तस्मात् स्थितमेतद् (।) भ्रान्तत्वादप्रत्यक्षत्वाच्च न प्रत्यभिज्ञातः क्षणिकत्वानुमानबाधेति। तेन पूर्वोत्तरे अकारप्रतीती भिन्नविषये एव। तथा द्रुतमध्यबिलम्बितानाङ्गकारादिप्रतिपत्तीनां भिन्नविषयत्वं। द्रुतादिभेदभिन्नगकारालम्बनत्वा[2]त्। गकार एव द्रुतो गकार एव विलम्वितं इति गकारैकत्वप्रतीतिस्तु सादृश्यनिमित्तैव।

तेन यदुच्यते।

> "न हि द्रुतादिभेदेपि निष्पन्ना संप्रतीयते।
> गव्यक्त्यन्तरविच्छिन्ना गव्यक्तिरपरा स्फुटा।
> तेनैकत्वेन वर्ण्णस्य बुद्धिरेकोपजायते।
> विशेषबुद्धिसद्भावो भवेद् व्यञ्जकभेदत"इति (।)[1]

---

[1] Kumārila.

**भावभेदेपि। नामसाम्याद् एकविषयत्वमप्ययुक्तं। घटादिष्वपि प्रसंगात्। तत्र दृष्टविरोधादसाधनत्वमिति चेद् (।) इहापि विरोधाभावः केन सिद्धः। यावत् तथाभिधेयतार्थाभेदेन व्याप्तो न[7] साध्यते तावत् सन्दिग्धो व्यतिरेकः। प्रति-** 35b

---

• तदपास्तं। यतो ध्वनिविशेष एव वर्ण उच्यते। तेन द्रुतो[3]च्चारिता ध्वनिविशेषा द्रुता गव्यक्तिरुच्यते। मध्योच्चारिता मध्यगव्यक्तिः (।) विलम्बितोच्चारिता ध्वनिविशेषा विलम्बिता गव्यक्तिः (।) न तु व्यञ्जकेभ्यो ध्वनिभ्योन्यो गकारः प्रतिभासते (।) गकारो गकार इति तेषु नामसाम्यमेव केवलं प्रतीयते। तथा ह्रस्वदीर्घप्लुतादिषु नैकाकारः। यतो ध्वनिविशेषा एव मात्राकालं प्रयुज्यमाना ह्रस्वोका[4]रो भवति। तथापरे ध्वनिविशेषा द्विमात्राकालं प्रयुज्यमाना दीर्घ आकारो भवति (।) त्रिमात्राकालं प्रयुज्यमाना ध्वनिविशेषाः प्लुतो भवति। तेन ह्रस्वदीर्घप्लुतानां स्वभावभेद एव प्रतिभासते। न त्वकारोऽभिन्नस्तेषु प्रतिभासते। अकार एव तु मात्रादिकालमुच्चार्यमाणो यथाक्रमं ह्रस्वदीर्घप्लुताः प्रतीयन्त इति शब्दमात्रमेव[5] केवलं। तेन यदुच्यते।

"स्वतो ह्रस्वादिभेदस्तु नित्यवादे विरुध्यते।
सर्वदा यस्य सद्भावः स कथं मात्रिकः स्वयं।
तस्मादुच्चारणन्तस्य मात्राकालं प्रतीयतां।
द्विमात्रम्वा त्रिमात्रम्वा न शब्दो मात्रिकः स्वयमि"ति[1] (।)

तदपि निरस्तं। ह्रस्वदीर्घप्लुतेष्वकारोकार इत्यनुयायिनोर्ज्ञानाभिधानयोरप्रवृत्तेः। अथापि स्यात् (।) पूर्वोत्तरकाल[6]भाविन्योः प्रतीत्योर्नामसाम्यादेकविषयत्वमिति (।)

अत आह। **प्रतीत्यादि**। पूर्वोत्तरयोरकारप्रतीत्योः प्रतिभासभेदः पूर्वोत्तररूपतया। स्वभावभेदो द्रुतमध्यविलम्बितादिभेदेन। तस्मिन् **प्रतीतिप्रतिभासस्वभावभेदेपि**। अकारप्रतीतिरकारप्रतीतिरित्येवं **नामसाम्यादेकविषयत्वमयुक्तं**। किं कारणं (।) **घटादिष्वपि[7] प्रसङ्गात्**। या पूर्वा घटप्रतीतिर्या च पश्चाद् अन्यघटप्रतीतिस्तयोरपि घटप्रतीतिर्घटप्रतीतिरिति नामसाम्यादेकविषयत्वं स्यात् (।) तथा चैको घटः सर्वत्र प्राप्नोति। तत्र घटादावेकत्वसाधने दृष्टविरोधो घटादीनामनेकत्वस्य दृष्टत्वात्। तस्मात् तत्रासाधनमेकत्वस्येति **चेत्**। **इहापि** वर्णेष्वप्येकत्वसाधने **दृष्टविरोधाभावः केन** प्रमाणेन **सिद्धः**। अत्रापि का[1]रणानां प्रतिपुरुषं भेदेन भेदः सिद्ध एव (।) लूनपुनर्जातेषु केशेष्विव सादृश्यादेकत्वाध्यवसाय इति यावत्। 177b

---

[1] Śloka-Sphoṭavāda 50,51

**करणभेदं च भिन्नस्वभावः शब्दः श्रुतौ निविशमानो यदैकः साध्यते किन्न घटादयः। तत्रापि शक्यमेवं व्यञ्जकभेदात् प्रतिभासभेद इति प्रत्यवस्थातुं (।)**

**करणानां समग्राणां व्यापारादुपलब्धितः ॥**
**नियमेन च कार्यत्वं व्यञ्जके तदसम्भवात् । (२६६)**

**न हि कदाचिदव्यापृतेषु करणेषु शब्दानुपलब्धिर्न चावश्यं व्यञ्जकव्यापारो र्थ[1]मुपलंभयति (।) क्वचित् प्रकासे (?शे)पि घटाद्यनुपलब्धेः (।) सेयं नियमेनोपलब्धिस्तद्व्यापाराच्छब्दस्य तदुद्भवे स्यादकर्त्तुर्व्यापारेपि तत्सिद्ध्ययोगात् (।)**

---

नामसाम्यादित्ययं हेतुरनैकान्तिक इत्याह। **यावदित्यादि। तथाभिधेयतेति** अकारप्रतीत्ये(?ति)रकारप्रतीतिरित्येवं नामसाम्येनाभिधेयता। **अर्थाभेदेन** विषयैकत्वेन **व्याप्त्या न साध्यते तावत् सन्दिग्धो व्यतिरेकः**। नामसाम्यं च स्या[2]द् भेदश्चेति। किञ्च। **प्रतिकरणभेदं** पुरुषभेदेन करणभेदं प्रति **भिन्नस्वभावः शब्दः श्रुतौ** श्रोत्रविज्ञाने **निविशमान.** समारोहन् **यदैकः साध्यते किन्न घटादयो**प्येकरूपास्साध्यन्ते। तेपि साध्यन्तां। विशेषोपि वा वाच्यः।

एकत्वेपि शब्दस्य व्यञ्जकभेदात् प्रतिभासभेद इति चेदाह। **तत्रापी**त्यादि। **तत्रापि** भिन्ने घटादौ **शक्यमेवं व्यञ्जकभे[3]दात् प्रतिभासभेद इति प्रत्यवस्थातुं** (।) (२६६)

किञ्च (।) **कारणानां समग्राणां व्यापारात्** परिस्पन्दादिलक्षणा**न्नियमेन** शब्दस्यैव (उप)**लब्धितः** कारणात् **कार्यत्व**म्प्राप्तं। किं कारणं (।) **व्यञ्जके** हेतौ **तदसम्भवात्**। नियमेन व्यङ्ग्यस्योपलम्भासम्भवात्।

**न ही**त्यादिना व्याचष्टे। **व्यापृतेषु करणेषु** न हि **कदाचिच्छब्दानुपलब्धिः** किन्तूपलब्धिरेव। **न चावश्यं व्यञ्जकव्यापारो[4]र्थमुपलम्भयति** ग्राहयति। किं कारणं। **क्वचिद्** घटादिशून्ये देशे **प्रकाशे** प्रदीपादिलक्षणे सत्य**पि घटाद्यनुपलब्धेः**। तस्मादविकलविज्ञानोत्पादसहकारिकारणस्य पुंसः। **सेयं** शब्दस्य तद्व्यापारात् कारणव्यापारा**न्नियमेनोपलब्धिस्तदुद्भवे**। करण**व्यापाराच्छब्द**स्योत्पत्तौ सत्यां **स्यात्**। ततश्च जन्य एव शब्दो न व्यङ्ग्यः।

ननु पूर्वं जनन[5]मात्रेण कारकं ज्ञानजननयोग्यत्वेनोत्पादकन्तु व्यञ्जकमेवेत्युक्तं। तेन तात्वादीनां व्यञ्जकत्वमेव युक्तं।

**नैष दोषो** यतः (।) कार्यमात्रमभिप्रेत्य जननमात्रेण कारकं (।) **ज्ञानजननयोग्यत्वेन तु** व्यञ्जक इत्युक्तं। न तु दृश्यकार्यापेक्षया। तथा **ह्यविकलसहकारिकारणस्य** पुंसः प्रदीपादिजनको नियमेन प्रदीपादेरुपलम्भकः **कार[6]को** न **व्यञ्जक** इत्यदोषः।

**व्यापिनित्यत्वादुपलंभ इति चेत् (।) क इदानीं घटादिषु समाश्वासः। तेषान्तथाऽनिष्टेरिति चेत् (।) शब्दः किमिष्टः। तत्समानधर्मा (।) न चास्य कश्चिदतिशय इत्युक्तं। प्रतिषिद्धे च व्यापिनित्यते।**

**घटादीनां व्यञ्जकान्तरसं[2]भवाददोषः। प्रकासो (?शो) ह्येषां व्यञ्जकः सिद्धः (।) कुलालादीनां व्यंजकत्वे तादृशा एव स्फुरंति (अति)शेरते च ततो व्यञ्जकातिशयात् कारका एव उपकारकस्य गत्यन्तराभावात्।**

**तदेतत् शब्देष्वपि तुल्यं। तत्रापीन्द्रिययोग्यदेशतादिभ्यः करणानामतिशयात् (।) घटादिकारकधर्मस्य च करणेषु दृष्टेः। तस्यैव प्रदीपादेर्विषयान्तरस्य[3] च**

---

अथ पुनः करणं शब्दस्याकर्त्तृ। तस्याकर्तुः करणस्य **व्यापारेण तत्सिद्ध्ययोगात्।** शब्दस्य सिद्ध्ययोगात्। व्यापिनः शब्दा नित्याश्च। ततो **व्यापिनित्यत्वाच्छब्दानां।** व्यञ्जकस्य करणस्य व्यापारात् सर्वत्रोपलब्धिः। घटादयस्तु न व्यापिनो नापि नित्याः। तेन ते व्यञ्जकव्यापारेण नावश्यमुपलभ्यन्त इति।

य[7]द्येवं **क इदानीं घटादिषु समाश्वासः।** निश्चयः। यथा ते न नित्या नापि व्यापिन इति। यावता तेपि नित्या व्यापिनश्च भवन्तु। कथं सर्वदा नोपलभ्यन्त इति चेत्। एतच्छब्देष्वपि तुल्यं। यत्तत्र प्रतिविधानं तद् घटादिष्वपि भविष्यति। **तेषां** घटादीना**न्तथा** व्यापिनित्यत्वे**नानिष्टेरिति चेत्। शब्दो** व्यापिनित्यत्वेन **किमिष्टः** (।) कस्मादिष्टस्**तत्समानधर्मा**।[1] घटादिसमानधर्मा। **प्रतिषिद्धे च व्यापिनित्यत्वे** प्रागिति यत्किञ्चिदेतत्। 178a

**घटादीना**मित्यादि परः। कारकव्यतिरेकेण **व्यञ्जकान्तरसद्भावाददोषः।** शब्देन तुल्यत्वप्रसङ्गदोषो नास्ति। व्यञ्जकान्तरमेव दर्शयन्नाह। **प्रकाशो** हीत्यादि। **प्रकाशो ह्येषां** घटादीनां **व्यञ्जको** लोके **सिद्धो** न कुलालादयः। **कुलालादीनां व्यञ्जकत्वे।** ते कुलालादय[2]**स्तादृशा एव** स्युः (।) यथा प्रदीपादयो न नियमेन घटमुपलम्भयन्ति। क्वचित् प्रकाशेपि घटस्याभावात्। तथा कुलालादयोपि भवेयुः (।) न चैवम् (।) **अतिशेरते च** कुलालादयः। कुलालादिव्यापारे सर्वदा घटादेर्भावात्। **ततो व्यञ्जकातिशयात्।** व्यञ्जकाद् भेदेन वृत्तेः। **कारका एव** कुलालादयः। किं कारणम् (।) **उपकारकस्य गत्यन्तराभावात्।** कारक[3]व्यञ्जकत्वव्यतिरेकेण प्रकारान्तराभावात्। तत्र व्यञ्जकत्वे निषिद्धे पारिशेष्यात् कारकत्वं कुलालादीनां (।) नैवं शब्दस्य करणमुक्त्वान्यद् व्यञ्जकान्तरं सिद्धं येन करणमेव शब्दस्य कारकं कल्प्येत। तस्माद् घटादिवैलक्षण्याच्छब्दो व्यङ्ग्य एव।

**तदित्यादि** सिद्धान्तवादी। **तदेतद्** व्यञ्जकान्तरसम्भवनं **शब्देपि तुल्यं।**

**कस्यचिद् व्यञ्जकान्तराभावात्। तत्कारणानि तेषां व्यञ्जकानि स्युः। तस्मान्न व्यक्तिः शब्दस्य।**

**भवन्ती वा करणेभ्योतिशयवत्ता वा शब्दस्य व्यक्तिः(।) आवरणविगमो विज्ञानं वा गत्यन्तराभावात्। तत्र नातिशयोत्पत्तिरनित्यताप्रसंगात् (।) तस्याः पूर्वापररूपहान्युपजननलक्षणत्वाद् (।) अथ (––)**

**तद्रूपावरणानां च व्यक्तिस्ते विगमा[4] यदि ॥**

---

यस्मात् **तत्रापि** शब्दे **इन्द्रिययोग्यदे[4]शतादिभ्यः** श्रोत्रेन्द्रियाच्छ्रोत्रयोग्यदेशावस्थानात्। आदिशब्दात् मनस्काराच्च। **करणानामतिशयात्**। अतिशय एव कथमिति चेदाह। **घटादी**त्यादि। ह्यर्थे चशब्दः। **घटादेर्ये कारकाः** कुलालादयः समग्रास्तेषां यो **धर्मो** नियमेन स्वकार्यारम्भकत्वन्त**स्य करणेषु दृष्टेः**। तान्यपि हि व्यापृतानि शब्दं नियमेन जनयन्ति। तस्मात् तान्यपि कुलालादि[5]वत् कारकाण्येव।

यदि च शब्दस्य व्यञ्जकान्तराभावात् करणानि व्यञ्जकानीष्यन्ते। तदा **तस्यैव** व्यञ्जकस्य **प्रदीपादेर्विषयान्तरस्य च कस्यचिदि**ति रसादेर्व्यञ्जकान्तरम्प्रदीपादिर्नास्ति। ततो **व्यञ्जकान्ताराभावात्**। **तत्कारणानि** प्रदीपादिकारणानि **चैषां** प्रदीपादीनां **व्यञ्जकानि स्युः**।

यत एवन्**तस्मान्न व्यक्तिः शब्दस्य** करणेभ्यः किन्तूत्पत्तिरेव। **भवन्ती[6] वा करणेभ्यः** सकाशाद् व्यक्तिस्त्रिधा भवेत्। (१) पूर्वावस्थात्यागेना**तिशयवत्ता वा शब्दस्य व्यक्ति**र्भवेत्। (२) उपलम्भा**वरणविगमो वा**। (३) शब्दालम्बनं (वि)**ज्ञान**म्वा व्यक्तिः। प्रकारत्रयव्यतिरेकेण **गत्यन्तराभावात्**।

(१) **तत्र नातिशयोत्पत्तिः** शब्दस्य व्यक्तिर**नित्यताप्रसङ्गात्**। भवत्वतिशयोत्पत्तिर[7]नित्यत्वन्तु कथमिति चेदाह। **तस्या** अतिशयोत्पत्तेः **पूर्व**रूपस्य या **हानिरपरस्य** पाश्चात्यस्य रूपस्य य(द्) **उपजननं** तल्ल**क्षणत्वात्**।

178b

(२) द्वितीयपक्षमाह। **अथे**त्यादि। तस्य शब्दस्य यज्जनकं **रूप**न्तस्योपलम्भप्रतिघातीनि स्तिमितवायवीयावयवसंयोगरूपाण्या**वरणानि** (।) ते**षां विगमः** प्रयत्नप्रेरितेन वायुना वियोगः। स **यदि** श[1]ब्दस्य **व्यक्तिस्ते** तव मीमांसकस्य मता। तदुक्तं।

"प्रयत्नाभिहतो वायुः कोष्ठ्यो यातीत्यसंशयं।
स संयोगविभागौ च ताल्वादेरनुवर्त्तते॥
वेगवत्वाच्च सोवश्यं यावद्वेगं प्रतिष्ठते।
तस्यात्मावयवानाञ्च स्तिमितेन च वायुना।
संयोगाश्च वियोगाश्च जायन्ते गमनाद् ध्रुवमि"ति॥ (श्लो० शब्द १२२-२४)

**अभावे करणग्रामसामर्थ्यं किं न तद्भवेत्। (२६७)**

**न ह्यावरणस्याकिंचित्कराणि करणानि समर्थानि नाम। विगमश्चाभावो न चाभावः कार्यं इति निवेदितमेतत्। नापि शब्दस्य नित्यस्य किंचिदावरण(म)-सामर्थ्यादित्युक्तं। तस्मान्नावरणे करणोपक्षेपः (।) नाप्येषामसामर्थ्यं तद्व्यापाराभावे शब्दानुपलब्धेः (।) अतो[5] युक्तमेते यच्छब्दान् कुर्युः (।)**

**अन्यथा।**

**शब्दाविशेषादन्येषामपि व्यक्तिः प्रसज्यत ॥**
**तथाभ्युपगमे सर्व्वकारणानां निरर्थता। (२६८)**

---

सा व्यक्तिः कथं क्रियते। यस्मादावरणविगमोऽभावस्तस्मिन्न**भावे** कथंचिदप्य[2]कार्ये **करणग्रामस्य** करणसङ्घातस्य **सामर्थ्यं किन्न तद् भवेत्** (।) नैवेति यावत्।

**न ही**त्यादिना व्याचष्टे। एतदाह (।) **आवरण**स्वरूपे निष्पन्ने**ऽकिंचित्करा**ण्येव **करणानि** न हि **समर्थानि** भवन्ति। आवरणविगमेपि न तेषां सामर्थ्यं। यस्माद् **विगमश्चाभावो न चाभावः कार्यं इति निवेदितमेतत् सामर्थ्यचिन्तायां।**

अभ्युपगम्य चैतदुक्तं। तदेव ना[3]स्तीत्याह। **नापी**त्यादि। **न शब्दस्य नित्यस्या**नाधेयातिशयत्वात् **किञ्चिदावरण**मस्ति येनावरणविगमो व्यक्तिः स्यात्। किं कारणं (।) तस्यावरणस्य नित्यवस्तुन्य**सामर्थ्यादित्यप्युक्तं।**

यत एवन्**तस्मान्नावरणे करणाना**मु**पक्षेपः**। करणान्यावरणविगमं शब्दस्य कुर्वन्तीत्येतन्नोपन्यसनीयमित्यर्थः।

**नाप्ये**वं कारणानां शब्दंप्रत्य**सामर्थ्य**मेव। किं कार[4]णं (।) **तद्व्यापाराभावे** करणानां व्यापाराभावे **शब्दानुपलब्धेः** (।) **अतो युक्तमेते** करणव्यापारा **यच्छब्दान् कुर्युः** (।)

**अन्यथा** यदि करणानि न कारकाणि किन्तु व्यञ्जकान्येव। तदा **शब्दाविशेषादन्येषामपि** घटादीनां **व्यक्तिः** कुलालादिभ्यः **प्रसज्यते**।

अथ पुनस्तेपि घटादयो व्यज्यन्त एव कुलालादिभिरितीष्यते। तदा **तथाभ्युपगमे सर्वकरणानान्निर[5]र्थता।**

तथा हि (।) व्यङ्ग्ये वस्तुन्यतिशयस्य कारको वाऽवरणाभावस्य कारको वा ज्ञानस्य वा कारको व्यञ्जकः स्यात्। अतिशयादेर्व्यक्तिस्वरूपस्य चाकार्यत्वात्। सर्वेषां व्यक्तिकारकाणां स्वरूपकारकाणां च निरर्थता।

**यदी**त्यादिना व्याख्यानं। **यदि** शब्दस्य **करणानि व्यञ्जकानि** कीदृशानि

**यदि सर्वकारणसमानधर्माण्यपि कारणादिव्यञ्जकानि न किंचिदिदानीं कार्यं स्यात्। न चैतद् युक्तं वस्तुनोनाधेयविशेषत्वात्। आवरणाभावस्याकार्यत्वाद् वस्तुवदेव तज्ज्ञानस्य सिद्धत्वात्। ज्ञानंप्रति कारकत्वे कस्यचित् तथाभूता[6]नाम-न्येषामपि तथाभावप्रसंगेन सर्व्वस्य कार्य(ता) प्रसंगात्।**

**तस्मादयं कारकाभिमतोर्थकलापो व्यक्तौ न क्रियायामिति व्यर्थ एव स्यात्। तथा चेवमनुपकार्योपकारकमनीहं जगत् स्यात्।**

**शब्दनित्यत्वे च।**

---

(।) **सर्वकारणसमानधर्माण्यपि** सर्वे कारणानां समाना धर्मा[6] येषां करणाना-मिति विग्रहः। तदा **न किञ्चिद्** घटादिकमपी**दानीं** कस्यचित् कुलालादेः **कार्यं स्या**च्छब्देनाविशेषात्। सर्वस्य व्यङ्ग्यत्वमिष्टमिति चेत् (।) **न चैतद्** युक्तं। किं कारणं (।) सर्वकारकाणां व्यञ्जकत्वेनाभिमतानामानर्थक्यप्रसङ्गात्। तथा-हि व्यञ्जकानां त्रयो विकल्पाः। व्यङ्ग्ये वस्तुन्यतिशयस्य वाऽवरणाभावस्य वा

179a ज्ञानस्य वा करणाद् व्यञ्जकः स्या[7]दिति।

न तावद् व्यङ्ग्यस्यातिशयकरणाद् व्यञ्जकः। किं कारणम् (।) **वस्तुनो**-वस्थितरूपस्या**नाधेयातिशयत्वात्**। नाप्यावरणविगमकरणात्। **आवरणा-भावस्याकार्यत्वात्**। नापि ज्ञानकरणाद् व्यञ्जकः। किं कारणं। **वस्तुवदेव** तद्विषयस्यापि **ज्ञानस्य** सत्कार्यवादिदर्शने **सिद्धत्वात्**। अथासदेव ज्ञानं क्रियते। तदा **ज्ञानंप्रति कारकत्वे कस्यचि**दिष्यमाणे। **तथाभूतानां** ज्ञानस्य कार[1]कैस्तुल्य-धर्माणा**मन्येषामपि** कुलालादीनान्**तथाभावप्रसंगेन**। घटादीन् प्रति कारकत्व-प्रसंगेन **सर्वस्य** वस्तुनः **कार्यताप्रसंगात्**। विशेषो वा वाच्यो येन ज्ञानं प्रति कारक-त्वं न घटादीन् प्रति। न चान्यो व्यक्तेः प्रकारः सम्भवति।

**तस्मादयं कारकाभिमतोर्थकलापो** घटादेः कस्यचिदपि न **व्यक्ता**वुपयुज्यते। वस्तुनो नाधेयविशेषत्वादिना व्य[2]क्तेर्निषिद्धत्वात्। **नापि क्रियाया**मुपयुज्यते। कार्यकत्वानभ्युपगमा**दिति व्यर्थ एव स्यात्**।

**तथा** चेति कारकाणां वैकल्ये सति। **इदं जगन्निरीहं** निर्व्यापारं **स्यात्**। किं भूतम् (।) **अनुपकार्योपकारकं**। न विद्यते उपकार्यमुपकारकं च यस्मिन्निति विग्रहः।

किञ्च (।) **शब्दनित्यत्वे** साध्ये (।) **साधनं प्रत्यभिज्ञान**मप्रयोगादि **यन्मत**मिष्टं। यथा नित्यः शब्द एकत्वेन प्रत्य[3]भिज्ञायमानत्वात्। तदुक्तं (।) संख्याभावात्। अष्टकृत्वो गोशब्द उच्चरित इति हि वदन्ति। नाष्टौ गोशब्दा इत्यनेनावगम्यते

**साधनं प्रत्यभिज्ञानं सत्प्रयोगादि यन्मतं ॥**
**अनुदाहरणं सर्व्वभावानां क्षणभङ्गतः। (२६९)**

**क्षणभंगिनो हि सर्वे भावा विनाशस्याकारणत्वादित्युक्तं। वक्ष्यते चोत्पत्तिमंतश्च परतः। सत्ताया आकस्मिकत्वायोगात्। तन्नेदं प्रत्यभिज्ञानं सत्प्रयोगादिकं क्वचिदन्वेति (।) स्थिरैकरूपे परापरस्वभावपरावृतिष्वेव दीपादिषु दृष्ट-** 36a

---

प्रत्यभिजानन्तीति। सतः प्रयोगात्। यत् प्रयुज्यते तत् प्राक् सत्। यथा वास्यादि च्छिदायां। प्रयुज्यते च शब्दोर्थप्रतिपादने तस्मात्सोपि प्रयोगात् प्राक् सन्निति। आदिशब्दात् परार्थमुच्चार्यमाणत्वादित्यादिपरिग्रहः। तदुक्तं (।) **नित्यस्तु स्या[4]द्दर्शनस्य परार्थत्वात्।** दर्शनमुच्चारणं (।) तत्परार्थमर्थं प्रत्याययितुं। उच्चारितमात्र एव विनष्टे शब्दे। न ततोर्थम्प्रत्याययितुं शक्नुयादतो न परार्थमुच्चार्येतेति। **अनुदाहरण**मित्यदृष्टान्तं। न हि नित्यं किंचिदस्ति यत्रैतत्साधनम्वर्त्तेत। किं कारणं (।) **सर्वभावानां क्षणभङ्गतः।**

एतदेव तावत् पदं विवृण्वन्नाह। **क्षणभङ्गिनो ही**त्यादि। **विनाशस्याकरणादित्युक्तं प्राक्। वक्ष्यते च** पश्चात्। विनाशद्वारेणानित्यतां प्रदर्श्य **उत्पत्ति**द्वारेणापि दर्शयन्नाह। उत्पत्तीत्यादि। **परतः** कारणा**दुत्पत्तिमन्तश्च** भावास्ततोपि न नित्यः। परत उत्पद्यन्त इति कुत एतत्। **सत्ताया आकस्मिकत्वायोगात्।** आकस्मिकत्वे देशादिनियमो न स्यादिति प्रागेवोक्तं। **तदिति** तस्मात् **प्रत्यभिज्ञानं सत्प्रयोगादिकं** लिङ्गं।[6] **स्थिरैकरूपे** वस्तुनि सपक्षभूते। **न क्वचिदन्वेति।** **अपरापरेणा**न्येनान्येन **स्वभावेन परावृत्ति**रुत्पत्तिर्यथा **प्रदीपादी**नान्तेष्वेव प्रत्यभिज्ञानादिलिङ्गम्भेदेन व्याप्तन्**दृष्टमिति विरुद्धमेव।** न चात्र दीपत्वादिसामान्यनिमित्तं प्रत्यभिज्ञानं सामान्यस्य पूर्वमेव निषिद्धत्वात्।

**ने**त्यादि परः। **न** विरुद्धं प्रत्यभिज्ञानं(।) किं कारणं। अभिन्नात् स्थिरैकरूपाज्जन्म यस्य[7] तस्या**भिन्नजन्मनः** प्रत्यभिज्ञानस्य **दीपादिषु भ्रान्त्या भावात्।** 179b भ्रान्तिः कथमिति चेत्। **साधर्म्यविप्रलम्भात्** पूर्वोत्तरयोः क्षणयोर्यत्सादृश्यन्तेन विप्रलम्भाद् वञ्चितत्वात्। एतत्कथयति (।) अभ्रान्तं प्रत्यभिज्ञानं लिंगत्वेनोपात्तन्तच्च नैव प्रदीपादिषु वर्त्तते।

**अभिन्नजन्मे**त्या चा र्यः। **केनावष्टम्भेन** केन प्रमाणेना**भिन्नजन्म**प्रत्यभि**ज्ञानमित्युच्यते।** नित्यस्य सामर्थ्याभा[1]वात्। एतच्च प्रत्यक्षस्यापि प्रत्यभिज्ञानस्य दूषणन्द्रष्टव्यं। प्रत्यभिज्ञायमानस्याभेदेन प्रतिभासनादिति चेत् (।) न (।) **तस्यैवाभेदस्य सर्वत्र वज्रोपलादिष्वपि पौर्वापर्येण चिन्त्यत्वात्।** यथा

**मिति विरुद्धमेव (।)**

**न (।) अभिन्नजन्मनः साधर्म्यविप्रलंभात्। भ्रान्त्या दीपादिषु भावाद् (।) अभिन्नजन्मेति केनावष्टम्भेनोच्यते। तस्यैवाभे[1]दस्य सर्वत्र पौर्वापर्येण चिन्त्यत्वात् (।) तथा भेदस्यापीति चेत्। तेनैव संशयोस्तु। न च संशयितात् सिद्धिः। विवेकादर्शनादेकत्वमिति चेत्। न (।) ज्ञानपौर्वापर्येण सदसत्त्वसिद्धेः। स्वभावविवेकसद्भावात्।**

---

पूर्वम्वज्रादिषु स्वरूपं किं पश्चादपि तदेवाहोस्विदन्यदेव केवलं सादृश्यादेकत्वविभ्रमः प्रदीपादिष्विवेति चिन्त्यमेतत्। यथा वज्रादिष्वभेदस्य चिन्त्यत्वन्**तथा भेदस्यापि** चि[2]न्त्यत्वा**दिति चेत्**। किम्भेदः पौर्वापर्येण प्रतिभासत इत्येतदपि निरूपणीयमेव।

**तेनैवे**त्याचार्यः। यतश्च नैकान्तेन भेदोऽभेदो वावधारयितुं शक्यस्तेनैवानवधारणेन **संशयोस्तु**। प्रत्यभिज्ञायमानेष्वर्थेषु भेदाभेदसंशयो भवतु। संशयादेव प्रत्यभिज्ञायमानत्वाद् भेदनिश्चय इति चेदाह। **न च संशयितात्** संशयविषयात् प्र[3]त्यभिज्ञानलिङ्गाच्छब्दस्यैकत्व**सिद्धिः**।

पूर्वक्षणादुत्तरस्य क्षणस्य **विवेकादर्शनाद्** विवेकाप्रतिभासनात् पूर्वोत्तरकालेषु भावस्यै**कत्वं सिद्धमिति चेत्**।

**ने**त्यादि प्रतिवचनं। तेनायमर्थो भावस्येदानीम्प्रतिभास एव क्षणप्रतिभासः। पूर्वापरकालसम्बन्धित्वेनाप्रतिभासनात्। क्षणस्य च स्वरूपेण प्रतिभास एव पूर्वादिक्षणाद् विवेकेन प्रतिभास[4]स्सु मे रु(?) भिन्नप्रतिभासवान्न त्वविनाभावेन पूर्वादिक्षणात् प्रतिभासमानात्। केवलं स विवेको नावधार्यत इति। तदर्थमनुमानं प्रवर्त्तते। तदाह न वज्रादिष्वविवेकस्यादर्शनमस्ति। किं कारणं (।) **पौर्वापर्येण** वज्रादिज्ञानानां पूर्वपरभावेन वज्रादेः **सदसत्त्वसिद्धेः**। तथा हि (।) वज्राद्यालम्बनमुत्तरं ज्ञानं प्रागभवत् स्वकारणविशेषस्य प्रागसत्त्वं साध[5]यति। पश्चाद् भवच्च सत्त्वमित्येवं ज्ञानपौर्वापर्येण वज्रादिषु सदसत्त्वसिद्धेः। **विवेकसद्भावाद्** भेदसद्भावात्।

एतदेव स्फुटयन्नाह। **यदी**त्यादि। **अपराण्युत्त**रकालभावीनि **ज्ञानानि प्राक्** पूर्वज्ञानकाले **सन्निहितकारणानि** स्युः **पूर्वज्ञानवज्जातान्येव स्युः** (।) न चैवं। तस्माद**जातानि तु** तानि ज्ञानानि प्राक्। स्व**कारणस्य वैकल्यं सूचयन्ति**। अन्यथा य[6]दि तेषां कारणं प्रागपि स्यात्। तत्समर्थम्वा भवेदसमर्थम्वा। यदि

**यद्यपराणि ज्ञानानि प्राक् सन्निहितकारणानि पूर्वज्ञानवद् या(?जा) तान्येव स्युः। अजातानि तु कारणवैकल्यं सूचयन्ति। समर्थस्य जननादसमर्थस्यापि पुनः सामर्थ्याप्रतिलंभात्(।) प्र[2]तिलंभे च स्थैर्यायोगात्। तदयं सत्प्रयोग इत्यपि जननमेव प्रयोक्तुः सामर्थ्यात्। स्वयं समर्थे तस्यानुपयोगात्। प्रयोग इत्यपीष्टसाधनसमर्थोत्पादनमेव (।) समानजातीयोपादानापेक्षमनपेक्षं वा वास्यादिप्रयोगवत्। कर्मादिप्रयोगवच्च कथ्यते।**

**यो हि मन्यते। समक्षे प्रत्यभिज्ञानं प्रत्यक्षमेव (।) ततः प्रत्यक्षादेव स्थैर्यं[3]-**

---

समर्थं प्रागपि जनयेत्। किं कारणं (।) **समर्थस्य जननात्**। अथासमर्थम् (।) पश्चादपि न जनयेत्। कस्माद् (।) **असमर्थस्याप्य**नाधेयातिशयत्वेन **पुनः** कुतश्चित् **सामर्थ्य(।)प्रतिलम्भात्**। अथ कुतश्चित् सामर्थ्यं प्रतिलभेत। तदा सामर्थ्यस्य **प्रतिलम्भे वा स्थैर्यायोगात्**। पूर्वासमर्थस्वभावहाने[7]रन्यस्य च समर्थस्योत्पादात्। 180a

तस्मात् क्रमभावीनि विज्ञानानि स्वविषयस्यापि क्रमं साधयन्तीति सर्वपदार्थानाम्भेदसिद्धेरनित्यत्वं (।) स एवायमिति ज्ञानं तु सदृशदर्शननिमित्तं।

यत एवन्**तस्मादयं सत्प्रयोग इत्यपि** योयं द्वितीयो हेतुरुच्यते। तेनापि शब्दस्य **जननमे**वोच्यते। किं कारणं (।) **प्रयोक्तुः** सकाशाच्छब्दस्य **सामर्थ्यात्**। अभिमत[1]कार्यकरणे शब्दस्य सामर्थ्यप्रतिलम्भादित्यर्थः। अन्यथा यदि प्रयोक्तुर्व्यापारात् प्रागेव वास्यादिकं शब्दो वा स्वकार्ये समर्थं स्यात्तदा **स्वयं सामर्थ्ये तस्य** प्रयोक्तुर**नुपयोगात्** पुरुषानपेक्षाणां स्वयमेव वास्यादीनां प्रवृत्तिः स्यात्। न च भवति। तस्मात् **प्रयोग इत्यपि**। **इष्टस्या**भिमतस्यार्थस्य च्छिदादेः **साधनं** सिद्धिस्तत्र **समर्थ**स्वभावस्यो**त्पादन[2]मेव** वास्यादेः **कथ्यते**। किम्भूतमुत्पादनं (।) समानजातीयं सदृशमुपादानं पूर्वं कारणभूतं क्षणमपेक्षत इति **समानजातीयोपादानापेक्षं** वा**स्यादिप्रयोगवत्**। छिदादिषु प्रयुज्यमानानां वास्यादीनां समानजातीयपूर्वक्षणापेक्षणात्। **उपादानानपेक्षं वा**। **कर्मादिप्रयोगवच्च**। आदिशब्दाद् वीणादिशब्दपरिग्रहः। न हि क[3]र्मादिषु प्रथमं प्रयुज्यमानेषु पूर्वसदृशक्षणापेक्षास्ति।

**योपि मन्यते** (।) मा भूत् प्रत्यभिज्ञानमनुमानं व्यभिचारात् यत् पुरोवस्थिते वस्तुनि **समक्षे प्रत्यभिज्ञान**न्तत्**प्रत्यक्षं** प्रमाणं। **ततः प्रत्यक्षादेव** प्रमाणाद् भावानां **स्थैर्यसिद्धिरिति। तदप्युत्तरत्र निषेत्स्यामः।**

अनया दिशा स्थैर्यसाधनायोपनीतः **कुहेतु**र्द्रष्टव्यः। यस्मा**न्नैवं कश्चिद्** सा[4]-

**सिद्धिरिति। तदप्युत्तरत्र निषेत्स्यामः।**

**दूष्यः कुहेतुरन्योपि;**

**नैव कश्चिद् धर्मो यः समानजाती(य)मन्वेति। सर्व्वधर्माणामेतदवस्थत्वात्। सर्वस्थैर्यप्रतिज्ञायाश्च यथाभिधानं युक्तिविरोधादन्येपि नित्यहेतवो वाच्यदोषाः।**

**बुद्धेरपुरुषाश्रये।**

**बाधाऽभ्युपेतप्रत्यक्षप्रतीतानुमितैः समं।[1] (२७०)**

**यदि व्यक्तिर्बुद्धिस्तदानुपूर्वी वाक्यं तस्या[4] अपौरुषेयत्वप्रसाधने। बुद्धीनां पुरुषगुणत्वाभ्युपगमात्। समयोऽस्य बाध्यते।**

**प्रत्यक्षं खल्वे(?ल्व)प्येतद् यदि ता बुद्धयः। पुरुषसंख्यातेभ्यः पुरुषगुणेभ्यो वा मनस्कारादिभ्यो भवन्तीति। न च कार्यता नामान्या भावाभावाविशेषाभ्यां।**

---

**धनधर्मोस्ति** स्थैर्यसाधनो **यः समानजातीयं** स्थिरैकस्वभाम्वस्त्वन्वेति। कस्मात् (।) **सर्वधर्माणामेतदवस्थानात्।** अपरापरस्वभावहान्युत्पादस्वभावत्वात्। **सर्वस्याः स्थैर्यप्रत्यभिज्ञायाश्च युक्तिविरोधा**दनुमानविरोधात्। कथं (।) **यथाभिधानं।** यथेह शास्त्रे क्षणिकत्वसाधनमभिहितमभिधास्यते च। तथा युक्तिविरोधात् कारणा**दन्येपि** प[5]रपरिकल्पिताः स्थैर्यसाधन**हेतवो वाच्यदोषाः।**

एवन्तावद् व्यक्तिक्रमो वाक्यं नेति प्रक्रम्य व्यक्तिस्त्रिविधा कल्पिता। शब्दस्यातिशयोत्पादनं। तदावरणविगमो (।) ज्ञानं चेति। तत्र नित्यत्वाच्छब्दस्य नातिशयोत्पादनं। आवरणाभावस्य चाकार्यत्वान्नाप्यावरणविगमो व्यक्तिरिति विकल्पद्वये प्रतिक्षिप्ते। ज्ञानं व्यक्तिरित्यवशिष्यते।

(३) तदा च व्यक्तिक्र[6]मो वाक्यं। बुद्धीनामानुपूर्वी वाक्यमापद्यते। न चैतद् युक्तम् (।) अबुद्धिस्वभावत्वाद् वाक्यस्य। तथाप्यभ्युपगम्योच्यते। व्यक्तिक्रमस्य च वाक्यस्यापौरुषेयत्वे साध्ये बुद्धेरेवापौरुषेयत्वं साध्यं स्यात्। तत्र **बुद्धेरपुरुषाश्रये** पुरुषानाश्रयणे साध्ये प्रतिज्ञाया **बाधा।** कैः (।) 180b **अभ्युपेतप्रत्यक्षप्रतीतानुमितैः** **सम**मेककालं अभ्युपेतेनाभ्युपगतेन[7]। प्रत्यक्षप्रतीतेनानुमितेन च। **तदानुपूर्वी** बुद्ध्यनुपूर्वी **वाक्यं।** सा च नार्थान्तरं बुद्धिभ्य इति **तस्या** आनुपूर्व्या **अपौरुषेयत्वप्रसाधने।** बुद्धेरेवापौरुषेयत्वं साधितं स्यात्। तत्र च **समयः** सिद्धान्तोस्य मी मां स क स्य **बाध्यते।** किं कारणं (।) **बुद्धीनां** स्वसिद्धान्ते **पुरुषगुणत्वेनाभ्युपगमात्।**

प्रत्यक्षबाधान्दर्शयन्नाह। **प्रत्यक्षं खल्वप्येतद् यदि ता बुद्धयो मनस्कारा[1]दिभ्यो भवन्ती**ति। आदिग्रहणादिन्द्रियपरिग्रहः। कीदृशेभ्यो मनस्कारादिभ्यः

**स च भावः प्रत्यक्षः** (।) **अभावोप्यनुपलब्धिलक्षणप्रत्यक्षसामर्थ्यसिद्ध इति वक्ष्यामः। तत एव पु[5]रुषकार्यता बुद्धीनामनुमेयान्वयव्यतिरेकलिंगत्वावस्याः** (।)

**आनुपूर्व्याश्च वर्णेभ्यो भेदः स्फोटेन चिन्तितः ॥**
**कल्पनारोपिता सा स्यात् कथं वा (ऽ)पुरुषाश्रया ।** (२७१)

**वर्ण्णव्यतिरेकिण्यानुपूर्वी स्फोटविचारानुक्रमेणैव प्रतिविहिता** (।) **नापि सा वर्ण्णस्वभावा। वर्ण्णस्वभावस्य एतद्विकल्पानतिक्रमात्। अतद्रूपेषु तद्रूप-**

---

पुरुष इति व्यवहारलाघवार्थं कृतसंकेतेभ्यः। एतत्स्वमतेनोक्तं। **पुरुषगुणेभ्यो** वेति व्यतिक्रम्य पुरुषस्य गुणेभ्यः। एतत्तु परमतेनोक्तं। तस्मात् मनस्कारादिभ्य उत्पद्यमानाया बुद्धेः कार्यत्वं प्रत्यक्षसिद्धमिति तस्या अपौरुषेयत्वे साध्ये प्रत्य[2]-क्षबाधा।

स्यान्मतं (।) कार्यताया अप्रत्यक्षत्वान्न प्रत्यक्षबाधेति चेदाह। नन्वित्यादि। कारणाभिमतस्य भाव एव भावः तदभावे चाभाव इत्येतौ **भावाभावविशेषौ। ताभ्यां नान्या कार्यता** भावस्य (।) **स** यथोक्तो **भावः प्रत्यक्षसिद्धः**। तदभावे त्वभावः कथं प्रत्यक्षसिद्ध इति चेदाह। **अभावोपि। अनुपलब्धिरेव लक्षणं** स्वभावो यस्याभावस्येति विग्रहः सोपि **प्रत्यक्ष[3]सामर्थ्यसिद्धं इत्युत्तरत्र वक्ष्यामः**। तदन्यविविक्तरूपम्भावमेव प्रतिपादयत् प्रत्यक्षं सामर्थ्यादभावं गमयतीति सामर्थ्य-ग्रहणं कृतं। यतश्च मनस्कारादिभावाभावाभ्यां बुद्धिभावाभावौ। **तत एव** तद्भावभावित्वात् **पुरुषकार्यता बुद्धीनामनुमेया**। किं कारणम् (।) **अन्वय-व्यतिरेकलिंगत्वादस्याः** कार्यतायाः। तदनेनानुमानबाधोक्ता।

अथ स्यान्न व्यक्ति[4]क्रमो वाक्यं। किन्तु वर्ण्णानुपूर्वी वाक्यमित्यत आह। **किं चे**त्यादि। **वर्ण्णेभ्यः** सकाशा**दानुपूर्व्या भेदः स्फो टे ने** ति पूर्वोक्तेन स्फोटवि-चारेण। अभिन्नापि प्रागेव निषिद्धा(।)भेदाभेदं च मुक्त्वा वस्तुनो नान्या गति-रस्ति। तदा च व्यापिनाम्वर्ण्णानामानुपूर्वी **कल्पनारोपिता स्यात्। कथं वा** तदानीम**पुरुषाश्रया**। पुरुषाश्रयैव स्यात्।

वर्ण्णेत्यादि[5]ना व्याचष्टे। **वर्ण्णेभ्यः** सकाशाद् **व्यतिरेकिणी** भिन्नस्वभावा-**नुपूर्वी**। पूर्वोक्तेन **स्फोटविचारानुक्रमेणैव प्रतिविहिता**।

वाक्यन्न भिन्नम्वर्ण्णेभ्यो विद्यतेनुपलम्भनाद् (।) इत्यादिना दूषणेनानुपूर्व्यपि प्रतिक्षिप्ता।

**नापि सा वर्णस्वभावा**। सरो रस इति प्रतिपत्तिभेदभावप्रसङ्गात्। न चापि सा तत्त्वान्यत्वाभ्यामवाच्या। **वस्तुस्वभावस्यैतद्विकल्पान[6]तिक्रमात्**। तत्त्वान्यत्त्व-

**समारोपप्रतिभासिन्या[6] बुद्धेरयं विभ्रमः स्यादानुपूर्वीति। सा च कथमपौरुषेयी बुद्धिविंठपनप्रत्युपस्थानाद्।**

## (ङ) निर्हेतुको विनाशः

**अपि चात्यंतिकस्य कस्यचित् स्वभावस्याभावाद् भवता ध्वनिनाऽनात्यन्तिकेन भवितव्यं। स चाहेतुकोन्यहेतुको वा। नित्यं भवेन्न च पुरुषव्यापारात् (।) तस्मात् पौरुषेयः।**

**कथमिदं गम्यतेऽनात्यन्तिको ध्वनिरन्यो वा भाव इति।**

36b **सत्तामात्रानुबन्धित्वान्नाशस्यानित्यता ध्वनेः ॥**

**न हि नाशो भावानां कुतश्चिद् भवति। तद् भावस्वभावो भवेद् भावस्यैव स्वहेतुभ्यः तद्धर्मणो भावात्।**

---

विकल्पानतिक्रमात्। तस्मा**दतद्रूपेषु** वस्तुभूतभिन्नानुपूर्वीरहितेषु वर्ण्र्षु **तद्रूपसमारोपप्रतिभासिन्या** आनुपूर्वीसमारोपप्रतिभासिन्या **बुद्धेरयम्विभ्रमः स्यादानुपूर्वीति। सा चा**नुपूर्वी **कथमपौरुषेयी** पौरुषेय्येव। किं कारणं (।) **बुद्धेविंठं**

181a (?)**पनेन** व्यापारेण **प्रत्युपस्थापनात्**। सन्दर्शितत्वात्।[7]

**अपि चात्यन्तिकस्य** नित्यस्य **कस्यचित्स्वभावस्याभावात्। भवता** विद्यमानेन **ध्वनिना** शब्देनावश्यम**नात्यन्तिके**नास्थिरेण **भवितव्यं। स च** ध्वनि**रहेतुकः** स्यात्। पुरुषव्यतिरेकेणान्यो हेतुरस्येत्य**न्यहेतुको वा**। तत्राहेतुकत्वे **नित्यम्भवेत्**। अन्यानपेक्षणात्। अन्यहेतुकत्वे तु **न च पुरुषव्यापाराद्** भवेत्। भवति च पुरुषव्यापारात्। **तस्मात् पौरुषे[1]य** इति गम्यते।

**कथ**मित्यादि परः। **अनात्यन्तिको ध्वनिरन्यो वा** पृथिव्यादिका**भाव इति** कथमिदं गम्यते।

**सत्ते**त्या चा र्यः। **नाशस्य सत्तामात्रानुबन्धित्वात्**। कारणा**दनित्यता ध्वनेः**। सन्नित्येव कृत्वा नाशो भवति न कारणान्तरमपेक्षते। संश्च शब्दः। तस्मान्न नित्य इति समुदायार्थः।

कस्मात् सत्तामात्रानुबन्धी विनाश इत्याह। **न ही**त्यादि। यस्मा**न्न**[2] **भावानां नाशो** नाम धर्मान्तरं **कुतश्चि**न्नाशकारणाद् **भवति**।

यत एवं (।) **तदि**ति तस्माद् **भावस्वभाव** एव नाशो **भवेत्**। कुत एतद् (।) **भावस्यैव स्वहेतुभ्यः** सकाशात् **तद्धर्मणो** विनाशधर्मणो **भावा**दुत्पत्तेः। एकक्षणस्थितिधर्मकत्वमेव विनाशः (।) तच्च हेतुभ्य एवोत्पद्यत इति यावत्।

**न च भावविशेषस्वभावस्तस्य निषेत्स्यमानत्वात् (।) तस्माद् भावमात्रस्वभावः स्यात्। तेन शब्दोन्यो वा सत्ताभाजनः सर्व्व एव भावोऽनात्यन्तिक इति सिद्धं।**

**न सिद्धं (।) तस्यैव विनाशस्यापरजन्मासिद्धेः। तथा हि (।) अग्निना काष्ठं दण्डेन घट इति वि[1]नाशहेतवो भावानां दृश्यन्तेऽन्वयव्यतिरेकानुविधानं हेतुतद्वतोर्लक्षणमाहुः।**

**न (।) पूर्वस्य स्वरसनिरोधेऽन्यस्य विशिष्टप्रत्ययाश्रयेण विकृतस्योत्पत्तेः।**

---

कृतकानामेव सतां विनाशो नान्येषां सतां। तदुक्तं (।) "सदका[3]रण वन्नित्यमि" ति(।)

**न चेत्यादि। न च भावविशेषस्य** कस्यचित्**स्वभावो** विनाशः। किं कारणं (।) **तस्यो**त्तरत्र **निषेत्स्यमानत्वात्। तस्माद् भावमात्रस्वभावः स्याद्** विनाशः। सत्तामात्रस्वभावः स्यात्। **तेन** कारणेन **शब्दोन्यो वा सर्व एव भावः सत्ताभाजनः** सत्ताधारः सन्निति यावत्। **अनात्यन्तिक इति सिद्धं।**

**न सिद्ध**मिति प[4]रः। किं कारणं (।) **तस्यैव विनाशस्यापरजन्मासिद्धेः।** परस्माज्जन्म परजन्म। न परजन्मापरजन्म। तस्यासिद्धेः। विनाशस्याहेतुकत्वासिद्धेरिति यावत्।

**तथा ह्यग्निना काष्ठं** दग्धं। **दण्डेन घटो** भग्न **इति विनाशहेतवो**ऽग्न्यादयः काष्ठादीनाम्**भावानान्दृश्यन्ते**। तथा ह्यग्न्यादिभावे काष्ठादीनां नाशस्तदभावे चानाश इ[5]त्य**न्वयव्यतिरेकानुविधानं** नाशस्यास्ति। एतच्च **हेतुतद्वतो**र्हेतुमतो**र्लक्षणमाहुः**। तदुक्तं।

"अभिघाताग्निसंयोगनाशप्रत्ययसन्निधिं।
विना, संसर्गितां याति विनाशो न घटादिभिरि"ति (।)

**ने**त्यादिना प्रतिषेधति। **ना**ग्न्यादयः काष्ठादेर्विना करणाल्लोके विनाशहेतवः प्रतीयन्ते। किन्तु पूर्व**पूर्वस्य** काष्ठादिक्षण[6]स्य **स्वरसनिरोधे** स्वयमेव निरोधे सति। **अन्यस्यौ**त्तरस्य क्षणस्य **निकृतस्य** भस्मादि**रूपस्योत्पत्ते**रग्न्यादयः काष्ठादीनां विनाशहेतवः प्रज्ञायन्ते न तु विनाशस्य करणात्। कुतः पुनस्तस्य विकृतस्योत्पत्तिरित्याह। **विशिष्टे**त्यादि। **विशिष्टः प्रत्ययो**ऽग्न्यादिः सहकारी तदा**श्रयेण**।

अभ्युपगम्या[7]पि ब्रूमः (।) **अस्तु वाग्निः काष्ठविनाशहेतुः** (।) **स नाशोग्नि-** 181b

**अस्तु वाग्निः काष्ठविनाशहेतुः। स नाशोऽग्निजन्मा किं काष्ठमेवाहोस्विदर्थान्तरं॥**

**अग्नेरर्थान्तरोत्पत्तौ भवेत् काष्ठस्य दर्शनं। (।२७२॥)**
**अविनाशात्स एवास्य विनाश इति चेत्कथं।**

**किमित्यर्थान्तरादर्थान्तरजन्मनि काष्ठमभूतं नाम। न[2] दृश्यते वातिप्रसंगो ह्येवं स्यात। स एवास्य विनाश इति चेत् (।) यदि स एवाग्निजन्माऽभावस्तदिवमभूतत्वान्न दृश्यत इति।**

**भवतु तस्येदन्नामाभाव इति तथापि। कथमन्योऽन्यस्य विनाशः (।) न हि कस्यचिदर्थस्य नामकरणमात्रेण काष्ठं न दृश्यत इति युक्तं। न चान्योऽन्यविनाशोतिप्रसंगात्। विशेषाभावात् तस्यार्थान्तरत्वेन[3] वस्तुभूतस्य तदन्येभ्यः। काष्ठे-**

---

**जन्मा**। अग्नेर्जन्म यस्येति विग्रहः। **किं काष्ठमेवाहोस्वि**त्काष्ठा**दर्थान्तर**न्तत्राग्नेर्विनाशकम् (।)

हेतोस्सकाशान्नाशस्यार्**थान्तरस्योत्पत्तौ भवेत् काष्ठस्य दर्शनं**। किं कारणम् (।) **अविनाशात्**। काष्ठस्य **किमित्यर्थान्तरात्** काष्ठा**दर्थान्तरस्य** नाशस्योत्पत्तौ **जन्मनि** सति **काष्ठमभूतं** विनष्टं **नाम**।[1] नैवाभूतमिति यावत्।

यदि नामाविनष्टन्तथाप्यर्थान्तरोत्पत्या तस्य दर्शनमिति चेदाह। **न दृश्यते वेति** (।) किमिति **न दृश्यते**। दृश्यत एव। यदि त्वर्थान्तरोत्पत्यार्थान्तरं विनष्टं **न दृश्यते वा**। **तदातिप्रसङ्गो ह्येवं स्यात्**। अर्थान्तरस्य यस्य कस्यचिदुत्पत्या सर्वमभूतं स्यात्। न वा दृश्येत। **स एव** पदार्थोऽग्निजन्मा। न सर्वः। **अस्य** काष्ठस्य **विनाशो**[2] लोके विनाशरूपतया प्रतीते**रिति** यावत्।

एतदेव ग्रहणकवाक्यं **यदी**त्यादिना व्याचष्टे। **यदि स एवाग्निजन्मा** काष्ठस्या**भावो** विनाशः। **तदिति** तस्मा**दिदं** काष्ठम**भूतत्वाद्** विनष्टत्वा**न्न दृश्यत** इति।

**भव**त्वित्यादिना प्रतिषधति। **भवतु तस्या**ग्निजन्मनोर्थ**स्येदन्नाम** संज्ञा यदिद**मभाव इति**। **तथापि** नाममात्रेण **कथमन्यान्यस्य**[3] विनाशः। **न** हि **कस्यचिदर्थ**स्याग्निजन्मनो विनाश इति **नामकरणमात्रेण काष्ठं न दृश्यत इति युक्तं**।

ननु लोकप्रतीतत्वाद्विनाश एवासौ न तस्य विनाश इति नामकरणमात्रमित्यत आह।

**न चान्यः** पदार्थोऽन्यस्य **विनाशोऽतिप्रसंगात्**। सर्वे पदार्थाः काष्ठस्य विनाशः स्याद् (।) एतच्चानन्तरोक्तमेव स्मरयति।

**ऽग्निकृतः स्वभावो विनाशो न सर्व्व इति चेत्** (।) **काष्ठ इति कः सम्बन्धः। आश्र-याश्रयिसम्बन्धश्चेत्** (।) **न** (।) **तस्य निषेत्स्यमानत्वात्। जन्यजनकभावश्चे-दग्नेरिति किं काष्ठादेव भावात्**(।)**तदपेक्षत्वादुत्पत्तेरदोष इति चेद्** (।) **अन-तिशयलाभिनः कापेक्षा। लाभे वाऽपरकाष्ठजन्म स्यात् पूर्व्वमप्रच्युति[4]कारणं तथैव दृश्येत। तत एवाग्नेः पूर्व्वविनाश इति चेत्**(।) **कः पूर्व्वेणास्य सम्बन्ध**

---

एवम्मन्यते। यथा[4] सर्वपदार्थानामर्थान्तरत्वात् न काष्ठविनाशरूपतया प्रतीतिस्तथाऽग्निकृतस्याप्यर्थान्तरत्वान्न काष्ठविनाशरूपतया प्रतीतिः स्यात्।

स्यादेतद् (।) यद्यर्थान्तरत्वादग्निकृतस्यार्थस्य न विनाशरूपता। धूमस्यापि तर्ह्यग्निकार्यता न स्यादर्थान्तरत्वाद् घटवत्। भवति च तदर्थान्तरत्वाविशेषेप्यग्निकृतस्य काष्ठविनाशरूपता भवि[5]ष्यतीति (।)

अत आह। **अविशेषात्। तस्याग्निकृतस्य** वस्तुभूतस्य काष्ठाद**र्थान्तरत्वेन तदन्येभ्यो** घटादिभ्यो **विशेषाभावात्**। कथम्विनाशरूपता निवृत्तिरूपत्वाद् विनाशस्येति भावः। धूमस्य त्वर्थान्तरत्वेप्यग्निकार्यत्वं युक्तमेव। अर्थान्तरस्याग्निकार्यत्वेन सह विरोधाभावादिति यत्किञ्चिदेतत्।

**काष्ठेग्निकृतः स्वभावो नाशो न[6]** सर्वः घटादिस्ततो नातिप्रसंग **इति चेत्**।

**काष्ठे**ऽयमग्निकृतो विनाश **इति** काष्ठविनाशयोः **कस्सम्बन्धः**। परस्परमनुपकार्योपकारत्वात्। नैव सम्बन्धोस्ति।

काष्ठमाश्रय आश्रयोस्यास्तीत्याश्रयी विनाशः। तत **आश्रयाश्रयिसम्बन्धोस्तीति चेत्**।

**नै**तदेवं। तस्याश्रयाश्रयिसम्बन्धस्य **निषेत्स्यमानत्वात्**।

विनाशो[7] जन्यः। तस्य काष्ठं जनकं। ततो नाशकाष्ठयो**र्जन्यजनकभावसम्बन्धश्चेत्**। 182a

**तदाग्नेरिति किं**। अग्नेः सकाशान्नाशो भवतीति किमुच्यते। किं कारणं (।) **काष्ठादेव** तस्य नाशस्य **भावादुत्पत्तेः**।

**तदपेक्षा**दग्न्यपेक्षात् काष्ठान्नाश**स्योत्पत्तेरदोषः**। अग्निकृतो नाशो न स्यादिति यो दोष उक्तः स नास्तीति **चेत्**।

वह्नेः सकाशाद(न)**तिशयलाभि[1]नः** काष्ठस्य वह्निम्प्रति **कापेक्षा**। नैव काचित्। वह्नेः सकाशात् काष्ठस्यातिशय**लाभे वाऽपरस्य** द्वितीयस्य **काष्ठ**स्यातिशयसंज्ञकस्य **जन्म स्यात्**। तथा च **पूर्वकाष्ठमप्रच्युतिकारणं**। नास्य प्रच्युतिकारणमस्तीति विग्रहः। **तथैव** प्राग्वद् **दृश्यते**।

स्यादेतद् (।) यत एवाग्नेरतिशयवतो द्वितीयस्य काष्ठस्य जन्म। **तत एवाग्नेः**

**इति स एव प्रसंगोऽपर्यवसानश्च (।)**

**तदवश्यं विनाशसम्बन्धयोग्यमुत्तरमतिशयं प्रत्युपकुर्वाणोग्निरपूर्व्वमेव जनयतीति पूर्व्वन्तदवस्थं दृश्येत। काष्ठविनाश इति च काष्ठाभाव उच्यते (।) न चाभावः कार्यः तत्कारी वा कारक[5] एवेत्यनपेक्षणीय एवेत्युक्तं।**

**स्वभावाभावस्य च ततो भेदे। ततो निवर्त्तमानस्य भावस्य स्वभाव एव समर्थितः स्यादिति कथमभूतो नाम।**

**तस्मान्न (।)**

**अन्योन्यस्य विनाशास्तु काष्ठं कस्मान्न दृश्यते ॥ (२७३)**

---

**पूर्वस्य** का[2]ष्ठस्य **विनाश इति** (चेत्)।

**कः पूर्वेण** काष्ठे**नास्य** वह्निकृतस्य विनाशस्य **सम्बन्ध इति स एव प्रसंगः**। काष्ठ इति कः सम्बन्ध इत्यनन्तरमेवोक्तः।

अथाप्याश्रयाश्रयिभावादिकमाश्रीयते। तदा तस्य निषेत्स्यमानत्वादित्यादि सर्वं पुनरावर्त्तते इत्य**पर्यवसानश्च** प्रसङ्गः स्यात्।

**त**दिति तस्मा**दवश्यं विनाशसम्बन्ध**स्य **योग्य**ङ्काष्ठस्यो[3]**त्तरमतिशयं प्रत्युपकुर्वाणोग्निरपूर्वमेव** काष्ठञ्**जनयतीति पूर्वं** काष्ठन्**तदवस्थन्दृश्ये**तेत्युपसंहारः।

किञ्च। **काष्ठविनाश इति काष्ठाभाव उच्यते**(।)**न चाभावः कार्यः**। विधिना कार्यत्वोपगमे तस्य भावत्वप्रसङ्गात्। तस्मादभावं करोति भावन्न करोतीति। क्रियाप्रतिषेधमात्रं। तथा च **तत्कारी** चाभावकारी **वाकार एव** क्रियाप्रति[4]षेधमात्रत्वा**दिति** कृत्वा काष्ठविनाशेन वह्न्यादिर**नपेक्षणीय इत्युक्तं सामान्यतद्वतोराधाराधेयचिन्तास्थाने**।

किञ्च (।) **स्वभावाभावस्य** काष्ठादिस्वभावस्य योऽभावो नाशस्तस्य **ततः** काष्ठादिस्वभावाद् **भेदे**भ्युपगम्यमाने। ततोर्थान्तरादभावात् काष्ठादिर्भावो निवर्त्तते। **तत**स्तस्मादभाव**न्निवर्त्तमानस्य** काष्ठादेः **स्वभाव एव समर्थितः**[5] **स्यात्**। असतो निवर्त्तमानस्य सत्त्वमेव समर्थितं स्या**दिति** कृत्वा **कथम**ग्न्यादिकृतेन विनाशेन काष्ठादिर**भूतो नाम**।

यत **एवन्तस्मान्न अन्योन्यस्य विनाशः**। अर्थान्तरमर्थान्तरस्य न विनाश इत्यर्थः।

अभ्युपगम्यापि ब्रूमः (।) अस्त्वन्यो विनाशस्तस्मिन्नर्थान्तरे **वह्निकृते काष्ठ**न्तदवस्थमेवेति **कस्मान्न दृश्यते**। एतदेव साधयन्नाह। **कोय[6]म्विरोधः**।

**कोऽयमर्थान्तरभावकाष्ठदर्शनयोर्विरोधः ।।**

**तत्परिग्रहत[6]श्चेत् न तेनानावरणं यतः ।**

**यदि तेनार्थान्तरेण परिगृहीतमिति का[6]ष्ठं न दृश्येत। तत्काष्ठस्यावरण-मित्यापन्नं। न चैतद् युक्तम् (।) आवरणं हि दर्शनं विवध्नीयान्नाभिघातादीनि द्रव्यसामर्थ्यानि (।) सर्व्वप्रति (ब) न्धे च।**

---

अग्निजनितस्य विनाशस्यार्थ**न्तरस्यै** यो **भावः**। यच्च **काष्ठस्य दर्शनन्तयोः**। तथा च काष्ठन्तदवस्थं दृश्येत।

ननु "योसावर्थान्तिरं भावो वह्निकृतः स काष्ठविनाशः। विनाशरूपतया प्रतीतेः। विनाशश्चाभावो यश्च काष्ठाभावः। स काष्ठविरोधिरूप एव क्रियते। न चायमर्थान्तरत्वाद् घटवद् विरोधिरूपतया कर्त्तुमशक्यः[7] (।) न हि घटवदर्थान्तरत्वाद् धूमोग्निकार्यो न भवति। तस्माद् यथार्थान्तरभूतोपि धूमोग्निना क्रियते, तथा विरोधिरूपो विनाशः क्रियते। ययोश्च परस्परपरिहारेण विरोधस्तयोरेकभाव एवापरस्यादर्शनमिति कथमग्निकृतस्यार्थान्तरस्य विनाशसंज्ञितस्य विरोधिनो भावे काष्ठस्य दर्शनं स्यादित्युच्यत" इति श ङ्क रः।[1] 182b

तदयुक्तं [1] (।) यतोर्थान्तिरस्याग्निकार्यत्वेन सह विरोधाभावाद् (।) धूमस्यार्थान्तिरत्वेप्यग्निकार्यत्वमविरुद्धमेव। वह्निकृतस्य त्वर्थान्तिरस्य भवनधर्मतया भावरूपता। यश्च भावः स कथमभावो वः (।) विरोधाद् विनाशश्चाभाव इष्यते। ततोर्थान्तिरभावेन विरुद्धो विनाशः। न चार्थान्तिरस्यापि विनाशरूपतया प्रतिभासनात्। काष्ठादिविनाशरू[2]पता। स्वरसनिरोधो हि निमित्तम्विनाशप्रतिभासे।

स्वरसनिरोधानभ्युपगमे तु कथमर्थान्तिरस्यापि विनाशरूपतया प्रतिभासो भावरूपत्वादित्यादावेवोक्तं। तत्कथमुच्यते (।) विनाशाख्यस्यार्थान्तिरस्य विरोधिनः कृतकत्वात् काष्ठस्यादर्शनमिति। नीरूपत्वे तु विनाशस्य स्याद् भावेन सहायं विरोधः (।) किन्तु तदाप्यर्थान्तिर[3]त्वं हेतुजन्यत्वं चास्य न स्यान्नीरूपत्वादेव। तस्मादग्निनार्थान्तिरस्य करणे काष्ठन्तदवस्थं दृश्येत।

**तेना**ग्निकृतेनार्थान्तिरेण **परिग्रहतः** स्वीकारात् काष्ठं न दृश्यत इति **चेत्**। एवं सति तदर्थान्तरं काष्ठस्यावरणमिति प्राप्तं। तच्च न युक्तं (।) **यतो न तेना**र्थान्तिरेण काष्ठस्या**वरणं** सम्भवति।

**यदी**त्यादिना व्याचष्टे। **तेनार्थान्तरेणा**ग्नि[4]ना कृतेन। **तदि**त्यग्निकृतमर्थान्तरं। **न चैतदा**वरणकल्पितं **युक्तं**। यस्मा**दावरणं हि**। आव्रियमाणेर्थ**दर्शनम्विबध्नीयात्**। **नाभिघातादीनि द्रव्यसामर्थ्यानि** विबध्नीयात्। अन्धकारा-

**न त्वनेनैव द्रव्यं विनाशितं स्यात्। सर्वशक्तिप्रच्यावनात् पुनस्तत्राप्यग्नाविव प्रसंगादनवस्था।**

**अप्रच्युतेषु वा चास्याभिघातसामर्थ्यादिषु। सता वान्येनास्य न किञ्चिन्ना-** 37a **शितं।[7] यदि चाग्निसमुद्भवस्य विनाशाख्यस्यार्थस्य परिग्रहात् काष्ठं न दृष्टं॥**

विनाशस्याविनाशित्वं स्यादुत्पत्तेस्ततः पुनः॥ (२७४)
**काष्ठस्य दर्शनं;**

**अवश्यं ह्युत्पत्तिमता विनाशेन विनष्टव्यं। तस्मिन् विनष्टे पुनः काष्ठादीना-मुन्मज्जनं स्यात्।**

हन्तृघाते चैत्रापुनर्भवः (।)

---

वृतानां घटादीनामभिघातादिदर्शनात्। तत्र स्वदेशे परस्योत्पत्तिविबन्धोभि-घातः। आदिशब्दाद् गन्धरसादिपरिग्रहः। अथावर[5]णं सर्वसामर्थ्यं काष्ठस्य निबध्नीयात्। तदा **सर्वप्रतिबन्धे चाभ्युपगम्यमाने। न त्वनेनै**वावरणेन काष्ठ-**न्नाशितं स्यान्न** वह्निना। किं कारणं (।) तेनैवास्य काष्ठस्य **सर्वशक्तिप्रच्या-वनात्**। तथा च सति **पुनस्तत्राप्यग्नि**कृतेर्थान्तरे नाशहेताव**ग्नाविव प्रसंगात्**। काष्ठविनाशं प्रति योग्नौ दोषो विस्तरेणोक्तः सोर्थान्तरेणाप्य[6]ग्निकृतेन काष्ठ-नाशे क्रियमाणे स्यात्। तथा **चानवस्था**। तेनाप्यर्थान्तरेणाग्निकृतेन नाशेना-परमर्थान्तरन्नाशाख्यं कर्त्तव्यन्तेनाप्यपरमित्यनवस्था स्याद्।

अथ मा भूदेष दोष इत्यप्रच्युता एव काष्ठस्याभिघातादिसामर्थ्यादयः।

तदाप्य**प्रच्युतेषु वास्य** काष्ठस्या**भिघातसामर्थ्यादिषु। सता वा** तेना**न्येना**ग्नि-183a जनि[7]तेन काष्ठस्य **किं विनाशितं** येन तदावरणन्तथा च काष्ठं दृश्येत। **यदि चे**त्यादि। (।) **अग्नेः समुद्भवो** यस्येति विग्रहः। अग्निसमुद्भूतेन **विनाशा-ख्येनार्थेन परिग्रहा**दित्यर्थः। तदा **विनाशस्य विनाशित्वं स्यात्**। किं कारणम् (।) **उत्पत्तेः**। उत्पत्तिमत्वाद् विनाशोपि काष्ठवद् विनाशी स्यादिति यावत्। **ततो** विनाशविनाशात् **पुनः काष्ठस्य दर्शनं** स्यात्।

**अ**[1]**वश्य**मित्यादिना व्याचष्टे। **उत्पत्तिमता** सता काष्ठ**विनाशेनावश्यं विन-ष्टव्यं। तस्मिन्** काष्ठनाशे **विनष्टे** सति **पुनः काष्ठादीनामुन्मज्जनं स्यात्**। प्रादुर्भावो भवेत्।

**हन्तृघाते**त्यादिना परमाशंकते। चैत्रस्य यो हन्ता तस्य **हन्तुर्घाते** सति **यथा**। हतस्य **चैत्रस्यापुनर्भावः (न)** पुनरनुत्पत्तिः। **अत्रापि** काष्ठनाशे विनष्टे**प्येवं** काष्ठ-स्यापुनर्भाव **इ**[2]**ति चेत्**।

**यथाऽत्राप्येवमिति चेत् हन्तुर्नामरणत्वतः (।२७५)**

**विनाशविनाशेपि न वस्तुनः प्रत्यापत्तिः (।) न हि हन्तरि हतेपि तद्धतः प्र[1]त्युज्जीवतीति चेत् (।) न (।) हन्तुस्तद्घातहेतुत्वात्। न ब्रूमो विनाशहेतोरग्निदण्डादेर्निवृत्तौ भावेन भवितव्यमिति। किन्तर्हि (।) भावाभावस्यात्यन्तानुपलब्धिलक्षणस्य। तन्निवृत्तौ कान्या गतिः स्वभावस्थितेः। हन्ता हि चैत्रस्य न नाशकल्पः (।) किन्तर्हि (।) दण्डादिकल्पः। नाशकल्पं ह्यस्य मरणं तन्निवृत्तौ स्यादेवास्य पुनर्भवः॥**

**अनन्यत्त्वे विनाशस्य स्यान्ना[2]शः काष्ठमेव तु (।)**
**तस्य सत्त्वादहेतुत्वं नातोन्या विद्यते गतिः॥ (२७६)**

---

हन्तुरित्यादिना प्रतिविधत्ते। नेदं समाधानं युक्तं। किं कारणं (।) **हन्तुरमरणत्वतः**। न हि हन्ता चैत्रस्य मरणस्वभावः। किन्तर्हि (।) मारयिता। ततो युक्तं यत् तन्नाशे चैत्रस्यापुनर्भवनं। मरणे त्वनिवृत्तेऽवश्यं पुनर्भवनं स्यात्।

विनाशेत्यादिना व्याचष्टे। **विनाशस्य विनाशेपि न वस्तुनः प्रत्यापत्तिर्न** पूर्वरूपगमनं। यस्मा**न्न हि**[3] **हन्तरि हतेपि तद्धत**स्तेन हन्त्रा पुरुषेण हतः **प्रत्युज्जीवति**। नायम्परिहारो युक्तः। कस्माद् (।) **हन्तुः** पुरुषस्य **तद्घातहेतुत्वात्**। तस्य चैत्रस्य यन्मरणन्तद्धेतुत्वात्। न त्वसौ हन्ता मरणस्वभावः।

एतदेव स्पष्टयन्नाह। **नेत्यादि**। **नाशहेतोरग्निदण्डादेर्निवृत्तौ** सत्याम्विनष्टेन **भावेन पुनर्भवितव्यमिति न ब्रूमः**। एवमभिधाने भवेदेष परि[4]हारः। **किन्तर्हि** (।) वह्न्यादिना काष्ठादे**र्भावस्याभावो** यः क्रियते **तस्य**। किम्भूतस्य (।) **अत्यन्तानुपलब्धिलक्षणस्य**। कर्म्मस्था च क्रियात्रोपलब्धिः। तत्प्रतिषेधेनात्यन्तानुपलब्धिः सर्वसामर्थ्यविरह उच्यते। **तस्यै**वंभूतस्याभावस्य **निवृत्तौ** सत्यां। स्वभावावस्थितेः सकाशाद् भावस्य **कान्या गतिः**। **स्वभावस्थिति**रेव गतिरिति यावत्।

हन्तरि तु विनष्टे न[5] युक्तं पुनर्भवनं। यस्मा**द्धन्ता हि चैत्रस्य न नाशकल्पः**। **किन्तर्हि** (।) **दण्डादिकल्पः** दण्डादितुल्यः नाशहेतुत्वात्। **नाशकल्पं ह्यस्य** चैत्रस्य **मरणं** (।) **तन्निवृत्तौ** तस्य नाशकल्पस्य मरणस्य निवृत्तौ **स्यादेवास्य** चैत्रस्य **पुनर्भावः**।

एवन्तावत् नाशस्यार्थान्तरत्वे दोष उक्तः।

अनर्थान्तरत्वमधिकृत्याह। **अनन्यत्वेपी**त्यादि। वस्तुनो **नाशस्यानन्य[6]त्वेपि स्यान्नाशः काष्ठमेव तु**। **तस्य** च काष्ठस्य स्वहेतोरुत्पन्नस्य **सत्त्वात्**। न

**अनर्थान्तरभूतो विनाशः काष्ठात्। तदेव तद् भवति। तच्च प्रागेवास्तीति किमर्थं (?त्र सामर्थ्य)म्वन्ह्यादीनां। तस्मात् तदनुपकारात् तेन नापेक्षन्ते कथं चिन्नाप्यस्येदमिति सम्बन्धमर्हति। तस्योपकारनिबन्धनत्वात् (।) अन्यथाति-प्रसंगात्।**

**पारंपर्येणोपकारेप्य[3]वश्यमयं विकल्पोन्वेति (।) तत्किमुपकारोर्थान्तरमा-होश्वि (?स्वि)त् तदेवेति। तदर्थान्तरत्वेपि तस्येति पुनरुपकारत्वादिपर्यनुयोग-स्तदवस्थः। तथाऽनन्यत्वे। तस्मात् सतो रूपस्य तत्त्वान्यत्वाव्यतिक्रमात्। उप-कारोत्पादनस्य च रूपनिष्पादनलक्षणत्वात्। तदतत्क्रियाविकलो न कर्तैवेति[4]**

---

वन्ह्यादिभिः किञ्चित् कर्त्तव्यमिति तत्स्वभावस्य नाशस्याहेतुत्वं। **नातस्तत्त्वा-**न्यत्वविकल्पान्नाशस्य वस्तुधर्मस्य **विद्यतेन्या गतिः।**

**अनर्थान्तर** इत्यादिना व्याचष्टे। **काष्ठादनर्थान्तरभूतो** यदा **विनाशस्तदा**

183b **तदेव** काष्ठमेव तद्विनाशाख्यम्वस्तु[7] **भवति। तच्च** काष्ठादि। वन्ह्यादिसन्निधा-नात् **प्रागेवास्तीति। किम**त्र काष्ठादौ विनाश्ये **सामर्थ्यम्वन्ह्यादीना**मिति द्रष्टव्यं। क्वचिद् दण्डादीनामिति पाठः स तु घटादीन् पुरोधाय व्याख्येय। **तस्मात् तदनुकारात्।** तत्र काष्ठादौ विनाशहेतूनामनुपकारात् **तेन** काष्ठादिना विनाशहेतवो **नापेक्ष्यन्ते कथंचित्** केनापि रूपेण।[1] **नाप्यस्य** काष्ठादे**रिदम्वन्ह्**यादिकं विनाशहेतु**रिति सम्बन्धमर्हति।** किं कारणं (।) **तस्योपकारनिबन्धनत्वात्। अन्यथो**पकारमन्तरेण सम्बन्धकल्पनायाम**तिप्रसंगात्।** सर्वः सर्वस्य सम्बन्धी स्यात्।

स्यादेतत् (।) न साक्षाद् वन्ह्यादिः काष्ठादेरुपकारकः किन्तु तत्सम्बन्धि-भूतोपकारकरणादिति (।)

अत आह। **पारम्पर्येणे**त्यादि। वह्न्यादिना काष्ठादेः स[2]म्बन्धिभूत उपकारः क्रियते न साक्षादिति (।) एवं **पारम्पर्येणोपकारेपि** कल्प्यमाने**ऽवश्यमयम्विकल्पो-न्वे**त्यनुगच्छति। स किम्पारम्पर्येणाप्यु**पकारोर्थान्तरमाहोस्वित् तदेव** काष्ठादिक-मि**ति।** तत्र **तस्मात्** काष्ठादेर**र्थान्तरत्वेप्यु**पकारस्य। **तस्य** काष्ठादेरयमुपकार **इति** कस्सम्बन्ध इति। तत्र काष्ठादौ तस्याग्निकृत**स्योपकार**स्योपकारकत्वं[3] **पर्यनुयोज्यं।** तदन्तरेण सम्बन्धाभावात्। आदिशब्दात् तत्राप्यपरोपकारकल्पने-त्यनवस्थादोषादिपरिग्रहः। **तथानन्यत्वेप्यु**पकारस्य **तदवस्थः पर्यनुयोगः** स्यान्नाशः काष्ठमेवेत्यादिना य उक्तः **तस्मात् सतो** विद्यमानस्य **रूपस्य तत्त्वान्यत्वाव्य-तिक्रमात्** कारणात्।

स्यादेतत् (।) सतो रूपस्य तत्त्वान्यत्वाव्यतिक्रमाद् विनाशहेतुकृतं तूपकारो[4]-त्पादनमसदेवेति (।)

**न कस्यचिद्धेतुरहेतुश्च नापेक्षते। तस्मात् स्वयमयं भावस्तत्स्वभाव इति सिद्धः॥**

**अहेतुत्वेपि नाशस्य नित्यत्वाद् भावनाशयोः (।)**
**सहभावप्रसङ्गश्चेदसतो नित्यता कुतः॥ (२७७)**

**स्यादेतत् (।) यद्यपि विनाशोऽहेतुकः सोवश्यं नित्य इति। भावस्तदभा(व)लक्षणो विनाशश्च सह स्यातामिति। न (।) तस्य नित्यं नि[5]त्यधर्मायोगात्। न ह्यसत्ययं विकल्पः संभवति। तयोर्वस्तुधर्मत्वात् तद्विनाशस्य चाकिंचित्त्वात्। भवतो हि केनचित् सहभावः स्यात्। न च विनाशो भवति। तस्माददोषः॥**

**असत्त्वेऽभावनाशित्वप्रसङ्गोपि न युज्यते।**
**यस्माद् भावस्य नाशेन न विनाशनमिष्यते॥ (२७८)**

---

अत आह। **उपकारे**त्यादि। **रूपनिष्पादनलक्षण**त्वात्। सद्रूपनिष्पादनलक्षणत्वात्। ततश्च तद्वा वस्तु तेन विनाशकेन कर्त्तव्यमन्यद्वा। उभयथा चोक्तो दोष इति। **तदतत्क्रियाविकलो** नाशहेतुर्न **कर्त्तैवेति न कस्यचिद्धेतुः। अहेतुश्च** दण्डादि **नापेक्ष्यते** विनश्वरेण घटादिना। **तस्मात् स्वयं** सत्तामात्रेण**ायम्भावस्तत्तत्स्वभावो**[5] विनश्वरस्वभाव **इति**।

प्रध्वंसाभावन्नाशं गृहीत्वा परस्य चोद्यमाशंकते। **अहेतुत्वेपी**त्यादि अहेतुर्हि भवन्नित्यम्भवेत्। **नित्यत्वाच्च** भावकालेपि नाशो भवेदित्येवम्**भावनाशयोः सहभावप्रसङ्गश्चेत्**।

नायन्दोषः (।) किं कारणम् (।) **असतः** प्रध्वंसलक्षणस्य नाशस्य **नित्यता कुतः**।

**स्यादेत**दित्यादिना व्याचष्टे। **यद्यपि नाशः** क्षणिकवादिनोऽ**हेतुकः सोवश्यं नित्य इति** कृत्वा **भावस्तदभावलक्षणो** विनाशनिवृत्तिरूपः। **विनाशश्च** तदभावलक्षणो भावनिवृत्तिरूपः। एकस्य **सह स्यातामिति**।

**नैत**देवं। कस्मात् (।) **तस्या**भावस्यावस्तुत्वेन **नित्यादिधर्मायोगात्। न ह्यसत्यय**न्नित्यानित्य**विकल्पस्सम्भवति। तयो**र्नित्ययो**र्वस्तुधर्मत्वात्। विनाशस्य च** भावनिवृत्तिलक्षणस्या**कि**[7]**ञ्चित्त्वात्**। 184a

किं च (।) **भवतो** ह्युत्पद्यमानस्य नित्यं सत्त्वात् **केनचित् सहभावः स्यात्** (।) **न च विनाशो भवति**। केवलमेकक्षणस्थितिधर्मा भावः स्वयमेव न भवतीति क्रियाप्रतिषेधमात्रमेतत्। **तस्माददोषो**नन्तरोक्तः।

पुनरपि पराभिप्रायमाशंकते। यदि विनाशो सन्निष्यते तदा विनाशस्या-

**कथमसन् विनाशो भावं नाशयेद् (।) अतो विनाशी भावः[6] स्यादित्यप्य-प्रसंग एव (।) विनाशाद् भावनाशानभ्युपगमात्। यो हि विनाश इति किंचिन्ने-त्याह। स कथं ततो भावनाशमिच्छेत्।**

**कथमिदानीमसति विनाशे भावो नष्टो नाम। न ह्यसद्विनाशास्तामपे-क्षन्ते प्रत्युत्पन्नावस्थायां(।) न हि यो येन(ा)तद्वान् स तेन तथा व्यपदिश्यते**

37b **प्रतीयते वा (।) यथाश्वो विशा (? षा) णेन। न वै विनाशो नास्त्येव। स तु नास्ति यो भावस्य भवति। भाव एव तु क्षणस्थितिधर्मा विनाशः। तमस्य स्वभावं उत्तरकालं विभावयन्तो विनाशोऽस्य भूत इति यथाप्रतीति व्य-पदिशन्तीत्युक्तं। न हि भावस्य किञ्चित् कदाचिद् भवति (।) स एव केवलं**

---

**सत्त्वे** सत्य**भावनाशित्वप्रसंगः**। भावस्य नाशित्वं न स्यादित्ययमपि[1] प्रसङ्गो **न युज्यते। यस्माद् भावस्य नाशे**नार्थान्तरेण **ना**स्माभिर्**विनाशनमिष्यते**।

**कथमि**त्यादिना व्याचष्टे। **कथमसन् विनाशो भावं नाशयेद**सतो व्यापारा-योगात्। **अतः** कारणाद**विनाशी भावः स्यादित्यप्रसंग एव**। किं कारणम् (।) **विनाशा**दर्थान्तरभूताद् **भावस्य नाशानभ्युपगमात्**।

**यो ही**त्यादिनैतदेव समर्थयते। **यो हि** वादी **विनाश इ[2]ति किंचिन्नेत्याह**। **स कथन्ततो** निःस्वभावान्नाशाद् **भावस्य नाशमिच्छेत्** (।) नेच्छेत्।

**कथमि**त्यादि परः। **असत्य**विद्यमाने **विनाशे कथम्भावो नष्टो नाम**। नैव विनष्टः स्यात्। तथा हि **प्रत्युत्पन्नावस्थायाम**सद्विनाशाः। **असद्विनाशो** येषा-मिति विग्रहः। ते न हि नष्टा गण्यन्ते। यदा च भावस्य नाशो नास्ति तदा कथन्तेन स व्यपदिश्यते नाशवा[3]निति। **न हि यो येन** स्वभावेना**तद्वान्** असम्बन्धवान्। **स** पदार्थ**स्तेना**सम्बन्धिना **तथा व्यपदिश्यते**। तद्वानिति व्यपदिश्यते शब्देन। **प्रतीयते वा** ज्ञानेन।

नेत्यादिना परिहरति। **न वै** भावस्य **नाशो नास्त्ये**वापि त्वस्त्येव नाशः। कथन्तर्हि नास्तीत्युच्यते। **स तु नास्ति** नाशो **यो भावस्य भवति**।
यदि विनाशो न भवति कथन्तर्हि विनाशोस्तीत्युच्य[4]त इति (।)

आह। **भाव एव तु क्षणस्थितिधर्मा**। एकक्षणस्थायी **नाशः**।

यदि भाव एव नाशः कथन्तर्हि भावस्य नाशो भूत इति लोको व्यपदिशतीति(।)

अत आह। **तमस्ये**त्यादि। **अस्य** भावस्य **तमे**कक्षणस्थायि**स्वभावं** सदृशाप-रोत्पत्तिविप्रलम्भादुपलक्षितं। **उत्तरकालं** सन्तानोच्छित्तावनुपलम्भेनास्थितिप्रति-पत्त्या। **विभावयन्तो** निश्चिन्वन्तः। **विना[5]शोस्य** भावस्य **भूत इति यथा प्रतीति व्यपदिशन्ति** व्यवहारिणः पुरुषा **इत्युक्तं** प्राक्।

**स्वहेतुभ्यस्तथाभूतो भवति। तन्न केनचिद् भवता स नष्टः। किन्तर्हि (।) स्वभाव एवास्य येन स नष्टो नाम (।)**

**कथन्तर्हि (इ) दानीमहेतुको विनाशः (।) भवतीत्युच्यते।**

**नश्यन् भावो प⁷रापेक्षः इति तज्ज्ञापनाय सा।**
**अवस्थाऽहेतुरुक्तास्या भेदमारोप्य चेतसा ॥ (२७९)**

**न भावो जातो परस्मान्नाशं प्रतिलभते (।) तथाभूतस्यैव स्वयंजातेरित्य-परापेक्षधर्मान्तरप्रतिषेधार्थन्तत्स्वभावज्ञापनेनार्थान्तरमिव धर्मिणो धर्मं चेतसा**

---

यस्मान्न हि **भावस्य** निष्पन्नस्य **किञ्चिद्**रूपान्तरम्विनाशाख्यमन्यद्वा **कदाचिद् भवति। स एव** भावः **केवलं स्वहेतुभ्यस्तथाभूत** एकक्षणस्थायी **भवति। तदिति** तस्मान्न **केनचि**द्विनाशाख्येन **भवता। स** भावो **नष्टो** नाम। **किन्तर्हि (।) स्वभाव एवास्य** भावस्य स एक[6]क्षणावस्थानशीलः। **येन स** भावो **नष्टो नाम**। अन्यथा स्वयमतत्स्वभावत्वेन्यसन्निधानेप्यनाशात्।

यदि नाशो नाम न किञ्चित्। **कथन्तर्हीदानीमहेतुको नाशो भवतीत्युच्यते** भवद्भिः। यस्य हि स्वभाव एव नास्ति तस्य किम**हेतुकः** सहेतुको वेति चिन्तया। 184b भावस्य नाश इति व्यतिरेको वा कथं।

**नश्यन्नि**त्यादिना परिहरति। **भावो नश्यन्**[7]परापेक्षः। परं विनाशहेतुं नापेक्षत **इति** कृत्वा। **न ज्ञापनाये**त्यपरापेक्षत्वज्ञापनाय। **सा** नाशा**वस्था**स्माभिर-**हेतुरुक्ता**। तस्या नाशावस्थायाश्**चेतसा** विकल्पबुद्ध्या भावाद् **भेदं** व्यतिरेक-**मारोप्य** (।)

एतदुक्तम्भवति (।) अहेतुको भावस्य विनाशो भवतीति सहेतुकोस्य विनाशो न भवतीत्यर्थः।

**ने**त्यादिना व्याचष्टे। **न भावो जातः** सन्**नपरस्माद्** विनाशहेतो**र्ना**[1]**शं प्रति-लभते**। किं कारणं (।) **तथाभूतस्यैव** नश्वरस्वभावस्यैव **स्वयं** सत्ताहेतोरेव **जाते**रुत्पत्तेः। **इति** हेतोरपरमन्यम्विनाशहेतुत्वेन कल्पितमपेक्षत इत्यपरापेक्षः। तथाभूतश्चासौ धर्मश्च विनाशाख्यः। **अपरापेक्षधर्म**स्तस्य **प्रतिषेधार्थं**। सहेतुकविनाशप्रतिषेधार्थमिति यावत्। **तत्स्वभावज्ञापनेने**ति भावस्य विनश्वर-स्वभावज्ञा[2]पनेन। **स्वभाव एव** तथोच्यत इत्यनेन सम्बन्धः। **तथोच्यत** इत्यहेतु-कोस्य विनाशो भवतीत्युच्यते। कदाचित्तन्मात्रजिज्ञासायां। भावस्यान्यस्मात् किम्विनाशो भवति न चेत्ये**तावन्मात्रजिज्ञासायां**। केन प्रकारेणोच्यते। **धर्मिणः** सकाशाद् **अर्थान्तरमिव** विनाशाख्यं **धर्मं चेतसा** बुद्ध्या **विभज्यास्य** भावस्य विनाश इति विभागं कृत्वा। **तदेतद्** यथोक्तेन[3] प्रकारेणाभावादव्यतिरिक्त-

**विभज्य तन्मात्रजिज्ञा(सा)यां स्वभाव एव तथोच्यते। तदेतत् मन्दबुद्धयः क्वचि[3]-तथादर्शनात् घोषमात्रविप्रलब्धा नाशं गुणं तस्य च[1] भावमारोप्य सहेतुकमहेतुकं वा। अप्रतिष्ठिततत्त्वया भावचिन्तयात्मानमाकुलयन्ति।**

**स्वतोऽपि भावेऽभावस्य विकल्पश्चेदयं समः।**

**नन्वपरभावित्वेपि विनाशस्य स्वत एव भावस्य भवतोयं तत्त्वान्यत्व विकल्प-स्तुल्यः। तदा किमर्थान्तरभावे भावो न दृश्यते[4]ऽनर्थान्तरत्वेपि तदेव तद् भवति। तन्न किंचिदस्य जातमिति कथं विनष्टो नाम।**

**नन्वत्र।**

**न तस्य किञ्चिद् भवति न भवत्येव केवलम् ॥२८०॥**

---

न्नाशित्वन्तत्वतो व्यवस्थापितमपि **मन्दमतयो** नाशं गुणं धर्मं समारोप्यात्मान-माकुलयन्तीत्यनेन सम्बन्धः।

कस्मात् पुनस्त एवमाकुलयन्तीतित्याह। **क्वचिदित्यादि**। राज्ञः पुरुष इत्यादौ व्यतिरेकविभक्तिप्रयोगे **तथादर्शनात्**। सम्बन्धिनोर्विभागदर्शनात्। इहापि भा[4]वस्य नाशो भवतीत्यनेन **घोषणामात्रेण विप्रलब्धाः**। भावस्य व्यतिरिक्तं **नाशं गुणं** धर्मं **समारोप्य। तस्य च** यथा कल्पितस्य गुणस्य **भावं** सत्तां **समा-रोप्य**। तं नाशाख्यं गुणं **सहेतुकमहेतुकम्वा** दर्शनभेदेन समारोप्य **भावचिन्तया** वस्तुचिन्तया। किंभूतया (।) **अप्रतिष्ठिततत्त्वया**। अप्रतिष्ठितन्तत्त्वं यस्यां चिन्तायां। तया**त्मानमाकुलयन्ति**।

**स्व[5]तोपी**त्यादिना पराभिप्रायमाशंकते। यस्यापि स्वयमेवाहेतुको नाशो भवति। तस्यापि **स्वतोप्यभावस्य** विनाशस्य **भावे**ङ्गीक्रियमाणे। अयन्तत्त्वान्यत्व-लक्षणो **विकल्पश्चे**तसः।

**नन्वि**त्यादिना व्याचष्टे। न परभावित्व**मपरभावित्व**महेतुकत्वेपीत्यर्थः। **भाव-स्य** वस्तुनो यो **नाश**स्तस्य **स्वत एव भवतः। अयन्तत्त्वान्यत्वविकल्प[6]स्तुल्यः** (।)

किमर्थान्तरन्नाशो भावादुत भाव एवेति। तत्र यद्यर्थान्तरन्**तदा किमर्था-न्तरस्य** नाशस्य **भावे** सत्ताया**म्भावो न दृश्यते**। अथानर्थान्तरं विनाशस्तदा**न-र्थान्तरत्वेपि तदेव** घटादिकमेव **त**न्नाशर्ल्य**म्भवति। तत्**तस्मा**न्न किञ्चिदस्य** पदार्थस्य **जातमिति कथं विनष्टो नाम**।

**नन्वि**त्यादिना परिहरति। **अत्र** प्रस्तावे। उक्तं (।) किमुक्तं (।) **न तस्य** भावस्य **किंचि[7]द्** व्यतिरिक्तम्वा नाशाख्यं धर्मरूप**म्भवति**। कथन्तर्हि विनाशी भाव इत्याह। **न भवत्येव केवल**मित्युक्तं प्राक्।

185a

**इत्युक्तं (।) न ह्ययं विनाशोऽन्यो वा कश्चिद् भवतीत्याह। किन्तर्हि (।) स एव भावो न भवतीति। यदि हि कस्यचिद् भावं ब्रूयान्न भावोनेन निर्वर्तितः स्यात् (।) तथा भावनिवृत्तौ प्रस्तुताया[5]मप्रस्तुतमेवोक्तं स्यात्। न हि कस्यचिद् भावेन भावो न भूतो नाम। तदा न भूतो यदि स्वयन्न भवेत्। न भवतीति च प्रसज्य**

---

एतदेव स्फुटयन्नाह। **न ह्रीत्यादि। न ह्ययम**हेतुकविनाशवादी भावस्य स्वहेतोर्निष्पन्नस्य कश्चिद् भावरूपोऽभावरूपो वा **विनाशोन्यो** वा स्थित्यन्यथात्वादिको धर्मो **भवतीत्याह। किन्तर्हि स एव भावो न भवतीति** भावनिवृत्ति[1]मात्रमाह। तेनायमर्थः (।) प्रथमे क्षणे भावोऽभूतो भवति। द्वितीये क्षणे तस्य न भावो भवति नाभावो वा। नापि स्वरसहानिर्वा भवति। केवलं स्वयमेव निवर्त्तते।

**यदि** पुनर्नाशाभिधानेन **कस्य**चिद्धर्मस्य **भाव**मुत्पादं **ब्रूयान्न भावोनेन** वादिना **निर्वर्तितः स्यात्**। भावनिवृत्तिर्न कथितेति यावत्। **तथा** च **भावनिवृत्तौ प्रस्तुतायाम**र्थान्तरस्यान्यस्य[2] विधाना**दप्रस्तुतमेवोक्तं स्यात्**। किं कारणं (।) **न हि कस्यचिद्** विनाशाख्यस्याभावस्य भावनिवृत्तिरूपस्य वा **भावे**नोत्पादेन **भावः** पदार्थो **न भूतो नाम**। येन तद्विधानेन भावस्य स्वनिवृत्तिः स्यात्।

एतदुक्तम्भवति। यथा भावस्य विज्ञानभावे भावो न निवर्त्तते केवलन्तद्विज्ञानन्तत्सम्बन्धि स्यात्। तथा भावस्य निवृत्तिर्भवतीत्यभ्युपगमे स एव निवृत्त्या[3]ख्यो धर्मस्तत्सम्बन्धी स्यान्न तु भावो निवर्त्तेतेति कथमस्य निवृत्तिः स्यात्। तस्मात्तदा स भावो **न भूतो निवृत्तो यदि स्वयं न भवेत्।**

तेन यदुच्यते। नन्वभवनमपि यदि भावस्य न भवति। तदाऽविनाशित्वं। अथ भवति। तद्भिन्नम्वा स्यादभिन्नम्वाऽनयोश्च पक्षयोर्भावस्य सर्वदा दर्शनं स्यादविनाशात्। तस्मान्नाभावस्य विनाशः (।) कथन्तर्हि भावः सर्वदा न प्र[4]तीयते प्रमाणाभावादिति (।)

तदपास्तं। दृश्यस्य हि सत्तायाः प्रमाणविषयत्वेन व्याप्तत्वात्। तदभावादभावः। भावे वावश्यं प्रमाणविषयत्वमिति कथमप्रतिपत्तिः। अथादृश्यरूपतयास्य भावस्तदा तर्हि दृश्यरूपताया निवृत्तिः। सा च भावाद्भिन्नाऽभिन्ना वा (।) अनयोश्च पक्षयोर्भावस्य दर्शनं स्यादिति दोषस्तदवस्थ एव। तस्माद् भावस्याभवन[5]मपि न भवति। नाप्यविनाशित्वदोषः। स्वरूपेण निवृत्तेः।

ननु भावनिवृत्तेर्नीरूपत्वेन रूपिणो भावादन्यत्त्वमिति चेत्।

ननु यस्य रूपमेव न विद्यते तस्य कथमन्यत्त्वं। तत्किमेकत्वमस्तु। तदपि नास्त्यरूपत्वात्। तस्माद् भावेन सहास्यास्तत्त्वान्यत्त्वनिषेधमात्रं क्रियते। शशविषाणवत्।

**प्रतिषेध एष न पर्युदासः। अथेहापि कस्यचिद् भावे न प्रतिषेधपर्युदासयोरूपभेदः स्याद् (।) उभयत्र विधेः प्राधान्याद्(।)एवं वा प्रतिषेधात् कस्यचित् पर्युदासोपि क्वचिन्न स्याद्। यदि हि किंचिन्निवर्त्तेत तदा तद्व्यतिरेकि संस्पृ[6]श्येत। तत्पर्युदासेन। तच्च नास्ति सर्वत्र निवृत्तिर्भवतीत्युक्ते कस्यचिद् भावस्यैव प्रतीतेः। तेषां च तेनार्थान्तरभावः एवोक्तः स्यात्। न तयोः परस्परं विवेकोऽविवेके च न पर्युदासः। तदेवं व्यतिरेकाभावादन्वयोपि न स्यात् (।) तस्यैक-**

---

नत्वेवमपि कथं द्वितीयक्षणे भावो न भवती[6]तीष्यते (।) यतो यदि द्वितीयक्षणे भावस्तदा कथन्तत्र नास्तीतीष्यते विरोधात्। अथ नास्ति तदा कथं भावो नास्तीत्युच्यतेऽसत्त्वादिति।

तदयुक्तं। यतः प्रथमेपि क्षणे भावो भवतीति लोकेभिधीयते। तत्र च यदि भावः कथम्भवतीत्युच्यते। तस्मात् सर्वत्र बुद्धिस्थमेव भावं कृत्वा विधिप्रतिषेधव्यवहार इति यत्किञ्चिदेतत्।

तस्मात् स्थितमेतत् (।) तदा स भावो न भूतो यदि स्वयं न भवेदिति।

185b ननु स्वयम्भावो न भवतीत्यनेनापि वाक्येन स्वयमेवाभावो भावस्य भवतीत्युच्यते। तदा च स एव दोष इत्यत आह। **न भवतीति चे**त्यादि। चशब्दो यस्मादर्थे। यस्माद् भावो न भवतीति च **प्रसज्यप्रतिषेध** एषः। **न पर्युदासः**। यत्रप्रसक्तस्य निवृत्तिमात्रमेव क्रियते न वस्त्वंशस्य संस्पर्शः स प्र[1]सज्यप्रतिषेधः। यत्र त्वेकनिषेधेनान्यविधानं स पर्युदासः। अन्यथे**हापि** प्रसज्यप्रतिषेधेपि **कस्यचिद्व**स्तुनो **भावे**। विधाने सति। न **प्रतिषेधपर्युदासयो रूपभेदः** स्वभावभेदः **स्यात्**। प्रसज्यप्रतिषेधः प्रतिषेधशब्देनोक्तः। किं कारणम् (।) **उभयत्रापि** प्रसज्ये पर्युदासे च। **विधेः प्राधान्यात्**।

यदि च प्रसज्यप्रतिषेधेपि विधि[2]स्तदा प्रतिषेध एव नास्ति। **एवं चाप्रतिषेधात् कस्यचित् पर्युदासोपि न स्यात् क्वचित्**। किं कारणम्। **यदि हि किंचिद्वस्तु** कुत**श्चिन्निवर्त्तेत। तदा तद्व्यतिरेकि**। निवर्त्तमानाद् वस्तुनो व्यतिरेकि **संस्पृश्येत। तत्पर्युदासेन** निवर्त्यमानपर्युदासेन। यथाऽब्राह्मणमानयेति ब्राह्मणपर्युदासेन क्षत्रियादेः संस्पर्शात्(।) **तच्च** कस्यचिन्निवर्त्तनमेव **नास्ति**। किं कारणं (।) **सर्वत्र**[3] कस्यचि**न्निवृत्तिर्भवतीत्युक्तेपि** न भावव्यवच्छेदः **कस्यचित्** प्रतीयतेऽपि तु निवृत्तिशब्देनापि कस्यचिद् **भावस्यैव प्रतीतेः**। न चानेन वादिना भावस्य निवृत्तिं ब्रुवाणेनापि निवृत्तिर्नैवोक्ता किन्त्व**र्थान्तरभाव एवोक्तः स्यात्**। तथा **च** यस्य पर्युदासेन यद्विविक्तमुच्यते **न तयोः परस्परविवेकः** सिद्धः। **असति च विवेके न पर्युदासः**।[4] तदन्यविवेकेनान्योपादानलक्षणत्वात् पर्युदासस्य। **तदेवं**

**स्वभावावस्थितिलक्षणत्वात्। तत्स्थितिश्च तदन्यव्यतिरेके सति स्यात्। स च नास्तीत्य[7]प्रवृत्तिनिवृत्तिकं जगत् स्यात्। तस्माद् यस्य नासो (?शो) भवतीत्युच्यते। स स्वयमेव न भवतीत्युक्तं स्यात्। न वै घोषसाम्याद् विषयान्तरदृष्टो विधिः सर्वत्र योजनामर्हति। न हि गर्दभ इति नामकरणाद् बालेयधर्मा मनुष्येपि योज्याः। तथा न चैत्रस्य पुत्रो भवतीत्यत्र दृष्टो विधिर्विनाशेपि विरोधात्। एवं चाभिधानेपि प्रयोजनमावेदितमेव (।) अतः (।)** 38a

**भावे ह्ये[1]ष विकल्पः स्याद्विधेर्व्वस्त्वनुरोधतः ॥**

---

यथोक्तेन प्रकारेण **व्यतिरेकाभावादन्वयोपि न स्यात्**। अन्वयः कस्यचिदर्थस्यानुगमो विधानन्तन्न स्यादित्यर्थः। किं कारणं (।) **तस्यान्वयस्यैकस्वभावस्थितिलक्षणत्वात्। तत्स्थितिश्चै**कस्वभावस्थितिश्च **तस्मादन्यस्य व्यतिरेके** परिहारे **सति स्यात्। स च** तदन्यव्यतिरेको[5] **नास्ति** त्वन्मतेन। **इति** एवं शब्दाद**प्रवृत्तिनिवृत्तिकं जगत् स्यात्**। शाब्दस्य विधिप्रतिषेधव्यवहारस्याभावः स्यात्। न चैवमित्यवश्यं कस्यचिद् व्यवच्छेदमात्रं शब्दवाच्यमभ्युपगन्तव्यं।

यतश्चैवन्**तस्माद् यस्य** भावस्य **नाशो भवतीत्युच्यते स स्वयमेव न भवतीत्युक्तं स्यात्** (।) न पुनरस्य धर्मान्तरं किञ्चिन्नाशो नाम विधीयते। चैत्रस्य पुत्र इत्यत्र यथा[6] वास्तवो भेदस्तथा भावस्य नाश इत्यत्रापि व्यतिरेकविभक्तेस्तुल्यत्वादित्यत आह। **नेत्यादि। न वै घोष**मात्रेण चैत्रस्य पुत्र इत्यनेन शब्देन **साम्याद् विषयान्तरदृष्टो विधिः**। चैत्रस्य पुत्र इत्यत्र दृष्टोविधिर्वास्तवो यः स **सर्वत्र** भावस्य नाश इत्यत्रापि **योजनामर्हति** (।) शब्दप्रवृत्तिमात्रेण वस्तुयोजनाया अयोगात्।

एतदेव **न ही**त्या[7]दिना प्राह। कस्यचित् पुरुषस्य **गर्दभ इति नामकरणात् बालेयधर्मा** गर्दभस्य धर्मा **मनुष्येपि न हि योज्याः**। **तथा न चैत्रस्य पुत्रो भवतीत्यत्र** वाक्ये **दृष्टो विधि**रर्थान्तरस्य पुत्रस्य विधानं दृष्टमिति **नाशेपि** योज्यः। भावस्य नाशो भवतीत्यत्रापि भावाद् व्यतिरेको नाशो विधेयः। किं कारणम् (।) **विरोधात्**। नाशस्याभावरूपत्वादभावस्य भवन[1]विरोधादित्युक्तं। 186a

यदि नाशो नार्थान्तरं कस्माद् भावस्य नाशो भवतीत्येवमभिधीयत इति (।)

अत आह। **एवं चे**त्यादि। भावस्य नाश इत्य**भिधानेपि प्रयोजनमावेदितमेव**। "अर्थान्तरमिव धर्मिणो धर्मं चेतसाविभज्य तन्मात्रजिज्ञासायां स्वभाव एव तथोच्यत"[1] इत्यादिना निवेदितत्वात्।

तस्मादभावस्याकिंचित्त्वात् तत्त्वान्यत्वविकल्पो न तुल्यः[2]। अतो **भावे**

**भावोऽवश्यं भवन्तमपेक्षते (।) स च स्वभाव एव। नि(:)स्वभावस्य क्वचिद् व्यापारे समावेसा(?शा)भावाद्(।)व्यापार इति हि तथाभूतस्वभावोत्पत्तिः (।) सा निःस्वभावस्य कथं स्यात्। कथमिदानीं भवत्यभावः शशविषाणमित्यादिव्यवहारः। न वै शशविषाणं किंचिद् भवतीत्युच्यते। अपि त्वेवमस्य न भवतीति भावप्रति[2]षेध एव क्रियते।**

**अपि च व्यवहर्त्तार एतदेवं व्यापारवदिव समारोप्यादर्शयन्ति प्रकरणेन केनचित्। न तु तत्तथा (।) सर्वार्थनि (?वि)वेचनं हि तत्र तत्त्वमन्यत्त्वं न**

---

वस्तुनो भवने **एष** तत्त्वान्यत्त्व**विकल्पः स्यात्**। किं कारणम् (।) भवनस्य **विधेर्वस्त्वनुरोधतः**।

**नन्वतिशयोत्पत्तावपि स एव तस्यातिशय उत्पन्न इति कथं** नष्टो नाम (।) **तेन नायं तदवस्थो नष्टो नाम। येन स्वयं न भवति। तेन नष्टो नार्थान्तरोत्पादादित्युक्तं। न ह्यतिशयोत्पत्त्या स्वयं न भूतो नाम(।)अभावस्य सर्वातिशयोपाख्या निवृ[4]त्त्या सर्वभावधर्मविवेकलक्षणत्वात्। भावस्य चोत्पत्तिसमावेशलक्षणत्वात्।**

**भाव** इत्यादिना व्याचष्टे। **भावो** भवनमुत्पाद इति यावत्। **सोवश्यम्भवन्तमपेक्षते**। भवितारमपेक्षते (।) भवितारमन्तरेण भवनस्याभावात्। **स च** भावः **व्यापारे स्वभाव एव** वस्त्वेव। किं कारणं (।) **निः[3]स्वभावस्य क्वचिद्** भवतीत्यादिके **समावेशाभावात्**। सम्बन्धाभम्वात्। न च व्यापारो नामार्थान्तरं। किन्तु **व्यापार इति** हि **यथाभूतस्वभावोत्पत्ति**र्विशिष्टस्वभावोत्पत्तिः (।) **सा** चोत्पत्ति**र्निःस्वभावस्य** नाशस्य **कथं स्यात्**।

यदि निःस्वभावस्य नास्ति व्यापारसमावेशः **कथमिदानीम्भवत्यभावः शशविषाणमित्यादिव्यवहारः** श[4]शविषाणमभावो भवतीति भवनलक्षणेन व्यापारेण व्यवहार इत्यर्थः। आदिशब्दाद् वन्ध्यासुतोऽभावो भवतीति परिग्रहः।

नेत्यादिना परिहरति। **न वै शशविषाणं किंचि**दभावोन्यद्वा **भवतीति** विधि**नोच्यते**। **अपि त्वेव**मिति शशविषाणमभावो भवतीत्यनेन वाक्येना**स्ये**ति शशविषाणस्याभावो भवति (।) भावो **न भवतीति भावप्रति[5]षेध एव क्रियते। अपि च व्यवहर्त्तारः** पुरुषाः। **एत**च्छशविषाणादिक**मेवम**भावो भवतीति**॰व्यापारवदिव समारोप्यादर्शयन्ति। केनचित् प्रकरणेन**। किं शशविषाणादिकमभावो भवति न भवतीति प्रस्तावसमाश्रयेण। **न तु तच्**छशविषाणादिकं व्यवहारमात्रेण **तथा** व्यापारयुक्तम्भवति। यस्मात् **सर्वार्थविवेचनं** सर्वार्थस्वभाव[6]विरह**स्तत्र** शशविषाणादौ **तत्त्वं। न** त्वसतः **कस्यचिद्** भवनादेः **समावेशः**।

**कस्यचित् समावेशः। न खल्वेवं विनाशो वस्तुनि तद्‌भावाद्(।)असावपि यदि वक्तृभिरेवं ख्याप्येत न तु स्वयं तथा। तदा न किञ्चित् न भवतीतीष्टमेव तस्मा[3]त् स्वयं भवन् स्वभावो विकल्पद्वयं नातिवर्त्तते तत्त्वमन्यत्त्वमिति।**

## च. पुद्‌गल-चिन्ता

**अतत्त्वमेव स्वभावस्यान्यत्त्वमिति। न हि रूपरसयोरप्यन्यदेव परय(?) स्परमन्यत्त्वं। स्वभावाप्रतिबन्धोऽन्यत्त्वमिति चेत्(।)कोयं प्रतिबन्धो नाम येन स च न स्यान्नान्यश्च(।)अजन्मेति चेत् सर्व्वकार्यकारणानां परस्परमवाच्यता स्या[4]त्(।) तथा च सर्वः सर्वस्य कथंचिदुपयोगीति न कश्चिदन्यः स्यात्। एवं चावाच्य-**

---

सहेतुकोपि विनाश एवम्भविष्यतीति चेदाह। **ने**त्यादि। **एवं** शशविषाणवत् सर्वार्थविरहलक्षणो **विनाशः** परेष्टः। किं कारणम् (।)**वस्तुनि** तस्य विना-शस्य **भावा**दुत्पत्तेः। यश्च भवति स कथमभावो विरोधात्। 186b

**यदि** पुन**रसावपि** विनाशो निःस्वभाव एव केवलं[7] **वक्तृभिरेव**म्भवतीति व्यापारवानिव **ख्याप्यते। न तु स्वयन्तथा**भवनधर्मा नीरूपत्वादस्य। **तदे**वमिष्यमाणेऽभावो भवतीत्यपि ब्रुवाणेन। **न किञ्चिद् भवतीतीष्टमेव**। क्रियाप्रतिषेधमात्रत्वादस्य वाक्यस्य। **तस्मात् स्वय**मनध्यारोपितेनाकारेण क्वचिद् वस्तुनि **भवन् स्वभावो विकल्पद्वयं नातिवर्त्तते तत्त्वमन्यत्त्वं चेति** प्रकारान्तराभावात् ०॥ (२८०)

रूपादिस्कन्धस्वभावः पुद्‌गलो न भव[1]त्यथ च रूपादिभ्यो नान्यः। तस्म तत्त्वान्यत्त्वमतिवर्त्तत एव स्वभाव इति चेत्।

तन्न (।) यस्मा**दतत्त्वमेवा**तत्स्वभावत्वमेव **स्वभावस्यान्यत्त्वमिति**।

यदि पुद्‌गलोपि न स्कन्धस्वभावस्तदा स्कन्धेभ्योन्य एव। यतो **न हि** प्रसिद्धान्यत्त्वयो **रूपरसयोरप्यन्यदेव परस्परमन्यत्त्वं** (।) किन्त्वतत्स्वभावत्वमेवान्यत्वन्तच्च पुद्‌गलेप्यस्तीति सोपि स्कन्धेभ्योन्य एवेष्टव्यः।

नन्वतत्स्वभावत्वे[2]पि परस्परं **स्वभावाप्रतिबन्धोन्यत्त्वमिति चेत्**। स च-प्रतिबन्धः पुद्‌गलस्य स्कन्धेष्वस्ति ततो तत्स्वभावत्वेपि नान्यत्त्वं स्कन्धेभ्यः पुद्‌गलस्येति।

**कोयमि**त्यादिना प्रतिषेधति। **कोयं प्रतिबन्धो नाम** पुद्‌गलस्य स्कन्धेषु **येन** प्रतिबन्धेन। **स च न स्याद**िति स्कन्धस्वभाश्च पुद्‌गलो न स्यात्। **नान्य**स्वभाव**श्च** स्कन्धेभ्यः। अन्यः स्वभावोस्येति विग्रहः।

स्कन्धेभ्यः **पुद्‌**गलस्य ज[3]न्म तदेव **जन्म** प्रतिबन्ध **इति चेत्**।

**तेत्यपि कार्यकारणभाव एव शब्दान्तरेणोक्तः स्यान्नार्थभेदः। स्वभावाननुगमत्वमन्यत्त्वं ब्रूमः। न स्वभाववतां परस्परमस्त्येवेत्यन्यत्त्वमेव। न च तज्जन्मलक्षणात् स्वभावप्रतिबन्धादन्यः प्रतिबन्धो नामानायत्तस्य व्यभिचा[5]राविरोधात् ततो धर्मभेदाच्च।**

**अन्यत्त्वं ज्ञानकृतः प्रतिबन्ध इति चेत् (।)**

**स्यादेतत् (।) यत्प्रतिपत्तिनान्तरीयकं यज्ज्ञानं तद्गतौ नियमेन तत्प्रतिभासात् तदतद्रूपमप्यवाच्यमिति**

**न (।) तस्य निःस्वभावत्त्वात्। स्वयं स एव वेति भि (?हि) तस्य स्वभावो यः प्रतिभाति। अतत्स्वभावत्वेस्य तद्वत्प्रतिभासप्रसंगात्। अप्रतिभासमानस्य च**

---

एवं सति कार्यत्वात् स्कन्धेभ्यः पुद्गलस्य तत्त्वान्यत्त्वेनावाच्यत्वमिष्टं। तथा च सति **सर्वकारणानाम्परस्परमवाच्यता स्यात्। तथा चे**ति कार्यत्वादवाच्यत्वे। **सर्वः सर्वस्य कथंचि**दिति साक्षात् पारम्पर्येण **चोपयोगी**ति सर्वत्र कार्यकारणभावान्न च **कश्चित्** कुतश्चि**दन्यः स्यात्। एवं** चानन्तरोक्तेनावाच्यतालक्षणेना**वाच्य[4]तेत्यपि** ब्रुवता **कार्यकारणभाव एव शब्दान्तरेणोक्तः स्यान्नार्थभेदः** कश्चित्। अन्यत्त्वन्तु न निषिद्धमेव। यस्मात् **स्वभाव**योः परस्पर**मननुगम**नमसिश्रीभवन**मन्यत्त्वम्ब्रूमः**। स च स्वभावाननुगमः **स्वभाववतां** सर्वपदार्थाना**मस्त्येवे**ति **परस्परमन्यत्त्वमेव**। न चान्यः प्रतिबन्धः पुद्गलस्य स्कन्धेषु। यस्मान्न हि **जन्मलक्षणा**ज्जन्मस्वभावात् **स्वभावप्रतिबन्धादन्यः[5] प्रतिबन्धो नाम**। किं कारणम् (।) **अनायत्तस्य** तदुत्पत्त्या तत्राप्रतिबद्धस्य। तेन सह यो **व्यभिचारस्तस्याविरोधात्। ततो**प्रतिबन्धात् पुद्गलस्य स्कन्धेभ्योन्यत्त्वं। **धर्मभेदाच्चा**न्यत्त्वं। तथा ह्यवाच्यत्वं पुद्गलस्य धर्मः स्कन्धानान्तु परस्परम्वाच्यत्वमिति धर्मभेदः।

यद्यपि न जन्मकृतः प्रतिबन्धस्तथापि पुद्गलस्य स्कन्धेषु **ज्ञानकृतः प्रतिबन्ध इति चेत्।**

**स्यादित्यादि[6]**नैतदेव व्याचष्टे। यस्य रूपादेः प्रतिपत्ति**र्यत्प्रतिपत्तिस्**तया**नान्तरीयक**मविनाभावि **यज्ज्ञानं** यस्य पुद्गलस्य ज्ञानं। **तद्गता**विति रूपादिगतौ **नियमेन** तस्य पुद्गलस्य **प्रतिभासनात्**। ज्ञानकृतः प्रतिबन्धस्तथा हि रूपशब्दादिग्रहणेनैव पुद्लग्रहणमिष्यते। चक्षुरादिविज्ञानविज्ञेयत्वात् पुद्गलस्येति। तेन

187a ज्ञानकृतात् प्रतिबन्धात्। **तत्पु[7]**द्गलाख्यम्वस्तु स्कन्धेभ्योन्यत्त्वेना**वाच्यमतद्रूपमप्य**स्कन्धस्वभावमपि।

**नेत्या**दिना प्रतिषेधति। **न** पुद्गलस्य रूपादिप्रतिपत्तिनान्तरीयकं ज्ञानं। किं

**दृश्यस्याभावाद[6]दृश(?श्य)त्वेपि न तद्रूपं ज्ञानमिति कस्य किमायत्ता प्रतीतिः। न च यद् यदायत्तप्रतीतिकं तस्य स्वभावप्रतिभास एव नश्यति (।) प्रकाशायत्त-प्रतीतीनामिव नीलादीनां। का वा तस्य प्रत्यासत्तिस्तत्र यत् तस्मिन्ननात्मरूपे प्रतीयमाने स स्वयं प्रत्युपतिष्ठते।**

**अतिप्रसंगो ह्येवं स्यात् प्रतीयमानस्य तदुपादानस्य[7] तदुपादनतेति चेत्। कोय-मुपादानार्थः। न कार्यकारणभावो न ह्यभ्यगमादभ्युपगमे वा न कार्यकारणे ऽन्यो न्यप्रतीतिप्रत्युपस्थापने। प्रतीतेरेव (।) तन्नान्तरीयकता प्रत्यासत्तिरिति चत् (।)** 38b

---

कारणं (।) **तस्य** पुद्गलस्य रूपादिस्वभावमपहाय **निःस्वभावत्वात् स्वयं**। यस्मात् **स एव हि तस्य स्वभावो यो** रूपादिरूपः **प्रतिभाति**।

अथारूपादिस्वभावः पुद्गलः। तदाऽरूपादि**स्वभावत्वेऽस्य** पुद्गलस्या**तद्व[1]द्**-रूपादिवत् पृथक्**प्रतिभावप्रसङ्गात्**। न च प्रतिभासते ततो नास्त्येव पुद्गलः। यतो **दृश्यस्याप्रतिभासमानस्य चाभावात्**। अथादृश्यः पुद्गल इष्यते (।) तदा **अदृश्यत्वेपि** पुद्गलस्येष्यमाणे **न तद्रूपं** ज्ञानन्न पुद्गलाकारं **ज्ञानमिति कस्य किमायत्ता प्रतीतिः**। न रूपादिज्ञाननान्तरीयकं पुद्गलज्ञानमित्यर्थः। तथा च न ज्ञानकृतः प्रतिबन्ध इति भावः[2]।

रूपाद्यायत्तप्रतीतित्वादेव पृथक् पुद्गलो न प्रतिभासत इति चेद् (।)

आह। **न चे**त्यादि। **यद्** वस्तु **यदायत्तप्रतीतिकं** यत्प्रतिबद्धोपलम्भनन्**तस्य स्वभावप्रतिभास एव** न च **नश्यती**ति सम्बन्धः। **किमिवे**त्याह। **प्रकाशे**त्यादि। यथा **नीलादीना**मालोकप्रतिबद्धज्ञानानामालोके प्रतिभासमानेपि स्वप्रतिभासो न नश्यति। आलोकव्यतिरेकेण तेषां प्र[3]तिभासनात्। तद्वत् पुद्गलस्यापि स्यात्॥

अपि च **का वा तस्य** पुद्गलस्य **प्रत्यासत्तिः** सम्बन्धस्**तत्र** स्कन्धे। **यदि**ति येन प्रत्यासत्तिकारणेन **तस्मि**न्स्कन्धेऽ**नात्मरूपे**ऽपुद्गलस्वभावे प्रतिभासमाने **स्वय-म्प्रत्युपतिष्ठते**। आत्मानं ग्राहयतीति यावत्।

**अतिप्रसंगो ह्येवं स्यात्**। अप्रतिबद्धे प्रतिभासमाने यदि नियमेन पुद्गलः प्रतिभासेत। तदा यस्य कस्यचि[4]त्प्रतिभासनेन्योप्यत्यन्तासम्बन्धः प्रतीयत इत्यर्थः। **प्रतीयमानस्य** पुद्गलस्य **तदुपादानता**रूपाद्युपादानताप्रत्यासत्ति**रिति** चेत् (।)**कोयमुपादानार्थः**। **न** तावत् पुद्गलस्य रूपादीनाञ्च यथाक्रमङ्**कार्य-कारणभावः**। तस्यानभ्युपगमात्। कार्यकारणभावा**भ्युपगमे वा न** रूपादिदर्शने नियमेन पुद्गलस्य दर्शनं। किं कारणं (।) यतो[5] **न कार्यकारणे**। **अन्योन्य-प्रतीतिप्रत्युपस्थापने**। यथा कार्यात् कारणप्रतीतिस्तथा न कारणात् कार्यप्रती-

**ननु सैवासति प्रतिबन्धे न युक्तेत्युच्यते। नाकार्यकारणयोः कश्चित् प्रतिबन्ध इति चोक्तं। यत्प्रतिपत्तिनान्तरीयकं यज्ज्ञानमित्यपि तज्ज्ञाने सति स्यात्। न हि यो वि[1]ज्ञाने स्वरूपासंसर्गिणि न भासते। तस्य किंचिज्ज्ञानं। तदभावान्न सिध्यति। अवाच्यतालक्षणमर्थरूपस्य। तद्भवता वस्तु(तः) तत्त्वान्यत्वभाजा भवितव्यं।**

**यस्य तु विनस्य(?श्य)तो भावस्य न किंचिद् भवति। तेन (।)**
**न भावो भवतीत्युक्तमभावो भवतीत्यपि ॥[2] (२८१)**

**यदप्ययं भावस्याभावो भवतीत्याह। तदपि भावो न भवतीत्येवोक्तं भवति। एवं हि स निर्वर्तितो भवति। प्र[2]तिषेधे विधेरसंभवात्। तत एवास्य विनाशे न कश्चिद्धेतुः। तथा हि (।)**

---

तिर्भवतीत्यर्थः। न पुद्गलस्य रूपादिनान्तरीयकता किन्तु पुद्गलस्य या प्रतीतिस्तस्याः। **तन्नान्तरीयकता** रूपादिनान्तरीयकता।

सैव **प्रत्यासत्तिरिति चेत्।**

**ननु सैव** प्रतीतेस्तन्नान्तरीयकता। रूपादिषु पुद्गलस्या**सति प्रतिबन्धे न यु[6]क्तेत्युच्यते।**

अकार्यकारणयोरपि पुद्गलरूपाद्योः प्रतिबन्धो भविष्यतीति (।)

अत आह। **अकार्यकारणयोर्न कश्चिद्** वास्तवः **प्रतिबन्ध इत्य**सकृद्**उक्तं यत्प्रतिपत्तिनान्तरीयकं यज्ज्ञानमित्यपि** यदुच्यते। **तज्ज्ञाने** रूपादिविवेके। पुद्गलज्ञाने **सति स्यात्।** तच्च नास्ति। यतो **यः** पुद्गले **विज्ञाने** स्वरूपेण न प्रति**भासते**

187b **स्वरूपासंसर्गिणा**न्यासंस[7]र्गेणेत्यर्थः। **तस्य किञ्चिज्ज्ञानं न** हीति सम्बन्धः। **तदभावाद्** यथोक्तज्ञानाभावाद**र्थरूपस्य** पुद्गलाख्यस्या**वाच्यतालक्षणं न सिध्यति।**

**तदिति** तस्माद् **वस्तुतः** परमार्थतः क्वचिद् **भवता** केनचिदर्थेन तत्र **तत्त्वान्यत्वभाजा भवितव्यं।** वस्तुनो गत्यन्तराभावात्। **यस्य तु** क्षणिकवादिनो **विनश्यतो भावस्य न किञ्चिद् भवति** केवलं स भावः स्वयमेव न भवती[1]ति मतं। **तेनाभावो भवतीत्यपि** ब्रुवता **न भावो भवतीति** प्रतिषेधमात्र**मेवोक्तं** न कस्यचिद् विधानं। ततो नाभावंप्रति क्षणिकवादिनस्तत्त्वान्यत्वविकल्पस्यावतारोस्तीति मन्यते।

**यदपी**त्यादिना व्याचष्टे। **यदप्ययं** क्षणिकवादी **भावस्याभावो भवतीति** विधिसंस्पर्शिनेव शब्देना**ह। तदपि भावो न भवतीत्येवोक्तं भवति। एवं हि स** भा[2]वो **निर्वर्तितो भवति** यदि किञ्चिन्न विधीयते। किं कारणं (।) **प्रतिषेधे** भावमात्रव्यवच्छेदे **विधेरसम्भवात्।**

यतश्च विनश्यतो भावस्य न कश्चिद् वस्तुधर्मो भवति। **तत एवास्य** भावस्य **विनाशे न कश्चिद्धेतुः। तथा हि** विनश्यता भावेनाप**ेक्षेत परो** विनाशहेतुः। **यदि**

**अपेक्षते परः कार्यं यदि विद्येत किञ्चन।**
**यदकिञ्चित्करं वस्तु किं केनचिदपेक्ष्यते ॥ (२८२)**

**सति हि कार्ये कारकं भवति। न च नश्यतो भावस्य किंचित् कार्यमित्युक्तं। तस्माद् यो नाम नाशहेतुः स भावे न किंचित् करोतीति[3] अकिंचित्करोनपेक्षणीयः (।) कथमनुत्पन्नातिशयः। तदवस्थ एव भावः कथं नष्टो नाम।**

**तस्मान्नाभावे कस्यचिद् भावोपक्षेपोऽन्यस्य (।)**
**एतेनाहेतुकत्वेपि ह्यभूत्वा नाशभावतः।**
**सत्तानाशित्वदोषस्य प्रत्याख्यातं प्रसञ्जनं ॥ (२८३)**

**योपि मन्यते (।) अहेतुकेपि विनाशेऽभूत्वास्य भावात् सत्ताऽनित्यत्वं च दुर्निवार[5]म् (।) अभूत्वा भवन्नहेतुको भवतीत्यपि विरुद्धत्वमिति। सोप्यनेनैव**

---

तेन भावस्य **कार्यं** कर्त्तव्यम्**विद्येत किञ्चन**। न तु किञ्चित् कार्यमस्ति। तस्माद**किञ्चित्कर**म्वि[3]नाशकारणं। **यच्चाकिञ्चित्करम्वस्तु**। **तत्किं केनचिदपेक्ष्यते**। नैवापेक्ष्यते।

**सती**त्यादिना व्याचष्टे। **सति हि** कर्त्तव्ये **कारकम्**भवति। **न च नश्यतो भावस्य किंचित् कार्यमित्युक्तं। तस्माद् यो नाम** कश्चिन्**नाशहेतुः स भावे न किञ्चित् करोतीत्यकिञ्चित्करो नापेक्षणीयो** विनाशहेतुः।

**तत्कथ**मित्यादि परः। यदि विनश्यतो नातिशयः कश्चिदुत्पद्यते। **कथ[4]**-मिदानीमनुत्पन्नातिशयः। **अनुत्पन्नोतिशयोस्ये**ति विग्रहः। **तदवस्थ एव** पूर्वरूपावस्थ एव **भावो** वि**नष्टो नाम**।

**नन्वि**त्यादि सि द्धा न्त वा दी। विनाशहेतोः सकाशाद् भावस्या**तिशयोत्पत्तावप्य**ङ्गीक्रियमाणायां **स एव तस्यातिशयो** नाशाख्यः। **उत्पन्न इति** स भावः **कथं नष्टो नाम**। न ह्यन्यभावेन्यस्य नाशः। यत एवन्**तेन** कारणे**नाय[5]**म्भाव**स्तदवस्थो न नष्टो नाम**। किन्तु **येन** यस्मात् **स्वयं न भवति तेन नष्टो नार्थान्तर**स्य नाशाख्यस्यो**त्पादादित्यनन्तरमेवोक्तं**। यतो **न हि** नाशाख्यस्याति**शयस्योत्पत्त्या** भावः **स्वयं न भूतो नाम**। किं कारणम् (।) **अभावस्य सर्वे** ये**तिशयाः**। सामर्थ्यलक्षणाः। याश्**चोपाख्याः** व्यपदेशास्तेषां **निवृत्त्या**। सर्वसामर्थ्यव्यपदेशनिवृत्त्येत्यर्थः। **सर्वस्य भावध[6]**र्मस्य भवनरूपस्य धर्मस्य यो **विवेको** विरहस्त**ल्लक्षणत्वात्**। **भावस्य चोत्पत्तिसमावेशलक्षणत्वात्**। यस्माद् भवतीति भाव उच्यते। तेनोत्पत्तियोगी भावः। यतश्चैवन्**तस्मान्नाभावे** भावस्य विनाशे **कस्यचिदन्यस्य भावो** भवनन्तस्यो**पक्षेपः**। **न कस्यचिद** भवनमित्यर्थः।

**प्रत्याख्यातः। कस्यचिद् भावानभ्युपगमात्॥**

**यथा केषाञ्चिदेवेष्टः प्रतिघो जन्मिका(?)नां तथा।**
**नाशस्वभावो भावानां नानुत्पत्तिमतां यदि॥ (२८४)**

**अथ स्याद् (।)भवतु नाम नाश(:)स्वभाव एष भावानां य इमे क्षणस्थितिधर्माणः। स तूत्पत्तिमतामेव भविष्यति (।)न हि स्वभाव इति सर्व्वः सर्वस्य स्वभावो भवति प्रतिघात्मतावत्।**

**सत्यमेव तथापि॥**

**स्वभावनियमाद्धेतोः स्वभावनियमः फले।**
**नानित्ये रूपभेदोस्ति भेदकानामभावतः॥२८५॥**

---

188a **एतेने**ति स्वभावप्रतिपादनेन। **अहेतुकत्वेपि** नाश[7]स्याङ्गीक्रियमाणे स नाशः प्रथमम**भूत्वा** भवतीत्येवमभूत्वा **नाशस्य भावतः** कारणात् तस्य नाशस्यांकुरादिवत् सत्ता स्यात्। नाशित्वं चेति। **सत्तानाशित्वदोषस्य** यत् **प्रसञ्जनन्तत्प्रत्याख्यातमेतेनैव**।

**योपी**त्यादिना व्याचष्टे। **अहेतुकेपि नाशे**ऽस्य नाशस्या**भूत्वा भावात् सत्ता**ऽ**नित्यत्वं च दुर्निवारं**। अभूत्वा **भवन्नहेतुको भवतीत्यपि विरुद्धं** कादाचित्कस्या[1]हेतुत्वविरोधात्। **सोपि** दोषोपन्यासो**ऽनेनैव** विनाशस्य नीरूपत्वप्रतिपादनेन **प्रत्याख्यातः**। किं कारणं (।) विनाशकाले **कस्यचिद्** धर्मस्य **भावानभ्युपगमात्**।

**यथा** तुल्ये वस्तुत्वे **केषांचिदेव जन्मिना**मुत्पत्तिमतां **प्रतिघो** नाम स्वदेशे परस्योत्पत्तिविबन्धलक्षण **इष्टो** न सर्वेषां। **तथा भावानामुत्पत्तिमतामेव नाशस्वभावो** भवतु (।) न त्वनुत्पत्तिम[2]तामाकाशादीनां। तथा च "यत् सत्तत्क्षणिक"मित्येतद् व्यभिचारीति।

**अथे**त्यादिना व्याचष्टे। **भवतु नाम। स्वभाव एष भावानां** (।) कोसौ स्वभाव इत्याह। **य इमे क्षणस्थितिधर्माणः**। क्षणस्थितिर्धर्मो येषामिति विग्रहः। **स तु** क्षणस्थितिधर्मस्वभाव **उत्पत्तिमतामेव** भावानाम्**भविष्यति**। न त्वनुत्पत्तिमतामाकाशादीनां।

यस्मान्न **हि स्वभाव इ**त्येव कृ[3]त्वा **सर्वः सर्वस्य स्वभावो भवति। प्रतिघात्मतावत्**। यथा प्रतिघात्मता वस्तुस्वभावत्वेपि न सर्वस्य भवति तद्वदित्यर्थः।

**सत्य**मित्या चा र्यः। सर्वः सर्वस्य स्वभावो न भवतीति सत्यमेतत्। **तथाप्ययं** सप्रतिघस्य जनकोऽयं नेति **स्वभावनियमाद्धेतोः स्वभावनियमः फले**ऽयं प्रतिघोऽयं नेति। **नानित्ये** तु नानित्यत्वविषये[4] कृतकानां **रूपभेदोस्ति** येन कस्यचिन्न-

**न वै प्रतिघोऽन्यो वा स्वभावोऽकस्मात् प्रतिनियमवान्। यादृशी तु स्वहेतोः शक्तिस्थितिः। तादृशं फलं भवतीति हेतुस्वभावनियमात् फलस्वभावनियमः।**

**आकस्मिक[7]त्वेप्यस्योक्ते दोषः प्रतिघात्मता हेतुस्वभावप्रतिनियमवन्न नश्वरजननप्रतिनियतस्वभावं भावं पश्यामो येन तज्जन्मा तथा स्यान्नान्यः (।) सर्वाकारजन्मनां विनाशदर्शनात्।** 39a

**नन्विमप्यनिश्चेयमेव सर्वाकारजन्मानो नश्यन्तीति। तासामनिःशेषदर्शनात्। विचित्रशक्तयो हि सामग्र्यो दृश्यन्ते। तत्र काचित् स्यादपि याऽनश्व-**

---

श्वरः स्वभावः स्यान्नान्यस्य (।) किं कारणम् (।) अनित्यस्वभावस्य **भेदकानां हेतूनामभावतः**। सर्वेषाम्विनश्वरस्वभावस्य जननादितियावत्।

ननु नाशस्वभावो भावानान्नानुत्पत्तिमतां यदीति चोद्यं प्रकृतं। न च तत्रानित्ये रूपभेदोस्ति भेदकानामभावत इत्ययम्परिहारो युक्तः। न ह्याकाशा[5]दीनां स्वहेतुकृतो विनश्वरस्वभावोनुत्पत्तिमत्त्वात्। तत्कथं सत्यमित्याद्युक्तमिति।

एवम्मन्यते (।) यथा सत्त्वं व्यभिचार्युक्तन्तथा कृतकोपि कश्चिन्नश्वरः कश्चिन्नेत्याशंकते। तेनादावेव कृतकत्वस्य व्यभिचारन्तावत् परिहर्त्तुं सत्यमित्याद्युक्तमित्यदोषः।

**नेत्या**दिना व्याचष्टे। **अन्य** इति सनिदर्शनादिकः। **अकस्मा**दिति हेतुमन्तरेण **नि[6]यमवान्**। क्वचित् स्यात् क्वचिन्नेति। **यादृशी तु** प्रतिनियतविषया। प्रतिघादिधर्म्मजनकस्य **हेतोः शक्तिस्थितिः**। शक्तिनियमस्**तादृशं** हेतुशक्त्यनुरूपं **फलम्भवतीति** कृत्वा **हेतुस्वभावनियमात् फलस्वभावनियम** इष्टः। **आकस्मिलत्वे** तु निर्हेतुकत्**वेस्य** फलस्वभावनियमस्**योक्तो दोषः**। देशकालप्रकृतिनियमो न युज्यत इति।[7] तस्मात् **प्रतिघातात्म**ताया हेतुस्तस्य **स्वभाव**स्तस्य **प्रतिनियमवत्**। **न नश्वरजननप्रतिनियतस्वभावं** हेतुभूतम्भावस्य **पश्यामः**। कश्चिदेव नश्वरं जनयेन्न सर्वमित्येवं नश्वरजनने प्रतिनियतः स्वभावो यस्य भावस्येति विग्रहः। **येन** हेतुप्रतिनियमेन। **तज्जन्मा** विनश्वरजननाद्धेतोर्जन्म यस्य स तथा स्यान्नश्वरः स्या**न्नान्यो** य[1]स्तद्विलक्षणहेतुजन्मेति। किं कारणं (।) **सर्वाकारजन्मनां नाशदर्शनात्**। सर्वाकारेभ्यो हेतुभ्यो जन्म येषामिति विग्रहः। 188b

**नन्वि**त्यादि परः। **सर्वाकारेभ्यो** हेतुभ्यो **जन्म** येषाम्भावानान्ते **नश्यन्तीतीदमप्यनिश्चेयमेव**। किं कारणं (।) **तासां** हेतुसामग्रीणामर्वाग्दर्शनै**रनिःशेषदर्शनात्** साकल्येनादर्शनात्। कस्याश्चित् सामग्र्या नश्वरजनिकाया[2] दर्शनाददृष्टा अपि तज्जातीयतया तथाभूता निश्चीयन्त इति चेद् (।)

**रात्मानं जनयेत् ।**

**न (।) ज्ञेयाधिकारा[1]द्ये कदाचित् क्वचित् केनचिज्ज्ञाताः सन्तो न ज्ञायन्ते। तेषां सत्तानुबन्धी नाश इति ब्रूमः (।) त एव कृतका अनित्याः साध्यन्ते। न ह्ययं संभवोस्ति। यत्ते ज्ञानजननस्वभावाः पुनरनष्टा न जनयेयुरपेक्षेरन्वा परं। तज्जननस्वभावस्य निष्पत्तेः (।) न च तेषु। न (।) यत्केषु कस्यचित् कदाचित् ज्ञानं निवर्त्तेत। न चैवंभूतं किंचिदस्ति। सर्वस्य केनचित् कदाचि[2]ज्ज्ञानात्। ज्ञानमात्रार्थक्रियायामप्यसामर्थ्याद् वस्त्वेव न स्यात् (।) तथा हि। तल्लक्षणं वस्त्विति**

---

आह **विचित्रे**त्यादि। **विचित्रा शक्ति**र्यासामिति विग्रहः। **सामग्र्यो दृश्यन्ते। तत्र** विचित्रशक्तिषु सामग्रीषु मध्ये **काचित्** सामग्री **स्यादपि या** भाव**मनश्वरात्मानं जनयेत्।**

**ने**त्यादिना परिहरति। अयं च परिहारो नाशस्वभावो भावानां नानुत्पत्तिमतां। यदीत्यत्रापि चो[3]द्ये द्रष्टव्यः साधारणत्वात्। नायन्दोषः (।) कस्मात् (।) **ज्ञेयाधिकारात्।**

एतदेव स्पष्टयन्नाह। ये **कदाचित्** काले **क्वचिद्** देशे **केनचित्** पुरुषेणार्था **ज्ञाताः सन्तः** पुनर्न **ज्ञायन्ते तेषां सन्तानानुबन्धी नाश इति ब्रूमः**। ये चाज्ञाताः सन्तो ज्ञायन्ते ज्ञाता वा पुनर्न ज्ञायन्ते (।) **त एव कृतका अनित्यास्साध्यन्ते**। अनेन च **कृत**कत्वस्य क्षणिकत्वेन व्याप्तिः सत्त्वादि[4]त्यनेन निश्चीयत इत्युक्तम्भवति।

ननु च यद्यपि ते ज्ञातास्सन्तो न ज्ञायन्ते तथापि कथन्तेषामनित्यत्वमिति (।)

अत आह। यस्मान्न **ह्यस्ति सम्भवो यत् ते ज्ञानजननस्वभावाः** पूर्वम्**पुनरनष्टा**स्तस्मिन्नेव स्वभावे स्थिता **न जनयेयुः**।

सहकार्यभावान्न जनयन्तीति चेद् (।)

आह। **अपेक्षेरन्नापरं**। न ह्यस्य सम्भवोस्तीति सम्बन्धः। किं कारणं (।) **तज्ज[5]ननस्वभावस्य निष्पन्न**त्वात्।

अथ स्यात् (।) तेष्वनपेक्षेष्वपि कस्यचित् कदाचिज्ज्ञानम्भविष्यतीति (।)

अत आह। **न च तेषु** नैवं तेषु ज्ञानजननस्वभावेषु व्यवस्थितेषु सहकार्यनपेक्षेषु **कस्यचित्** पुंसः। **कदाचित्** काले किंचिज्**ज्ञानं निवर्त्तेत**। **सर्वस्य** सर्वदा स्वविषयाणि ज्ञानानि जनयेयुः। न चैवं। कदाचित् ज्ञानदर्शनात्। ततश्च ज्ञानमजनय[6]न्तो जनकस्वभावात् प्रच्युता इति गम्यते।

यत्तर्ह्यज्ञेयं कृतकमकृतकम्वा तन्नैवम्भविष्यतीति (।)

अत आह। **नै**त्यादि। न चैवंभूतमज्ञेयं किंचिदस्ति। किं कारणं (।) **सर्वस्यार्थस्य केनचित्**पुरुषेण **कदाचिज्ज्ञानात्**। अथ तज्ज्ञानमपि न जनयेत्। तदा

**वक्ष्यामः। तस्यं च विनाशाव्यभिचारात्मसत्तानुबन्धी ॥**

प्रत्याख्येयाऽत एवैषां सम्बन्धस्यापि नित्यता ।

**अत एव च यथोक्ताद् वस्तुमात्रानुबन्धाद् विनाशस्य शब्दवत् सम्बन्धनित्यतापि प्रत्याख्येया ॥**

## (च) कुमारिलमत-निरासः

### (क) अपौरुषेयत्वे दोषाः

**या च शब्दशक्तियोग्यताख्यार्थप्रतिप[3]त्यन्त्याश्रयो जै मि नी यै र्वर्ण्यते सार्थान्तरमेव न भवति। तथा हि (।) योग्यतेति रूपातिशय एव भावानामित्यावेदितं प्राक्।**

**अस्तु वार्थान्तरं। तथापि ॥**

सम्बन्धदोषैः प्रागुक्तैः शब्दशक्तिश्च दूषिता ॥ (२८६)

**उक्तो हि सम्बन्धार्थान्तरवादेऽनेकप्रकारो दोषः। तेनैव सा शब्दशक्तिर्दूषितेति न पुनरु[4]च्यते। अपि च।**

---

**ज्ञानमात्रार्थक्रियायामप्यसामर्थ्ये** तत्सामर्थ्यरहितम्**वस्त्वेव न स्यात्**।[7] **तथा हि** 189a **तल्लक्षणम**र्थक्रियासामर्थ्यलक्षणम्**वस्त्विवति वक्ष्यामः**। **तस्य चा**र्थक्रियासमर्थ**स्य** वस्तुनः क्रमेणार्थक्रियां कुर्वतो **विनाशाव्यभिचारा**दहेतुत्वाच्च विनाशस्य **सत्तानुबन्धी** विनाशः सिद्धः। अत एवानन्तरोक्तात् सर्वभावानां क्षणिकत्वसाधनाच्छब्दार्थयोस्सम्बन्धस्यापि नित्यता प्रत्याख्येया। दूष्या।

(ने)त्यादिना व्याचष्टे। अत एव यथोक्ताद् विनाशस्य वस्तुमात्रानु[1]बन्धात्। शब्दवद् (।) यथा शब्दस्य नित्यता प्रतिक्षिप्ता तद्वत् सम्बन्धस्यापि नित्यता प्रत्याख्येया।

एवन्तावत् सम्बन्धं व्यतिरिक्तमभ्युपगम्य दोष उक्तोऽधुनाऽव्यतिरिक्त एव सम्बन्धो न युज्यत इति (।)

आह। या च शब्दशक्तिर्योग्यताख्या योग्यतासंज्ञितार्थप्रतिपत्त्याश्रयो जै मि नी यै र्व ण्र्यते। सा योग्यताशब्दार्थान्तरमेव न भवति। तथा हि भावानांस्व[2]भावातिशय एव विवक्षितार्थक्रियासमर्थो योग्यतेत्यावेदितं प्राक्। "समर्थं हि रूपं शब्दस्य योग्यते" त्यादिना।

तेन शब्दस्यानित्यत्वे योग्यताया अप्यनित्यत्वमव्यतिरेकादिति भावः।

**नाऽपौरुषेयमित्येव यथार्थज्ञानसाधनं।**
**दृष्टोऽन्यथापि वह्न्यादेरदुष्टः पुरुषागसा ॥ (२८७)**

**भवन्तु नामापौरुषेया वैदिकाः शब्दास्तथापि। संभाव्यमेवैषामयथार्थज्ञान-हेतुत्वं। न हि पुरुषदोषोपधानादेवार्थेषु ज्ञानविभ्रमः। तद्रहितानामपि प्रदी-पादीनां नीलोत्पलादिषु वि[5]तथज्ञानजननात्। तदिमे शब्दाः संस्कारनिरपेक्षाः प्रकृत्या नार्थेषु प्रतिभानहेतवः स्युः (।) स्वभावविशेषाद् वह्न्यादिवत्। वितथ-व्यक्तयश्च नियमेन। नियमकारणाभावादयुक्तमिति चेद् (।) अवितथव्यक्ति-नियमे किं कारणं। तस्माद् यथार्थव्यक्तिनियमवत्। प्रकृत्याऽयथाऽर्थव्यक्ति-**

---

अस्तु वा **शब्दादर्थान्तरं** योग्यता। **तथापि शब्दशक्तिश्च दूषिता** वेदितव्या। कैः (।) **सम्बन्धदोषैः प्रागुक्तैः**।

**उक्तो** ह्रीत्यादिना व्याचष्टे। **सम्बन्धः** सम्बन्धिभ्योर्था[3]न्तरमित्येव**म्वादे-ऽनेकप्रकारो दोष उक्तः**।

"सम्बन्धिनामनित्यत्वान्न सम्बन्धेस्ति नित्यता" इत्यादिना । तेनैव प्रागुक्तेन दोषेण शब्दशक्तिरपि सम्बन्धरूपेण कल्पिता दूषितेति कृत्वा **न पुनः पृथगुच्यते** दोषः।

तदेवं **नापौरुषेयो** वेदः।

भवतु नामापौरुषेयस्तथापि न तस्य सत्यार्थता निश्चेतुं शक्या। यस्माद**-पौरुषेयमित्येव** कृत्वा **न** वै[4]दिकम्वचनं **यथार्थज्ञानसाधनं**। अविपरीतार्थज्ञानहेतुः। यस्मात् **पुरुषागसा** पुरुषदोषेणादु**ष्टो वह्न्यादिना** (।) आदिशब्दाज्ज्योत्स्नादिः (।) **अन्यथापि दृष्टो** वितथज्ञानहेतुर्दृष्ट इत्यर्थः।

**भवत्वित्यादिना** व्याचष्टे। **भवन्तु नामापौरुषेया वैदिकाः शब्दास्तथापि सम्भाव्यमेवैषां** वैदिकानां शब्दाना**मयथार्थज्ञानहेतुत्वं**। यतो **न हि पुरुषदोषो-पधानादेव**। पुरुषदोषे रागादिभिरुपधानात्। संस्कारादेव। **अर्थेषु** ज्ञाप्येषु ज्ञापकानां शब्दानां **ज्ञानविभ्रमो** ज्ञानविपर्यासः। प्रकृत्यापि मिथ्याज्ञानजननस्य सम्भाव्यत्वात्। यस्मात् **तद्रहितानामपि** पुरुषदोषोपधानरहितानामपि **प्रदी-पादीनाम्वितथार्थज्ञानजननात्**। आदिशब्दाज्ज्योत्स्नादीनां (।) कुत्र (।) **नीलो-त्प[6]लादिषु**। तथा हि रात्रौ प्रदीपो नीलोत्पले रक्तप्रतिभासज्ञानहेतुः। ज्योत्स्ना पीते वस्त्रे शुक्लज्ञानहेतुः। **तदिति** तस्मा**दिमे** वैदिकाः **शब्दाः** पुरुष**संस्कारनिर-पेक्षाः** स्युरिति सम्बन्धः **प्रकृत्या** च स्वभावेन **चार्थेषु प्रतीतिहेतवो** ज्ञानहेतवः स्युः।
189b किं कारणं (।) **स्वभावविशेषात्** स्वरूपविशेषात्। किमिव (।) **वह्न्यादिवत्**।[7]

**नियमः किन्न कल्प्यते (।) अथवा वह्न्यादिवदेवा[6]र्थेषूभयज्ञानहेतुत्वं स्यात्। न ह्यपौरुषेया अपि वह्न्यादय एकत्र यथार्थज्ञानहेतवोपि सर्वत्र तथा भवन्ति। तथा शब्दानामप्यपौरुषेयत्वेप्युभयं स्यात्।**

**भवतु बह्न्यादीनां कृतकत्वाद् यथाप्रत्ययमन्यत्रान्यथात्वं। न पुनर्नित्येषु शब्देष्वेतदस्ति।**

**नन्वेवंविधः तत्राप्यस्त्येव धर्मः (।) तेषामपि संकेतवलादन्य[7]थावृत्तेः।** 39b **कार्यजननस्वभावस्थितावेषां समयादेरपेक्षणीयस्याभावात्। ततः प्रतीतिरर्थेषु सर्वस्य सर्वदा स्यात्। न चास्ति। तस्मान्न शब्दाः स्थितस्वभावा इति।**

**अपि च।**

---

**वितथव्यक्तयश्च** स्यु**र्नियमेन**। वितथा व्यक्तयोर्थप्रतिपत्तयो येभ्यः शब्देभ्य इति विग्रहः। वितथव्यक्तय एव सदा वैदिकाः शब्दा इत्यस्य नियमस्य कारणं नास्ति (।) ततो **नियमकारणाभावाद्** वितथव्यक्तय एव वैदिकाः शब्दा इत्येतत् कल्पन**मयुक्तमिति चेत्**। तवापि मी मां स क स्यावितथज्ञानहेतवो वैदिकाः शब्दा इत्य**स्मिन्नवितथव्यक्तिनियमे किं कारणं** (।) नै[1]व किञ्चित्। **तस्मात्** त्वन्मतेन **यथार्थव्यक्तिनियमत्वात् प्रकृत्या** स्वभावेना**यथार्थव्यक्तिनियमः किन्न कल्प्यते**।

**अथवा** यथा वह्न्यादयो घटादिषु नीलोत्पलादिषु **चार्थेषु** यथायोगं सत्यासत्यज्ञानहेतवस्तथा वैदिकानां शब्दाना**मर्थेषु** मिथ्येतरज्ञानहेतुत्वेनो**भयज्ञानहेतुत्वं स्यात्**। यस्मान्न **ह्यपौरुषेया अपि वह्न्यादयो** वनदवचन्द्रालोकादिरूपाः। **एकत्र**[2] घटादौ दिवा **यथार्थज्ञानहेतवोपि** सन्तः **सर्वत्र** नीलोत्पलादावपि रात्रौ। **तथा भवन्ति** यथार्थज्ञानहेतवो भवन्ति। **तथा** वैदिकानां **शब्दानामप्यपौरुषेयत्वेप्युभयं स्यात्**। यथार्थायथार्थज्ञानहेतुत्वं स्यात्।

**भवत्वित्यादि** परः। **वह्न्यादीनां कृतकत्वात्** कारणाद् **यथाप्रत्ययं** यस्य यद्भ्रान्तिकारणं। तद्वशा**दन्यत्र** नीलोत्पलादौ। **अन्यथात्वं** वितथज्ञान[3]हेतुत्वं **न पुनर्नित्येषु शब्देष्वेतत्** सहकारिप्रत्ययबलेन मिथ्याज्ञानहेतुत्व**मस्ति**। नित्यानां सहकारिबलेनान्यथा प्रवृत्त्यसम्भवात्।

**नन्वित्यादि** सि द्धा न्त वा दी। **एवंविध** इति सहकारिबलेनार्थेष्वन्यथा परिवृत्तिलक्षणोस्त्**येव धर्म्मः** (।) **तत्रापीति** वैदिकेष्वपि शब्देषु। किं कारणं (।) **तेषामपि** वैदिकानां **संकेतबलादन्यथावृत्तेः** पुरुषेच्छानुविधायि[4]संकेतबलेनान्यथा प्रतीतिजननादित्यर्थः।

अथ संकेतबलान्न तेषामर्थेषु परावृत्तिरिष्यते। किन्तु नित्यत्वात् स्वभावत एव स्वविषयज्ञानजननस्वभावा वैदिकाः शब्दाः। तदा **कार्यस्य** स्वविषयज्ञानस्य

**न ज्ञानहेतुतैव स्यात् तस्मिन्नकृतके मते ।**
**नित्येभ्यो वस्तुसामर्थ्यान्न हि जन्मास्ति कस्यचित् ।।**[5] **(२८८)**

**यद्यकृतकः शब्दो न तस्मादर्थेषु प्रतीतिरेव स्यात् प्रतीतिजन्मेतरकालयोस्तुल्यरूपस्य प्रतीतिर्ज**[1]**न्मनि सामर्थ्यसंभावनाऽयोगात्। एवमयञ्जनको नैवमिति विवे(च)नीयस्य रूपभेदस्याभावात्। न यादृशोस्याजनकस्तादृश एव जनको युक्तोऽन्यापेक्षापि निषिद्धैव। तस्मान्न नित्यानां क्वचिज्ज्ञानजननसामर्थ्यं। कदाचिदजनने नित्यमजननप्रसंगात्। कार्यसातत्यादर्शनाच्च (।) न ते कथं विकर्त्तार इत्युक्तं प्राक्।**

---

यो **जननस्वभावस्तत्र स्थितौ चैषां** वैदिकानां शब्दानां **समयादेः** (।) आदिशब्दादन्यस्यापि करणव्यापारादेरपेक्षणीयस्या**भावात्** कारणात्। **ततो** वै[5]दिकाच्छब्दात्**प्रतीति**र्ज्ञान**मर्थेषु सर्वस्य** पुंसः **सर्वदा स्यात्**। **न चास्ति** सर्वस्य सर्वदार्थप्रतीतिः। **तस्मान्न** वैदिकाः **शब्दा** अर्थप्रतीतिप्रतिष्ठितस्**वभावाः** किन्तु समयादिकमपेक्ष्यन्त एवेति। तेपि मिथ्याज्ञानस्य हेतव इति तदवस्थो दोषः।

**अपि च** (।) **तस्मिन्** शब्देऽ**कृतके मते** इष्टे सति **न ज्ञानहेतुतैव स्यात्**। यस्मान्न हि **नित्येभ्यो वस्तुसामर्थ्यात्** स्वरू[6]पोपधानसामर्थ्येन **जन्मास्ति कस्यचित्**। ज्ञानस्यान्यस्य वा (।)

**यद्यकृतक** इत्यादिना व्याचष्टे। **यद्यकृतकश्शब्दो** वैदिकस्ततोर्थेषु **प्रतीतिरेव न स्यात्**। किं कारणं (।) **प्रतीती**त्यादि। इतरदजन्माजन्म च इतरच्चेति विग्रहः। तयोः कालो **प्रतीतेर्जन्मेतरकालयोस्तुल्यरूपस्य** नित्यत्वादेकरूपस्य **प्रतीतिर्जन्मनि सामर्थ्यसम्भावनाऽयोगात्**। प्रतीतेर[7]जन्मकाले यत्तस्य जनकं रूपन्तस्मिन्नेव स्वभावे स्थितस्य जनकत्वविरोधात्। किं कारणम् (।) **एवम**नेन रूपे**णायं** नित्याभिमतो **जनको नैवम**नेन रूपेणाजनक **इत्येवं विवेचनीयस्य** पृथग् व्यवस्थाप्यस्य **रूपभेदस्य** स्वभावभेदस्या**भावात्**। नित्यस्य सर्वदैकरूपत्वात्।

1903a

एकस्वभावोपि पूर्वमजनकः पश्चाज्जनको भविष्यतीति चेद् (।)

आह **ने**त्यादि। **अस्य**[1] नित्यस्या**ज**नको **यादृशः** स्वभावस्**तादृश एव जनकोन युक्तः**। एकरूपत्वात्। सहकारिणमधिकं प्राप्य पश्चाज्जनयतीत्यादि मिथ्या। यतो**न्यापेक्षापि** सहकार्यपेक्षापि नित्यस्य **निषिद्धैव** प्राक्।

यत एवन्**तस्मान्नित्यानां** शब्दानां **क्वचि**दर्थेषु पुरुषे **ज्ञानजननसामर्थ्यं**। किं कारणं (।) **कदाचि**ज्ज्ञानस्या**जनने** सति पश्चादपि तत्स्वभावत्वा**न्नित्यमजननप्रसङ्गात्**।[2]

अथ माभूदेष दोष इति नित्यं स्वकार्यं कुर्वन्त्येवेतीष्यते।

**या अप्येता नित्याभिमतेष्वाकाशादिषु प्र[2]तिपत्तयस्ता अपि न तत्स्वभावभाविन्यः(।) तथा हि (।)**

**विकल्पवासनोद्भूताः समारोपितगोचराः ।**
**जायन्ते बुद्धयस्तत्र केवलं नार्थगोचराः (। २८९)**

**स्वलक्षणविषया हि बुद्धिर्नियमेन तद्योग्यतोपस्थानानुविधायिनीति। तस्मिन् सत्यस्याः कारणे योग्यता भवत्येव। तद्यदि नित्यानां पदार्थानां स्वलक्षणे कस्यचित् ज्ञानं स्यात् (।) सर्वस्य सर्वदा स्यात्।[3] कार्य विशेषा हि व्यक्तयः कथंचित् क्वचिदुपयुज्यमानास्तदुपजननयोग्यतातिशयप्रतिलंभहेतुं वस्तुविशेषमपेक्षन्त इति युक्तं। तथाऽकार्यविशेषो नित्यो भावः केनचिद् गृह्यमाणोतत्कारणापेक्षो यदि ग्रहणमस्य जनयेत् युक्तं यत्तेनैव गृह्येत । तच्च स्थितस्वभावत्वान्न**

---

तदपि नास्ति। स्वविषयज्ञान**कार्यस्य सातत्यादर्शनाच्च। न ते** शब्दाः कथंचित् केनचित् प्रकारेण **कर्त्तार इत्येतच्चोक्तं प्राक्।**

स्यादेतत् (।) नित्येभ्योप्याकाशादिभ्यो बुद्धयो भवन्त्येव कस्यचित् कदाचिदिति (।)

अत आह। **या अप्येता नित्याभिमतेष्वाकाशादिषु प्रतिपत्तयो** बुद्धयो भविष्यन्तीतीष्यते। **ता अपि[3]न तत्स्वभावभाविन्यो** नाकाशादिस्वभावायत्तजन्मानः। नित्यानां क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्।

किम्पुनरुत्पत्तौ तासां निमित्तमिति (।)

आह। **न हीत्यादि**। अनादिः समानजातीयो यो **विकल्पस्तेनाहिता या वासना** शक्तिस्तत **उद्भूता** उत्पन्ना। यथागमं **समारोपितो** य आकाशाद्याकारस्तद्**गोचरा**स्तत्प्रतिभासिन्य एव **केवलं** गताः। तत्र[4] बाह्यत्वेन कल्पितेष्वाकाशादिषु **जायन्ते। न** तु ता **बुद्धयोर्थगोचरा** नाकाशादिस्वलक्षणविषयाः।

**स्वलक्षणे**त्यादिना व्याचष्टे। **स्वलक्षणविषया हि बुद्धिर्नियमेन** तस्य स्वलक्षणस्य **योग्यता** सामर्थ्यन्तस्यो**पस्थानं** सन्निधानन्त**दनुविधायिनी** तद्भाव एव भावि**नीति** कृत्वा। **अस्या** बुद्धेर्यत् कारणं स्वलक्षणं योग्यं समर्थन्त**स्मिन् कारणे** योग्ये **सति** सा[5] बुद्धि**र्भवत्येव। तदे**वं न्याये स्थिते **यदि नित्यानां पदार्थानां स्वलक्षणे कस्यचित्** पुंसो **ज्ञानं स्यात्**। तदा नित्यं कारणस्य सन्निधान् **सर्वस्य** पुंसः **सर्वदा स्यात्**।

नापि सहकार्यपेक्षया नित्यानां कस्यचित् कदाचिज्ज्ञानजननन्तथा हि **कार्यो** जन्यः सहकारिभि**र्विशेषो** यासां व्यक्तीनान्ता **हि व्यक्तयः कथंचि**द्देशकालावस्थानियमेन **क्वचित्** कार्ये **उप[6]युज्यमाना** हेतुत्वं प्रतिपद्यमानास्त**स्य** कार्यस्यो**पजनने**

**सम्भवतीति।**

**सर्वेण समं वा गृह्येत।**[4] **न वा केनचिदिति। सन् केनचिद् दृष्टो न नित्यः कश्चिदतीन्द्रियः स्यात्। न चैतदस्ति। तस्मादर्थसामर्थ्यानपेक्षाः समारोपितगोचराः। आन्तरमेवोपादानं विकल्पवासनाप्रबोधमाश्रित्य बाह्यार्थशून्या भ्रान्तय एवाकाशादिषु सर्वस्य संभवन्तीति। तस्मान्नापरवृत्तिधर्माणः शब्दाः (।)**

**तत्त्वे वा। कुत एतदवितथ**[5] **प्रतीतय एवेति। न हि "अग्निर्हिमस्य भेषज" मित्यादिषु शीतप्रतिघातसामर्थ्यं लोकप्रसिद्धमग्नेः ग्या (?ज्ञा) प्यत इति सर्वं तथा भवति (।) लोकस्य स्वेच्छाकृतसंकेतानुव्यवहारात् (।) किमयं लोकः**

---

**योग्यो** योतिशय आत्मभूतस्तस्य **प्रलम्भे हेतुम्वस्तुविशेषं** सहकारिणमिति यावत्।

**तथे**त्यनित्यत्ववत्। नित्यो **भावो कार्यविशेषो**नाधेयातिशयः **केनचित्** पुंसा **गृह्यमाणस्तत्कारणापेक्षः** ग्रहणसहकारिकारणापेक्षो **यदि ग्रहणमस्य** पुंसो **जनयेत्।**

190b **युक्तं यत्ते**[7]**नैव** पुंसा **गृह्येत** नान्येन सहकारिप्रतिनियमात्। **तच्च** सहकार्यपेक्षया जननं नित्यस्य **न सम्भव**ति। किं कारणं (।) [1]**स्थितस्वभावत्वाद्।** नित्यस्य सहकारिणा नाधेयातिशयत्वादिति यावत्।

ततश्च नित्यं जननस्वभावे स्थितत्वात् **सर्वेण** पुंसा **समम**ेककालं **गृह्ये**ताथ **सर्वे**णाजनकत्वान्न गृह्येत। तदा स एवास्य स्वभाव इति **न वा केनचित्** पुरुषेण कदाचिद् गृह्ये[1]त। **इति** हेतोस्**सन्** विद्यमानो नित्यो भावो यदि **केनचित्** योगिनापि **दृष्टस्**तदा **न कश्चिन्नित्योऽतीन्द्रियः स्या**त्सर्वेषामवश्यं केनचिद् दर्शनात्। तथा चासौ नित्यं सर्वपुरुषाणामिन्द्रियग्राह्य एव स्यात् सर्वपुरुषम्प्रति ज्ञानजननसामर्थ्याविशेषात्। **न चेदं** सर्वपुरुषग्राह्यत्वन्नित्यस्या**स्ति। तस्मादर्थसामर्थ्यानपेक्षा** आकाशादिस्वलक्षणसामर्थ्यानपे[2]क्षकाः **समारोपितगोचराः।** यथागममध्यारोपिताऽकाशाद्याकारप्रतिभासिन्य इत्यर्थः। **आन्तरमेवोपादान**कारण**माश्रित्य** कीदृशं **विकल्पवासनाप्रबोधं।** आकाशादिविकल्पनानादिता। या आहिता वासना तस्याः प्रबोधः कार्योत्पादनं प्रत्याभिमुख्यं। यत एवार्थसामर्थ्यानपेक्षा अत एव **बाह्यार्थशून्या भ्रान्तय एवाकाशादिषु सर्वस्य** पुंसो **भ**[3]**वन्ति।**

स्थितमेतत् (।) नास्ति नित्येभ्यः कार्योत्पाद इति। शब्दात्तु दृश्यते कदाचिज्ज्ञानकार्यन्**तस्मान्नापरावृत्तिधर्माणः शब्दाः।** एकरूपतायां अपरावृत्तिरेव **धर्मो** येषामिति विग्रहः। किन्तु ज्ञानं ज्ञानं प्रत्यर्था भिन्नवृत्तय एव।

अथ नित्यमेकरूपा एव तदा **तत्त्वे वा।** एक रूपत्वे वाऽभ्युपगम्यमानेऽवितथार्थप्रतीतय एव वैदिकाः शब्दा इति **कुत एतत्। अ**[1]**वितथा अर्थप्रतीतिर्येभ्य इति विग्रहः।**

**स्वसंकेतमनुविदधदेवं प्रत्येत्याहोस्विच्छब्दस्वभावस्थितेरिति संदेहः (।) लोकेच्छयापि परावर्त्यमानाः शब्दाः पुनरन्यत्रा[6]न्यथा दृश्यन्त इति। लोकप्रसिद्ध्यनुविना (धा ?) नेपि संभवत्येवैषामन्यथाभावः। तस्मात् कस्यचिदवैपरीत्यदर्शनेपि सर्व्वेषां तथाभावो न सिध्यति।**

## *(ख) कृतकत्वेऽपि दोषाः*

**अकृतकस्वभावत्वेपि ह्येषां कश्चिन्मिथ्यार्थनियतोपि स्यादिति स्वभावापरिज्ञानात् सर्वत्र संशयः स्यात्।**

---

स्यान्मतम् (।) "अग्निर्हिमस्य भेषज"मित्यादिवैदिकवाक्यस्यावितथत्वात् सर्वस्यावितथत्वमिति (।)

अत आह। **न** हीत्यादि। **न ह्यग्निर्हिमस्य भेषजं** प्रतिपक्ष इत्येवमादिषु वेदवाक्येष्वग्नेः **शीतप्रतिघातसामर्थ्यम्**वेदवाक्यात्। प्रागपि यथासंकेतं **लोकप्रसिद्धं ख्याप्यत इति** कृत्वा **सर्व**मदृष्टार्थमपि वेदवा[5]क्य**न्तथा भवति**। अवितथम्भवति। लोकप्रसिद्धे ह्यर्थे लोकस्य संकेतानुसारेण व्यवहारो दृष्टः। ततो**लोकस्य स्वेच्छाकृतो** यः संकेतस्तेनानु पश्चाद् व्यवहारकाले **व्यवहारात्**। सन्देह एव कि**मयं लोकः स्वसंकेतमनुविदधत्**। अनुमग्न्।

अग्निर्हिमस्य भेषजमित्यादिवाक्या**देवम्प्रत्ये**त्यग्नेः शीतापनोदसामर्थ्यमिति निश्चिनोत्या**होस्विच्छब्द[6]स्वभावस्थितेः** शब्दस्य स्वभावेन प्रकृत्या सामर्थ्यनियमादेवं प्रत्येती**ति**। यदा च दृष्ट एवार्थे वैदिकस्य शब्दस्य स्वतोर्थप्रतिपादनशक्तिस्सन्दिग्धा तदात्यन्तपरोक्षेप्यर्थे नितरां सम्भाव्यत इति भावः।

नन्वनादिलोकप्रसिद्ध्यनुविधानेनैव वैदिकानां शब्दानामर्थवत्ता न च तत्र सन्देहः प्रतिभासत इति (।)

अत आह। **लोकेच्छया परावर्त्यमा[7]ना** यथासमयमर्थेषु निवेश्यमानाः पुनरन्यत्र देशादिपरावृत्ताव**न्यथे**त्यर्थान्तरनिवेशेन परावर्त्यमानाः शब्दा **दृश्यन्ते**। इति हेतो**र्लोकप्रसिद्ध्यानुविधाने**प्यङ्गीक्रियमाणे **सम्भवत्येवैषां** वैदिकानां शब्दा**नामन्यथाभावो** मिथ्यात्वं। प्रसिद्धेरेवानियतत्वात्। 1912

**तस्मात् कस्यचिद्** वैदिकस्य वाक्यस्या"ग्निर्हिमस्यभेषज"मित्यादिकस्या**वैपरीत्यदर्शने[1]पि सर्वेषां** वेदवाक्याना**न्तथाभाव**स्सत्यार्थत्व**न्न सिध्यति**।

**अकृतकत्वादेव** सत्यार्थत्वमिति **चेद्** (।)

**मिथ्यात्वं कृतकेष्वेव दृष्टमित्यकृतं वचः ।**
**सत्यार्थं व्यतिरेकस्य विरोधिव्यापनाद् यदि ॥ (२९०)**

40a **अथ[7] यन्मिथ्यार्थं वचनं तदखिलं कृतकमिति हेतुव्यतिरेकेण साध्यव्यतिरेकस्य व्याप्तेरन्यत्रासम्भवादकृतकं सत्यार्थमिति स्याद् विनाप्यन्वयेन। यो हि येनाव्याप्तस्तत्र तद्व्यतिरेकः शंक्येत। न च विरुद्धयोरेकत्र सम्भवोस्त्यसंभवे विजातीयस्य गत्यन्तराभावाद् (।) इष्टार्थसिद्धेस्तत्साधनत्वाच्च लिंगस्य। व्यर्थमन्वयदर्शनं। व्यतिरेकमात्रेणैव सिद्धे[1]रिति।**

**सत्यमेतद् (।) यदि विपक्षयोर्व्याप्यव्यापकभावः सिध्येत् स तु न सिद्धो**

---

आह। **अकृतकस्वभावत्वेह्येषां** वैदिकानां शब्दानां **मिथ्यार्थनियतोपि कश्चिच्छब्दः** स्यात्। इतिहेतोः स्वभावपरिज्ञानादयं सत्यार्थोयं मिथ्यार्थ **इत्येवं** विवेकेन **शब्दस्वभावानिश्चयात् सर्वत्र** शब्दे **संशयः स्यात्**। सत्यार्थम्वैदिकम्वाक्यमकृतक[2]-त्वादिति प्रयोगे क्रियमाणेन्वयाभावात्।

व्यतिरेकिप्रयोगमाह। **मिथ्यात्वमि**त्यादिना। **मिथ्यात्वं कृतकेष्वेव दृष्टमिति** हेतोर**कृतकम्वचः सत्यार्थं यदी**ति सम्बन्धः। किं कारणं (।) **व्यतिरेकस्य विरोधिव्यापनात्**। अकृतकस्य हेतोर्यो व्यतिरेकः कृतकत्वन्तेन सत्यार्थत्वं यत्साध्यन्तस्य विरोधिमिथ्यात्वन्तस्य व्यापनात्। व्यतिरेकस्येति कर्त्त[3]रि षष्ठी। हेतुव्यतिरेकेण कृतकत्वेन सत्यार्थविरोधिनो मिथ्यार्थत्वस्य व्याप्तत्वात्। वैदिके शब्देऽकृतकत्वात् कृतकत्वनिवृत्तौ मिथ्यार्थत्वनिवृत्तेः सत्यार्थत्वं सिध्यत्येव।

**यथे**त्यादिना व्याचष्टे। **यत्**किञ्चि**न्मिथ्यार्थम्वचः तदखिल**न्निःशेषं **कृतकमिति** कृत्वा। **हेतोर**कृतकत्वस्य **व्यतिरेकेण** कृतकत्वेन **साध्यव्यतिरेकस्य**। साध्यं स[4]त्यार्थत्वं तस्य व्यतिरेको मिथ्यात्वन्तस्य **व्याप्तेरन्यत्रा**कृतके मिथ्यार्थत्वस्या**सम्भवात्** कारणा**दकृतकं सत्यार्थमिति स्याद् विनाप्यन्वयेन**। सत्यार्थम्वैदिकम्वचो कृतकत्वादित्यत्र प्रयोगे यद्यप्यन्वयो नास्ति। तथाप्यन्वयेन विना सिध्यत्येवेत्यर्थः। यस्माद् **यो ह्य**र्थो मिथ्यात्वलक्षणो **येन** कृतकत्वेना**व्याप्तस्तत्र** मिथ्यात्वे **तद्व्यतिरे**[5]कस्तस्याव्यापकस्य कृतकत्वस्य व्यतिरेको कृतकत्वलक्षणो धर्म **आशंक्ये**तायमपि मिथ्यात्वे भवेदिति। तच्चेह नास्ति कृतकत्वेन मिथ्यार्थताया व्याप्तेः। **न च** विरुद्धेन व्याप्ते विरुद्धस्य सम्भवो यतो न च **विरुद्धयोः** कृतकत्वाकृतकत्वयो**रेकत्र** मिथ्यात्वे **सम्भवोस्ति**। तेनाकृतके सत्यार्थत्वं **विजातीयस्य** मिथ्यार्थत्वस्या**सम्भवे**। सत्यार्थमिथ्या[6]र्थत्वाभ्यां नान्या गतिरस्तीत **गत्यन्तराभावाद**कृतकत्वेन सत्यार्थ एव भवितव्यमित्यकृतकत्वा**दिष्टा**-

**यस्मात् ।**

**हेतावसम्भवेऽनुक्ते भावस्तस्यापि शङ्क्यते ।**
**विरुद्धानाम्पदार्थानामपि व्यापकदर्शनात् ॥ (२९१)**

**यदि हेतोः साध्यविपक्षेऽभावः सिध्येत् साध्यव्यतिरेकं हेतुव्यतिरेको व्याप्नुयात् । न च तत्र तस्यासंभवे प्रमाणं पश्यामः । न चाविरुद्धो विधिः प्रतिषेधसाधनो युक्तोऽतिप्रसंगात् । न चै [2]कत्र दृष्टस्यान्यत्र सम्भव एव पृथग्विरुद्धसहभाविनामपि दर्शनात् । अनित्यवत् प्रयत्नानन्तरीयकेतरयोर्न च तथा-**

---

र्थस्य सत्यार्थत्वलक्षणस्य **सिद्धेः** किमन्वयेन । **तत्साधनत्वाच्च लिङ्गस्य** इष्टार्थसाधनत्वाच्च लिङ्गस्य **व्यर्थमन्वयदर्शनं** । कस्माद् (।) यथोक्तविधिना **व्यतिरेकमात्रेणैव** साध्यसिद्धेरिति ।[7]

191b

**सत्यमेत**दित्या चा र्यः । विपक्षाद्धेतोर्व्यतिरेके सिद्धे सति साध्यं सिध्येदिति सत्यमेतत् । **यदि** सत्यार्थताऽकृतकत्व**विपक्षयो**र्मिथ्यात्वकृतकत्वयो**र्व्याप्यव्यापकभावः सिध्येत्** । तदा कृतकत्वेन व्याप्तान्मिथ्यार्थत्वादकृतकन्निवर्त्तते । **स तु** व्याप्यव्यापकभावो विपक्षयोर्न **सिद्धः** । किं कारणं ।[1] **यस्मात्** मिथ्यात्वेऽकृतकत्वस्या**सम्भवे**ऽसम्भवनिमित्तं बाधके **हेतावनुक्ते** सति । **भाव**स्सत्त्वन्**तस्याप्य**कृतकत्वस्य मिथ्यात्वे **शक्यते** । अकृतकं च स्यान्मिथ्यार्थं चेति । (२९० ab)

ननु च मिथ्यात्वे कृतकत्वं दृष्टं (।) यत्र च कृतकत्वन्तत्र कथमकृतकत्वमिति (।)

अत आह । **विरुद्धाना**मित्यादि । **विरुद्धानामपि पदार्थाना**मेक**व्यापकदर्शनात्** । यथा प्रयत्ना[2]प्रयत्ननान्तरीयकाणामनित्यानामेकेन कृतकत्वेन व्याप्तिः ।

**यदी**त्यादिना व्याचष्टे । **यद्य**कृतकत्वाख्यस्य **हेतोस्साध्यविपक्षे** मिथ्यार्थत्वे**ऽभावः सिध्ये**त्तदा **साध्यस्य** सत्यार्थत्वस्य **व्यति**रेकं मिथ्यात्वं । **हेतुव्यतिरेकः** हेतोरकृतकत्वस्य व्यतिरेकः कृतकत्वाख्यो **व्याप्नुयात्** । **न च तस्या**कृतकत्वस्य **तत्र** मिथ्यार्थतायाम**सम्भवे** बाधकं **प्रमा**[3]**णं पश्यामः** ।

अकृतकत्वादेव वेदस्य मिथ्यार्थतायामवृत्तिरिति चेद् (।)

आह । **न चे**त्यादि । मिथ्या**र्थ**त्वेना**विरुद्ध**स्याकृतत्वस्य **विधि**र्मिथ्यार्थता**प्रतिषेधस्य साधनो युक्तः** । कस्माद् (।) **अतिप्रसङ्गात्** । एवं हि यस्य कस्यचिद् विधानेन यस्य कस्यचिदभावः प्रतीयेत ।

कृतके दृष्टस्य मिथ्यात्वस्याकृतके कथं वृत्तिरिति चेद् (।)

आह । **न चैकत्र** कृतके **दृष्टस्य** मिथ्यात्वस्य पु[4]नर**न्यत्र**ाकृतके**ऽसम्भव** एव (।) किन्तु सम्भव एव । किं कारणम् (।) **पृथग्विरुद्धसहभाविनाम्**पृथगिति

**विधस्यादर्शनादसत्त्वमेव।**

**यस्मात्** (।)

**नासत्तासिद्धिरित्युक्तं सर्वतोनुपलम्भनात्।**
**असिद्धायामसत्तायां संदिग्धा व्यतिरेकिता॥ (२९२)**

**न ह्ययं पुरुषमात्रकः सर्वं द्रष्टुं समर्थो येनास्य दर्शननिवृत्या न तथा स्यात्। यस्य ज्ञानं [3]ज्ञेयसत्तां न व्यभिचरति स एवं ब्रुवाणः सो (?शो) भेतादर्शनान्नास्तीति। तदिमे स्वभावदेशकालविप्रकर्षेण सन्तोनुपलक्ष्याः स्युः। तथा हि (।) कोत्यन्तपरोक्षेर्थे सम्वादनमितरद्वा सर्वदर्शी वचनस्याकृतकस्येतरस्य वा विभावयितुं समर्थः। प्रतिपादितं चैतत् (।) क्वचित्तथा दृष्टानामप्यर्थानां पुनः कथञ्चिदन्यथाभावो यथा क्वचिद् देशे[4] मधुराणि निम्बफलाणि (?नि)**

---

व्यक्तिभेदेन विरुद्धसहभाविनामित्ररुद्धैरर्थैरेकत्र भाविनाम**पि दर्शनात्। अनित्यत्ववत् प्रयत्नानन्तरीयकेतरयो**रितरदप्रयत्नानन्तरीयकं। अनित्यत्वं प्रयत्नानन्तरीयकत्वेन सह दृष्टमप्रयत्नानरीयकत्वेन सह दृश्यते।

य[5]द्येवमकृतके मिथ्यात्वस्यादर्शनादभावः स्यादिति (।)

अत आह। **न च तथाविधस्ये**त्यकृतकस्य सतो मिथ्यात्वस्या**दर्शनादसत्त्वमेव।**

**यस्मान्न** विपक्षे हेतो**रसत्तासिद्धिः सर्वतोनुपलम्भनादित्युक्तं** प्राक्। ततश्चा**सिद्धायां** विपक्षाद्धेतो**रसत्तायां सन्दिग्ध**विपक्षाद् **व्यतिरेकिता।**

**न ही**त्यादिना व्याचष्टे। **अयम्पुरुषमात्रक** इत्यर्वा[6]ग्दर्शी **सर्वम्वस्तु द्रष्टुं समर्थो येनास्य** पुंसो **दर्शननिवृत्त्या न तथा स्यात्।** अदृष्टो न स्यात्। यस्माद् (।) **यस्य** हि पुंसो **ज्ञानं ज्ञेयसत्तां न व्यभिचरति।** सदित्येव कृत्वा यस्य सर्वस्मिन् ज्ञ-(?ज्ञे)ये ज्ञानं प्रवर्त्तते तस्य ज्ञानं ज्ञेयव्यापकं निवर्त्तमानं ज्ञेयमपि निवर्त्तयति। अतो**सावदर्शनान्नास्तीत्येवं ब्रुवाणः शोभेत।** न सर्वम् (।) **तदिति।** तस्माद् (।) **इमे** भावाः **सन्तोप्यनुपलक्ष्याः** अपोह्याः **स्युः।** कथं (।) **स्वभावदेशकालविप्रकर्षेण।** स्वभावश्च देशश्च कालश्च तैर्विप्रकर्षो व्यवधानमिति विग्रहः। **सन्नपि** कश्चिद्देशकालाभ्यां स्वभावेन च विप्रकृष्टः पिशाचादिवत्। (२९१)

1922a

ननु कालव्यवहितानामतीतानागतानामनुपलम्भादसत्वं युक्तमभावादेव। सत्यं (।) केवलमतीतानागतानामिदानीमनुपलम्भेपि क[1]दाचित् सत्त्वं भूतं कदाचिद् भविष्यतीत्यनुपलम्भाभाव इति।

**तथा ही**त्यादिनैतदेव बोधयति। **को ह्यसर्वदर्शी। अत्यन्तपरोक्षेर्थे वचनस्याकृतकस्य सम्वादनं। इतरस्य** कृतकस्य वचनस्यात्यन्तपरोक्षेर्थे। **इतरद्वे**त्यसम्वादनं **भावयितुं** निश्चेतुं **समर्थः** (।) नैव। परेण कृतकस्यासम्वादनमिष्टमिति द्वयमुक्तं।

**संस्कारविशेषप्रदामलकीफलानि च। न चेदानीमतद्दर्शिना तानि प्रतिक्षेप्त-(व्य)न्येवेति। तस्मादकृतकं च स्यान्मिथ्यार्थं चेति विरोधं पश्यामः (।)**

**न हीयमनुपलब्धिरदृश्यात्म(स्वभाव)साधिकेत्युक्तं। तेन यत्किंचित् मिथ्यार्थं तत्सर्वं पौरुषेयमित्यनिश्चयादव्याप्तिः (।) तथा हि (।)**

**अन्वयो व्यतिरेको वा सत्त्वं वा साध्यधर्मिणि।**
**तन्निश्चयफलैर्ज्ञानैः सिद्ध्यन्ति यदि साधनं॥ (२९३)**

**तथा चोक्तं (।) "य एव तूभयनिश्चितवाची स साधनं दूषणं वा नान्यतर-**

---

स्यादेतद् (।) एकस्य[2] वेदवाक्यस्य सम्वाददर्शनात् सर्वत्र वेदे सम्वादनमिति (।)

अत आह। **प्रतिपादितं चैतच्छेषवदनुमानचिन्तायां** पूर्वमेव। किं **प्रति-पादित**मित्याह। **क्वचिदि**त्यादि। **क्वचिद्** देशकाले वा। **तथे**त्येतेन प्रकारेण **दृष्टानामर्थानां पुनरन्यथाभावः**। पूर्वदृष्टाकाराद् वैपरीत्यं। एतदेवाह। **यथे**त्यादि **संस्कारविशेषात्** क्षीरमध्वादिप[3]रिष्का(रा)दिलक्षणात्। **आमलकीफलानि च क्वचिद्देशे मधुराणी**ति सम्बन्धः। **न चेदानीमतद्दर्शिना**। मधुरनिम्बफलाद्यदर्शिना। **तानि मधुराणि निम्बफलानि प्रतिक्षेप्तव्यान्येव**। तथा वेदवाक्यानाम्मिथ्यात्वं यदि नाम दृष्टन्तथापि न शक्यम्प्रतिक्षेप्तुं। **तस्मादकृतकं च स्यान्मिथ्यार्थं** चेत्य-कृतकमिथ्यार्थत्वयोर्न **विरो[4]धम्पश्यामः**।

ननु मिथ्यार्थतायामकृतकत्वस्यानुपलम्भादभाव इत्यत आह। **न हीय-मनुपलब्धिरदृश्यात्म**स्वदृश्यस्वभावेर्थेष्वभावस्य साधिकेत्युक्तं प्राक्। यतश्चा-कृतकत्वस्य न मिथ्यात्वेऽभावः सिद्धः। **तेन यत्किंचिन्मिथ्यात्वन्तत्सर्वं पौरुषेयं। इति** एवम्मिथ्यार्थत्वस्य कृतकत्वेना**व्याप्तिः**। किङ्कारणम**निश्चयात्**। अकृत-[5] कत्वस्य मिथ्यार्थत्वे व्यतिरेकानिश्चयादित्यर्थः। न चानिश्चितव्यतिरेकाद्धेतो-स्सकाशात् साध्यसिद्धिः।

**तथा हि** स्वसाध्येन हेतोर**न्वयो** व्याप्तिः। **व्यतिरेको वा** विपक्षाद् व्यावृ-त्तिर्वा। **सत्वं वा** हेतोः **साध्यधर्मिणि**। पक्षधर्म्ममित्यर्थः। एतानि च त्रीणि रूपाणि **ज्ञानैः** प्रमाणैर्**यदि सिध्यन्ति** कीदृशैस्त**न्निश्चयफलै**स्तस्य रूपत्रयस्य नि[6]श्चयः फलं येषामिति विग्रहः। तदा तानि त्रीणि रूपाणि विवक्षितस्य साध्यस्य **साधन**म्भवन्ति। **यथोक्त**माचार्य दि ग्ना गे न। **य एव ह्युभयनिश्चि-तवाची**। वादिप्रतिवादिभ्यां निश्चितस्य हेतुलक्षणयुक्तस्यार्थस्य वाचकः **स साधनन्दूषणम्वा**। असिद्धत्वादिलक्षणयुक्तस्यार्थस्य वाचकः शब्दः प्रतिवादिना दूषणाभिप्राये[7]ण प्रयुक्तः। **नान्यतरप्रसिद्धः सन्दिग्धवादो** वादिप्रतिवादिभ्या-मन्यतरप्रसिद्धस्य सन्दिग्धस्य चोभयोरन्यतरस्य च यो वाचकः शब्दः स न साधनं 192b

**प्रसिद्धः सन्दिग्धवाची पुनः साधनापेक्षत्वादि"ति। को ह्यदृष्टविरोधस्य संभवं प्रत्याचक्षीत। तदयं व्यतिरेकः संशयादसाधनं (।)**

**अपि च।**

**यत्र साध्यविपक्षस्य वर्ण्यते व्यतिरेकिता।**
**स एवास्य सपक्षः स्यात् सर्वो हेतुरतोन्वयी ॥ (२९४)**

**यत्किंचि[6]न्मिथ्यार्थं तत्सर्वं पौरुषेयमिति। हेतुविपक्षेण साध्यविपक्षस्य व्याप्तिः (।) तदभावेऽभावसिद्धौ स्यात्। भवतस्तेन व्याप्त्ययोगात्। यैव च विजातीययोर्व्यावृत्तिसिद्धिः। सैवान्वयस्थितिः। विपक्षव्यवच्छेदलक्षणत्वात् साध्य-**

---

नापि दूषणं। किं कारणं (।) **पुनः साधनापेक्षत्वात्**। अनिश्चितस्य निश्चयार्थं पुनः प्रमाणापेक्षत्वात्। न चाकृतकत्वेन सह मिथ्यार्थत्वस्य विरोधो निश्चितो येनाकृतके मिथ्यात्वस्य व्यति[1]रेकः सिद्धः स्यात्।

अथ स्याद् (।) अकृतकत्वादेव वेदे मिथ्यात्वं न भवतीति चेद् (।)

आह। **को** हीत्यादि। यस्मात् **को हि** सचेता अकृतकत्वेन सहा**दृष्टविरोधस्य** मिथ्यात्वस्य **सम्भवम्**वेदवाक्येषु **प्रत्याचक्षीत**। **तदिति** तस्मा**दयम**कृतकत्वस्य हेतोर्यथोक्तो **व्यतिरेको न साधनं**। किं कारणं (।) **संशयात्**। इतश्च व्यतिरेकी हेतोर्नास्तीति दर्शय[2]न्नाह।

**अपि चे**त्यादि। **यत्र** विषये **साध्यविपक्षस्य**। साध्यं सत्यार्थत्वन्तद्विपक्षस्य मिथ्यात्वस्य **वर्ण्यते व्यतिरेकिता**। यत्कृतकं न भवति तन्मिथ्यार्थन्न भवतीति। य एव मिथ्यार्थत्वव्यवच्छेदस्य विषयः। **स एवास्य** कृतकस्य हेतोः **सपक्षः स्याद्** (।) **अतः** कारणात् **सर्वो हेतुरन्वयी**। अन्वयव्यतिरेकी (।) व्यतिरेकस्य प्रकृतत्वात्। न व्यतिरे[3]क्येवेत्यर्थः।

ननु साध्यधर्मसामान्येन समानोर्थः सपक्षः साधर्म्यदृष्टान्त उच्यते। न चायमिहास्ति (।) तत्कथं स एवास्य सपक्षः स्यादित्युच्यते।

सत्यं (।) सपक्षसाध्यत्वेनान्वय एव सपक्ष उच्यते। अत एवाह (।) **सर्वो हेतुरतोन्वयीति**।

**यदि**त्यादिना व्याचष्टे। **यत्किञ्चिन्मिथ्यार्थन्तत्सर्वम्पौरुषेयमिति**। एवं **हेतोर**कृतकत्वस्य **विपक्षेण** कृत[4]कत्वेन **साध्यविपक्षस्य** मिथ्यात्वस्य या **व्याप्तिः** सा **तदभावे** कृतकत्वाभावे मिथ्यात्वस्या**भावसिद्धौ** सत्यां **स्यात्**। किं कारणं (।) कृतकत्वाभावे **भवतो** मिथ्यार्थत्वस्य **तेन** कृतकत्वेन **व्याप्त्ययोगात्**। तस्माद् व्याप्तिमिच्छता। मिथ्यार्थत्वस्य कृतकत्वनिवृत्त्या निवृत्तिरेष्टव्या। **यैव च** साध्यसाधन**विजातीययोर्**मिथ्यात्वकृतकत्वयो**र्व्यावृत्तिसि[5]द्धिः**। कृतकत्वनिवृत्या

**स्य। प्रतिषेधद्वयाच्च विधिसिद्धिरिति। काऽनन्वयाव्यतिरेकव्याप्तिसिद्धिः। तन्न कश्चिद्धेतुरनन्वयो नाम। एकव्यवच्छेद[7]स्य विजातीयसिद्धिनान्तरीयकत्वात।** 40b

**अनित्यनिरात्मतादिव्यवच्छेदेपि तथा स्यात्।**

**न (।) व्यतिरेकव्यवच्छेदस्य भावरूपत्वात्। न भावरूपव्यवच्छेदे भावानुषंगः। अभावव्यवच्छेदस्तु नियमेन भावोपस्थानः। भावाभावयोरन्योन्यविवेकरूपत्वाद् (।) अभावरूपस्तु व्यतिरेकः (।) स व्यतिरिच्यमानो भावमुपस्थापयति।**

---

मिथ्यार्थत्वन्निवर्त्तत इत्येवंरूपा। **सैवा**कृतकस्य हेतोः सत्यार्थत्वेनान्वयस्थितिर**न्वयव्यवस्थितिः**। किं कारणम् (।) **विपक्षव्यवच्छेदलक्षणत्वात् साध्यस्य** सत्यार्थत्वस्य। विपक्षो मिथ्यात्वन्तस्य कृतकत्वनिवर्त्तनो कृतके यो व्यवच्छेदो व्यावृत्तिस्तल्लक्षणत्वात्।

किञ्च (।) सत्यार्थताप्रतिषेधो मिथ्यार्थत्वं। त[6]स्य च मिथ्यार्थत्वस्याकृतके यदा प्रतिषेधः कृतस्तदा **प्रतिषेधद्वय**ञ्जातं। अस्मा**च्च** सत्यार्थताव्यवच्छेदरूपात् प्रतिषेधद्वयात् सत्यार्थता**विधिसिद्धे**रिति हेतोः **कानन्वया**न्वयरहिता। साधनव्यतिरेकेण कृतकत्वेन साध्य**व्यतिरे**कस्य मिथ्यात्वस्य व्याप्तिसिद्धिर्नैवानन्वया **व्याप्तिसिद्धिः**।

**तदि**ति तस्मा**न्न कश्चिद्धेतुरन[7]न्वयो नाम**। किन्तु सर्वोन्वयव्यतिरेकवानेव। 193a
किं कारणम् (।) **एकव्यवच्छेदस्या**कृतके मिथ्यार्थत्वव्यवच्छेदस्य। **विजातीयसिद्धिनान्तरीयकत्वात्**। मिथ्यार्थता विजातीयस्य सत्यार्थत्वस्य या सिद्धिस्तन्नान्तरीयकत्वात्।

यद्येकव्यवच्छेदस्तद्विजातीयसिद्धिनान्तरीयकस्तदाऽ**नित्यनिरात्मादिव्यवच्छेदेपि** अनित्यताया निरात्मताया आदिशब्दाद् दुःखत्वादीनाञ्च। य[1]दा क्वचिच्छशविषाणादौ व्यवच्छेदः क्रियते तदापि **तथा स्यात्**। मिथ्यार्थताव्यवच्छेदेन सत्य (ा) र्थसिद्धिवदनित्यत्वादिविजातीयानान्नित्यसात्मकसुखत्वादीनां सिद्धिः स्यात्। न चैतदिष्टं (।) तथात्रापि माभूदिति परो मन्यते।

**ने**त्यादिना परिहरति। नायन्दोषः। किं कारणं (।) **व्यतिरेकव्यवच्छेदस्य भावरूपत्वात्**। व्यतिरेकोऽभावो (।) अभावस्य च यो व्य[2]वच्छेदो निवृत्तिस्तस्य भावरूपत्वात्। अभावनिवृत्त्या भावव्यवस्थेति यावत्। तदनेनभावलक्षणमुक्तं। अस्मादेव वचनादिदमप्यर्थादुक्तम्भवति। भावव्यवच्छेदस्याभावरूपत्वादिति। तदनेन भावाभावयोस्तावल्लक्षणमुक्तं। तत्र यस्मिन् व्यवच्छिद्यमाने। न भावानुषङ्गः। यस्मिंश्च व्यवच्छिद्यमाने भावानुषङ्गस्तद्दर्शयन्नाह। **न भावे**त्या[3]दि। **भावस्वभावस्य व्यवच्छेदे** सति न **भावानुषङ्गो** न भावस्याक्षेपः। भावो न भव-

**नैव नैरा[1]त्म्यादयः स्वभावविशेषात्। क्रियाभोगाधिष्ठानास्वतन्त्रो ह्यात्मा निरात्मा (।) तत्स्वातन्त्र्यलक्षणत्वादात्मनः।**

**तद्रूपं नैरात्म्यन्नात्मनिवृत्तिमात्रमन्यथा निरुपाख्ये कृतकत्वाद्ययोगान्न ततो नैरात्म्यसिद्धिः स्याद् (।) आत्मव्यवच्छेदेन निरात्मनो भावस्य परामर्शाददोष इति चेत् (।) पर्युदासेन वस्तुसंस्पर्शात्तदेव वस्तुरूपं नैरात्म्यमायातं।**

---

तीति तत्प्रतिषेधस्यैव सम्भवात्। **अभावव्यवच्छेदस्त्र**भावस्य विरहमात्रस्य **तु यो व्यवच्छेदस्स नियमेन भावस्योपस्थापनो** भावस्याक्षेपकः। किङ्कारणम् (।) **भावाभावयोरन्योन्यं** यो **विवेको** विरहस्त**द्रूपत्वात्**। तत्स्वभावत्वात्। भाव-विवेकस्याभावरूपत्वाद[4]भावविवेकस्य च भावरूपत्वादित्यर्थः।

एवन्तावद् भावाभावव्यवच्छेदयोर्भावानाक्षेपाक्षेपकत्व[1]मुक्त्वा प्रकृतं योज-यत्य**भावरूपस्त्वि**त्यादिना। सत्यार्थतायास्**तु** यो **व्यतिरेको** मिथ्यार्थतालक्षणः। **स** सत्यार्थताऽभावरूपा स **व्यतिरिच्यमानः** कृतकत्वनिवृत्या निवर्त्तमानो **भावं** सत्यार्थतालक्षण**मुपस्थापयत्य**कृतके।

यदि तु सत्यार्थ[5]त्वविपरीतरूपं मिथ्यार्थत्वम्परेणाभ्युपगम्यते। तदा वेदवाक्येषु कृतकनिवृत्तौ मिथ्यात्व[2]मेव न स्यान्न तु सत्यार्थत्वन्ततश्चानर्थक्यं स्यादिति वक्ष्यति। तस्मादवश्यं सत्यार्थता भाव**रूपा**[3]। मिथ्यार्थतालक्षणो धर्म एष्टव्यः (।) स च व्यतिरिच्यमानस्सत्यार्थताया भावमुपस्थापयति। **नैवं नैरात्म्यादयो** विरहरूपाः (।) किं कारणं (।) **स्वभावविशेषात्**। [6]स्वभावविशेषो हि नैरात्म्यं। तमेवाह। **क्रिया** शुभाशुभकरणं। **भोगः** सुखदुःखानुभवस्तयो**रधिष्ठानं** स्वीकार-स्तत्रा**स्वतन्त्रः** परवशो **ह्यात्मा** स्वभावो **निरात्मा**। स्वभावपर्यायोत्रात्मशब्दः। किं पुनः कारणम् (।) एवंभूतः स्वभावो निरात्मा भवतीत्याह। **तत्स्वातन्त्र्ये**-त्यादि। **तस्मिन्** क्रियाभोगाधिष्ठाने य**त्स्वातन्त्र्यं** त**ल्लक्ष (ण)**[4]**त्वात्**। तत्स्व-

193b भावत्वादेव**त्मनः**[7] परैः कल्पितस्य। अतस्तद्वैधर्म्येणास्वतन्त्रस्वभावो निरात्मा भवतीत्यभिप्रायः।

यत एवन्त**दिति** तस्माद् **रूपं** स्वभावो **नैरात्म्यं नात्मनिवृत्तिमात्रं**[5]। **अन्यथा** यदि निवृत्तिमात्रं[6] नैरात्म्यं स्यात्तदा निःस्वभावत्वान्निरुपाख्यमेव तद् भवेत्। **निरुपाख्ये च कृतकत्वादेः** (।) आदिशब्दात्प्रयत्नानन्तरीयकत्वादेर्वस्तुधर्मस्य **हेतोरयोगात्**। **ततः** कृतकत्वादेर्हेतोस्स[1]काशान्नैरात्म्यं गति**र्नैरात्म्यसिद्धिर्न**

---

[1] B. भावानाक्षेपकत्वमुक्त्वा। [2] B. मिथ्यार्थत्वमेव। [3] B. रूपो। [4] B. [5] B. नात्मव्यवच्छेदमात्रं—added [6] B. स्वातन्त्र्यः।

**यस्यापि नाभावरूपो व्यति[2]रेकस्तस्य भावरूपव्यवच्छेदे भावसिद्धिः स्यादिति नान्वयानुषङ्गः। तथा नैरात्म्येपि न भावसिद्धिः स्यात्।**

**यथा "नेदं निरात्मकं जीवच्छरीरं प्राणादिमत्वादि"ति। विपक्षयोर्व्याप्यव्यापकभावचिन्तायामप्राणादिमत्व एव नैरात्म्यं दृष्टं (।) तदभावे च नास्तीति स्वयं न भवदपि प्राणादीनां नात्मनि सिद्धिमुपस्थापयति।**

---

**स्यात्**। इष्यते च (।) तस्मान्न बौद्धस्यात्मविरहमात्रं नैरात्म्यं। न व्यवच्छेदमात्रं विवक्ष्यते (।) किन्त्वा**त्मव्यवच्छेदेन निरात्मनो भावस्य** वस्तुनो निरात्मशब्देन **परामर्शाद**भिधानात् कृतकत्वादेस्सकाशान्नैरात्म्यगतिर्न प्राप्नोतीत्ययम**दोष इति चेत्**। एवमप्यात्म**पर्युदासेन वस्तुसंस्पर्शात्**। **तदेवास्मदुक्तम्वस्तुरूपम्भा**[2]वस्वभा**वन्नैरात्म्यमायातं**। न च भावव्यवच्छेदे भावान्तरानुषङ्गः। तस्माद् बौद्धानां शशविषाणादौ नैरात्म्यव्यवच्छेदेपि नात्मनो भावसिद्धिः। तेन यदुक्त"मनित्यनिरात्मताव्यवच्छेदेपि तथा स्यादि"ति तत्परिहृतं।

**यस्यापि** नै या यि का दे **र्नाभावरूप** आत्म (ा) **व्यतिरेकः** (।) किन्तर्हि (।) स्वभावाभाव एव **तस्य** नैयायिकादे**र्भावरूपस्य**[3] नैरात्म्यस्य **व्यवच्छेदे** **नात्मनो भावसिद्धिः स्यात्**। **इति** हेतोः शशविषाणादौ नैरात्म्यव्यवच्छेदेप्यात्मनो **नान्वयानुषङ्गः**। आत्मनान्वयोनुगमो न भवतीत्यर्थः। यथा च शशविषाणादौ नैरात्म्यव्यवच्छेदेप्यात्मनो नान्वयानुगमस्**तथा** जीवच्छरीरेऽ**नैरात्म्येपि** नैरात्म्याभावेपि **नात्मनो भावसिद्धिः स्यात्**।

अथवान्यथा व्याख्यायते। मी मां स को क्तव्यतिरेकिनिराकरणप्रस्तावेन नैयायिकोक्तमपि व्यतिरेकिणं निराकर्त्तुमाह। **यस्यापी**त्यादि। यस्यापि नैयायिकादे**र्नाभावरूप** आत्मा **व्यतिरेकः** (।) किन्तर्हि (।) नैरात्म्यम्भावस्वभाव एव। **तस्यै**वम्वादिनो नैयायिकस्य **भावरूपस्य** नैरात्म्यस्य **व्यवच्छेदे नात्मनो भावसिद्धिः स्यात्**। भा[5]वव्यवच्छेदे भावान्तरानुषङ्गाभावात्। **इति** हेतोर्यत्र प्राणादिमत्वन्तत्रात्मेति **नान्वयानुषङ्गः**। यथा च नान्वयानुषङ्गस्**तथा** साध्यधर्मिण्य**नैरात्म्येपि** नैरात्म्यनिवृत्तावपि **नात्मनो भावसिद्धिः** स्यात्।

एतदेव प्रयोगपूर्वकन्दर्शयन्नाह। **यथे**त्यादि। **इदं जीवच्छरीरं न निरात्मकं प्राणादिमत्वादिति**। आश्वासः प्राणः। आदिशब्दात्[6] प्रश्वासादिपरिग्रहः। अत्र प्रयोगे जीवच्छरीरस्य सात्मकत्वं साध्यन्न चोभयसिद्धः। स पक्षभूत आत्मास्तीति नान्वयश्चिन्त्यते। केवलं साध्यस्यात्मनो हेतोश्च प्राणादिमत्त्वस्य **यथाक्रमं यौ विपक्षौ** नैरात्म्यमप्राणादिमत्वं च **तयोर्व्याप्यव्यापकभावचिन्तायां** क्रियमाणायाम**प्रमाणादिमत्व एव नैरात्म्यं दृष्टन्तदभावे** व्यापकस्या[7]प्राणादि- 194a

**तथा साध्ये[3]पि प्राणादिभिर्व्युदस्यमानं स्यात् केवलं। नैरात्म्येऽभावात् प्राणादयस्तन्निरसना नात्मोपस्थापनास्तत्र भावासिद्धेः। न च नैरात्म्यनिवृत्यात्मसिद्धिः। विपक्षव्यतिरेकदर्शनेपि प्रसंगात्।**

**तन्न विपर्ययव्याप्तिर्व्यतिरेकासिद्धौ तत्सिद्धिरेव चान्वयसिद्धिः (।) असिद्धितद्व्यतिरेकनिवृत्तिसिद्धावपि तदसिद्धिरिति साध्ये[4]पि प्रसंगः। तन्न अनन्वया व्यतिरेकव्याप्तिः (।)**

---

मत्त्वस्याभावे **च** व्याप्यं नैरात्म्यं। प्राणादिमति **नास्तीति** न्यायात्। **स्वयं न भवदपि** नैरात्म्यं **प्राणादीनां** हेतुत्वेनाभिमतानामा**त्मनि** सपक्षभूते **न सिद्धिमुपस्थापयति**। नैरात्म्यस्य भावरूपस्य व्यवच्छेदेप्यनातम[1]लक्षणस्य भावस्यानाक्षेपात्। ततः सत्यपि व्यतिरेकेन्वयानुषङ्गाभावाद् व्यतिरेक्येव हेतुः प्राणादिरिति न या यि क स्येष्टसि[1]द्धिरेवेयता ग्रन्थेन दर्शिता।

एतस्मिन्नभ्युपगमे दोषमाह। **तथे**त्यादि। अप्राणादिमत्वनिवृत्त्या प्राणादिभ्यो निवर्त्त्यमानमपि नैरात्म्यं। यथा प्राणादीनामात्मनि सपक्षभूते न सिद्धिमुपस्थापयति। **तथा साध्येपि** जीवच्छरीरे **प्राणा**दिहेतुभिर्न्नैरात्म्यं **व्युदस्यमानं केवलं स्यात्**। न त्वात्मन उपस्थापकं।

एतदेव ग्रहणकवाक्यं स्प[2]ष्टयन्नाह। **नैरात्म्येऽभावा**दित्यादि। **नैरात्म्ये** प्राणादीना**मभावात् प्राणादयस्तन्नि**रसना नैरात्म्यमात्रव्यवच्छेदका **नात्मोपस्थापकाः**। किं कारणं (।) **तत्र** सात्मके प्राणादे**र्भावासिद्धेः**। **न च** जीवच्छरीरे **नैरात्म्य**स्यात्मविरुद्धस्य **निवृत्यात्मसिद्धिः**। किं कारणं (।) **विपक्षा**न्नैरात्म्यात् प्राणादे**र्व्यतिरेकदर्शनेपि** क्रियमाणे सपक्षेप्यात्मनि प्रा[3]णादीनां सिद्धि**प्रसङ्गात्**।

यत एवं (।) **तस्मान्न विपर्ययव्याप्तिः**। सात्मकत्वप्राणादिमत्वविपक्षयोर्नैरात्म्यात् प्राणादिमत्त्वयोर्न व्याप्तिसिद्धिरित्यर्थः। कदा (।) नैरात्म्यात् प्राणादे**र्व्यतिरेकासिद्धौ**। एवं हि हेतुविपक्षेणाप्राणादिमत्त्वेन साध्यविपक्षस्य नैरात्म्यस्य व्याप्तिसिद्धिः स्यात् यदि प्राणादिभ्यो नैरात्म्यं। निवर्त्तेत। सा च निवृ[4]त्तिरन्वये सति स्यात्। तदाह (।) **तत्सिद्धिरेव चे**त्यादि। तस्य व्यतिरेकस्य **सिद्धिरेवान्वय सिद्धिः**। तन्नान्तरीयकत्वात्तस्य। व्यतिरेकसिद्धिरेवान्वयसिद्धरुक्ता।

अथान्वयसिद्धिर्नेष्यते। तदाऽ**सिद्धौ** चान्वयस्य। तद्व्यतिरेकवृत्तिसिद्धावपि। **तस्यात्मनो व्यतिरे**को नैरात्म्यन्तस्य प्राणादेः सकाशा**न्निवृत्तिसिद्धावपि**। **तदसिद्धि**स्तस्यात्मन[5]स्सपक्षभूतस्यासिद्धि**रिति** कृत्वा **साध्येपि** जीच्छरीरे नैरा-

---

[1]B. **०प्यात्मलक्षणस्य।**

**मिथ्यार्थतायास्तु पौरुषेयत्वेन व्याप्त्याऽपौरुषेयान्निवृत्तावपि न सत्यार्थत्वं प्रकारान्तरसंभवात्। द्वैराश्ये न शब्दानामेतत् स्यादेकनिवृत्तौ गत्यन्तराभावात्। ते त्वनर्थका अपि स्युरिति नेष्टसिद्धिः (।)**

**अर्थप्रतीतेर्नानर्थका इति चेत्। नैष पुरु(ष)व्यापारः स्यात्। अर्थान्तरविकल्प[5]वद् (।) यथाऽतदर्थत्वेपि भरतोर्वश्यादिचरितादिकमर्थमन्ये अन्यथा व्याचक्षते। तदनुसारेण च केषांचित् प्रतीतिस्तथा यमनर्थकेष्वर्थविकल्पः पुरुषकृतः स्यात्। न शब्दस्वभावकृतः। पुरुषोपदेशापेक्षणाच्चार्थान्तरवदेव (।) न हि प्रकृ-**

---

त्म्यनिवृत्तावप्यात्मनोऽसिद्धिप्रसंगः। **तदिति** तस्मादन्वयाऽन्वयरहिता **न व्यतिरेकव्याप्तिः** साध्यसाधनविपक्षयोर्न व्याप्तिरित्यर्थः।

अभ्युपगम्यापीति तु ब्रूमः। भवतु नामानन्वया विपर्ययव्याप्तिः। जीवच्छरीराच्च नैरात्म्यनिवृत्तौ सात्मकत्वं जीवच्छरीरस्य प्रकारान्तराभा[6]वात्। सत्यार्थतासाधने त्वत्कृतके हेतावयम्प्रकारो न सम्भवतीत्याह। **मिथ्यार्थताया** इत्यादि। **मिथ्यार्थतायास्तु** साध्यविपक्षभूतायाः **पौरुषेयत्वेन व्याप्त्या** हेतुभूतया शब्दा**दपौरुषेयान्निवृत्तावपि न सत्यार्थत्वम**कृतकस्य सिध्येत्। किं कारणं (।) सत्यार्थत्वव्यतिरेकेणानर्थकस्य **प्रकारान्तरस्य सम्भवात्**[7]। सत्यार्थत्वमिथ्यार्थत्वे **न द्वैराश्ये** तु **शब्दानामेतत्** स्यात्। मिथ्यार्थत्वनिवृत्तौ सत्यार्थत्वं स्यात्। किं कारणम् (।) **एकनिवृत्तौ** मिथ्यार्थतानिवृत्तौ सत्यार्थताव्यतिरेकेण **गत्यन्तराभावात्**। **द्वैराश्य**मेव तु नास्ति गत्यन्तरसम्भवाद् (।) अतस्ते शब्दा **अनर्था अपि स्युरिति नेष्टसिद्धिर्न** सत्यार्थतासिद्धिः। 194b

शब्देभ्योर्थ**प्रतीतेः** कारणान्ना**नर्थका इति चेत्**।[1] **नायं** स्वाभाविकोर्थप्रत्ययः किन्त्वे**ष पुरुषव्यापारः स्यात्**। संकेतः पुरुषव्यापारस्तत्फलत्वात्पुरुषव्यापार इत्यभेदेनोक्तः पुरुषव्यापारात् स्यादित्यर्थः। किम्वत्। प्रसिद्धादर्थाद**र्थान्तरविकल्पवत्**।

एतदेव व्याचष्टे। **यथे**त्यादि। जै मि नी यै रिष्टेनार्थेन **भ र तो र्व श्या दिचरितादि**कस्या**तदर्थत्वेपि** तद्भरतचरितमुर्वशीचरि[2]तं। आदिशब्दादन्यस्यापि पु रू र व श्चरितादेर्ग्रहणं। द्वितीयेनादिग्रहणे न भरतादीनां चरितादन्यदप्यवस्थाविशेषादि**कमर्थमन्ये** मी मां स का लोकप्रसिद्धादर्थाद**न्यथा व्याचक्षते**। भरतो यूपः। उर्वशी• पात्री। अरणिर्वेत्यादिना।

व्याख्यातृविकल्पिताद् अर्थप्रतीतिर्न भवत्येवेति चेद् (।)
आह। **तदनुसारेण**त्यादि। व्याख्यातृभिर्वि[3]कल्पितार्था**नुसारेण। केषांचि**च्छ्रोतॄणां **प्रतीतिर्भ**वत्येव (।) **तथे**ति भरतादिशब्दव्याख्यावत्। स्वभावाद**नर्थकेष्वपि** वेदवाक्ये**ष्वर्थविकल्पः पुरुषकृतः स्यान्न शब्दस्वभावकृतः**। किं कारणं (।) वैदिके-

**त्या प्रकाशनास्तमपेक्षन्ते वह्न्यादयः (।) पुरुषस्तु स्वसमयव्यापारमाचक्षाण उपदिशतीति न्याय्यं (।) पुरुषसमितनि[6]सर्गसिद्ध्योरुपदेशापेक्षणादन्यविशेषाच्चैको नैसर्गिकोन्यस्तु पौरुषेय इति दुरवसानम् (।)**

अस्ति **विशेषः प्रमाणसमाण (?न)सम्वाद इति चेद् (।) एतदुत्तरत्र निषेत्स्यामः (।) नात्यन्तपरोक्षेर्थे प्रमाणान्तरवृत्तिरिति। समानधर्मिणोरर्थयोः प्रमाण-**
41a **सम्वादमात्रविशेषाद् एकत्रापौरुषेयत्वे[7] बहुतरमिदानीमपौरुषेयं। सन्ति पुरुषकृतान्यपि वाक्यानि कानिचिदेवं विधानीति तेष्वपि प्रसंगः।**

**तद्वदेषामप्यभिमतार्थवत्ता पौरुषेयी च स्यात्। प्रमाणानुरोधिनी च।**

---

भ्योर्थप्रतिपत्तौ **पुरुषस्य** जै मि नि प्रभृते**रुपदेशापेक्षणात्**। किमिव (।) **अर्थान्तरवदेव**। भरतोर्वश्यादिशब्दानामर्थान्तरविकल्पवदि[4]त्यर्थः। स्वभावतोर्थप्रतिपादनेपि पुरुषोपदेशमपेक्षिष्यन्त इत्यपि मिथ्या। यतो **न हि प्रकृत्या** स्वभावेनार्थ**प्रकाशनास्तं** पुरुषोपदेश**मपेक्षन्ते वह्न्यादयः। पुरुषस्तु** स्वमात्मीयं **समयव्यापार**संकेतसामर्थ्येना**चक्षाणः** परस्मै **उपदिशति**। यथायं शब्दोस्मिन्नर्थे मया प्रयुक्त **इति** न्याय्यं (।) न तु प्रकृत्यार्थप्रकाशने पु[5]रुषोपदेशो न्याय्यः।

अथ पुरुषसमितार्थवन्निसर्गसिद्धोपि वेदोर्थेषु पुरुषोपदेशमपेक्षते। तदा यश्च **पुरुषेण समितः** संकेतितो यश्च **निसर्गेण** स्वभावेन **सिद्धोर्थः**। **तयोर्द्वयोरपि** पुरुषोपदेशा**पेक्षणं** प्रत्यविशेषात्। **अन्यश्च** कश्चि**द्विशेषो** नास्ति येनायं पुरुषसमितोयं निसर्गसिद्ध इति प्रतीयेत। **अतः** कारणा**दे[6]को** वैदिकोर्थे **नैसर्गिकः**। निसर्गे भव इत्याध्यात्मादित्वाट्ठक्। **अन्यो** लौकिकशब्दोर्थे **पौरुषेय इति दुरवसानं**। दुर्बोधं। विभागसाधकप्रमाणाभावात्।

**अस्ति विशेषो** निसर्गसिद्धस्य वैदिकस्य को(पि) प्रमाणसम्वादः। प्रमाणान्तरानुगमनं। यस्तु नैवं स पौरुषेय इति चेत्। **एतदुत्तरत्र निषेत्स्यामो** यथा
195a **नास्त्यन्तप[7]रोक्षेर्थे प्रमाणान्तरवृत्तिरि**त्यादिना ग्रन्थेन। पुरुषोपदेशापेक्षणादिना च **समानधर्मणो**र्लौकिकवैदिकयोः **प्रमाणसम्वादमात्रविशेषादेकत्र** वैदिके **ऽपौरुषेयत्वे**न कल्प्यमाने। **बहुतरमिदानीं** लौकिकमेकवाक्यं प्रमाणसम्वाद्य**पौरुषेयं** कल्प्यं स्यात्। यस्मात् **सन्ति पुरुषकृतान्यपि वाक्यानि कानिचिद्** "अनित्या वत संस्कारा"[1] इत्येवमादी[1]नि। **एवम्विधानीति** प्रमाणसम्वादीनीति कृत्वा **तेष्व**पौरुषेयत्व**प्रसंगः**।

अथ प्रमाणसम्वादिनोपि लौकिकस्य पौरुषेयत्वन्तदा **तद्वदेषामपि** वैदिकानां

---

[1] **धम्मपदे**

**अपि चेदं (।) मन्त्रा अपौरुषेयाश्चेति व्याहतम्पश्यामः। तथा हि ॥**

**समयत्वे हि मन्त्राणां कस्यचित् कार्यसाधनं [२] ।**

**युक्तं (।) यद्येते मन्त्राः कस्यचित् समयो यथा मत्प्रणीतमेतदभिम[1]तार्थोपनिबन्धनं वाक्यमेवं नियुञ्जानमनेनार्थेन योजयामीति। परार्थपरतानुरोधेनान्यतो वा कुतश्चिद्धेतोः स्यात्। तदा मन्त्रप्रयोगात् कदाचिदर्थनिष्पत्तिर्युक्ता। कविसमयादि (व) पाठकानां।**

**अथापि भावशक्तिः स्यात् अन्यत्राप्यविशेषतः ॥२९५॥**

**न वै पुरुषसमयान्मन्त्रेभ्योर्थसिद्धिः (।) किन्तर्हि (।) भावस्वभाव एष (।) यदि न क्व[2]चिन्नियुक्ताः फलदाः (।)**

---

शब्दानामभिप्रेतार्थवत्ता **पौरुषेयी च स्यात्** **प्रमाणानुरोधिनी च** प्रमाणासम्वादिनी चेति न विशेषं पश्यामो वैदिकानां शब्दानां लौकिकेभ्यः।

वैदिकानां शब्दानां मन्त्रत्वादेवापौरुषे[2]यत्वमिति दर्शयन्नाह। **अपि चे**त्यादि। **व्याहतं** परस्परविरुद्धं। तथा हि (।) **मन्त्राणां कस्यचि**त्पुरुषस्य **समयत्वे** प्रतिज्ञाव्यवस्थापितत्वे सति **कार्यसाधनं युक्त**मभिमतकार्यसिद्धिर्मन्त्रप्रयोगाद् युक्तेति।

**यद्येत** इत्यादिना व्याख्यानं। **एते मन्त्रा यदि कस्यचित्** प्रभाववतः कर्त्तुः **समयः** स्यादिति वक्ष्यमाणेन सम्बन्धः। समयव्यवस्थापितत्वात्स[3]मय इत्युच्यन्ते। कथं पुनरसौ समयः कृत इत्याह। **परार्थे**त्यादि। **परार्थपरता** परार्थप्रधानता। कृपालुतेति यावत्। **तस्या अनुरोधेन**। **अन्यतो वा कुतश्चिद्** यशःप्रभृतेर्**हेतोः** कृतः **स्यात्**। कीदृशोसौ समय इत्याह। **यथे**त्यादि। **यथा मत्प्रणीतमेतद् वाक्यं** (।) किं भूतम् (।) **अभिमतार्थोपनिबन्धनं**। मन्त्रस्य कर्त्तुरभिमतो योर्थो विधिविशेष[4]ः। आवाहनविसर्जनादिलक्षणः स निबन्धनं प्रवृत्त्यङ्गं यस्मिन् वाक्ये तत्तथोक्तं। **एव**मित्यनेनानुक्रमेण **नियुंजानं** प्रयुंजानं पुरुष**मनेनार्थेन** पुरुषाभिमतेन फलेन **योजयामीति** समयः स्यात्। **तदा मन्त्रप्रयोगात् कदाचित्** विधिसमाप्तौ। अभिमता**र्थनिष्पत्तिः** स्यात्। **कविसमयादिव**। यथा केनचित् काव्यं कृत्वैवं समयः कृतः (।) मत्प्रणी[5]तं काव्यं यः पठति। तस्मै मयेदं दातव्यमित्यतस्तत्कृतकाव्य**पाठकानां** यथा प्रतिज्ञातार्थनिष्पत्तिस्तद्वत्।

**अथ भावशक्तिः** शब्दस्वभावस्यैव सा तादृशी शक्तिर्येनाभिमतम्फलम्भवति। न यथाभिमतात् पुरुषसमयात्। तदा **स्यादन्यत्रापि**। यथा कथंचित्प्रयुक्तान्मन्त्रादपि। किं कारणं (।) वर्णात्मकस्य मन्त्रस्या**विशेषतः**।

**नेत्यादि** व्याख्यानं[6]। **न वै पुरुषसमया**द्धेतो**र्मन्त्रेभ्योर्थ (सिद्धिः)** । **किन्तर्हि** (।)**भावस्य** वर्णरूपस्य मन्त्रस्य **स्वभाव एष** (।) **यदि न** मन्त्राः कस्यचिद्

**तर्त्हि रूपं वर्णानां सर्वत्राविशिष्टमिति यथा कथंचित् प्रयुक्तादपि फलं स्यात्। वर्णा एव हि मन्त्रा नान्यत् किञ्चित्।**

**तत्क्रमो मत इति चेत् (।)**

**क्रमस्यार्थान्तरत्वञ्च पूर्व्वमेव निराकृतं।**

**न वर्णव्यतिरिक्तोन्यः क्रम इति निवेदितमेतत्। अव्यतिरेके च वर्णा एव मन्त्रास्ते चाविशिष्टाः सर्वत्रेति[3] सर्वदा फलदाः स्युः(।)**

**उपप्लवस्त्वल्पीयसोपि क्रमस्य भ्रंशाद् दृष्टः (।) कस्यचिदनुष्ठानाद् देवता-सन्निधेरसाकल्येन विराधनाच्च। सर्वभ्रंशे तु कस्यचिदेव समयस्याननुष्ठानाव-सन्निधेर्नार्थानर्थौ।**

---

विधिपूर्वप्रयुक्ताः फलदाः।

**तर्त्ह्रीत्यादि** (।) सि द्धा न्त वा दी। **तर्त्हि** मन्त्राख्यानं **वर्णानां रूपं सर्वत्रेति** विधिरहिते काले। विपरीतादिप्रयोगे वाऽविशिष्टमिति। **यथाकथंचित्**पा-
195b ठानु[7]क्रमं विधिं चोल्लंघ्य **प्रयुक्तादपि** मन्त्रादभिमतं **फलं स्यात्**। यस्माद् **वर्णा एव हि मन्त्रो नान्यत् किञ्चिद्** वर्णव्यतिरिक्तं।

**तत्क्रमो** वर्णक्रमो न वर्णा एवेति **चेत्** (।)

तदसत् (।) यस्माद् वर्णेभ्यः **क्रमस्यार्थान्तरत्वं च** वर्णानुपूर्वी वाक्यं चेदित्यत्रान्तरे **पूर्वमेव निराकृतं**।

**ने**त्यादि व्याख्यानं। **वर्णे**भ्यः क्रमस्या**व्यतिरेके च वर्णा एव मन्त्रास्ते च**[1] वर्णा **अविशिष्टाः सर्वत्र** प्रतिलोमपाठादाविति सर्वथा यथाकथञ्चित् प्रयुक्ता **फलदाः स्युः**। न च फलदा भवन्ति। न केवलं विधिभ्रंशे न फलदाः प्रत्युतानर्थ-कारिण एव भवन्तीत्याह। **उपप्लव** इत्यादि। उपद्रवः। **उपप्लवः**। तु शब्दोतिशये। **अल्पीयसोपि** विधि**क्रमस्य भ्रंशाद् दृष्टः**। स च पुरुषसमयत्वे मन्त्राणां युज्यते। नापौरुषेयत्वे[2]।

कस्यचित् समयत्वेपि कथमुपप्लव इति चेदाह। **कस्यचिदि**त्यादि। मन्त्रस्य कर्त्रा ये विधयो निर्दिष्टास्तेषां मध्ये **कस्यचि**द्विधे**रनुष्ठानाद् देवता**याः सन्निधिर्भवति। तत**स्सन्नि**धेरन्यस्य विधिविशेषस्या**साकल्ये**नासम्पादनेन। देवताया **विराधनात्** खेदना**च्चो**पप्लवः स्यात्। तत्रावीतरागा देवता। विरागिता स्वयमेवानर्थं करोति। वीतरा[3](गाः) तु न स्वयं। तदभिप्रसन्नास्त्वन्ये देवतादयः कुर्वन्तीति द्रष्टव्यं।

यत्र मन्त्रे न कश्चिदपि विधिः क्रियते तत्र कथमिति (।)

आह। **सर्वे**त्यादि। **सर्व**विधि**भ्रंशे तु कस्यचिदेव समयस्य** मन्त्रप्रणेतृकृतस्य

**किं च। क्रमस्यार्थान्तरत्वेऽनर्थान्तरत्वे वा वर्णात्मनस्तत्क्रमात्मनो वा मन्त्रस्यार्थहेतोरकृतकत्वान्नि[4]त्यस्य नित्यं सन्निधानमिति॥**

**नित्यन्तदर्थसिद्धिः स्यात्;**

**यतो हि भावशक्तेः फलोत्पत्तिः साऽविकलेति न फलवैकल्यं स्यात् (।)**

**न हि कारणसाकल्ये कार्ये वैकल्यं युक्तं। तस्याकारणत्वप्रसंगात्। न केवलात् मंत्रप्रयोगादिष्टसिद्धिस्तस्य विधानापेक्षत्वादिति चेत् (।)**

**असामर्थ्यमपेक्षणे[2] ॥२९६॥**

**यदि हि मन्त्रादन्यतो वा कथंचित् क्वचित् स्वभावातिशयमासादयेयुः। स तत्र समर्थोपेक्षः स्यात् (।) न च नित्येष्वेतदस्तीत्युक्तं। तत्किमय(म)समर्थोपेक्ष्यत इत्यनपेक्षाः सदा कुर्युः। न वा कदाचिदनतिशयात्।**

---

विधेरनुष्ठानाद् देवताया असन्निधेनर्थानर्थौ ।

**किंचे**त्यादिना दोषान्तरमाह। निवारितं **क्रमस्यार्थान्तरत्वं**। भवतु वा वर्णेभ्यः क्रमस्यार्थान्तरत्वमनर्था[4]न्तरत्वम्वा। तत्रा**नर्थान्तरत्वे** क्रमस्य वर्णात्मा वर्णस्वभाव एव मन्त्रः। अर्थान्तरत्वे तु तत्क्रमात्मा। वर्णक्रमात्मा। तस्य **वर्णात्मनस्तत्क्रमात्मनो वा मन्त्रस्य** कीदृशस्या**र्थहेतोः** पुरुषार्थकारणस्य हेतुभिर**कृतत्वान्नित्यस्य नित्यं सन्निधानमिति** कृत्वा **नित्यन्तदर्थसिद्धिः स्यात्**। तेभ्यो मन्त्रेभ्यः पुरुषार्थस्य निष्पत्तिः स्यात्। किङ्कारणं (।) **यतो** यस्या **हि भाव**[5]**शक्ते**र्मन्त्रशक्तेः सकाशात् मन्त्रसाध्यस्य **फल**स्यो**त्पत्तिः सा** भावशक्ति**रविकलेति न फलवैकल्यं स्यात्**। यस्मान्न **हि कारण**स्य **साकल्ये** सति **कार्य**स्य **वैकल्य**मसत्त्वं **युक्तं**। किं कारणं (।) **तस्या**विकलस्य कारणस्य कार्यमकुर्वतो **कारणत्वप्रसङ्गात्**। नित्यत्वेपि मन्त्राणां **न केवलान्मन्त्रप्रयोगादि**ति मन्त्रसम्बन्धा**दिष्टसिद्धिः**। किङ्कारणं (।) **तस्य** मन्त्रस्य **विधा**[6]**नापेक्षत्वादिति चेत्**। तदयुक्तं यस्मान्मन्त्रस्य विधानापेक्षत्वेऽभ्युपगम्यमाने तस्या**पेक्ष**णीयस्य विधानादेर्मन्त्रं प्रत्य**सामर्थ्य**मनाधेयातिशयत्वान्मन्त्रस्य।

तद्व्याचष्टे। **यदि ही**त्यादि। विधानादिभि[**मन्त्र** कल्पो[1]] विधिस्तस्मा**दन्यतो वे**ति **कुत**श्चित्सहकारिणः स्थानविशेषादेस्सकाशात् कञ्चित् **स्वभावातिशयमासादये**युर्लभेरन्।[7] तदा सहकारी तत्रोत्पाद्ये मन्त्रस्य स्वभावातिशये 196a **समर्थोपेक्ष्यः स्यात्। न च नित्येष्वेत**दतिशयोत्पादन**मस्तीत्युक्तं** प्राक्। **तत्किमयं** सहकार्यतिशयोत्पादनं प्रत्य**समर्थो** मन्त्रै**रपेक्ष्यत इति** कृत्वा**नपेक्षा** मन्त्राः **सदा** कार्यं **कुर्युः**। यदि[1] कारकस्वभावा (:।) नो चेन्न **वा कदाचित्** कार्यं **कुर्यु**र**नति**-

---

[1] In the margin.

### (ग) नित्यत्वे दोषाः

**सर्वस्य साधनं ते स्युर्भावशक्तिर्यदीदृशी ।**
**प्रयोक्तृभेदापेक्षा च नासंस्कार्यस्य युज्यते ॥ (२९७)**

**यदि भावशक्त्यैव मन्त्राः[6] सिद्धिप्रदा न ते कञ्चित् परिहरेयुः। यजमानमन्यं वा। न ह्यन्यं प्रति स्वभावोऽतद्भावो भवति। तस्य तेनानपकर्षणात्। अन्येन चानुत्कर्षणात्। केनचित् सह कार्यकारणभावायोगात्। प्रत्यासत्तिविप्रकर्षाभावात्। अत एवास्यासंस्कार्यत्वात् प्रयोक्तापि नास्ति (।) यतः प्रयोक्ता फलमश्नुवीत् (?त) ॥**

41b **संस्कार्यस्या[7]पि भावस्य वस्तुभेदो हि भेदकः ।**

---

**शयात्** स्वभास्य सर्वदा तुल्यत्वात्।

किं च (।) **सर्वस्य** पुंसः पातकादियुक्त[1]स्यापि **साधनं** फलहेतवस्**ते** न मन्त्राः **स्युः**। समयनिरपेक्षा **यदीदृशी** मन्त्राणाम्**भावशक्तिः**। अथ स्याद् यजमानेनैव प्रयुक्ताः फलदा इति (।)

अत आह। **प्रयोक्तुर्भेदो** विशेषो यजमानत्वन्त**दपेक्षा च**। **नासंस्कार्यस्य** मन्त्रस्य **युज्यते**। **यदि भावशक्त्यैव** समयानपेक्षया **मन्त्राः** फलदा **न ते** मन्त्राः फलदानं प्रति **कञ्चित्** पुरुषं **परिहरेयुः**। **अन्यं वा** शूद्रादि[2]कं। यस्मा**न्न ह्यन्यमयजमानं प्रति स्वभावो** मन्त्राणां कार्यकरणस्वभावो**ऽतद्भावो भव**त्यजनकस्वभावो भवति। किं कारणं (।) **तस्य** जनकस्वभावस्य **तेना**ब्राह्मणेन चानपकर्षणात्। अखण्डनात्। **अन्येन** च यजमानादिना**नुत्कर्षणात्**। अतश्च कारणात् **केनचित्** पुरुषेण **सह** मन्त्राणां **कार्यकारणभाव**योगः। त**दयोगाच्च** यथाक्रमं ब्राह्मणेनान्ये[3]न च मन्त्राणां **प्रत्यासत्तिविप्रकर्षाभावात्** सर्वस्य साधनं स्युरिति। **अत एव** न नित्यत्वादेवास्य मन्त्रस्या**संस्कार्यत्वात् प्रयोक्ता**। कार्ये नियोक्ता कश्चिद् ब्राह्मणोन्यो वा **नास्ति यतः प्रयोक्ता** मन्त्रसाध्यं **फलमश्नुवीत** लभेत ब्राह्मण एव नान्यः। तथा हि यथा शूद्रादिरपाठको न किंचित्करोतीति न प्रयोक्ता तथा ब्राह्मणोपि (।) ततः संस्काराप्रतिपत्तेरिति।

कि[4]ञ्च **संस्कार्यस्या**प्याधेयातिशयस्यापि **भावस्य वस्तुभेदो** हि कारणभेदो **हि भेदको** न च ब्राह्मणशूद्रादीनां स्वभावभेदः परमार्थतोस्ति। केवलं लोकव्यवहारकृतो विप्रशूद्रादिभेदः। तेन लोकव्यवहारभिन्नानां ब्राह्मणादीनां **प्रयोक्तृणाम्भेदान्नियमो मन्त्रशक्तौ न** सम्भवति। येन ब्राह्मण एव फलमासादयेन्न **शूद्रः**।

**प्रयोक्तृभेदान्नियमः शक्तौ न, समये भवेत्॥ (२९८)**

**आधेयविशेषे बाह्यनित्याभावास्तद्धेतोः स्वभावभेदे ततः समासादितातिशयत्वादन्यत्रान्यथा स्युः। नाभेदे (।) कारणाविशेषे कार्याविशेषात्। विशेषे तस्याहेतुकत्वप्रसंगादित्युक्तप्रायं।**

**तदिमे मन्त्राः स्वभावातिशयात् फलदायिनः। कार्या अपि न शूद्रादिप्रयोगेप्यन्यथा स्युः।**[1] **शूद्रविप्राभिधानयोः पुरुषयोः स्वभावाभेदात्। न हि पुरुषेच्छानुविधायिनो नामव्यवहारभेदात्। स्वभावभेदानुबन्धिनामर्थानामन्यथात्वमस्ति। तयोर्जातिभेद इति चेत्। स खल्वाकृतिगुणशक्तिभेदे इष्टो गवाश्ववत्। अनुपदेशं चैनं लोकः प्रतिपद्यते। न तद्वदनयोः कंचिदपि गुणं नियतं पश्या-**

---

क्व तद्व्यंयन्नियमः स्या[5]दिति (।)

आह। **समये भवेत्**। यदा समयो मन्त्रस्तदा समयस्य कर्त्ता वस्तुस्वभावानपेक्षः समयं करोति। यथालोके ये ब्राह्मणाः प्रसिद्धास्तेभ्य एव प्रयोक्तृभ्यः फलन्दास्यामि नान्येभ्य इति स्यान्नियमः।

**आधेये**त्यादिना व्याख्यानं। **आधेयो** जन्यो **विशेषो** येषान्ते भावाः। **तद्धेतो**र्विशेषहेतोः **स्वभावभेदे** सति। **ततो** विशेषहेतोः सका[6]शा**दासादितातिशयत्वादे**कत्रान्यथाभूतः पुनर**न्यत्र** कारणान्तरे**ऽन्यथा स्युर्न** त्व**भेदे** कारणस्यान्यथाभावः। किं कारणं **कारणाविशेषे** सति **कार्यस्याविशेषात्**।

अथ कारणाविशेषे कार्यस्य विशेषस्तदा विशेषे कार्यस्याप्यभ्युपगम्यमाने। **तस्य** विशेषस्या**हेतुकत्वप्रसंगादित्युक्तप्रायं**।

**तदि**ति तस्मा**दिमे मंत्राः कार्या** अप्यनि[7]त्या अपि। हेतुकृतात् **स्वभावभे**दात् **फलदायिनो**ऽपि **न शूद्रादिप्रयोगेप्यन्यथा स्यु**रफलदाः स्युः। किं कारणं (।) **शूद्र** इति **विप्र** इति ब्राह्मण इत्य**भिधानं** संज्ञा **ययोः पुरुषयो**स्तयोर्बुद्धीन्द्रियदेहेषु **स्वभावभेदाभावात्**। प्रतिव्यक्ति स्वलक्षणभेदोस्तीति चेत् (।) न। तस्य ब्राह्मणेष्वपि प्रतिव्यक्ति सम्भवात्। जातिकृतस्तु भेदो नास्तीत्युच्यते।

196b

नन्वयं ब्राह्मणोऽयं[1] शूद्र इति लोके नामभेदोस्ति। तथा सम्मानादिव्यवहारभेदश्च (।) ततः स्वभावभेदोवँसीयत इति। चेद् (।)

आह। **न ही**त्यादि। **पुरुषेच्छानुरोधिनो** ब्राह्मणादिनामभेदात् सत्कारादि**व्यवहारभेदाच्च स्वभावभेदानुबन्धिनां** यथा कारणमुत्पन्नेन स्वभावभेदेनानुगताना**मर्थानामन्यथात्वं**। न हि स्वभावभेदोस्तीति सम्बन्धः।

**तयो**र्ब्राह्मणशूद्रयोः पुरुष[2]**योर्जातिभेदोस्तीति चेत्**।

**मोऽपश्यन्तश्च कथं भेदं[2] प्रतिपद्येमहि।**

**योप्ययं नामभेदान्वयो लोके प्रतीतिभेदः सो सत्यपि जातिभेदे व्यापार-**

---

तन्नैवं। यस्मात् **स खल्वि**त्यादि। सामान्यनिषेधान्निषिद्धैव जातिः (।) केवलमभ्युपगम्योच्यते। **स खलु** भवन्नपि जातिभेदस्त्रिधा **इष्टः**। **आकृतिगुण-शक्तिभेदे** सति। **गवाश्ववत्**। गवाश्वस्येव गवाश्ववत्। तत्राकृतिभेदः संस्थान-विशेषः स प्रतिव्यक्ति भेदवतीष्वपि गोष्वनुगामी विद्यते (।) नाश्वव्यक्तिषु। गुणभेदो (?दः) क्षीरादीनां[3] रसवीर्यविपाकादिभेदेन स च समानजातीयासु व्यक्तिष्वनुगामी दृष्टः। न विजातीयासु। शक्तिभेदानुरूपकार्यसामर्थ्यलक्षणः। यथा गवान्दोहादिसामर्थ्यं नाश्वानां। तदेवं समानजातीयव्यक्त्यनुगामिनामा-कृत्यादिभेदानामुपलम्भात्. कामं गवाश्वादिष्वस्तु जातिभेदो नैवं ब्राह्मणादिषु प्रतिनियत आकृत्यादिभेदोस्ति (।) येन जातिभेदः[4] कल्प्येत। सकृच्च गवादिषु व्युत्पन्नो देशकालादिभेदे**प्यनुपदेश**मित्युपदेशमन्तरेणैनं जातिभेदं **लोकः प्रति-पद्यते**। अयङ्गौरयमश्व इति। **नैवं** ब्राह्मणादिभेदमनुपदेशं प्रतिपद्यते। **तद्वदि**ति गवाश्ववत्। **अनयो**र्ब्राह्मणशूद्रयोः **कंचिदपि** गुणं विनियतं समानजातीयास्वेव व्यक्तिषु स्थित**म्पश्यामः**। गुण[5]ग्रहणमुपलक्षणं। एवमाकृतिभेदं शक्तिभेदं च विनियतं न पश्यामः। **अपश्यन्तश्चा**कृत्यादि**भेदं कथं** शूद्रविप्रयोर्जातिभेदं **प्रतिपद्येमहि**। नैवेति यावत्। तथा ह्यध्ययनशौचाचारादिविशेषः सर्वो व्यभि-चारी। यश्च गौरपिङ्गलकेशत्वादिलक्षण आकारभेदः कल्प्यते स ब्राह्मणेष्वपि केषुचिन्नास्ति। शूद्रेषु च विद्यते केषुचि[6]त्।

यदि न जातिभेदः विप्रशूद्रयोः कथन्तर्ह्ययं ब्राह्मणादिशब्दश्रवणाद् भिन्ना प्रतीतिर्भवतीति (।)

आह। **योपी**त्यादि। **नामभेदान्वयो** ब्राह्मणादिसंज्ञाविशेषहेतुको **योप्ययं प्रतीतिभेदो** [बुद्धिभेदो अयं ब्राह्मणोऽयं शूद्र][1] इति प्रतीतिभेदो**सत्यपि जाति-**
197a **भेदे व्यापारविशेषानुष्ठाना**ज्जपहोमादिक्रियाविशेषानुष्ठानात् **स्यात्**। **अन्व[7]-याच्चे**ति। तथाभूतव्यापारानुष्ठायिनः कुलादुत्पत्तेश्च। **वैद्यवणिग्व्यपदेशा-दिवत्**। यथा तुल्यजातीयेषु शूद्रेषु तस्य तस्य व्यापारविशेषस्यानुष्ठानाद-न्वयाच्च वैद्यादिव्यपदेशाः प्रवर्त्तन्ते (।) न तावता जातिभेदः। तद्वत् ब्रा[1]-ह्मणादिष्वपि स्यात्।

---

[1] In the margin.

**विशेषानुष्ठाने। अन्वयाच्च स्याद् वैद्यवणिग्व्यपदेशादिवत्।**

**तदिमे विशिष्टेन प्रयुज्यमाना मन्त्रास्ततोऽविशिष्टमेव स्वभावमासादयन्ति। तेनाविशेषेणैव फलदा (:) स्युः। यदा तु समयादेभ्यः[3] फलन्तदायमदोषः समयकारस्य रुचेः फलोत्पत्तिनियमात् (।) स्वभाववृत्तयो हि भावास्तन्मुखेन प्रसंगमर्हन्ति। न पुरुषेच्छावृत्तयस्तेषां कथंचिद् वृत्तेः।**

**यदपि प्रयोक्ता फलमश्नुत इति प्रयोगं समीहितार्थयोग्यस्योत्पादनं। संतानपारिणामनं वा पश्यामस्तदुभयम्विशेषज[4]न्मनि स्याद्(।)अन्यथा (।)**

**अनाधेयविशेषाणां किंकुर्वाणः प्रयोजकः।**

**येन ततः कश्चित्फलमश्नुतेऽन्यो न (।)**

---

तदिति तस्मादिमे मन्त्रा **अविशिष्टेन** ब्राह्मणशूद्रादिना **प्रयुज्यमानास्ततो** ब्राह्मणादेरविशिष्ट[1]**मेव स्वभावमासादयन्ति**। **तेन** कारणे**नाविशेषेणैव** शूद्रादिषु **फलदाः स्यु**रित्युपसंहारः। तदेवं मन्त्राणाम्भावशक्त्या फलोत्पादने(ना)यं दोषो **यदा तु** यथोक्तात् पुरुष**समयादेभ्यो** वैदिकेभ्योन्येभ्यो वा मन्त्रेभ्यः **फल**मिष्यते। **तदायम**विशेषेण फलदाः स्युरित्य**यमदोषः**। किं कारणं (।) **समयकारस्य** मन्त्रप्रणेतृ **रुचेः फलोत्पत्ति**[2]**नियमात्**। समयकारस्यैवमभिरुचितं य ईदृशो ब्राह्मणव्यपदेशभागेवम्विधं नियममनुतिष्ठति तस्यैवाहं फलयोगेन प्रत्युपस्थितो नान्येभ्य इत्येवं रुचेः फलनियामकः। पर्यनुयोगः। तथा हि(।) **स्वभाववृत्तयो** भावाः पुरुषव्यापारानपेक्षा वस्तुस्थित्यैव कार्यकारिण इत्यर्थः। ते **तन्मुखेन** स्वभावद्वारेण **प्रसंगमर्हन्ति**[3]। यथा स्वभावविशेषादिहाप्येवं किन्न भवतीति। **न पुरुषेच्छावृत्तयो** भावाः प्रसंगमर्हन्ति। किङ्कारणं (।) **तेषां** पुरुषाणां स्वेच्छानुविधायिनां यथा**कथंचिद् वृत्तेः**।

**यदपि** विशिष्टः **प्रयोक्ता** मन्त्रफल**श्नुत इ**त्युच्यते। तत्रापि **प्रयोगमेवं** लक्षणं **पश्यामः**। यथा **समीहिते** पुरुषार्थे **योग्यो** यो मन्त्रस्वभावस्त**स्योत्पादनं**। उत्पन्नस्याप्यु[4]त्तरोत्तरविशेषोत्पादनेन **सन्तानपरिणाम**नमन्यथात्वम्वा **तदुभयमु**त्पादनम्विपरिणमनं वा **विशेषजन्मनि** विशेषोत्पत्तौ सत्यां **स्यात्**। **अन्यथा** विशेषानुत्पत्ताव**नाधेयातिशयानां** मन्त्राणां। **किं कुर्वाणः प्रयोजकः** (।) नैव।

**येने**त्यादिना व्याचष्टे। **येन** कारणेन **ततो** मन्त्रप्रयोगात् कश्चित् प्रयोक्ता ब्राह्मणः **फलमश्नुतेऽन्यः** शू[5]द्रादिर्ना**श्नुते**। नोत्पादनम्मन्त्राणां **प्रयोगः** किन्त्व**भिव्यक्तिः** प्रयोगो यदीष्यते। **साभिव्यक्तिः प्रगेव** सामान्यचिन्तायां[1] **निराकृता**।

---

[1] In the margin.

**प्रयागो यद्यभिव्यक्तिः सा प्रागेव निराकृता ॥ (२९९)**

**न हि नित्यानां काचिदभिव्यक्तिरित्युक्तं यतोभिव्यंजकः प्रयोक्ता स्याद् (।)**

**व्यक्तिश्च[1] बुद्धिः सा यस्मात् स फलैर्यदि युज्यते ।**

**स्याच्छ्रोतुः फलसंबन्धो वक्ता हि व्यक्तिकारणं ॥ (३००)**

**न हि शब्दस्यान्यतः स्वरूपपरिणामो व्यक्तिर्नावरणविगमनं (।) किन्तु तद्विषया प्रतीतिः (।) अश्रूयमाणेऽव्यक्तव्यपदेशात् । तत्र यदि बुद्धिहेतुर्वक्ता स्यात् । तत्तुल्यं श्रोतर्यपीति । सोपि फलं वक्तृवदश्नुवीत् (?त) । न हि वक्तुः कश्चिदन्यस्तद्भावोन्यत्र तद्बुद्धिहेतुत्वात् । परोपाधिबुद्धिः[6] श्रोतुर्न वक्तुरिति विशेष इति चेत् (।) कः पुनरुपयोगो वक्तुः श्रोतरि येनोपाधिरिष्यते । ततः शब्दश्रुतिरिति चेत् (।) ननु तदेवेदं पर्यनुयुज्यते । कथं तत इत्यसम्बन्धाद् विषयोपन-**

---

तद्व्याचष्टे । **न हि नित्यानाम्पदार्थानां काचिदभिव्यक्तिरित्युक्तं । यतः** कारणा**दाभिव्यञ्जकः** शब्दस्य **प्रयोक्ता स्यात्** ।

भवतु वाभिव्यक्तिः (।) सा च तावद् योग्यतोत्पत्तिनित्यत्वात् । किन्तु **व्यक्तिश्च** श[6]ब्दविषया **बुद्धिः सा यस्मात्** पुरुषात् प्रयोक्तुः **स** पुरुषो मन्त्र**फलैर्यदि युज्यते** । **स्याच्छ्रोतु**रपि **फलसम्बन्धः** । योन्येन पठ्यमानं मन्त्रं श्रृणोति केवलं । तस्यापि मन्त्रफलेन योगः स्यान्न तु वक्तुरेव । यस्मात् **वक्ता हि व्यक्तिकारणं** ज्ञानकारणमतश्च फलेन प्रयुज्यते । तच्च मन्त्रविषयज्ञानकारणत्वं श्रोतुरपि

197b तुल्य[7]मिति सोपि वक्तैवेति कस्मान्न फलेन युज्यते ।

**न ही**त्यादिना व्याचष्टे । **न हि** नित्यस्य **शब्दस्यान्यतः** कारणात् **स्वरूपपरिणामः** स्वरूपान्यथात्वम्व्यक्तिः । **नाप्यावरणविगमनं व्यक्तिः** । नित्यस्यावरणानुपपत्तेः । **किन्तु तद्विषया** शब्दविषया **प्रतीति**र्बुद्धिरभिव्यक्तिः । किं कारणम् (।) **अश्रूयमाणे** शब्दे**ऽव्यक्तव्यपदेशात्** । न ह्यनुपल[1]भ्यमानः शब्दोभिव्यक्त इत्युच्यते । **तत्रै**वं व्यवस्थिते **यदि** शब्दविषय**बुद्धिहेतुर्वक्ता स्यात्** । तदा **तच्छ**ब्दविषयबुद्धिहेतुस्वभाववक्तृलक्षणं **श्रोतर्य**प्यस्तीति **सोपि** श्रोता मन्त्रप्रयोगसम्भवमभिमतं **फलम्वक्तृवदश्नुवीत** । **न हि वक्तुः कश्चिदन्यस्तद्भावो** वक्तृत्वभावो**न्यत्र तद्बुद्धिहेतुत्वात्** । शब्दबुद्धिहेतुत्वात् । अतो नास्ति वक्तृश्रोत्रोः शब्द[2]ज्ञानहेतुत्वे विशेष इति तुल्यः फलसम्बन्धः स्यात् । परो वक्ता । उपाधिर्हेतुर्यस्या बुद्धेः । सा **परोपाधिबुद्धिः श्रोतुर्न वक्तुः** परोपाधिर्बुद्धिः । **इति** हेतोर्वक्तृश्रोत्रो**र्विशेष इति चेत्** । **कः पुनरुपयोगः** सामर्थ्यम्**वक्तुः श्रोतरि** बुद्धिजननम्प्रति । **येनो**पयो-

---

[1] In the margin.

**यनादयमस्य श्रावकः स्यात्। तच्च न शक्यं। तस्य कथञ्चिदप्यपरिणामात्।**

**[1] (इन्द्रियसंस्कारादयोऽप्युक्ताः। मां[1] श्रावयति अहं श्रावयामीति प्रत्ययद्वयाद् वक्तृश्रोत्रोर्भेद इति चेत् अनुपकार्योपकारकं भ्रान्तिमात्रम्। तस्मात् तद्भावेऽति-प्रसंगः[2] स्यात्। अन्यत्रापि भ्रान्त्या प्रत्ययदर्शनात्। सर्वथा उपकाराभावे च तथा प्रत्ययो न युक्तः। सर्वेषां परस्परं एवं प्रसंगात्[3]। भ्रान्तिरपि कुतश्चिदुप-** 521b

---

**गेनोपाधिरिष्यते** वक्ता। **ततो** वक्तुः सकाशाच्छ**ब्दश्रुतिः** शब्दोपलब्धिः श्रोतुर्भ-वत्यतो[3]सौ वक्ता उपाधिरिति **चेत्**।

**ननु तदेवेदं पर्यनुयुज्यते कथन्ततो** वक्तुः सकाशाच्छब्दश्रुतिः श्रोतुर्भवति। कथं च ततो न भवेत्। **सम्बन्धाभावात्**। उपकार्योपकारकभावाभावात्। तदभा-वमेव दर्शयन्नाह। **विषयोपनयाद्** विषयसन्निधापना**दयम्वक्तास्य** श्रोतुः **श्रावकः स्यात्**। श्रावयिता भवेत्। **तच्च** प्रत्युपस्थापनं **न शक्यन्तस्य** श[4]ब्दस्य। नित्यस्य **कथंचिदप्यपरिणामात्**। अन्यथात्वाभावात्।

श्रोतुरिन्द्रियसंस्कारङ्कुर्वन्नावरणविगमनं वा शब्दस्य सम्पादयन् व्रजेदुपयो-गम्वक्तेति चेत् (।)

तन्न। यस्मा**दिन्द्रियसंस्कारादयोप्युक्ताः** प्रतिक्षिप्ताः। "इन्द्रियस्य स्यात् संकारः शृणुयान्निखिलन्तदि" [2]त्यादिना। मामयम्वक्ता श्रावयतीति श्रोतुः प्रत्ययो बुद्धि**रहमेनं** श्रोतारं **श्राव[5]यामीति** वक्तुः संप्रत्ययो भवति (।) अतः प्रत्यय-द्वयाद् यथायोग**म्वक्तृश्रोत्रोर्भेद इति चेत्**।

**अनुपकार्ये**त्यादिना प्रतिषेधति। मां श्रावयत्यहं श्रावयामीति **भ्रान्तिमात्र-मेतत्**। किम्भूत**मनुपकार्योपकारकं**। उपकार्यः श्रोता। उपकारको वक्ता न भवति यस्मिन् भ्रान्तिमात्रे तत्तथोक्तं। नित्ये च शब्दे बुद्धिजन्मनि पुंसः सर्वथा व्या[6]-पाराभावादनुपकार्योपकारकभावः प्रतिपादितः। **तस्मा**देवंभूताद् भ्रान्तिमात्रा**त्त-द्भावे**। वक्तृश्रोतृभेदभावे**ऽतिप्रसङ्गः**। सर्वस्याश्रावयितुरश्रृण्वतश्चैवं **स्यात्** (।) किङ्कारणं। अ[न्यत्राप्युन्मत्तादौ विनैव शब्द][1] श्रवणेन **भ्रान्त्या**ऽहं शृणोमीत्यादि-**प्रत्ययदर्शनात्**। तस्मात् **सर्वथोपकाराभावे च तथाप्रत्यय** इत्यहं श्राव[7]यामीत्यादि प्रत्ययो **न युक्तः**। किं कारणं (।) **सर्वेषां परस्पर**मनुपकार्योपकारकाणा**मेवम**हमतः शृणोमीत्यादि **प्रसङ्गात्**। यथा तर्ह्युन्मत्तेषु भ्रान्त्या प्रत्ययोत्पत्तिस्तथा नित्येष्वपि भवत्वि[ति चेदाह। **भ्रान्तिरित्यादि**। **भ्रान्ति**][1] रपि या पुरुषस्योन्मत्तस्य भवति सापि स्वस्थावस्थायां **कुतश्चित्** पुरुषा**दुपकारे** सति तथा प्रत्ययोत्पत्तौ तदाहि[1]त- 198a

---

[1] Restored. [2] प्र० वा० १।२५८ [3] In the margin.

कारे सति अन्यत्रापि कयाचित् प्रत्यासत्त्या भवति। सापि पारम्पर्येण न स्यात्।

तस्माद् वक्तृश्रोत्रोर्व्यक्तिहेतुत्वे विशेषा[4]भावात् तुल्यः फलेन सम्बन्धः स्यात्। अपि च।

अनभिव्यक्तशब्दानां करणानां प्रयोजनम्।
मनोजपो वा व्यर्थः स्याच्छब्दो हि श्रोत्रगोचरः ॥३०१॥

श्रोत्रग्रहणलक्षणस्य शब्दस्यातिक्रमेऽतिप्रसंगात्।

नन्वेवमपि सामान्ये प्रसंगः।

न ब्रूमः शब्द एवेति। शब्दस्त्ववश्यं तल्लक्षणः। तस्य लक्षणान्तरा[6]भावात्। तत्र यदि शब्दात्मनां मन्त्राणामभिव्यक्तिहेतुः प्रयोक्ता जापी मनोजापी

---

संस्कारवशेन पुनरुन्मत्तावस्थायामन्यत्राप्यवक्तर्यपि। कयाचित् प्रत्यासत्त्या केनचित्सादृश्येन भवति। सापि भ्रान्तिर्नित्येषु मन्त्रेष्वत्यन्तं पारम्पर्येणाप्यनुपकारे न स्यात्।

तस्मादित्यादिना प्रकृतमुपसंहरति। यथोक्तविधिना वक्तृश्रोत्रोर्व्यक्तिहेतुत्वे। शब्दज्ञानहेतुत्वे विशेषाभावात्तुल्यो मन्त्रफलेन सम्बन्धः स्यात्। नित्येषु व्य[2]क्तिहेतुत्वमपि नैवास्ति (।) केवलमभ्युपगम्यैवमुच्यते।

अपि चेत्यादिना दूषणान्तरमाह। अनभिव्यक्तः(न)श्रोत्रविषयन्नीतः शब्दो यैः करणैस्तात्वादिभिस्तान्यनभिव्यक्तशब्दानि। तेषां करणानां प्रयोजनं व्यापारणं व्यर्थं स्यादिति लिङ्गविपरिणामेन सम्बन्धः। यत्रौष्ठादिप्रस्पन्दमात्रेण उपांशुजपः क्रियते। स व्यर्थः स्यादिति वाक्या[3]र्थः। यत्रौष्ठादिप्रस्पन्दोपि नास्ति केवलं मनसा मन्त्रचिन्तनं स मनोजपः। वा शब्दः समुच्चये। मनोजपश्च व्यर्थः स्यात्। यस्माच्छब्दो हि श्रोत्रगोचरः श्रोत्रग्राह्य एव शब्दः (।) शब्दस्वभावश्च मन्त्रः। उपांशुमानसयोश्च जपयोः श्रोत्रग्रहणाभावादशब्दत्वम् (।) अशब्दत्वाच्चामन्त्रत्वं च जपन् कथं फलवान् स्यात्। गृह्यत इति ग्रहणं। श्रो[4]त्रग्राह्य इत्यर्थः। तदेव लक्षणं यस्य शब्दस्य स तथोक्तः। तदतिक्रमेतिप्रसंगात्। श्रोत्रग्राह्यं शब्दं मुक्त्वा मनोजपादेर्ज्ञानात्मकस्य शब्दत्व इष्यमाणे रसादीनामपि शब्दत्वं स्यात्।

नन्वेमपि श्रोत्रगोचरस्य शब्दस्वभावत्वे शब्दत्वसामान्ये शब्दस्वभावताप्रसङ्गः।

नेति सि द्धा न्त वा दी। न ब्रूमः श्रोत्रगोचरः शब्द एवेति। शब्दस्त्व[5]वश्यन्तल्लक्षणः श्रोत्रग्रहणलक्षण इति ब्रूमः। कस्मात्। तस्य शब्दस्य श्रोत्रग्राह्यत्व-

वा न मन्त्रफलेन युज्यते।[7] न हि तदा श्रोत्रेण कंचिदर्थं विभावयामः। 522a

न चाशब्दात्मा मन्त्रः।

**पारम्पर्येण तज्जत्वात् तद् व्यक्तिः सापि चेन्मतिः।**

न हि मनसा[1]ध्यायतोऽपि मन्त्राभासा बुद्धिः श्रवणाद् ऋते। ततः शब्दप्रभवत्वात्। सापि शब्दव्यक्तिरेव। एवं अनवस्था स्यात्। शब्दार्थविकल्पानां[2] अपि परम्परया प्रसूतिरस्तीति तेऽपि तथा स्युः।

**ते तथा स्युस्तदर्था चेदसिद्धं कल्पनान्वयात् ॥३०२॥**

---

म्मुक्त्वा लक्षणान्तराभावात्। तत्रैतस्मिन् शब्दस्वलक्षणे यदि शब्दात्मनां शब्दस्वभावानाम्मन्त्राणामभिव्यक्तिहेतुः शब्दस्वरूपग्राहिज्ञानहेतुः पुरुषः प्रयोक्तेष्यते यस्य फलेन सम्बन्धः। तदानभिव्यक्तश्रुतिविषयाणां। श्रुतिविषयः शब्दः[6] सोनभिव्यक्तो यैः कारणैरिति विग्रहः। तेषां कारणानां प्रयोक्ता। ओष्ठादिस्पन्दमात्रेण व्यापारयिता। उपांशुजापी न मन्त्रफलेन युज्यते नापि मनसा जपन् मन्त्रफलेन युज्येत। यस्मान्न हि तदा उपांशुमौनजपकाले श्रोत्रेण कंचिदर्थं शब्दाख्यम्विभावयामो गृह्णीमः।

मानसोपि जपो मन्त्र इत्याह। न च मान[7]सो विकल्पोऽशब्दात्मा मन्त्रः। 198b शब्दस्य श्रोत्रग्राह्यत्वापौरुषयत्वनित्यत्वेनाभ्युपगमात्। तद्विपरीतत्वाच्च विकल्पस्य।

पारम्पर्येत्यादिना पराभिप्रायमाशंकते। याप्युपांशुमनोजापकाले मन्त्राभासा मतिर्बुद्धिस्सापि तद्व्यक्तिः। तस्य शब्दस्य व्यक्तिज्ञानं। कस्मात् (।) पारम्पर्येण तज्जत्वात्। शब्दजातत्वात्। तथा हि तस्य प्राक् शब्दज्ञानमुत्पन्नन्तेन ज्ञानेन चाहितसं[1]स्कारस्य क्रमेण मनोजपे शब्दप्रतिभासोत्पत्तेः।

नेत्यादिना व्याचष्टे। न हि मनसा ध्यायतोपि जपिनो या मन्त्राभासा बुद्धिः सा श्रवणादृते। शब्दश्रवणं विना। ततः शब्दप्रभवाच्छब्दादुत्पत्तेस्सापि मनोजपकाले मतिः शब्दव्यक्तिरेव शब्दज्ञानमेव। ततश्च मन्त्रस्वभावत्वात् मनोजपादेः प्रयोक्ता फलवान् स्यादिति भावः। एवमि[2]ति पारम्पर्येण मन्त्रत्वेऽनवस्था स्यात्।

तमेवाह शब्देत्यादि। मन्त्रलक्षणाच्छब्दादर्थविकल्पाः शब्दार्थविकल्पाः। तथा हि (।) "अग्नये स्वाहा" (।) इत्युक्ते। अग्निर्ज्वलद्भासुरादिरूप इत्यादिविकल्पाः कदाचिदुत्पद्यन्ते। तेषामपि परम्परया शब्दप्रसूतिरस्तीति तेपि विकल्पास्तथा स्युर्मन्त्रव्यक्तिलक्षणाः प्रयोगाः स्युः। शब्दप्रभवापि सती या तदर्था[3]-

**न ब्रूमः सर्वा शब्दप्रभवा बुद्धिस्तद्व्यक्तिरिति। या तद्विष[3]या सा तस्य व्यक्तिः। मनोविकल्पस्य शब्दविषयत्वमसिद्धम्। न हि स्वलक्षणानां विकल्पानां वृत्तिरिति निवेदयिष्यामः।**

**ते हि अनपेक्षितबाह्यार्थोप[4]निधये यथास्वं स्वविकल्पवासनाप्रबोधाद् भवन्ति। बाह्यापायानागमे च भावात्। न हि यो यस्य सत्तोपधानं नापेक्षते[5] स तस्य हेतुरहेतुश्च कथम्। तस्मान्न मनोविकल्पः शब्दव्यक्तिः, यतः तद्वान् प्रयोक्ता स्यात्।**

**तत्प्रसूता तद्विषया च बुद्धिः तद्व्यक्तिः[6]। तदाश्रयः प्रयोक्तेत्यत्रापि श्रोत्रे**

---

स शब्दः अर्थः विषयो यस्या इति विग्रहः। सैव **चेन्मतिर्मन्त्रव्यक्तिर्न चार्थविकल्पा ये शब्दविषयाः। असिद्धमिति** सि द्धा न्त वा दी। शब्दविकल्पस्यासिद्धं शब्दस्वलक्षणविषयत्वं। किं कारणं (।) **कल्पनान्वयात्।** सजातीयविकल्पहेतुकत्वात्। अध्यारोपिताकारविषया एव मनोविकल्पाः।

**नेत्यादिना** व्याचष्टे। **न ब्रूमः सर्वा शब्दप्रभवा[4] बुद्धिस्तद्व्यक्तिः** शब्दव्यक्तिरिति (।) किन्तु **या तद्विषया** शब्दविषया विकल्पबुद्धिः। **सा तस्य** शब्दस्य **व्यक्तिरिति।**

तदेतदसत्। यतो **मनोविज्ञानस्य** तद्विषयत्वं **शब्दविषयत्वमसिद्धं**। यस्मान्न **हि स्वलक्षण**शब्दानां **वृत्तिरिति निवेदयिष्यामः** यदि बाह्योर्थो **विकल्पानां** न हेतुः कथन्तर्ह्युत्पद्यन्त इति (।)

आह। **ते हीत्यादि। ते हि** विकल्पा **यथा[5] स्वमिति** यस्य यो वासनाप्रबोधो हेतुः। विज्ञानप्रतिष्ठितत्वेनान्तरात्। **विकल्पवासनाप्रबोधाद् भवति। अनपेक्षितो बाह्यार्थोपनिधिः** सन्निधानं यैरिति विग्रहः। कस्मात्। **बाह्येत्यादि। अपायो** निरोधः। **अनागमो**नुत्पत्तिः। बाह्यस्य निरोधेऽनुत्पत्तौ च विकल्पाना**म्भावात्।** यतश्चार्थमन्तरेण भवन्ति तस्मान्नार्थहेतवः। किं कारणं[6] (।) **न हि यो यस्य सत्तोपधानं** सत्तासन्निधानं **नापेक्षते** सो**नपेक्ष्यमाणस्तस्य** निरपेक्षस्य **हेतुरहेतुश्च** विकल्पानां **कथम्**विषयो नैव। यत एवं न शब्दविषयो विकल्प**स्तस्मान्न मनोविकल्पो** [मनोजल्या(?पा)दिलक्षणः][1] **शब्दव्यक्तिर्यतो** येन। **तद्वान्।** मनोजपवान् पुरुषः। मन्त्रस्य **प्रयोक्ता स्यात्।** नैव स्यादिति यावत्।

199a शब्दाभिव्य[7]क्तिमभ्युपगम्यापि दोषमाह। शब्द**प्रसूता तद्विषया च बुद्धिः** शब्द**व्यक्तिस्तदाश्रय**स्तस्या व्यक्तेराश्रयो यतः पुरुषस्तस्मात् **प्रयोक्तेत्यत्रापि पक्षे उक्तं।** किमुक्तं (।)[1]श्रो [त्रप्रयोक्तृत्वप्रसङ्ग इति श्रोता]पि हि शब्दप्रसूता-

---

[1] In the margin.

**च प्रसंग इत्युक्तम्। तस्मिन् न ज्ञाने च प्रयोगे शब्दे पुरुषे व्याप्रियते। तस्य ज्ञानजननात्। न पुरुषः शब्दे[7]। तदात्मनि अनुपकारात्। एवं पुरुषः शब्दानां** 522b **प्रयोक्तेत्यलौकिकोऽयं व्यवहारः।**

**सर्वथा[1] शब्दस्वभावानां मन्त्राणां प्रयोगात् फलावाप्तौ व्यर्थो मनोजपः। विकल्पस्य शब्दस्वरूपासंस्पर्शात्।**

### (घ) *समयकाराणामुक्त्या फलविशेषः*

**स्वसामान्यस्वभावानामेकभाव[2]विवक्षया।**
**उक्तेः समयकाराणामविरोधो न वस्तुनि ॥३०३॥**

**समयकारा हि स्वलक्षणं इन्द्रियविषयं सामान्यलक्षणञ्च विकल्पप्रतिभासं यथाव्यवहारं संवृत्या[3] संकलय्य यथासमयं अर्थं निष्पादयेदिति समयमारोच-**

---

यास्तद्विषयाया बुद्धेः स्वसन्तानभाविन्या आश्रयस्तथा च तस्यापि मन्त्रफलेन योगः[1] स्यादिति।

किं च नित्यानां मन्त्राणां नातिशयोत्पादनं प्रयोगः किन्तु तद्विषयं ज्ञानं प्रयोगः। **तस्मिन्न ज्ञाने च प्रयोगे**भ्युपगम्यमाने **शब्दः पुरुषे व्याप्रियते**। कथं (।) **तस्य** पुरुषस्य **ज्ञानजननात्। न पुरुषः शब्दे** व्याप्रियते। कस्मात्। **तदात्मनि** नित्ये शब्दात्मनि कथंचिदपि पुरुषेणा**नुपकारात्** कारणात्। अथ च **पुरुषः शब्दानां प्रयोक्तेत्य[2]लौकिकोयं व्यवहारः**। लोके हि यो यत्र व्याप्रियते स तस्य प्रयोक्तेत्युच्यते।

**सर्वथे**त्यादिनोपसंहारः। यदि साक्षाच्छब्दप्रसूता बुद्धिः शब्दबुद्धिः। अथ पारम्पर्येण (।) **सर्वथा शब्दस्वभावानां मन्त्राणां प्रयोगात्** तद्विषयज्ञानजननात् **फलावाप्ता**विष्यमाणायां **व्यर्थो मनोजपः**। किङ्कारणम् (।) मनोजपलक्षणस्य **विकल्पस्य शब्दस्वरू[3]पासंस्पर्शात्।**

यस्यापि समयात् फलन्तस्यापि कथम्मनोजपो न व्यर्थ इत्याह। **स्वस्वभावः** शब्दस्वलक्षणम्विकल्पप्रतिभास्याकारः **सामान्यस्वभावन्तेषां** स्वसामान्यस्वभावानामेकभावविवक्षया। दृश्यविकल्पयोरेकीकृत्य **समयकारणामुक्तेर्**मन्त्रप्रणयनात् मनोजपो व्यर्थः स्यादित्ययम**विरोधः**। समयकारस्याभिप्रायस[4]म्पादनेन फलनिष्पत्तेः। **न तु वस्तुन्य**विरोधः किन्तु विरोध एव। तथा हि (।) शब्दस्वलक्षणाद् वस्तुनः फलावाप्तौ मनोजपो व्यर्थस्तस्यावस्तुसंस्पर्शात्।

**समये**त्यादिना व्याचष्टे। शब्द**स्वलक्षणं** श्रोत्रे**न्द्रियविषयं सामान्यलक्षणञ्च विकल्पप्रतिभासं यथाव्यवहारं** लोकव्यवहारानतिक्रमेण **संवृत्या संकलय्ये**ति

**यन्ति। एवं न मनोजपादौ दोषः। वस्तुस्वभावात्तु फलोत्पत्तौ अतत्स्वभा[4]संस्पर्शे न स्यात्। यदुक्तं न वर्णेभ्योऽन्याऽऽनुपूर्वीति।**

**आनुपूर्व्यामसत्यां स्यात्सरो रस इति श्रुतौ।**
**न कार्यभेद इति चेद्;**

**न हि सरो रस इत्यादि[5]पदेषु कश्चिद् वर्णभेदः।**

*(ङ) वर्णानुपूर्विफलचिन्ता*

**न च व्यतिरिक्तमन्यत्, यतः कार्यभेदः स्यात्। भिन्नां च तयोः प्रतिभां आनुपूर्वीमेव चातुल्यां पश्यामः। न च कारणस्याभेदे[6] कार्यभेदो युक्तः। तस्माद् भेदवती सा यतः प्रतीतिभेदः। सत्यम्।**

**अस्ति सा पुरुषाश्रया ॥३०४॥**

---

विकल्पबुद्ध्या दृश्यविक[5]ल्पयोः शब्दस्वलक्षणसामान्याकारयोरेकीकृत्य **समयमारोचयेत्**। यो वाचा मनसा चाभिलपनम्मत्प्रणीतस्य मन्त्रस्यानुतिष्ठति तस्यायम्मन्त्रो **यथासमयमर्थन्निष्पादयेदिति** (।) ततो य एनं मन्त्रम्वाचा मनसा चाभिलपति तस्य **यथासमयं** चार्थं **निष्पादयेदिति न मनोजपादौ दोषः**। आदिग्रहणादुपांशुप्रयो[6]गादिपरिग्रहः। **वस्तुस्वभावात्तु** शब्दस्वभावात् मन्त्रात् **फलोत्पत्ता**विष्यमाणायामतत्स्वभावसंस्पर्शे सति मनोजपादौ **न** फलं **स्यात्**।

**यदुक्त**मित्यादिना पराभिप्रायमाशंकते। यदुक्तम् (।) "वर्णा एव हि मन्त्र" इत्यत्रान्तरे।

**न वर्णेभ्योन्या** काचिदा**नुपूर्वी**ति तत्रोच्यते। **आनुपूर्व्यामसत्यां सर इति** 199b **श्रुतौ रस इति श्रुतौ च न कार्यभेदः**[7] प्रतीतिभेदलक्षणः स्यादिति चेत्। यस्मान्न **हि सरो रस इत्यादि पदेषु कश्चिद्वर्णभेदः**। य एव हि वर्णाः सर इत्यत्र पदे। त एव रस इत्यत्र पदे।

**न च व्यतिरिक्तमन्यत्** पदमस्ति **यतः कार्यभेदो** बुद्धिभेदलक्षणः **स्यात्**। अस्ति च कार्यस्य भेदः। यतो **भिन्नाञ्च तयो**स्सरो रस इति पदयोः **प्रतिभां** बुद्धिम्पश्यामः। **आनुपूर्वीमे**[1]**व चातुल्यां** भिन्नान्तयोः पश्यामो वर्णाः पुनस्त एव। **न च कारणस्य** वर्णस्या**भेदे कार्यभेदो** बुद्धिभेदलक्षणो **युक्तः**। **तस्माद्** वर्णाभेदेप्यस्ति **भेदवती** प्रतिपदम्भिन्ना। **सेत्यानुपूर्वी**। **यतः** प्रतिपदम्भेदवत्या आनुपूर्व्या अयं सर इत्यादिपदेषु **प्रतीतिभेदो** बुद्धिभेदः।

**सत्यमि**ति सि द्धा न्त वा दी। सत्यं प्रतिपदम्भेदवत्य**स्त्यानुपूर्वी**[2]। केवलं

**तथा हि ।**

> **यो यद्वर्णसमुत्थानज्ञानजाज्ज्ञानतो ध्वनिः ।**[7] 523a
> **जायते तदुपाधिः स श्रुत्या समवसीयते ॥३०५॥**
> **तज्ज्ञानजनितज्ञानः स श्रुतावपटुश्रुतिः ।**

---

सानुपूर्वी **पुरुषाश्रया** पौरुषेयी। अव्यतिरिक्तैव वर्णेभ्यः। वर्णाश्च प्रतिपद-मन्ये चान्ये चोत्पद्यन्ते कारणभेदात्। केवलन्तेषु सादृश्यादेकत्वाध्यवसायो मन्दमतीनां।

एतदेव दर्शयन्नाह। **तथा ही**त्यादि। अयमत्र समुदायार्थः। वक्तृस्थेन पूर्वपूर्व-वर्णसमुत्थापकचित्तेनोत्तरोत्तरवर्णसमुत्थापकं चित्तञ्जन्यत इति समुत्था[3]पकचित्तक्रमात्। तत्समुत्थाप्यानाम्वर्णानामुत्पत्तिक्रमः क्रमोत्पन्नैश्च वर्णैः स्वविषयाणि क्रमभावीन्येव श्रोत्रविज्ञानानि साक्षाज्जन्यन्ते। क्रमभाविन्य एव वर्णालम्बनाः स्मृतयश्च पारम्पर्येण। ततो वर्णानां समुत्थापकज्ञानक्रमाद् या क्रमे कार्यता। स्वविषयज्ञानेषु च या क्रमेण कारणता सैवानुपूर्वीति व्यवस्थाप्यत इति।[4]

सम्प्रत्यव (?) पदार्थो विभज्यते (।) यो ध्वनिर्जायत इति सम्बन्धः। यथा सर इत्यत्र पदे सकारात् परोऽकारः। कुतो जायते (।) **यद्वर्णसमुत्थानज्ञान-जाज्ज्ञानतः**। पूर्वकालभावी वर्णः सकारः। यश्चासौ वर्णश्चेति यद्वर्णः। यद्वर्णस्य समुत्थानं कारणं समुत्तिष्ठतेनेनेति कृत्वा। यद्वर्णसमुत्थानं। यद्वर्ण-समुत्थानञ्च तज्ज्ञानं चेति कर्मधारयः। तस्मा[5]ज्जातं यज्ज्ञानं। तद् यद्वर्णसमुत्थानज्ञानजं ज्ञानं। तस्माज्ज्ञानतो **जायते**। सकारस्य समुत्थापकं यज्ज्ञानन्तस्मादकारसमुत्थापकं ज्ञानं यदुत्पन्नन्तेनाकारो जन्यत इत्यर्थः। एवमन्योपि पूर्वपूर्ववर्ण-समुत्थानज्ञानजादुत्तरोतरो वर्णो जायत इति योज्यं। एवन्तावद् वक्तृसन्तान-स्थस्य समुत्थानज्ञानस्य क्रमाद् वर्णानां [6]क्रमेणोत्पत्तेः कार्यत्वमुक्तं। ते च क्रमेणोत्पन्नाः श्रोतृसन्तानस्थानां स्वविषयज्ञानानां क्रमेण हेतवो भवन्तो ज्ञायन्त इति दर्शयन्नाह। **तदुपाधिरि**त्यादि। पूर्वो वर्ण उपाधिविशेषणं [ यस्योत्तरस्य वर्णस्य ][1] स तथोक्तः। स इत्युत्तरो वर्णः **श्रुत्या** श्रोत्रज्ञानेन **समवसीयते** गृह्यते।

ननु च पूर्वो वर्ण उत्तरवर्णकाले[7] नैवास्ति (।) तत्कथन्तदुपाधि [ पूर्व वर्णोपाधि ]रुत्तरो वर्णो गृह्यत इति (।) 200a

आह। **तज्ज्ञानजनितज्ञान** इति। तेन पूर्ववर्णाविषयेण ज्ञानेन जनितं स्व-विषयं ज्ञानं यस्येति विग्रहः।

---

[1] In the margin.

**अपेक्ष्य तत्स्मृतिं पश्चात् स्मृतिमाधत्त आत्मनि ॥३०६॥**
**इत्येषा पौरुषेय्यैव तद्धेतुग्राहिचेतसाम् ।**
**कार्यकारणता वर्णे ष्वानुपूर्वीति कथ्यते ॥३०७॥**

**चित्तसमुत्थाना वाग्विज्ञप्तिः वर्णपदवाक्यानीति। तत्र[2] सकारसमुत्थापक-**

---

एतदुक्तम्भवति। सकारालम्बनं यदा [श्रोत्रविज्ञानं तस्मिन्नेवकाले][1] अकारसमुत्थापनचित्तेनाकारो जनितस्तेनाकारस्सकारालम्बनश्च प्रत्ययः समान-कालः। तत्र साकारालम्बने[1]न श्रोत्रविज्ञानेन सहकारिणाऽकारः स्वविषयं ज्ञानं जनयन् पूर्ववर्ण्णोपाधिः प्रतीयत इत्युच्यत इत्यर्थः। तदेवं पूर्वज्ञानेन सहकारि-णा जनितात्मज्ञानः। स इत्युत्तरो वर्ण्णः (।) कीदृशः श्रवणकाले। **अपटुश्रुति-**रित्यत्वरितं शनैः शनैरुच्चारितो यदा वर्ण्णो भवति। तदाऽपट्वी मन्दचारिणी प्रविभक्तवर्ण्णग्राहिणी श्रुतिः श्रो[2]त्रविज्ञानं यस्य शब्दस्येत्यपटुश्रुतिः। यस्याम-वस्थायाम्विभक्ता वर्ण्णा अवधार्यन्त इति यावत्। अति त्वरितन्तूच्चार्यमाणे विभक्तवर्ण्णापरिच्छेदात् कुतः क्रमेण स्मृतिजननमित्यस्य सन्दर्शनार्थं। अपटु-श्रुतिग्रहणं। स एवंभूतो वर्ण्णः किंकारीति (।)

आह। **अपेक्ष्य तत्स्मृतिं** पूर्ववर्ण्णस्मृतिं। **पश्चादाधत्ते**। जनयति **स्मृतिमा-त्मनि**। स्वविषये[3]। पारम्पर्येणेति द्रष्टव्यं।

एतेन च स्वविषयाणि ज्ञानानि प्रति वर्ण्णानां क्रमेण कारणतोक्ता। **इत्यु-**क्तेन क्रमे**णैषा कार्यकारणता**। **वर्ण्णेष्विति** वर्ण्णाधारा वर्ण्णानामिति यावत्। **पौरुषेय्येवं**। पुरुषकृतैवा**नुपर्वीति** लोके **कथ्यते**।

किमपेक्षया वर्ण्णानां **कार्यता कारणता** चेत्याह। **तद्धेतुग्राहिचेतसा**मिति। हेतवश्च ग्राहीणि[4] चेति द्वन्द्वः। तेषाम्वर्ण्णानां हेतुग्राहीणीति षष्ठीसमासः। पश्चाच्चेतःशब्देन विशेषणसमासः। वर्ण्णहेतवः क्रमेण यदि चेतांसि तेषां सम्बन्धेन वर्ण्णानां क्रमेण कार्यता। तैश्चेतोभिर्वर्ण्णानाञ्जन्यत्वात्। तेषां वर्ण्णानां ग्राहीणि यानि चेतांसि। तेषां सम्बन्धेन वर्ण्णानां क्रमेण कारणता। वर्ण्णैस्तेषाम्वर्ण्ण-ग्राहिणां चेतसां जन्य[5]त्वात्।

**चित्ते**त्यादिना व्याचष्टे। **चित्तं समुत्थानं** कारणं यस्या **वाग्विज्ञप्ते**स्सा तथोक्ता। वागेव विज्ञप्तिः परविज्ञापनात् (।) सा च त्रिधा लोक' इत्याह। **वर्ण्णे**त्यादि **वर्ण्णाः पदं वाक्यं** चेत्यभिधानं यस्येति विग्रहः। तत्राक्षराणि वर्ण्णाः। अर्थावच्छिन्नो वर्ण्णसमुदायः पदं। पदसमुदायो वाक्यं। **तत्रे**त्यादि सर इत्यत्र

---

[1] In the margin.

**चेतसा समनन्तरप्रत्ययेनाकारोत्थापनचित्तं जन्यते। तथा रेफाकारविसर्जनीयोत्थापकानि पूर्वपूर्वप्रत्ययानि।**[3]

---

पदे यञ्च व[6]र्ण्णाः सकारस्तस्मात् परो अकारस्ततो रेफस्तस्मादकारस्तस्मात्परो विसर्जनीय इति। **तत्र सकारस्य समुत्थापनं** कारणं यच्चेतः। तेन **चेतसा समनन्तरप्रत्ययेन**। समनन्तरग्रहणमालम्बनप्रत्ययव्यवच्छेदार्थं। **अकारोत्थापनचित्तं**। अकार उत्थाप्यते **जन्यते** येन चेतसा। तदुत्पाद्यते। **तथे**त्युक्तेन क्रमेण[7] **रेफाकारविसर्जनीया उत्थाप्यन्ते** यैश्चित्तैस्तानि **पूर्वपूर्वप्रत्ययानि**। पूर्वं पूर्वं चित्तं प्रत्ययः कारणं येषामिति विग्रहः। तत्राकारसमुत्थापनचेतसा रेफ उत्पद्यते। रेफसमुत्थापनचेतसा समनन्तरप्रत्ययेनाकारः। अकारसमुत्थापनचेतसा विसर्जनीय उत्पाद्यत इति। 200b

ननु चेदम्पदमुच्चारयामीति विवक्ष[1]या पदमुच्चार्यते। तेनैकयैव विवक्षया वर्ण्णक्रम उच्चार्यते। न तु वर्ण्णानां प्रत्येकं विवक्षापूर्वकत्वमप्रतीतेः (।) तत्कथमुच्यते (।) सकारादिसमुत्थापकचित्तेनाकारादिसमुत्थापकं चित्तं जन्यत इति।

एवम्मन्यते (।) वर्ण्णोच्चारणे तावदयमेव क्रमः। पदोच्चारणेपि प्रथममयमेव क्रमः (।) तथा हि (।) सकारविवक्षया सकारमु[2]च्चारयत्येवमुत्तरोत्तरवर्ण्णविवक्षयोत्तरोत्तरम्वर्ण्णमुच्चारयति। अभ्यासात्तु पदोच्चारणे पदविवक्षैवैका कारणमित्येके।

अन्ये त्वन्यथा (।) पदोच्चारणे। एकैवविवक्षा कारणमिति (।)

सत्यमेतत्। केवलं सकारोच्चारणकालेऽवश्यं चित्तं विद्यतेऽन्यथा मरणप्रसङ्गात्। तदेव च चित्तं सकारसमुत्थापकमुच्यते तदन[3]न्तरं सकारस्योत्पत्तेः। एवमुत्तरोत्तरवर्ण्णेषु चित्तसमुत्थापकत्वं द्रष्टव्यमिति। अत्र च "सकारसमुत्थापकचेतसा समनन्तरप्रत्ययेनेत्या"दिना ग्रन्थेनैककर्त्तृक एव वर्ण्णक्रमोर्थप्रतीतिहेतुर्न भिन्नकर्त्तृक इत्युक्तम्भवति। तेन यदुच्यते म ण्ड ने न।

"कार्यकारणभावश्चेत् क्रमस्तद्ग्राहिचेतसां।
तद्धेतुरात्मभेदो वा वक्तृभे[4]देपि धीर्भवे"दिति (स्फोटसिद्धिः ३१)

तदपास्तं। भिन्नकर्त्तृकवर्ण्णग्राहिचेतसामात्मभावस्यार्थप्रतीतिहेतुत्वानभ्युपगमात्।

यच्चाप्युक्त म्म ण्ड ने न (।) "अथ समुत्थापकचित्तक्रमेण वर्ण्णक्रमादर्थप्रतीतिस्तथापि स च क्रमो ज्ञापकत्वाज्ज्ञानमपेक्षते। दृश्यते च तिरोहितव्यवहितवक्तृप्रयुक्ताच्छब्दादर्थज्ञानं(।)न च तत्र समुत्थापकचित्तकार्यकारणतां[5] कश्चन निश्चेतुमर्हति। चक्षुरेकत्वे हि सा निश्चीयेतान्तरेण शब्दज्ञानात्। न च तिरोहित-

**तद् इमे वर्णा अन्यान्यहेतव स्वकारणानुपूर्विजन्मानः।**

**श्रुतिकालेऽपि यदा मन्दचारिणः पूर्ववर्णज्ञानसहकारिप्रत्यया[4]पेक्षाः स्वज्ञानं जनयन्ति, तदा पूर्वस्मरणापेक्षा एव स्मृतिमुपलीयन्ते। भिन्नकार्यकारणप्रत्यय-**

---

व्यवहितयोर्वक्तुरेकत्वे प्रमाणमस्ती"ति।

तदयुक्तं। यतस्तिरोहितव्यवहितावस्थायाम्वक्तुरेकत्वं कैश्चिदवधार्यत एव। तथा हि (।) देवदत्तो मां शब्दयति न यज्ञदत्त इति लोके प्रतीतिपूर्विकैव प्रवृत्तिर्दृश्यते। यत्र नावधारणं न तत्र[6] प्रवृत्तिरितीष्टसिद्धिरेव।

अपि च स्फो ट वा दिनोपि तिरोहितावस्थादौ कथं स्फोटाभिव्यक्तिर्व्यञ्जकानां वर्ण्णानामेककर्तृकत्वानवधारणात्। अवश्यं च तत्र स्फोटाभिव्यक्ति[रेष्टव्या। अन्यथार्थावगतिर्न स्या][1] दिति कैश्चिदवधार्यत एव (।) यत्किञ्चिदेतत्।

**तदिति** तस्मा**दिमे वर्ण्णा अन्यान्यहेतव** इति। अन्यदन्यत्समुत्थापकं चित्तं हेतुर्येषा[7]मित्यर्थः। **स्वकारणानि** समुत्थापकान्येव ज्ञानानि तेषामा**नुपूर्वी** क्रमस्तस्या **जन्म** येषान्ते तथोक्ताः। कारणक्रमात् क्रमभाविनो वर्ण्णा इत्यर्थः। इयता च (।)

2012 यो यद्वर्ण्णसमुत्थानज्ञानजाज्ज्ञातो ध्वनिः (।) इत्येतद्व्याख्यातं।

[स **श्रुत्या समवसीयत**][2] इत्येतद् विवृण्वन्नाह। **श्रुती**त्यादि। **श्रुतिकालेपि** श्रवणकालेपि **यदा मन्दचारिण** इति यदा नातिद्रुतमुच्चार्यन्त इत्य[1]र्थः। **पूर्ववर्ण्णा**लम्बनं **ज्ञान**न्तदेव **सहकारिप्रत्यय**स्तम**पेक्षन्ते** ये वर्ण्णास्ते तथोक्ताः।

त एवंभूताः किं कुर्वन्ति (।) **स्वज्ञानं** स्वविषयं श्रोत्रविज्ञानं **जनयन्ति**। तथा हि (।) सकारालम्बनं श्रोत्रविज्ञानं यस्मिन्नेव काले तथैवाकारोप्यकारसमुत्थापनचेतसा जनितस्तेनाकारः सकारालम्बनं च ज्ञानमेककालन्तस्मादकारः सकारालम्बनज्ञानेन सहकारिणा[2] स्वविषयं ज्ञानं जनयति (।) एवमन्येष्वपि वर्ण्णेष्वयं न्यायो योज्यः।

**तदेति** यदा स्वविषयमनुभवज्ञानं जनितवन्तस्तदा **पूर्व**वर्ण्णविषयं यत् **स्मरण**न्त**दपेक्षा एव स्मृतिमुपलीयन्ते** स्मृतावारोहन्ति। येनैव क्रमेणानुभूतास्तेनैव **क्रमेण** स्मर्यन्त इत्यर्थः। स एषो युगपदभावलक्षणो वर्ण्णानां स्वभाव इति सम्बन्धः। कीदृश इत्याह। **भिन्ने**त्यादि[3]। पूर्वपूर्वविज्ञानजन्यत्वाद् भिन्नः **कार्य**भावः। उत्तरोत्तरज्ञानस्य हेतुत्वाद् भिन्नः **कारण**भावश्च येषां सकारादिसमुत्थापकज्ञानानान्तानि भिन्नकार्यकारणभावानि। तान्येव **प्रत्यया** हेतवः। तेभ्यो **निर्वृ-**

---

[1] In the margin.

**निर्वृत्तिधर्मा भिन्नजननधर्मा**[5] **च स हि वर्णस्वभावः पुरुषसंस्कारभेदभिन्नः क्रम इत्युच्यते ।**

**अन्यदेव ततो रूपं तद्वर्णानां पदापदम् ।**
**कर्तृसंस्कारतो भिन्नं**[6] **सहितं कार्यभेदकृत ॥३०८॥**

---

त्तिरुत्पत्तिः सैव **धर्मो** लक्षणं यस्य स्वभावस्येति विग्रहः। एतेन तद्धेतुचेतांस्यपेक्ष्य वर्णानां कार्यत्वमुक्तं।

तद्ग्राहिचेतांस्यपे[4]क्ष्य कारणत्वमाह। **भिन्नस्य** विज्ञानकार्यस्य निर्वर्त्तनं **जननं** स एव **धर्मो** लक्षणं यस्य स्वभावस्येति विग्रहः। **स** एवंभूतो **वर्ण्णस्वभावः पुरुषसंस्कारभेदभिन्नः** पुरुषप्रयत्नभेदभिन्नः **क्रम इत्युच्यते** ।

ननु क्रमो वर्ण्णानां धर्मस्तेन कथं स एवंभूतो वर्ण्णस्वभावः क्रम इत्युच्यते।

एवम्मन्यते (।) न युगपदुत्पन्नानां क्रमोस्त्यप्रतीतेः। तस्माद्[5] युगपदुत्पन्नानामेव वर्ण्णानां क्रमः । अयुगपदुत्पन्नाश्चेद् वर्ण्णा इष्यन्ते त एव लोके क्रमो न वर्ण्णेभ्योर्थान्तरभूतोसावप्रतीतेः। नापि तेषां क्रम एको धर्मोऽसहभावात्। नापि प्रत्येकं धर्मः क्रमोप्रतीतेः। तस्मादयुगपदुत्पन्ना एव वर्ण्णाः क्रम इत्युच्यते इत्युक्तं। केवलमेषां क्रम इति कल्पितोयं व्यवहारः। न च य एव सर इति पदे[6] क्रमो लोके प्रतीयते स एव रस इति पदे। नापि क्रमव्यतिरिक्तं पूर्वापरवर्ण्णानां स्वरूपं। तस्मात् प्रतिपदं वर्ण्णानामन्यदेव स्वरूपं। लोकश्च सर इति पदाद् रसपदस्यान्यत्वमवधारयत्येव।

तेन यदुच्यते **म ण्ड ने न**।

"उत्पत्तिवादिनो वर्ण्णाः कामन्ते सन्तु भेदिनः।
न त्वसाधारणस्तेषाम्भेदोर्थज्ञानकारणं ।" (स्फोटसिद्धिः ३०)

तस्यानवधारणात् संकेतकाले[7] चादृष्टत्वादिति (।) 201b

तदपास्तं। यतस्सर इति वर्ण्णक्रमाद् रस इति वर्ण्णक्रमो भिन्न एवावधार्यते। नापिक्रमव्यतिरेकेण वर्ण्णाः प्रतिभासन्ते। तस्मात् क्रमभेदावधारणमेव वर्ण्णभेदावधारणं (।) केवलं रसपदाद् रसपदान्तरस्य भेदः सादृश्यान्नावधार्यते (।) अत एव संकेतकाले दृष्टत्वात् रसपदार्थप्रतिपादकं युक्तम् (।) एवमन्यस्यापि पदस्येति यत्किञ्चिदेतत्।

एतदेव [1] दर्शयन्नाह। **अन्यदेवे**त्यादि। यतो **वर्ण्णानां** स्वभावो यथोक्तः क्रम इत्युच्यते **ततः** कारणात्। **तदिति** सादृश्यादेकत्वेनाध्यवसितमपि **रूपम्वर्ण्णानामन्यदेव पदं पदं** प्रतिपदं । किं कारणं (।) **कर्त्तृसंस्कारतो भिन्नं** यतः (।) **समुत्थापकचित्तमेव कर्त्तृ** तस्य शक्तिभेदाद् भिन्नं। **सहितमिति** पूर्वोत्तरक्रमेणो-

**तस्मान्न खल्वेक एव स्वभावो वर्णानां पदेषु कर्तृचित्तसंस्कारभेदेन भेदात्।**

523b **स परस्परसहितः[7] कार्यभेदस्य हेतुः।**

**सा चानुपूर्वी वर्णानां वर्तते रचनाकृता।**
**इच्छाऽविरुद्धसिद्धीनां स्थितिक्रमविरोधतः॥३०९॥**

**कार्यकारणप्रत्ययोत्पन्न[1]स्वभावविशेषो वर्णानामानुपूर्वीत्युक्तम्। सा च पुरुषवितर्कविचारकृतेति अनवस्थितक्रमाः। इच्छाऽविरुद्धसिद्धिक्रम[2]त्वात्। कर्म-**

---

च्चारितं। **कार्यभेदकृ**दिति। बुद्धिभेदं करोति[2](।)

न च "वर्णा निरर्थकास्सन्त" इति (१।२४१) पूर्वमेव प्रतिपादितं (।) तत्कथम्वर्णस्वरूपं सहितं कार्यभेदकृदित्युच्यते।

अत्रैके मन्यन्ते (।) प्रतिपदम्वर्णानां स्वरूपम्भिन्नं पौरुषेयम्वाचकं। नापौरुषेयमिति (।) यदाह (।) सत्यम् (।) अस्ति सा किन्तु पुरुषाश्रयेति (   )।

तदयुक्तम् (।) वर्णानां सहितासहितानामर्थाप्रतिपादकत्वात्। तस्मादयमभिप्रायः (।) यदि परमार्थतो वर्णक्रमः स्या[3]त् तदासावेकपदादिरूपतया कल्पितोर्थस्य प्रतिपादकः स्यात्। यतश्चैकेन विकल्पेन विषयीकृताः क्रमिणो वर्णाः प्रतिपादका अत एवैकविकल्पावभासित्वात्। क्रमिणाम्वर्णानां रूपं सहितं कार्यभेदकृदित्युच्यते इत्यदोषः। यतश्च समुत्था[पकभेदाद् भेदः]। **तस्मान्न खल्वेक एव स्वभावो वर्णानां** सरो रस इत्यादि**पदेषु**। किं कारणं (।) **कर्त्तृचित्तसंस्कारभेदेन भेदात्**। कर्त्तृ च तच्चित्तज्ञातस्य संस्कारभेदः समनन्तरप्रत्ययभेदेन शक्तिभेदस्तेन वर्णानां स्वभावस्य भेदात्। **स** च वर्णानाम्प्रतिपदम्भिन्नः स्वभावः क्रमरूप एकविकल्पारूढत्वात्। **परस्परसहितः कार्यभेदस्या**र्थविषयबुद्धिभेदस्य **हेतुः**।

या चैवं कार्यकारणता लक्षणानुपू[4]र्वी **सा चानुपूर्वी वर्णानां** प्रवृत्तेत्युत्पन्ना **रचनाकृ**तः पुरुषात्। रचनां करोतीति **रचनाकृत्** तस्मात्। कस्मादित्याह। **इच्छे**त्यादि। पुरुषेच्छया येषां वर्णानाम**विरुद्धा सिद्धिस्तेषां स्थितस्य क्रमस्य विरोधतः**।

**कार्ये**त्यादिना व्याचष्टे। **कार्यकारणभूताश्च** ते **प्रत्ययाश्चे**ति विग्रहः। वर्णसमुत्थापकचित्तान्येवमुच्यन्ते। तानि हि पूर्वविज्ञानापेक्षया कार्य[5]भूतान्युत्तरविज्ञानापेक्षया कारणभूतानि। तेभ्य **उत्पन्नः स्वभावविशेष** आ**नुपूर्वीत्युक्तं**। **सा चानुपूर्वी** पुरुषस्य यौ वितर्कविचारौ **तत्कृतेति** कृत्वा**नस्थितक्रमा** वर्णाः। किमिदमिदं वेति विमर्शाकारो विकल्पो वितर्कः। इदमेवेति निश्चयाकारो विचारः। कस्मान्न स्थितक्रमा। **इच्छे**त्यादि। इच्छया अविरुद्धा सिद्धिर्यस्य क्रमस्य स **इच्छाऽविरुद्धसि[6]द्धिः**। इच्छाविरुद्धसिद्धिः **क्रमो** येषान्ते **तथोक्ताः**।

**विशेषानुक्रमवत् ।**

**न हि देशकालयोः स्थितिक्रमवान् हिमवद्विन्ध्यमलयानां वा बीजांकुरादीनां स्वेच्छया क्रमरचना[3] शक्यते कर्त्तुम् । तस्मात् पुरुषधर्मसंख्यातविकल्पानुक्रमे सति (भावात्) असति चाभावात् ।**

**कार्यकारणता सिद्धेः पुंसां वर्णक्रमस्य च ।**
**सर्वो वर्णक्रमः पुंभ्यो दहनेन्धनयुक्तिवत् ॥३१०॥**

**सतीन्धने दाहवृत्ते असति चाभावात् । अदृष्टेन्धनोऽपि न ह्यनिन्धनः, तद्देशकालनियमस्यायोगात् । नियमे सति[5] तस्यैवेन्धनत्वात्, इन्धनस्य दहनोपादान-**

---

तद्भावस्तस्मात् । तथा हि (।) यथेच्छम्वर्णानां क्रमो व्यवस्थाप्यते । किमिव (।) **कर्मविशेषानुक्रमवत्** । यथा कर्मविशेषाणामाकुञ्चनादीनामिच्छा व्यवस्थितेः क्रमस्तद्वत् । 202a

**न** हीत्यादिना वैधर्म्यमाह । **देशकालयो**रिति देशेस्थित[1]............
...................................[1]**मरचना शक्यते कर्त्तुं न** ही ति सम्बन्धः । न हि हि म व त्स्थाने वि न्ध्यो भवतु म ल य स्थाने विन्ध्यादि रित्येवं पूर्वमङ्कुरो भवतु पश्चाद् बीजात्तज्जनकमिति पुरुषेच्छया शक्यते विपर्यासः कर्तुं । वर्णास्तु शक्यन्ते यथेच्छं विपर्यासयितुं । **तस्मान्न** व्यवस्थित-क्रमा वर्णाः । तत ए [व..................................
................ (३०८)

....................का[2]]र्यकारणभूते **विकल्पानुक्रमे सति** वर्ण-क्रमस्य भावादसति च विकल्पानुक्रमे वर्णक्रमस्याभावात् । लौकिकवाक्येषु **पुंसा-म्वर्णक्रमस्य च कार्यकारणतासिद्धिः** । पुरुषः कारणं वर्णानुक्रमः कार्यः । ततः कार्यकारणतासिद्धेः कारणादन्योपि वैदिकः **सर्वो वर्ण** [..................
..............][3] ति सर्वो **दहन इन्धनपूर्वक** एवेति **युक्तिस्तद्वत्** ।

**सती**त्यादिना व्याचष्टे । **सतीन्धने दाहवृत्ते** दह्यतेनेनेति दाहो दहन एवोक्तः । **असतीन्धने** दहनस्याभावात् । क्वचिद् दहनेन्धनयोः कार्यकारणभावसिद्धौ सत्या-**मदृष्टेन्धनोपि** यस्यापि दहनस्येन्धनं न दृष्टं सापि [....................
..............................][4]त् । तदा **तस्य** दहनस्याहेतोर्**देश**-नियमस्य **कालनियमस्यायोगात्** । सर्वत्र सर्वदा भावः स्यात् । अथ नियमेनैव

---

[1] One side of the leaf is torn, about 32 letters in every line are missing.

**लक्षणत्वाच्च। तथायमपि वर्णक्रमो पुरुषप्रयत्नं यदि नापेक्षेत, तदा निरालम्बः स्वयं प्रकाशेत्**[6]**। प्रत्यत्नेनापि न शक्येत, अततप्रच्छेदात्। क्वचित् शक्तौ सर्व-**
5242 **स्तथा स्यात्, विशेषाभावात्। तद्भावभाविनोऽविशिष्टस्य चातत्कृतौ**[7] **सर्वत्र कार्यकारणभावश्च निराकृतः स्यात्। अन्वयव्यतिरेकलक्षणत्वात् तस्य। लक्षणान्तरं वाच्यम्**[1]**। घटादीनि च सर्वाणि वस्तूनि कृत्रिमाकृत्रिमानि प्रसजन्ति। तत्राप्येवं कल्पनायाः सम्भवात्। विशेषाभावाच्च। तानपि परादर्शनपूर्वकमेव**

---

क्वचिद्देशादौ भवतीतीष्यते। तदा देशादिनियमे च दहनस्येष्यमाणे **तस्यैव** देशादे**रिन्धनत्वात्**। किं कारणं (।) **दहनेत्यादि**। दहनस्योपादानं क [..........
..............................][5] नपेक्षत्वे देशकालनियमायोगा**स्तथायमपि वर्णक्रमो** हेतुभूतं **पुरुषप्रयत्नं यदि नापेक्षेत**। **तदा निरालम्बो** निराश्रयः पुरुषप्रयत्नानपेक्षः **स्वयं प्रकाशेत** वर्णक्रममुच्चारयामीत्येवम्पुरुषस्य **प्रयत्नेपि न शक्येत** वर्णक्रमः प्रकाशयितुं। कस्माद् (।) अत [त्प्र............
..............................][6] क्रमे पुरुषस्य शक्तिस्तदा **क्वचिच्छक्ताविष्यमाणायां सर्वो** वैदिकोपि वर्णक्रम**स्तथा स्यात्** पौरुषेयः स्यात्। कस्मात् (।) लौकिकवैदिकवर्णानुक्रमयो**र्विशेषाभावात्**। विषाद्यपनयनादिलक्षणस्य विशेषस्य लौकिकेष्वपि दृष्टेः।

किञ्च **तद्भावभाविनः** पुरुष[..............................
202b ......................विषा]**[7]** [1]द्यपनयनादिना लौकिकवर्णक्रमा**दविशिष्टस्य च** वैदिकवर्णक्रमस्या**तत्कृतौ** प्रकर्षेण कृतौ। **सर्वत्रे**ति यत्रापि पुरुषकृतत्वमिष्टन्तत्रापि **कार्यकारणभावश्च निराकृतः स्यात्**। कस्माद् (।) **अन्वये**त्यादि। तद्भावे भावोन्वयः (।) तदभावेऽभावो **व्य ति रे कः** (।) **तल्लक्षणत्वात्तस्ये**ति का[र्य.............................................
......................]**[1]**कार्यता नेष्यते (।) तदा तद्भावभावित्वव्यतिरिक्तं कार्यकारणभावस्य **लक्षणान्तरम्वाच्यं**। यद्विरहाद् वैदिकानां पुरुषप्रयत्नेन सह कार्यकारणभावो न स्यात्। न चान्यल्लक्षणं कार्यकारणभावस्यास्ति।

अथ तुल्ये कार्यकारणभावलक्षणे लौकिको वर्णक्रमः कृत्रिम इष्टो थे[....
..............................]**[2]**: **प्रसजन्ति**। किं कारणं (।) **तत्रापि** घटादिष्वे**वं कल्पनाया** वैदिकशब्दक्रमवत् कल्पनायाः **सम्भवात्**। यथा पुरुषव्यापारेण स एव वैदिकः क्रमो व्यज्यत इति कल्पना। तथा घटादयोपीति।

---

[1] Illegible.

**अन्यः करोति, एवं तर्हि अविदितकर्तारश्च केचित्, सर्वे वा केषांचित् अक्रियाभिनिवेशोऽस्तु। तस्मात् वर्णानुपूर्वीयं[3] प्रसिद्धिकार्यकारणभावञ्च वस्तुधर्मानतिक्रमात्, सर्वा पुरुषकृता।**

**तत एव।**

**असाधारणता सिद्धा च पुंसां क्रमकारिणाम्[4]।**
**अतो ज्ञानप्रभावाभ्यां अन्येषां तदभावतः॥३११॥**

**अयं वर्णानां क्रमो विषनिर्घातादिसमर्थो नान्य इति जानीयात्, तदा तं तथैव**

---

**विशेषाभावाच्च**। न हि पुरुषव्यापारानुविधायित्वेन घटादेः सकाशा[......
..............................][3] स्तस्य विशेष इति चेदाह। **तानित्यादि**। **तानपि** घटादीन् परैः पूर्वकैः कुलालादिभिर्घटादीनां रचना। तस्या**दर्शनं पूर्वमेव**। तान् दृष्टवैवेति यावत्। **अन्यः** पाश्चात्योपि कुलालादिः **करोति**। **नानुपदेशं**। परोपदेशपूर्विका च येषां प्रतिपत्तिस्तेषामपौरुषेयत्वे [........
..................................वै][4] दिकः क्रमः कर्त्तुरस्मरणादपौरुषेय इष्टः। **एवन्तर्हि** घटादयोप्य**विदितकर्त्तारश्च केचित्**। बहुतरकालाच्छन्नदेशे घटादयो दृश्यन्ते (।) न च तेषां कर्त्ता स्मर्यते। तस्मात् तुल्ये पुरुषव्यापारानुविधाने यद्यपौरुषेयो वैदिकक्रमस्तदा सर्वेषां घटादीनामक्रि[......
.......................................][5]यथा वा कर्त्तुरस्मरणाद् वैदिकक्रमस्याक्रिया। एवं **केषांचित्** कदाचित् घटादीनामस्मर्यमाणकर्तृकाणा**मक्रियाभिनिवेशोस्तु**। न चैवं (।) **तस्मान्न** चैवेयं लौकिकी वैदिकी च **वर्ण्णानुपूर्वी** पुरुषकृतेति सम्बन्धः। कस्मादिति (।) आह। **प्रसिद्धेत्यादि**। **प्रसिद्धिः कार्यकारणभावो** [........................................
...................वि][6]शेषणसमासः। तेषां **धर्मः** स्वकारणान्वयव्यतिरेकानुविधानन्तस्या**नतिक्रमात्**।

यत एव पौरुषेया मन्त्रास्तत **एव** प्राकृतेभ्यः पुरुषेभ्यो **साधारणता** विशिष्टता **सिद्धा**। केषां (।) मन्त्राख्य**क्रमकारिणां पुंसां**। मंत्रसंज्ञितम्वर्ण्णक्रमं कुर्वन्ति ये। तेषां केना [.......................................
............................][7]मस्य परिज्ञानं। समीहितार्थसम्पादनशक्तिः **प्रभावः**। किं कारणम् (।) अन्येभ्योसाधारणतेत्याह। **अन्येषां** प्राकृतादीनां पुरुषाणान्तयोः। ज्ञानप्रभावयोर**भावतः**। 203a

**अयमित्यादिना** व्याचष्टे। **वर्ण्णानामयं क्रमो विषनिर्घातादिसमर्थो नान्य इन्येवं**विभागेन **यद्यन्योपि** प्राकृतपुरुषो **जानीयात् तदा** तम्वर्ण्णक्रमन्**तथैव** विभागे-

**प्रतिपद्येत। न चैवम्। तस्मादयं अनुक्रमः स्वभावतः कार्यकृत् तथापि कश्चिदेव विज्ञात इति परोक्षार्थ[6]दर्शी पुरुषो भवति। न ह्ययमर्थक्रियासमर्थ इति न हि शक्यं प्रत्येतुम्। असंकीर्णस्य लिङ्गविशेषस्यासिद्धेः।**

524b **प्रत्यक्षेण तु अनुपदिष्टयोर्मन्त्रामन्त्रयोर[7]परिज्ञानात्। उपदेशेऽपि केनचिद-प्याकारेण स्वभावविवेकाप्रतीतेरन्यत्र, कार्यसंवादाच्च। तस्य च कार्यस्य प्राग् द्रष्टुमशक्यत्वात्[1]।**

**न चायं क्रमः स्वभावतः कारकः, कस्यचिद् आशुसिद्धेः, अन्यस्य चिरात् सिद्धेः,**

---

**नैव** प्रतिपाद्ये[1]तानुतिष्ठेत् (।) **न चैवं** प्रतिपद्यते (।) **तस्मादयं** मन्त्राख्यो वर्णानुक्रमः **स्वभावतो** यदि नाम **कार्यकृ**दभ्युपगतो मी मां स कै स्तथापि **कश्चिदेव** पुरुषैरतीन्द्रियशक्तिभेदयुक्तो **विज्ञात** इति कृत्वास्ति **परोक्षार्थदर्शी पुरुषो** यो मन्त्रन्तत्सामर्थ्यन्तदनुष्ठानञ्च वेत्ति।

यद्यपि सत्यतपःप्रभाववतां समीहितार्थसाधनं वचनं मन्त्र इत्युक्तं (।) तथाप्यभ्युप[4]गम्योच्यते (।) **स्वभावतोपि** कार्यकृन्मन्त्र इति। कार्यकृन्मन्त्र-करणेन वा मन्त्रफलशक्तिज्ञानेन वा पुरुषातिशय इत्युक्तम्भवति। अनुमानात् मन्त्रामन्त्रपरिज्ञानात् परोक्षदर्शिनोऽभाव इत्यत्राह। **न ही**त्यादि। **अयमर्थः** (।) वर्णानुक्रमलक्षणो विषाद्यपनयने **समर्थो**ऽयन्तु वर्णानुक्रमो न समर्थ **इति**। एवं **न हि शक्यं** लिङ्गात् प्रत्येतुं। किं कारणं (।) म[3]न्त्रामन्त्रविभागेना**संकीर्ण्णस्य लिङ्गविशेषस्यासिद्धेः**।

ननु च वर्णरूपयोर्मन्त्रामन्त्रयोः प्रत्यक्षेण ग्रहणे फलदानशक्तिरपि तदव्यति-रेकात् प्रत्यक्षगृहीतैवेति (।)

अत आह। **प्रत्यक्षयो**रित्यादि। **अनुपदिष्टयो**रित्ययं मन्त्रो नायम्मन्त्र इत्येवमकथितयो**रपरिज्ञानात**। अयम्विषाद्यपनयने शक्तोऽयमशक्त इत्येव-मनिश्चयात्। **उपदेशे[4]पी**ति (।) यदि नाम केनचिदुपदिष्टम्भवत्ययं मन्त्र एवं-कार्यकारीति। तथापि कथंचित् **केनचिदप्याकारेण** मन्त्रस्य यः **स्वभावविवेक**-स्तस्या**प्रतीते**रनिश्चयात्। उपदेशस्याप्रामाण्यात्। **अन्यत्र कार्यसम्वादात्**। मन्त्रसाध्यकार्यप्राप्त्या त्वयम्मन्त्र इति निश्चयः स्यात्। **तस्य च** मन्त्रस्य साध्यस्य **कार्यस्य** करणात् **प्रागि**ति मन्त्रानुष्ठात् प्राग् **द्रष्टुमशक्यत्वात्**।[5] तदानीन्तस्य सत्वादिति भावः। न चानिश्चितस्य मन्त्रस्यानुष्ठानं सम्भवति। तस्मादवश्यं मी मां स केनातीन्द्रियार्थदर्शी पुरुषोभ्युपगन्तव्यो यो मन्त्रामन्त्रस्वभावं विवेचयति (।) अन्यथा मन्त्रानुष्ठानं न स्यात्।

**न चायम्मन्त्राख्यो वर्णक्रमः स्वभावतो** विषाद्यपनयंनादेः **कारकः** किन्तु

**अन्यस्य व्रतचर्याद्यपेक्षणाच्च। एकस्मादपि कर्मणः[2] कयोश्चिदर्थानर्थयोर्दर्शनात्। वहतामपि मन्त्राणां कस्यचिद् विसंवादात्। न ह्ययं प्रकारः स्वभावे युक्तः, स्वभावस्य सर्वत्राविशेषात्[3]। पुरुषस्तु स्वेच्छावृत्तिः सत्त्वसभागतादिवशात् सेवाविशेषाद् वा कंचिद् अनुगृह्णाति नापरमिति युक्तम्।**

**व्रतचर्या[4]भ्रंशादिना धर्माधर्मोपचये धर्माधर्मात्मनोः प्रकृत्या सिद्ध्यसिद्धी चेत्।**

---

पुरुषसमयात्। किं कारणं (।) **कस्यचिन्मन्त्रानुष्ठायिनः** पु[6]रुषस्या**शु**मन्त्र**सिद्धेः अन्यस्य** तत्तुल्यमन्त्रक्रियानुष्ठायिनः **चिरात् सिद्धेः**। स्वतो हि फलदानेऽयं कालभेदो न युज्यते मन्त्रस्य केनचिदुत्कर्षानुत्कर्षाकरणात्। **अन्यस्य** पुरुषस्य मन्त्रात् फलनिष्पत्तौ **व्रतचर्याद्यपेक्षणा**न्न स्वभावतो मन्त्रः कारकः। व्रतं मन्त्रकल्पविहितो नियमस्तस्य चरणमनुष्ठानं। अपिशब्दाद्धोमादिप[7]रिग्रहः। स्वभावतो हि फलदाने। किं व्रतचर्याद्यनुष्ठानेनापेक्षितेन। ततोतिशयानुत्पत्तेः। **तथैकस्मादपि** मन्त्रविषयाज्जपहोमादि**कर्मणः** सकाशात् **कयोश्चित्** पुरुषयोस्तुल्यं विधिमनुतिष्ठतोरप्येकस्या**र्थ**दर्शनादन्यस्या**नर्थदर्शना**न्न स्वभावतः फलं। स्वभावतस्तु फलदाने तुल्योर्थयोगः स्यात्। **वहतामपीति** (।) विषाद्यप[1]नयनं कुर्वतामपि **मन्त्राणां** पुनः कालान्तरे तेनैव पुरुषेण प्रयुक्तानां **कस्यचित्** कार्यस्य **विसम्वादा**दकरणात्। **न ह्ययं प्रकारो** वस्तु**स्वभावे युक्तः** (।) किं कारणं (।) **स्वभावस्य सर्वत्र** पुरुषादौ **तुल्यत्वात्**। यो हि यस्य स्वभावो न स कञ्चिदपेक्ष्य स्वभावो भवति। यदा तु पुरुषकृतात् समयात् फलमिष्यते तदायमदोषः। तथा हि (।) **पुरुषस्तु** म[2]न्त्रसमयस्य कर्त्ता। **स्वेच्छावृत्ति**रिति कृत्वा **कंचित्** पुरुष**मनुगृह्णाति नापरमिति युक्तं**। केन कारणेन। **सत्त्वसभागताविशेषात्**। मन्त्रक्रियानुष्ठातुः सत्त्वस्य मन्त्रप्रणेत्रा सह सभागता तुल्यशीलाचारादिना। आदिशब्दादुपप्रदानादिपरिग्रहः। तद्वशात्तदनुरागात्। **सेवाविशेषाद्वा**। जपहोमादिना देवताराधनं सेवाविशेषस्त[3]स्माद्वा। **कञ्चिदनुगृह्णाति** पुरुषं। **नापरं** सत्त्वसभागतादिरहितं।

**व्रते**त्यादिना परमाशंकते। नियमस्यानुष्ठानं **व्रतचर्या**। व्रतचर्या च व्रतचर्या**भ्रंशश्चे**ति विरूपैकशेषः। **आदिशब्दः** प्रत्येकमभिसम्बध्यते। व्रतचर्यादिना व्रतचर्याभ्रंशादिना चेत्यर्थः। व्रतचर्यादिना **धर्मो**पचये सति सिद्धिरिति सम्बन्धः। तथा **प्र[4]कृत्या** स्वभावेन **धर्मा**त्मनो वा पुंसः सिद्धिः। व्रतचर्याभ्रंशादिना त्वधर्मोपचये सति। **अधर्मात्मनो वा प्राकृत्या** पुरुषस्यासिद्धिरिति वाक्यार्थो योज्यः। स्वभावतोपि मन्त्रात् फलनिष्पत्तौ यथोक्तेन प्रकारेण **सिद्ध्यसिद्धिभेदो** भविष्यतीति परो मन्यते।

203b

**न। धर्मवि[5]रुद्धानामपि क्रौर्यस्तेयद्वीन्द्रियसमापत्तिहीनकर्मबहुलानां डाकिनी-भगिनीतन्त्रादिषु दर्शनात्। तैरपि मन्त्रसिद्धिविशेषात्। न च एवं विधो[6] धर्म-स्वभाव इति यथावसरं निवेदयिष्यामः।**

525a **मैत्रीशौचधर्मप्रदानां तन्निमित्तमेव कस्याश्चिदसिद्धेः, विपर्ययेण च सिद्धेः[7]।**

**न च एकरूपाद्धि कर्मणः तद्विरोधी धर्मोऽधर्मश्च युक्तः। कथमिदानीं अध-**

---

**नेत्यादिना** प्रतिषेधति। न धर्मापेक्षात् मन्त्रात् फलसिद्धिः। किं कारणं (।)**धर्मविरुद्धानम[5]पि** मन्त्रसिद्धिहेतूनां व्रतानां **डा कि नी भ गि नी तन्त्रादिषु दर्शनात्**। डा कि नी तन्त्रे। चतुर्भगिनीतन्त्रे। आदिशब्दात्। चौर्यहेतुषु कम्बु-कि नी तन्त्रादिषु दर्शनात्। कानि पुनस्तानि धर्मविरुद्धानीत्याह। क्रौर्येत्यादि। **क्रौर्यं** प्राणिबधः। **स्तेयं** चौर्यं। **द्वि(?द्वीं)द्रियसमापत्तिर्मैथुनं**। **हीनकर्म** मार्जारा-शुचिधूमप्रदानादि। आदिशब्दादन्यस्यापि धर्म[6]विरुद्धस्य ग्रहणं। तानि क्रौर्या-दीनि **बहुलानि** भूयांसि येषां व्रतानान्तानि तथोक्तानि। **तैश्च** तथोक्तैर्व्रतैर्मन्त्र-**सिद्धिविशेषात्**। तथा हि (।) डा कि नी तन्त्रे समयव्यवस्था। यदा प्राणिनं हत्वा खादति तदा मन्त्रसिद्धिमासादयति। तथा कम्बु कि नी तन्त्रे स्तेयाचर-

204a णात् सिद्धिरुक्ता। तथा मैथुनाचरणात् सिद्धिप्रदा काचिद्देवतेति भगिनी[7]तन्त्रा-न्तरे क्वचित् समयः।

क्रौर्याद्येव धर्मो भविष्यतीति चेद् (।)

आह। **न चे**त्यादि। **एवम्विधो** क्रौर्यादिलक्षणो **धर्मस्वभाव इति यथा-वसरं पश्चान्निवेदयिष्यामः**। एवन्तावदधर्मादपि सिद्धिर्दृष्टा।

धर्मादपि सिद्धिर्न दृष्टेत्याह। **मैत्री**त्यादि। सत्वानां हितसुखचिन्तन-म्**मै** त्री। **शौ चं** द्विविधं। बाह्यमान्तरञ्च। बाह्यं स्नानादि। आन्तरं स्तेयादि-निवृत्तिः। दा[1]नादिना परानुग्रहो धर्मः। मैत्रीशौचधर्माः परे प्रदानानि येषान्ते तथोक्ताः। तथाभूतानां पुरुषाणां। **तन्निमित्तमेव** मैत्र्यादिकमेव **निमित्तं** कृत्वा **कस्याश्चित् सिद्धे**रिति मैत्री**विपर्ययेण** या लभ्या तस्या **असिद्धेः**। **विपर्ययेण च** द्वेषादिना पुनः **सिद्धेः**। न धर्मोपचयापेक्षात् मन्त्रात् फलसिद्धिरिति। द्वेषादि-समुत्थितोपि क्रौर्यादिर्मन्त्रवि[2]धानेनानुष्ठितस्सन् धर्म एवेति (।)

अत आह। **न चे**त्यादि। एकरूपाद्धि सादिलक्षणात् **कर्मणः** सकाशात् स **तद्विरोध्य**धर्मविरोधी **धर्मो युक्तः**। अधर्मश्चेति मन्त्रविधानादन्यत्र तत एव हिंसादेः सकाशादधर्मश्च **न युक्तः**। न ह्यधर्महेतोर्धर्मो भवति विरोधात्। तथा हि (।) येनैव द्वेषाद्याशयेन मन्त्रविधानादन्यत्र हिंसादिकुर्वतोऽधर्मो भवति। [3]तेनै-वाशयेन मन्त्रविधानानुष्ठानेपि हिंसादिकं क्रियत इति कथन्तस्य धर्माङ्गत्वमिति।

**र्मात्मनो व्रतादेः धर्मस्य फलमि[1]ष्टं अश्नुते।**

**न चैतस्य व्रतादेस्तदिष्टं फलं विपाकः, किन्तु पूर्वकृतस्य, ब्रह्महत्यादेशानुष्ठानात् ग्रामप्रति[2]लम्भवत्। तस्य तु अधर्मात्मनो व्रतस्यागामि फलं नेष्टम्। स तु मन्त्रादिप्रयोगः तस्येष्टफलस्य कर्मणः कथञ्चित् प्रकारेण उपकारात्[3] पाचकः। चित्रत्वादुपकारशक्तेः।**

**पुरुषविशेषाश्रयविपाकधर्मा धर्मः, तेन कृतः स[4] तथाऽऽराधनेन फलति।**

---

यदि द्वेषादिकृतत्वान्मन्त्रविधानेनानुष्ठितोपि क्रौर्यादिरधर्म एव **कथमिदानीमधर्मात्मनो व्रतादेरि**ति पूर्वोक्तात्। क्रौर्यादिलक्षणाद् व्रतात्। आदिशब्दादन्यस्मान्निहीनादशुचिधूपदानादिलक्षणात्। **धर्मस्य फल**मिष्टसम्भोगादिलक्षणं **कथमश्नुते**[4] भजते जापी।

**ने**त्यादि सि द्धा न्त वा दी। **न चैतस्या**धर्मात्मनो **व्रतादेस्तदिष्टं फलम्वि**पाकः कर्मफलं। **किन्तु पूर्वकृतस्य** शुभस्य कर्मणो विपाकः (।) किम्वदिति (।) आह। **ब्रह्महत्याया** आदेशस्तस्या**नुष्ठानात्** सम्पादनात्। **ग्रामप्रतिलम्भवत्**। यथा कश्चित् कञ्चित् पुरुषं नियुंक्ते। मारयेमं ब्राह्मणं अहन्ते ग्रामन्दास्यामीति। स तस्यादेशस्यानुष्ठाना[5]द् ग्रामं प्रतिलभते। न च तद् ब्रह्महत्याया फलं। किन्तु तद्ब्र(ह्म)हत्याचरणेनाराधितं पुरुषं सहकारिणं प्राप्य पूर्वकं शुभमेव कर्म तथा फलति।

अधर्मात्मनस्तर्हि तस्य व्रतस्य किंफलमित्याह। **तस्य तु** क्रौर्यादिलक्षणस्या**धर्मात्मनो व्रतस्यागामि** भविष्यज्जन्मभावि फलमिष्टं नरकादि।

यदि शुभस्य कर्मण इष्टं फलं किन्तेनाधर्मात्मना **मन्त्रादिप्र[6]योगे**णापेक्षितेनेति चेद् (।)

आह। **स** त्वधर्मात्मा। डा कि नी **मन्त्रादिप्रयोगः**। आदिशब्दात् क्रौर्यादिव्रतप्रयोगः। **तस्येष्टफलस्य** शुभस्य **कर्मणः**। इष्टम्फलं यस्य कर्मण इति विग्रहः। **कथञ्चित्** केनचित् **प्रकारेणोपकारात् पाचकः** फलस्य दायकः।

कथं पुनः कुशलस्याकुशलमुपकारकम्भवतीति (।)

आह। **चित्रत्वादुपकारशक्तेः**।[7] सहकारिभावो हि चित्रः। कदाचित् कुशलस्याकुशलं सहकारि। अकुशलस्यापि कुशलं। यथात्यर्थमुदारकुशलकारिणो न नरकादिदुःखफलमशुभं कर्म कुशलं सहकारि प्राप्येहैव जन्मनि। व्याध्यादिदुःखमात्रं दत्वा क्षीयते। अधर्मात्मको मन्त्रादिप्रयोगः। कथंचिदिष्टफलस्य कर्मण उपकारक इत्युक्तं। 204b

यत्र येन प्रकारेणोपकारस्तन्दर्शयन्नाह। **पुरुष[1]विशेषो** मन्त्रस्य प्रणेता स

**तत्प्रयोगोपकारविपाकधर्मणः तत्फलस्य कर्मणः कृतत्वात्।**

**विनाऽपि विशेषपुरुषेण[5] तस्यैवोपकारात् फलमिति चेत्।**

**नैतदेवम्। पुरुषस्य आकारस्वभावचर्याऽधिमोक्षस्य वैयर्थ्यप्रसंगात्। तस्याप्युपकारकत्वे सिद्धः[6] पुरुषविशेषोऽसाधारणगुणः। तदधिमुक्तेरेव विषकर्मादि-** 525b **करणात्। तस्मान्न मन्त्राः पुरुषप्रणीता अपि तदुपयोगनिरपेक्षाः[7] स्वभावेन फलदाः।**

## (च) आप्तचिन्ता

**येऽपि तन्त्रविदः केचिन्मन्त्रान्कांश्चन कुर्वते।**

---

एवाश्रयस्तेन विपाकः फलदानं स एव धर्मः स्वभावो यस्य स पुरुषा**श्रयविपाकधर्मा**। **धर्म** इति पुण्यविशेषः। **तेनेति** पुरुषेण **कृतः** पूर्वजन्मनि। **स तथा तदाराधनेनेति**। स धर्मस्तथा क्रौर्याद्याचरणात्। तदाराधनेन मन्त्रप्रणेतृपुरुषाराधनेन **फलतीति**।

एतदेव स्पष्टयन्नाह। **तदित्यादि**। **तेन** मन्त्रप्रणेत्रा पुरु[2]षेण विहिता क्रौर्ययुक्तव्रतादि**प्रयोगस्तेनोपकारः**। कर्मणः परिपोषः। **तेन विपाकः** फलदानं धर्मः स्वभावो यस्य तस्यैवं**धर्मणः**। **तत्फलस्येति**। इष्टफलस्य **कर्मणः कृतत्वात्** कारणात्। तदाराधनेन फलतीति।

**विनापि** मन्त्रप्रणेत्रा पुरुषेण तदुपकारात्। **तस्यैव** यन्त्रस्य केवलस्य जपादिना व्यापारेणो**पकारा**न्मन्त्रा**त्फ**[3]**लमिति चेत्**। ततश्च पुरुषाराधनेन फलतीति यदुक्तन्तदयुक्तमिति परो मन्यते।

नेत्यादि सि द्धा न्त वा दी। **नैतदेवं**। किङ्कारणं (।) **पुरुषेत्यादि**। मन्त्रप्रणेतुः **पुरुषस्याकारो** वर्णसंस्थानादिः। **स्वभावः** शान्तरौद्रादिः। **चर्या** कायवाग्व्यापारलक्षणा चेष्टा। तेषामाकारादीना**मधिमोक्षो**ऽधिमुक्तिस्तस्या **वैयर्थ्यप्रसङ्गात्**। मन्त्रस्याधिष्ठाता पुरुषश्चेन्ना[4]स्ति। किमर्थन्तस्याकारादीनधिमुच्येत्। अथेष्यते **तस्यापि** पुरुषस्यो**पकारकत्व**न्तदा तस्यापि मन्त्रप्रणेतुः पुरुषस्य मन्त्रात् फलसिद्धिं प्रत्युपकारकत्वेऽङ्गीक्रियमाणे **सिद्धः पुरुषविशेषोसाधारणगुणः**। असाधारणा गुणा अस्येति विग्रहः। किं कारणं (।) **तदधिमुक्तेरेव** पुरुषविशेषाकारस्वभावचर्याधिमुक्तेरेव **विषकर्मादिक**[5]**रणात्**। **तस्मान्न मन्त्राः पुरुषप्रणीता अपि तदुपयोगनिरपेक्षाः** पुरुषविशेषोपयोगनिरपेक्षाः **स्वभावेन** प्रकृत्यैव **फलदाः**। किन्तु पुरुषविशेषोपयोगसापेक्षा एव।

**यद्यसाधारणगुण एव पुरुषो मन्त्रस्य प्रणेता। कथं प्रभावादिविशेषरहिता अपि तन्त्रविदो मन्त्रान् भाषन्त इति (।)**

**·प्रभुप्रभावस्तेषां स तदुक्तन्यायवृत्तितः ॥३१२॥**

**रथ्यापुरुषा अपि केचन तन्त्रज्ञा स्वयं कृतैर्मन्त्रैः किञ्चित् कर्म कुर्वन्ति। तथान्योऽपि मन्त्रस्य प्रणेताऽनतिशयश्च स्यादिति चेत्।**

**न।. तेषां प्रभाववतैवा[2]धिष्ठानात्। तत्कृतं हि समयमनुपालयन्तः तदुपदेशेन च वर्तमानाः। तत्समयोपदेशनिरपेक्षाणां असामर्थ्यात्। तत्रापि तदाकारध्यानादेरेव प्रयोगात्। तस्मात् तदधिष्ठानमेव तत् तादृशमुन्नेयम्। अपि च।**

---

अत आह। **येपीत्यादि**। मन्त्रप्रतिबद्धा[6]नि शास्त्राणि तन्त्राणि तानि विदन्तीति ते **तन्त्रविदः केचिदद्यत्वेपि मन्त्रानपूर्वान् कांश्चन कुर्वते**। तन्न **तेषां** केवलानामसामर्थ्यं। किन्तु यत् तन्त्रमाश्रितास्ते तस्य तन्त्रस्य प्रणेता यः पुरुषातिशयस्तस्य **प्रभोः** स्वामिनः स **प्रभावः** सामर्थ्यं। कस्मात् (।) **तदुक्तन्यायवृत्तितः**। तस्मात् प्रभुणा यस्तेभ्यस्समयादिको न्याय उपदिष्टस्तस्यानुवर्त्तनात्। प्रभु[7]स्तुष्टस्तत्प्रणीतानपि मन्त्रानधितिष्ठतीति भावः। 205a

**रथ्यापुरुषे**त्यादिना पूर्वपक्षोपन्यासपूर्वकं कारिकार्थं व्याचष्टे। **रथ्यापुरुषा अपी**ति सामान्यपुरुषा अपि **केचन** गारुडिकप्रभृतयो मन्त्रलक्षणतन्त्र**ज्ञाः किञ्चिद्** विषादिशमनलक्षणं **कर्म कुर्वन्ति**। न च ते विशिष्टाः सुरापानाद्यनुष्ठानात्। **तथान्यो**पीति प्रभाववत्त्वेनाभिमतो **मन्त्रस्य प्र[1]णेताऽनतिशयश्च स्यात्**। रथ्यापुरुषवदतिशयरहितश्च स्यात् मन्त्राणां च कर्त्तेति। तथा च प्रभाववान् पुरुषो न सिध्यतीति मन्यते।

**ने**त्यादिना परिहरति। न प्रभावरहितानां मन्त्रकरणं (।) ये तु रथ्यापुरुषा अपि मन्त्रान् कुर्वन्ति **तेषां** पुरुषाणां **प्रभाववतैव** तन्त्रस्य प्रणेत्रा**धिष्ठानात्** मन्त्रकरणसामर्थ्यं।

एतदेव दर्शयन्नाह। **तत्कृतं ही**त्यादि। तेन प्र[2]भावातिशयवता पुरुषेण कृत**समयमनुपालयन्तो** रक्षन्तः। **तदुपदेशेन चे**ति प्रभावयुक्तपुरुषोपदेशेन च **वर्तमाना** मन्त्रक्रियासमर्थाः कुत एतत्।

**त**दित्यादि तस्य प्रभावतो य**स्समयः**। यश्चो**पदेश**स्तत्र **निरपेक्षाणां** पुंसां मन्त्ररचनाया**मसामर्थ्यात्**। तत्र समयो यस्यातिक्रमात् पुनर्मण्डलप्रवेशादिः कर्त्तव्यो जायते। ततोन्यद्विधा[3]नामुपदेश इत्यनयोर्भेदः। **तत्रापी**ति रथ्यापुरुषकृतेष्वपि मन्त्रेषु **तदाकारध्यानादेव**। प्रभाववतः। पुंसश्चाकारध्यानादे(रे)व (।) आदिशब्दात् स्वभावचर्याध्यानस्य परिग्रहः। तेन मन्त्रस्य **प्रयोगात्** प्रवर्त्तनात्। यत एवन्**तस्मात्तदधिष्ठानमेव** प्रभाववत्पुरुषाधिष्ठानमेव **तत्तादृशमुन्नेयं** बोद्धव्यं। **यत्ते स्वयंकृतैर्मन्त्रैः** कर्म कुर्वन्तीति।

**तादृशः प्रभाववानेव, तदन्यैरसाधारण[4]शक्तित्वात् पुरुषातिशय एव समर्थितः स्यात् ।**

**कृतकाः पौरुषेयाश्च मंत्रा वाच्याः फलेप्सुना ।**

**न हि अकृतकानां प्रयोगः सम्भवति, न चाप्रयुक्तेभ्यः[5] फलम् । एवं, पुरुषाधिष्ठानमन्तरेण असम्भवत्फलानां फलदर्शनात्, प्रयोगाद् फलमिच्छता मन्त्रा कृतकाः पौरुषेयाश्च वाच्याः ।[6] कृतसमयकाव्यवत् ।**

**अशक्तिसाधनं पुंसामनेनैव निराकृतम् ॥३१३॥**

**प्रतिपादिता हि पुरुषकृता मन्त्रास्तदधिष्ठानाच्च फलदाः । तद्, अस्ति**

---

**अपि च**[4] (।) केचित् तन्त्रज्ञा मन्त्रं कुर्वन्तीत्यभिदधता **पुरुषातिशय एव समर्थितः स्यात्** । यस्मात् सोपि **तादृश**स्तन्त्रज्ञो मन्त्रस्य कर्त्ता **प्रभाववानेव** । **तदन्यै**रतन्त्रज्ञैः पुरुषै**रसाधारणशक्तित्वा**दिति कृत्वा । यतश्च पुरुषाधिष्ठितानामेव मन्त्राणां फलं । तस्मात् **कृतकाः पौरुषेयाश्च** फलदा इत्येवम्**मन्त्रा वाच्याः फलेप्सुना** । मन्त्राद् फलमिच्छता न नित्या म[5]न्त्राः किन्तु कृतकाः कृतकत्वेपि न फलदाने पुरुषनिरपेक्षा इत्यर्थद्वयमादर्शयितुं कृतकाः पौरुषेयाश्चेति द्वयोपादानं ।

**न ही**त्यादिना व्याचष्टे । न हि नित्यानाम्वैदिकानां मन्त्राणां **प्रयोग** उच्चारणं **सम्भवत्य**नाधेयातिशयत्वात् । **न चाप्रयुक्तेभ्यो** मन्त्रेभ्यः **फलमि**ति कृत्वा **प्रयोगात् फलमिच्छता कृतका मन्त्रा वाच्याः । पौरुषेयाश्च** ।[6] पुरुषाधिष्ठिताश्च फलदा वाच्याः । किं कारणं (।) **पुरुषाधिष्ठानमन्तरेण** विनान्यतो भावशक्त्यादे**रसम्भवत्फलाना**म्मन्त्राणां पुरुषाधिष्ठानादेव **फलदर्शनात्** । यथा च न भावशक्त्या मन्त्रेभ्यः फलोत्पत्तिस्तथा प्रतिपादितं (।)

"सर्वस्य साधनन्ते स्युर्भावशक्तिर्यदीदृशी"त्यादिना (१।२६७) ।

205b निदर्शनं चाह । यो मदीयं काव्याद्येवं पठिष्यति[7] तस्य मयायमर्थः सम्पादनीय इत्येवंकृतः **समयो** यस्मिन् **काव्यादौ** आदिशब्दाच्छिल्पस्थानादौ । स कृतसमयः काव्यादिः तस्मिन्निव तद्वत् । यथा तत्र काव्यादिपाठकानां पुरुषाधिष्ठानात् फलन्तद्वन्मन्त्रेष्वपीत्यर्थः । **पुंसा**मतीन्द्रियार्थदर्शनं प्रति **शक्ति**र्नास्तीत्येवमशक्तिसाधनमसामर्थ्यस्य **साधनं** यन्नाम किञ्चित् मी मां स कै रुच्यते तत्सर्व**मनेनैव** म[1]न्त्रकारिणां ज्ञानप्रभावातिशयसाधनेन **निराकृतं** ।

**प्रतिपादिता ही**त्यादिना व्याचष्टे । **प्रतिपादिता हि पुरुषकृता मन्त्रास्तदधिष्ठानाच्च फलदा** मन्त्रा इत्येतदपि प्रतिपादितं ।

न च सर्वे पुरुषा मन्त्रान् कर्त्तुमधिष्ठातुं वा शक्ताः । **तदिति** तस्मा**दस्ति कश्चिदतिशयवान् पुरुषो** मन्त्रस्य **कर्त्ते**ति । **तस्या**तिशयवतः पुंसः **प्रतिक्षेपसाधनान्यपि**

**कश्चिदतिशयवान् इति तस्य प्रतिक्षेपसाधनान्यपि प्रतिव्यूढानि।** 526a

**बुद्धीन्द्रियोक्तिपुंस्त्वादि साधनं यत्त वर्ण्यते।**
**प्रमाणाभं[1] यथार्थास्ति न हि शेषवतो गतिः ॥३१४॥**

**यत्तु बुद्धीन्द्रियोक्तिपुंस्त्वादित्यादि— पुरुषातिशयप्रतिक्षेपसाधनं तत्तु अगमकमेव[2]। प्रतिक्षेपसामान्यसाधनेऽयोगात्।**

**न ह्यतीन्द्रियेषु तद्दर्शिनः प्रतिक्षेपः सम्भवति। सतामप्येषामज्ञानात्। अत एव विरोधस्या[3]सिद्धेः। अविरोधिना च एकत्र सम्भवाविरोधादित्युक्तम्।**

---

**प्रतिव्यू[2]ढानि** प्रतिक्षिप्तानि। एतेन च परोक्तस्यातिशयप्रतिक्षेपसाधनस्य न विरुद्धाव्यभिचारित्वमुद्भाव्यते (।) किन्तर्हि पुरुषातिशयप्रतिक्षेपसाधनानि वस्तुबलायातानि न सन्त्येवेत्यनेन व्याजेन कथ्यते। न हि वस्तुबलायातं पुरुषातिशयं निराकर्तुं किंचित् साधनमस्ति।

ननु चेदमस्ति विवक्षितः पुरुषो नातिशयवान् बुद्धिमत्त्वात्। इन्द्रियवत्वात्। व[3]चनात् पुंस्त्वात्। रथ्यापुरुषवदिति (।)

अत आह। **बुद्धीन्द्रियेत्यादि**। बुद्धिश्चेन्द्रियं च **उक्तिश्च पुंस्त्वं** चेति द्वन्द्वः। **आदि**शब्दात् प्राणादिमत्त्वादि। पुरुषातिशयनिराकरण**साधनं यत्तु वर्ण्यते** (।) तत्सर्वं **प्रमाणाभं** प्रमाणाभासमनैकान्तिकमिति यावत्। किं कारणं (।) विपक्षवृत्तेः सन्देहेन सर्वस्य शेषवत्त्वात्। **न हि शेषवत** इत्यनैकान्तिकत्वात्। **यथार्थे**त्यवि[4]परीता **गति**रनुमेयप्रतिपत्तिरस्ति।

**यत्त्वि**त्यादिना व्याचष्टे। **यत्तु पुरुषातिशयप्रतिक्षेपसाधनन्तत्त्वगमकमेवे**ति सम्बन्धः। तत्पुनः साधनं। **बुद्धीन्द्रिययोगा**दित्यादि। कस्मादगमकमित्याह। **प्रतिक्षेपे**त्यादि। प्रतिक्षेपश्च सामान्यं च **प्रतिक्षेपसामान्ये**। तयोः **साधने** तयो**रयोगात्**। तथा हि (।) बुद्धिमत्त्वादिना साधनेन नास्ति [5] पुरुषातिशय इति प्रतिक्षेपो वा साध्येत। यद्वा योसौ पुरुषातिशयः स रथ्यापुरुषैः समान इतीतरपुरुषसामान्यं साध्येत।

तत्र **न ही**त्यादिना प्रतिक्षेपसाधनस्याभावमाह। **न ह्यतीन्द्रिये**ष्वर्थेष्व**तद्दर्शिनो**तीन्द्रियार्थादर्शिनः **प्रतिक्षेपः सम्भवति**। किं कारणं (।) **सतामप्येषा**मतीन्द्रियाणामर्थानामर्वाग्दर्शनस्या**ज्ञानात्**। तस्मान्ना[6]दर्शनमात्रात्प्रतिक्षेप इति भावः।

नापि विरुद्धविधानात् पुरुषातिशयस्य प्रतिक्षेपः यस्मा**दत एवा**तीन्द्रियत्वादेव पुरुषातिशयस्य बुद्धित्वादिना हेतुना। द्विविधस्यापि **विरोधस्यासिद्धेः। अविरोधिना च** वक्तृत्वादिना पुरुषातिशय**स्यैकत्र सम्भवाविरोधादित्युक्तं प्राक्**।

**नापि इतरेण सामान्यसिद्धिः, विशेषासम्भवस्य ज्ञातुं अशक्यत्वात्।[4] ईदृशेषु अनुपलब्धेर्हेतुत्वप्रतिक्षेपात्।**

**पुंस्त्वादिसाम्येऽपि कस्यचित् अतिशयस्य दर्शनात्, सम्भवद्विशेषेऽपि सामान्यासिद्धेरित्यपि उक्तं (प्राक्)।**

**तस्मादनुमानमेतद् विपक्षवृत्तेरदर्शनेऽपि, व्यतिरेकस्य सन्देहाद् शेषवदसमर्थम्[6]।¹ अपि चैवंवादिनो जैमिनीयाः स्वमेव वादं विधुरयन्ति।**

**अर्थोयं नायमर्थो न इति शब्दा वदन्ति न।**
526b **कल्प्योयमर्थः पुरुषैर्[7]ते च रागादिसंयुताः ॥३१५॥**
**स एकस्तत्त्वविज्ञान्य इति भेदश्च किंकृतः।**

---

206a **नापी**त्यादिना सामान्यसाधनस्याभावमाह। **नापीतरे**[7]णार्वाग्दर्शिना पुरुषेण तस्यातिशयवतः **सामान्यसिद्धि**स्तुल्यतासिद्धिः। किं कारणं (।) अतीन्द्रियदर्शनादिलक्षणस्य **विशेषस्य** यो **सम्भवस्तस्य ज्ञातुमशक्यत्वात्। ईदृशेषु** च परसन्तानवर्त्तिषु पुरुषमात्राप्रत्यक्षेष्वतीन्द्रियार्थदर्शनादिषु। या काचिदसम्भवप्रसाधन्यनुपलब्धिरुपादीयते। तस्या **अनुपलब्धेः** प्रागेव **हेतुत्वप्रतिक्षेपात्।**

किं च (।) **पुंस्त्वादि[1] साम्येपि** यथास्वं संस्कारात् **कस्यचित्** प्रज्ञामेवादेरतिशयदर्शनात् तथान्यस्याप्यतिशयस्य **सम्भाव्यत्वात्**। तस्मात् सम्भवद्विशेषाः पुरुषा-**सम्भवद्विशेषे चेतरपुरुषसामान्यासिद्धेरित्यप्युक्तं** प्राक्।

**तस्माच्छेषवदनुमानमेतद्** वक्तृत्वाद्यसमर्थं पुरुषातिशयासम्भवप्रतिपादनाय। **विपक्षवृत्तेरदर्शनेपि।**

यदि नाम विपक्षे पुरुषातिशये वक्तृ[2]त्वादेर्वृत्तिर्न दृश्यते। तथापि बाधकाभावेन **व्यतिरेकस्य सन्देहादसमर्थं। अपि चैवंवादिन** इति नास्त्यतीन्द्रियार्थदर्शी पुरुष इत्येवंवादिनो **जैमिनीयाः स्वमेव वाद**मिति कथंचिदतिशयवतो जैमिन्यादेः सकाशाद् वेदार्थगतिर्भवतीति पुरुषातिशयाभ्युपगमवादं पुनर्नास्त्यतीन्द्रियार्थज्ञः पुरुषः कश्चिदित्यनया स्ववाचा **विधुरयन्ति**[3] बाधन्तेऽतिशयवत्पुरुषप्रतिक्षेपेण वेदार्थगतेरसम्भवात् (।) **तथा हि** (।) **अयमर्थो**ऽस्माकन्ना**यमर्थ इति** स्वयम्वैदिकाः **शब्दा न वदन्ति**। तेनाग्निहोत्रशब्दानां योभिमतोर्थः स **कल्प्यो** भवेत् **पुरुषै**र्मीमांसकैः। तच्च नास्ति। यतस्ते हि पुरुषा **रागादिसंयुता** रागादियुक्ताः। ततो न तत्कल्पितोऽर्थः प्रमाणं।

अथ तस्य वेदार्थस्य कश्चिज्जैमिन्यादि[4]रेव वेत्ता कल्प्येत। तत्रैकपुरुषो-

---

¹ Bam-po-bcug-gcig-pa=एकादशाह्निकम्

**तद्वत्पुंस्त्वे कथमपि ज्ञानी कश्चित्कथं न वः ॥३१६॥**

**न वैदिकाः शब्दा एत भवन्तो ब्राह्मणा[1] अयमस्माकमर्थो ग्राह्यो नान्य इत्येवं विक्रोशन्ति। अनभिव्यक्तार्थविशेषसंसर्गा एव श्रुतिं अभिपतन्ति। तत्र एकः पुरुषः कञ्चिदर्थं कल्पयत्यन्योऽपि अपरम्।**

**न च कश्चित् शब्दानां स्वभावप्रतिनियमः येन एकार्थानुक्रिया नापरस्य। किन्तु समयवशात्[3] तं तं आविशन्तो दृश्यन्ते। तेषां अविदितार्थनियमानां तत्त्वं अत्यक्षावेशात् कश्चिद् दोषोपप्लुतोऽविद्वानेव आचष्टे नापर[4] इति न न्याय्यम्।**

---

भिमतस्तत्त्ववित्। वेदार्थतत्त्वज्ञो **नान्यः** पुरुष **इति किंकृतः**। नात्र किञ्चित् कारणमस्ति मीमांसकस्य पुरुषत्वाविशेषात् सर्वो वा वेत्ति। न वा कश्चिदिति भावः।

अथ पुरुषत्वादिसाम्येप्यसाधारणशक्तियुक्तो वैदिकानां शब्दानामतीन्द्रियैरर्थैः सह सम्बन्धस्य वेत्ता कश्चिज्जैमिन्यादिः कल्प्यते (।) तदा **तद्वज्जैमि**[5]**न्यादिवत्। पुंस्त्वे** पुरुषत्वे तुल्योपि **कथमपी**ति निर्निमित्तमन्योपि **कश्चिज्ज्ञानी** ज्ञानातिशयवान्। कस्मान्न **वो** न युष्माकमभिमतो जैमिन्यादिवदन्योपि ज्ञानवान् प्रसज्यत इति यावत्।

**नेत्या**दिना व्याचष्टे। **एत** आगच्छत **भवन्तो ब्राह्मणा अयमस्माकमर्थो** भवद्भिर्**ग्राह्यो नान्य इत्येवंवैदिकाः शब्दा न विक्रोशन्ति** न कथयन्ति येन तेभ्योर्थगतिः स्यात्।[6] केवलमित्यवधारणे। **अनभिव्यक्तार्थविशेषसंसर्गा एव श्रुतिं** श्रोत्रविज्ञान**मभिपत**न्त्यारोहन्ति (।) अनभिव्यक्तोर्थविशेषेण सह संसर्गः सम्बन्धो येषामिति विग्रहः। **तत्रा**ज्ञातार्थसम्बन्धेषु शब्देषु श्रुतिमभिपतत्स्वे**कः पुरुषः** स्वयं **कञ्चिदर्थं** स्वेच्छानुरूपं **कल्पयत्यन्योपि** पुरुषो**पर**मर्थं **कल्पय**तीत्यनिर्णय एव पदार्थस्य।[7]

206b

स्वाभाविकः शब्दानामर्थसम्बन्धस्तेनैकार्थप्रतिनियमो भविष्यतीत्याह। **नेत्याह। न च कश्चिच्छब्दानां स्वभावप्रतिनियमः** स्वभावेन प्रकृत्यार्थैस्सह सम्बन्धो **येनानेकार्थ**कल्पनायामपि केवलं **समयवशात्** तन्तमर्थमा**विशन्तो** वाच्यत्वेनोपाददाना **दृश्यन्ते। तेषा**म्वैदिकानां शब्दा[1]नां कश्चित् **तत्त्वमाचष्टे नापर इति न न्याय्यमिति** सम्बन्धः। कीदृशानाम**विदितार्थनियमानां**। अविदितोर्थनियमो येषामिति विग्रहः। किं कारणम् (।) **अत्यक्षावेशात्**। अतीन्द्रियस्य स्वर्गादिसाधनस्यार्थस्य विषयत्वेनात्मसात्करणात्। न ह्यतीन्द्रियार्थस्य शब्दस्यार्थनियममर्वाग्दर्शनः शक्तो ज्ञातुं। **तत्राविद्वानेव**। रागादिदोषोपप्लुतः। **क**[2]**श्चिज्जै**मिनिः शबरस्वामी वा। तेषां शब्दानान्तत्त्वमाचष्टे। अस्यायमेवार्थ इति

**अथ कुतश्चिद् बुद्धीन्द्रियादीनां स एव वेत्ति नापरः। तस्य कुतोऽयमतीन्द्रियज्ञानातिशयः[5]। तथाऽन्योऽपि देशकालस्वभावविप्रकृष्टानामर्थानां द्रष्टा किमसम्भवी दृष्टः। यतो न हि तत्प्रतिक्षेपसाधनानि कानिचित् नैनं उपलीयन्ते[6]। तत्साधनसम्भवेऽपि यथायमस्य विशेषः, तथान्यस्यापि स्यादित्यनभिनिवेश एव युक्तः।**

5272a **यस्य प्रमाणसंवादि वचनं सोर्थ[7]विद्यदि।**
**न ह्यत्यन्तपरोक्षेषु प्रमाणस्यास्ति सम्भवः ॥३१७॥**

---

नापरः। अपरोपि पुरुषो जै मि न्याद्यविशिष्टो न तत्त्वमाचष्ट इति भेदव्यवस्थानं न न्याय्यमयुक्तित्वात्।

अथ **कुतश्चि**दनिर्देश्यरूपाद् **बुद्धीन्द्रियादीनाम्** (।) आदिशब्दादभ्यासस्यातिशयात् कारणात् **स एव** जै मि नि प्रभृतिर्वेदार्थ**म्वेत्ति नापरः**: प्राकृतः पुरुष इ[3]तीष्यते। तदा **तस्य** जै मि नि प्रभृतेः **कुतोयमतीन्द्रियज्ञानातिशयः**। अतीन्द्रियस्य वेदार्थतत्त्वस्य ज्ञानातिशयोन्यैरविदिततत्त्वैरविशिष्टस्य।

भवतु वा जै मि नि प्रभृतिः पुरुषोतीन्द्रियार्थस्य वेत्ता। **तथा** जै मि न्यादिवद**न्योपि** पुरुषातिशयो बौ द्धा द्य भिमतो **देशकालस्वभावविप्रकृष्टानामर्थानां द्रष्टा। किमसम्भवी**। कस्मादवि[4]द्यमानो **दृष्टो** येन प्रतिक्षिप्यते। सोप्यतीन्द्रियार्थदर्श्यस्त्वितीष्यतां। न चेदभिमतोपि जै मि न्यादिर्मा भूत्। **यतो न हि तत्प्रतिक्षेपसाधनानि**। बौ द्धा द्यभिमतपुरुषातिशयप्रतिक्षेपसाधनानि पुरुषत्वादीनि **कानिचित्** सन्ति (।) यानि **नैनम्**वेदार्थविवेककारिणं जै मि नि प्रभृतिं **नोपलीयन्ते**। न विषयीकुर्वन्ति। किन्तूपली[5]यन्त एव। तेषामपि पुरुषत्वादियोगात्।

अथ पुरुषत्वादिसाधनसम्भवेपि जैमिन्यादे**र्विशेष** इष्यते। तदा **यथायम**तीन्द्रियवेदार्थविवेचनलक्षणे **विशेषोस्य** जैमिनिप्रभृतेरिष्टः। **तत्साधनसम्भवेपी**ति। तस्यातीन्द्रियार्थदर्शिपुरुषप्रतिक्षेपसाधनस्य पुरुषत्वादेः सम्भवेपि। **तथान्यस्यापि** पुरुषस्यातीन्द्रिया[6]र्थदर्शनं **स्यादित्यनभिनिवेश एव** भवतां मी मां स का नां **युक्तः**।

नातीन्द्रियार्थदर्शीति कृत्वा जै मि नि प्रभृतेर्वेदार्थज्ञानमिष्टमपि तु। **यस्य** वाक्यं **प्रमाणसम्वादि**। **स** पुरुषो वेदार्थ**विद् यदी**ष्यते।

जै मि नि प्रभृतेरेव च वेदार्थविवेचनं कुर्वतो **वचनं** प्रमाणसम्वादीति **परो मन्यते**।

2072a नेत्या द्या चा र्यः। नेदमुत्तरं युक्तं य[7]स्मा**न्न ह्यत्यन्तपरोक्षेषु** वेदार्थेषु स्वर्गादिसाधनत्वेषु **प्रमाणस्यास्ति सम्भवः**।

**स्यादेतद्। न वयं पुरुषप्रामाण्याः कस्यचिद् वेदव्याख्यानेऽनमभिनिविष्टाः। किन्तर्हि[1]। अन्यप्रमाणसंवादात्। बहुष्वपि व्याख्यातृषु यः प्रमाणं प्रत्यक्षादिकं संस्यन्दयति सोऽनुमन्यत इति।**

**तन्न। अदृष्टादिषु अतीन्द्रियेषु प्रमाणान्तरावृत्तेः। तदवृत्तेरेव हि तत्प्रतीत्यर्थं आगम उपयाच्यते। अन्यथा सत्यपि तस्मिन् यदि अर्थे प्रमाणान्तरस्यावृत्तिः अप्रतिपत्तेः। ततश्च केवलात् प्रतिपत्तेरसाधनमेवागमः स्यात्।**

**केवलादन्यतोऽपि अतीन्द्रियेषु अप्रतिपत्तिरिति चेत्[4]।**

**कथमतीन्द्रियश्च नाम प्रत्यक्षादिविषयश्च। ते पुनः स्वविषयेऽपि आगममपेक्ष्यैव साधकाश्चेत्, अनागमोग्न्यादि[5]प्रत्ययो धूमादेर्न स्यात्। न वै आगमे**

---

**स्यादेत**दित्यादिना व्याचष्टे। **न वयं पुरुषप्रामाण्याः कस्यचि**ज्जैमिन्यादेर्वे**दव्याख्यानमभिनिविष्टाः** (।) **किन्तर्हि** (।) **प्रमाणसम्वादाद्** व्याख्यानमभिनिविष्टाः। एतदेव व्यनक्ति। **बहुष्वपि** वेद**व्याख्यातृषु** मध्ये। **यो** वेदस्य व्याख्याता। यथा व्याख्यातेर्थे **प्रमाणं प्रत्यक्षा[1]दिकं संस्यन्दयति** योजयति **स** तादृशो व्याख्याता**नुमन्यते**ङ्गीक्रियते नान्य इति।

**तन्ने**त्यादिना प्रतिषेधति। धर्माधर्मावदृष्टं। आदिशब्दात् स्वर्गादिसाधकत्वेष्**वतीन्द्रियेषु** प्रत्यक्षादि**प्रमाणान्तरावृत्तेः**। न वेदार्थे कस्यचित् प्रमाणसम्वादि वचनं। यस्मात् **तदसम्भवादेव हि**। अत्यन्तपरोक्षे प्रत्यक्षादिप्रमाणस्यासम्भवादेव हि। **त[2]त्प्रतीत्यर्थं**न्तस्यातीन्द्रियस्य प्रतीत्यर्थ**मागमः उपयाच्यते** प्रार्थ्यते। **अन्यथे**ति यद्यागमगम्येप्यर्थे प्रमाणान्तरसम्वादादेवार्थनिश्चयस्तदा **सत्यपि तस्मि**न्नागमे तद्गम्येर्थे **यदि प्रमाणान्तरस्यावृत्तिः** स्यात् (।) तदा प्रमाणान्तरावृत्तावागमात् केवला**दप्रतिपत्तेः**। **ततश्चे**ति प्रमाणान्तरात्केवलादित्यागमरहितार्थ**प्रतिपत्तेरसा[3]धनमेवागमः स्यात्**। प्रमाणान्तरभावाभावाभ्यामेवार्थप्रतिपत्तेर्भावाभावात्। **केवला**दागमनिरपेक्षा**दन्यतोपि** प्रत्यक्षादेः प्रमाणा**दतीन्द्रियेर्थे प्रतिपत्तिः** किन्त्वागमसहितात् प्रत्यक्षादेरतीन्द्रियार्थ**प्रतिपत्तिरिति चेत्**।

**कथ**मिति सि द्धा न्त वा दी। **कथमतीन्द्रियश्च नाम** स्वर्गादिसिद्ध्युपायः **प्रत्यक्षादिविषयश्च** विरोधा[4]त्।

स्यान्मतं (।) नैवात्यन्तपरोक्षेर्थे प्रत्यक्षादीनां साधकत्वं किन्तु **ते पुनः** प्रत्यक्षादयः **स्वविषयेप्या**त्मीये विषयेप्या**गममपेक्ष्यैव साधकाश्चेत्** तथा चागमस्यैव प्रामाण्यमिति परो मन्यते।

**अनागमेत्यादि** सि द्धा न्त वा दी। नास्मिन्नागमोस्तीत्य**नागमोग्न्यादिप्रत्ययो धूमादे**र्लिङ्गा**न्न स्यात्**।

**प्रवृत्ते प्रमाणान्तरमन्विष्यते। किन्तु सैवागमस्य प्रवृत्तिर्न ज्ञायत इति चेत्। स्वयं प्रसाधने समर्थस्य[6] तदागमोपधानं कमतिशयं पुष्णाति। असमर्थन्तु आगम-**
527b **प्रवृत्तिमपि नैव साधयिष्यति। सा चातीन्द्रियेणार्थेन सम्बद्धा आगमप्रवृत्तिरती[7]-न्द्रिया कथमन्येन सिद्धा।**

**अन्यच्च एवं आगमलक्षणं स्यात। तथा हि।**

**यस्य प्रमाणसंवादि वचनं तत्कृतं वचः।**
**स आगम इति प्राप्तं निरर्थाऽपौरुषेयता ॥३१८॥**

**तुल्येऽपि आगमवादे प्रमाणबलादागमस्यापि क्वचिदर्थ आगमत्वे प्रमाण-संवादिवचनं आगमलक्षणं स्यात्। नापुरुषक्रिया। तस्याः सर्वार्थेषु तुल्यत्वे[2]ऽपि**

---

नेत्यादि परः। **न वै** आगमेतीन्द्रियेष्व[5]र्थेषु **प्रवृत्ते** प्रत्यक्षादिप्रमाणमागमवि-षये**न्विष्यते**। येनायन्दोषः। स्यात्।

ततश्च केवलात् प्रतिपत्तेरसाधनमेवागमः स्यादिति। **किन्तु सैवागमस्या-**तीन्द्रियेष्वपि **प्रवृत्तिर्न ज्ञायते**। तेनागमप्रवृत्तिः प्रत्यक्षादिकमपेक्षत **इति चेत्**।

**स्वय**मित्यादिप्रतिवचनन्तदास्य प्रत्यक्षादेः स्वयमतीन्द्रियार्थ**प्रसाधने सम-र्थस्य तदागमो**[6]**प**धानन्तस्यागमस्योपधानं सन्निधानं प्रत्यक्षादेः **कमतिशयं पुष्णाति** येनागमप्रवृत्तिमतीन्द्रियेर्थे ज्ञापयति।

अथातीन्द्रिये प्रत्यक्षाद्यसमर्थं (।) ततो **समर्थन्तु** प्रत्यक्षादि **आगमप्रवृत्ति-मपि नैव साधयिष्यति** यतो यथा स्वर्गादिसाधकमतीन्द्रियन्तथा **सा चातीन्द्रिये-**
207b **णार्थेन सम्बद्धा आगमप्रवृत्तिरतीन्द्रिया। कथम**[7]**न्येन** प्रत्यक्षादिना **सिद्धा**। नैव सिद्धा। येन तदर्थं प्रत्यक्षादिरन्विष्यत इति यत्किञ्चिदेतत्।

बहुष्वपि व्याख्यातृषु यः प्रमाणं प्रत्यक्षादिकं संस्यन्दयति तस्य भाषितं गृह्यत इति ब्रुवतो पौरुषेयत्वादागमलक्षणा**दन्यश्चैवमागमलक्षणं स्यात्**। एतदेवाह। **तथा ही**त्यादि। **यस्य** पुरुषस्य **वचनं प्रमाणसम्वादि। तत्कृत**न्तेन पुरुषेण संस्कृतं **वच**[1] आगम **इति प्राप्तं**। वचनस्य च संस्कारस्तदर्थस्य प्रमाणानुगृहीतत्वख्यापनं। इदन्तदन्यदागमलक्षणं। तथा च **निरर्था** व्यर्थाऽपौरुषेयता आगमलक्षणत्वेनेष्टा।

**तुल्ये**त्यादिना व्याचष्टे। यश्च प्रमाणसम्वादिवचनेन पुरुषेणार्थः कल्पितो यश्चेतरेण तयोरर्थयोस्तुल्येप्यपौरुषेयत्वा**गमवादे** सति **प्रमाणबलादागमस्यापौ**[2]-रुषेयस्यापि **क्वचिदर्थे** प्रमाणसम्वादिन्या**गमत्व** इष्यमाणेऽग्निहोत्रादिवाक्यानां **प्रमाणसम्वाद आगमलक्षणं स्यात्। नापुरुषक्रिया**। अपौरुषेयत्वमागमलक्षणं **न स्यात्**। किङ्कारणं (।) **तस्या** अपुरुषक्रियाया अभिमताऽनभिमतेषु पुरुषोप-दिष्टेषु **सर्वार्थेषु तुल्यत्वेपि प्रमाणेनाबाधनात् प्रतिपत्तेरिष्टत्वात्**।

**प्रमाणेनाबाधनात् प्रतिपत्तेः। तद्भावेऽपि अन्यत्रान्यप्रमाणसंवादिनि अनिष्टत्वात्।**

**अपि च।**

**यद्यत्यन्तपरोक्षेऽर्थेऽनागमज्ञानसम्भवः।**[3]
**अतीन्द्रियार्थवित्कश्चिदस्तीत्यभिमतं भवेत् ॥३१९॥**

**यदि पुरुषस्य परोक्षेऽर्थे आगमानपेक्षं ज्ञानयाथातथ्यं इष्यते, तदा**[4] **पुरुषाः संति अतीन्द्रियार्थदृश इतीष्टं स्यात्। प्रत्यक्षपूर्वकाणां प्रमाणस्यातद्दर्शनेऽसम्भवात् प्रत्यक्षावृत्तेः। तेषु प्रमाणान्तरासम्भवेऽतदालम्बन**[5]**प्रतीतय आगमः प्रमाणम्। प्रमाणान्तरस्य वृत्तिः प्रत्यक्षमन्वाकर्षतीति पुरुषातिशयोऽनिवार्यः स्यात्। तस्मान्नास्त्यतीन्द्रिये प्रमाणान्तर**[6]**वृत्तिः। अत एव आगमस्यार्थविशेषे**[1] **वृत्त्यपरिज्ञानात्। अयं जैमिनिरन्यो वा।**

---

एतदुक्तम्भवति।[3] प्रमाणसम्वादित्वेनागमार्थप्रतिपत्तेरिष्टत्वादित्यर्थः। **तद्भावे**प्यपौरुषेयत्वभावेपि तुल्ये**न्यत्राप्रमाणसम्वादि**न्यर्थे प्रतिपत्तेरनिष्ठत्वात् प्रमाणसम्वादो वचनानामागमलक्षणं स्यात्।

**यदि** चा**त्यन्तपरोक्षेर्थेऽनागमज्ञानसम्भव** आगमनिरपेक्षस्य ज्ञानस्य सम्भवः। तदा**तीन्द्रियार्थवित् कश्चिदस्तीति** स्व**मभिमतम्भवे**[4]**त्**।

**यदि पुरुषस्य** जै मि न्या देवेदार्थमाख्यातुः **परोक्षेर्थे** स्वर्गादिसाधनोपाये **आगमानपेक्षं ज्ञानयाथातथ्यं** ज्ञानस्यावैपरीत्य**मिष्यते**। तदा जै मि न्यादिवदन्येपि **पुरुषाः** सं**त्यतीन्द्रियार्थदृश इतीष्टं स्यात्**।

स्यादेतत् (।) नातीन्द्रियमर्थं प्रत्यक्षतो जानात्यपि त्वनुमानेन ज्ञात्वोपदिशतीति (।)

तन्न। यतः (।) **प्रत्यक्षपूर्वकाणा**मनुमानादीना**म**[5]**सम्भवात्**। कदाऽ**तद्दर्शने** तेन प्रत्यक्षेणातीन्द्रियस्यादर्शने (।) **प्रत्यक्षे**त्यादिनैतदेव स्पष्टयति। तेष्वतीन्द्रियेष्वर्थेषु **प्रत्यक्षावृत्तेः** कारणात् प्रत्यक्षपूर्वकाणां **प्रमाणान्तरा**णा**मसम्भवात्**।

अतदालम्बनं प्रतीयत इति तस्य प्रत्यक्षादेरालम्बनम्विषयः। न तदालम्बन**मतदालम्बनं** प्रत्यक्षाद्यविषयन्तस्य **प्रतीयते** निश्चयार्थमाग[6]मोन्विष्यत इत्यध्याहारः। **प्रमाणान्तरस्य** त्वनुमानादेरतीन्द्रियेर्थे **वृत्तिः प्रत्यक्षम**तीन्द्रियविषय**मन्वाकर्षति** साधयति। प्रत्यक्षपूर्वकत्वादनुमानादेः। **इति** हेतोः **पुरुषातिशयो**तीन्द्रियाणामर्थानां द्रष्टा मी मां स कै **रनिवार्यः स्यात्**। निवारितश्चै। **तस्मान्नास्त्यतीन्द्रियेर्थे प्रमाणान्तरवृत्तिः**।

**अत एवे**ति प्रमा[7]णान्तरावृत्तेरेवागमस्य वेदस्या**तीन्द्रिये** स्वर्गादिसाधनत्वलक्षणे**र्थविशेषे** या **वृत्ति**स्तस्या अनिश्चयात्। **अयं जै मि नि रन्यो वा** श ब र स्वा 208a

---

[1] Bar-la-? Khyad-par-la.

528a **स्वयं रागादिमान्नार्थं वेत्ति वेदस्य नान्यतः ।**[7]
**न वेदयति वेदोपि वेदार्थस्य कुतो गतिः ।।३२०।।**

**सर्व एव हि वक्ता पुरुषोऽनतिक्रान्तदोषभ्रान्तिस्तमतीन्द्रियार्थविशेषप्रति**[1]**नियमं न वेत्ति स्वयं, नाप्येनं अन्यो वेदयति तस्यापि तुल्यप्रसंगतः । न हि अन्धेन आकृष्यमाणोऽन्धः पन्थानं प्रति**[2]**पद्यते । नापि स्वयं वेदः स्वार्थं विवृणोति**[1] **उपदेशवैयर्थ्यप्रसंगात् ।**

**तद् (अयं) अपरिज्ञातार्थ**[3]**शब्दगडुः, एवं शल्यभूतोऽसद्दर्शनस्नायूपनिबद्धो दुरुद्धरः दुःखमासादयति ।**

**तेनाग्निहोत्रं जुहुयात्**[4] **स्वर्गकाम इति श्रुतौ ।**
**खादेच्छ्ववमांसमित्येष नार्थ इत्यत्र का प्रमा ।।३२१।।**

**क्वचिदपि अर्थे प्रत्यासत्तिरहितस्य "अग्निहोत्रं जुहुयात् स्वर्गकाम" इत्यादेः**[5]

---

म्यादिः पुरुषः। **स्वयमिति** परोपदेशनिरपेक्षः। वेदस्यार्थं **न वेत्ति। रागादिमान्** यतः। रागादिमत्त्वमपरिज्ञानकारणं। **अन्यतोपि न** वेत्ति वेदस्यार्थन्तस्याप्यस्य पुरुषस्य रागादिमत्त्वात्। **वेदोपि** स्वयमर्थं **न वेदयति**[1] न प्रकाशयति। तेन **वेदार्थस्य कुतो गतिः**। नैव गतिरस्ति। यस्मात् **सर्व एव हि पुरुषोनतिक्रान्तो** रागादि**दोषकृतो** विप्लवो **भ्रान्तिर्यस्येति** विग्रहः। तमिति वेदस्या**तीन्द्रियार्थप्रतिनियम**मयमेवास्यार्थो नायमित्येवं **न वेत्ति स्वयं। नाप्येनं** रागादिमन्तं पुरुष**मन्यः** पुरुषो **वेदयति तस्याप्यन्यस्य** तुल्यप्रसंगतः। रागादिमत्त्वेन तस्याप्यज्ञत्वादित्यर्थः।[2] यतो **न ह्यन्धेन** स्वयममार्गज्ञेना**कृष्यमाणोऽन्धः पन्थानं प्रतिपद्यते। नापि स्वयमु**पदेशनिरपेक्षो **वेदः स्वार्थं प्रकाशयति**। कुतः (।) **उपदेशवैयर्थ्यप्रसंगात्**। जै मिन्या दि व्याख्यानस्य निष्फलत्वप्रसंगात्।

**तत्त**स्मा**दयमपरिज्ञातार्थो** वेदाख्यः **शब्दगडुः**। घाटामस्तकयोर्मध्ये मांसपिण्डो गडुरुच्यते निष्फलत्वात्। तद्वद्वैदिकोपि शब्दोऽपरिज्ञाता[3]र्थत्वेन निष्फलत्वात्। गडुरिव गडुः। **एवमिति** किमस्यायमर्थोथवायमिति संशयात् तदभिप्रसन्नस्य **शल्यभूतो** दुःखहेतुरतस्तमंगीकृतवेदम्पुरुषं **दुःखमासादयति** स्थापयति। कीदृशो**ऽसद्दर्शन**मेव **स्नायुः** शिरा। तेनो**पनिबद्ध**स्तत एव केनचित् कारुणिकेनाप्यपनेतुमिच्छता **दुरुद्धर** इत्युपहसति।

**तेने**त्यपरिज्ञातार्थत्वेना**ग्निहोत्रञ्जु**[4]**हुयात् स्वर्गकाम इति श्रुतौ** वेदवाक्ये **खादेच्छ्ववमांसमित्येष नार्थः** किन्त्वन्योभिमतोर्थ **इत्यत्र का प्रमा**। नैव किञ्चित् प्रमाणं।

---

[1] Rnam-par-ḥgrel-par-byed-pa.

**भूतविशेषे यथाभिमतं घृतादि प्रक्षिपेदित्यर्थे खादेच्छ्वमांसं इत्यस्य नातिशयं पश्यामः। परोक्षदैशिकानि वचनानि यथाभिप्रायं[6] तथाऽस्माभिः प्रतिपद्यते, आहोस्विद् विपर्ययमिति।**

**नायं सर्वत्र तुल्यः प्रसंगः स्यात्। उपदेष्टुः स्वयं अभिप्रायप्रकाशेनन[7] सदुपदेशसम्भवात्। न ह्ययं शब्दानामदैशिकानां सम्भवति।** 528b

**लोकप्रत्यायनाभिप्रायश्च ब्रुवाणो लोकसंकेतप्रसिद्धिं अनुपालयति[1]। ततोऽपि तत्प्रतीतिः स्यात्। नापौरुषेयाणां शब्दानाम्। तत्र कस्यचिद् विवक्षाया अभावात्।**

---

**क्वचिदि**त्यादिना व्याचष्टे। "**अग्निहोत्रं जुहुयात् स्वर्गकाम**" इत्यादि **वाक्यस्य** क्वचिदपि वाच्यत्वेनाभिमतेर्थे **प्रत्यासत्तिरहितस्या**नभिमतेर्थे विप्रकर्षरहितस्य वास्तवस्य सम्बन्धस्य निराकरणादुभयाभावः। **भूतविशेषे**ग्नौ **य**[5]**थाभिमत**मिति मन्त्रादिपूतं **घृतादि प्रक्षिपेदित्ययमर्थो** न पुनः **श्वमांसं खादे**दित्ययमर्थ इति **नातिशयम्पश्यामः।**

नन्वयं यथोक्तः। सर्वत्र पौरुषेयेप्यागमे समानः प्रसङ्गः। तमेव दर्शयन्नाह। **परोक्षो दैशि**को वक्ता। येषाम्वचनानामागमानान्तानि तथोक्तानि। तेषामर्थं यथाभिप्रायमिति यथा दैशिकाभिमतः। इदानीन्तना अ[6]दृष्टदैशिकाः पुरुषाः समनुयन्त्यवगच्छन्त्याऽहो**स्विद् विपर्यय**न्दैशिकाभिप्रायविपरीत**मिति** नियमाभावात् सर्वत्र संशय इति मन्यते।

**ने**त्यादिना परिहरति। **नायं सर्वत्र प्रसंगः। उपदेष्टु**रागमस्य प्रणेतु**रभिप्रायप्रकाश**नेनेति प्रथमं प्रकाशयतानेन स्वाभिप्रायस्तत्कालसन्निहितेभ्यः श्रोतृभ्यः कथितोस्य वचनस्यायमर्थं इति।[7] तेपि श्रोतारोन्येभ्यः प्रकाशयन्ति तेप्यन्येभ्य इत्याचार्योपदेशे पारम्पर्यस्य **सम्भवात्। न ह्ययम**भिप्रायकथनलक्षणो वैदिकानां **शब्दानामदैशिकाना**मित्यपौरुषेयाणां **सम्भवति** दैशिकस्याभावात्। 208b

**इतश्च** पौरुषेयेषु यथा प्रसिद्धार्थसम्भवो यस्मादागमस्य प्रणेता लोको मया बोधनीय इति **लोकप्रत्यायनाभिप्रायश्च ब्रुवाणो लोके** यस्मिन्नर्थे शब्द[1]स्य **संकेत**स्तस्य **प्रसिद्धिमनुपालयति** रक्षत्यन्यथा विफलन्तस्य प्रकाशनं स्यात्। **ततोपि** लोकप्रसिद्धसंकेतानुपालनादपि **तदर्थ**सिद्धिः **स्यात्।** पुरुषप्रणीतस्यागमस्यार्थसिद्धिः स्यात्। अपिशब्दात् पूर्वोक्ताच्च सम्प्रदायसम्भवात्। **नापौरुषेयाणां शब्दानां** यथोक्तेन प्रकारेणार्थसिद्धिः। किं कारणं। **तत्र** वैदिकेषु शब्देषु **कस्यचित्** पुंसः समीहाभ(ा)[2]वात्। वचनहेतो**र्विवक्षाया अभावात्।** एवन्तावत् संप्रदायादिसम्भवेन पौरुषेयस्यागमस्यार्थपरिज्ञानसम्भवात् तुल्यप्रसंगता नास्तीत्यु**क्तम्** (।)

**अपि च न्यायमेव अनुपालयन्तः पंडिता हेयोपादेय[2]साश्रयार्थे प्रवर्त्तन्ते। न प्रवादमात्रेणेति न समानः प्रसंगः। तच्च यथावसरं प्रतिपादयिष्यामः।**

**ननु यो लोकसन्निवेशादिरयुक्तिविषयो[3]ऽप्यर्थः सम्भवनीयपुरुषवचनात् प्रतिपद्यते।**

**न। अप्रत्ययात्। न हि क्वचित् असन्देहात् सर्वत्र तथा स्यात्। सन्देह-**

---

अधुना न्यायानुसारेणैव पौरुषेयाणामर्थनिश्चयो भवतीत्याह। **अपि चे**त्यादि। **न्यायमेव** युक्तिमेवा**नुपालयन्तः पण्डिताः** प्रेक्षापूर्वकारिणो बौद्धा हेयादिषु संघटन्ते। हेयस्य साश्रयस्य त्या[3]गाय। **उपा**देयस्य साश्रयस्योपादानाय **प्रवर्त्तन्ते**। तत्र हेयं दुःखमुपादेयो मोक्षः। तयोराश्रयो यथासंख्यं कर्मक्लेशास्तत्त्वज्ञानञ्च।

एतदुक्तम्भवति (।) अनेकार्थत्वसम्भवेपि शब्दानां युक्तियुक्तं पुरुषार्थोपयोगिनमेवागमार्थन्निश्चिन्वन्ति सौगता न परोपदेशमात्रेण (।) ततोयमदोष इति (।)

तदेवाह (।) **न प्रवादमात्रेणेति**। न बृद्धानां प्रवाद[4]मात्रेणेति **न समानः प्रसंगः। तच्च** न्यायानुपालनपूर्वकमेवागमे प्रवर्त्तनं **यथाऽवसरं प्रतिपादयिष्यामः** पश्चात्।

यदि न्यायानुपालनेनागमार्थनिश्चयोऽत्यन्तपरोक्षे तर्ह्यागमार्थे निश्चयोन स्यादित्याह। **नन्वि**त्यादि। **लोकसन्निवेशादि**रिति भाजनलोकस्य पृथिव्यादेः सन्निवेशादिः। यथोक्तं (।)

> "तत्र भाजनलोकस्य सन्निवेशमुशन्त्यधः।[5]
> लक्षषोडशकोद्वेधमसंख्यम्वायुमण्डलमि"त्यादि।[1]

आदिशब्दात्। दानहिंसादिचेतनानामिष्टानिष्टफलदानादि।

देशस्वभावादिविप्रकृष्टत्वादयु**क्तिविषयोऽप्यर्थः** प्रतिपद्यते भवद्भिर्बौद्धैः (।) कुतः (।) **सम्भवनीयपुरुषवचनात्**। यस्य प्रत्यक्षानुमानगम्येर्थे वचनमविसम्वादि। तस्य तृतीयस्थाने वचनं सत्यार्थत्वेन सम्भाव्यते। तस्मात्[6]सम्भावनीयात् पुरुषवचनादर्थः प्रतिपद्यते। तथा च न न्यायानुपालनपूर्विकाऽगमार्थे प्रवृत्तिरिति समान एव प्रसंग इति मन्यते।

**ने**त्यादिना परिहरति। नात्यन्तपरोक्षोर्थः पुरुषवचनात् प्रतिपद्यते। किं कारणम् (।) **अप्रत्ययात्** तद्विषयप्रमाणाभावेनानिश्चयात्। प्रत्यक्षादिविषये सम्वादा-

209a दत्यन्तपरोक्षेपि सम्वादो निश्चीयत इत्यपि[7] मिथ्या यतो **न हि क्वचित्** प्रत्यक्षा-

---

[1] Abhidharmakośa, ch.3

**दर्शनात् तत्प्र[4]वृत्तेः संवादेन व्याप्त्या सिद्धेश्च। इदमागमलक्षणमगत्या दृष्टमिति नातो निश्चयः। तत् न प्रमाणमागम इत्युक्तं (प्राक्)।**

**अपौरुषेयाणां[5] शब्दानामर्थज्ञानं न संप्रदायात्, न युक्तेः, नापि लोकात्। न हि तत्राप्रतिपत्तिः न्याय्या। स चेत् प्रसिद्धो लोकवादः प्रतीतिहेतुः।**

**प्रसिद्धो लोकवादश्चेत्,**

**तत्प्रतीतिहेतुः।)**[1]

**तत्र कोतीन्द्रियार्थदृक्।** 36a

**अनेकार्थेषु शब्देषु येनार्थोयं विवेचितः ॥३२२॥**

**न ह्ययं लोकव्यवहारोऽपौरुषेयाच्छब्दार्थसम्बन्धात्। किन्तर्हि (।) समयात्**

---

दिविषये प्रमाणसम्वादादस्खलितो दृष्ट इति कृत्वा **सर्वन्तदुपदिष्टमयुक्तिगम्यमपि तथा भवति**। किं कारणं (।) **तत्प्रवृत्ते**रित्यादि। तस्य पुरुषातिशयस्य वचन**प्रवृत्तेरविसम्वादेन व्याप्त्या सिद्धे**र्विपर्यये बाधकप्रमाणाभावात्। ननु भवतापि(।)

"प्रत्यक्षेणानुमानेन द्विविधेनाप्यबाधनम्" (।१।२१८) इत्यादिनैकदेशाविसम्वा[1]**दनमागमलक्षणमिष्टमिति** (।)

अत आह। **अगत्या** चेत्यादि। प्रमाणगम्यार्थाविसम्वादेनात्यन्तपरोक्षेप्यविसम्वादिवचनमिती**दमागमलक्षणमगत्ये**ष्टमागमात् प्रवृत्तौ वरमेवं प्रवृत्त **इति**। **नातो** यथोक्तादागमादतीन्द्रियार्थ**निश्चय**स्तस्याप्रामाण्यात्। **तदिति** तस्मान्न **प्रमाणमागम इत्युक्तं प्राक्**।

तदेव**मपौरुषेयाणां शब्दानामर्थज्ञानन्ना**चा[2]र्य**संप्रदायात्**। दैशिकस्याभावात्। **न युक्ते**स्सकाशादत्यन्तपरोक्षेर्थे प्रमाणाप्रवृत्तेः। **नापि लोका**दर्थप्रतीतिर्लोकप्रत्यायनाय प्रयोगाभावेन लोकसंकेतानुसरणायोगादिति। **तत्रा**पौरुषेयेषु शब्देष्वर्थानाम**प्रतिपत्तिरेव** न्याय्या। तत्रापि वैदिके शब्दे **प्रसिद्धो लोकवादो** यथा ग्न्यादि शब्दाद् दाहपाकादिसमर्थेर्थे प्रवर्त्तन्त इत्यादि।[3]

यो **लोकव्यवहारस्स** चेद् वेदार्थ**प्रतिपत्तिहेतुः**।

उत्तरमाह। **तत्रे**त्यादि। **तत्र** लोकेऽविद्यात्वे कः पुरुषो**तीन्द्रियार्थ**दृक्। येनातीन्द्रियार्थदृशाऽनेकार्थेषु शब्देष्वेकार्थप्रतिनियमाभावादाशंक्यमानार्थविशेषेषु वैदिके**ष्वर्थोय**मतीन्द्रियो **विवेचितो** विभक्तोयमेवास्यार्थो नायमिति (।) नैव तादृशः कश्चिदस्ति।

**न ही**त्यादिना व्याचष्टे। **न ह्ययं लोकव्य**[1]**वहारोपौरुषेया**दकृतका**च्छ-**

---

[1] Restored.

**स्वशास्त्रकारसमयात् पा णि नी यादिव्यवहारवत्। उपदेशापेक्षणात्। न ह्यपौरुषेये तस्मिन्नुपदेशो युक्तस्तस्य केनचिदज्ञानात्। अतीन्द्रियत्वात्। ऐन्द्रियत्वे स्वयं प्रतिपत्तिप्रसंगाद् रूपादिवत्। उपदेशे च पुरुषाणां स्वतन्त्र[1](ा)णां यथातत्त्वमुपदेशेनाविसंवादस्यासिद्धेरनाश्वासः।**

**वेदवत् तद्व्याख्यानमपौरुषेयं संप्रदायाविच्छेदागतं ततोर्थसिद्धिरिति चेत्। न (।) तस्यापि शब्दात्मकत्वे तुल्यः पर्यनुयोगः (।) कथमस्यार्थो विदित इति। पुरुषो हि स्वयं समितानां शब्दानामर्थं शृंगग्राहिकयापि तावदबुधं बोधयेदित्यस्ति**

---

**ब्दार्थसम्बन्धाद्** भवति (।) **किन्तर्हि** (।) अभिप्रायकथनलक्षणात् **समयात्**। किमिव (।) **स्वशास्त्रकारे**त्यादि। **स्वशास्त्रकारा**णां पा णि नि प्रभृतीनां **समयात्** संकेतात्। तत्समयानुसारिणां **पा णि नी या दीनां** वृद्धिगुणसंज्ञादि**व्यवहारवत्** किं कारणम् (।) **उपदेशापेक्षणात्**।

यदि हि लौकिकोपि व्यवहारो निसर्गसिद्धः स्यात् तदा प[5]रोपदेशन्नापेक्षेत। न च यथा सामयिकात् सम्बन्धादुपदेशापेक्षादर्थप्रतीतिस्तथाऽपौरुषेयादपि सम्बन्धादुपदेशापेक्षादेव वेदार्थप्रतीतिः (।) यतो **न ह्यपौरुषेये तस्मिन्** वैदिके शब्दार्थसम्बन्धे प**रोपदेशो युक्तः**। किङ्कारणं (।) **तस्य** वेदार्थस्य **केनचिदपि** पुरुषेणाज्ञानादज्ञानां च वेदार्थस्या**तीन्द्रियत्वात्**। तदुक्तं।

"श्रेयः साधनता ह्येषान्नि[6]त्यम्वेदात् प्रतीयते।
ताद्रूप्येण च धर्मत्वन्तस्मान्नेन्द्रियगोचरः। (श्लो० चो० १४)
श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः।
चोदनालक्षणैः साध्या तस्मात्तेष्वेव धर्मते"ति। ( ,, १९१ )

**ऐन्द्रियकत्वे** तु वेदार्थस्याभ्युपगम्यमाने **स्वयमु**पदेशमन्तरेण वेदार्थस्य **प्रतीति-**
209b **प्रसङ्गात्**। **रूपादिवत्**। यथा रूपादीनामैन्द्रियकत्वादुपदेशमन्तरेण प्रतीतिस्तद्वत्।[7]

अथातीन्द्रियेपि वेदार्थे निश्चयार्थमुपदेशोऽभ्युपगम्यते। **तदोपदेशे च**। वेदार्थोपदेष्टृणां **पुंसां स्वतन्त्राणा**मिति रागाद्यभिभवेन सम्यग्ज्ञानाभावाद् यथेच्छं प्रवृत्तानां **यथातत्त्वमुपदेशेनाविसम्वादस्यासिद्धेरनाश्वासो** न निश्चयो वेदार्थे। न ह्यज्ञा यथातत्त्वमुपदेष्टुं समर्था इति। न पुरुषाः स्वेच्छयोपदिशन्ति।

किन्तु **वेदवद् वेदव्याख्यानमप्यपौरु[1]षे**यमुपदेशपरम्परायातलक्षणात् **संप्रदाया-विच्छेदादागतं**। ततो यथोक्ताद् वेदव्याख्यानाद् वेदार्थसिद्धि**रिति चेद्**।(।)

उत्तरमाह। **तस्यापी**त्यादि। **तस्यापि** वेदव्याख्यानस्य **शब्दात्मकत्वे** शब्दस्वभावत्वे वेदेन **तुल्यः पर्यनुयोगः**। **कथमस्या**पौरुषेयस्य वेदव्याख्यान**स्यार्थो विदित इति** कुतोस्माद् वेदार्थनिश्चयः। पौरुषेये त्वागमे नायन्दोषो[2] यतः **पुरुषो हि**

**पौरुषेयाणामर्थगतावुपायः। अपौरुषेयस्तु शब्दो[2] नैवं करोति (।) न चास्य कश्चित् क्वचित् सम्बन्धनियमं ज्ञातुमीश इत्यप्रतिपत्तिरेव तदर्थस्य।**

**अपि च (।) वेदस्तद्व्याख्यानं वा पुरुषेण पुरुषायोपदिश्यमानमनष्टसम्प्रदायमेवानुवर्त्तेत इत्यत्रापि समयः स (?श) रणं। आगमभ्रंशकारिणामाहोपुरुषिकया तद्दर्शनविद्वेषेण वा तत्प्रतिपन्नखलीकरणाय धूर्तव्यसनेन[3] अन्यतो वा कुतश्चित् कारणादन्यथारचनासम्भवात्।**

**अपि चात्र भवान् स्वमेव मुखवर्ण्णं स्ववादानुरागान्नूनं विस्मृतवान्। "पुरुषो रागादिभिरुपप्लुतोऽनृतमपि ब्रूयादिति नास्य वचनं प्रमाणमि"ति। तदिहापि किन्न प्रत्यवेक्ष्यते संभवति न वेति। स एवोपदिस (?श)न्नुपप्लवात् वेदं वेदार्थं**

---

**स्वयं समितानां** संकेतितानां **शब्दानामर्थं शृङ्गग्राहिकयापी**त्यस्य शब्दस्यायमर्थ इत्यनेन **तावदबुधमज्ञं** पुरुषं **बोधयेदित्यस्ति पौरुषेयाणां** शब्दाना**मर्थगताव**र्थज्ञाने **उपायो** नापौरुषेयाणां। तथा **ह्यपौरुषेयस्तु शब्दो नैवं करोति** यथायं ममार्थो रागादिमता ग्राह्य इति। **न चास्या**पौरुषेयस्य शब्दस्य **कश्चि** ज्जै मिन्या[3]दी रागादिमान् **क्वचिद**तीन्द्रियेर्थे **सम्बन्धनियमं ज्ञातुमीशः** शक्त **इति। अप्रतिपत्तिरेव तदर्थस्य** वेदार्थस्य।

**अपि च** (।) भवतु नामापौरुषेयो **वेदस्तद्व्याख्यान**ञ्च तथापि रागादिमता **पुरुषेण पुरुषायोपदिश्यमानमनष्टसंप्रदायमे**वाद्यत्वे**प्यनुवर्त्तेत इति (अत्रापि)** प्रमाणाभावात् **समयः** शपथादिः **शरणं। आगमभ्रंशकारिणा**मित्यादिना संप्र[4]दायविच्छेदेन रचनान्तरसम्भवमेव समर्थयते। आगमभ्रंशकारिणां पुंसामन्यथा। पूर्वरचनावैपरीत्येन रचनादर्शनादिति सम्बन्धः। अन्यथा रचनायां कारणमाह। आहोपुरुषिकयेत्यादि। **आहोपुरुषिक**येत्यहंमानित्वेन। यथा सां ख्य नाशकमा ध वे न सांख्यसिद्धान्तस्यान्यथा रचनं कृतं। **तद्दर्शनविद्वेषेण** वान्यथा रचनासम्भवात्।[5] यथा म हा या न विद्विष्टानां महायानप्रतिरूपकसूत्रान्तररचनं। तत्प्रतिपन्नखलीकरणायेति। **तस्मिन्** दर्शने यः **प्रतिपन्नः** पुरुषस्तस्य **खलीकारायान्यथारचनासम्भवः**। तत्प्रतिपन्नखलीकार एव कथं। **धूर्तव्यसनेन**। व्यसनमिदन्धूर्त्तानां यत्परः खलीकर्तव्य इति। **अन्यतो वा कुत**श्चिल्लाभादिकात्।

**अपि चात्र** वेदार्थनिर्णये। **भवा**[6]**न्** वे द वा दी। **स्ववादानुरागात्कारणात्। स्वमेव मुखवर्ण्णं**। मुखं वर्ण्णयति शोभयतीति मुखवर्ण्णः। स्वाभ्युपगमस्तं **नूनम्विस्मृतवान्**। येन रागादिमलिनेभ्यः पुरुषेभ्यो वेदार्थनिर्ण्णयः प्रार्थ्यते।

**पुरुष** इत्यादिना मुखवर्ण्णमाचष्टे। यस्मात् **पुरुषो रागादिभिरुपप्लुतो** विपर्यस्तो**ऽनृतमपि ब्रूयादिति** कृत्वा **नास्य** पुरुषस्य **वच**[7]**नम्प्रमाणमिति** (।) 210a.

**वान्यथाप्युपदिशेदिति।**[4] **श्रूयन्ते हि कैश्चित् पुरुषैरुत्सन्नोद्धृतानि शाखान्तराणि। इदानीमपि कानिचिद् विरलान (?)ध्येतृकाणि। तद्वत्प्रचुराध्येतृकाणामपि कस्मिंश्चित् काले कथंचित् संहारसंभवात्। पुनः संभावितपुरुषप्रत्ययात् प्रचुरतोपगमनसंभावनासम्भवाच्च। तेषाञ्च पुनः प्रतानयितॄणां पुरुषाणां कदाचिदधीतविस्मृताध्य**[5]**यनानां अन्येषां सम्भावनाभ्रंशभयादिनाऽन्यथोपदेशसम्भवात्। तत्प्रत्ययाच्च तद्भक्तानामविचारेण प्रतिपत्तेः वहुष्वप्यधे (?ध्ये)**

---

**तदनृतवादित्वमिहापि** वेदार्थसम्प्रदायानुक्रमे। जै मि न्यादिना पुरुषेण क्रियमाणे **किन्न प्रत्यवेक्षते सम्भवति न वेति**। यस्मात् **स एव** पुरुषो रागादिमान् जै मि निप्रभृति**र्वेदम्वेदार्थम्वोपदिशन्** रागा**द्युपप्लवात्** कारणाद**न्यथाप्युपदिशेदिति** मिथ्यार्थाशंका **नैव** निवार्यते।

आशंकाकारणान्येव दर्शयन्नाह। **श्रूयन्ते ही**त्यादि [1]**कैश्चित् पुरुषैर्या** ज्ञ व ल्क्य प्रभृतिभि**रुत्सन्नोद्धृतानि**। उत्सन्नान्यन्तरितानि सन्ति वेदस्य **शाखान्तराणि**। उद्धृतानि स्मृत्वा स्मृत्वा पुनरारचितानि। तानि च यथातत्त्वं स्मृत्वोद्धृतानीति किमत्र प्रमाणं। **इदानीमपि कानिचिद्** आ हू र क प्रभृतीनि शाखान्तराणि **विरलाध्येतृका**णि। स्वल्पाध्येतृका**नि** (?णि) दृश्यन्ते। ते कतिपयाध्येतारो न समारोप्योपदिशन्ती[2]ति किमत्र प्रमाणं। यथा विरलाध्येतृकाणि शाखान्तराणि दृश्यन्ते। **तद्वत् प्रचुराध्येतृकाणामपि** बहुतराध्येतृकाणामपि शाखान्तराणां **कस्मिंश्चि**दित्यतिक्रान्ते **काले संसारसम्भवात्**। अल्पाध्येतृकत्वसम्भावनासम्भवात्। तेषां प्रागपि प्रचुराध्येतृकत्वे प्रमाणाभावात्। इदानीर्न्तीह कथं प्रचुराध्येतृकाणि तानीत्यत आह। **पुन**रित्यादि।[3] **पुनः** कालान्तरेणाप्तत्वेन **सम्भावितस्य पुरुषस्य प्रत्ययात्** प्रामाण्यात् तदन्यासम्भावितपुरुषाध्ययनवैपरीत्येन संहृतानामध्येतॄणां **प्रचुरतोपगमन**स्य बाहुल्योपगमनस्य या **सम्भावना** तस्याः **सम्भवा**दनिश्चयः।

किञ्च। ये ते पुरुषा विरलीभूताः शाखान्तराणां प्रतानयितारस्**तेषां प्रतानयितॄणामन्यथोप**[4]**देशसम्भवा**दिति सम्बन्धः। तथा चानाश्वास इत्यभिप्रायः। कीदृशानां प्रतानयितॄणां **कदाचिदधीतविस्मृताध्ययनानां**। अधीतं सद् विस्मृतमध्ययनं यैस्ते तथोक्ताः। यथाधीतं विस्मृतास्सन्तस्तेऽन्यथापि प्रतानयेयुरित्यर्थः। केन कारणेनेत्याह। **अन्येषा**न्तदभिप्रसन्नानामध्येतॄणान्तस्मिन्नध्यापयितरि। या महत्व**सम्भाव**[5]**ना**। तस्या **भ्रंशभयात्**। यद्यहमन्यथापि नोपदिशेयं। **नूनमेते मय्याप्तसम्भावनां** जहा (? जह)तीति। आदिशब्दादाहोपुरुषादिकात् **अन्यथोपदेशसम्भवः**।

**तृषु सम्भावितात् पुरुषाद् बहुलं प्रतिपत्तिदर्शनात्। ततोपि कथंचिद् विप्रलम्भसम्भवात्।**

**किञ्च (।) परिमितव्याख्यातृपुरुषपरम्परामेव चात्र भवतामपि शृणुमः। तत्र क[6]श्चित् द्विष्टाज्ञधूर्त्तानामन्यतमः स्यादपीति अनाश्वासः।**

**तस्मान्नापौरुषेयाद् व्याख्यानान्नापि सामयिकाल्लोकव्यवहाराद् वेदार्थसिद्धिः।**

**असामयिकत्वेपि नानार्थानां शब्दानां व्यवहारे दर्शनात्। कस्यचिदप्रसिद्धार्थस्याप्रसिद्धस्य वा पुनर्व्युत्पत्तिदर्शनेन सर्वत्र तदासं(?शं)काऽविनिवृत्तेः (।)**

**सर्व्वेषां यथार्थनियोगेप्यवैगुण्येन यथासम[7]म(?)यं प्रतीतिजननात्। इष्टा-**

---

प्रतानयन्तु नाम तेऽन्यथा। तथाप्यध्येतारो न तथा प्रतिपद्येरन्नित्याह। **तदि**त्यादि। **तस्य** सम्भावितस्य पुरुषस्य **प्रत्ययाच्च** तदुक्तानां। सम्भावितप्रणेतृ[6]पुरुषा**भिप्रसन्नानामविचारेण** वेदाध्ययन**प्रतिपत्ते**रन्यथासंप्रदायसम्भवः। पुरुषप्रामाण्यात् प्रवृत्तिमेव साधयन्नाह। **बहुष्वप्यध्येतृषु** मध्ये **सम्भावितात् पुरुषाद् बहुलं लोके प्रवृत्तिदर्शनात्।**

ननु सम्भावितात् प्रतिपत्तौ सम्वाद एवेत्यत आह। **ततोपि** सम्भावितात् पुरुषात् **कथञ्चित्** केनचित् कारणेन सम्भा[7]वना भ्रंशभयादिना। **विप्रलम्भस्य** विसम्वादस्य **सम्भवात्।** 210b

उपचयहेतुमाह। **किंचे**त्यादि। **परिमिताश्च** ते **व्याख्यातृपुरुषाश्च** तेषां **परम्परामेवात्र** वेदव्याख्याने **भवतां** मी मां स का नां **शृणुमः**। **तत्र** तेषु मध्ये **कश्चिद्** वेदस्य व्याख्याता **द्विष्टादीनामन्यतमः स्यात्।** कश्चिद् वेददर्शने विद्विष्टः सोन्यथाप्युपदिशेत्। तथा कश्चिदज्ञः[1] धूर्त्तो वा। तथा च वेदव्याख्याया**मनाश्वासः।**

यत एवन्**तस्मान्ना**पौरुषेयाद् वेद**व्याख्यानाद्** वेदार्थसिद्धिः। **नापि सामयिकात्** सांकेतिका**ल्लोकव्यवहाराद्वेदार्थसिद्धिः**। लोकस्य रागाद्युपप्लुतत्वात्।

भवन्तु वा निसर्गसिद्धा वैदिकाः शब्दास्समयनिरपेक्षाः। एवमप्य**सामयिकत्वे**भ्युपगम्यमाने। **व्यवहारे नानार्थानां** गवादि**शब्दानान्दर्श[2]नात्**। सर्वत्र वैदिकेपि शब्दे न तदाशंकाऽनिवृत्तेरिति सम्बन्धः। नानार्थाशंकाया अनिवृत्तेरित्यर्थः। लौकिकानामेव नानार्थत्वन्न वैदिकानामिति चेदाह। **कस्यचि**दित्यादि। तस्यापि वैदिकस्य **कस्यचिद प्रसिद्धार्थ**स्येति यत्र शब्दः प्रसिद्धो नार्थस्तस्या**प्रसिद्धस्य** वा स्वरूपेण शब्दस्य। **पुनर्व्युत्पत्तिप्रदर्शनेनार्थः** कल्पनीयः पुरुषैः। त[3]था च सति पुनः किं यथा स्थितमेवार्थं पुरुषो वैदिकानां शब्दानामुपदिशति किम्वाविपरीतमिति **सर्वत्र** नानार्था **शङ्काया अनिवृत्तेः।**

अनिष्टेर्थे प्रयुक्ता अपि वैदिकाश्शब्दा न तत्र प्रतीतिं जनयन्तीत्यप्ययुक्तं।

**निष्टयोरविशेषात्। अविशिष्टानां सर्व्वार्थेष्वेकमर्थमत्यक्षसंयोगमनत्यक्षदर्शिनि पुरुषसामान्ये को विवेचयेद् यतो लोकात्प्रतीतिः स्यात्।**

**अपि च। स्वयमप्ययं न सर्व्वत्र प्रसिद्धिमनुसरति।** [8] **यस्मात् (।)**

**स्वर्गोर्वश्यादिशब्दश्च दृष्टो रूढार्थवाचकः।**

**अनेनैव वर्ण्यमानः। मनुष्यातिशायिपुरुषनिकेतेतिमानुषसुखाधिष्ठानो नानोपकरणः स्वर्गः (।) तन्निवासिन्यप्सरसा (?ा) उर्वसी (?शी) नामेति लोकवादः (।) तमनादृत्यान्यामेवार्थकल्पनामयं कुर्वाणः शब्दान्तरेषु कथं प्रसिद्धिं प्रमाणयेत्।**

**तत्राविरोधादभ्युपगम इति चेत्। न। अत्राप्यतीन्द्रिये विरोधसिद्धेः।**

---

यतः **सर्वेषां** शब्दानां लौकिकानां वैदिकानां च **यथार्थन्नियोगेपि**। वीप्सायामव्ययीभावः। यस्मिन् यस्मिन्नर्थे नियोगस्संकेत[4]स्तस्मिन् सत्यै**प्यवैगुण्येन** तत्र तत्रार्थे **यथासमयं** यथासंकेतं **प्रतीतिजननात्**। न चानिष्टेन्यथाप्रतीतिजननं। यत **इष्टानिष्टयो**रर्थयोः प्रत्यासत्तिविप्रकर्षाभावेन प्रतीतजननस्या**विशेषात्**। ततश्चा**विशिष्टानां सर्वार्थेषु** वैदिकानां शब्दानामे**कमर्थं** किम्विशिष्ट**मत्यक्षसंयोगं**(।) शब्देन सह सम्बन्धो यस्य स[5] तथोक्तः। **अनत्यक्षदर्शिनि**। अर्वाग्दर्शिनि **पुरुषसामान्ये को विवेचये**त्(।) नैव कश्चिद् विवेचयेत्। **यतो लोकात् प्रतीतिः** स्यात्।

**अपि च**(।)अयं मी मां स कः **स्वयमपि न सर्वत्र** वेदे **प्रसिद्धिमनुसरति**। येन प्रसिद्धाल्लोकप्रवादाद् वेदार्थगतिः स्यात्। किं कारणं। **यस्मात् स्वर्गोर्वश्यादिशब्दश्च**। स्वर्गशब्द उर्वशी शब्दः। आदिशब्दान्न न्द न व ना[6] दि शब्दश्चा**रूढार्थ**स्याप्रसिद्धार्थस्य **वाचकोऽनेन** वेदवादिना **निर्वर्ण्यमानो** व्याख्यायमानो दृष्टः। तथा हि प्राकृत**पुरुषातिशायिनो** ये **पुरुषं** विशेषास्तेषां **निकेतः** स्थानं। मानुषातिक्रान्तं सुखमतिमानुषं तस्या**तिमानुषस्य सुखस्याधिष्ठान**माश्रयः। नाना-

2 I I a प्रकाराण्युपकरणान्युपभोगवस्तूनि यस्मिन्। स **नानोपकरणः**[7] स्वर्ग इति लोकप्रवादः **तन्निवासिनी** स्वर्गनिवासि**न्यप्सरा उर्वशी नामेति लोकप्रवादः**। **तं** लोकप्रवाद**मनादृत्य** मनुष्येष्वेव निरतिशया प्रीतिः **स्वर्गः**। उर्वशी चारणिः। पात्री वेत्यादिना। लोकप्रसिद्धादर्था**दन्यामेवार्थकल्पनामयं** जै मि न्यादिः **कुर्वाणो**ग्निहोत्रादि**शब्दान्तरे**ष्वर्थनिर्णये। **कथं प्रसिद्धिं प्रमाणयेत्**। नैव प्रमाणयेदि[1]ति यावत्।

**तत्रा**ग्निहोत्रादिशब्देषु लोकप्रसिद्धार्थकल्पनाया **अविरोधात्** प्रतीतस्यैवार्थस्या**भ्युपगम इति चेत्**। स्वर्गोर्वश्यादिशब्देषु तु प्रसिद्धार्थाभ्युपगमे **प्रमाणविरो धादनभ्युपगम इति परो मन्यते।**

**अन्यत्रा[1]प्यविरोधस्य दुरन्वयत्वात्। विरुद्धामप्यग्निहोत्रात् स्वर्गावाप्ति मान्द्यादयं न लक्षयेदपि। विरोधाविरोधौ च बाधकसाधकप्रमाणवृत्ती (।) तौ चात्यक्षे नाभिमते। तत्कथं तद्वशात् प्रतीतिः।**

**न च वचनवृत्तिरेवाविरोधोऽन्यत्रापि प्रसंगात्। अपौरुषेय आगमस्तस्य प्रवादा(द)र्थसिद्धिस्तत्र पुनर्विरोधचिन्तायामनाश्वास आगमे स्यात्। सत्यपि**

---

**ने**त्यादिना सि द्धा न्त वा दी। भेदमनन्तरोक्तं युज्यते। यस्माद**त्रापि** स्वर्गो-र्वश्यादिशब्देषु लोकप्रसिद्धे**तीन्द्रियेर्थे**भ्युपगम्यमाने। प्रमा[2]णेन **विरोधासिद्धेः** न ह्यत्र प्रत्यक्षमनुमानं वा बाधकं प्रमाणमस्ति। **अन्यत्रापी**त्यग्निहोत्रादिशब्देष्वपि लोकप्रसिद्धार्थकल्पनाया**मविरोधस्य दुरन्वयत्वात्**। साधकप्रमाणाभावेन दुर्बोधत्वात्।

एतदेव साधयन्नाह। **विरुद्धामपि** यथाप्रसिद्धाम**ग्निहोत्रात् स्वर्गावाप्ति मान्द्यादयं** जै मि न्या दि**र्न लक्षयेदपि** कदाचिदिति संशयः। किं च (।) **विरो[3]धाविरोधौ च** नान्यावेव (।) किन्तर्हि (।) **बाधकसाधकप्रमाणवृत्ती**। यथोक्तस्यानुपलम्भाख्यस्य बाधकस्य प्रमाणस्य वृत्तिर्विरोधः। साधकस्य प्रत्यक्षानुमानस्य प्रमाणस्य वृत्तिरविरोधः। ते च विरोधविरोधस्वभावे। बाधकसाधकप्रमाणवृत्ती। **अत्यक्षे**ऽतीन्द्रिये वस्तुनि **नाभिमते**। न हि देशादिविप्रकृष्टेषु स्वर्गादिसाधनेषु बाधकं साधकं च[4] प्रमाणं प्रवर्त्तते। यदा चैव**न्तत्कथं** नैव **तद्वशा**दिति विरोधाविरोधवशात्। विरोधवशात् स्वर्गादिशब्देषु प्रसिद्धार्थप्रतीतिरविरोधवशाच्चाग्निहोत्रादिशब्देषु प्रसिद्धार्थ**प्रतीतिः**।

अथ मतं (।) न साधकप्रमाणवृत्तिरविरोधोतीन्द्रियेर्थे किं त्वागमसंज्ञितस्याग्निहोत्रादिवचनस्य लोकप्रसिद्धार्थवाचकत्वेन प्रवृत्तिरेवाविरोध इति (।)

अत आह।[5] **न चे**त्यादि। लोकप्रसिद्धार्थवाचकत्वेनाग्निहोत्रादि**वचनस्य प्रवृत्तिरेवाविरोधो न च**। किं कारणम् (।) **अन्यत्रापि** स्वर्गोर्वश्यादिशब्देष्वपि स्वर्गादिवाचकत्वेन प्रवृत्तेरविरोध**प्रसङ्गात्**। तथा हि (।) स्वर्गोर्वश्यादिशब्दाः-स्थानाप्सरोविशेषादिष्वेव प्रवृत्ता लोके दृश्यन्ते। ततश्चाविशेषादुभयत्र प्रसिद्धार्थपरिग्रहोस्तु। न चैकत्रापि।

किं च (।) **अपौ[6]रुषेयो** वेदाख्य **आगमः** स च स्वमर्थं स्वयं न प्रकाशयति किन्तु **तस्यागमस्य** लोक**प्रवादादर्थसिद्धि**रभ्युपगम्यते। **तत्र पुन**र्लोकप्रसिद्ध्यङ्गीकरणेपि **विरोधचिन्तायां** क्रियमाणायां **सर्वत्रागमेऽनाश्वासः** स्यादतीन्द्रिये विरोधाविरोधयोर्निश्चेतुमशक्यत्वात्।

अनाश्वासमेव साधयन्नाह। **सत्यपी**त्यादि। **सत्यपि तस्मिन्न**पौरु[7]षेय 211b

**तस्मिन्नत[2]थाभावादर्थस्याप्रमाणवृत्तेरन्यस्यापि शंकनीयत्वात्।**

**तदुक्तम् (।) "अग्निहोत्रं जुहुयात् स्वर्गकाम" इत्यत्र श्वमांसभक्षणचोदनाविकल्पो भवत्विति। स न भवति प्रदेशान्तरेषु तथार्थस्य वचनात्। न (।) तस्यार्थापरिज्ञानात्। प्रदेशान्तरेष्वपि तथाविधार्थकल्पनाया अनिवार्यत्वात्।**

**यदि हि क्वचिद् विदितार्थो[3]यमपौरुषेयः शब्दराशिः स्यात् तदा ततोर्थप्रतीतिः स्यात्। ते तु बाहुल्येप्यन्धा एव सर्वे इति यथेष्टं प्रणीयन्ते। तस्मात् (।)**

शब्दान्तरेषु तादृक्षु तादृश्येवास्तु कल्पना ॥ (३२२)

**यादृश्यग्निहोत्रं जुहुयात् स्वर्गकाम इत्यस्य वाक्यस्य।**

**अपि च।**

**प्रसिद्धिश्च नृणां वादः प्रमाणं स च[*]नेष्यते।**

---

आगमे। स्वर्गादिशब्दवाच्यस्य स्वर्गाद्यर्थस्यातथाभावात्। **तथाभावस्तथात्वं** (।) यथा लोकेप्रसिद्धस्वर्गार्थग्रहण**मतथाभावाद**प्रसिद्धार्थग्रहणादन्यस्याप्यग्निहोत्रादिशब्दस्य **शंकनीयत्वात्**। किमस्य लोकप्रसिद्ध एवार्थः किम्वा स्वर्गादिशब्दवदन्य एवेति। एतदेव कुतः (।) **प्रमाणवृत्तेः**। न ह्यत्र लोकप्रसिद्धार्थग्रहणे प्रमाणं प्रवर्त्तत इति।[1]

**यदुक्त**मित्यादि परः। यदुक्तम् (।) **"अग्निहोत्रं जुहुयादि"त्यत्र** वाक्ये **श्वमांसभक्षण**स्य **चोदना**भिधानन्तस्य **विकल्पः** कल्पना **भवत्विति**। **स** दोषो **न भवति**। किं कारणम् (।) वेदस्यैव **प्रदेशान्तरे तथे**ति भूतविशेषे घृतादिकं प्रक्षिपेदित्येवमस्याग्निहोत्रादिवाक्यास्यार्**थचर्चनात्**। व्याख्यानात्।

**ने**त्यादि सि द्धा न्त वा दी। **ने**दमुत्तरं युज्यते। **तस्य** प्र[2]देशान्तरस्थस्य व्याख्याभूतस्य वाक्यस्या**र्थापरिज्ञानात्**। ततश्च **प्रदेशान्तरेष्वपि** व्याख्याभूतेषु **तथार्थकल्पनाया** इति। श्वमांसभक्षणकल्पनाया **अनिवार्यत्वात्**।

**यदी**त्याद्यस्यैव समर्थनं। **यदि ह्ययमपौरुषेयो** वेदाख्यः **शब्दराशिः क्वचित्** प्रदेशान्तरे **विदितार्थः स्यात् तदा ततो** विदितार्थात् प्रदेशान्तरात् परिशिष्ट**स्यार्थप्रतीतिः स्यात्**। या[3]वता **ते तु** वैदिकाः शब्दा **बाहुल्येप्य**परिज्ञानार्थत्वादन्धा **एव सर्वे इति** कृत्वा पुरुषेण **यथेष्टं प्रणीयन्ते** व्याख्यायन्ते।

यत एव**न्तस्माच्छब्दान्तरेषु तादृक्षि**वति। अग्निहोत्रं जुहुयादित्यादि वाक्यानाम्व्याख्याभूतेषु **तादृश्येवास्तु कल्पना**। कीदृशी (।) इत्याह। **यादृश्यग्निहोत्रञ्जुहुयात्स्वर्गकाम इत्यस्य** कल्पना कृता प्रदेशान्तरेपि श्वमांसभक्षणकल्प[4]नास्त्विति यावत्।

**अपि च प्रसिद्धिश्च** नान्यदेव किंचित्। किन्तर्हि (।) **नृणां** पुरुषाणां **वादः**

· ततश्च भूयोर्थगतिः किमेतद् द्विष्टकामितं[4] ॥ (३२३)

**न प्रसिद्धिर्नामान्यान्यत्र जनप्रवादात् (।) ते च सर्वे जना रागाद्यविद्यापरीतत्वादसंभावनीययाथातथ्यवचनाः (।) तदेषां प्रवादो न प्रमाणं।**

**न हि कस्यचिदपि सम्यग्(?क्)प्रतिपत्तेरभावे बाहुल्यमर्थवद् भवति। पा र सी क मातृमिथ्याचारवत्।**

**तेषामेव पुरुषाणां वचनात् पुनः परोक्षार्थसंप्रतिपत्तिरिति क[5]थं तदेव युगपद् द्वेष्यं च काम्यं च।**

अर्थे प्रसिद्धिमुल्लंघ्य कल्पने न निबन्धनं।
प्रसिद्धेरप्रमाणत्वात् तद्ग्रहे किन्निबन्धनं ॥ (३२४)

**प्राप्तप्रतिलोमनेनान्यत्र प्रवृत्तिर्गुणदोषसन्दर्शनेन युक्तेति प्रसिद्धेरन्वय इति**

---

**स च** वादः **प्रमाणम्नेष्यते** भवता। सर्वपुरुषाणां रागाद्युपप्लुतत्वात्। **भूय** इति पुनः। **ततश्च** लोकप्रवादादप्रमाणत्वेन पूर्वं व्यवस्थापितात् पुनर्वेदार्थ**गति**रिति युगप**त्किमेतद्विष्टकामितं**। यदेव वस्त्वप्रमाणत्वेन द्विष्टं। तदेव पुनः[5] प्रतिपत्तिहेतुत्वेन कामितमभिलषितमिति परस्परविरोधः।

**न प्रसिद्धिर्नामान्या जनप्रवादात्**। किन्तु जनप्रवाद एव प्रसिद्धिः। **ते च सर्वे जना असम्भावनीययाथातथ्यवचना** असम्भावनीयं याथातथ्यमविपरीतत्वं यस्मिन् वचने। तदसम्भावनीय**याथातथ्यं वच**नं येषामिति विग्रहः। किं कारणं (।) **रागाविद्यापरी[6]तत्वात्**। रागाविद्याभ्यां व्याप्तत्वात्। **तदि**ति तस्मा**देषां** जनानां **प्रवादो न प्रमाणं**।

बाहुल्याज्जनस्य तत्प्रवादः प्रमाणमित्यपि मिथ्या। यतः (।) **न हि** बहूनां जनानाम्मध्ये **कस्यचिदे**कस्या**पि** पुरुषस्य **सम्यक्प्रतिपत्तेरभावे** सति लोकस्य **बाहुल्यमर्थवद्** भवति प्रयोजनवद् भवति। किमिव (।) **पा र सी** केत्यादि। यथा बहुभिः पारसीकै**र्मा[7]तरि** मैथुनाचरणान्न तन्न्याय्यम्भवति। एवं बाहुल्येपि रागादिमतामतीन्द्रियेर्थे वचनमप्रमाणमेवेति। 212a

अथ **तेषामेव** रागादिमतां **पुरुषाणां वचनात् पुनः परोक्ष**स्याग्निहोत्रादिशब्दवाच्यस्यार्थस्य **प्रतिपत्तिरिति**। **कथन्तदेव युगपदे**कस्मिन्नेव काले **द्वेष्यं** च **काम्यं च** युज्यते।

अग्निहोत्रादिशब्दस्य यस्मिन्नर्थे लोक**प्रसिद्धि**स्ता**मुल्लंघ्य**[1] त्यक्त्वा। ततोर्थान्तरस्य श्वमांसभक्षणादेः **कल्पने न निबन्धनं** कारणमिति। तस्मात् प्रसिद्धिरेव गृह्यत इत्येतदप्ययुक्तं। यतः **प्रसिद्धेरप्रमाणत्वात् तद्ग्रहे** प्रसिद्धिग्रहे **किन्निबन्धनं** (।) नैव किञ्चिदिति प्रसिद्धेरपि ग्रहो माभूदिति।

**चेत्। न (।) प्राप्तेः प्रमाणवृत्तिलक्षणत्वात्। यत्किंचनग्रहणं हि प्रसिद्धिमप्रमाणय[6]तस्तन्मुखेन प्रतीतिः (।) न्यायात् प्राप्तिप्रतिषेधात् तुल्या स्वपरविकल्पयोरुभयथापि वृत्तिरिति कः प्रसिद्धावनुरोधः।**

**अपि चेयम् (।)**

उत्पादिता प्रसिद्ध्यैव शङ्का शब्दार्थनिश्चये।
यस्मान्ना(ना)र्थवृत्तित्वं शब्दानां तत्र दृश्यते॥ (३२५)

**न (।) प्रसिद्धेरेकार्थनिश्चयः शब्दानान्तत एव शङ्कोत्पत्तेः। नानार्था हि** 37a **शब्दा लोके दृश्यन्ते। लोकवादश्च प्रतीतिः। अत एव नानार्थते[7]ति। ततो नियमो**

---

**प्राप्त्ये**त्यादिना पूर्वार्द्धन्तावद् व्याचष्टे। प्रसिद्ध्या **प्राप्तस्यार्थस्य प्रतिलोमनेन** त्यागेनान्यत्राप्रसिद्धेर्थे[2] **प्रवृत्तिर्गुणदोषदर्शने** सति **युक्ता**। यदि प्राप्तेर्थे दोषदर्शनं स्यादप्राप्ते च गुणदर्शनं। न चाग्निहोत्रादिशब्दानां प्रसिद्धेर्थे दोषदर्शनमस्त्यप्रसिद्धे वा गुणदर्शनन्ततः **प्रसिद्धेरेवान्वयोनुगमनमिति चेत्**।

**ने**त्यादिना प्रतिषेधति। एतच्च पश्चार्द्धस्य विवरणं। **नै**तदेवं (।) किङ्कारणं (।) **प्राप्तेः प्रमाणवृत्तिलक्षणत्वात्**[3]। साधकेन हि प्रमाणेनार्थस्य प्राप्तिर्निश्चीयत इति प्राप्तेः प्रमाणवृत्तिलक्षणत्वमुच्यते। न च प्रसिद्धिः प्रमाणं येन सिद्धोर्थो न्यायप्राप्तः स्यात्। ततश्च तामेनां **प्रसिद्धिमप्रमाणयतो** मी मां स क स्य **तन्मुखेन** प्रसिद्धिद्वारेणाग्निहोत्रादिशब्दवाच्यस्यार्थस्य या **प्रतीतिः** सा यत्किञ्चनग्रहणमप्रमाणकत्वात्। यथा[4]कथञ्चित् तद्ग्रहणमित्यर्थः।

ततश्चाग्निहोत्रादिशब्दस्य लोकप्रसिद्धोर्थो न्यायप्राप्तो न भवतीत्येवं **न्याया**ल्लोकप्रसिद्धस्यार्थस्य **प्राप्तिप्रतिषेधात्** कारणादग्निहोत्रादिशब्दानामिच्छयार्थः परिकल्पनीयः।

तत्र मी मां स कैरग्निहोत्रादिशब्दानां योर्थः परिकल्प्यते दहनद्रव्यादिलक्षणो यश्च परेण श्वमांसभक्षणलक्षणस्त[5]योः **स्वपरविकल्पयोरुभयथा**पीति यदि प्रसिद्ध्यनुपालनमथ नानुपालनन्तथापि प्रमाणाभावादिच्छया परिग्रहे **तुल्या वृत्ति**रिति कृत्वा **कः प्रसिद्धानुरोधो** येन प्रसिद्धेरर्थकल्पना क्रियते।

**अपि च (।) प्रसिद्ध्यैव** सर्व**शब्दानामर्थनिश्चये**। इयन्नानार्थत्वेन **शंकोत्पादिता**। किं कारणं (।) **यस्मान्ना(ना)र्थ**वृत्तित्वमग्न्यादि**शब्दाना**न्तत्र प्रसिद्धौ **दृश्यते**।

**ने**त्यादिना व्याचष्टे। **न प्रसिद्धे**स्सकाशा**देकार्थनिश्चयः शब्दानाम्**वैदिकानां। किं कारणं (।) **तत एव** प्रसिद्धेरेव **शंकोत्पत्तेः**। तथा हि **नानार्था** अग्न्यादि**शब्दा लोके दृश्यन्ते**। तच्च नानार्थदर्शनं लोकवादो **लोकप्रवादश्च प्रतीतिरत एव-**

**न युक्तः।**

**अन्यथासंभवाभावान्ना[1]नानाशक्तेः स्वयं ध्वनेः।**
**अवश्यं शङ्कया भाव्यं नियामकमपश्यतां ॥ (३२६)**

इत्यन्तरश्लोकः (।)

**तस्मादविदितार्थविभागेषु शब्देष्वेकमर्थमत्यक्षसंयोगमनालम्बनसमारोपन्निश्चित्य व्याचक्षाणो जै मि निः तद् व्याजेन स्वमेव मतमाहेति न तीर्थकरान्तरादस्य विशेषम्पश्यामः।**

**तथा हि (।) तदर्थवचनव्यापारस (?शू)न्यस्य तत्सामारोपेणाभिधानं न स्वम्वचनम (ति) शेते। तत्कारिणा केवलम्मिथ्याविनीततैवात्मनः समुद्योतिता**

---

लोकवादान्ना (ना) र्थतेति कृत्वा ततो लोकवादाद् वैदिकानां शब्दानामेकार्थ[7]**नियमो न युक्तः।** 212b

अनियतार्थत्वमेव द्रढयन्नाह। **अन्यथे**त्यादि। **स्वयं** स्वभावतो **नानाशक्ते**रनेकार्थप्रतिपादनयोग्यस्य ध्वनेः शब्दस्या**न्यथासम्भवाभावात्**। अभिमतादर्थादर्थान्तरे वृत्तिरन्यथा। तस्या अर्थान्तरवृत्तेरसम्भवोन्यथाऽसम्भवस्तस्याभावात्। प्रतिषेधद्वयेन विधेरभ्युपगमादन्यथापि सम्भवस्य भावादिति यावत्। ततश्चातीन्द्रि[1]यार्थवृत्तिषु वैदिकेषु शब्देष्व**वश्यम**नेकार्थवृत्तित्वेन **शंकया भाव्यं**। केषां **नियामकमपश्यतां** पुंसां प्रतिनियतविषयसाधकं प्रमाणमपश्यतां। (३२६)

यत एवन्**तस्माद्** (।) **अविदितः अर्थविभागो** येषामिति विग्रहः। **तेष्ववि**दितार्थविभागेषु **शब्देष्वेकमर्थ**मभिमतं (।') किं भूतम् (।) **अत्यक्षसंयोगं**। अत्यक्षोतीन्द्रियस्संयोगः शब्देन सह सम्बन्धो यस्येति वि[2]ग्रहः। आलम्बनं प्रमाणन्तदभा**वादनालम्बनो** निःप्रमाणकस्**समारोपो** यस्य स तथोक्तः। **तमेवं** भूतमर्थम्**विनिश्चत्य व्याचक्षाणो जै मि निः**। **तद्व्याजेनेति** वेद एवं प्राहेति वेदोपक्षेपेण **स्वमेव मतमाहेति** कृत्वा यस्तीर्थ्य (?र्थ) करो निर्व्याजमेवमाह। अहमेव स्वयम्वदामीति। तस्मात् **तीर्थ्य (?र्थ) करान्तरादस्य** जै मि नेर्न **विशेषं पश्यामः**।

अविशेषमेव[3] साधयन्नाह। **तथा ही**त्यादि। स चासावर्थश्चेति **तदर्थ**स्तस्य प्रकाशनम्**वचनं**। तत्र **व्यापार**स्सामर्थ्यन्तेन **शून्यस्य** रहितस्य वेदस्य। **तत्समारोपेणे**त्यर्थप्रकाशनव्यापारसमारोपेण ........... एवम्वक्तीति यद**भिधान**न्त (........) स्ववचनमेव तस्य तदिति यावत्। **तत्कारिणा** वचनव्यापारशून्ये वेदेर्थप्रकाशनव्यापारसमारोपकारिणा जै मि नि ना **केव[4]लम्मिथ्याविनीततैवात्मनः समुद्द्योतिता स्यात्**। न तु पौरुषेयाद् वचनादस्य विशेषः।

**स्यात्।**

**तथा हि।**

**एष स्थाणुरयम्मार्ग्ग इति वक्तीति कश्चन।**
**अन्यः स्वयम्ब्रवीमीति तयोर्भेदः परीक्षु (?क्ष्य)तां। (३२७)**

**निरभिप्रायव्यापारवचने स्थाणौ समारोप्योपदिशतः स्वतन्त्रस्य वा (।) स्ववृत्तिवचनोपगमे न कश्चिद्विशेषोऽन्यत्र जडस्य प्रतिपत्तिमान्द्यात्।**

**अपि च (।) अर्थनियमे सत्येनं जै मि नि र्जानीयात्। स एव शब्दस्य (।)**
**सर्व्वत्र योग्यस्यैकार्थद्योतने नियमः कुतः।**

**न हि शब्दस्य स्वभावतः कश्चिदर्थः स्वभावनियतः सर्व्वत्र योग्यत्वात्। अयोग्यत्वे च तदप्रच्युतेरविधेयस्य पुरुषाणां क्वचिदुपनयनापनयनासम्भवात्।**

---

एतदेव स्फुटयन्नाह। **तथा हीत्यादि**। कः पन्था पा ट लि पु त्रं गच्छतीति पृष्टः **कश्चन** पुरुष आह। न जाने स्वयमहं केवलमेष **स्थाणुरयं मार्ग इति वक्तीत्येवमेको** मार्गोपदेशसामर्थ्यशून्यस्थाणुव्याजेन मार्गमाचष्टे। **अन्यस्त्वाह**। **न** स्थाणोर्वचनसामर्थ्य[5]मस्त्यहमेव **स्वयं** ज्ञात्वायं मार्ग इति **ब्रवीमीति**। **तयोरेवम**भिदधतोः स्वयम्वचन**भेदः परीक्ष्यतां** यद्यस्ति नैवास्तीत्यभिप्रायः।

**निरभिप्राय** इत्यादिना व्याचष्टे। अभिप्राय इदं चेदं च करिष्यामीति चेतना। तत्पूर्वकः प्रयत्नो व्यापारः। **अभिप्रायश्च व्यापारश्च वचनं** च। तानि **न** विद्यन्ते यस्मिन्स तथोक्तः। **तस्मिन्नेवम्भूते स्थाणौ** मार्ग[6]प्रकाशकत्वं **समारोप्योपदिशत** एकस्य पुंसः **स्वतन्त्रस्य वा** स्थाणुनिरपेक्षस्यापरस्य मार्गमुपदिशत इति सम्बन्धः। एतयोर्द्वयोः पुरुषयोः स्वयम्**वचनोपगमे न कश्चिद्विशेषोन्यत्र जडस्य प्रतिपत्तिमान्द्यात्** जडस्य श्रोतुः प्रतिपत्तिमान्द्यमेव विशिष्यते। यतोभिप्रायादिशून्यस्य स्थाणोर्वचनं प्रतिपद्यते स्थाणुरेव वक्तीति। एवं[7] जै मि नेर्वेदव्याजेन स्वमतं ब्रुवतो जडः प्रतिपत्तिमान्द्यात् वेद एवं ब्रूत इति प्रतिपद्यते।

213a

**अपि च** वैदिकस्य शब्दस्यै**कार्थ**प्रति**नियमे सत्येन**मेकार्थप्रतिनियमं **जै मि नि-र्जानीयात्**। यावता **शब्दस्य वाचकस्य सर्वत्रा**र्थे वाचकत्वेन **योग्यस्यैकार्थद्योतने नियतिः कुतो** नैव। **न हि शब्दस्य कश्चिदर्थः स्वभावेन** निसर्गसिद्धया **नियतो**स्ति। किं कारणं (।) **स[1]र्वत्र** वाच्येर्थे **योग्यत्वाच्छ**ब्दस्य।

अथ पुनर्न योग्यता सर्वत्रार्थे शब्दस्य तदाप्य**योग्यत्वे च तदप्रच्युते**रयोग्यतास्वभावान्नित्यस्य शब्दस्याप्रच्युतेः कारणात् **पुरुषाणामविधेय**स्यानायत्तस्य **क्वचिदर्थे उपनयन**म्वाचकत्वेन नियोजनं। नियुक्तस्याप्य**पनयनं**। नेदानीमयं शब्दो वाचक इति **तस्यासम्भवात्**। भवति च (।) तस्मात् सर्वत्र शब्दा यो[2]ग्या

**ज्ञातावातीन्द्रियाः केन विवक्षावचनादृते ॥ (३२८)**

**पुरुषप्रणीते हि शब्दे कयाचिद् विवक्षया स ताङ् कदाचिद् के(न) चिन्निवेदयेदपीति विवक्षापूर्वकाणां शब्दानामर्थनिय[3]मः प्रतीयेतापि। अपौरुषेये तु विद्यमानोप्यर्थनियमः कथम्विज्ञेयः स्वभावभेदस्याभावात्। सति वा प्रत्यक्षस्य स्वयम्प्रतीतिप्रसङ्गात्। अप्रत्यक्षत्वेपि केनचित् ज्ञातुमशक्यत्वात्। न चास्तिकश्चिद्विशेषः। सर्वशब्दा हि सर्वार्थप्रत्यासत्तिविप्रकर्षरहिताः।**

**ततस्तेषाम् (।)**

**विवक्षा नियमे हेतुः सङ्केतस्तत्प्रकाशनः।**
**अपौरुषेये सा नास्ति तस्य सैका[4]र्थता कुतः ॥ (३२९)**

---

इत्येकार्थद्योतनं नास्ति।

भवतु वा वैदिकानामेकार्थनियमस्तथाप्यतीन्द्रियमर्थनियमं पुरुषो ज्ञातुमशक्तः। तदेवाह। **ज्ञाता वातीन्द्रिया अर्थाः केन** पुरुषेण। न हि मी मां स कोतीन्द्रियार्थदर्शिनं कञ्चिदिच्छति। **विवक्षावचनाद् ऋते** (।) विवक्षायाः प्रकाशनम्वचनम्विवक्षावचनन्तेन विना। वक्तुरभिप्रायकथनमन्तरेणातीन्द्रिया नैव केनचि[3]ज्ज्ञाता इत्यर्थः।

**पुरुषे**त्यादिना व्याचष्टे। **कयाचिद् विवक्षया पुरुषेण प्रणीते** उच्चारिते **शब्दे** स पुरुषस्ताम्विवक्षां **कदाचित्** क्वचिच्छ्रोतरि **निवेदयेदि**दं मया वाच्यत्वेन विवक्षित**मिति**। **विवक्षापूर्वकाणां शब्दानामर्थे नियमः प्रतीयेतापि**। **अपौरुषेये तु** शब्दे विवक्षापूर्वं केनचिदप्रयुक्ते **विद्यमानोप्यर्थनियमः कथं ज्ञेयः** (।) नैव कथंचित्। किं[4] कारणं (।) **स्वभावभेदस्याभावात्**। न हि वैदिकस्य शब्दस्य कश्चित् स्वभावो भिन्नोस्ति स एकत्राभिमतेर्थे नियतो यद्दर्शनादिष्टार्थप्रतीतिः स्यात्। **सत्य**पि **वा** स्वभावभेदे स स्वभावभेदः प्रत्यक्षो वा स्यादप्रत्यक्षो वा। न तावत्प्रत्यक्षः (।) किङ्कारणं (।) **प्रत्यक्षस्य** स्वभावस्योपदेशनिरपेक्षस्य। **स्वयं प्रतीतिप्रसंगात्**। अथाप्रत्यक्षः (।) **अप्रत्यक्षत्वेपि** प्रमाणान्तर[5]स्याभावेन **केनचि**दप्यर्वाग्दर्शनेन **ज्ञातुमशक्यत्वात्**।

अभ्युपगम्यैतदुक्तं। **न चास्ति कश्चिद् विशेषो** य एकार्थप्रतिनियतः। **सर्वशब्दा हि सर्वार्थप्रत्यासत्तिविप्रकर्षरहिताः**।

न हि केचिच्छब्दाः क्वचिदर्थे प्रत्यासन्ना विप्रकृष्टा वा **भावतो**ऽपि तु **तेषां** शब्दानां सर्वार्थेषु स्वभावतस्तुल्यानामेकार्थनियमे वक्तु**र्विवक्षा हेतुः**। **संकेतस्तत्प्रका[6]शन** इति तस्याश्च विवक्षायाः प्रकाशनः संकेतः। तथा ह्ययमर्थो (?र्थः) तेन विवक्षित इति संकेतादवगम्यते। **सा च** विवक्षा**पौरुषेये** शब्दे **नास्ती**ति कृत्वा

**विवक्षया हि शब्दोऽर्थेषु नियम्यते न स्वभावतः। तस्स्याद(? तस्या)प्रतिबन्धेन सर्वत्रतुल्यत्वात्। यत्रापि प्रतिबन्धस्तदभिधानानियमाभावात्। सर्वशब्दैः करणानामभिधानप्रसङ्गात्। तस्माद् विवक्षाप्रकाशनायाभिप्रायनिवेदनलक्षणः सङ्केतः क्रियते। अपौरुषेये तु न विवक्षा न सङ्केतः कस्यचिदभिप्रायाभावा (f)-दति न नियमो न तज्ज्ञानम्।**[5]

**स्वभावनियमेऽन्यत्र न योज्येत तया पुनः।**

**यदि सङ्केतनिरपेक्षः स्वभावत एवार्थेषु शब्दो निलीनः स्यात्। उक्तमत्र (।) अप्रतिबन्धाद् नियत इति।**

**अपि च। स्वाभाविके वाच्यवाचकभावे न पुर्नाव्विवक्षया (।)**

**यथेष्टन्न नियुज्येत संकेतश्च निरर्थकः (३३०)।**

---

**तस्या**पौरुषेयस्य शब्दस्य **सा** यथोक्ता **एकार्थता कुतः** (।) नैव।

**विवक्षा** हीत्यादिना व्याचष्टे। **विवक्षया** हेतुभूतया **शब्दोर्थेषु नियम्यते** ऽस्यैवार्थस्यायं वाचक इति। **न** तु **स्वभावतः** (।) किं कारणं (।) **तस्य** श[7]ब्दस्य क्वचिद् वस्तुन्य**प्रतिबन्धे**न सम्बन्धरहितत्वेन कारणेन **सर्वत्रा**र्थ**तुल्यत्वात्**। **यत्रापि** शब्दस्य **प्रतिबन्धः** स्थानकरणेषु ततः शब्दानामुत्पत्तेरभिव्यक्तेर्वा। तेषामपि करणानां **सर्वैः शब्दै**र**भिधाननियमभावात्**। न हि सर्वे शब्दाः **करणाना**मेवा**भिधाय**काः। करणाभिधायी पुनः शब्दः करणानि प्रतिपादयेदपीति सर्वग्रहणं।

213b

यत एवन्**तस्माद् वि**[1]**वक्षाप्रकाशनाय संकेतः क्रियते** (।) कीदृशः (।) **अभिप्रायनिवेदनलक्षणः**। वक्तुरभिप्रायप्रकाशनलक्षणः। **अपौरुषेये** तु शब्दे **न विवक्षा** नियामिका। नापि **संके**तस्तत्प्रकाशनः। किं कारणं (।) पुरुषनिवृत्तेरेव **कस्यचिदभिप्रायस्याभावादिति** कृत्वा **नै**कार्थ**नियमो** वैदिकानां शब्दानां। नियमे वा। **न तज्ज्ञानं** नैकार्थप्रतिनियमज्ञानं कस्यचित्। अर्थे स्व[2]भावत एकार्थनियता वैदिकाः शब्दा न विवक्षातः।

तदा **स्वभावनियमे**भ्युपगम्यमाने स शब्दो**न्यत्रा**र्थे **तया** विवक्षया **न वियुज्यते**।

**यदी**त्यादिना व्याचष्टे। **यदि संकेतनिरपेक्षः स्वभावत एव शब्दोर्थेषु निलीनो** युक्तः **स्यात्**। **उक्तम**त्रोत्तरं (।) "क्वचिद्वस्तुन्य**प्रतिबन्धादनियत**" इति।

**अपि च** (।) **स्वाभाविकेन** निसर्गसिद्धे **वाच्यवाचकभावे**ऽभ्युपगम्यमा[3]ने। **न पुर्नाविवक्षया यथेष्टं** शब्दोन्यत्रार्थे **नियुज्यते**। न हि रूपप्रकाशने स्वभावतो नियतं चक्षुः शब्दप्रकाशने नियोक्तुं शक्यते। नियुज्यते च यथेष्टं शब्दः (।) तस्मान्न स्वभावनियतः। हस्तसंज्ञादिवत्। स्वभावतोर्थप्रतिनियमे शब्दानां **संकेतश्च**

**स्यात्। न हि स्वभावभेद इन्द्रियगम्यः स्वप्रतीतौ परिभाषादिकमपेक्षते। नीलादि-भेदवत्। तदपेक्षप्रती[6]तयस्तु न वस्तुस्वभावाः (।) किन्तर्हि (।) साम यिका राजचिह्नादिवत् (।) यः सामयिकः स्वभावनियतो युक्तस्तस्येच्छावृत्तेः।**

**अत एव सङ्केतात्। स्वभावविशेषस्य व्यक्तौ च नियमः कुतः (।) स्वेच्छा-वृत्तिः सङ्केतः स इहैव कर्त्तुं शक्यते नान्यत्रेति नोपरोधोऽस्ति। स पुरुषैः स्वेच्छया क्रियमाणस्तमेव स्वभावं व्यनक्ति नान्यमिति न नियमोऽस्ति॥**

**यत्र स्वातंत्र्यमिच्छाया नियमो नाम तत्र कः।**
**द्योतयेत तेन सङ्केतो नेष्टामेवास्य योग्यतां॥ (३३१)**

**इत्यत्यन्तरश्लोकः।**

---

**निरर्थो** निष्फलः स्यात्। यतो **न हि स्वभावभेदः** स्वभावविशेष **इन्द्रियगम्यः स्वप्रतीतौ परिभाषा[4]दिकं।** परिभाषा संकेतः। आदिशब्दात् संकेतस्मृत्यादिपरिग्रहः। किमिव (।) **नीलादिभेदवत्।** यथा नीलादिविशेषाः स्वप्रतीतौ संकेतादिकं नापेक्षन्ते तद्वत्। **तदपेक्षप्रतीतयस्तु** संकेतापेक्षप्रतीतयस्तु ये। ते **न वस्तुस्वभावाः।** न वस्तुनो निसर्गसिद्धाः विशेषाः (।) **किन्तर्हि** (।) **सामयिकाः** संकेतकृताः। किमिव (।) **राजचिह्नादिवत्।** यथा राज्ञा[5] स्वप्रतीतये समिता ध्वजादयश्चिन्हभेदाः। आदिशब्दाद्धस्तसंज्ञादिपरिग्रहः। **यश्च सामयिकस्स स्वभावनियतो युक्तः।** निसर्गसिद्धो न **युक्तः।** किं कारणं (।) **तस्य** सामयिकस्य पुरुषस्य पुरुषेच्छया **प्रवृत्तेः।**

वैदिकस्य शब्दस्यार्थे निसर्गत एव स्वभावविशेषो नियतः स तु संकेतेन व्यज्यत इति चेद् (।)

आह। **अत एवेत्यादि।** यस्मादिच्छावृत्तिस्स[6]ङ्केतोऽत **एव** कारणात्। **संकेतादे**कार्थनियतस्य **स्वभावविशेषस्य व्यक्तौ नियतिः कुतः** (।) नैव।

तद् व्याचष्टे (।) **स्वेच्छावृत्तिस्संकेतस्स इहै**वाभिमतेर्थे **कर्त्तुं शक्यते नान्यत्रेति नोपरोधोस्ति** (।) न वाचकमस्ति। ततश्च **स** संकेतः **पुरुषैः स्वेच्छया क्रियमाणस्तमेवै**कार्थनियतं **स्वभावं व्यनक्ति नान्यमिति न नियमोस्ति।**

**यत्र** संकेते **स्वातन्त्र्यमिच्छाया[7] नियमो नाम तत्र कः।** नैवास्ति नियम इत्यर्थः। **तेनानियतत्वेन** कारणेना**स्य** वैदिकस्य शब्द**स्येष्टामेवा**भिमतार्थविषयामेव। **योग्यतां संकेतो न द्योतये**दिति। 214a

तदेवमपौरुषेयत्वं नागमलक्षणमिति प्रतिपादितम्।

## (३) जैमिनिमत-निरासः

### *वेदैकदेशसंवादित्वे न सर्वस्य प्रामाण्यम्*

**यस्मात्किलेदृशं सत्यं यथाग्निः शीतनोदनः ।**
**वाक्यं वेदैकदेशत्वादन्यदप्यपरोऽब्रवीत् ॥ (३३२)**

**अन्यस्त्वपौरुषेयमागमलक्षणम्परित्यज्यान्यथा प्रामाण्यम्वेदस्य साधयितुकामः-**
37b **प्राह। अवितथानि वेदवाक्यानि। यत्राप्रतिपत्तिः।**[8] **वेदैकदेशत्वाद् यथा (।) "अग्निर्हिमस्य भेषजमि"त्यादि वाक्यमिति (।)**

**तस्येदं (।)**

**रसवत्तुल्यरूपत्वादेकभाण्डे च पाकवत् ।**
**शेषवद् व्यभिचारित्वात्क्षिप्तं न्यायविदेदृशं ॥ (३३३)**

**स्वयमीदृशमाचार्येणानुमानं नैयायिकशेषवदनुमानव्यभिचारमुद्भावयता**

---

इदानीमेकदेशाविसम्वादनमागमलक्षणं दूषयितुमुपन्यस्यति। **यस्मा**दित्यादि। **किल** शब्दोनभिप्रायद्योतकः।[1] **अग्निः शीतनोदनः** शीतस्य निवारकः। एतेनाग्निर्हिमस्य भेषजमित्येतद्**वाक्यं** यथा सत्यं तथा**न्यदपि वाक्य**मग्निहोत्रादिकं जुहुयादित्यादिकमवितथमेतत् साध्यं। **वेदैकदेशत्वा**दिति हेतुः। एवम**परो** वृद्धमीमांसको **ब्रवीत्**। उक्तवान्।

**अन्यस्त्वि**त्यादिना व्याचष्टे। **अन्यस्तु** मीमांसकः। यथोक्तदोषोपहतत्वात्। **अपौरुषेयमागमलक्ष**[2]**णं परित्यज्यान्यथा प्रामाण्यम्वेदस्य साधयितुकामः प्राह। अवितथानी**त्यादि। **यत्राप्रतिपत्ति**रिति येषु वेदवाक्येष्ववितथत्वेन बौद्धस्याप्रतिपत्तिस्तान्**यवितथानी**त्यनेन विशेषस्य पक्षीकरणात्। **वेदैकदेशत्वा**दिति। सामान्यस्य हेतुत्वेनोपादानान्न प्रतिज्ञार्थैकदेशता हेतोरस्ति। **यथा (।) "अग्निर्हिमस्य भेषजं"** प्रतिपक्ष **इत्यादि** वाक्यव(त्)[3]। आदिशब्दाद् द्वादश मासा सम्वत्सर इत्यादिवाक्यपरिग्रहः।

उत्तरमाह। **तस्ये**त्यादि। **तस्य** वादिन **इदं** साधनं शेषवत्। कस्माद् (।) **व्यभिचारित्वात्। ईदृशम**नुमानं **न्यायविदा** आचार्यदिग्नागेन प्रमाणसमुच्चये प्रति**क्षिप्त**मिति सम्बन्धः। किमिव शेषवदित्याह। **रसव**दित्यादि। यथा। स्वादितेन फलेन **तुल्यरूपत्वा**दनास्वादित[4]मपि फलं तुल्यमित्येतदनुमानं शेषवत्। तद्वत्। अदृष्टा अपि तण्डुलाः पक्वा एकभाण्डे पचनात्। दृष्टपक्वतण्डुलवदित्येव**मेकभाण्डे च पाकवत्**। यथैव तदनुमानं **शेषवत्** तथा मीमांसकोक्तमिति।

**स्वय**मित्यादिना व्याख्यानं। **ईदृशमनुमानं स्वयमाचार्येणा**साधनमुक्तमिति

**तुल्यरूपतया फलानां तुल्यरससाधनवत्। एकस्थाल्यान्तर्गमाद् दृष्टवददृष्ट-तण्डुलपाकसाधनवच्चासाधनमुक्तं। तदसाध[1]नत्वन्यायश्च पूर्वमेवोक्तः।**

**उक्तञ्चेदमागमलक्षणमस्माभिः। तत्तु सर्वस्य शक्यविचारस्य विषयस्य यथास्वं प्रमाणेन विधिप्रतिषेधविशुद्धो (?सिद्धौ) नान्तरीयकताभावेपि शब्दानामर्थेषु च संशयितस्य प्रवृत्तिः (।) तत्र कदाचिदविसम्वादसम्भवात्।**

**नन्वन्यत्र दृष्टप्रमाणोपरोधस्य पुरुषस्य प्रवृत्तिरिति। यः पुनः प्राकृतविषयस्य**

---

सम्बन्धः। क्व (।) **नै या यि का नां शेषवदनुमा**[5]नस्य **व्यभिचारमुद्भावयता** प्र मा ण स मु च्च ये। किमिव। यथा **तुल्यरूपतया** हेतुभूतयाऽनास्वादिताना-मपि **फलानामास्वादितफलेन। तुल्यरससाधनवत्। एकस्थाल्यन्तर्गमादिति** च हेतुना। **दृष्टपरिपक्वतण्डुलवददृष्टतण्डुलाना पाकसाधनवत्। तदसाधनत्वन्याय-श्चेति** तस्य शेषवतानुमानस्यासाध(न)[6]त्वन्यायश्च। यस्माददर्शनमात्रेण व्यति-रेकः प्रदर्श्यत इत्यादिना **पूर्वमेवोक्तः**। ननु च (।)

"आप्तवादाविसम्वादसामान्यादनुमानता" (प्र० वा० १।२१८)

इत्यादिना आचार्य दि ग्ना गे नाप्येकदेशाविसम्वादनमागमलक्षणमुक्त-मेवेति (।)

आह। **उक्तं चेदमित्यादि। उक्तं चेदम्** (।)

"एकदेशाविसम्वादिरूपमागमलक्षणम् (।)"

**अस्माभिर्नायं**[7] पुरुषो नाश्रित्यागमप्रामाण्यमासितुं समर्थं" इत्यत्रान्तरे। 214b

तत्रैकदेशाविसंवादनमागमलक्षणं नात्यन्तप्रसिद्धैकविषयसत्यताश्रयमपि तु **तत्त्वा**गमलक्षणं योऽर्वाग्दर्शनेन प्रमाणतः शक्यपरिच्छेदः। अशेषो विषयस्तस्य **सर्वस्य शक्यविचारस्य विषयस्य** (।) शक्यो विचारोस्येति विग्रहः। **यथास्वं प्रमाणेन विधिप्रतिषेधस्वीकृत**[1]सिद्धिवत् (?) विशुद्धा शास्त्रे प्रत्यक्षविषयत्वे-नाभिमतानां प्रत्यक्षत्वं। यथा बौ द्ध सि द्धा न्ते बुद्ध्यादीनां। तथा वस्तु-वलायातानुमानविषयाभिमतानां वस्तुबलानुमानविषयत्वं। यथा दुःखसत्यादीनां। आगमापेक्षानुमानविषयाभिमतानां च तथाभावः। त्रिविधस्य विषयस्य यथास्वं प्रमाणेन विधिसिद्धिः। प्रत्यक्षादिप्रमाणा वि[पय.....][2] ता नाम.प्रत्यक्षादित्वं यथास्वं प्रमाणेन प्रतिषेधसिद्धिः। एवं विधिप्रतिषेधसिद्धौ सत्याम्परिशिष्टेष्व-त्यन्तपरोक्षेष्व**र्थेषु शब्दानां नान्तरतीयकताभावे** सम्बन्धाभावे **सत्यपि** वरमगत्या **संशयितस्य** पुरुषस्य **प्रवृत्तिस्तत्रे**ति सर्वस्मिन् वस्तुन्यदृष्टव्यभिचार आगमे **कदाचिदविसम्वादसम्भवात्।**

**नन्वन्यत्रे**ति (।) यत्रागमे यथोक्तविषयश[.......त][3]प्रत्यक्षादित्रिविषयेपि

**वह्नेः शीतप्रतिघातसामर्थ्यस्याभिधानं सत्त्यार्थम्प्रद[2]र्श्य सर्वं सत्त्यार्थमाह शास्त्रं शक्यपरिच्छेदेपि विषये प्रमाणविरोधाद् बहुतरमयुक्तमपि (।)**

**नित्यस्य पुंसः कर्त्तृत्वं नित्यान्भावानतीन्द्रियान् ।**
**ऐन्द्रियान्विषमं हेतुं भावानां विषमां स्थितिं ॥ (३३४)**
**निवृत्तिञ्च प्रमाणाभ्यामन्यद्वा व्यस्तगोचरं ।**
**विरुद्धमागमापेक्षेणानुमानेन वा वदत् ॥ (३३५)**
**विरोधमसमाधाय शास्त्रार्थं चाप्रदर्श्य सः ।**
**सत्त्यार्थं प्र(ति)जानानो जयेद्धाष्टर्य्येन बन्धकीं ॥ (३३६)**

**अप्र[3]च्युतानुत्पन्नपूर्व्वापररूपः पुमान् कर्त्ता क्रमेण कर्म्मणाङ्कर्म्मफलानाञ्च**

---

**दृष्टः प्रमाणेनोपरोधो** वा। येन पुरुषेण तस्य **पुरुषस्य प्रवृत्तिर्न** युक्तेत्येवमागमलक्षणमुक्तमस्माभिः।

**यः पुन** र्मी मां स कादिः **प्राकृतपुरुषाणां विषयस्य वह्नेर्यच्छीतप्रतिघातसामर्थ्यन्तस्याभिधानमग्निर्हिमस्य** भेषजमित्येतद् वाक्यम्वेदैकदेशभूतं **सत्यार्थं**। दृष्टान्तत्वेनोप**दर्श्य स[4]र्वं सत्यार्थम्**वेदलक्षणं शास्त्रमित्याह। किम्भूतं शास्त्रं **शक्यपरिच्छेदे** प्रमाणगम्येपि **विषये प्रमाणविरोधाद् बहुतरमयुक्तमपि** तदेवंभूतं शास्त्रं प्रतिजानानो मीमांसकादिर्जयेद् धार्ष्ट्येन बन्धकीमिति वक्ष्यमाणेन सम्बन्धः।

बहुतरमयुक्तमपीत्युक्तन्तद्दर्शयन्नाह। **नित्यस्ये**त्यादि। वददित्येतत्पदं सर्वत्र सम्बन्ध(नीयं।)[5] नित्यः कर्त्ता पुरुषोस्तीत्येवन्नित्यस्य **पुंसः कर्त्तृ**त्वम्वदच्छास्त्रं। तथा **नित्यान् भावान्** वदत्। **अतीन्द्रियान**प्रत्यक्षानर्था**नैन्द्रियान्** प्रत्यक्षान् वदत्। तथा **विषम**मयुक्तं **हेतुं** भावानां वदत्। तथा **भावानाम्विषमां स्थितिं। निवृत्तिञ्च** भावानाम्विषमाम्वदत्। एतच्च वृत्तौ स्पष्टयिष्यामः। यथोक्तादन्य**द्वा** वस्तु **व्यस्तगोचरं**। व्यस्तः प्र[6]तिक्षिप्तो गोचरोवकाशो यस्य तत्तथोक्तं। केन व्यस्तगोचरमित्याह। **प्रमाणाभ्यां** प्रत्यक्षानुमानाभ्यां निरस्त(म)सम्भवमिति यावत्। तदेवम्भूतं वस्तु वदत्। तथा**गमापेक्षेणानुमानेन विरुद्ध**म्वदच्छास्त्रं। तदेवमनेकायुक्तार्थाभिधायकं शास्त्रं **सत्यार्थं प्रतिजानानो** वादी। **जयेद् धाष्टर्येन बन्धकीं**।

215a किमकृत्वा प्रतिजानान[7] इत्याह। **विरोध**मित्यादि। शक्यविचारे वस्तुनि शास्त्रस्य **विरोधमसमाधाया**परिहृत्य पुरुषशास्त्रप्रवृत्तौ निमित्तं **शास्त्रार्थञ्च** सम्बन्धानुगुणोपायपुरुषार्थलक्षण**मप्रदर्श्य प्रतिजानानः**।

**अप्रच्युतेरि**त्यादिना व्याचष्टे। **अप्रच्युतं पूर्वं** रूपं। **अनुत्पन्नं चापरं रूपं**

**भोक्ता (।) समवायिकारणाधिष्ठानभावादित्याह वेदः।(।)**

**तच्चायुक्तमित्यावेदितप्रायं। नित्यत्वं च केषांचिद् भावानामक्षणिकस्य वस्तुधर्मातिक्रमादयुक्तं। अप्रत्यक्षेणैव(? क्षाण्येव)सामान्यादीनि प्रत्यक्षाणि (।) जन्मस्थितिनिवृत्तिश्च विषमाः(।)पदार्थानामनाधेयविशेषस्य प्रागकर्त्तुः परापेक्षया जमक[4]त्वं (।) निष्पत्तेरकार्यरूपस्याश्रयवशेन स्थानं (।) कारणाच्च विनाश**

---

यस्येति विग्रहः। ईदृशः किल **पुमान्** सुकृतदुष्कृतानां **कर्मणां क्रमेण[1] कर्त्ता। कर्मफलानां च भोक्ता**। केन प्रकारेण भोक्ता कर्त्ता चेत्याह। पूर्वकर्मजनितसुखदुःखादिसम्विर्त्ति प्रति समवायिकारणभावेनात्मा कर्म फलानाम्भोक्ताः। तदुक्तं।

"सुखदुःखादिसम्वित्तिसमवायस्तु भोक्तृते"ति।

शुभाशुभकर्मकरणे ज्ञानप्रयत्नादिकं प्रति अधिष्ठानभावेनात्मा कर्मणा कर्त्ता। तदुक्तं (।)

"ज्ञानयत्नाभिसम्बन्धः क[2]र्त्तृत्वन्तस्य भण्यत" इति।

आदिग्रहणात्। जडरूपस्याप्यात्मनश्चेतनायोगेन भोक्तृत्वं गृह्यते। तदुक्तम् (।)

"भोक्ता च चेतनायोगात् चेतनं न स्वरूपत" इति।

तदेवं **समवायिकारणाधिष्ठानभावादि**नेत्याह वेदः। **तच्चैतदयुक्तमित्यावेदितप्रायं**। स्वयमेव शास्त्रकारेण नित्यानां कार्यकारणभावासम्भवन्दर्शयता। **नित्यत्वं चायुक्तं केषां(चद् भा)[3]** वानाम्वेद आहेति सम्बन्धनीयं। कस्मादयुक्तम्(।) **अक्षणिकस्य** क्रमयौगपद्याभ्यामर्थक्रियाविरोधेन **वस्तुधर्मातिक्रमात्**। अर्थक्रियासमर्थं हि वस्तु। तच्चार्थक्रियासामर्थ्यमक्षणिकस्य न सम्भवतीत्य सदेव (।) तत्कृतस्तस्य वस्तुधर्मः। **अप्रत्यक्षाण्येव सामान्यादीनीति** (।) आदिशब्दात् क्रियागुणादीनि **प्रत्यक्षाणी**त्याह वेदः। **जन्म** च **स्थितिश्च नि(वृ)[4]त्तिश्च** ताश्च भावानाम्**विषमाः** प्राह वेदः। जन्मनो वैषम्येण विषयो हेतुर्भावानामुक्तः सूत्रे।

तमेव विषमं हेतुमाह। **अनाधेयस्ये**त्यादि। नित्यत्वाद**नाधेयातिशयस्य प्रागि**त्यर्थक्रियाकालावस्थायाः पूर्वम**कर्त्तुः** पश्चात् **परापेक्षया** सहकार्यपेक्षया। **जनकत्व**माह **वे**दः। तच्चैतदयुक्तमिति विस्तरेण प्रतिपादितं[5]।

**निष्पत्ते**रित्यादिना विषमस्थित्यभिधायित्वम्वेदस्याह। स्वहेतुतो **निष्पत्ते**र्निष्पन्नत्वाद**कार्यरूपस्य** भावस्या**श्रयवशेन स्थान**माह वेदः। तच्चैतदयुक्तं सर्वनिरशंस्य नान्यबलेन स्थानमिति प्राक् प्रतिपादितं।

विषमां निवत्तिन्दर्शयन्नाह। **कारणाच्च** विनाशहेतोः सकाशाद भावानाम्वि-

**इत्यादिकमन्यदपि प्रत्यक्षानुमानाभ्यां प्रसिद्धिविपर्ययमागमाश्रयेण चानुमानेन वाधितमग्निहोत्रादेः पापशोधनसामर्थ्यादिकं।**

**तस्यैवंवादिनो वेदस्य सर्वत्र शास्त्रशरीरे प्रमाणविरोधमप्रतिसमाधाय सम्बन्धानुगुणोपायपुरुषार्थाभिधाना[5]नि च शास्त्रधर्म्मानप्रदर्श्य अत्यन्तप्रसिद्ध-विषयसत्याभिधानमात्रेण प्रज्ञाप्रकर्षदुरवगाहगहने निरत्ययतां भावयितुकामो**

---

नाश इत्याह वेदः। तच्चायुक्तम (.........)[6]द्विनाशस्येति प्रतिपादितं।

एवमादिकमन्यदपि सदित्याह वेदः। किंभूतं (।) **प्रसिद्धविपर्ययं**। असत्त्वं हि सत्त्वविपर्ययः। प्रसिद्धो विपर्ययो यस्य (।) केन (।) **प्रत्यक्षानुमानाभ्यां** (।) तस्य सत्त्वमाह वेद इत्यर्थः। **अग्निहोत्रादेः** (।) आदिशब्दात् तीर्थस्नानादेः **पाप-**

215b **शोधनसामर्थ्यादिकमा**ह वेदः। अत्राप्यादिशब्दाद् धर्मोपचया[दि.........][7] **गमाश्रयेणानुमानेन बाधितं**। तथा हि (।) अधर्मो रागादिरूपस्तत्प्रभवं च कर्मे-त्यागमव्यवस्था। द्वयमप्येतदग्निहोत्रादिना न बाध्यत इति कथमधर्मस्य तेन विशुद्धिः। धर्मवृद्धिर्वा कथन्ततः (।) धर्मस्यालोभादितत्प्रभवकर्मस्वभावत्वात्। तीर्थस्नानादीनां चातत्स्वभावत्वात्। आदिशब्दादन्यदप्येवंजातीयकमयुक्ताभि-धानं द्रष्टव्यं।

**तस्यैव** [.......[1]]। **वादिनो वेदस्य सर्वत्र** प्रत्यक्षादिविषये त्रिविधेपि **शास्त्रशरीरे** शास्त्रप्रतिपाद्ये वस्तुनि। **प्रमाणविरोधमसमाधाया**परिहृत्य। **शास्त्रे** प्रवृत्त्यङ्गभूता **धर्मास्तानप्रदर्श्य**।

के पुनस्ते धर्मा इत्याह। **सम्बन्धे**त्यादि। परस्परं पदार्थानां सङ्गतार्थता **सम्बन्धः**। शक्यसाधन उपायः। **अनुगुणोपायः**। यः शास्त्रे **पुरुषार्थ**साधन उ[क्त.....दृ][2] ष्टस्स पुरुषेण साधयितुं शक्यत इति यावत्। अभ्युदयनिः-श्रेयसं पुरुषार्थः। सम्बन्धश्चानुगुणोपायश्च पुरुषार्थश्चेति द्वन्द्वः। तेषा**मभिधा-नानि**।

ननु विरोधासमाधानादेव शास्त्रस्याग्राह्यत्वमुक्तन्तत्किं शास्त्रधर्मप्रद-र्शनेनोक्तेन।

एवम्मन्यते (।) प्रत्यक्षानुमानविषये विशुद्धमुपदर्श्य कदाचिदन्यत्र सम्ब-न्धादिरहिते ब्रू [...........][3] दर्थं शास्त्रधर्माप्रदर्शनमुक्तं।

एवं सम्बन्धाद्यभिधानानि च शास्त्रधर्मानप्रदर्श्या**त्यन्तप्रसिद्धविषयसत्यार्थ-ताभिधानमात्रेणे**त्यत्यन्तप्रसिद्धो विषयो वह्नेः शीतापनोदसामर्थ्यं तस्याभिधानं सत्यन्तेन सत्याभिधानमात्रेण। प्रज्ञाप्रकर्षेणापि दुःखेनावगाह्यत इति **प्रज्ञाप्रकर्ष-दुरवग्राहः**। तत एव **गहनन्तस्मिं**स्तथाभूतेपि (विष)[4]येऽत्यन्तपरोक्षेपीति यावत्।

**बन्धकीमपि प्रागल्भ्येन विजयते। काचित् किल बन्धकी स्वयं स्वामिना विप्रतिपत्तिस्थाने दृष्टोपालब्धा। सा तम्प्रत्युवाच। "पश्यत मातः पुरुषस्य वैपरीत्यं (।) मयि धर्म्मपत्न्यां प्रत्ययमकृत्वात्मी[6]ययोर्नेत्राभिधानयोर्जलबुद्बुदयोः करोति। तेन जरत्काणेन ग्राम्यकाष्ठहारकेण प्रार्थितापि न सङ्गता। रूपगुणानुरागेण किल मन्त्रिमुख्यदारकङ्कामयेऽहमिति" (।) एवंजातीयकमेतदपि वहनेः शीतप्रती-**

---

**निरत्ययतां** सत्यार्थतां **साधयितुकामो** मीमांसको **बन्धकीमपि प्रागल्भ्येन** धार्ष्ट्येन **विजयते** (।) यादृशीञ्च बन्धकीम्विजयते तां **कञ्चिदि**त्यादिना दर्शयति। **बन्धकी** दुश्चारिणी। **स्वयं स्वामिना विप्रतिपत्तिस्थाने दृष्टेति** विप्रतिपत्त्यवस्थायान्दृष्ट्वा परपुरुषेण सङ्गता त्वमित्युपालब्धा सती। **सा तँ** स्वामिनं **प्रत्युवाच**। प्रत्यु [त्त . . . . . . . . . . . . .][5] कथं प्रत्युवाचेत्याह। **पश्यते**त्यादि। पार्श्वस्थाः स्त्रियो मात इत्यनेनामन्त्र्यन्ते (।) **मातः पश्यत पुरुषस्य** मदीयस्य स्वामिनो **वैपरीत्यं**। ननु पश्यतेति लोड्मध्यमपुरुषबहुवचनान्तमेतत्। ततश्च मातृशब्दादपि बहुवचनमेव युक्तम्मातर इति (।) नत्वेके प्रतिपन्ना मातृशब्देनामन्त्रितैकवचनान्तेन समानार्थो मातः शब्दोस्ति। वि[. . . . . .][6] स्वरप्रतिरूपकाश्च निपाता इत्यनेन न्यायेन। स चाव्ययत्वात् सर्वेषु वचनेषु तुल्यरूप इति बहुवचनेनापि पश्यत शब्देन सम्बध्यमानो मातरित्येव प्रयुक्त इति। अन्ये तु पश्यत मातरः पुरुषस्येति पठन्ति। धर्मस्य साधनभूता पत्नी धर्मपत्नीति मध्यपदलोपी समासः। **मयि धर्मपत्न्यां प्रत्ययमकृत्वा आत्मीययोर्ज**लबु[द्बुद . . .])[7] द्वाञ्**जलबुद्बुदयोर्द्व**योर्नेत्राभिधानयोः **करोति** प्रत्ययमिति प्रकृतं। नेत्रमित्यभिधानं ययोरिति विग्रहः। परपुरुषेणासंगतेः कारणमाह। **तेने**त्यादि। जरंश्चासौ काणश्चेति **जरत्काणः**। वृद्धकाणेनेत्यर्थः। तत्र जरद्ग्रहणेन वयोवैकल्यमुक्तं। परं रूपस्थानं चक्षुरिति तद्वैकल्यात् काणग्रहणेन वैरूप्यं। **ग्राम्य**ग्रहणेन वैदग्ध्यादिगुण[1]वैकल्यं। **काष्ठहारक**ग्रहणेन कृच्छ्रजीवित्वात् दारिद्र्यमुक्तं। तदेवं वृद्धत्वादिगुणयुक्तेन पुरुषेण सङ्गत्यर्थं **प्रार्थितापि** सती। **नाह**न्तेन सह **सङ्गता** प्राक्। **रूपगुणानुरागेण**। रूपं प्रासादिकता। गुणो वैदग्ध्यादिको धर्मः। रूपगुणयोरनुरागोभिलापस्तेन हेतुना। **मंत्रिमुख्यदारकं**. मन्त्रिप्रधानदारकं युवानं पुत्रं। [मन्त्रिमु][2]ख्यश्चासौ दारकश्चेति विग्रहः। तमेवंभूतं दारकं **कामयेहमिति** कथमिदं सम्भाव्यते। तत्र वृद्धादिदोषचतुष्टयवैपरीत्येन मन्त्रिमुख्यदारके गुणचतुष्टयमुक्तं। रूपग्रहणेन प्रासादिकत्वं गुणग्रहणेन वैदग्ध्यादिः। मन्त्रिमुख्यग्रहणेनैश्वर्यं। दारकग्रहणेन वयोगुणः। एतच्च बन्धक्या धार्ष्ट्यात् प्रेरितमेव केवलस्वम्वच[नं न][3] तु युक्तियुक्तं। रूपादीनामेव कामहेतु- 216a

**कारवचनेन दृष्टप्रमाणविरोधस्याप्यत्यन्तपरोक्षेऽर्थेऽविसम्वादानुमानं।**

**सिध्येत्प्रमाणं यद्येवमप्रमाण[7]मथेह किं ।**
**न ह्येकन्नास्ति सत्त्यार्थम्पुरुषे बहुभाषिणि ।। (३३७)**

**यथेदमतिदुष्करमत्यन्तसत्त्याभिधानं तथाऽत्यन्तासत्त्याभिधानमपि। तत्रैकस्य** 38a **वचनस्य कथञ्चित् संवादेनावशिष्टस्य तद्वचनराशेस्त[8][थाभावे न कश्चित् पुरुषो नाप्तः स्यात्]।**

---

त्वान्न तु वार्द्धक्यादीनां।

**एवंजातीयक**मित्यादिना दृष्टान्तार्थं दार्ष्टान्तिके योजयति। **एवंजातीयकमि**ति बन्धकीप्रतिवचनतुल्यं। **एतदत्यन्तपरोक्षेर्थे** वेदस्या**विसम्वादानुमानं** (।) किम्भूतस्य वेदस्य शक्यविचारे वस्तुनि **दृष्टप्रमाणविरोधस्य**। दृष्टः प्रमाणविरोधोस्येति विग्रहः। [वह्निशीतनोदन][1]दृष्टान्तेनानुमानं। वह्नेः **शीतप्रतीकारवचनेन**। यथाग्निर्हिमस्य भेषजमिति वाक्यमविसम्वादि। तथान्यदपि वेदवाक्यमविसम्वादीति।

तत्र धर्मपत्नीस्थानीयो वेदः। विप्रतिपत्तितुल्यन्नित्यस्य पुंसः कर्त्तृत्वाद्यभिधानं। नेत्रतुल्ये प्रत्यक्षानुमाने। न च दृष्टव्यभिचारायाः पत्न्या वचनं गरीयस्तस्य पुरुषस्य येन [............][5] यम्विप्रतिपत्तिं दृष्ट्वापि स्वदर्शनमप्रमाणीकृत्य तस्या वचनं यथार्थं कुर्यात्। एवम्वेदोक्तार्थबाधकयोः प्रमाणयोरप्रमाण्यं कृत्वा न वेदस्य पत्नीस्थानीयस्य दृष्टव्यभिचारस्य वचनादत्यन्तपरोक्षं प्रतिपद्येमहीति। (३३६)

अत्रैव दोषान्तरमाह। **सिध्येदि**त्यादि। **एवमि**ति यथा दृष्टैकसत्याभिधानमात्रेण **यदि** सर्वो वेदः। [.......प्र][6] **माणं सिध्ये**त्तदा सर्वः पुरुषस्सर्वत्राथ प्रमाणं स्यात्। यस्मा**न्न हि पुरुषे बहुभाषिण्येकं** वचनं **सत्यार्थं नास्ति** (।) किन्त्वस्त्येव।

**यथे**त्यादिना व्याचष्टे। **यथेदमत्यन्त**मभिधायित्वं। एकान्तेन सत्यवादित्व**मतिदुष्करं**। अत्यन्तदुःखेन क्रियत इति कृत्वा। तथा**त्यन्तं**। **सत्याभिधानमति**-

216b दुष्करन्**तत्रै**वंस्थिते न्याये। **एकस्य** [......**वच**][7] **नस्य कथंचि**दिति का क ता ली य न्यायेनापि यस्स**म्वाद**स्सत्यार्थत्व**न्तेन** हेतुना। तस्मादविसम्वादकाद् वचनादविशिष्टस्य **तद्वचनराशे**रिति यस्य तदेकम्वचनमविसम्वादि दृष्टन्तस्य पुरुषस्य वचनराशेः। **तथाभावे**ऽविसम्वादित्वेऽभ्युपगम्यमाने। **न कश्चित् पुरुषो नाप्तः स्यात्**। किन्तु सर्व एवाप्तः स्यात्। न चैवं। तस्मान्नैकदेशाविसम्वा[दात्...
....प्रामा][1] ण्यमिति।

(अपि च ।

**नायं स्वभावः कार्यं वा वस्तूनां[6] वक्तरि ध्वनिः ।**
**न च तद्व्यतिरिक्तस्य विद्यते(ऽव्यभिचारिता) ॥३३९॥**

न तावद् वचनं वाच्यानां स्वभावः। नाप्येषां कार्यम्। तदभावेऽपि वक्तृ-विवक्षा[7]मात्रेण भावात्, न चान्यः कश्चित् अव्यभिचारी अस्ति। व्यभिचारिणि च सति ततोऽन्यथापि तत्सम्भवात्। तस्य भावात् तत्प्रतीतिरयुक्ता। 534b

**प्रवृत्ति[1]र्वाचकानाञ्च वाच्यदृष्टिकृतेति चेत् ।**

एवं हि सति वाक्यस्य कार्यमेव, वाचकस्य हि वाच्यदर्शनेन प्रवृत्तेः। एवं सति—

---

अपि च यो नाम कश्चित् कस्यचिद् गमकः स तत्स्वभावस्तज्जन्यो वा सन् गमयेन्नान्यथा। न चायं ध्वनिर्वाच्यत्वेनाभिमतानां वस्तूनां स्वभावः (।) किं कारणं (।) यस्माद् वक्तरि ध्वनिः स्थितो न ह्यन्यस्वभावोन्यत्र वर्त्तते। वस्तूनां कार्यं वा (।) नायं ध्वनिः (।) किं कारणं (।) यस्माद् वक्तरि मतिध्वनिर्भवति। तेनायमर्थः। (।) यस्माद् वक्तुरिच्छामात्रप्रतिबद्धो न बाह्यवस्तु [......][2] इत्यर्थः। न च तद्व्यतिरिक्तस्येति स्वभावकार्यव्यतिरिक्तस्यार्थस्याव्यभिचारिता विद्यते।

नेत्यादिना व्याचष्टे। तावच्छब्दः क्रमे। एतद् वक्तृस्थम्वचनं न तावद् वाच्यानामर्थानां स्वभावः। नाप्येषां वाच्यानां कार्यं। किं(ङ्) कारणं (।) तदभावेपि। वस्तूनामभावेपि विवक्षामात्रेण भावादुत्पत्तेर्न च कार्यस्वभावाभ्यामन्यः कश्चित् कस्यचिदव्यभिचारी हेतुरस्ति। वा[......][3] व्यभिचारे च सति शब्दस्य ततोन्यथापीति। तस्माद् बाह्यार्थादन्यथापि बाह्यार्थभावेपीत्यर्थः। तत्सम्भवात् तस्य शब्दस्य सम्भवात् कारणात्। तस्य शब्दस्य भावात् तत्प्रतीतिर्बाह्यार्थप्रतीतिरयुक्ता।

स्यादेतद् (।) यद्यपि वाच्याद् वस्तुनोर्थान्तरं वचनन्तथापि तस्य वाच्यस्य कार्यमेवेति गमकमेव। यस्माद् वाचकानां शब्दानां या प्रवृत्तिरुत्पत्तिरभिव्यक्तिर्वा सा वा[च्य दृ][4]ष्टिकृता। वाच्यस्यार्थस्य यद्दर्शनन्तत्कृता। वाच्ये हि सति तद्दर्शनन्तद्दर्शनं (।) तद्दर्शनात् तद्विवक्षा। विवक्षातो वचनमिति पारम्पर्येण वचनमर्थकार्यमिति पूर्वपक्षः।

स्यादेतदित्यादिना व्याचष्टे। तस्माद् वाचकस्य शब्दस्य वाच्यदर्शनेन प्रवृत्तेः

---

[1] Restored.

**परस्परविरुद्धार्था कथमेकत्र सा भवेत् ॥३४०॥**

**यदि[2] एष नियमो वाच्येन वस्तुना विना शब्दो न प्रवर्त्तेत[1] इति भिन्नेषु प्रवादेषु एकत्र वस्तुनि विरुद्धस्य स्वभावस्योपसंहारेण वृत्तिर्न स्यात्। न ह्यस्त्ययं सम्भवो यदेकः शब्दो निःपर्यायं नित्यश्च स्यादनित्यश्चे[3]ति।**

**वस्तुभिर्न्नागमास्तेन कथञ्चिन्नान्तरीयकाः।**
**प्रतिपत्तुर्न्न सि[ध्यन्ति] कुतस्तेभ्या[ऽर्थनिश्च]यः ॥३४१॥**

**आगमस्य प्रमाणं तदार्दाशता[4]र्थप्रतिपत्तयेऽज्ञो जनः समन्विच्छति। समधिगतयाथातथ्यानां उपदेशानपेक्षणात्। अतीन्द्रियगुणपुरुषस्य विवेचनेऽसामर्थ्यात्[5]।**

---

एवमित्यादिना प्रतिविधत्ते। **एवं सतीति** यद्यर्थवशेनैव वचनप्रवृत्तेस्सर्वा वचनप्रवृत्तिः सत्यार्था......[5]देकत्राभिधेये आगमभेदेन **परस्परं विरुद्धार्था सा** वचनवृत्तिः **कथम्भवेत्**। नैव भवेत्। सर्वप्रवादेष्वेकार्थैव भवेदिति यावत्।

**यदी**त्यादिना व्याचष्टे। **यद्येष नियमो** वाच्यमवस्त्वन्तरेण **वाच्येन वस्तुना विना शब्दो न प्रवर्त्तेत इति** तदा परस्परविरुद्धार्थाभिधानाद् **भिन्नेषु प्रवादेषु** सिद्धान्तेष्वेकत्र **वस्तुनि**। नित्यानित्या [दे........वि][6]रुद्धस्य **स्वभावस्योपसंहारेण** समारोपेण वचनवृत्तिर्न **स्यात्**। यतो **न ह्यस्त्ययं सम्भवो यदेकः शब्दो निःपर्याय**मिति प्रकारान्तरेण विनेत्यर्थः। **नित्यश्च स्यादनित्यश्चेति**। शब्दग्रहणमुपलक्षणार्थं (।) तेन घटादिरपि निःपर्यायान्नित्यश्च। नित्यश्च न सम्भवत्येव। भवति च कस्यचित् प्रवादे नित्यः शब्द इति [व......][7]त्तिरन्यस्यानित्य इत्येवं सात्मको निरात्मक इत्यादि।

217a

तस्मान्नास्ति शब्दानां बाह्यैरर्थैस्सह सम्बन्धः।

यत एवन्तेन कारणेन **प्रतिपत्तुः** पुरुषस्य। **वस्तुभिः** सह**आगमा नान्तरीयका** अविनाभाविनो [न कथंचित्प्रतिपत्तुः सिध्यन्ति तत्कुतस्तेभ्य] आगमेभ्यो वस्त्वनान्तरीयकेभ्यो[र्थनिश्चयो न वा निश्चयः।. आगमस्य प्रमाणां][1] न सर्वोन्विषते किन्त्व**ज्ञो जनः। समन्वेषते** किमर्थं (।) **तदार्दाशतार्थप्रतिपत्तये**। तेनागमेनोपदर्शितस्यार्थस्य **प्रतिपत्त्यर्थं**। किङ्कारणमज्ञ एव समन्वेषते नान्य इत्याह। **समधिगतं याथातथ्यं** पदार्थानामविपरीतं रूपं यैस्तेषामधिगतपरमार्थानां परो**पदेशानपेक्षणात्**। येनाप्यज्ञेनान्वेषणीन्तस्य [.......ा][2] तीन्द्रिया गुणा यस्य पुरुषस्य **सोतीन्द्रियगुणः** (।) पश्चात् पुरुषशब्देन विशेषणसमासः। तस्य **पुरुषस्य विवे-**

---

[1] Mthon-pa-mi-śes-pa.

समीहितार्थसत्तामन्तरेण वाक्यानां वृत्ति अजानतां)[१] अदृष्टव्यभिचारवचसामपि पुंसां वाचि किमियं यथार्था नेति वेति भवितव्यमेव शंकया।[6] तेन न युक्तं अनेन कस्यचित् किञ्चिदपि निश्चेतुम्।

अस्य।

तस्मा[न्न तन्निवृत्त्यापि वस्त्वभा]वः प्रसिध्यति।

यदुक्तं, सर्वविषयत्वादागमस्य सति वस्तुनि[7] अविसंवादेनास्य प्रवर्त्तनात्, तन्निवृत्तिलक्षणानुपलब्धिरभावं साधयिष्यतीति। तच्चास्य सर्वविषयत्वमस्ति। वस्त्वन्तरेणावृत्तौ स्यात्। ततः प्रतिपत्तुकामस्याभिमता सिद्धिरित्युक्तम्।[2]

तेनासन्निश्चयफलाऽनुपलब्धिर्न सिध्यति ॥ ० ॥३४२॥

तस्मान्न प्रमाणत्रयनिवृत्तावपि विप्रकृष्टेष्वर्थेष्वनिश्चयः।

वेदप्रामाण्यं कस्यचित् कर्तृवादः स्नाने धर्मेच्छा जातिवादावलेपः। सन्तापा-

---

चनेऽयं सर्वज्ञो नान्यो वा वितथाभिधायीत्येवं विभागक्रियायामसामर्थ्यात्। तत्कुतस्तथाभूतपुरुषप्रणीतं वचनमागमत्वेन निश्चित्य प्रवर्त्तेत।

न च सर्वस्य सर्वाणि वचनानि यथार्थं प्रवर्त्तमानानि पर.........[3] नां च समीहितोभीष्टो योर्थस्तस्य सत्तामन्तरेणापि वृत्तिमपश्यतः प्रतिपत्तुः पुरुषस्य भवितव्यमेव वाचि शंकया। किमियं यथार्था वाङ् नेति वेति। केषां वाचि। अदृष्टव्यभिचारवचसामपि। शक्यविचारे वस्तुन्यदृष्टव्यभिचारं वचो येषान्तेषामपि वाचि। अपिशब्दाद् दृष्टव्यभिचारवचसामपि वाचि सुतरां शंकया ..............[4] येन शंका तेन कारणेन न युक्तमनेनाज्ञेन प्रतिपत्त्रा कस्यचित् पुरुषस्य वचनेन किञ्चिद् वस्तु निश्चेतुं। यतश्चानिश्चयस्तस्मादस्य प्रतिपत्तेस्तन्निवृत्त्याप्यागमनिवृत्त्यापि प्रतिषेध्याभिमतस्य भावस्याभावो न प्रसिध्यति।

यदुक्तमित्यादिना व्याचष्टे। यदुक्तं प्राक् (।) सर्वविषयत्वादागमस्य सति वस्तुन्यवि[सम्वादेना.......][5] करणात्। तन्निवृत्तिलक्षणेत्यागमनिवृत्तिलक्षणानुपलब्धिः स्वभावादिविप्रकर्षिणोप्यर्थस्याभावं साधयिष्यतीति। तदित्यभावनिश्चायकत्वमस्येत्यागमस्य• नैवास्यागमस्य। सर्वविषयत्वमस्ति। पुरुषार्थासम्बद्धानामर्थानामविषयीकरणात्।

अभ्युपगम्याप्युच्यते। आगमस्य सर्वविषयत्वे [पि यदि.........[6]यद्य]

---

[1] Restored.

रम्भः **पापहानाय चेति ध्वस्तप्रज्ञा(नां पञ्च)लिङ्गानि जाड्ये ॥**

**¹(महानैयायिकेन सकलभूतलवादीभशिरोविक्रमसिंहेनाशेषदिङ्मधुरकीर्तिना आचार्यश्रीधर्मकीर्त्तिना निबद्धा प्रमाणवार्त्तिकप्रथमपरिच्छेदवृत्तिः समाप्ता। मंगलम्।)**

---

वृत्तिः स्यात्तदा **वस्त्वन्तरेणावृत्तौ** सत्यां स्यादागमनिवृत्तिलक्षणस्यानुपलम्भस्याभावनिश्चायकत्वं (।) तच्च नास्ति वस्त्वन्तरेणाप्यागमस्य वृत्तेः।

एवं च सति **ततोर्थव्यभिचारिण** आगमात् **प्रतिपत्तुकामस्य पुंसोभिमतार्था-सिद्धिरित्युक्तं**। तेन कारणेन विप्रकृष्टेष्वमन्निश्चयफलेत्यसद्व्यवहार [विष

217b ..............][7] न सिध्यति।

**तस्मान्न प्रमाणत्रयनिवृत्तावपि** प्रत्यक्षानुमानागमसंज्ञितस्य प्रमाणत्रयस्य निवृत्तावपि देशकालस्वभावविप्रकृष्टेष्वर्थेष्वनिश्चय इत्युपसंहारः।

अयुक्ताभिधायित्वे दिङ्मात्रन्तीर्थिकानान्दर्शयन्नाह।

(१) **वेद** इत्यादि। इति शब्दो वादशब्दश्चात्र वक्ष्यमाणकस्सम्बन्धनीयः। तेनायमर्थः (।) **वेदप्रामा**[ण्य..................**जाड्ये**][1] लिङ्गं।

ननु गुणेन षष्ठीसमासप्रतिषेधाद् वेदस्य प्रामाण्यमिति भवितव्यं।

नायं दोषो लोकप्रसिद्धानाम्विशिष्टानामेव गुणानान्तत्र ग्रहणात्। अस्य च लिङ्गमधिकरणैतावत्व इत्यादिको निर्देशः।

(२) **कस्यचित्** नै या यि का देरीश्वरस्तत्त्वादीनां **कर्त्तेत्ययमपि वादो** जाड्ये लिङ्गं।

(३) **तीर्थस्नाने धर्मेच्छा** जाड्यलिङ्गमप[र.............][2] मोहादिस्तज्जनितं च कायवाक्कर्म्म धर्मस्तद्विपरीतञ्च जलसंश्लेषमात्रलक्षणं स्नानमिति कुतस्ततो धर्मप्राप्तिः। विस्तरेण निराकृतश्चायन्तीर्थस्नानवाद आचार्य व सु ब न्धु प्रभृतिभिरिति नेह प्रतन्यते।

(४) शीलादिगुणवैकल्येपि ब्राह्मणोहमिति **जातिवादेनावलेपो दर्पो** जाड्यलिङ्गमयुक्तत्वात्। [तथा हि प्र..............गृ][3]हीत्वा जातिवादावलेपः स्यात्। ब्राह्मणेन पित्रा ब्राह्मण्या गर्भे य उत्पादस्तं वा समाश्रित्य। तत्र वस्तुभूतसामान्यनिषेधान्न पूर्वः पक्षः। नाप्युत्तरः ब्राह्मणब्राह्मणीशरीरयोरशुचिस्वभावत्वेन शरीरान्तरादविशेषात्।

---

¹ Restored.

(५) अनशनादिना शरीरपीडनं सन्तापस्तस्यारम्भोनुष्ठानं पापहानाय। पापस्य [............ ........][4] जाड्ये लिङ्गं। तथा हि (।) सर्वस्य पापस्य निदानं लोभद्वेषमोहाः। तैश्चाविरुद्धः सन्तापारम्भ इति कुतस्तेन पापशुद्धिः।

एतानि पंच लिङ्गानि जाड्ये। किंविशिष्टे जाड्ये। ध्वस्तप्रज्ञाने। प्रमाणावलम्बिज्ञानं प्रज्ञानन्तद् ध्वस्तं यस्मिन् जाड्ये तत्तथोक्तं। न्यायानुसारिज्ञान रहित इत्यर्थः। यथास्थलमुपादानात् पञ्चेत्युक्तम............[5] लिङ्गानीति ॥०॥

भट्टोद्योतकरादिषु प्रतिपक्षो येषां महान् विद्यते
सद्वस्त्वाकरधर्मकीर्तिजलधेरन्तर्निमग्नम्मनः।
पौर्वापर्यविमर्षिणी स्मृतिरलं प्रज्ञापि चोत्कर्षिणी
यत्किञ्चिद् गदिन्तदत्र निपुणैस्तैरेव विज्ञास्यते॥
अर्थोत्खातपरम्परासु महती वाचः प्रसन्नात्मता
यस्यामन्यसुभाषिताऽ [...............][6]तिः।
दर्पाध्मात(?)समस्ततीर्थिकमतध्वंसश्च सं(वेद्य)ते
टीकेयं सुविलक्षणोदितधियामावर्जनीया कथमिति ॥०॥

क ण र्ण क गो मिविरचितायाम्प्रमा(णवार्त्तिकवृत्ति...............
.......... ...प्रमाण...................)॥०॥

# परिशिष्टम् (१)

## नाम-सूची


अद्वैतवादः—११५
अध्ययनः (नैयायिकः) ६०, ६८
अविद्धकर्णः—१६, २५, ६०, ६८
अष्टकः—४३८ (ऋषिः)
आचार्यः (दिग्नागः)—५८, ६०, ६३, १६५, ३२७, (दिग्नागोऽपि द्रष्टव्यः)
आचार्यः (धर्मकीर्त्तिः)—४१, ५१, ६७, १२६, १७१, १७४, २०३, २१४, २१५, २२४, २२६, २२७, २३७, २३९, २५२, २७५, २८९, ३०९, ३११, ३२९, ३३५, ३४२ ३४५, ३५१, ३६४, ३६५, ३७५, ३८०, ३९१, ४१२, ४२५, ४२७, ४४७, ४४८, ४८९, ४९२, ४९५, ५०५ ५०६, ५१०, ५३२, ५८६
आचार्यीयः (—आचार्य-शिष्यः)—६८, ७२
आर्हताः (—जैनाः)—४४६
आहुरकः (वेद-शाखा)—५९६
ईश्वरसेनः (—धर्मकीर्त्तिगुरुः)—१२, ६१
उद्योतकरः—२०, ४६, ७८, ८४, ९०, ११०, ११६, १४४, १५५, २०७, २२३, २३३, २४३ २४८, २५२, २५३, २६१, २७५, २७७, २८१, २९९, ३०१, ३०५, ३१० ३१६, ३८८, ३८९, ४५२, ६१९
उर्वशी—५५१, ५९८
उम्बेकः—२१, ४९७
कम्बुनीतंत्रम्—५७८
कर्णकगोमी—६१९
काणादः—४२८
कीर्त्तिः (—धर्मकीर्त्तिः)—८३
कुमारसम्भवम्—४३८ ४३९,
कुमारिलः (भट्टः)—१७, १८, ८४, ८७, ९४, ११४, १२९, १३९, १४४, (१५५, १८८), ४३८
क्षपणकाः (—जैनाः)—३३९
गारुडाः—४४६
(जयानन्तभट्टः ?)—८३
जैनाः—१४३
जैमिनिः—१४३, ४३८, ५५२, ५८५ ५८६, ५८९, ५९० ५९६, ५९९ ६०४
जैमिनीयाः—५३५, ५५१
डाकिनीतंत्रम्—५७८
डिंडिमपुराणम् (जैनानां)—४४८ ४४९
तर्कशास्त्रम—१४

तीर्थिकाः—६, ७२
दिगंबराः—१०६, ३३२, ३३३, ३३६, ३३६ (द्रष्टव्या आर्हताः, क्षपणकाः, जैनाः, नग्नाश्च)
दिग्नागः—१, ३, ४, ६, २४, २६, ५७, ६०, १६५, १६६, २००, २०२, २०४, २२७, २४८, २४६, २५३, २६२, ३५०, ३५३, ३८३, ३८६, ३६०, ३६४, ५४५, ६०८, ६०६ (द्र० आचार्यः)
धर्मकीर्त्तिः—३, ४, ५, ६१८ (द्र० आचार्यः)
नग्नाः (जैनाः)—४४८
निरुक्तकारः—२४६
नैयायिकाः—४६ (अक्षपादः), ११३, १५८, ३५८, ५४६, ५५०, ६०६, ६१८
नैरात्म्यसिद्धिः (कर्णकगोमिग्रन्थः)—३२, ८१, ८२, ६२, ६५
नैरुक्ताः—४५८
न्यायमुखम् (दिग्नागस्य)—५८, ७६
पाटलिपुत्रम्—६०४
पाणिनिः—५६४
पुरूरवा—५५१
(प्रमाण-)विनिश्चयः (धर्मकीर्त्तेः)—५०
प्रमाणसमुच्चयः (दिग्नागस्य)—३, ४, ५७, ६०८, ६०६
बार्हस्पत्यम्—४८८
बौद्धः—११, ४६, ६३, ८०, ११४, ३३०, ४१२, ४४६, ४५०, ४५१, ४७७, ५४६, ५८६, ६०६
भगिनीतंत्रम्—५७८
भट्टः (—कुमारिलः)—१७, १८, २४, ८४, ८७, ६४, ११६, १४४, १५५, १८८, २२५, २३३, २३८, २३६, २४१, २४३, २४८, २४६, २५२, २५३, २६६, ३०१, ३०५, ६१६ (द्र० कुमारिलः)
भरतः—५५१
भर्तृहरिः—४६४
भारतम्—४४७
मंजुनाथः—१
मण्डन (मिश्र):—१०६, ४६८, ४८४, ५६६, ५७१
मदनत्रयोदशी—४५६
मंत्राः—४४६
मलयः—५७३
महायानम्—२, ५६५
माधवः (—सांख्यनाशकः)—५६५
माहेश्वराः—४४६
मीमांसकः—४७, ५०, २०७, ३३०, ४०४, ४०५, ४३४, ४३७, ४३६, ४४०, ४८७, ४८६, ५०२, ५०८, ५३७, ५४६, ५८४, ५८६, ५६७, ५६८, ६०२, ६०५, ६१०, ६१३
मीमांसकः । बृद्ध-, ६०८
म्लेच्छाः—४५६, ४५८
लोकायताः—७२
वसुबन्धुः—६१८
वस्तुवादी—१८७
वामकः—४३८
वामदेवः—४३८
वार्त्तिककारः—१६६ (धर्मकीर्त्तिः)

वासुदेवभट्टः—६३
वार्त्तिकम् (प्रमाण-)—३
विनिश्चयः । प्रमाण—, ५०
विन्ध्यः—५७३
वेदः—४०४, ४०५, ४०६, ४४७, ४५६, ४५७
वेदवाक्यम्—७२
वेदवादी (जैमिनिः)—३२९, ४५९, ४६१, ४६५
वैदिकाः—४४२, ४४३, ४४४, ४४६, ४४९, ४५०, ४६०
वैदिकवाक्यम्—६९, ७१, ४०७
वैयाकरणः—२५८, २४६, ४३४, ४५८, ४८५
वैशेषिकाः—६६, ६७, ७२, १३२, १७२, १९४, २३२, २६४, ३९२, ४३८
व्यासः—४४७
शंकरः (नैयायिकः)—८०, ५१५
शबरस्वामी—५८५, ५८९
शबराः—४४९
शास्त्रकारः (—धर्मकीर्त्तिः) ५
शौकः—४८८
समन्तभद्रः—१, २
सांख्याः—७४, १९४, २२३, ३२०, ३३०, ३३६, ३५०, ५९५
(सांख्यनाशको माधवः)
सूक्तम् (=भगवत्प्रवचनम्)—४
सूत्रान्तरम् (=सूत्रान्तम्)—४८२
सौगताः (=बौद्धाः)—४३८, ५९२
स्फोटवादी—५७०
स्याद्वादः—३४२
हिमवान्—५७३
हिरण्यगर्भः—४४६

